# विषयविन्यासः


| विषयाः | पृष्ठाः |
|---|---|
| **प्रथमाध्यायः** | |
| अल्पग्रन्थेनोपनिषद्विवरणप्रतिज्ञा | १ |
| पूर्वकाण्डेन सम्बन्धकथनम् | २ |
| उपासनानामुपनिषदि प्रतिपादनौचित्यम् | ५ |
| उद्गीथावयवे प्रणवे परमात्मदृष्टिविधानम् | ६ |
| सामानाधिकरण्यस्य चातुर्विध्यप्रदर्शनं सोदाहरणम्-टिप्पण्याम् | ८ |
| उपासनासहितस्य कर्मणोऽधिकफलम् | १४ |
| उद्गीथावयवप्रणवस्याध्यात्माधिदैवभेदेन प्राणादित्यदृष्ट्योपासनविधानम् | १६ |
| इन्द्रियाणां मनसश्चासुरपाप्मविद्धत्वं प्राणस्य तदभावेन विशुद्धत्वं चोपपाद्य प्राणदृष्ट्या प्रणवोपासनविधानम् | १६ |
| उद्गीथस्य व्यानदृष्ट्योपासनविधानम् | २४ |
| उद्गीथाक्षरोपासनम् | २५ |
| ऋक्साम्नामुत्पत्यादिचिन्तनम् | २५ |
| स्वरशब्दितोङ्कारोपासनम् | २८ |
| प्राणानां रश्मीनां च भेददृष्ट्योद्गीथावयवप्रणवोपासनविधिः | २९ |
| ज्योतिष्टोमादावधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवमध्यात्मं चोद्गीथोपासनम् | ३२ |
| ऋक्साम्नोः पृथिव्यग्निदृष्टिविधानम् | ३२ |
| ऋक्साम्नोः अन्तरिक्षवाय्वादिदृष्टिविधिः | ३३ |
| अधिदैवमुद्गीथे परमात्मोपासनं | ३३ |
| कप्यासश्रुत्यर्थविचारः—टिप्पण्याम् | ३४ |
| अध्यात्मं चक्षुषि स एव हिरण्यश्मश्रुत्वादियुक्तः परमात्मा उपास्यः | ३६ |
| शिलकदाल्भ्यजैवलिसम्वादः | ३९ |
| परोवरीयस्त्वादिगुणकपरमात्मनः उद्गीथे उपासनविधिः | ४३ |
| चाक्रायणर्षिकथा। मरणावस्थायामभक्ष्यभक्षणानुज्ञा | ४५ |
| प्रस्तावदेवतायाः प्राणस्य परमात्मन उपासनविधिः | ४६ |
| राजोषस्तिसंवादपूर्वकार्त्विज्यप्रस्तावेन देवताज्ञानम् | ४८ |
| उद्गीथप्रतिहारदेवतयोः आदित्यान्नयोरुपासनम् | ४९ |
| अन्नप्राप्त्यर्थं सामगानविधिः | ५० |
| भक्त्यवयवोपासनप्रस्तावे स्तोभाक्षरेषु लोकाद्युपासनम् | ५२ |
| **द्वितीयाध्यायः** | |
| समस्तस्य साम्नः उपासनविधिः | ५४ |
| हिंकारः प्रस्ताव उद्गीथः प्रतिहारो निधनमिति पञ्चविधे साम्नि लोकदृष्टिविधिः | ५५ |
| पञ्चविधसाम्नि, वृष्टिदृष्टिः अपृदृष्टिविधानम् | ५८ |
| ऋतुपशुप्राणानां च पञ्चविधसाम्नि उपासनम् | ५९ |
| प्राणानां पञ्चविधसाम्नि उपास्तिः | ६० |
| हिंकारः प्रस्ताव आदिरुद्गीथः प्रतिहारः उपद्रवो निधनमिति सप्तविधसामसु वाच उपासनविधानम् | ६१ |
| सप्तविधसाम्नि आदित्योपासनविधानम् | ६२ |
| मृत्युतरणहेतुभूतं सप्तविधसामोपासनम् | ६४ |
| साम्नां नामग्रहणपूर्वकं विशिष्टोपासनानामारम्भः | ६६ |
| गायत्रसामावयवेषु मनआद्युपासनम् | ६६ |
| रथन्तरसाम्नोऽवयवेषु मन्थनादिदृष्टिविधानम् | ६६ |
| वामदेव्यसामोपासनम् | ६७ |
| बृहत्सामावयवेषु सूर्योदयादिदृष्टिः | ६८ |
| वैरूपसामभागेषु मेघादिदृष्टिः | ६९ |
| शाक्वरसामावयवेषु लोकदृष्टिः | ६९ |
| रैवतसामभागेषु अजादिपशुदृष्टिः | ७० |
| यज्ञायज्ञीयावयवेषु लोमादिदृष्टिः | ७१ |
| राजनसामावयवेषु अग्न्यादिदृष्टिः | ७१ |

| विषयाः | पृष्ठाः |
|---|---|
| त्रयीविद्यादिदृष्ट्या हिंकारादिभक्तीनामुपासनम् | ७२ |
| सामगानविशेषाणां फलविधानम् | ७३ |
| सामगानेन देवादीनाममृतादिप्राप्तिप्रार्थना-वर्णनम् | ७४ |
| चतुर्णामाश्रमाणां पुण्यलोकप्राप्तिः संन्यासिनां ब्रह्मनिष्ठानां मोक्षः | ७५ |
| ब्रह्मसंस्थशब्देन परिव्राजो ग्रहणे पूर्वपक्षः | ७७ |
| ज्ञानकर्मसमुच्चयनिरासः, परिव्राडेव च ब्रह्मसंस्थः लोकवेदव्याहृतिसारत्वात् | ७८ |
| ओंकारस्य सर्वात्मकत्वनिरूपणम् | ८४ |
| त्रिषु सवनेषु ज्योतिष्टोमयाजिना पठ्यमान-सामभेदनिरूपणम् | ८६ |
| **तृतीयाध्यायः** | |
| मधुविद्यारम्भः | ८९ |
| सूर्यस्य मधुत्वेन द्युलोकस्य तिरश्चीनवंशत्वा-दिना चोपास्यत्वनिर्देशः | ८९ |
| वस्वादीनां मधूपजीवकत्वमुपासने ध्येयमिति | ९५ |
| मधुविद्यायाः क्रमेण मुक्तिफलकत्वोक्तिः | ९८ |
| गायत्र्यनुपगतब्रह्मणोऽहमित्युपासनविधिः | १०० |
| अङ्गोपासनानि | १०३ |
| द्वारपालकाद्युपासनविधिः | १०५ |
| कौक्षेयज्योतिषि ब्रह्मोपासनविधिः | १०८ |
| शाण्डिल्यविद्या | १११ |
| मनोमयत्वादिगुणकब्रह्मोपासनम् | ११२ |
| पुत्रस्य दीर्घायुष्ट्वप्राप्तये त्रैलोक्यस्य कोशत्वोपासनम् | ११६ |
| पुरुषस्य यज्ञत्वेनोपासनं दीर्घायुष्ट्वप्राप्तये | ११८ |
| आङ्गिरसेन देवकीपुत्रकृष्णायोक्ता इयं पुरुषयज्ञोपासना | १२० |
| मनआकाशयोर्ब्रह्मत्वेनोपासनम् | १२३ |
| आदित्यस्य ब्रह्मत्वेनोपासनम् | १२४ |
| **चतुर्थाध्यायः** | |
| रैक्वाख्यब्रह्मर्षेः वृत्तान्तकथनम् | १२९ |
| संवर्गविद्या | १३४ |

| विषयाः | पृष्ठाः |
|---|---|
| वायुप्राणयोः संवर्गरूपेणोपासनोपदेशः | १३५ |
| षोडशकलब्रह्मविद्यारम्भः | १३८ |
| सत्यकामस्य गुरुसमीपे गमनं गोत्रप्रश्नश्च | १३९ |
| सत्यकामः साध्वीपुत्रो न तु व्यभिचारोत्पन्न इति सयुक्तिकं निरूपणम्—टिप्पण्याम् | १३९ |
| ऋषभादीनामुपदेशः | १४१ |
| उपकोसलविद्यारम्भः | १४५ |
| सत्यकामस्य गुरोः प्रवासः | १४५ |
| परिचरणतुष्टैः अग्निभिः सम्भूय प्राणो ब्रह्म खं ब्रह्मेत्युपदेशः | १४६ |
| गार्हपत्याग्निविद्या | १४८ |
| अन्वाहार्यपचनाग्निविद्या | १४९ |
| आहवनीयाग्निविद्या | १५० |
| अग्नीनां स्वस्वविद्योपदेशानन्तरं आचार्यप्रत्यागमनम् | १५१ |
| उपाध्यायेन कं खं ब्रह्म अक्षिस्थत्वेन संय-द्वामत्वादिगुणवत्त्वेन चोपास्यमित्युपदेशः | १५२ |
| उपासकस्य देवयानमार्गोपदेशः | १५५ |
| यज्ञस्य क्षतप्राप्तौ प्रायश्चित्तं ब्रह्मणो मौनं च | १५७ |
| व्याहृतीनामुत्पत्तिः व्याहृतिहोमरूपप्राय-श्चित्तविधिः | १५८ |
| **पञ्चमाध्यायः** | |
| प्राणोपासनं, तस्य ज्येष्ठत्वादिगुणोपदेशः गौणप्राणानामिन्द्रियाणां मुख्यप्राणस्य च स्पर्धा प्रजापतिगमनम्। एकैकोत्क्रान्तौ शरीरापातः। प्राणोत्क्रमणाभिनयः। इन्द्रियाणां प्राणश्रैष्ठ्यप्रतिपत्तिः स्वगु-णानां प्राणे प्रत्यर्पणम् | १६२ |
| भोजनात्पूर्वं परतश्चाचमनीयं यज्जलं तत्र प्राणवासस्त्वचिन्तनञ्च | १६७ |
| प्राणोपासकस्य महत्त्वप्राप्त्यर्थं कर्मविशेषविधिः | १६९ |
| श्वेतकेतुप्रवाहणसंवादः पञ्चाग्निविद्याविषये पञ्चप्रश्नोत्थापनं प्रवाहणेन श्वेतकेतुं प्रति | १७२ |
| श्वेतकेतोरज्ञानं पितृसमीपगमनं पितुः राजसमीपे पञ्चाग्निविषयप्रश्नानां समाधानप्रार्थना | १७३ |

| विषयाः | पृष्ठाः |
|---|---|
| अपूर्वरूपाभिः अग्निहोत्राहुतिभिस्संवेष्टितस्य जीवस्य क्रमेण द्युपर्जन्यपृथिवीपुरुष-योषित्सु अग्नित्वेन कल्पितासु सञ्चरण-द्वारा पञ्चम्यामाहुतौ पुरुषशरीरप्राप्तिः | १७४ |
| विदुषामर्चिरादिमार्गपर्वनिरूपणम्, तथा धूमादिमार्गः केवलकर्मिणाम् | १८१ |
| गृहस्थानां कर्मबाहुल्येऽपि अपूतत्वात् नार्चिरादिमार्गः | १८२ |
| ब्रह्मविदामत्रैव ब्रह्मप्राप्तिः | १८३ |
| पञ्चाग्निविद्याविदां गृहिणां नैष्ठिकवान-प्रस्थपरिव्राजकानां च ब्रह्मलोकप्राप्तिः | १८४ |
| इष्टापूर्तानुष्ठायिनां धूममार्गेण स्वर्गः पुनरावृत्तिश्च | १८५ |
| चन्द्रमण्डलादवरोहतां शेषकर्मसद्भावनिर्णयः | १८७ |
| प्रायणस्य सर्वकर्माभिव्यञ्जकत्वाभावः | १८७ |
| चन्द्रमण्डलादवरोहप्रकारः | १८९ |
| चन्द्रमण्डलादवरोहतां संज्ञाऽभावः | १९१ |
| मार्गद्वयभ्रष्टानां अतिकष्टा तृतीयागतिः | १९३ |
| प्राचीनशालप्रभृतीनां पञ्चानामृषीणां वैश्वा-नरविद्याप्राप्तये उद्दालकेन सहाश्व-पतिमहाराजगमनम् | १९६ |
| अश्वपतिपुरस्कारः तेन वासगृहादिभिरु-पच्छन्दनम् । ऋषिभिः विद्याप्रार्थना | १९६ |
| प्रत्येकमृषीणां वैश्वानरविषये परिज्ञानप्रश्नः | १९७ |
| ऋषिभिः प्रत्येकं वैश्वानरावयवेषु वैश्वा-नरदृष्टिनिवेदनम् | १९९ |
| एकैकोपासने दोषमुक्त्वा समस्योपासनं कार्यमिति राजोपदेशः | २०० |
| प्राणाग्निहोत्रमन्त्राः तद्विधिश्च | २०३ |
| **षष्ठाध्यायः** | |
| गुरुकुलान्निवृत्तं स्तब्धं पुत्रं श्वेतकेतुं प्रति यस्य विज्ञानात् सर्वविज्ञानलाभः स पृष्टो वा इति प्रश्नः । शिष्याज्ञानं च | २०८ |
| गुरुणा मृदादिविज्ञानेन तद्विकारस्य सर्वस्य ज्ञानवत् अस्य सम्भावनाकथनम् | २०९ |
| एकविज्ञानेन सर्वविज्ञानप्राप्तौ मतभेदः तद्विमर्शश्च । वाचारम्भणश्रुतौ मतभेदे-नार्थभेदविमर्शनम्–टिप्पण्याम् | २०९ |
| सदेव सोम्येत्यादेः विवरणमन्यपक्षनिरसन-पूर्वकम् | २१४ |
| अद्वैते षड्विधतात्पर्यलिङ्गानि तेषामस्मिन्न-ध्याये समन्वयश्च–टिप्पण्याम् | २१४ |
| जगदुत्पत्तौ वैनाशिकपक्षानुवादः निरासश्च | २१७ |
| सदेव सोम्येदमग्र आसीदिति वाक्यस्य सामञ्जस्येनार्थविवरणम् | २१९ |
| असत्कार्यवादनिरासः | २२१ |
| जगत्सृष्टिकथनम् | २२६ |
| सत्प्रधानमिति सांख्यपक्षनिरासः | २३० |
| भूतभौतिकसृष्ट्यनन्तरं स्रष्टुः शरीरान्तः-प्रवेशः | २३४ |
| स्रष्टुः प्रवेशस्वरूपविचारः | २३६ |
| छायारूपेण जीवप्रवेशे जीवस्य मिथ्यात्वशंका, तत्समाधानं च सदात्मना जीवस्य सत्यत्वात् | २३८ |
| त्रिवृत्करणम् | २३९ |
| अन्नादीनां विभजनेन तत्सूक्ष्मांशकार्यत्वं मनसः, एवं जलसूक्ष्मांशकार्यत्वं प्राणस्य, तेजोंऽशकार्यत्वं वाचः | २४६ |
| षोडशकलपुरुषोपदेशः | २५० |
| सुषुप्तौ मनसो लये जीवस्य सत्संपत्तिः अयमेव च स्वपिति शब्दार्थ इति विवेचनम् | २५३ |
| सुषुप्तौ जीवस्य लये प्रकारप्रदर्शनम् | २५६ |
| सूत्रबद्धशकुनिदृष्टान्तेन जीवस्य ब्रह्मणि लयप्रदर्शनम् | २५७ |
| अशनापिपासाशब्दनिर्वचनं, अन्नादिकार्य-परम्परया जगतो मूलस्य सतः प्रदर्शनं च | २५९ |
| मरणावस्थाद्वारेण जगन्मूलस्य सतः प्रदर्शनम् | २६३ |
| जगन्मूलं यत् तदेव त्वमिति महावाक्योपदेशः | २६४ |
| अहरहः सत्सम्पन्नानां सति सम्पद्य कुतो न ज्ञानं सम्पन्ना वयमिति शंकाया मधुदृष्टान्तेन समाधानम् | २६६ |
| सुषुप्तादागतस्य सत आगता वयं इति स्मरणं कुतो नेति प्रश्ने नदीदृष्टान्तेन समाधानम् | २६९ |

| विषयाः | पृष्ठाः |
|---|---|
| सुषुप्ते जीवा कारणं ब्रह्म गच्छन्तोऽपि कुतो न नश्यन्ति कथं पुनः प्रबुध्यन्ते इति प्रश्नस्य वृक्षदृष्टान्तेन समाहितिः | २७१ |
| कथं पुनः अत्यन्तस्थूलं जगत् अनामरूपात् सूक्ष्मात् सत उत्पद्यते इति शंका, तस्य न्यग्रोधफलदृष्टान्तेन समाधानम् | २७४ |
| यदि सत् जगतो मूलं कस्मान्नोपलभ्यते इति शंकाया जलक्षिप्तलवणदृष्टान्तेन समाधानम् | २७६ |
| सत उपलब्धावुपायोपदेशप्रार्थना गुरूपदेश एव तदुपाय इति कथनम् | २७७ |
| तत्र दृष्टान्ततया बद्धाक्षस्यारण्ये विसृष्टस्य मार्गवशात् प्राप्तसत्पुरुषोपदेशस्य विवरणम् | २७७ |
| ब्रह्मसाक्षात्कारानन्तरं देहानुवृत्तिः जीवन्मुक्तिश्च | २८० |
| तत्त्वमसीत्यादेः उपासनावाक्यवैलक्षण्यम् | २८१ |
| जीवन्मुक्त्यभावे आचार्याभावात् मोक्षाभावः | २८१ |
| मुमूर्षुपुरुषदृष्टान्तेनोपदेशः | २८३ |
| यदि मरिष्यतो मुमूर्षतश्च तुल्या सत्सम्पत्तिः तदा आद्यः पुनर्जन्म प्राप्नोति न द्वितीयः इति भेदस्य तस्करदृष्टान्तेनोपपादनं | २८६ |
| श्वेतकेतोः साक्षात्कारलाभः | २८७ |
| षष्ठे वाक्यप्रमाणेन किं फलं जनितमिति प्रश्नः समाधानं च | २८९ |
| न तत्त्वमसीति जीवस्तुतिः, नापि वुद्धि-कर्तव्यताविधिः इति निरूपणम् | २९० |
| सप्तमाध्यायः | |
| शाखाचन्द्रन्यायेन सोपानारोहणन्यायेन वा परतत्त्वप्रदर्शनाय सप्तमारम्भः | २९५ |
| नारदेन स्वाधीतशास्त्राणामनुक्रमणम् | २९७ |
| नारदस्यात्मज्ञानोपदेशप्रार्थना | २९८ |
| आत्मशब्देन शुद्धस्य प्रतिपादने अवगमे च उपायप्रदर्शनम् | २९९ |
| नामब्रह्मोपासनम् | ३०१ |
| वाङ् नाम्नो भूयसीति | ३०१ |
| मनो वाचो भूय इति | ३०३ |
| संकल्पो मनसो भूयानिति | ३०४ |
| मन्त्रेषु कर्माणीत्युक्तेः मन्त्राणामेव विधायकत्वम् | ३०४ |
| ब्राह्मणानामेव विधायकत्वं मन्त्राणा-मनुष्ठेयार्थस्मारकत्वमेवेति मीमांसकमत-निरासः—सरस्वतीटीका | ३०६ |
| चित्तं संकल्पाद्भूय इति | ३०९ |
| ध्यानं चित्ताद्भूय इति। ध्यानोपासनं ब्रह्मरूपेणेति विधिः ध्यानमहिमा | ३१० |
| विज्ञानं ध्यानाद्भूय इति। विज्ञानं ब्रह्मेत्यु-पासनविधिः विज्ञानस्य ध्याना-द्भूयस्त्वे कारणम् | ३१२ |
| बलं विज्ञानाद्भूय इति। बलस्य ब्रह्मतयो-पासनं बलमहिमा च | ३१३ |
| अन्नं बलाद्भूय इति। अन्नस्य ब्रह्मत्वे-नोपास्तिः अन्नमहिमा च | ३१५ |
| आपोऽन्नाद्भूयस्य इति। तस्याः ब्रह्मत्वे-नोपास्तिः | ३१६ |
| तेजोऽद्भ्यो भूय इति। तस्य ब्रह्मत्वेनोपास्तिः | ३१७ |
| आकाशस्तेजसो भूयानिति। तस्य ब्रह्मत्वेनोपास्तिः | ३१८ |
| स्मरणमाकाशाद्भूय इति। तस्य ब्रह्मत्वेनोपास्तिः | ३१९ |
| आशा स्मरणाद्भूयसीति। तस्या ब्रह्मत्वेनोपासनविधिः | ३२० |
| प्राण आशाया भूयानिति। प्राणस्य पितृ-मात्राचार्यरूपोक्त्या प्रशंसावर्णनम्। प्राणस्य सर्वातिशायित्वेन वदन्नतिवादी भवतीति वचनं च। | ३२१ |
| एष तु वा अतिवदतीत्येतेन प्राणातिवादि-त्वापवादेन सत्यब्रह्मातिवादिनः प्रशंसा | ३२५ |
| तस्य विज्ञानमननश्रद्धानिष्ठाकृति-सुखाद्यङ्गविधिः | ३२६ |
| भूम्न एव सुखत्वनिर्णयः | ३३० |
| यत्र नान्यत्पश्यतीत्यादिना भूमलक्षणविधिः | ३३१ |

| विषयाः | पृष्ठाः |
|---|---|
| भूम्नः सर्वात्मकत्वनिरूपणम् । अहङ्कारस्य चात्मनः सर्वात्मकत्वम् | ३३६ |
| अहंकारस्य सर्वात्मकत्वं तस्यात्मभेदकथनाय आत्मनः सर्वात्मकत्वम् तस्य भूमाभेदबोधनाय द्वयोः सर्वात्मकत्वायोगादिति तत्त्वकथनम् । | ३३८ |
| भूमविदः सर्वज्ञत्वं तस्येच्छातः अनेकशरीरप्राप्तिश्च । | ३३८ |
| आहारशुद्धिः सर्वत्र विषयेषु सम्पादनीया । अत्राहारः सर्वेन्द्रियविषयाः इति भाष्यम् । भोजनार्थान्नपरः आहार शब्द इति व्याकुर्वतो भास्करस्य दूषणम्-नरेन्द्रपुर्य्याम् | ३४० |
| अष्टमाध्यायः | |
| दहराकाशशब्दितस्य ब्रह्मणः उपासनविधिः | ३४४ |
| दहराकाशे द्यावापृथिव्यादिसमाधानात्तस्य ब्रह्मरूपत्वादिति श्रुत्यभिप्रायः | ३४९ |
| दहराकाशस्य अपहतपाप्मत्वादिगुणाष्टकविवरणम् | ३५१ |
| दहरोपासनात् ब्रह्मलोकं प्राप्तस्य पितृलोकादिप्राप्तिः केवलमिच्छामात्रेण सम्पत्स्यत इति । | ३५६ |
| आत्मन्येव स्थितानां कामानामनृतेन पिहितानां दर्शनाभावः | ३५८ |
| भूमौ निखातहिरण्यनिधेरज्ञानात् तदुपरिसंचरतां दारिद्र्यानुभववत् ब्रह्मण्येव स्थितानां ब्रह्मरूपाणामज्ञानवशान्नानुभवः | ३५९ |
| सत्यनामाक्षराणामुपपत्तिः | ३६१ |
| ब्रह्मरूपस्यात्मनः सेतुत्वमहोरात्रजराद्यनभिभाव्यत्वं सर्वपुण्यपापराहित्यं च | ३६५ |
| ब्रह्मणि प्रतिबुद्धस्य सर्वदा प्रकाशरूपानन्दानुभवः यज्ञसत्त्रायण-अनाशकायन-अरण्यायनादिभिः ब्रह्मचर्यस्तवः तेन तस्य मुख्यसाधनता | ३६८ |
| ब्राह्मलौकिकानां भोगानां पार्थिवाप्यादिरूपत्वमुत केवलमानसप्रत्ययरूपतेति विचारः | ३७० |
| तेषां मानसत्वसिद्धान्तः | ३७२ |
| मानसत्वे स्वप्नपदार्थवत् मिथ्यात्वापत्तिशङ्का जाग्रद्विषयवदेव तस्या इष्टापत्त्या समाधानम् | ३७४ |
| दहरोपासकस्य मूर्धन्यया सुषुम्नाख्यनाड्या ब्रह्मलोकगमनं नाडीनां वर्णभेदकथनम् | ३७६ |
| उपासकस्य ओङ्कारेण क्षणेनादित्यप्राप्तिः | ३७९ |
| प्रजापतिविद्यारम्भः | ३८१ |
| आत्मा अपहतपाप्मा विजर इत्यादिना आत्मगुणानुक्त्वा तद्विदः सर्वलोककामावाप्तिः—इति प्रजापतिवचनम् | ३८१ |
| एतच्छ्रुत्वा इन्द्रविरोचनयोः राजचिह्नादिकं परित्यज्य ब्रह्मलोकगमनं तत्र द्वात्रिंद्वर्षाणि ब्रह्मचर्यं, ततः प्रजापतिदर्शनं प्रजापतिना अक्षिपुरुष आत्मेति द्वयोरुपदेशः | ३८५ |
| तयोः शरीरात्मग्रहः तदपोहाय उदशरावे मुखदर्शनविधानम् | ३८९ |
| विरोचनेन शरीरमेवात्मेति ज्ञानं प्राप्य असुरेषु शरीरस्य भोगसंपत्त्या कृतार्थतोपदेशः | ३९२ |
| इन्द्रस्य प्रतिनिवृत्तिकाले संशयात् पुनरागमनम् | ३९४ |
| पुनरागत्य ब्रह्मचर्यमुषितवते य एष स्वप्ने महीयमानश्चरतीत्यादिना प्रजापतेः पुनरुपदेशः | ३९६ |
| इन्द्रस्य पुनः गृहगमनकाले स्वप्ने भयदर्शनात् नायमात्मा इति वदतः प्रजापतौ द्वात्रिंशद्वर्षाणि पुनर्ब्रह्मचर्यवासः ततः प्रजापतिना तद्यत्रैतत् समस्तः इत्यादिना सुषुप्तोपन्यासः | ३९९ |
| उपदेशं श्रुत्वा गमनकाले सुप्तस्य काष्ठवत्पतितस्य सुखाद्यभावात् तत्र भोग्यं न पश्यामीति वदतः पुनः प्रजापतिगमनं प्रजापतौ पञ्च वर्षाणि ब्रह्मचर्यवासः ततः उपदेशः—मघवन् मर्त्यं वा इदं शरीरमित्यादिना | ४०१ |
| अत्रात्मनः शरीराद्व्यतिरेकः। आत्मनः स्वयमशरीरत्वममृतत्वं च प्रियाप्रियरहितत्वेन तदुपलक्षितसर्वसंसारराहित्यं शुद्धत्वं चोच्यते | ४०३ |

| विषयाः | पृष्ठाः |
|---|---|
| अत्र पक्षे शुद्धात्मनः "स्त्रीभिर्वा यानैर्वा विहरन्ती"ति कथमिति शङ्का। सर्वात्मभावेन सर्वफलसम्बन्ध इति समाधानम् | ४०५ |
| अक्षिपुरुषः छायात्मेति मतान्तरानुवादः | ४०७ |
| शोधितस्य त्वंपदार्थस्य तत्पदार्थाभेदेन स्वस्वरूपेण निष्पत्तिरूपमोक्षकथनम् | ४०७ |
| प्रजापतिवाक्यान्यामूलाग्रं परिशोध्य प्रकरणमिदं जीवब्रह्मैक्यपरमेवेत्ति निर्णयः—सरस्वतीटीका | ४०८ |
| पूर्वोक्तमतनिरासः | ४०९ |
| शरीरव्यतिरिक्तस्यात्मनः औपाधिकद्रष्टृत्वम् | ४२२ |

| विषयाः | पृष्ठाः |
|---|---|
| प्रजापत्युपदिष्टात्मनः ज्ञानात् देवानां सर्वात्मभावापत्तिः | ४२५ |
| इदानीं तत्पदार्थशोधनद्वारा तस्य त्वंपदार्थैक्यविवरणम् | ४२७ |
| छान्दोग्यब्रह्मविद्यायाः प्रजापतिप्रभृत्याचार्यपरम्परागतत्वम्। कुटुंबिनः संन्यासपूर्वकं सर्वेन्द्रियाणि आत्मनि सम्प्रतिष्ठाप्य ब्रह्मलोकप्राप्तिवचनम् | ४३० |
| यथाश्रुते संन्यासो न प्रतीयते "कृत्स्नभावात्तु गृहिणोपसंहार" इति ब्रह्मसूत्रं च विरुध्यते। अतः सूत्रभाष्ययोः अभिप्रायप्रकाशनम्–टिप्पण्याम् | ४३१ |
| उत्तरशान्तिः। तद्विवरणम्–टिप्पण्याम् | ४३३ |

ॐ

सामवेदीया

# छान्दोग्योपनिषत्

## अथ प्रथमोऽध्यायः

**आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो वलमिन्द्रियाणि च सर्वाणि, सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु, तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ॥**

ॐ शान्तिः शान्तिः शान्तिः

### श्रीमच्छङ्करभगवत्पादाचार्यविरचितं भाष्यम्

उपोद्घातः

"ओमित्येतदक्षरमि"त्याद्यष्टाध्यायी छान्दोग्योपनिषत्। तस्याः संक्षेपतोऽर्थजिज्ञासुभ्य ऋजुविवरणमल्पग्रन्थ-

### श्रीमन्नरेन्द्रपुरीयतीन्द्रविरचितं छान्दोग्योपनिषद्भाष्यटिप्पणम्

सद्रूपं ब्रह्म निर्द्वैतं श्वेतकेतुं यदन्वगात् । तदहं सत्स्वभावत्वात् ज्ञाता शुद्धोऽभयः प्रभुः ॥ १ ॥

छन्दोगानामुपनिषद्भेदं व्याचिख्यासुर्भगवान्भाष्यकारो व्याचिख्यासितग्रन्थस्वरूपं व्याख्यारम्भेऽवान्तरप्रयोजनञ्च दर्शयति—ओमित्येतदिति । शारीरके यद्यपि विवृता छान्दोग्योपनिषद्विस्तरेण भूयस्सु प्रदेशेषु, तथापि न पाठक्रमेणेति ततो विशेषमाह—ऋजुविवरणमिति । द्राविडं विवरणं पाठक्रमेण विवृतमपि बहुग्रन्थं ततो भेदमाह—अल्पग्रन्थमिति । तस्या उपनिषदो ये संक्षेपतोऽर्थजिज्ञासवस्तदुपकारायेदं विवरणमिति । त एवात्राधिकारिणस्तेषामुपनिषदर्थज्ञानमवान्तरप्रयोजनम् । महावाक्यार्थज्ञानफलं तु कैवल्यं परमप्रयोजनमिति द्रष्टव्यम् ।

### श्रीमदानन्दगिर्याचार्यकृता टीका

नमो जन्मादिसम्बन्धबन्धविध्वंसहेतवे । हरये परमानन्दवपुषे परमात्मने ॥ १ ॥
नमस्त्रय्यन्तसन्दोहसरसीरुहभानवे । गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

छन्दोगानामुपनिषद्भेदं व्याचिख्यासुर्भगवान्भाष्यकारश्चिकीर्षितग्रन्थपरिसमाप्तिप्रचयपरिपन्थिदुरितनिबर्हणसिद्ध्यर्थमोङ्कारोच्चारणलक्षणं मङ्गलाचरणं सम्पादयन्व्याख्येयस्वरूपं दर्शयति—ओमित्येतदिति । व्याख्यानं सप्रयोजनं प्रतिजानीते—तस्या इति । ननु शारीरके भूयःसु प्रदेशेषु विस्तरेण व्याख्यातत्वादमुष्य भाष्यं किमिति सम्प्रत्यारभ्यते तत्राऽऽह—संक्षेपत इति । विस्तरेण व्याख्यातत्वेऽपि संग्रहतो व्याख्यानमस्याः सम्प्रणीयते विस्तृतस्य संक्षिप्य ग्रहणे सुग्रहत्वादित्यर्थः । किञ्च न चेयं यथापाठक्रमं व्याख्याता । प्रकृते तु पाठक्रममनतिक्रम्य व्याख्यायते तद्युक्तमिदं भाष्यमित्याऽऽह—ऋजुविवरणमिति । ऋजु पाठक्रमानुसारि विवरणमर्थस्फुटीकरणं प्रकृतोपनिषदो यस्मिन्भाष्ये तत्तथेति यावत् । अथ पाठक्रममाश्रित्यापि द्राविडं भाष्यं प्रणीतं तत्किमनेनेत्याशङ्क्याऽऽह—अल्पग्रन्थमिति । तथाऽपि विशिष्टाधिकार्यभावे कथमिदमारभ्यते तत्राऽऽह—अर्थजिज्ञासुभ्य इति । ये हि मुमुक्षवोऽस्या विवक्षितमर्थं जिज्ञासन्ते तेभ्यो भाष्यमिदं प्रस्तूयते । तथा च विशिष्टाधिकारिसम्भवे तदारम्भः सम्भवति तस्य च प्रकृतोपनिषदर्थपरिज्ञानमवान्तरफलं तद्द्वारा कैवल्यं परमं फलमिति भावः ।

मिदमारभ्यते। तत्र सम्बन्धः—समस्तं कर्माधिगतं [1]प्राणादिदेवताविज्ञानसहितमर्चिरादिमार्गेण ब्रह्मलोकप्रतिपत्तिकारणम्। केवलं च धूमादिमार्गेण चन्द्रलोकप्रतिपत्तिकारणम्। स्वभावप्रवृत्तानां च मार्गद्वयपरिभ्रष्टानां कष्टाऽधोगतिरुक्ता। न चोभयोर्मार्गयोरन्यतरस्मिन्नपि मार्गे आत्यन्तिकी पुरुषार्थसिद्धिरित्यतः कर्मनिरपेक्षमद्वैतात्मविज्ञानं

नरेन्द्रपुरीयं टिप्पणम्

ननूपनिषदः कर्मविधिशेषत्वात् कर्मविचारेणैव व्याख्यातत्वान्न पृथग्विवरणमारम्भणीयं, न, शेषशेषिभावे प्रमाणाभावात् प्रकरणभेदादि"षत्वेति शाखामाच्छिनत्ती"त्यादिवद्विनियोगादर्शनात्। भिन्नाधिकारत्वप्रतीतेश्च स्वातन्त्र्यं वाच्यम्। स्वातन्त्र्ये सत्यपि नियतपूर्वोत्तरभावानुपपत्त्या कश्चन सम्बन्धो वक्तव्य इत्यभिप्रेत्याह—तत्र सम्बन्ध इति। सम्बन्धाभिधित्सया कर्मकाण्डार्थं संक्षेपतो दर्शयति—समस्तमिति। दर्शितेऽर्थे केषाञ्चिन्महात्मनामीश्वरानुगृहीतानां वैराग्यकारणमाह—न चेति। देवतोपास्तिसहितकर्मसाध्यकेवलकर्मसाध्ययोरपि मार्गयोर्नात्यन्तिकी पुरुषार्थसिद्धिः काम्यफलस्य क्षयिष्णुत्वात्सातिशयत्वात् पारतन्त्र्यादङ्गवैकल्याद्यनेकविघ्नोपहतत्वाच्च। नित्य-

आनन्दगिरिटीका

ननु कर्मविधिशेषत्वादुपनिषदस्तद्व्याख्यानेनैव कृतव्याख्यानत्वात्पिष्टपिष्टिप्रसङ्गात्कृतं तद्भाष्येणेत्याशङ्क्य [2]शेषशेषित्वे प्रमाणाभावान्मैवमित्यभिप्रेत्य पूर्वोत्तरकाण्डयोर्नियतपूर्वापरभावप्रयुक्तं सम्बन्धं प्रतिजानीते—तत्रेति। तस्या व्याख्येयत्वेन प्रस्तुताया उपनिषदः कर्मकाण्डेन सह सम्बन्धोऽभिधीयत इत्यर्थः। कोऽसावित्यपेक्षायां तदभिधित्सया कर्मकाण्डार्थमनुवदति—समस्तमिति। विहितं प्रतिषिद्धं च कर्म पूर्वस्मिन्काण्डे प्रतिपन्नमित्यर्थः। तत्र हि विहितं समुच्चितमसमुच्चितं चेति द्विविधमित्यङ्गीकृत्य समुच्चितस्य फलमनुवदति—प्राणादीति। प्राणश्चाग्निश्चेत्याद्या देवता तद्विज्ञानं तदुपासनं तेन समुच्चितमग्निहोत्रादिकमर्चिराद्युपलक्षितेन देवयानेन पथा कार्यब्रह्मप्राप्तौ कारणं न तु ब्रह्मप्राप्तौ तस्य गन्तव्यत्वाभावात्कार्यस्यैव गन्तव्यताया बादर्यधिकरणे राद्धान्तितत्वात्। तस्मान्न समुच्चितं विहितं कर्म परमपुरुषार्थहेतुरित्यर्थः। तस्यैवासमुच्चितस्य फलमाह—केवलं चेति। विहितस्य गतिमुक्त्वा प्रतिषिद्धस्य गतिमाह—स्वभावेति। स्वभावेन शास्त्रापेक्षामन्तरेण प्रकृतिवशादेव प्रवृत्ता यथेष्टचेष्टारसिकास्तेषां कर्मज्ञानाभावाद्देवयाने पितृयाणे च पथ्यनधिकृतानामधोगतिस्तिर्यगवस्था क्षुद्रजन्तुलक्षणा अपुनरावृत्तिदुर्लभा वाक्येन।

अन्यतरस्मिन्वाऽधिकृतानां परमः पुरुषार्थः सेत्स्यति। "शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते" इति स्मृत्या तयोर्नित्यफलत्वप्रतिपत्तेरत आह—न चोभयोरित्यादि। ननु मार्गद्वयभ्रष्टानां पुरुषार्थाभावेऽपि द्वयोः पथोरन्यतरस्मिन्वा भविष्यतीति चेत्तत्र न तावद्देवयानपथि निमित्ते निरतिशयपुरुषार्थसिद्धिः। "इमं मानवमावर्तं नाऽऽवर्तन्ते" "तेषामिह न पुनरावृत्तिः" इत्यत्रेममिहेति विशेषणा"देकया यात्यनावृत्तिमि"ति स्मृतावनावृत्तेरेतत्कल्पविषयत्वात्कल्पान्तरेऽप्यनावृत्तावपि विशेषणानर्थक्यात्। नापि पितृयाणपथि निरतिशयपुरुषार्थसिद्धिः। "एतमेवाध्वानं पुनर्निवर्तन्ते"। "अन्ययाऽऽवर्तते पुनः" इति चन्द्रस्थलस्खलनावगमात्। तस्मान्न कर्मवशादात्यन्तिकपुरुषार्थप्राप्तिरित्यर्थः। एवमनूद्य कर्मफलं फलितं सम्बन्धमाह—इत्यत इति। उक्तरीत्या कर्म यतो न निरतिशयपुरुषार्थ-

---

विश्वेश्वरं भाष्यकारं ब्रह्मविद्यागुरुंस्तथा।
प्रणिपत्य प्रकुर्वेऽहं छान्दोग्ये भाष्यटिप्पणम्॥

१. प्राणदेवता हिरण्यगर्भः। तस्याग्नेश्चोपासनं सप्तसु अतीतब्राह्मणेषु द्रष्टव्यम्। यद्यपि प्राणाद्युपासनान्यत्राप्युपनिषदि विहितानि तथापि तेषां कर्माङ्गसम्बद्धत्वात्तानि कर्मकाण्डं प्रति नेतव्यानि। तथा च फलतस्तेषामपि पूर्ववृत्तत्वमेव।

२. शेषशेषित्व इति—ब्रह्मविद्या न कर्माङ्गमिति पुरुषार्थाधिकरणे (ब्र० सू० ३-४-१) निर्णीतम्। कर्माङ्गावबद्धोपासनानां न नियमेनानुष्ठेयत्वमपि तु विकल्पः। "कार्यं बादरिः" इत्यधिकरणे "स एनान् ब्रह्म गमयती"त्यत्र अपरं ब्रह्म गन्तव्यं न परमिति निर्णयः साधितः। शुद्धस्यात्रैव सद्भावात् नित्यप्राप्तत्वाच्च गन्तव्यत्वानुपपत्तेः।

संसारगतित्रयहेतूपमर्देन वक्तव्यमित्युपनिषदारभ्यते । न चाद्वैतात्मविज्ञानादन्यत्राऽऽत्यन्तिको निःश्रेयसप्राप्तिः । [1]वक्ष्यति हि—"अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति"। विपर्यये च "स स्वराड्भवति" इति। तथा द्वैतविषयानृताभिसन्धस्य बन्धनं तस्करस्येव तप्तपरशुग्रहणे बन्धदाहभावः, संसारदुःखप्राप्तिश्चेत्युक्त्वाऽद्वैतात्मसत्याभि-

नरेन्द्रपुरीयं टिप्पणम्

नैमित्तिकयोरपि गर्भवासादिहेतुत्वेनानर्थप्रायत्वान्निषिद्धफलस्य चानर्थरूपतया प्रसिद्धत्वात्ततो विरक्तानां निरवद्यपुरुषार्थजिज्ञासूनामुपनिषदारभ्यत इति हेतुहेतुमल्लक्षणस्सम्बन्ध इत्यर्थः ।

"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ॥"

इत्युक्तत्वात्काम्यादिनिवृत्तिसहितं सातत्येनानुष्ठितं नित्यकर्म निरवद्यप्रयोजनसाधनं भविष्यति । कर्मभूयस्त्वात् फलभूयस्त्वमिति न्यायेन; ततो न तादर्थ्येनोपनिषदारभ्येति तत्राह—न चाद्वैतात्मेति । यथोक्तचरितस्य निरतिशयपुरुषार्थलाभे प्रमाणानुपलम्भात्, विपर्यये च प्रमाणसद्भावात् न पौरुषेयवचनमादरणीयमित्यर्थः । कर्मणः क्षयिष्णुफलत्वे ज्ञानोपरक्तस्य च तथात्वे श्रुतिसद्भावेऽपि नाद्वैतज्ञानस्य निरतिशयश्रेयस्साधनत्वे प्रमाणमस्तीत्याशङ्क्याह—विपर्यये चेति । कर्मणः क्षयिष्णुफलत्वे अद्वैतात्मज्ञानस्य चाक्षयफलत्वे लिङ्गमप्याह—तथेति । द्वैतविषयेऽनृते अभिसन्धा अभिमानो यस्य तस्य मिथ्याज्ञानेनात्मानं तिरस्कृत्य तस्करवत् प्रवर्तमानस्य बन्धनाभिधानं कर्मणो मोक्षसाधनत्वाभावे लिङ्गमित्यर्थः । "ऐतदात्म्यमिदं सर्वं तत्सत्यमि"ति श्रुतेरद्वैतात्मैव सत्यः तत्राभिसन्धा यस्य तस्य मोक्ष इति च वक्ष्यतीति पूर्वेण सम्बन्धः । यच्चाहुरेकदेशिनः—कर्मसमुच्चितमद्वैतात्मदर्शनं मोक्षसाधन-

आनन्दगिरिटीका

हेतुरतः ससाधनात्कर्मणस्तत्फलाच्च विरक्तस्य निरतिशयपुरुषार्थं काङ्क्षतस्तत्साधनं केवलमात्मज्ञानं संसारान्तर्भूतपूर्वोक्तगतित्रयहेतुकर्मतद्धेतुनिराकरणेन वक्तव्यमित्यभिप्रायेणोपनिपदेषाऽऽरभ्यते । न हि कर्मानुष्ठानात्पुमर्थो निरतिशयो लभ्यते । तस्य "तद्यथेहे"त्यादौ क्षयिष्णुफलत्वश्रुतेः । तथा चेश्वरार्पणबुद्ध्याऽनुष्ठितशुभकर्मवशादुपजातशुद्धबुद्धेर्विरक्तस्य मुमुक्षोर्मोक्षसाधनज्ञानार्थोऽयमुपनिपदारम्भ इति हेतुहेतुमद्भावः[2] सम्बन्ध इत्यर्थः ।

ननु—"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिपिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया" ॥

इति वृद्धैरुक्तत्वात्काम्यनिषिद्धे वर्जनीये । नित्यनैमित्तिके च कृत्वा व्यवस्थितस्य मुमुक्षोर्वर्तमानदेहपाते पुनर्देहान्तरग्रहे हेत्वभावादनायाससिद्धा ज्ञानादृतेऽपि मुक्तिरिति कथं तादर्थ्येनोपनिषदारभ्यते तत्राऽऽह—न चेति । न हि त्वदुत्प्रेक्षितो मोक्षोपायो विना प्रमाणं प्रकल्पते । न च पौरुषेयं वाक्यं मूलप्रमाणमन्तरेण प्रमाणम् । न चात्र श्रुतिस्मृती प्रत्यक्षादि वा मूलमालोक्यते । सम्भवति च यथावर्णितचरितस्यापि कर्मशेषवशाद्देहान्तरं; न चैकभविकः कर्माशयः । "तद्य इह रमणीयचरणाः" "ततः शेषेणे"त्यादिश्रुतिस्मृतिविरोधात्तस्मादात्मज्ञानादेव मुक्तिरिति भावः । अद्वैतात्मज्ञानविधुराणां भेदज्ञानभाजां कर्मानुष्ठायिनां क्षय्यफलशालित्वे वाक्यशेषं प्रमाणयति—वक्ष्यति हीति । अद्वैतात्मोपदेशानन्तर्यमथशब्दार्थः । ये पुनरनुपासितगुरवस्तदुपदेशशून्या यथामति यथोक्तादद्वैतादन्यथा द्वैतमेव तत्त्वं विदन्ति ते परतन्त्राः सन्तो रागादिना कर्मानुतिष्ठन्तो विनाशिफलशालिनः स्युरिति श्रुत्यर्थः । अद्वैतात्मज्ञानादात्यन्तिकपुरुषार्थसिद्धिरित्यत्रापि वाक्यशेषमनुकूलयति—विपर्यये चेति । चकारात्क्रियापदमनुकृष्यते । स हि विद्वान्विद्यया निरस्ताविद्यादिमलः स्वपरिज्ञानात्स्वयमेव परमात्मा भवति । भेदप्रतिपत्तिहेतोरुच्छिन्नत्वादित्यर्थः ।

भेदनिष्ठानां कर्मिणां पुरुषार्थो निरतिशयो न सिध्यति । अद्वैतनिष्ठानां तु कर्म त्यजतां पुमर्थः सेत्स्यतीत्यत्र वाक्यशेषस्थं लिङ्गं दर्शयति—तथेत्यादिना । द्वैतमेव विषयस्तस्मिन्वाचारम्भणश्रुतेरनृतेऽभिसन्धा यस्याभिसन्धा सत्यत्वाभिमानस्तस्य बन्धनं परमानन्दस्याऽऽविर्भावराहित्यं संसारात्मकस्य दुःखस्य प्राप्तिश्च । यथा वस्तुतः तस्करस्य नाहं तस्करोऽस्मीति मिथ्यैवाभिमन्यमानस्य परिशोधनार्थं तप्तपरशोर्ग्रहणे दाहो बन्धनं दुःखप्राप्तिश्च प्रतीयते, तथैव द्वैताभिनिवेशवतोऽपीति प्रथममुक्त्वा वस्तुतोऽतस्करस्य परैरारोपिततस्करत्वस्य परिशुशुत्सया तप्त-

१. वक्ष्यति—अष्टमेऽत्रैव ।

२. हेतुहेतुमद्भावः अत्र प्रयोज्यप्रयोजकभावो न साक्षात् ।

सन्धस्यातस्करस्येव तप्तपरशुग्रहणे बन्धदाहाभावः संसारदुःखनिवृत्तिर्मोक्षश्चेति । अत एव न कर्मसहभाव्यद्वैतात्मदर्शनम्। क्रियाकारकफलभेदोपमर्देन "सदेकमेवाद्वितीयम्" "आत्मैवेदं सर्वमि"त्येवमादिवाक्यजनितस्य बाधकप्रत्ययानुपपत्तेः। कर्मविधिप्रत्यय इति चेत् । न । कर्तृभोक्तृस्वभावविज्ञानवतस्तज्जनितकर्मफलरागद्वेषादिदोषवतश्च कर्मविधानात्। अधिगतसकलवेदार्थस्य कर्मविधानादद्वैतज्ञानवतोऽपि कर्मेति चेत्। न। कर्माधिकृतविषयस्य कर्तृभोक्त्रादिज्ञानस्य

नरेन्द्रपुरीयं टिप्पणम्

मुपनिपदर्थं इति तदपि कर्मणः क्षयिष्णुफलत्वाभिधानादेव निरस्तमित्याह—अत एवेति। किञ्चाद्वैतज्ञानस्य कस्मिन्नंशे कर्म सहकारि ? यथा कस्यचिद्दुर्बलस्य स्वबाधकापसारणाय सहकार्यपेक्षा तथा किमद्वैतज्ञानस्य किंवा स्वसाध्यसाधने दर्शादेरिव प्रयाजाद्यपेक्षा? नान्त्यः, साध्यफलस्यानिरूपणात् अविद्यानिवृत्तेर्ज्ञानोदयमात्रायत्तत्वाच्च। नाद्यः, उर्ध्वं बाधकोत्पत्तौ कारणासम्भवादित्याह—क्रियाकारकेति । उर्ध्वं बाधकासम्भवेऽपि पूर्वं कर्मविधिप्रत्ययो बाधकः शङ्क्यते। केवलस्य ज्ञानस्य निश्रेयससाधनत्वे यावज्जीवानुष्ठानविध्यनुपपत्तिः। तत्र श्रुतार्थापत्त्या कर्मणः सहकारित्वमवगम्यत इत्यपि न वाच्यं; भिन्नविषयत्वादनुपपत्तिस्फूर्त्यभावादित्युक्तम्। तत्रैकविषयत्वं शङ्कते—अधिगतेति । स्वाध्यायाध्ययनविधेरर्थावबोधफलत्वादाचार्यकुल एव कृत्स्नवेदार्थज्ञानं परिसमाप्य दारानाहृत्य यावज्जीवादिविध्यधिकारः प्रतीयते, तत्कथं अमुमुक्षुविषयत्वमित्यर्थः। अध्ययनविधेरर्थावबोधफलत्वे तत्कामस्यैवाधिकारात् अतत्कामस्यानध्ययनेऽपि प्रत्यवायाभावप्रसङ्गात्। उपनीतस्य नित्याधिकारित्वद्योतकवचनविरोधाच्च। विधिं विनापि पौरुषेयवाक्याच्छाखान्तरीयवाक्याच्चार्थावबोधस्य भाव्यत्वकल्पनायां श्रुतहान्यश्रुतकल्पनाप्रसङ्गात्। पाठकव्यवहाराच्चाक्षरग्रहणान्तव्यापारेणाध्ययनशब्दस्य रूढित्वावगमादक्षरग्रहणावसान इति वर्णितं प्रकटार्थे नेह प्रपञ्च्यते संग्रहाधिकारात्। तिष्ठतु वाऽयं विवादो नाद्वैतसाक्षात्कारवतः कर्माधिकारसम्भावनापि। परोक्ष-

आनन्दगिरिटीका

परशुग्रहणे दाहाद्यभाववदद्वैताभावोपलक्षिते प्रत्यगात्मनि परमार्थसत्येऽभिमानवतो द्वैताच्च व्यावृत्तचित्तस्यानर्थध्वंसो निरतिशयानन्दाविर्भावश्चेति यथोक्तार्थानुरोधेनाग्रे श्रुतिर्वक्ष्यतीति योजना। केवलमात्मज्ञानं कैवल्यहेतुस्तत्सिद्ध्यर्थमुपनिषदारम्भ इति स्वपक्षो दर्शितः। स्वयूथ्यास्तु कर्मसमुच्चितमात्मानं मोक्षसाधनं तादर्थ्येनोपनिषदारम्भ इत्याहुस्तान्प्रत्याह—अत एवेति। यत्कृतकं तदनित्यमितिव्याप्त्यनुगृहीतया "तद्यथेहे"त्यादिश्रुत्या कर्मफलस्यानित्यत्वावगमाद् "ब्रह्मविदाप्नोति परमि"त्यादिश्रुत्या च ज्ञानफलस्य नित्यत्वसिद्धेर्ज्ञानकर्मणोर्विरुद्धफलत्वाध्यवसायादद्वैतस्याऽऽत्मनो दर्शनं नैव कर्मणा सह भवितुमुत्सहते। न हि विरुद्धयोस्तमःप्रकाशयोः समुच्चयः सङ्गच्छते। तन्न समुच्चितज्ञानार्थत्वेनोपनिषदारम्भ इत्यर्थः।

किं चाद्वैतात्मज्ञानं स्वसाध्यसिद्ध्यर्थं वा कर्मापेक्षते स्वबाधकविधूननार्थं वा ? नाऽऽद्यः। तस्यासाध्यफलत्वादिति मन्वानो द्वितीयं प्रत्याह—क्रियेति। वाक्यजनितस्याद्वैतात्मज्ञानस्येति शेषः। तस्य बाधकाभावेन तत्परिहारार्थं सहकार्यपेक्षा नास्तीत्यर्थः। बाधकप्रत्ययाभावस्यासिद्धिमाशङ्कते—कर्मेति। तद्विषयो विधिप्रत्ययो यजेतेत्यादिविधिजनितः कर्तव्यताबोधः। स चाऽऽत्मनि कर्तृत्वादिकमाकाङ्क्षन्नकर्त्राद्यात्मज्ञानस्य बाधको भवतीत्यर्थः। कस्यायं कर्मविधिरज्ञस्य विदुषो वेति विकल्प्याऽऽद्यं प्रत्याह—नेत्यादिना। कर्त्राद्याकारं प्रमाणनिरपेक्षप्रकृतिप्रसूतं मिथ्याज्ञानं तद्वतस्तेन मिथ्याज्ञानेन जनितकर्मफलविषयो रागादिदोषस्तद्वतश्च कर्म विधीयते। न हि कर्ताऽहमित्यादिमिथ्याधियो रागादेश्चाभावे कर्म विधातुं शक्यम्। "यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्" इति स्मृतेः। अतोऽज्ञस्य कर्मविधिपक्षे न तत्प्रत्ययो बाधकः प्राप्त्यभावादित्यर्थः। द्वितीयं शङ्कते—अधिगतेति। अधीतस्वाध्यायो हि वैदिके कर्मण्यधिक्रियते। अध्ययनं चार्थावबोधफलमिति मीमांसकमर्यादा। तथा चाध्ययनवतो ज्ञातसर्ववेदार्थस्य यजेतेत्यादिना कर्मविधानादात्मज्ञानस्यापि कर्माङ्गत्वं गम्यते। न चाऽऽत्मज्ञानमपबाध्यते। अविरोधादित्यर्थः। न तावदर्थावबोधफलमध्ययनमिति प्रामाणिकमक्षरावाप्तिफलं तदिति चाध्येतृप्रसिद्धं तत्राध्ययनविधिवशेन नाऽऽत्मज्ञानस्य कर्मविधिसम्बन्धः सम्भवतीति परिहरति—नेति। किञ्च ममेदं कर्मेति कर्मण्यैश्वर्यं प्रतिपद्य व्यवस्थितं विषयीकृत्य प्रवृत्तस्य कर्त्राद्याकारविज्ञानस्य प्रमाणापेक्षामन्तरेण स्वभावप्राप्तस्य वाक्योत्थेन सम्यग्ज्ञानेनापहृतत्वात्कर्मफलविषयरागाद्ययोगात्तन्निबन्धनस्य कर्मणोऽपि दुरनुष्ठानत्वान्नाऽऽत्मज्ञस्य

स्वाभाविकस्य "सदेकमेवाद्वितीयम्" "आत्मैवेदं सर्वमि"त्यनेनोपमर्दितत्वात्। तस्मादविद्यादिदोषवत एव कर्माणि विधीयन्ते। नाद्वैतज्ञानवतः। अत एव हि वक्ष्यति—"सर्व एते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति" इति।

तत्रैतस्मिन्नद्वैतविद्याप्रकरणेऽभ्युदयसाधनान्युपासनान्युच्यन्ते कैवल्यसन्निकृष्टफलानि चाद्वैतादीषद्विकृतब्रह्मविषयाणि "मनोमयः प्राणशरीरः" इत्यादीनि कर्मसमृद्धिफलानि च कर्माङ्गसम्बन्धीनि। रहस्यसामान्यान्मनोवृत्तिसामान्याच्च यथाऽद्वैतज्ञानं मनोवृत्तिमात्रं तथाऽन्यान्यप्युपासनानि मनोवृत्तिरूपाणीत्यस्ति हि सामान्यम्। कस्तर्ह्यद्वैतज्ञानस्योपासनानां च विशेषः। उच्यते। स्वाभाविकस्याऽऽत्मन्यक्रियेऽध्यारोपितस्य कर्त्रादिकारकक्रियाफलभेदविज्ञानस्य निवर्तकमद्वैतविज्ञानम्। रज्ज्वादाविव सर्पाद्यध्यारोपलक्षणज्ञानस्य रज्ज्वादिस्वरूपनिश्चयः प्रकाशनिमित्तः। उपासनं तु यथाशास्त्रसमर्पितं किञ्चिदालम्बनमुपादाय तस्मिन्समानचित्तवृत्तिसन्तानकरणं तद्विलक्षणप्रत्ययानन्तरितमिति विशेषः।

तान्येतान्युपासनानि सत्त्वशुद्धिकरत्वेन वस्तुतत्त्वावभासकत्वादद्वैतज्ञानोपकारकाण्यालम्बनविषयत्वात्

### नरेन्द्रपुरीयं टिप्पणम्

ज्ञानवतस्तस्याधिकारेऽप्यपरोक्षभ्रमानिवृत्तेरज्ञविषयत्वं कर्मविधीनां न व्यावर्तत इत्याह—न कर्माधिकृतेति। भिन्नाधिकारत्वे श्रुतिसम्मतिमाह—अत एव हीति। अद्वैतविद्यापर्यवसितैव चेदुपनिषत् कथं तर्ह्युपासनविधय उपदिश्यन्तेऽत्रेत्यत आह—तत्रैतस्मिन्निति। रहस्यसामान्यादित्युपनिषच्छब्दवाच्यत्वाविशेषादित्यर्थः। प्रथमत एवोपासनोपदेशे तर्हि कथं कारणमित्यत आह—तान्येतानीति। कारणस्य नियतपूर्वभावित्वप्रसिद्धेस्साकारवस्तु-

### आनन्दगिरिटीका

कर्मोपपत्तिरित्याह—कर्माधिकृतेति। अद्वैतात्मज्ञानस्य कर्मप्रवृत्तिविरोधित्वे फलितमुपसंहरति—तस्मादिति। अज्ञस्य कर्मविधिर्न त्वात्मज्ञस्येत्यत्र श्रुतिं सम्वादयति—अत एवेति। एते त्रयोऽप्याश्रमिणः कर्माधिकृता इति यावत्। यथा ब्रह्मचारी गृहस्थो वानप्रस्थश्चेत्येते कर्मिणस्तथा ब्रह्मविदपि कर्मी चेन्न पृथक्क्रियेत। पृथक्करणाच्च न तस्य कर्मविधिरिति मत्वोक्तम्—ब्रह्मसंस्थ इति।

यदि समुच्चयासम्भवात्केवलमेवाऽऽत्मज्ञानं कैवल्यसाधनमिति तादर्थ्येनोपनिषदारभ्यते हन्त किमित्यस्यामुपनिषदि त्रिविधान्युपासनान्युपन्यस्यन्ते तत्राऽऽह—तत्रेति। उक्तया रीत्योपनिषदारम्भे सतीति यावत्। स यो वायुं दिशां वत्सं वेद न पुत्ररोदं रोदितीत्यादीन्यभ्युदयफलान्युपासनानि। कैवल्येन सन्निकृष्टफलत्वं नाम क्रममुक्तिफलत्वम्। अद्वैतान्निष्प्रपञ्चादीषद्विकृतं सगुणं ब्रह्म। कर्मसमृद्धिफलानि कर्मफलगतातिशयफलान्युद्गीथाद्युपासनानीत्यर्थः। आत्मविद्याप्रकरणे त्रिविधोपासनोपन्यासे हेतुमाह—रहस्येति। उपनिषत्पदवेदनीयत्वस्याऽऽत्मविद्यायामुपासनेषु चाविशेषादित्यर्थः। तत्रैव हेत्वन्तरमुद्भाव्य विभजते—मनोवृत्तीत्यादिना। आत्मज्ञानस्योपासनानां च यथोक्तं सामान्यमिष्यते चेत्तर्हि फलतोऽपि विशेषो न स्यादिति मन्वानः शङ्कते—कस्तर्हीति। फलतो विशेषं दर्शयन्नुत्तरमाह—उच्यत इति। तत्र प्रथममात्मज्ञानस्योपासनाभ्यो विशेषमादर्शयति—स्वाभाविकस्येति। प्रत्यगात्मनि क्रियाकारकफलविभागविकले कूटस्थे स्वभावशब्दिताविद्याकृतमध्यारोपित कर्त्राद्याकारविज्ञानम्। तस्याद्वितीयत्वादिलक्षणाधिष्ठानयाथात्म्यज्ञानं निवर्तकम्। यथा रज्ज्वादावधिष्ठाने सर्पादिसमारोपरूपस्य मिथ्याज्ञानस्य प्रकाशादिकारणप्रसूतो रज्ज्वाद्यधिष्ठानस्वरूपनिश्चयो निवर्तकस्तथेत्यर्थः। संप्रत्युपासनानामद्वैतज्ञानाद्विशेषं दर्शयति—उपासनं त्विति। शास्त्रं "मनो ब्रह्मेत्युपासीते"त्यादि, किञ्चिदालम्बनं मनःप्रभृति विवक्षितम्। समानजातीयप्रत्ययसन्तानकरणं विच्छिद्य विच्छिद्य ध्यायिनोऽपि सिध्यतीति विशिनष्टि—तद्विलक्षणेति। आत्मज्ञानस्योपासनानां चावान्तरविशेषमुपसंहरति—इति विशेष इति।

ननु विद्याप्रकरणे यथोक्तोपासनानामुपदेशसम्भवेऽपि विद्यैव प्राधान्यात्प्राथम्येनोच्यतामुपासनानि पुनरप्रधानत्वात्पाश्चात्येन वाच्यानीत्याशङ्क्याऽऽह—तानीति। उपासनानामीश्वरार्पणबुद्ध्याऽनुष्ठितनित्यादिकर्मवच्चित्तशुद्धिद्वारा ज्ञानकारणत्वात्कार्याच्च कारणस्य प्राथम्यप्रसिद्धेः साकारवस्तुविषयत्वेन सुसाध्यत्वाच्च मन्दानां सहसा तेषु प्रवृत्त्युपपत्तेरादावुपदेशः सम्भवतीत्यर्थः। तथाऽपि बहुविधेषूपासनेषु किमित्यङ्गावबद्धमेवोपासनं प्रथममुच्यते

**ओमित्येतदक्षरमुद्गीथमुपासीत । ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥**

सुसाध्यानि चेति पूर्वमुपन्यस्यन्ते । तत्र कर्माभ्यासस्य दृढीकृतत्वात्कर्मपरित्यागेनोपासन एव दुःखं चेतःसमर्पणं कर्तुमिति कर्माङ्गविषयमेव तावदादावुपासनमुपन्यस्यते ।

इत्युपोद्घातभाष्यम्

ओमित्येतदक्षरमुद्गीथमुपासीत । ओमित्येतदक्षरं परमात्मनोऽभिधानं नेदिष्ठम् । तस्मिन्हि प्रयुज्यमाने स प्रसीदति प्रियनामग्रहण इव लोकः । तदिहेतिपरं प्रयुक्तमभिधायकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रं प्रतीयते । तथा चार्चादिवत्परस्याऽऽत्मनः प्रतीकं सम्पद्यते । एवं नामत्वेन प्रतीकत्वेन च परमात्मोपासनसाधनं श्रेष्ठमिति सर्ववेदान्तेष्ववगतम् । जपकर्मस्वाध्यायाद्यन्तेषु च बहुशः प्रयोगात्प्रसिद्धमस्य श्रैष्ठ्यम् । अतस्तदेतदक्षरं वर्णात्मक-

नरेन्द्रपुरीयं टिप्पणम्

विषयत्वेन मन्दमतीनां ततस्स्थैर्यसम्भवाच्चास्तु पूर्वमुपासनोपदेशः । तत्रापि कर्माङ्गावबद्धोद्गीथाद्युपासनानां प्राथम्येनोपदेशे को हेतुरित्याकाङ्क्षायामाह—तत्र कर्माभ्यासस्येति ।

इत्युपोद्घातभाष्यटीका

एवं सम्बन्धमुक्त्वा प्रतिपदं व्याख्यातुमुपक्रमते—ओमित्येतदित्यादिना । नेदिष्ठं निकटतमं प्रियतमं भवत्वन्यत्र परमात्मनो नाम । ओमित्यत्र तु किं विवक्षितमित्याकाङ्क्षायामाह—तदिहेति । यत्रेतिपरः प्रयोगः तत्राभिधेयविवक्षा नास्ति यथा गौरित्ययमाहेति । ततोऽत्रोङ्कारस्येतिपरत्वात् स्वरूपमात्रमुपास्यं विवक्षितमित्यर्थः । ओङ्कारस्योपास्यत्वाय श्रैष्ठ्यं ख्यापयति—तथा चेति । न केवलं परमात्मनो नामोमिति । तथा च प्रतिमावत् परमात्मोपासने प्रतीकमपि भवति, "एतदालम्बनं श्रेष्ठमि"त्यादिश्रुतेरित्यर्थः । श्रैष्ठ्ये हेत्वन्तरमाह—जपेति ।

आनन्दगिरिटीका

तत्राऽऽह—तत्रेति । प्राकृते पुरुषे कर्माभ्यासस्यानादिवासनया दृढीकृतत्वादभ्यस्ततत्तत्कर्मत्यागेऽतत्सम्बन्धिनि केवलोपासने चेतसः समर्पणं दुःखं कर्तुमित्यङ्गावबद्धमेव तावदुपासनमुच्यते । एवमादावुक्त्वा पुनरुपासनान्तराणि क्रमेण वक्तव्यानीत्यर्थः ।

इत्युपोद्घातभाष्यटीका

काण्डद्वयस्य नियतपौर्वापर्यप्रयुक्तसम्बन्धमुपनिषत्तात्पर्यं चोक्त्वा प्रत्यक्षरं व्याख्यातुकामः प्रतीकमादत्ते—ओमित्येतदक्षरमिति । तत्र प्रथममोङ्कारस्याभिधायकत्वपक्षमेवावलम्बते—परमात्मन इति । अभिधानान्तरेभ्यो विशेषं दर्शयति—नेदिष्ठमिति। निकटतममतिशयेन प्रियमिति यावत्। ओङ्कारस्य नेदिष्ठत्वं समर्थयते—तस्मिन्निति । ओङ्कारस्यान्यत्र परमात्मनामत्वेऽपि प्रकृते किं विवक्षितमित्याशङ्क्याऽऽह—तदिहेति । प्रकृते हि वाक्ये तदोमिति पदमितिशब्दशिरस्कं प्रयुक्तमिति शब्दसामर्थ्यादेव वाचकत्वाद्व्यावर्तितं शब्दस्वरूपमात्रमुपास्यं गम्यते । यत्र ह्यतिपरः प्रयोगो न तत्राभिधेयविवक्षास्ति यथा गौरित्ययमाहेति । तथा चात्रेतिपरत्वादोङ्कारस्य स्वरूपमात्रमुपास्यं विवक्षितमित्यर्थः । तथोपास्यत्वार्थं श्रैष्ठ्यं साधयति—तथा चेति । इतिपरप्रयोगवशादभिधायकत्वाभावे सत्यर्चाशब्दितप्रतिमाया भगवत्प्रतीकत्ववदोङ्कारस्यापि परमात्मप्रतीकत्वेन श्रेष्ठत्वादुपास्यत्वसिद्धिरित्यर्थः । तदीय श्रैष्ठ्यं सप्रमाणकं निगमयति—एवमिति । सर्ववेदान्तेष्वेतदालम्बनं परमित्यादिषु । किञ्च नास्य श्रैष्ठ्यं समर्थनीयं प्रसिद्धत्वादित्याह—जपेति । गायत्र्यादिजपे यज्ञादौ कर्मणि स्वाध्यायस्याऽऽदावन्ते चोङ्कारस्य प्रयोगो दृश्यते ।

"तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥"

"ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यते ॥" इति स्मृतेः ।

"ओमिति ब्राह्मणः प्रवक्ष्यन्नाहे"त्यादिश्रुतेश्चेत्यर्थः । ओमितीत्ययं भागो व्याख्यातः सम्प्रत्येतदक्षरमित्यस्यार्थमाह—अत इति । श्रेष्ठत्वमुपास्यत्वार्थमनुकृष्यते । व्याप्तेश्च समञ्जसमिति न्यायेन विशेषणस्यार्थवत्त्वमभिप्रेत्य रूढिर्योगमपहरतीति न्यायेनाक्षरशब्दस्य प्रकरणमनुसृत्य प्रसिद्धमर्थमाह—वर्णात्मकमिति । ग्रामो दग्धः पटो दग्ध

**एषां भूतानां पृथिवी रसः। पृथिव्या आपो रसः। अपामोषधयो रसः। ओषधीनां पुरुषो रसः। पुरुषस्य वाग्रसः। वाच ऋग्रसः। ऋचः साम रसः। साम्न उद्गीथो रसः॥ २॥**

मुद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमुपासीत। कर्माङ्गावयवभूत ओङ्कारे परमात्मप्रतीके दृढामैकाग्र्यलक्षणां मतिं सन्तनुयात्। स्वयमेव श्रुतिरोङ्कारस्योद्गीथशब्दवाच्यत्वे हेतुमाह—ओमिति ह्युद्गायति। ओमित्यारभ्य हि यस्मादुद्गायत्यत उद्गीथ ओङ्कार इत्यर्थः। तस्योपव्याख्यानं तस्याक्षरस्योपव्याख्यानमेवमुपासनमेवंविभूत्येवंफलमित्यादिकथनमुपव्याख्यानम्। प्रवर्तत इति वाक्यशेषः॥ १॥

एषां चराचराणां भूतानां पृथिवी रसो गतिः परायणमवष्टम्भः। पृथिव्या आपो रसोऽप्सु ह्योता च प्रोता

नरेन्द्रपुरीयं टिप्पणम्

गायत्र्यादिजपयज्ञादौ कर्मणि स्वाध्यायस्यादावन्ते चोङ्कारस्य प्रयोगो दृश्यते। "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्॥" "स्रवत्यनोङ्कृतं पूर्वं परस्माच्च विशीर्यते" इत्यादिस्मृतेरित्यर्थः। समुदायवाचकस्य तदेकदेशे प्रयोगो दृश्यते "ग्रामो दग्ध" इत्यादौ तथेहाप्युद्गीथभक्तेरवयव ओङ्कार उद्गीथ उच्यते। शस्त्रादिगतस्योपास्यत्वमिह मा प्रापदिति विशेषफलम्। एवमुपासनमिति। रसतमादिगुणविशिष्टत्वेनोपासनम्। पूर्वमुत्पत्तिविधिरुक्तो गुणविधिरुत्तरत्रोच्यत इत्यर्थः। एवं विभूतीति। परमः परार्घ्यस्तेनेयं त्रयीविद्या वर्तत इत्यादिस्तुतिरप्युच्यत इत्यर्थः। एवंफलमिति। "आपयिता ह वै कामानां भवती"त्यधिकार-

आनन्दगिरिटीका

इतिवदेकदेशे समुदायविषयं पदं प्रवृत्तमित्याह—उद्गीथेति। उपास्तिं विभजते—कर्मेति। उद्गीथावयवत्वादोङ्कारे तच्छब्दप्रवृत्तिरित्युक्तत्वादनन्तरवाक्यमकिञ्चित्करमित्याशङ्क्य श्रुत्युक्तो योऽस्मदुक्तो हेतुस्तेन स्फुटीक्रियते ततश्चोत्कृष्यास्माभिर्दर्शित इत्यभिप्रेत्याऽऽह—स्वयमेवेति। ओमित्येतदक्षरमित्यत्रोपासनोत्पत्तिविधिरुक्तः। सम्प्रति गुणं विवक्षुर्वाक्यान्तरमादाय व्याचष्टे—तस्येति। एवमुपासनमिति। रसतमत्वमाप्तिः समृद्धिरित्येवंगुणकमुपासनं यस्याक्षरस्य तत्तथेत्यर्थः। एवंविभूतीति। परमः परार्घ्यस्तेनेयं त्रयी विद्या वर्तत इत्याद्या विभूतिः स्तुतिर्यस्य तत्तथेति यावत्। एवंफलमिति। "आपयिता ह वै कामानामि"त्यादि फलं यस्योपास्यसाक्षात्कारस्य तत्तथोक्तमित्यर्थः। [1]गोदोहनवदाश्रित्य विधानादधिकृताधिकारमिदमुपासनं तथाऽपि पृथगेव पृथग्घ्यप्रतिबन्धः[2] फलमिति न्यायेन फलवत्। [3]फलं याजमानमुद्गातुर्यजमानेन कर्मार्थं क्रीतत्वात्तत्कर्तृकस्योपासनस्यापि यजमानस्य स्वामिनः फलमिति वचनमादिशब्दार्थः। वाक्यस्य साकाङ्क्षत्वेनाऽऽनर्थक्यं वारयति—प्रवर्तत इति॥ १॥

तदेवोपव्याख्यानमनुवर्तयन्नोङ्कारस्य रसतमत्वं गुणं विधातुं पातनिकां करोति—एषामिति। गतिरित्युत्पत्ति-

---

१. गावः दुह्यन्तेऽस्मिन्निति गोदोहनं पात्रविशेषः "गोदोहनेन पशुकामस्य प्रणयेत्" इति दर्शपूर्णमासप्रकरणे श्रूयते। प्रणयनं नाम गार्हपत्यपश्चाद्भागे स्थितस्य जलस्य गार्हपत्यसमीपे नयनं तच्च चमसपात्रेण सामान्यतः कर्तव्यं चमसेनापः प्रणयतीति तद्विधानात्। यजमानस्य पशुफलापेक्षायां गोदोहनपात्रेण प्रणयनं कार्यम्। इदं तु काम्यं पशुफलाय विधीयते। तत्र प्रकरणप्राप्तं प्रणयनं आश्रयः केवलगोदोहनस्य यागशालास्थापनेन फलाभावात् प्रणयनमाश्रित्य गोदोहनं फलं जनयति। अत एव दर्शपूर्णमासयोरधिकृतस्यैव गोदोहनेन प्रणयनाधिकारः। एवं यागाङ्गमुद्गीथमाश्रित्य परमात्मोपासनमत्र विधेयं परमात्मदृष्टयोपास्यस्योद्गीथप्रणवस्य कामावाप्तिः फलमित्यर्थः।

२. पृथगिति—तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ( ब्र० सू० ३-३ ४२ ) इत्यधिकरणे कर्माङ्गावबद्धोपासनानि न नित्यतया यज्ञे प्रयोक्तव्यानि यतः तेषां कर्मफलात् पृथगेव कर्मसमृद्धिः फलगतातिशयः प्राप्तव्यत्वेन श्रूयते "यदेव विद्ययाकरोति तदेव वीर्यवत्तरं भवति" इति श्रुतेः।

३. फलं याजमानमिति—"स्वामिनः फलश्रुतेरित्यात्रेयः"—इत्यधिकरणे (ब्र० सू० ३-४-४४) कर्मावबद्धोपासनानि स्वामिना यागकर्त्रा कार्याणि इति पूर्वपक्षे प्राप्ते आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रीयते—इति सूत्रेण इमान्युपासनानि ऋत्विग्भिः कर्तव्यानि साङ्गकर्मानुष्ठानाय ऋत्विग्भ्यः दक्षिणादानात् इत्युक्तम्।

**स एष रसानाँ रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥ ३ ॥**
**कतमा कतमर्क्कतमत्कतमत्साम[1] कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥**

च पृथिव्यतस्ता रसः पृथिव्याः। अपामोषधयो रसोऽप्परिणामत्वादोषधीनाम्। तासां पुरुषो रसोऽन्नपरिणामत्वात् पुरुषस्य। तस्यापि पुरुषस्य वाग्रसः। पुरुषावयवानां हि वाक्सारिष्ठा। अतो वाक्पुरुषस्य रस उच्यते। तस्या अपि वाच ऋग्रसः सारतरा। ऋचः साम रसः सारतरम्। तस्यापि साम्न उद्गीथः प्रकृतत्वादोङ्कारः सारतरः ॥ २ ॥

एवं स एष उद्गीथाख्य ओङ्कारो भूतादीनामुत्तरोत्तररसानामतिशयेन रसो रसतमः। परमः परमात्मप्रतीकत्वात्। परार्ध्योऽर्धं स्थानं, परं च तदर्धं च परार्धं तदर्हतीति परार्ध्यः परमात्मस्थानार्हः परमात्मवदुपास्यत्वादित्यभिप्रायः। अष्टमः पृथिव्यादिरससंख्यायां यदुद्गीथो य उद्गीथः ॥ ३ ॥

वाच ऋग्रस इत्युक्तम्। कतमा सर्क्कतमत्तत्साम कतमो वा स उद्गीथः। कतमा कतमेति वीप्साऽऽदरार्था।

### नरेन्द्रपुरीयं टिप्पणम्

विधिः। अधिकृतस्यैवात्राधिकारो नान्यस्याश्रयलाभाभावात्। यजमान ऋत्विजं प्रयुङ्क्ते त्वं मदर्थं कुर्विति। ततस्स्वामिन एव फलमित्युचितं व्याख्यानं प्रस्तुतमित्यर्थः। रसशब्दः कारणपरतया व्याख्यातः कार्यंपरतयोत्तरत्र व्याख्यायते। ओषध्यादिषु गोरस इत्यादौ कार्येऽपि प्रयोगदर्शनात्। यदि ऋग्जातयो बह्व्यस्तदा तासां मध्ये कतमर्ग्जातिरत्र विवक्षितेति प्रश्नो युज्येत। नास्ति च ऋग्जातिबहुत्वं प्रमाणाभावादतोऽनुपपन्नः प्रश्न इत्याक्षिप्य

### आनन्दगिरिटीका

कारणत्वं परायणमिति स्थितिहेतुत्वमवष्टम्भ इति प्रलयनिदानत्वमुच्यत इति भेदः। वैपरीत्येन वाऽमूनि पदानि नेयानि। अपां पृथिवीरसत्वं साधयति—अप्सु हीति। अस्यार्थस्य श्रुत्यन्तरप्रसिद्धिं द्योतयितुं हिशब्दः। ओषधीनामपः प्रति कारणत्वाभावात्कथं तत्र रसशब्दस्तत्राऽऽह—अप्परिणामत्वादिति। कारणपरतया पूर्वत्र व्याख्यातोऽपि रसशब्दो गोरस इतिवदुत्तरत्र कार्यपरतया व्याख्येय इत्यर्थः। कथमोषधीनां पुरुषो रसः। न हि ताभिरसौ क्रियते तत्राऽऽह—अन्नेति। पुरुषरसत्वं वाचः समर्थयते—पुरुषेति। वाग्विहीनं हि प्रतिपुरुषान्तरं विनिन्दन्ति। अतो वाचः सारतमत्वं प्रसिद्धमिति हिशब्दार्थः। तस्याः सारिष्ठत्वप्रसिद्धिरतःशब्दार्थः। वाङ्निर्वर्त्यत्वादृचस्तद्रसत्वमित्यभिप्रेत्याऽऽह—सारतरेति। ऋचः सकाशादपि तदध्यूढं साम गीयमानं वक्तृश्रोत्रोः सुखकरमिति मत्वाऽऽह—सारतरमिति। उद्गीथशब्दं चावयवे प्रकरणान्नियमयति—प्रकृतत्वादिति। न हि सामानोङ्कृतं फलाय भवतीति मन्वानो ब्रूते—सारतर इति ॥ २ ॥

तदर्थं पृथिव्यादीनां रसत्वमुक्तं तदिदानीं दर्शयति—एवमिति। रसतमत्वगुणकमोङ्कारमुपास्यत्वार्थं विशेषणाभ्यां महीकरोति—परम इति। तस्य परमात्मस्थानयोग्यत्वं समर्थयते—परमात्मवदिति। यथा परमात्मा स्वरूपत्वेनानुसन्धीयते तथाऽस्यापि तदात्मनाऽनुसन्धेयत्वाद्विष्णुबुद्ध्यालम्बनार्हप्रतिमावदयमपि परमात्मत्वबुद्ध्यालम्बनयोग्यो भवतीत्यर्थः। ओङ्कारात्पराचीनो रसो नास्तीति तदीयरसतमत्वस्फुटीकरणार्थं परिगणनातः सिद्धमष्टमत्वमनुवदति—अष्टम इति। ननु भूतान्यारभ्य नवमत्वे प्रतीयमाने कथमोङ्कारस्याष्टमत्वं प्रतिज्ञायते तत्राऽऽह—पृथिव्यादीति। स एष इत्युक्तं व्यक्तीकर्तुं यदुद्गीथ इत्येतद्व्याचष्टे—य इति। पूर्ववदुद्गीथशब्दोऽवयवपरो नेतव्यः ॥ ३ ॥

अथ गुणान्तरविधानार्थं प्रश्नमवतारयन्वृत्तमनुवदति—वाच इति। ऋचः साम रसः साम्न उद्गीथो रस इति चोक्तमिति द्रष्टव्यम्। इदानीमृगादिजातिं जिज्ञासमानः पृच्छति—कतमेति। वीप्सात्रयं प्रश्ने तत्तज्जातिज्ञाने

---

१. पाञ्चभक्तिकं साप्तभक्तिकमिति द्विविधं साम। तत्र हिङ्कारः प्रस्ताव उद्गीथः प्रतिहारो निधनमिति पञ्चभक्तयः पञ्चावयवाः। इम एवादिः उपद्रव इति भागद्वयेनाधिकेन युताः साप्तभक्तिकं साम भवन्ति। भक्तिः=अवयवः।

उद्गीथारम्भे प्रणवः उच्चारणीयः। ततश्च उद्गीथावयवः प्रणवो भवति। "ओमित्यक्षरमुद्गीथमिति" ओङ्कारस्योद्गीथस्य च सामानाधिकरण्यं कस्मिन्नर्थे ग्राह्यमिति ब्रह्मसूत्रतृतीयाध्यायतृतीयपादे "व्याप्तेश्च समञ्जसमि"त्यस्मिन्नधिकरणे विचारितम्—तथाहि चतुर्धा सामानाधिकरण्ये दृश्यते—आद्यं

ननु "वा बहूनां जातिपरिप्रश्ने डतमच्" । न ह्यत्र ऋग्जातिबहुत्वं कथं डतमच्प्रयोगः । नैष दोषः । जातौ परिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन्विग्रहे जातावृग्व्यक्तीनां बहुत्वोपपत्तेः । न तु जातेः परिप्रश्न इति विगृह्यते ।

नरेन्द्रपुरीयं टिप्पणम्

समाधत्ते । नैष दोष इत्यादिना । जातौ सत्यां व्यक्तीनां बहुत्वसम्भवादृग्जातौ कतमर्ग्व्यक्तिर्वाच ऋग्ग्रस इत्यत्र विवक्षितेति प्रश्नो युज्यत इत्यर्थः । जातेः परिप्रश्न इति विग्रहानङ्गीकारे वृत्तिकारीयमुदाहरणं विरुद्ध्यते । न हि

आनन्दगिरिटीका

श्रद्धातिरेकं दर्शयितुमित्याह—कतमा कतमेति । प्रश्नत्रयमाक्षिपति—नन्विति । अनेकजात्यवच्छिन्नानां मध्ये यदैकस्या जातेर्निर्धारणार्थः परिप्रश्नो भवति तदा तस्मिन्विषये विकल्पेन डतमच्प्रत्ययः स्याद्यथा बहूनां कठादीनां मध्ये कठजातिनिर्णयार्थं कतमे कठा इति प्रश्नो दृश्यते तथाऽन्यत्रापीति सूत्रार्थः । बहूनामेकस्या निर्धारणे डतमज्विधानेऽपि प्रकृते प्रश्नत्रये काऽनुपपत्तिरित्याशङ्क्याऽऽह—न हीति । अत्रेत्यध्यापकाध्येतृव्यवहारभूमिरुक्ता । ऋग्जातिग्रहणं सामजातेरुद्गीथजातेश्चोपलक्षणम् । तद्बहुत्वाभावेऽपि किं नश्छिद्यते तत्राऽऽह—कथमिति । ऋगादिजातयो यदि भूयस्यः स्युस्तदा तासां मध्ये कतमर्ग्जातिः कतमा सामजातिर्वा कतमा वोद्गीथजातिरत्र विवक्षितेति प्रश्नो युज्यते । न चास्ति तत्र जातिबहुत्वं प्रमाणाभावादतोऽनुपपन्नं प्रश्नत्रयमित्यर्थः । प्रश्नानुपपत्तिं दूषयति—नैष दोष इति । बहूनां तत्तज्जात्यवच्छिन्नानां सन्निधाने जातौ सत्यां व्यक्तिबहुत्वसम्भवात्तदन्यतमनिर्धारणार्थपरिप्रश्ने विकल्पेन डतमजिति सूत्रार्थाङ्गीकारादृगादिजातौ तद्व्यक्तिबाहुल्यात्कतमा तद्व्यक्तिर्वाच ऋग्ग्रस इत्यादौ विवक्षितेति प्रश्नपर्यवसानादुपपन्नं प्रश्नत्रयमित्यर्थः । यत्तु विग्रहान्तरं गृहीत्वा प्रश्नानुपपत्तिरित्युक्तं तत्राऽऽह—न त्विति । तत्र चानुपपत्तिं यदि जातेरित्यत्र व्यक्तीकरिष्यति । अस्मदिष्टविग्रहापरिग्रहे वृत्तिकारीयमुदाहरणं

---

अध्यासे यथा—नाम्नि ब्रह्मबुद्धिः यथा वा प्रतिमादौ विष्णुबुद्धिः । तत्र ब्रह्मबुद्धौ सत्यामपि नाम्नि नामबुद्धिर्न निवर्तते इयं च प्रतीकोपासना । द्वितीयं अपवादे—यथा शुक्तौ रजतबुद्ध्यनन्तरं शुक्तिज्ञाने सति यद्रजतं सा शुक्तिरिति जायमानं यथार्थज्ञानम् । इदमेव बाधायां सामानाधिकरण्यमित्युच्यते रजततादात्म्याभाववती शुक्तिरिति तदर्थः । तृतीयं—ऐक्ये-यथा द्विजोत्तमो ब्राह्मण इति । चतुर्थं विशेषणविशेष्यभावे—यथा नीलमुत्पलमिति । अत्राद्यानां त्रयाणामसम्भवात् विशेषणपक्ष एव आश्रयणीयः उद्गीथावयवः ओङ्कार इत्यर्थः । तत्र परमात्मदृष्टिविधानायायमारम्भः ।

उपासनं द्विविधं प्रतीकोपासनं सम्पदुपासनं चेति । आरोप्यप्रधाना सम्पत् । अधिष्ठानप्रधानोऽध्यासः, अथवा प्रतीकोपासनं; प्रकृतं च प्रतीकोपासनं भाष्ये परमात्मप्रतीके इत्युक्तेः । ओङ्कारे एव परमात्मदृष्टिः न तु परमात्मनि ओङ्कारदृष्टिः इत्येतत् आदित्यादिमतयश्चाङ्ग उपपत्तेः ( ब्र० सू० ४-१-६ ) इत्यधिकरणे निर्णीतम् । अङ्गानामपूर्वसन्निहितत्वात् संस्कारार्हत्वाच्च अङ्गान्येव तत्तदुपासनेन संस्कार्याणि न तु विपरीतमित्यर्थः ।

उपासनमासीनेन कर्तव्यमिति त्वासीनः सम्भवादित्यत्र ( ब्र० सू० ४-१-७ ) निर्णीतम् । कर्माङ्गावबद्धान्युपासनानि कर्माङ्गकर्तृभिः ऋत्विग्भिरेव कर्तव्यानि न तु यजमानेनेत्येतत् स्वामिनः फलश्रुतेरित्यात्रेयः इत्यधिकरणे निर्णीतम् ( ब्र० सू० ३-४-४४ ) ।

एतेषां कर्माङ्गावबद्धोपासनानां तत्तत्कर्मानुष्ठातृभिः फलेच्छायां सत्यां कर्तव्यत्वं न तु कर्मिभिः नित्यतया अनुष्ठानावश्यकता । तदुक्तं व्यासाचार्यैः—तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ( ब्र० सू० ३-३-४२ )इति सूत्रे । अत्र हि उपासनानां पाक्षिकत्वमुक्तं गोदोहनन्यायात् । तद्वदेव पृथक्फलश्रवणात् फलं च क्वचिदप्रतिबन्धः, क्वचिदभ्युदयादिः ।

तन्निर्धारणानामासिः समृद्धिरित्यादिगुणानामनियमः उपास्यत्वानियम इत्यर्थः । तद्दृष्टेः अनियमस्य दृष्टेः तेनोभौ कुरुतो यश्चैवं वेद यश्च नेति ।

**वागेवर्क्प्राणः साम ओमित्येतदक्षरमुद्गीथः तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्क्च साम च ॥५॥**

[1]ननु जातेः परिप्रश्न इत्यस्मिन्विग्रहे कतमः कठ इत्याद्युदाहरणमुपपन्नं जातौ परिप्रश्न इत्यत्र तु न युज्यते। तत्रापि कठादिजातावेव व्यक्तिबहुत्वाभिप्रायेण परिप्रश्न इत्यदोषः। यदि जातेः परिप्रश्नः स्यात्कतमा कतमर्गित्यादावुपसंख्यानं कर्तव्यं स्याद्विमृष्टं भवति विमर्शः कृतो भवति ॥ ४ ॥

विमर्शे हि कृते सति प्रतिवचनोक्तिरुपपन्ना वागेवर्क्प्राणः सामेति। वागृचोरेकत्वेऽपि नाष्टमत्वव्याघातः

नरेन्द्रपुरीयं टिप्पणम्

कठशब्दः काञ्चिदेव व्यक्तिं ब्रूत इत्याह—नन्विति। एतेषां मध्ये कतमः कठजातीय इत्युदाहरणं न विरुद्ध्यते अन्यथा जातेरेकत्वाद्बहुत्वासम्भवाद्वा बहूनां जातिपरिप्रश्ने डतमजिति सूत्रेण कतमर्गित्याद्युदाहरणं न सिध्येदिति तत्सिध्यर्थं पृथग्विधानं प्रसज्येतेत्यर्थः ॥ १-२-३-४ ॥

एवं शिष्येण चोदिते श्रुतिराचार्यरूपा परिहरति—वागेवेति। कारणाभेदोपदेशेन ऋक्सामान्यमात्रं श्रुतिवचनेन दर्शितम्। ततः पूर्वत्रापि न काचिद्व्यक्तिर्विवक्षितेति भावः। नन्वत्र वागृचोरभेदश्चेद्विवक्षितस्तर्ह्युद्गीथस्याष्टमत्वं पूर्वोक्तं विरुद्ध्येत भेदे सत्येव तल्लाभादभेदे सप्तमत्वप्रसङ्गादित्याशङ्क्याह—वागृचोरेकत्वेऽपीति।

आनन्दगिरिटीका

विरुध्यते। कठशब्दस्य व्यक्तिविशेषत्वाभावादिति शङ्कते—नन्विति। उदाहरणेऽपि सत्यां कठजातौ तद्व्यक्तिबाहुल्यात्तदन्यतमनिर्धारणाभिप्रायेण परिप्रश्ने डतमजित्यङ्गीकारान्न परोक्तोदाहरणविरोधोऽस्मत्पक्षेऽस्तीति परिहरति—तत्रापीति। ननु द्विधाऽपि विग्रहोपपत्तौ किमिति त्वदिष्टो विग्रहो नियम्यते तत्राऽऽह—यदीति। त्वदिष्टविग्रहपरिग्रहश्चेदृगादिजातेरेकत्वात्प्रत्येकं बहुत्वायोगात् वा बहूनामित्यादिसूत्रेण कतमक्कतमत्सामेत्युदाहरणं न सिध्येत्। तथा च तत्सिद्ध्यर्थं पृथग्विधानं प्रसज्येत। न हि वैदिकमुदाहरणं प्रमत्तगीतमिव हातुं शक्यं तस्मादृगादिव्यक्तिरेवात्र प्रष्टुं युक्तेत्यर्थः ॥ ४ ॥

किमिति यथोक्तरीत्या विमृश्यते। विवक्षितमृगादिस्वरूपमेवाऽऽदावुपन्यस्यतां लाघवादित्याशङ्क्याऽऽह—विमर्शे हीति। शिष्यभूतया श्रुत्या चोदिते सैवाऽऽचार्यभूता परिहरति—वागेवेति। नन्वाद्ये प्रतिवचने वागृचोरेकत्वाव-

---

१. नन्विति—अत्र महाभाष्ये जातिपरिप्रश्ने इत्यादेरानर्थक्यं सूचितम्। कैयटे स्पष्टमुक्तं यद्यपि तथापि यथाश्रुतसूत्रमादाय शङ्का भाष्ये। तत्र च ऋग्जातेः बहुत्वाभावात् कतमा ऋक् इति प्रयोगोऽनुपपन्नः इति शङ्का। जातौ परिप्रश्न इति व्युत्पत्त्या जातौ निमित्ते व्यक्तिपरिप्रश्न इति समाधानम्। अन्ते तु जातेः परिप्रश्न एव डतमच् इत्यर्थाङ्गीकारे श्रौतप्रयोगोपपत्तये सूत्रान्तरं रचनीयं सूत्रकृता इति समाधानमुक्तम्। रसतमत्वं, आप्तिः समृद्धिरित्यादयो गुणाः अत्र श्रुताः किं स्तुत्यर्था उत उपासनार्था इति संशये सूत्रं स्तुतिमात्रमुपादानादितिचेन्नापूर्वत्वात् इति ( ब्र० सू० ३-४-२१ )। न केवलं स्तुतय इमे गुणाः पठिता अपितु उपासनार्था एव, अपूर्वत्वात्, व्यर्थप्रायं च स्तुत्यर्थत्वम्, इत्युक्तम्।

अपि च इमे रसतमत्वादयः किं तत्तच्छाखागतेष्वेव उद्गीथादिषु उपास्या उत अन्यवेदविहितोद्गीथादिष्वपि उपास्या इति संशये सिद्धान्तः—नैते प्रतिवेदं स्वशाखागतेष्वेवोद्गीथादिषु क्षिप्येरन् अपि तु सर्वशाखास्वनुवर्तेरन्। कुतः ? उद्गीथादिश्रुत्यविशेषात्, अन्यथा स्वशाखागतेषु सङ्कोचे उद्गीथशब्दे लक्षणा स्यादिति निर्णीतम्।

अपरमपि—किमङ्गावबद्धोपासनाहीनं अङ्गावबद्धोपासनासहितं चेत्युभयमपि विद्याहेतुत्वेन मुमुक्षोरुपकारकं उत विद्यासंयुक्तमेवेति सन्देहे विशिष्टत्वाद्विद्यासहितमेवोपकारकमिति प्राप्ते सिद्धान्तः—यदेव विद्येति हि। विद्याविहीनमपि कर्म तत्त्वज्ञानोपकारकमेव "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ती"त्युभयसाधारण्येन यज्ञादीनां विधानात्। "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती"ति श्रुतिरपि विद्यासहितस्य वीर्यवत्तरत्वं ब्रुवती तद्रहितस्य वीर्यवत्त्वमनुमन्यते। वीर्यवत्त्वं च स्वफलसाधनत्वमेव नान्यत् ( ब्र० सू० ४-१-१७ )।

पूर्वस्माद्वाक्यान्तरत्वादाप्तिगुणसिद्धय ओमित्येतदक्षरमुद्गीथ इति । वाक्प्राणावृक्सामयोनी इति वागेवक्प्राणः सामेत्युच्यते । यथाक्रममृक्सामयोन्योर्वाक्प्राणयोर्ग्रहणे हि सर्वासामृचां सर्वेषां च साम्नामवरोधः कृतः स्यात् । सर्वक्सामावरोधे चक्सामसाध्यानां च सर्वकर्मणामवरोधः कृतः स्यात् । तदवरोधे च सर्वे कामा अवरुद्धाः स्युः । ओमित्येतदक्षरमुद्गीथ इति भक्त्याशङ्का निवर्त्यते । तद्वा एतदिति मिथुनं निर्दिश्यते । किं तन्मिथुनमित्याह यद्वाक्च प्राणश्च सर्वऋक्सामकारणभूतौ मिथुनम् । ऋक्च साम चेति ऋक्सामकारणावृक्सामशब्दोक्तावित्यर्थः । न तु स्वतन्त्रमृक्च साम च मिथुनम् । अन्यथा हि वाक्च प्राणश्चेत्येकं मिथुनमृक्साम चापरं मिथुनमिति द्वे मिथुने स्याताम् । तथा च तदेतन्मिथुनमित्येकवचननिर्देशोऽनुपपन्नः स्यात् । तस्मादृक्सामयोन्योर्वाक्प्राणयोरेव मिथुनत्वम् ॥ ५ ॥

नरेन्द्रपुरीयं टिप्पणम्

रसतमगुणविधिपरं पूर्ववाक्यं तत्राष्टमत्वमस्तु । ततो वाक्यान्तरादत्राष्टमत्वासिद्धावपि न दोष इत्यर्थः । तर्हि कोऽत्राधिकोऽर्थो येन वाक्यान्तरत्वमुच्यते तत्राह—आप्तिगुणेति । ओमित्येतदक्षरमुद्गीथमित्यत्राप्तिगुणविधानार्थमुत्तरं वाक्यमित्यर्थः । ऋक्सामप्रश्ने कथं वाक्प्राणशब्दाभ्यां प्रतिवचनं तत्राह—वाक्प्राणाविति । कारणोपादाने तात्पर्यमाह—ऋक्सामयोन्योरिति। वाक्प्राणस्वरूपे सर्वासां ऋचां सर्वेषां च साम्नां निक्षेपे कृते वा को लाभस्सिध्यतीत्यत आह—सर्वक् सामावरोधे चेति । वाक्प्राणयोस्सर्वकामसम्बन्धस्सिद्धो भवति परम्परया तथाभूतवाक्प्राणसम्बन्धादुद्गीथस्य सर्वकामसम्बन्धस्सेत्स्यतीति भावः । कतम उद्गीथ इति प्रश्नस्योत्तरमाह—ओमित्येतदिति । वाक्प्राणयोर्मिथुनशब्दवाच्यत्वादपि कामसम्बन्धित्वं पतिपत्निमिथुनवदित्याह—तद्वा एतदिति ॥ ५ ॥

आनन्दगिरिटीका

गमादोङ्कारस्य रसतमवाक्योपदिष्टमष्टमत्वं व्याहन्येतेत्याशङ्क्याऽऽह—वागृचोरिति । कथं पुना रसतमवाक्यादिदं प्रश्नप्रतिवचनरूपवाक्यं भिद्यतेऽर्थाधिक्याभावात्तत्राऽऽह—आप्तीति । पूर्वं हि वाक्यमोङ्कारस्य रसतमत्वं विदधाति । इदं तु तस्यैवाऽऽप्तिगुणं विधत्ते । तथा च तादृग्गुणविध्यर्थत्वेनास्य वाक्यान्तरत्वादेतद्वाक्यवशादष्टमत्वाभावेऽपि पूर्ववाक्यादोङ्कारस्याष्टमत्वमविरुद्धमित्यर्थः । तथाऽपि कथमृगादिजातीये पृष्टे वागेवर्गित्यादिप्रतिवचनमुचितं तद्वयक्तिविशेषवचनमेव प्रश्नानुसारीत्याशङ्क्याऽऽह—वाक्प्राणाविति । वागृचो योनिस्तन्निर्वर्तकत्वात् । प्राणश्च साम्नो हेतुर्बलेन हि गीतिरुत्पाद्यते । तथा च वागेवेत्यादिना कार्यकारणयोरभेदोपदेशादृङ्मात्रं साममात्रं वा तत्तत्कारणात्मकं प्रतीयते तेन पूर्वत्रापि व्यक्तिरविवक्षिता। प्रश्नप्रतिवचनयोरेकार्थत्वात्। न चैवमृगादिजातेरेकत्वादुत्तमचप्रत्ययानुपपत्तिः । तत्तज्जात्यवच्छिन्नानामृक्सामोद्गीथानां सन्निधावृगादिजातेरेकस्या निर्धारणार्थं परिप्रश्ने तत्प्रयोगसम्भवादृगादिषु प्रत्येकं भेदविवक्षया षष्ठीसमासे दूषणमुक्तम् । तत्र प्रत्येकमेकत्वमुपेत्योक्तरीत्या षष्ठीसमासे तु न किञ्चिद्दुष्यतीति भावः । ऋगात्मिकाया वाचः सामात्मकस्य प्राणस्य ग्रहणे फलितं दर्शयन्नुक्तमेव व्यक्तीकरोति—यथाक्रममिति । ऋक्साममात्रावरोधेऽपि सिध्यतीत्याशङ्क्याऽऽह—सर्वेति । तथाऽपि किं स्यादिति चेत्तदाह—सर्वे कामा इति । उक्तप्रक्रियया सर्वकामावाप्तिहेतुरोङ्कारो विवक्षिताप्तिगुणकः सिध्यतीत्यर्थः । तृतीये वचने तात्पर्यमाह—ओमित्येतदिति । अत्रापि पूर्ववज्जातिगृहीतौ तद्वयक्तित्वेन भक्तिरेवोक्तेति शङ्कां निरसितुमोमित्येतदक्षरमिति विशेषणम् । तथा चोद्गीथस्तदवयवो विशेषणात्प्रकरणाच्चेत्यर्थः । पारम्पर्येण वाक्प्राणयोः सर्वकामसम्बन्धादुद्गीथस्यापि तथाभूतवागादिसम्बन्धादस्ति सर्वकामसम्बन्ध इत्युक्तम् । इदानीमोङ्कारस्य वाक्प्राणद्वारा सर्वकामसम्बन्धे हेत्वन्तरमाह—तद्वा इति । तदेतत्पदयोरक्षरविषयत्वं व्यावर्त्य वक्ष्यमाणविषयत्वं दर्शयति—मिथुनमिति । वैशब्दो मिथुनप्रसिद्धयर्थः । वाक्च प्राणश्चेति यदुभयमुपलभ्यते तदेतन्मिथुनमिति योजनामङ्गीकृत्य वाक्यार्थमाह—ऋक्सामेति । वाक्प्राणयोर्ऋक्सामकारणत्वमुत्तरवाक्येन स्पष्टयति—ऋक्चेति । यथा वाक्प्राणौ मिथुनमेवमृक्सामे च स्वातन्त्र्येण मिथुनं निर्देशसामान्यादित्याशङ्क्याऽऽह—न त्विति । विपक्षे दोषमाह—अन्यथेति । इष्टमेव मिथुनद्वयमिति चेन्नेत्याह—तथा चेति । ननु मिथुनयोरनुगतं मिथुनत्वमादायैकवचनमुपपत्स्यते चेन्नेत्याह—तस्मादिति । उपक्रमभङ्गान्न स्वतन्त्रमिथुनद्वयमस्तीत्यर्थः ॥ ५ ॥

तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सँ्सृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥ ६ ॥

आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ७ ॥

तद्वा एतदनुज्ञाक्षरम् यद्धि किञ्चानुजानात्योमित्येव तदा ह एषो एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥ ८ ॥

तदेतदेवंलक्षणं मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते। एवं सर्वकामावाप्तिगुणविशिष्टं मिथुनमोङ्कारे संसृष्टं विद्यत इत्योङ्कारस्य सर्वकामावाप्तिगुणवत्त्वं प्रसिद्धम्। वाङ्मयत्वमोङ्कारस्य प्राणनिष्पाद्यत्वं च मिथुनेन संसृष्टत्वं मिथुनस्य कामापयितृत्वं प्रसिद्धमिति दृष्टान्त उच्यते। यथा लोके मिथुनौ मिथुनावयवौ स्त्रीपुंसौ यदा समागच्छतो ग्राम्यधर्मतया संयुज्येयातां तदाऽऽपयतः प्रापयतोऽन्योन्यस्येतरेतरस्य तौ कामम्। तथा च स्वात्मानुप्रविष्टेन मिथुनेन सर्वकामाप्तिगुणवत्त्वमोङ्कारस्य सिद्धमित्यभिप्रायः ॥ ६ ॥

तदुपासकोऽप्युद्गाता तद्धर्मा भवतीत्याह—आपयिता ह वै कामानां यजमानस्य भवति य एतदक्षरमेवमाप्तिगुणवदुद्गीथमुपास्ते तस्यैतद्यथोक्तं फलमित्यर्थः। "तं यथा यथोपासते तदेव भवति" इति श्रुतेः ॥ ७ ॥

समृद्धिगुणवांश्चोङ्कारः। कथम्—तद्वा एतत्प्रकृतमनुज्ञाक्षरमनुज्ञा च साऽक्षरं च तत्। अनुज्ञाऽनुमतिरोङ्कार इत्यर्थः। कथमनुज्ञेत्याह श्रुतिरेव। यद्धि किञ्च यत्किञ्च लोके ज्ञानं धनं वाऽनुजानाति विद्वान्धनी वा तत्रानुमतिं कुर्वन्नोमित्येव तदाह। तथा च वेदे "त्रयस्त्रिंशदित्योमिति होवाच" इत्यादिना। तथा च लोकेऽपि तवेदं धनं

## नरेन्द्रपुरीयं टिप्पणम्

गुणान्तरविधानायोत्तरो ग्रन्थ इति तात्पर्यमाह—समृद्धिगुणवांश्चेति। ओङ्कारस्यानुज्ञाक्षरत्वे सम्मतिमाह—तथा चेति। "त्रयस्त्रिंशद्देवा" इति याज्ञवल्क्येनोक्ते अनुमतिं चकार शाकल्यः "ओमि"ति। कामापयितृत्वं समृद्धि-

## आनन्दगिरिटीका

भवतु वाक्प्राणाख्यमृक्सामात्मकवाक्प्राणरूपम्। ओङ्कारमिथुनयोः संसर्गे किं फलतीत्याह—एवमिति। कया पुनर्विधया मिथुनेन संसृष्टत्वमक्षरस्य सेत्स्यतीत्यत्राऽऽह—वाङ्मयत्वमिति। यत्तु सर्वकामाप्तिगुणविशिष्टं मिथुनमित्युक्तं तदुपपादयति—मिथुनस्येति। प्रसिद्धमिति। तादृगर्थो यथोक्ताक्षरस्य सर्वकामापयितृत्वे दृष्टान्तः सन्नुच्यतेऽनन्तरवाक्येनेत्यर्थः। दृष्टान्तमेव विवृणोति—यथेत्यादिना। मिथुनद्वयं नास्तीत्युक्तत्वात्कथं मिथुनाविति द्विवचनं तत्राऽऽह—मिथुनावयवाविति। ग्राम्यधर्मतया तथाविधव्यापारतयेति यावत्। वैशब्दोऽवधारणे। विवक्षितं दार्ष्टान्तिकमाचष्टे—तथेति ॥ ६ ॥

एवमोङ्कारमाप्तिगुणविशिष्टं शिष्ट्वा तदुपासनाफलं कथयति—तदुपासकोऽपीति। तद्धर्मेत्युपासकस्याऽऽप्तिगुणवैशिष्ट्योक्तिः। आप्तेति वक्तव्ये कथमापयितेत्युक्तं तत्राऽऽह—यजमानस्येति। निपातौ त्ववधारणार्थौ उद्गीथं तदवयवभूतमिति यावत्। आप्तिगुणवदोङ्कारोपासनात्कथमुपासिता तद्गुणो भवतीत्याशङ्क्याऽऽह—तमिति ॥ ७ ॥

उत्तरग्रन्थस्य गुणान्तरविधाने तात्पर्यं दर्शयति—समृद्धीति। तस्य समृद्धिगुणवत्त्वमप्रामाणिकमित्याशङ्क्य परिहरति—स्वयमित्यादिना। तदेतत्पदयोरोङ्काराख्यमक्षरं विषयत्वेन निर्दिशति—प्रकृतमिति। तस्य स्मृत्यर्थो वैशब्दः। अनुज्ञाक्षरमित्येतद्विगृह्य विवक्षितेनार्थेन घटयति—अनुज्ञा चेति। तस्यानुज्ञात्वे प्रश्नपूर्वकं प्रसिद्धिमुपन्यस्यति—कथमिति। तत्रेति ज्ञानधनयोरुक्तिस्तदित्यनुमन्तव्यसाधारण्येनोच्यते। ओङ्कारस्यानुज्ञाक्षरत्वे लोकप्रसिद्धिवद्वेदप्रसिद्धिं समुच्चिनोति—तथा चेति। कत्येव देवा याज्ञवल्क्येति शाकल्येन पृष्टे त्रयस्त्रिंशदिति याज्ञवल्क्येन प्रत्युक्ते सत्योमिति शाकल्योऽनुज्ञां कृतवान्। पुनश्च कत्येवेति प्रश्ने षडिति प्रतिवचने सत्योमिति होवाचेत्यादि वाक्यं बृहदारण्यके यथोक्तार्थानुसारि प्रसिद्धमित्यर्थः। यद्धि किञ्चेत्यादावुक्तां लोकप्रसिद्धिमेव प्रकटयति—तथा च

**तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति ओमिति शꣳसति ओमित्युद्गायति एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥ ९ ॥**

गृह्णामीत्युक्त ओमित्याह । अत एषा उ एवैषैव समृद्धिर्यदनुज्ञा याऽनुज्ञा सा समृद्धिस्तन्मूलत्वादनुज्ञायाः । समृद्धो ह्योमित्यनुज्ञां ददाति तस्मात्समृद्धिगुणवानोङ्कार इत्यर्थः । समृद्धिगुणोपासकत्वात्तद्धर्मा सन्समर्धयिता ह वै कामानां यजमानस्य भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यादि पूर्ववत् ॥ ८ ॥

अथेदानीमक्षरं स्तौत्युपास्यत्वात्प्ररोचनार्थम् । कथं, तेनाक्षरेण प्रकृतेनेयमृग्वेदादिलक्षणा त्रयी विद्या त्रयीविद्याविहितं कर्मेत्यर्थः । न हि त्रयी विद्यैवाऽऽश्रावणादिभिर्वर्तते कर्म तु तथा प्रवर्तत इति प्रसिद्धम् । कथमोमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति लिङ्गाच्च सोमयाग इति गम्यते । तच्च कर्मैतस्यैवाक्षरस्यापचित्यै पूजार्थम् । परमात्मप्रतीकं हि तत् । तदपचितिः परमात्मन एव सा । "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति स्मृतेः । महिम्ना रसेन । किञ्चैतस्यैवाक्षरस्य महिम्ना महत्त्वेन ऋत्विग्यजमानादिप्राणैरित्यर्थः । तथैतस्यैवाक्षरस्य रसेन व्रीहियवादिरसनिर्वृत्तेन हविषेत्यर्थः । यागहोमाद्यक्षरेण क्रियते । तच्चाऽऽदित्यमुप-

नरेन्द्रपुरीयं टिप्पणम्

हेतुत्वञ्च गुणफलमपि समुच्चित्य प्रधानविधावुपसंहर्तव्यं फलान्तरानिर्देशात् गुणप्रधानयोः फलाकाङ्क्षयोस्तुल्यत्वादर्थवादतः फलकल्पनायाश्चाविशेषादिति ॥ ८ ॥

आध्वर्यवहौत्रौद्गात्रसमाहारस्य दर्शादिष्वभावादग्निष्टोमादिषु च भावात् त्रयसमाहाराल्लिङ्गात् सोमयागोऽत्र त्रयीविहितं कर्मोङ्कारेण प्रवर्तत इति गम्यत इत्यर्थः । कथमोङ्कारस्यैव महिमा ऋत्विगादिप्राणाः, कथं व्रीह्याद्यपि तत्कार्यमित्याकाङ्क्षायामाह—यागहोमादीत्यादिना ॥ ९ ॥

आनन्दगिरिटीका

लोकेऽपीति । ओङ्कारस्य लोकवेदप्रसिद्धिभ्यामनुज्ञात्वेऽपि कथं समृद्धिगुणकत्वमित्याशङ्क्याऽऽह—अत इति । उशब्दोऽप्यर्थः समृद्धिशब्दादुपरि सम्बध्यते । तस्याः समृद्धिमूलत्वं साधयति—समृद्धो हीति । अनुज्ञायाः समृद्धिं प्रति कारणत्वेन समृद्धित्वे सत्योङ्कारस्यापि तदात्मकस्य समृद्धिगुणवत्त्वं सिद्धमित्युपसंहरति—तस्मादिति । समर्धयितेत्यादिफलवाक्यं प्रत्याह—समृद्धीति । अस्मिन्वाक्ये समर्धयितेत्यादिपदजातमापयितेत्यादिपूर्ववद्व्याख्येयमित्याह—इत्यादि पूर्ववदिति ॥ ८ ॥

ओङ्कारस्य गुणत्रयवतः सफलमुपासनमुक्तम् । तथा वक्तव्याभावात्तेनेयमित्यादिवाक्यमनर्थकमित्याशङ्क्याऽऽह—अथेति । स्तुतेरानर्थक्यमाशङ्क्याऽऽह—उपास्यत्वादिति । प्ररोचनं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । त्रयी विद्या वर्तत इति सम्बन्धः । त्रयी विद्येत्यस्योपचरितार्थत्वं कथयति—त्रयी विद्येति । किमिति श्रुतं त्यक्त्वा व्याख्यायते तत्राऽऽह—न हीति । तस्याः स्वरूपलाभस्यानादित्वेन हेत्वनपेक्षत्वादित्यर्थः । कर्मापि कथमाश्रावणादिभिरात्मानं लभते तत्राऽऽह—कर्म त्विति । प्रसिद्धिमेव प्रपञ्चयति—कथमित्यादिना । आध्वर्यवहौत्रौद्गात्रसमाहारस्य दर्शपूर्णमासादिष्वसम्भवादग्निष्टोमादिषु च सम्भवात्तत्त्रितयसमाहाराल्लिङ्गादोङ्कारेण प्रवर्तमानं त्रयीविहितं कर्म सोमयाग इति प्रतिभातीत्याह—लिङ्गाच्चेति । स्रवत्यनोङ्कृतं कर्मेति न्यायादोङ्कारेण वैदिकस्य कर्मणः स्थितिरिति स्तुतिं विधाय स्तुत्यन्तरमाह—तच्चेति । कथं पुनरक्षरं कर्मणा पूज्यते तत्राऽऽह—परमात्मेति । तस्य तत्प्रतीकत्वे किं स्यादिति चेत्तदाह—तदपचितिरिति । ननु कर्मणा परमात्मा चेदाराध्यते तर्हि तत्प्रतीकत्वादक्षरस्यापि तेनाऽऽराधनं स्यात् । न चेश्वरस्तेनाऽऽराध्यत इति प्रमाणमस्ति तत्राऽऽह—स्वकर्मणेति । वर्णाश्रमविहितेन कर्मणेश्वरं प्रसाद्य तत्प्रसादवशात्तत्फलं कर्ता प्राप्नोतीति भगवतोक्तत्वादीश्वरपूजार्थं कर्मेति गम्यते । तथा च तत्प्रतीकत्वादोङ्कारस्य तत्पूजार्थं कर्मेति युक्तमित्यर्थः । वैदिकं कर्माक्षरपूजार्थमित्यक्षरं स्तुत्वा विधान्तरेण स्तौति—किञ्चेति । यजमानादीत्यादिपदेन पत्नी गृह्यते । प्राणैस्त्रयीविहितं कर्म वर्तत इति सम्बन्धः । स्तुत्यन्तरमाह—तथेति । यथाऽक्षरविकारैर्यजमानादिप्राणैर्वैदिकं कर्म प्रवर्तते तथेति यावत् । हविषेत्यत्रापि पूर्ववदन्वयः । कथमृत्विगादिप्राणानां हविषश्चाक्षरविकारत्वमत आह—यागेति । आदिशब्दोऽनुक्तवैदिककर्मसंग्रहार्थः । "तस्मादोमित्युदाहृत्य" इत्यादिस्मृतेरित्यर्थः ।

**तनोभौ कुरुतः यश्चैतदेवं वेद यश्च न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥१०॥**

**इति प्रथमाध्यायस्य प्रथमः खण्डः**

तिष्ठते। ततो वृष्ट्यादिक्रमेण प्राणोऽन्नं च जायते। प्राणैरन्नेन च यज्ञस्तायते। अत उच्यतेऽक्षरस्य महिम्ना रसेनेति ॥ ९ ॥

तत्राक्षरविज्ञानवतः कर्म कर्तव्यमिति स्थितमाक्षिपति—तेनाक्षरेणोभौ यश्चैतदक्षरमेवं व्याख्यातं वेद यश्च कर्ममात्रविदक्षरयाथात्म्यं न वेद तावुभौ कुरुतः कर्म। तयोश्च कर्मसामर्थ्यादेव फलं स्यात्किं तत्राक्षरयाथात्म्यविज्ञानेनेति। दृष्टं हि लोके हरीतकीं भक्षयतोस्तद्रसाभिज्ञेतरयोर्विरेचनम्। नैवम्। यस्मान्नाना तु विद्या चाविद्या च भिन्ने हि विद्याविद्ये। तुशब्दः पक्षव्यावृत्त्यर्थः। नोङ्कारस्य कर्माङ्गत्वमात्रविज्ञानमेव रसतमाप्तिसमृद्धिगुणवद्विज्ञानं किं तर्हि ततोऽभ्यधिकम्। तस्मात्तदङ्गाधिक्यात्फलाधिक्यं युक्तमित्यभिप्रायः। दृष्टं हि लोके वणिक्शबरयोः पद्मरागादिमणिविक्रये वणिजो विज्ञानाधिक्यात्फलाधिक्यम्। तस्माद्यदेव विद्यया विज्ञानेन युक्तः सन्करोति कर्म श्रद्धया श्रद्दधानश्च सन्नुपनिषदा योगेन युक्तश्चेत्यर्थः। तदेव कर्म वीर्यवत्तरमविद्वत्कर्मणोऽधिकफलं भवतीति।

नरेन्द्रपुरीयं टिप्पणम्

उद्गीथादिविज्ञानं कर्मणां नाधिकफलमङ्गज्ञानत्वादाज्येक्षणवदित्यभिप्रेत्य ज्ञानस्य पृथक् फलाभावे शङ्किते परिहरति—नैवम्। यस्मादित्यादिना। तदङ्गाधिक्यादिति। कर्माङ्गादतिरिक्तत्वादुपासनस्य प्रथक्फलत्वं न्याय्यं यथा कर्माङ्गाश्रितोऽपि गोदोहः पृथक्फलः पृथग्विधानादङ्गत्वे मानाभावाच्च तथैवाङ्गज्ञानातिरिक्तं प्रत्ययावृत्तिरूपमुपासनं फलाय विधीयते। अतोऽसिद्धो हेतुरिति भावः। यदुक्तं कर्मण एव लोके फलसाधनत्वं न ज्ञानस्येति तत्राह—दृष्टं हीति। योगेन देवताध्यानेन "यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्नि"ति श्रुतेरित्यर्थः।

आनन्दगिरिटीका

"अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥"

इति स्मृतिमाश्रित्याह—तच्चेति। वृष्ट्यादीत्यादिशब्देनान्नस्य प्रजानां चोत्पत्त्युपकरणं सर्वमुच्यते। तथाऽपि कथमेतस्यैवाक्षरस्य महिम्नेत्यादि तत्राऽऽह—प्राणैरिति ॥ ९ ॥

अक्षरस्य स्तुत्या महीकृतत्वादुपासने सिद्धे किमुत्तरेण ग्रन्थेनेत्याशङ्क्याऽऽह—तत्रेति। पूर्वस्मिन्सन्दर्भे स्तुतिवशादक्षरविज्ञाने कर्तव्ये तन्निष्पाद्यं कर्म तद्विज्ञानवतोऽनुष्ठेयमिति स्थितं तदाक्षेप्तुमुत्तरं वाक्यमित्यर्थः। आक्षेपाक्षराणि व्याचष्टे—तेनेत्यादिना। ननु कर्मकर्तृत्वे विद्वदविदुषोर्विद्वानेव तत्फलमश्नुते नाविद्वानिति कथमित्याशङ्क्याऽऽह—तयोश्चेति। इतिशब्दस्त्वाक्षिपतीत्यनेन सम्बध्यते। कथं विद्वदविदुषोरविशिष्टं फलमित्याशङ्क्य दृष्टान्तमाह—दृष्टं हीति। विमतं न स्वतन्त्रफलमङ्गज्ञानत्वादाज्यावेक्षणवदिति प्राप्ते प्रत्याह—नैवमिति। हेतुत्वेनावतारितं वाक्यं व्याचष्टे—भिन्ने हीति। विद्योपासना कर्माविद्या तयोर्भिन्नत्वं तन्न विद्यावंयर्थ्यमित्यर्थः। विद्यायाः स्वतन्त्रफलवत्त्वं नास्तीति पक्षस्य व्यावृत्तिप्रकारमेव प्रपञ्चयति—नेत्यादिना। अङ्गज्ञानाद्गुणवदक्षरज्ञानस्याऽऽधिक्ये फलितमाह—तस्मादिति। तदङ्गं कर्माङ्गमुद्गीथमात्रज्ञानं तस्मादाधिक्याद्विशिष्टाक्षरज्ञानस्येति यावत्। यत्तु पुनरुक्तं तयोश्च कर्मसामर्थ्यादेव फलं स्यादिति तत्राऽऽह—दृष्टं हीति। यत्त्वङ्गज्ञानत्वादिति तत्किमङ्गत्वे सति ज्ञानत्वं किं वाऽऽश्रित्य विहितत्वमथवैतदेव ज्ञानत्वविशेषितम्? नाऽऽद्यः। तन्निर्धारणानियमन्यायेनासिद्धेः। न द्वितीयो गोदोहने व्यभिचारात्। न तृतीयो दृष्टान्तस्य साधनविकलत्वादाज्यावेक्षणस्याऽऽश्रित्य विध्युदाहरणवहिर्भूतत्वादङ्गसम्बन्धज्ञानत्वमात्रेण दृष्टान्तत्वे सत्यङ्गत्वोपाधेः सम्भवादित्यभिप्रेत्य ज्ञानाधिक्ये फलाधिक्यमित्यत्रानन्तरवाक्यं योजयति—तस्मादिति। विज्ञानमुद्गीथाद्यङ्गमात्रविषयमुपासनातिरिक्तं तेनेति यावत्। योगो देवतादिविषयमुपासनम्। इतिशब्दस्तदर्थसमाप्त्यर्थः। तत्रैवार्थसिद्धमर्थं कथयति—विद्वदिति। नन्वर्थी समर्थो विद्वानपर्युदस्तश्च कर्मण्यधिकारीत्यङ्गीकारादविदुषस्तल्लक्षणानाक्रान्तस्यानधिकारात्कथं तत्कर्म

विद्वत्कर्मणो वीर्यवत्तर[त्व]वचनादविदुषोऽपि कर्म वोर्यवदेव भवतीत्यभिप्रायः। न चाविदुषः कर्मण्यनधिकारः। औषस्त्ये काण्डेऽविदुषामप्यार्त्विज्यदर्शनात् । रसतमाप्तिसमृद्धिगुणवदक्षरमित्येकमुपासनम् । मध्ये [1]प्रयत्नान्तरादर्शनात् । अनेकैर्हि विशेषणैरनेकधोपास्यत्वात्खल्वेतस्यैव प्रकृतस्योद्गीथाख्यस्याक्षरस्योपव्याख्यानं भवति ॥ १० ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य प्रथम खण्डः

नरेन्द्रपुरीयं टिप्पणम्

तरप्प्रत्ययादधिकार्थमाह--विद्वत्कर्मण इति। संक्षिप्य प्रकरणार्थमाह--रसतमेति। प्रयत्नान्तरादर्शनादिति। विलक्षणविध्यनुपलम्भनादित्यर्थः। प्रकृताकर्षणे कारणमाह--अनेकैर्हीति। समृद्धो हि कामैरनाक्षिप्तमनाः शक्नोति देवतायां चेतस्समाधातुमिति समृद्धिफलकोपासनानन्तरं प्राणदेवतादृष्ट्योपासनमुद्गीथस्य विधीयते प्राणस्य देवतानां प्राधान्यादित्यर्थः ॥ १० ॥

इति प्रथमाध्यायस्य प्रथमः खण्डः

आनन्दगिरिटीका

वीर्यवदिति प्रतिज्ञायते तत्राऽऽह--न चेति। औषस्त्य उषस्तिसम्बन्धे मटचीहतेष्वित्यादिके तस्मिन्ग्रन्थजाते विद्याहीनानामपि कर्मानुष्ठानं दृश्यते प्रस्तोतर्या देवतेत्यादौ तां चेदविद्वानित्यादिलिङ्गात् । तस्मादविदुषोऽपि कर्मण्यधिकारः। अधिकारिलक्षणे तु ज्ञानाभावेऽपि द्रव्यादिज्ञानमात्रेण विशेषणसिद्धिरित्यर्थः। गुणवदक्षरज्ञानं स्वतन्त्रमित्युक्तम्। तत्तु रसतमगुणवदक्षरविषयमेकमुपासनम्। तत्र च विध्युद्देशे फलस्याश्रुतत्वेऽपि विश्वजिन्न्यायेन वा तत्कल्प्यते। आप्तिगुणवतः समृद्धिगुणवतश्चाक्षरस्य द्वे विज्ञाने प्रत्येकं फलश्रुतेः। तथा चात्र त्रीण्युपासनानि पृथक्फलानि विवक्षितानीत्यत आह--रसतमेति। न तावदिहोपासीतेतिविधिव्यतिरेकेण मध्ये विध्यन्तरमुपलभ्यते। न चाऽऽपयिता ह वै कामानामित्यादिवाक्ये फलश्रुत्या विधिरुन्नेयः। रसतमगुणवदक्षरविज्ञानविधौ फलाकाङ्क्षिण्यर्थवादस्थफलांशान्वयेनानेकगुणवदेकविज्ञानविधिसम्भवे विधिभेदकल्पनायोगात्। नो खल्वार्थवादिकफलवदनेकविशेषणकैकोपासनविषयविध्यभ्युपगमेन वाक्यैक्यसम्भवे वाक्यं भेत्तुमुचितम्। एतेन [2]विश्वजिन्न्यायो निरस्तः। रात्रिसत्रन्यायस्तु प्रकृताविरोधीति भावः। तस्योपव्याख्यानमित्युक्तस्योपसंहारवाक्यं खल्वेतस्येत्यादि, तत्रैतच्छब्देन प्रकृताकर्षणे कारणमाह--अनेकैरिति। रसतमाप्तिसमृद्धिरूपाण्यनेकानि विशेषणानि तैर्विशिष्टत्वेनाक्षरस्यानेकप्रकारेणोपास्यत्वात् । प्रकारभेदेऽप्युपासनैक्यस्य प्रागेवोक्तत्वात्प्रकृतस्यैवाक्षरस्यैतदुपव्याख्यानं यत्खलु विहितमित्यर्थः ॥ १० ॥

इति प्रथमाध्यायस्य प्रथमः खण्डः[3]

---

१. प्रयत्नान्तरादर्शनात् = विध्यन्तरादर्शनात् ।

२. विश्वजिन्न्यायः एकाहकाण्डपठितविश्वजिद्यागस्य फलश्रुतिविकलस्यानुष्ठानमशक्यमिति पूर्वपक्षे स्वर्गफलं कल्पनीयमिति राद्धान्तितम् चतुर्थे स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात् इत्यधिकरणे। तस्यापवादः रात्रिसत्रन्यायः। तथाहि--ज्योतिर्गौरायुरिति त्रयः रात्रिसंज्ञका यागाः श्रूयन्ते। तेषामपि विधिवाक्ये फलाश्रवणात् स्वर्गकल्पनं पूर्ववदिति पूर्वपक्षे प्राप्ते पूर्वन्याये अश्रुतस्य स्वर्गस्योपस्थितिः तस्य प्रकृतफलत्वं चेत्युभयं कल्पनीयम्, तदपेक्षया "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती"त्यर्थवादश्रवणात् प्रतिष्ठाफलस्योपस्थितस्य यागफलत्वमात्रकल्पनं लघु-इति तदेव कल्पनीयम्। प्रतिष्ठास्यन्तीति वा प्रतितिष्ठासन्तोति व्यवधारणकल्पना वा।

३. प्रथमखण्डे--रसतमत्वादिगुणविशिष्टस्योङ्कारस्य परमात्मरूपेणोपासनं विहितं; द्वितीये तस्यैवादित्यप्राणदृष्ट्योपासनं विधीयते।

वाजसनेयके बृहदारण्यकोपनिषदि प्रथमाध्यायस्य तृतीयब्राह्मणे वागादीन् गौणप्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणोपासनं विधीयते "अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति" इत्यारभ्य "तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः" इति। छान्दोग्येऽपि "तद्ध देवा उद्गीथ-

**देवासुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्याम इति ॥ १ ॥**

देवासुरा देवाश्चासुराश्च। देवा दीव्यतेर्द्योतनार्थस्य शास्त्रोद्भासिता इन्द्रियवृत्तयः। असुरास्तद्विपरीताः स्वेष्वेवासुषु विष्वग्विषयासु प्राणनक्रियासु रमणात्स्वाभाविक्यस्तमआत्मिका इन्द्रियवृत्तय एव। ह वा इति पूर्ववृत्तोद्भासकौ निपातौ। यत्र यस्मिन्निमित्त इतरेतरविषयापहारलक्षणे संयेतिरे। सम्पूर्वस्य यततेः संग्रामार्थत्वमिति संग्रामं कृतवन्त इत्यर्थः। शास्त्रीयप्रकाशवृत्त्यभिभवनाय प्रवृत्ताः स्वाभाविक्यस्तमोरूपा इन्द्रियवृत्तयोऽसुराः। तथा तद्विपरीताः शास्त्रार्थविषयविवेकज्योतिरात्मानो देवाः स्वाभाविकतमोरूपासुराभिभवनाय प्रवृत्ता इत्यन्योन्याभिभवोद्भवरूपः संग्राम इव सर्वप्राणिषु प्रतिदेहं देवासुरसङ्ग्रामोऽनादिकालप्रवृत्त इत्यभिप्रायः। स इह

नरेन्द्रपुरीयं टिप्पणम्

देवा इन्द्रादयः असुरा विरोचनादय इह न गृह्यन्ते इत्यध्यात्ममित्युपसंहारविरोधात्। अत उपासकशरीरस्था इन्द्रियाणामवस्थाभेदास्साधिष्ठातृका उच्यन्त इत्यभिप्रेत्य व्याचष्टे—**शास्त्रोद्भासिता** इत्यादिना। **स्वेष्वेवेति**। शास्त्रनिमित्तेषु कीदृशस्संग्रामोऽवकल्पत इत्यत आह—**शास्त्रीयेत्यादिना**। शास्त्रीयः प्रकाशो यासां

आनन्दगिरिटीका

गुणत्रयविशिष्टमुद्गीथावयवभूतमोङ्काराख्यमक्षरं परमात्मप्रतीकं तद्बुद्धयोपास्यमित्युपदिष्टमिदानीं तस्यैवाक्षरस्याध्यात्माधिदैवभेदेनाऽऽदित्यप्राणदृष्ट्योपासनं विवक्षन्कण्डिकान्तरमवतारयति—**देवासुरा इति**। तत्राक्षराणि व्याचिख्यासुरप्रतिभाव्युदासार्थं विवक्षितं समासं दर्शयति—**देवाश्चेति**। देवशब्दनिष्पत्तिप्रकारं सूचयति—**देवा इति**। दीव्यतिर्द्योतनार्थः "दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु" इति दर्शनात्तस्य चाजन्तस्य सति गुणे कर्तरि यथोक्तरूपसिद्धिरित्यर्थः। ते च द्योतका देवा रूढेरिन्द्रादयो भविष्यन्तीत्याशङ्क्याह—**शास्त्रेति**। इत्यध्यात्ममित्युपसंहारविरोधात्प्रसिद्धेरेव हेयत्वादुपासकशरीरस्थकरणावस्था देवाः सत्त्वात्मकाः शास्त्रानुसारिणो देवशब्दवाच्या इत्यर्थः। तथाऽध्यात्ममसुरा विरोचनादयः स्युरित्याशङ्क्य पूर्ववदुपसंहारविरोधमभिप्रेत्याऽऽह—**असुरा इति**। असुरा इन्द्रियवृत्तय एवेति सम्बन्धः। सात्त्विकेन्द्रियवृत्तिभ्यो वैपरीत्यं तासामसुरत्वसिद्धयर्थं दर्शयति—**तद्विपरीता इति**। तासामसुरशब्दवाच्यत्वे निमित्तान्तरमाह—**स्वेष्वेवेति**। विष्वग्विषयासु विष्वञ्चो नानागतयो विषया यासां तास्विति यावत्। प्राणनक्रियासु जीवनानुकूलप्राणचेष्टास्वित्यर्थः। तदेव स्फोरयति—**स्वाभाविक्य इति**। शास्त्रापेक्षामन्तरेणैव स्वभाववशात्प्रवर्तमानत्वं स्वाभाविकत्वम्। तथा च शास्त्रीयेन्द्रियवृत्तिभ्यो वैपरीत्यममूषामतिविशदमित्यर्थः। वैपरीत्यान्तरमाह—**तमआत्मिका इति**। कथं मिथो विषयापहारं निमित्तीकृत्य देवानामसुराणां च सङ्ग्रामोऽभूदित्यपेक्षायामासुरीं वृत्तिं प्रकटयति—**शास्त्रीयेति**। दैवीं वृत्तिं प्रथयति—**तथेति**। देवानामुक्तासुरवैपरीत्यं स्फुटयति—**शास्त्रेति**। स्वाभाविकः शास्त्रानपेक्षस्तमोरूपपाप्मासुरः परिच्छेदाभिमानस्तस्य तिरस्करणार्थमिति यावत्। उक्तमाध्यात्मिकसङ्ग्रामं निगमयति—**इत्यन्योन्येति**। उक्तरीत्या यथोक्तानां देवानामसुराणां च पराभिभवः स्वोद्भवश्चेत्येवंरूपः सङ्ग्रामः प्रतिदेहमनादिकालप्रवृत्तो यथा देवासुरसङ्ग्रामस्तथेति योजना। किमर्थं पुनरपुरुषार्थरूपो देवासुरसङ्ग्रामः श्रुत्या श्राव्यते तत्राऽऽह—**स इहेति**। स हि सङ्ग्रामोऽस्मिन्प्रकरणे प्राणस्य विशुद्धिविषयं विज्ञानं विधातुं प्रवृत्तः। तथा श्रुत्या कथारूपेणाऽऽख्यायते। इन्द्रियाणां

---

माजह्रुरनेनैनानभिभविष्याम" इति प्रक्रम्य इतरान् प्राणान् असुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते "अथ ह य एवायं मुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिर" इति। अत्रेदं विचार्यते अनयोर्विद्याभेदः उताभेद इति। प्राणविद्या इति संज्ञैकत्वादेकैव विद्येति प्राप्ते सूत्रम्—"न वा प्रकरणभेदात् परोवरीयस्त्वादिवत्" इति। नात्र विद्यैकत्वं विद्याभेद एवात्र युक्तः प्रक्रमभेदात्।

छान्दोग्ये उद्गीथावयवमोङ्कारं प्रस्तुत्य तत्रैव प्राणदृष्टिर्विधीयते। वाजसनेयके तु अवयवग्रहणे प्रमाणाभावात् सकला उद्गीथभक्तिरुच्यते। तत्रैव च प्राणदृष्टिः इति भेदः। संज्ञैकत्वं तु प्रसिद्धभेदेष्वपि परोवरीयस्त्वाद्युपासनेषु दृश्यत एव इति समाहितम्।

**ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तँ् हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः ॥ २ ॥**

श्रुत्याऽऽख्यायिकारूपेण धर्माधर्मोत्पत्तिविवेकविज्ञानाय कथ्यते प्राणविशुद्धिविज्ञानविधिपरतया । अत उभयेऽपि देवासुराः प्रजापतेरपत्यानीति प्राजापत्याः। प्रजापतिः कर्मज्ञानाधिकृतः पुरुषः। "पुरुष एवोक्थमयमेव महान्प्रजापतिः" इति श्रुत्यन्तरात् । तस्य हि शास्त्रीयाः स्वाभाविक्यश्च करणवृत्तयो विरुद्धा अपत्यानीव तदुद्भवत्वात् । तत्तत्रोत्कर्षापकर्षलक्षणनिमित्ते ह देवा उद्गीथमुद्गीथभक्त्युपलक्षितमौद्गात्रं कर्माऽऽजह्रुराहृतवन्तः। तस्यापि केवलस्याऽऽहरणासम्भवाज्ज्योतिष्टोमाद्याहृतवन्त इत्यभिप्रायः । तत्किमर्थमाजह्रुरित्युच्यते अनेन कर्मणैनानसुरानभिभविष्याम इत्येवमभिप्रायाः सन्तः ॥ १ ॥

यदा च तदुद्गीथं कर्माऽऽजिहीर्षवस्तदा—ते ह देवा नासिक्यं नासिकायां भवं चेतनावन्तं घ्राणं प्राणमुद्गीथकर्तारमुद्गातारमुद्गीथभक्त्योपासांचक्रिरे [उपासनं] कृतवन्त इत्यर्थः। नासिक्यप्राणदृष्ट्योद्गीथाख्यमक्षरमोङ्कारमुपासांचक्रिर इत्यर्थः। एवं हि प्रकृतार्थपरित्यागोऽप्रकृतार्थोपादानं च न कृतं स्यात् । खल्वेतस्यैवाक्षरस्येत्योङ्कारो ह्युपास्यतया प्रकृतः । ननूद्गीथोपलक्षितं कर्माऽऽहृतवन्त इत्यवोच इदानीमेव; कथं नासिक्यप्राणदृष्ट्योङ्कारमुपासांचक्रिर इत्यात्थ। नैष दोषः । उद्गीथकर्मण्येव हि तत्कर्तृप्राणदेवतादृष्ट्योद्गीथभक्त्यवयवश्चोङ्कार उपास्यत्वेन

नरेन्द्रपुरीयं टिप्पणम्

वृत्तीनां विहितानुष्ठानपरायणानां तदभिभवनायेति विग्रहः। विषयासङ्गः पुंसामधर्मोत्पत्तिहेतुर्विषयेष्वनभिष्वङ्गस्समचित्तत्वं धर्मोत्पत्तिहेतुरिति विवेकज्ञानमार्थिकम् । तात्पर्यं तु प्राणविशुद्धिप्रतिपादने। यतोऽस्मिन्प्रकरणे विशुद्धप्राणदृष्ट्योद्गीथोपासनं विधित्सितम् ॥ १ ॥

"त्वन्न उद्गाये"ति बृहदारण्यके श्रवणात् उद्गीथभक्तेः कर्तारमिति विशेषणम् । उद्गीथमुद्गीथभक्त्योपलक्षितम् । कृत्स्नायामुद्गीथभक्तौ प्राणमुपासितवन्त इति व्याख्यानाभासः प्रकृताननुसारात् । सिद्धान्तमाह—नासिक्येति । पूर्वापरविरोधमाशङ्क्य परिहरति—नन्वित्यादिना । आत्थ=ब्रवीषि आश्रित्य विधानमिदं तत

आनन्दगिरिटीका

विषयवैमुख्ये धर्मः स्यात्तेषां तदाभिमुख्ये पापस्योत्पत्तिरिति विवेकविज्ञानसिद्ध्यर्थं चाऽऽख्यायिका प्रणीयते । तस्मादिन्द्रियाणां प्रयत्नतो विषयप्रावण्यं परिहर्तव्यम् । तद्वैमुख्यं च तेषां श्रेयोर्थिभिर्यत्नादाधेयमिति भावः । यजमानप्राणानामेव देवासुरभावस्योक्तत्वमतःशब्दार्थः । प्रजापतिशब्दस्य रूढमर्थमपाकृत्य विवक्षितमर्थमाह—प्रजापतिरिति । उक्तरूपः पुरुषः प्रजापतिरित्यत्र गमकमाह—पुरुष एवेति । कथं पुनर्यथोक्तानां देवासुराणां तदपत्यत्वं तत्राऽऽह—तस्य हीति । यत्रेत्युक्तं सङ्ग्रामनिमित्तं परामृशति—तत्तत्रेति । देवानामुत्कर्षोऽपकर्षश्चासुराणामित्यस्मिन्निमित्ते कथमुद्गीथभक्त्याहरणमित्याशङ्क्याऽऽह—उद्गीथेति । लक्षितलक्षणान्यायं सूचयति—तस्यापीति । उद्गीथभक्तेरिवेत्यपेरर्थः । तदाहरणप्रयोजनं प्रश्नपूर्वकं कथयति—तत्किमर्थमित्यादिना ॥ १ ॥

सम्प्रत्युद्गीथाहरणप्रकारं प्रकटयति—यदा चेति । अचेतनस्य करणस्योद्गातृत्वासम्भवाद्विशिनष्टि—चेतनावन्तमिति । मुख्यं प्राणं व्यावर्तयति—घ्राणमिति। त्वं न उद्गायेति वाजसनेयकश्रुतिमाश्रित्याऽऽह—उद्गीथकर्तारमिति । अथोद्गीथभक्तिरेव श्रूयते न तूद्गाता तत्कथं तदुपासनमित्याशङ्क्याऽऽह—उद्गीथभक्त्येति । तयोपलक्षितमुद्गातारमुपासत इति यावत् । कथमुपासनमित्यपेक्षायामुद्गीथेन कर्तृत्वप्रार्थनयेत्याह—कृतवन्त इति । ते ह नासिक्यमित्यक्षरोक्तमर्थमुक्त्वा वाक्यार्थमाह —नासिक्येति । किमित्यक्षरमोङ्काराख्यमिहोपास्यत्वेन व्याख्यायते तत्राऽऽह—एवं हीति । उक्तमेव स्फुटयति—खल्विति । तथा च प्राणस्योद्गातृदृष्ट्योपासने प्रकृतस्य परित्यागो भक्तेश्च घ्राणप्राणदृष्ट्योपास्यत्वाङ्गीकारेऽप्रकृतोपादानमिति शेषः । पूर्वापरविरोधमाशङ्कते—नन्विति । उद्गीथोपलक्षितेनौद्गात्रेणोपलक्षितं ज्योतिष्टोमादि कर्माऽऽहृतमित्युक्तं तदाहरणं च तस्योपासनं तद्विरुद्धं नासिक्यप्राणदृष्ट्याऽक्षरोपासनवचनमित्यर्थः। स्वोक्तेर्मिथो विरोधं परिहरति—नैष दोष इति । उद्गीथोपलक्षितकर्मोपलक्षिते ज्योतिष्टोमादौ कर्मणि सत्येवोद्गातृप्राणदृष्ट्योपास्यत्वेनाक्षरं विवक्षितम् । ओङ्कारश्चोद्गीथावयवो ध्येयत्वेनेष्टो

**अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताँ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा ॥ ३ ॥**

विवक्षितो न स्वतन्त्रोऽतस्तादर्थ्येन कर्माऽऽहृतवन्त इति युक्तमेवोक्तम् । तमेवं देवैर्वृतमुद्गातारं हासुराः स्वाभाविकतमआत्मानो ज्योतीरूपं नासिक्यं प्राणं देवं स्वोत्थेन पाप्मनाऽधर्मासङ्गरूपेण विविधुर्विद्धवन्तः संसर्गं कृतवन्त इत्यर्थः । स हि नासिक्यः प्राणः कल्याणगन्धग्रहणाभिमानासङ्गाभिभूतविवेकविज्ञानो बभूव । स तेन दोषेण पाप्मसंसर्गी बभूव । तदिदमुक्तमसुराः पाप्मना विविधुरिति । यस्मादासुरेण पाप्मना विद्धस्तस्मात्तेन पाप्मना प्रेरितो घ्राणः प्राणो दुर्गन्धिग्राहकः प्राणिनाम् । अतस्तेनोभयं जिघ्रति लोकः सुरभि च दुर्गन्धि च । पाप्मना ह्येष यस्माद्विद्धः । उभयग्रहणमविवक्षितम् । [1]यस्योभयं हविरार्तिमार्छतीति यद्वत् । यदेवेदमप्रतिरूपं जिघ्रतीति समानप्रकरणश्रुतेः ॥ २ ॥

मुख्यप्राणस्योपास्यत्वाय तद्विशुद्धत्वानुभवार्थोऽयं विचारः श्रुत्या प्रवर्तितः । अतश्चक्षुरादिदेवताः क्रमेण

### नरेन्द्रपुरीयं टिप्पणम्

आश्रयलाभाय कर्माहरणं युक्तमित्यर्थः । गन्धाख्यघ्राणकृत उपकारस्सर्वस्य कार्यकारणसङ्घातस्य तुल्य इति विवेकविज्ञानम् । ममैवासाधारणं सुरभिगन्ध इत्यासङ्गात्तिरस्कृतमित्यर्थः । एकस्यापि हविषः काकादिसम्बन्धाद्विनाशे प्रायश्चित्तमस्त्येव, तथापि "यस्योभयं हविर्विनाशं गच्छति स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि"त्यत्रोभयग्रहणमविवक्षितं यथेत्यर्थः ॥ २ ॥

नासिक्यप्राणात्मदृष्ट्योद्गीथोपासनेऽप्यवान्तरतात्पर्यमस्तीति शङ्कानिवृत्त्यर्थमाह—मुख्यप्राणस्येति ॥३-६॥

### आनन्दगिरिटीका

न स्वतन्त्रो व्यापकः । तथा चाक्षरोपासनार्थत्वेन कर्माहरणं न ध्येयत्वेनेत्यविरोध इत्यर्थः । आश्रित्य विधानार्थं कर्माहरणमित्युक्त्वा तं हेत्यादि व्याचष्टे—तमेवमिति । स्वोत्थेन चाऽऽसुरेण नासिकासम्बद्धेनेति यावत् । अधर्मासङ्गस्तद्रूपेणेत्येतस्याऽऽङ्गवेधं साधयति—स हीति । कल्याणो गन्धः सुरभिरुक्तस्तस्य ग्रहणं ममैवेत्यभिमानात्मा योऽयमासङ्गस्तेनाभिभूतमुपकारो गन्धाघ्राणकृतस्तुल्यः सर्वस्य कार्यकारणसङ्घातस्येति विवेकविज्ञानं यस्य स तथेति विग्रहः । ननु कथं यथोक्तासङ्गस्पर्शितेत्याशङ्क्याऽऽह—स तेनेति । उक्तेऽर्थे वाक्यं पातयति—तदिदमिति । घ्राणप्राणस्याऽऽसुरपाप्मविद्धत्वे कार्यलिङ्गकमनुमानं सूचयति—यस्मादिति । उक्तानुमानावद्योति वाक्यं व्याकरोति—अत इति । अतःशब्दार्थमेव स्पष्टयति—पाप्मनेति । ननु पाप्मना विद्धत्वात्तेन लोको दुर्गन्धं जानातीत्येव वक्तव्यं सुरभिज्ञानस्य पाप्मकर्मत्वाभावात् । तथा च कथं तेनोभयं जिघ्रतीत्युक्तं तत्राऽऽह—उभयग्रहणमिति । एकस्यापि हविषो द्रवात्मकस्य पुरोडाशादेर्वा काकादिसम्बन्धाद्भ्रंशे प्रायश्चित्तसत्त्वेऽपि यस्योभयं हविरार्तिमार्छति स ऐन्द्रं पञ्चशरावमोदनं निर्वपेदित्यत्रोभयग्रहणमविवक्षितमिति स्थितं प्रथमे तन्त्रे तथाऽत्रापीत्याह—यस्येति । न केवलं पाप्मना हीति वाक्यशेषादत्रोभयग्रहणमविवक्षितं किन्तु वाजसनेयके यथोक्तोद्गीथविद्याविषयत्वेन समानप्रकरणे यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मेति श्रुतेरत्रापि पाप्मवेधवशाद्दुर्गन्धं जानातीत्येव वक्तव्यत्वादविवक्षितमुभयग्रहणमित्याह—यदेवेति ॥ २ ॥

ननु नासिक्यस्य प्राणस्य पाप्मविद्धत्वादनुपास्यत्वे सिद्धे न्यायसाम्याद्वागादीनामपि नोपास्यत्वमिति सिध्यति तत्किमुत्तरग्रन्थेनेत्यत आह—मुख्यप्राणस्येति । न्यायसाम्येऽपि मुखतो निराकरणाभावे मुख्यप्राणस्यैवो-

---

१. "यस्योभयं हविरार्तिमार्च्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्" इति दर्शपूर्णमासयोः श्रुतम् । उभयं हविः दधि पयश्च । अत्र निमित्तं हविर्नाशः । स च उभयहविर्नाशो वा, एकतरहविर्नाशेऽपि इदं प्रायश्चित्तमस्ति वेति सन्देहे पूर्वं "ग्रहं सम्मार्ष्टि" इत्यत्रोद्देश्योविशेषणमेकत्वमविवक्षितमित्युक्तं तन्न्यायेनैव निमित्तविशेषणमप्युभयत्वमविवक्षितम् । तेन एकतरनाशेऽपीदं प्रायश्चित्तमिति यथाश्रुतीति चेदिति षष्ठाध्यायचतुर्थपष्ठाधिकरणे निर्णीतम् । तद्वदेव "उभयं जिघ्रती"त्यत्रोभयत्वमविवक्षितमिति ।

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्माचे-
नोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥ ४ ॥
अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्ते-
नोभयँ्शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् ॥ ५ ॥
अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्माचे
नोभयँ्सङ्कल्पयते सङ्कल्पनीयं चासङ्कल्पनीयं च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥
अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे।
तँ्हासुरा ऋत्वा विदध्वंसुर्यथाऽश्मानमाखणमृत्वा विध्वँ्सेत् ॥ ७ ॥
एवं यथाऽश्मानमाखणमृत्वा विध्वँ्सत एवँ् हैव स विध्वँ्सते
य एवंविदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥

विचार्याऽऽसुरेण पाप्मना विद्धा इत्यपोह्यन्ते। समानमन्यत्, अथ ह वाचं चक्षुः श्रोत्रं मन इत्यादि। अनुक्ता अप्यन्यास्त्वग्रसनादिदेवता द्रष्टव्याः। "एवमु खल्वेता देवताः पाप्मभिः" इति श्रुत्यन्तरात् ॥ ३-४-५-६ ॥

आसुरेण विद्धत्वाद्घ्राणादिदेवता अपोह्याथानन्तरं य एवायं प्रसिद्धो मुखे भवो मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं हासुराः पूर्ववदृत्वा प्राप्य विदध्वंसुर्विनष्टा अभिप्रायमात्रेण। अकृत्वा किञ्चिदपि प्राणस्य। कथं विनष्टा इत्यत्र दृष्टान्तमाह—यथा लोकेऽश्मानमाखणं[1] न शक्यते खनितुं [2]कुद्दालादिभिरपि भेत्तुं न शक्योऽखण एवाऽऽखणस्तमृत्वा सामर्थ्याल्लोष्टः पांसुपिण्डः श्रुत्यन्तराच्चाश्मनि क्षिप्तोऽश्मभेदनाभिप्रायेण तस्याश्मनः किञ्चिदप्यकृत्वा स्वयं विध्वंसेत विदीर्येतैवं विदध्वंसुरित्यर्थः ॥ ७ ॥

एवं विशुद्धोऽसुरैरधर्षितत्वात्प्राण इति एवंविदः प्राणात्मभूतस्येदं फलमाह—यथाऽश्मानमिति। एष एव दृष्टान्तः। एवं हैव स विध्वंसते विनश्यति। कोऽसावित्याह—य एवंविदि यथोक्तप्राणविदि पापं तदनर्हं कर्तुं कामयत इच्छति यश्चाप्येनमभिदासति हिनस्ति प्राणविदं प्रत्याक्रोशताडनादि प्रयुङ्क्ते सोऽप्येवमेव विध्वंसत इत्यर्थः।

नरेन्द्रपुरीयं टिप्पणम्

श्रुत्यन्तराच्चेति। यथाश्मानमृत्वा लोष्टो विध्वंसेतेति ॥ ७ ॥

स्थानस्य मुखस्य देवता अग्निः तस्य दहनसमर्थस्य बलीयस्त्वात्तत्सहकृतत्वेन प्राणस्यापि बलीयस्त्वादि-

आनन्दगिरिटीका

पास्यत्वमित्यनिश्चयात्तदुपास्यतादार्ढ्यार्थं मुखतो वागादीनामुपास्यत्वमपाकर्तुमुत्तरग्रन्थ इत्यर्थः। विद्धा इति विचार्य क्रमेणापोह्यन्त इति सम्बन्धः। उत्तरवाक्येष्वक्षरव्याख्यानमनपेक्षितं पूर्वेण समानत्वादित्याह— समानमिति। अवशिष्टवाक्यैकदेशग्रहणार्थमादिपदम्। ननु घ्राणादीनां पाप्मविद्धत्वादनुपास्यत्वेऽपि त्वगादीनां तद्विद्धत्वेनानुपास्यत्वावचनान्मुख्यस्यैव प्राणस्योपास्यत्वं नावसीयते तत्राऽऽह—अनुक्ता इति। उक्तानामनुक्तोपलक्षणत्वे बृहदारण्यकश्रुतिं सम्वादयति—एवमु खल्विति ॥ ३-४-५-६ ॥

अथ हेत्यादि मुख्यप्राणविषयं वाक्यमुत्थाप्य व्याकरोति—आसुरेणेत्यादिना। पूर्ववद्वागादिष्विवेति यावत्। टङ्कैश्च विदारकैर्लोहविशेषैरित्यर्थः। अश्रुतस्य लोष्टस्यात्रोपादाने हेतुमाह—सामर्थ्यादिति। तस्य ध्वंसनयोग्यत्वाद्ध्वंसतेश्च कर्त्रपेक्षत्वादित्यर्थः। तर्हि यस्य कस्यचिदेवंविधस्य सम्भवादलं लोष्टग्रहणेनेत्याशङ्क्य "यथाऽश्मानमृत्वा लोष्टो विध्वंसेत" इति बृहदारण्यकश्रुतेस्तस्यैवात्र ग्रहणमित्याह—श्रुत्यन्तराच्चेति ॥ ७ ॥

दृष्टान्तदार्ष्टान्तिकाभ्यां सिद्धमर्थं निगमयति—एवमिति। प्राणस्य विशुद्धत्वात्तदुपासनं कर्तव्यमिति

---

१. अश्मानमाखणं—अखणमेवाखणम्। खनितुं भेत्तुमशक्यः अश्मा तं प्राप्य यथा मृत्पिण्डो विलीयेत तद्वत्। उद्गीथावयवप्रणवे प्राणदृष्टिरत्र प्रतिपाद्या।
२. कुद्दालादीत्यत्रादिपदार्थः टङ्कः।

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति । एतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥**

यस्मात्स एष प्राणवित्प्राणभूतत्वादश्माखण इवाश्माखणोऽधर्षणीय इत्यर्थः । ननु नासिक्योऽपि प्राणो वाय्वात्मा यथा मुख्यस्तत्र नासिक्यः प्राणः पाप्मना विद्धः प्राण एव सन्न मुख्यः कथम् । नैष दोषः । नासिक्यस्तु स्थानकरणवैगुण्याद्विद्धो वाय्वात्माऽपि सन्मुख्यः स्थानदेवताबलीयस्त्वान्न विद्ध इति युक्तम् । यथा वास्यादयः शिक्षावत्पुरुषाश्रयाः कार्यविशेषं कुर्वन्ति नान्यहस्तगतास्तद्वद्दोषवद्घ्राणसचिवत्वाद्विद्धा घ्राणदेवता न मुख्यः ॥ ८ ॥

यस्मान्न विद्धोऽसुरैर्मुख्यस्तस्मान्नैवैतेन सुरभि दुर्गन्धि वा विजानाति घ्राणेनैव तदुभयं विजानाति लोकः । अतश्च पाप्मकार्यादर्शनादपहतपाप्माऽपहतो विनाशितोऽपनीतः पाप्मा यस्मात्सोऽयमपहतपाप्मा ह्येष विशुद्ध इत्यर्थः । यस्माच्चाऽऽत्मम्भरयः कल्याणाद्यासङ्गवत्त्वाद्घ्राणादयो न तथाऽऽत्मम्भरिर्मुख्यः किं तर्हि सर्वार्थः । कथमिति, उच्यते—तेन मुख्येन यदश्नाति यत्पिबति लोकस्तेनाशितेन पीतेन चेतरान्घ्राणादीनवति पालयति । तेन हि तेषां स्थितिर्भवतीत्यर्थः । अतः सर्वम्भरः प्राणोऽतो विशुद्धः । कथं पुनर्मुख्याशितपीताभ्यां स्थितिरेषां गम्यत इति, उच्यते—एतं (तमु एव) मुख्यं प्राणं मुख्यप्राणस्य वृत्तिमन्नपाने इत्यर्थः । अन्ततोऽन्ते मरणकालेऽवित्त्वाऽलब्ध्वोत्—क्रामति । घ्राणादिप्राणसमुदाय इत्यर्थः । अप्राणो हि न शक्नोत्यशितुं पातुं वा । तेन तदोत्क्रान्तिः प्रसिद्धा घ्राणादिकलापस्य । दृश्यते ह्युत्क्रान्तौ प्राणस्याशिशिषा । अतो व्याददात्येवाऽऽस्यविदारणं करोतीत्यर्थः । तद्धचन्नालाभ उत्क्रान्तस्य लिङ्गम् ॥ ९ ॥

### नरेन्द्रपुरीयं टिप्पणम्

त्यर्थः । दोषवदिति । कल्याणासङ्गदोषवान् घ्राणः तद्देवतात्वेन तत्संसर्गाद्वा वाय्वात्मा विद्धो न मुखान्तरालवर्तीदोषवत्पक्षपाताभावादित्यर्थः ॥ ८ ॥

विशुद्धत्वे हेत्वन्तरमाह—यस्माच्चेत्यादिना ॥ ९ ॥

### आनन्दगिरिटीका

शेषः । फलवचनमवतार्य व्याकरोति—एवंविद इत्यादिना । प्राणवित्प्रतिस्पर्धिनो विनाशे हेतुमाह—यस्मादिति । नासिक्यप्राणस्य मुख्यप्राणस्य च वायुविकारत्वेन प्राणत्वाविशेषात्पाप्मना वेधावेधौ तुल्यावेव स्यातामिति शङ्कते—नन्विति । स्थानविशेषसम्बन्धासम्बन्धाभ्यां द्वयोरपि पाप्मवेधावेधव्यवस्था युक्तेति परिहरति—नैष दोष इति । स्थानावस्थावच्छिन्ने करणे वैगुण्यं विषयविशेषासक्तत्वं तस्मात्तद्रूपस्य नासिक्यप्राणस्यापि विद्धता स्यादिति यावत् । तदसम्भवाद्विशेषसम्बन्धप्रयुक्तवैगुण्यायोगादित्येतच्छ्लिष्टमुक्तमुपपन्नम् । स्थानसम्बन्धविशेषाद्घ्राणप्राणस्य पाप्मविद्धत्वं तदभावाच्च मुख्यप्राणस्य तदविद्धत्वमित्येतद्दृष्टान्तेन स्पष्टयति—यथेत्यादिना । न मुख्यो दोषवद्घ्राणसचिवत्वाभावादिति शेषः ॥ ८ ॥

घ्राणदेवता विद्धा प्राणदेवता तु न विद्धेत्यत्र गमकत्वेनानन्तरवाक्यं व्याचष्टे—यस्मादिति । मुख्यप्राणस्य पाप्मवेधाभावमुपसंहरति—अतश्चेति । पाप्मकार्यमासङ्गस्तस्य प्राणेऽनुपलम्भादित्यतःशब्दस्यैवार्थः । हिशब्देनोक्तं पाप्मावेधं विशुद्धत्वे हेतूकृत्य मुख्यप्राणविशुद्धिमुपसंहरति—ह्येष इति । तस्य विशुद्धत्वे हेत्वन्तरमाह—यस्माच्चेति । अतो विशुद्ध इत्युत्तरत्र सम्बन्धः । सर्वार्थत्वं प्राणस्य प्रश्नपूर्वकं प्रतिपादयति—कथमित्यादिना । घ्राणादीत्यादिशब्देन कार्यमप्युच्यते । तेनेतास्तृप्यन्तीति श्रुत्यन्तरमाश्रित्याऽऽह—तेन हीति । प्राणवृत्तिहेतुभ्यामन्नपानाभ्यां सङ्घातस्थितिरतःशब्दार्थः । सर्वार्थत्वं द्वितीयस्यातःशब्दस्यार्थः । मुख्यप्राणोपयुक्तत्वादन्नपानानां सङ्घातस्थितिहेतुत्वमित्यत्र प्रश्नपूर्वकं लिङ्गं दर्शयति—कथमित्यादिना । वृत्तिमेव विशिनष्टि—अन्नपाने इति । अन्वहमुपभुज्यमाने अन्नपाने प्राणस्थितिहेतू इति यावत् । प्राणस्योच्चिक्रमिषायामपि सङ्घातः स्वयमशनपाने कृत्वा स्थास्यतीत्याशङ्क्याऽऽह—अप्राणो हीति । तदा प्राणोच्चिक्रमिषावस्थायामिति यावत् । ननूत्क्रान्त्यवस्थायामशिशिषाद्यभावादेव सङ्घातस्योत्क्रान्तिर्न त्वशनाद्यभावात्तत्र प्रमाणाभावादत आह—दृश्यते हीति । तदिति मुखव्यादानमुच्यते । अन्नग्रहणं पानोपलक्षणार्थम् ॥ ९ ॥

**तँ हाङ्गिरा उद्गीथमुपासाञ्चक्र एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥**

तं हाङ्गिरास्तं मुख्यं प्राणं हाङ्गिरा इत्येवंगुणमुद्गीथमुपासाञ्चक्र उपासनं कृतवान्बको दाल्भ्य इति वक्ष्यमाणेन सम्बध्यते।[१] तथा बृहस्पतिरित्ययास्य इति चोपासाञ्चक्रे बक इत्येव सम्बन्धं कृतवन्तः केचित्। एतमु एवाऽऽङ्गिरसं बृहस्पतिमयास्यं प्राणं मन्यन्त इति वचनात्। भवत्येवं यथाश्रुतासम्भवे, सम्भवति तु यथाश्रुतमृषिचोदनायामपि श्रुत्यन्तरवत्। तस्माच्छर्तचिन इत्याचक्षत एतमेव सन्तमृषिमपि। तथा माध्यमा गृत्समदो विश्वामित्रो

नरेन्द्रपुरीयं टिप्पणम्

मुख्यप्राणस्याशनपानाभ्यां वागादिसङ्घातस्य स्थितिरन्वयव्यतिरेकसिद्धेत्याह—एतमु एवेत्यादिना। एवं विशुद्धत्वगुणकप्राणदृष्टिविशिष्टोद्गीथोपासनमुक्त्वा आङ्गिरसत्वबृहस्पत्ययास्यत्वगुणदृष्टिविशिष्टोद्गीथोपासनविधानार्थमुत्तरं वाक्यमिति वृत्तिकाराभिप्रायेण सम्बन्धमाह—तं हाङ्गिरा इत्यादिना। ऋषिचोदनायामपीति। आङ्गिरसादिशब्दैः ऋषीणामुपदेशेऽपि यथाश्रुतगुणत्रयविशिष्टप्राणोपासनं न विरुध्यते, ततः प्रधानाबाधे किमिति प्राणोपासकानामृषीणामुपदेशस्त्याज्य इत्यर्थः। प्राणोपासकानामृषीणामभिधानमैतरेयश्रुत्या द्रढयति—श्रुत्यन्तरवदिति। शतं वर्षाणि पुरुषस्यायुषो भवन्ति यदभ्यार्चत् प्राण इति शर्तचिनगुणकः प्राणस्तदुपासकमृषिमपि तेनैव नाम्ना कथयन्तीत्यर्थः। मध्यतः सङ्घातस्य मध्ये वर्तमानोऽपि धारकोऽभूदिति माध्यमः प्राणः, तदुपासको माध्यमः, गिरणादभ्यवहरणाद् गृत्सः प्राणो मदो अपानो मलमोचनात्। "मदी" हर्षणमोचनयोरिति धातुस्मरणात्तयोः समुच्चित्योपासको गृत्समदः, विश्वस्य मित्रत्वाद्विश्वामित्रः, देवानां वामः प्रियो बभूवेति वामदेवः, सर्वमिदं पाप्मनस्त्रायत इत्यत्रिः प्राणस्तदुपासकोऽप्यत्रिः रूढिरपि ऋषिषु न विरुध्यते। तद्गुणकप्राणोपासनात्तन्नामलाभे प्रयोगप्राचुर्यादिन्द्रादिशब्दवत्। यच्च भास्करेण वैलक्षण्यमुक्तं गुणत्रयविशिष्टः प्रजापतिरोङ्कारालम्बन

आनन्दगिरिटीका

विशुद्धिगुणकमुख्यप्राणात्मोद्गातृदृष्ट्योद्गीथावयवभूतमोङ्काराख्यमक्षरमुपास्यमित्युक्तमिदानीं तत्रैवाऽऽङ्गिरसबृहस्पत्ययास्यगुणत्रयविधानार्थमुत्तरग्रन्थमुत्थापयति—तं हेति। तत्र वृत्तिकाराभिप्रेतं सम्बन्धं दर्शयति—तं मुख्यमिति। पराभिप्रेतसम्बन्धे गमकमाह—एतमिति। अव्यवहितसम्बन्धसम्भवे व्यवहितसम्बन्धकल्पना न युक्तेति परिहरति—भवत्येवमिति। ऋषीणामङ्गिरोबृहस्पत्यादिशब्दैरुपदेशेऽपि गुणत्रयविशिष्टप्राणोपासनं न विरुध्यते ततश्च प्रधानानामबाधे प्राणोपासकानामृषीणामुपदेशो न त्यागमर्हत्यङ्गिरोबृहस्पत्यादिशब्देभ्योऽपि प्रथमप्रतिपन्नानृषीन्विहाय यौगिकवृत्तिप्रतिपत्तव्यगुणमात्रप्रतिपत्त्यनुपपत्तेरित्यर्थः। प्राणोपासकानामृषीणामभिधानमैतरेयकश्रुत्या द्रढयति—श्रुत्यन्तरवदिति। तदेव स्पष्टयति—तस्मादिति। शर्तचिनो नाम प्रथममण्डलद्दश ऋषयः। एष च प्राणो यस्मात्पुरुषं सङ्घाताख्यं शतवर्षाण्यभिगतवांस्तस्मादेतमेव प्राणं सन्तमृषिशरीरस्थितमपि शर्तचिनशब्दवाच्यं वदन्तीति योजना। शर्तचिशब्दवदुभयविषयाणि शब्दान्तराण्यपि सन्तीत्याह—तथेति। आद्यन्ते मण्डले मुक्त्वा मध्यमानां मण्डलानां द्रष्टारो माध्यमा ऋषयस्तेऽपि प्राणस्तस्य स्वात्मनि मध्ये सर्वंजगद्धिधारकत्वात्। गृत्समदस्तु द्वितीयमण्डलदर्शी स्वापकाले वागादीनां गिरणात्प्राणो गृत्सो रेतोविसर्गकारणमदहेतुत्वादपानो मदः प्राणापानात्मकत्वात्प्राणोऽपि तथोच्यते। तृतीयमण्डदर्शी विश्वामित्रः प्राणोऽपि तथा व्यपदिश्यते। तस्य हि विश्वं भोज्यजातं स्थितिहेतुतया स्निग्धमासीत्। वामदेवस्तु चतुर्थमण्डलद्रष्टा प्राणोऽपि तच्छब्दवाच्यस्तस्य

१. परमतानुवादोऽयम्—तन्मते अस्य खण्डत्रयस्यापि बको दाल्भ्यो विदाञ्चकारेत्यनेन सम्बन्धः। किं ज्ञातवान्? उच्यते—उद्गीथावयवं प्रणवं अङ्गिरा इति बृहस्पतिरिति अयास्य इति चोपासाञ्चक्रे इत्यर्थः। अस्मिन्पक्षे अङ्गिरोबृहस्पत्ययास्यसंज्ञकानां ऋषीणां न कोऽपि सम्बन्धः यौगिकार्थपरिग्रहे अङ्गिरसत्वादिगुणकप्राणोपासनं विवक्षितमित्यर्थः। भाष्यकारमते तु यौगिकार्थग्रहणेऽपि न रूढ्यर्थत्यागः। अङ्गिरा नाम ऋषिः प्राणोपासनेन प्राणत्वमापन्नः अङ्गिरसत्वेन प्राणमुपासाञ्चक्रे। वाक्पतित्वेन बृहस्पतिः आस्यान्निर्गन्तृत्वेन अयास्यश्च स्वस्वनामार्थरूपेणोपासितवन्तः। यथा प्रथममण्डलद्रष्टा शर्तचिः स च प्राणाभेददृष्ट्या प्राण एव जातः, तस्मात् प्राणस्यैव शर्तचिनाम्ना अभिधानम्। तथा मध्यमण्डलद्रष्टारो माध्यमाः तन्नाम्ना प्राणस्तैरुपासितः।

तेन तँ ह बृहस्पतिरुद्गीथमुपासाञ्चक्रे एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥११॥

तेन तँ हाऽयास्य उद्गीथमुपासाञ्चक्रे एतमु एवाऽयास्यं मन्यन्त आस्याद्यदयते ॥१२॥

तेन तँ ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयाना-
मुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥ १३ ॥

आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य द्वितीयः खण्डः

वामदेवोऽत्रिरित्यादिऋषीनेव प्राणमापादयति श्रुतिः। तथैतानप्यृषीन्प्राणोपासकानङ्गिरोबृहस्पत्ययास्यान्प्राणं करोत्यभेदविज्ञानाय। "प्राणो ह पिता प्राणो माता" इत्यादिवच्च। तस्मादृषिरङ्गिरा नाम प्राण एव सन्नात्मानमङ्गिरसं प्राणमुद्गीथमुपासाञ्चक्र इत्येतत्। यद्यस्मात्सोऽङ्गानां प्राणः सन्रसस्तेनासावाङ्गिरसः ॥ १० ॥

तथा वाचो बृहत्याः पतिस्तेनासौ बृहस्पतिः। यथा यद्यस्मादास्यादयते निर्गच्छति तेनाऽऽयास्य ऋषिः प्राण एव सन्नित्यर्थः तथाऽन्योऽप्युपासक आत्मानमेवाऽऽङ्गिरसादिगुणं प्राणमुद्गीथमुपासीतेत्यर्थः ॥ ११-१२ ॥

न केवलमङ्गिरःप्रभृतयः उपासाञ्चक्रिरे। तं ह बको नाम दल्भ्यस्यापत्यं दाल्भ्यो विदाञ्चकार यथादर्शितं प्राणं विज्ञातवान्। विदित्वा च स ह नैमिशीयानां सत्त्रिणामुद्गाता बभूव। स च प्राणविज्ञानसामर्थ्यादेभ्यो नैमिशीयेभ्यः कामानागायति स्म हाऽऽगीतवान्किलेत्यर्थः ॥ १३ ॥

तथाऽन्योऽप्युद्गाताऽऽगाता ह वै कामानां भवति एवं विद्वान्यथोक्तगुणं प्राणमक्षरमुद्गीथमुपास्ते तस्यैतद्दृष्टं फलमुक्तम्। प्राणात्मभावस्त्वदृष्टम् "देवो भूत्वा देवानप्येति" इति श्रुत्यन्तरात्सिद्धमेवेत्यभिप्रायः। इत्यध्यात्ममेतदात्मविषयमुद्गीथोपासनमित्युक्तोपसंहारोऽधिदैवतोद्गीथोपासने वक्ष्यमाणे बुद्धिसमाधानार्थः ॥ १४ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य द्वितीयः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

उपासनाच्छान्दोग्ये। ऐतरेयके तु सर्वावस्थ इति। तदसत्। उपासनभेदेऽपि विवक्षितार्थे दृष्टान्तसम्भवादुपासाञ्चक्र इत्यस्य च तेन सम्बन्धे विदाञ्चकारेत्यस्य पौनरुक्त्यापाताच्च। तस्मात्पूर्वसिद्धानुवादोऽयं आधुनिकानां गुणत्रयवत्प्राणदृष्टिविशिष्टोद्गीथोपासनकर्तव्यताप्ररोचनार्थः ॥ १० ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य द्वितीयः खण्डः

आनन्दगिरिटीका

वागादिदेवतासम्भजनीयत्वात्। पञ्चममण्डलद्रष्टाऽत्रिरित्युच्यते प्राणोऽपि तथैव कथ्यते। तस्य पाप्मनोऽनर्थरूपान्प्रति सर्वत्रात्तृत्वात्। आदिपदेन भरद्वाजादिपदानि गृहीतानि। दृष्टान्तमेवं व्याख्याय दार्ष्टान्तिकमाह—तथेति। किमित्यङ्गिरःप्रभृतीन्प्राणं करोति श्रुतिरत आह—अभेदेति। तथा च सप्तमे प्राणस्य सार्वात्म्यं वक्ष्यते तथाऽत्रापि तस्य तत्तदृषिरूपत्वं विवक्षितमित्याह—प्राणो हेति। अव्यवहितसम्बन्धसम्भवे फलितं वाक्यार्थं कथयति—तस्मादिति। प्राणस्याङ्गिरस्त्वं व्युत्पादयति—यस्मादिति ॥ १० ॥

अङ्गिरःशब्दवद्बृहस्पतिशब्दोऽप्युभयत्र नेतव्य इत्याह—तथेति। प्राणस्य बृहस्पतित्वं साधयति—वाच इति। अङ्गिरोबृहस्पतिशब्दवदयास्यशब्दोऽप्युभयत्र द्रष्टव्य इत्याह—तथेति। तस्योभयत्र वृत्तिं विशदयति—यद्यस्मादिति। यस्मादास्यादयते तेनाऽयास्यः प्राणः स एवात्रोपासकत्वादृषिरपि तथेति योजना। यथोक्तानामृषीणामेवोक्तगुणकमुपासनं नान्येषां विशेषवचनादित्याशङ्क्याऽऽह—तथेति। विशेषस्य न शेषनिवर्तकत्वं प्रदर्शनार्थत्वादित्यर्थः ॥११-१२॥

यथोक्तोपासनस्य त्रिप नियमाभावे गमकं दर्शयति—न केवलमिति। संप्रति विहितोपासनस्य दृष्टफलमादेष्टुं पातनिकां करोति—विदित्वेति ॥ १३ ॥

भूमिकां कृत्वा विवक्षितमुपास्तिफलं कथयति—तथेति। दृष्टमिति विशेषणादभीष्टं फलान्तरमाचष्टे—प्राणेति। आत्मविषयं शरीरवर्तिप्राणगोचरमिति यावत्। उपसंहारस्य प्रयोजनमाह—आधिदैवेति ॥ १४ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य द्वितीयः खण्डः

अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति ।
उद्यँ्स्तमो भयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥ १ ॥
समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते
स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिममम़ुं चोद्गीथमुपासीत ॥ २ ॥

अथानन्तरमधिदैवतं देवताविषयमुद्गीथोपासनं प्रस्तुतमित्यर्थोऽनेकधोपास्यत्वादुद्गीथस्य । य एवासावादित्यस्तपति तमुद्गीथमुपासीताऽऽदित्यदृष्टचोद्गीथमुपासीतेत्यर्थः । तमुद्गीथमित्युद्गीथशब्दोऽक्षरवाची सन्कथमादित्ये वर्तत इति ? उच्यते । उद्यन्नुद्गच्छन्वा एष प्रजाभ्यः प्रजार्थमुद्गायति प्रजानामन्नोत्पत्त्यर्थम् । न ह्यनुद्यति तस्मिन्व्रीह्यादेः पक्तिः स्यादत उद्गायतीवोद्गायति, यथैवोद्गाताऽन्नार्थमत उद्गीथः सवितेत्यर्थः । किञ्चोद्यन्नैशं तमस्तज्जं च भयं प्राणिनामपहन्ति तमेवंगुणं सवितारं यो वेद सोऽपहन्ता नाशयिता ह वै भयस्य जन्ममरणादिलक्षणस्याऽऽत्मनस्तमसश्च तत्कारणस्याज्ञानलक्षणस्य भवति ॥ १ ॥

यद्यपि स्थानभेदात्प्राणादित्यौ भिन्नाविव लक्ष्येते तथाऽपि न स तत्त्वभेदस्तयोः । कथम्—समान उ एव तुल्य एव प्राणः सवित्रा गुणतः सविता च प्राणेन । यस्मादुष्णोऽयं प्राण उष्णश्चासौ सविता । किञ्च स्वर इतीमं प्राणमाचक्षते कथयन्ति तथा स्वर इति; प्रत्यास्वर इति चामुं सवितारम् । यस्मात्प्राणः स्वरत्येव न पुनर्मृतः

नरेन्द्रपुरीयं टिप्पणम्

अधिष्ठानाध्यस्यमानयोस्साहश्यं वक्तव्यमित्यभिप्रेत्य पृच्छति—उद्गीथशब्दोऽक्षरवाची सन्निति । उच्छब्दसम्बन्धोऽन्नोत्पत्तिहेतुत्वं च सादृश्यं ततोऽध्यासात्सामानाधिकरण्यमित्यर्थः ॥ १ ॥

अध्यात्माधिदेवतस्थानभेदेनानुचिन्तनभेदेऽपि ध्येयस्वरूपाभेदादुपासनैक्यं दर्शयितुमुपक्रमते—यद्यपि स्थानभेदादित्यादिना ॥ २ ॥

आनन्दगिरिटीका

अनन्तरमाध्यात्मिकप्राणदृष्ट्योद्गीथोपासनवचनादिति शेषः । किमिति देवताविषयमुद्गीथोपासनं प्रस्तूयते तत्राऽऽह—अनेकधेति । प्राणरूपेणाऽऽदित्यादिरूपेण चोद्गीथस्योपास्यत्वाद्देवताविषयतदुपास्तिप्रस्तावो युक्त एवेत्यर्थः । आदित्यादिमतयश्चेत्यादिन्यायेन वाक्यार्थं कथयति—आदित्यदृष्ट्येति । "तमादित्यमुद्गीथमुपासीते"त्यादित्यशब्दस्योद्गीथशब्दस्य च सामानाधिकरण्यमयुक्तमुद्गीथशब्दस्य प्रकरणादक्षरवाचित्वादादित्यशब्दस्य च ज्योतिर्विषयत्वाद्भिन्नार्थयोश्च शब्दयोः सामानाधिकरण्यायोगादिति शङ्कते—तमुद्गीथमितीति । आदित्ये यद्यपि नोद्गीथशब्दो रूढ्या वर्तितुमर्हति तथाऽपि गौण्या च तत्र तत्र वृत्तेः सामानाधिकरण्यसिद्धिरित्युत्तरमाह—उच्यत इति । प्रजार्थमुद्गायतीत्यतदेव स्पष्टयति—प्रजानामिति । अन्नोत्पत्त्यर्थमुद्गायतीति पूर्वेण सम्बन्धः । तदेव व्यतिरेकद्वारा साधयति—न हीति । आदित्यस्यान्नार्थमागानमतःशब्दार्थः । न तस्योद्गातुरिव प्रत्यक्षमुद्गानमुपलब्धमित्याशङ्क्याऽऽह—उद्गायतीवेति । उपमामेवोपपादयति—यथेति । 'अथाऽऽत्मनेऽन्नाद्यमागायेदि"तिश्रुत्यन्तरे[1] यथाऽन्नार्थमुद्गाताऽऽगायतीत्यवगतं तथाऽऽदित्योऽपि प्रजानामन्नार्थमागायतीत्यर्थः । उद्गीथशब्दस्याऽऽदित्ये सम्भवं परामृश्य फलितमाह—अत इति । आदित्यदृष्ट्योद्गीथोपासनमुपपाद्य फलोक्तिं व्याचष्टे—किञ्चेत्यादिना । एवंगुण तमस्तज्जभयनिवर्तकत्वगुणसहितमिति यावत् ॥ १ ॥

नन्वध्यात्ममधिदैवतमिति स्थानभेदात्प्राणादित्ययोर्भिन्नत्वाद्भिन्नमेव तयोरुपासनमुपादेयमत आह—यद्यपीति । प्राणादित्ययोः स्वरूपभेदाभावं प्रश्नपूर्वकं प्रतिपादयति—कथमित्यादिना । उशब्दोऽप्यर्थः स्थानभेदतो भेदमनुजानाति । गुणतः साम्य साधयति—यस्मादिति । नामतः साम्यं सङ्गिरते—किञ्चेति । सवितृवत्प्राणेऽपि प्रत्यास्वरशब्दप्रवृत्तिमाशङ्क्याऽऽह—यस्मादिति । स्वरत्येति गच्छत्येवेति यावत् । तस्मिन्नेव स्थूलदेहे न प्रत्यागच्छति

१. बृहदारण्यके प्रथमाध्याये ।

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानः। अथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक्। तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥३॥**

**या वाक्सर्क्तस्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥ ४ ॥**

प्रत्यागच्छति। सविता त्वस्तमित्वा पुनरप्यहन्यहनि प्रत्यागच्छति। अतः प्रत्यास्वरोऽस्माद्गुणतो नामतश्च समानावितरेतरं प्राणादित्यौ। अतः सतत्त्वाभेदादेतं प्राणमिमममुं चाऽऽदित्यमुद्गीथमुपासीत ॥ २ ॥

अथ खल्विति प्रकारान्तरेणोपासनमुद्गीथस्योच्यते—व्यानमेव वक्ष्यमाणलक्षणं प्राणस्यैव वृत्तिविशेषमुद्गीथमुपासीत। अधुना तत्सतत्त्वं निरूप्यते—यद्वै पुरुषः प्राणिति मुखनासिकाभ्यां वायुं बहिर्निःसारयति स प्राणाख्यो वायोर्वृत्तिविशेषो यदपानित्यपश्वसिति ताभ्यामेवान्तराकर्षति वायुं सोऽपानोऽपानाख्या वृत्तिः। ततः किमिति, उच्यते—अथ य उक्तलक्षणयोः प्राणापानयोः सन्धिस्तयोरन्तरा वृत्तिविशेषः स व्यानः, यः साङ्ख्यादिशास्त्रप्रसिद्धः श्रुत्या विशेषनिरूपणान्नासौ व्यान इत्यभिप्रायः। कस्मात्पुनः प्राणापानौ हित्वा महताऽऽयासेन व्यानस्यैवोपासनमुच्यते। वीर्यवत्कर्महेतुत्वात्। कथं वीर्यवत्कर्महेतुत्वमित्याह—यो व्यानः सा वाक्। व्यानकार्यत्वाद्वाचः। यस्माद्व्याननिर्वर्त्या वाक्तस्मादप्राणन्ननपानन्प्राणापानव्यापारावकुर्वन्वाचमभिव्याहरत्युच्चारयति लोकः ॥ ३ ॥

तथा वाग्विशेषामृचमृक्संस्थं च साम सामावयवं चोद्गीथमप्राणन्ननपानन्व्यानेनैव निर्वर्तयतीत्यभिप्रायः॥४॥

## नरेन्द्रपुरीयं टिप्पणम्

व्यानस्वरूपं दर्शयितुं प्राणापानौ कथयति—यद्वै पुरुष इत्यादिना। ताभ्यामेति। सन्धिस्कन्धमर्मदेशवृत्तिर्व्यान इति सांख्यादिशास्त्रप्रसिद्धो न ग्राह्यः। श्रुत्या विशेषनिरूपणादित्यर्थः। वीर्यवद्व्यानोपासनस्य गुणानुरूपमेव फलमित्याह—कर्मवीर्यवत्तरत्वं फलमिति ॥ ३ ॥

## आनन्दगिरिटीका

तस्मात्प्राणे स्वरशब्दप्रवृत्तिरेवेत्यर्थः। सवितर्यपि तर्हि तच्छब्दप्रवृत्तिरेवेत्याशङ्क्याऽऽह—सविता त्विति। आदित्यस्यास्तं गतस्य प्रत्यहमेकत्रैवाऽऽगतिदर्शनात्तस्मिन्प्रत्यास्वरशब्दस्यापि प्रवृत्तिरस्तीत्यर्थः। अतः प्राणादित्ययोरुक्तं साम्यं निगमयति—अस्मादिति। अन्योन्यसाम्यकृतं फलमाह—अत इति। प्राणादित्यावेकीकृत्य तद्दृष्ट्योद्गीथावयवभूतमोङ्काराख्यमक्षरमुपास्यमित्यर्थः ॥ २ ॥

अथाऽऽध्यात्मिकमाधिदैविकं चोद्गीथोपासनं प्रस्तुत्य तदेव समस्यैकीकृत्योक्तं तथा च वक्तव्याभावात् किमुत्तरेण ग्रन्थेनेत्याशङ्क्याऽऽध्यात्मिकमेवोद्गीथोपासनमनुसृत्याऽऽह—अथेति। कोऽसौ व्यानो यद्दृष्ट्योद्गीथोपासनमुपदिदिक्षितमत आह—वक्ष्यमाणलक्षणमिति। पक्षान्तरं व्यावर्तयति—प्राणस्यैवेति। वक्ष्यमाणलक्षणमित्युक्तं व्यक्तीकरोति—अधुनेति। तन्निरूपणार्थमादौ प्राणापानौ निरूपयति—यद्वा इत्यादिना। ताभ्यामेव मुखनासिकाभ्यामित्येतत्। स्यातामेवं प्राणापानौ व्यानस्य तु किमायातमिति शङ्कित्वा तत्स्वरूपं दर्शयति—तत इत्यादिना। सन्धिमेव स्फुटयति—तयोरिति। प्राणापानयोर्वृत्त्योरभावावस्थायां मध्ये च वायोर्वृत्तिविशेषो योऽस्ति स व्यानशब्दार्थ इत्यर्थः। सन्धिस्कन्धमर्मदेशवृत्तिर्व्यान इति सांख्या योगाश्चाऽऽहुस्तान्प्रत्याह—यः सांख्यादीति। सांख्यानां योगानां च शास्त्रे प्रसिद्धो यो वायोर्वृत्तिविशेषः स्कन्धादिदेशगो नासौ व्यानःश्रुत्या विशेषनिरूपणादिति योजना। व्यानस्य प्राणापानसापेक्षत्वात्तयोरन्यतरस्योपासनमेवोचितं न व्यानोपासनमिति मन्वानश्चोदयति—कस्मादिति। महताऽऽयासेन व्यानसतत्त्वनिरूपणेनेति यवात्। ताभ्यां तस्य वैशिष्ट्यमुपेत्य परिहरति—वीर्यवदिति। व्यानस्यैवोपासनमिति शेषः। तदेव प्रश्नद्वारा प्रपञ्चयति—कथमित्यादिना। कथं व्यानस्य वीर्यवत्कर्म प्रसिद्धं प्रतिज्ञायते कार्यकारणभावादित्याह—व्यानेति। वाचो व्याननिर्वर्त्यत्वे लिङ्गं दर्शयति—यस्मादिति ॥ ३ ॥

या वागित्यादिवाक्यानामर्थं संक्षिपति—तथेत्यादिना ॥ ४ ॥

अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाऽग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानँ्स्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥

अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदँ् सर्वँ् स्थितम् ॥ ६ ॥

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थँ् सामवेद एवोद्यजुर्वेदो गीर्ऋग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥

न केवलं वागाद्यभिव्याहरणमेवातोऽस्मादन्यान्यपि यानि वीर्यवन्ति कर्माणि प्रयत्नाधिक्यनिर्वर्त्यानि यथाऽग्नेर्मन्थनमाजेर्मर्यादायाः सरणं धावनं दृढस्य धनुष आयमनमाकर्षणमप्राणन्ननपानंस्तानि करोति । अतो विशिष्टो व्यानः प्राणादिवृत्तिभ्यः । विशिष्टस्योपासनं ज्यायः फलवत्त्वाद्राजोपासनवत् । एतस्य हेतोरेतस्मात्कारणाद्व्यानमेवोद्गीथमुपासीत नान्यद्वृत्त्यन्तरम् । कर्मवीर्यवत्तरत्वं फलम् ॥ ५ ॥

अथाधुना खलूद्गीथाक्षराण्युपासीत भक्त्यक्षराणि मा भूवन्नित्यतो विशिनष्टि—उद्गीथ इति । उद्गीथनामाक्षराणीत्यर्थो नामाक्षरोपासनेऽपि नामवत एवोपासनं कृतं भवेदमुकमिश्रा इति यद्वत् । प्राण एवोत्, उदित्यस्मिन्नक्षरे प्राणदृष्टिः । कथं प्राणस्योत्त्वमित्याह—प्राणेन ह्युत्तिष्ठति सर्वोऽप्राणस्यावसाददर्शनादतोऽस्त्युदः प्राणस्य च सामान्यम् । वाग्गीः । वाचो ह गिर इत्याचक्षते शिष्टाः । तथाऽन्नं थमन्ने हीदं सर्वं स्थितमतोऽस्त्यन्नस्य थाक्षरस्य च सामान्यम् ॥ ६ ॥

त्रयाणां श्रुत्युक्तानि सामान्यानि तानि तेनानुरूपेण शेषेष्वपि द्रष्टव्यानि । द्यौरेवोदुच्चैः स्थानात् ।

नरेन्द्रपुरीयं टिप्पणम्

उद्गीथोपासनप्रसङ्गेनोपासनान्तरमाह—अथाधुनेत्यादिना । अन्तरिक्षमाकाशस्तदन्तःप्रविष्टा लोकास्तेन गीर्णा एवेत्यर्थः । सामवेदो वै स्वर्गो लोक इति "साम सुवर्गो लोकः" ( तै० आ० ) स्वर्गसंस्तुतत्वमित्यर्थः । यजुषेति । स्वाहास्वधादिना । अध्यूढत्वात् स्थितत्वादित्यर्थः । वाच इति कर्मणि षष्ठी । ऋगादिशब्देषु साध्यं फलं स्वाधीनोच्चारणक्षमत्वं तदनायासेन भवतीत्यर्थः ॥ ४-७ ॥

आनन्दगिरिटीका

अतो यानीत्यादि व्याचष्टे—न केवलमिति । व्यानेन निर्वर्तयतीति पूर्वेण सम्बन्धः । यान्यन्यान्यपि यथोक्तानि कर्माणि तानि लोको व्यानेनैव करोतीत्युत्तरत्र सम्बन्धः । प्रयत्नाधिक्यनिर्वर्त्यानि कर्माण्येवोदाहरति—यथेति । यथा तानि कर्माणि तथाऽन्यान्यप्येवंप्रकाराणीति योजना । व्यानस्य वीर्यवत्कर्महेतुत्वे फलितमाह—अत इति । वैशिष्ट्येऽपि किं स्यादिति चेत्तदाह—विशिष्टस्येति । वैशिष्ट्यफलमुपसंहरति—एतस्येति । फलवत्त्वादित्युक्तमुपास्तिफलं स्पष्टयति—कर्मेति । व्यानदृष्ट्योद्गीथोपासनस्याङ्गावबद्धत्वादिति शेषः ॥ ५ ॥

उद्गीथोपासनप्रसङ्गेनोद्गीथाक्षरोपासनं प्रस्तौति—अथेति । विशेषणतात्पर्यं दर्शयति—भक्तीति । उद्गीथाक्षराण्युपासीतेत्युक्ते भक्त्यक्षराण्युपास्यानि प्राप्तानि तानि मा भूवन्निति यतो मन्यते श्रुतिस्ततो विशेषणं करोतीत्यर्थः । विशेषणश्रुतिं व्याकरोति—उद्गीथेति । नामाक्षरोपासनमुद्गीथोपासनस्याकिञ्चित्करमित्याशङ्क्याऽऽह—नामेति । यथा लोके कृष्णमिश्रादिवाचकशब्दप्रयोगे वाच्यस्य पुरुषविशेषस्योपासनं गम्यते तथेहापीत्यर्थः । नामाक्षरोपासने नामवदुपासनेऽपि तदुपासनमेव कथमित्याशङ्क्य विभजते—प्राण एवेति । प्राणस्योदः सादृश्यं प्रश्नपूर्वकमाह—कथमित्यादिना । गीरित्यस्मिन्नक्षरे वाग्दृष्टिः कर्तव्येत्याह—वाग्गीरिति । वाचो गिरश्च सादृश्यं दर्शयति—वाचो हेति । उद्गीरक्षरयोः प्राणवाग्दृष्टिरिव थमित्यस्मिन्नक्षरेऽन्नदृष्टिः कार्येत्याह—तथेति । थकारान्नयोरपेक्षितं सादृश्यं दर्शयति—अन्ने हीति ॥ ६ ॥

प्राण एवोदित्यादौ सादृश्यं श्रुत्यैवोक्तं द्यौरेवोदित्यादौ तु नोक्तं तथा च तत्र सादृश्याभावे कथं दृष्टिकरण-

**अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥**

**यस्यामृचि तामृचं यदार्षेयं[1] तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥**

अन्तरिक्षं गीर्गिरणाल्लोकानाम् । पृथिवी थं प्राणिस्थानात् । आदित्य एवोदूर्ध्वत्वात् । वायुर्गीरग्न्यादीनां गिरणात् । अग्निस्थं यज्ञीयकर्मावस्थानात् । सामवेद एवोत्स्वर्गसंस्तुतत्वात् । यजुर्वेदो गीर्यजुषा प्रत्तस्य हविषो देवतानां गिरणात् । ऋग्वेदस्थमृच्यध्यूढत्वात्साम्नः । उद्गीथाक्षरोपासनफलमधुनोच्यते—दुग्धे दोग्ध्यस्मै साधकाय । का सा वाक्, कं दोहम् । कोऽसौ दोह इत्याह—यो वाचो दोहः । ऋग्वेदादिशब्दसाध्यं फलमित्यभिप्रायस्तद्वाचो दोहस्तं स्वयमेव वाग्दोग्ध्यात्मानमेव दोग्धि । किञ्चान्नवानप्रभूतान्नोऽन्नादश्च दीप्ताग्निर्भवति । य एतानि यथोक्तान्येवं यथोक्तगुणान्युद्गीथाक्षराणि विद्वान्सन्नुपास्त उद्गीथ इति ॥ ७ ॥

अथ खल्विदानीमाशीःसमृद्धिराशिषः कामस्य समृद्धिर्यथा भवेत्तदुच्यत इति वाक्यशेषः । उपसरणान्युपसर्तव्यान्युपगन्तव्यानि ध्येयानीत्यर्थः । कथम्, इत्युपासीत, एवमुपासीत । तद्यथा—येन साम्ना येन सामविशेषेण स्तोष्यन्स्तुतिं करिष्यन्स्याद्भवेदुद्गाता तत्सामोपधावेदुपसरेच्चिन्तयेदुत्पत्त्यादिभिः ॥ ८ ॥

यस्यामृचि तत्साम तां चर्चमुपधावेद्देवतादिभिः । यदार्षेयं साम तं चर्षिम् । यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधावेत् ॥ ९ ॥

नरेन्द्रपुरीयं टिप्पणम्

वाक्समृध्यादिफलकस्योपासनस्यानन्तरं येन प्रकारेण फलसमृद्धिर्भवति तत्प्रकारज्ञानं सर्वकाम्योपासनशेषभूतं प्रासङ्गिकं विधीयत इत्याह—अथ खल्वित्यादिना । त्रिवृत्पञ्चदशस्सप्तदशस्तोमस्सोमयागे प्रसिद्धः । "स्वरितञितः कर्त्रभिप्राये क्रियाफले" इति स्मरणात् कर्तृगामित्वं यत्र फलस्य तत्रात्मनेपदं प्रतीयत इत्यर्थः ॥८-१०॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य तृतीयः खण्डः

आनन्दगिरिटीका

मित्याशङ्क्याऽऽह—त्रयाणामिति । अन्तरिक्षमाकाशस्तदन्तःप्रतिष्ठा लोकास्तेन गीर्णा इवेति मत्वाऽऽह—गिरणादिति । अग्न्यादीनां गिरणादिति संवर्गविद्यायां द्रष्टव्यम् । "सामवेदो वै स्वर्गो लोक" इति स्वर्गलोकत्वेन सामवेदस्य संस्तुतत्वादिति हेतुमाह—स्वर्गेति । यजुषा स्वाहास्वधादिनेति यावत् । अध्यात्ममधिलोकमधिदैवमधिवेदं च नामाक्षरोपासनमुक्त्वा तत्फलोक्तिमवतार्य व्याकरोति—उद्गीथेति । यो वाचो दोह इत्यत्र षष्ठी कर्मणि द्रष्टव्या । तमेव वाग्दोहं प्रकटयति—ऋग्वेदादीति । तत्साध्यं फलं स्वाधीनोच्चारणक्षमत्वं तदनायासेनास्य सम्भवतीत्यर्थः । तदिति प्रकृतफलपरामर्शः । षष्ठी पूर्ववत् । तमिति दोहोक्तिः । वाच एव दोहे कर्मत्वं कर्तृत्वं चेत्याह—आत्मानमेवेति । यो दोग्धा सा वागेव सा चाऽऽत्मानमेव तं दोग्धीति योजना । यथोक्तानि प्राणवागन्नादिरूपत्वेनोक्तानीति यावत् । यथोक्तगुणान्युत्थानगिरणस्थित्यादिधर्मकाणीत्यर्थः । उद्गीथाक्षराणीत्युक्तं विशेषणानुवादेन स्फुटयति—उद्गीथ इति । उद्गीथ इत्येवंरूपस्य नाम्नोऽक्षराणीति यावत् ॥ ७ ॥

वागादिसमृद्धिफलमुपासनमुपदिश्य फलसमृद्धिर्येन प्रकारेण भवति तत्प्रकारज्ञानं सर्वकाम्योपासनशेषभूतं प्रासङ्गिकं विधीयत इत्याह—अथ खल्विति । वागादिसमृद्धिफलकोपासनानान्तर्यमथशब्दार्थः । वक्ष्यमाणोपासनानां सर्वकाम्योपासनाशेषत्वद्योतनार्थं खल्वित्युक्तम् । प्रासङ्गिकत्वं दर्शयति—इदानीमिति । कामशब्दः फलविषयः । तच्छब्दः प्रकारज्ञानपरामर्शी । उच्यते विधीयत इत्यर्थः । ध्यानप्रकारं प्रश्नपूर्वकं विशदयति—कथमित्यादिना । इतिशब्दार्थमभिनयति—एवमिति । एवंशब्दार्थमुदाहरणनिष्ठतया स्पष्टयति—तद्यथेति । उत्पत्त्यादिभिरित्यादिशब्देन च्छन्दोदेवतादि गृह्यते ॥ ८ ॥

देवतादिभिरिति । आदिपदेनाऽऽर्षेयादिग्रहः ॥ ९ ॥

---

१. यदार्षेयं—यः ऋषिः द्रष्टा यस्येति शिवभागवतवत् समासः ।

येन च्छन्दसा स्तोष्यन्त्स्यात्तच्छन्द उपधावेद्येन
स्तोमेन स्तोष्यमाणः स्यात्तँ स्तोममुपधावेत् ॥ १० ॥

यां दिशमभिष्टोष्यन्त्स्यात्तां दिशमुपधावेत् ॥ ११ ॥

आत्मानमन्तत[1] उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो
ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ १२ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य तृतीयः खण्डः

येन च्छन्दसा गायत्र्यादिना स्तोष्यन्स्यात्तच्छन्द उपधावेत् । येन स्तोमेन स्तोष्यमाणः स्यात् । [2]स्तोमाङ्ग-फलस्य कर्तृगामित्वादात्मनेपदं स्तोष्यमाण इति । तं स्तोममुपधावेत् ॥ १० ॥

यां दिशमभिष्टोष्यन्स्यात्तां दिशमुपधावेदधिष्ठात्रादिभिः ॥ ११ ॥

आत्मानमुद्गाता स्वं रूपं गोत्रनामादिभिः सामादीन्क्रमेण स्वं चाऽऽत्मानमन्ततोऽन्त उपसृत्य स्तुवीत । कामं ध्यायन्नप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः प्रमादमकुर्वंस्ततोऽभ्याशः क्षिप्रमेव ह यद्यत्रास्मा एवंविदे स कामः समृध्येत समृद्धिं गच्छेत् । कोऽसौ, यत्कामो यः कामोऽस्य सोऽयं यत्कामः सन्स्तुवीतेति । द्विरुक्तिरादरार्था ॥ १२ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य तृतीयः खण्डः

आनन्दगिरिटीका

गायत्र्यादिनेति । आदिपदमुष्णिगनुष्टुब्बृहत्यादिसंग्रहार्थम् । त्रिवृत्पञ्चदशः सप्तदश एकविंशः प्रसिद्धः सोमयागे स्तोमः । आत्मनेपदप्रयोगप्रतिपन्नमर्थमाह—स्तोमाङ्गेति । यत्र कर्तृगामि फलं तत्राऽऽत्मनेपदं प्रयुज्यते, प्रकृते च स्तोष्यमाण इत्यात्मनेपदं दृश्यते, तस्मादेतत्फलस्य कर्तृगामित्वं गम्यते । अन्यथा पूर्वोत्तरयोरिव परस्मैपद-प्रयोगप्रसङ्गादित्यर्थः ॥ १० ॥

यां दिशमभीत्यभिव्याप्येत्यर्थः । स्तोष्यन्देवताविशेषमिति शेषः । अधिष्ठातृशब्देनेन्द्रादयो गृह्यन्ते । आदिपदं तत्तद्दिगवस्थितासाधारणधर्मसंग्रहार्थम् ॥ ११ ॥

आत्मानं स्वं रूपं गोत्रादिभिरुपसृत्योद्गाता स्तुवीतेति सम्बन्धः । नामादिभिरित्यादिशब्देन वर्णाश्रमादि-ग्रहणम् । अन्तत इत्यस्यार्थमाह—सामादीनिति । पूर्वोक्तान्सामादीन्सर्वानुक्तेन क्रमेण ध्यात्वा तदवसाने स्वात्मान-मपि सञ्चिन्त्यापेक्षितफलमनुसन्दधानः स्वरादिभ्यः प्रमादमकुर्वन्नुद्गाता स्तुवीतेति योजना । यत्र कर्मण्ययमुद्गाता यथोक्तरीत्या स्तोता भवति तत्र क्षिप्रमेवास्मै स कामः समृद्धिं गच्छेद्यत्कामः सन्यः स्तुवीतेत्यन्वयः । इतिशब्दः प्रासङ्गिकोपासनसमाप्त्यर्थः ॥ १२ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य तृतीयः खण्डः

---

१. आत्मानमन्तत उपसृत्येत्यत्रात्मानमपि ब्रह्मात्मकं ध्यात्वेत्यर्थः उक्तः अन्यैः । तत्तु कर्मप्रसङ्गे आत्म-ध्यानस्याप्रकृतत्वादाचार्यैर्नाङ्गीकृतम् ।

अपि च पूर्वं अथ खल्वाशीः समृद्धिरित्यादिना ऋषिच्छन्दोदेवतादिकं तत्तत्सामसम्बन्धि ध्येय-मित्युक्त्वा यां दिशमभिष्टोष्यन् स्यात् तां दिशमपि अधिष्ठात्रादिदेवताविशिष्टतया ध्येयत्वेनोक्त्वा आत्मानमित्याद्युक्तम् । अत्र च स्वस्य गोत्रनामादिभिश्चिन्तनमेव स्वरसं न तु परमात्मा अस्य खण्डस्य सर्वस्याप्यनात्मविषयत्वात् ।

२. स्तोमरूपाङ्गेत्यर्थः ।

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥
देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशँ्स्ते छन्दोभिरच्छादयन्यदेभिरच्छादयँ्स्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥
तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि । ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥

ओमित्येतदित्यादिप्रकृतस्याक्षरस्य पुनरुपादानमुद्गीथाक्षराद्युपासनान्तरितत्वादन्यत्र प्रसङ्गो मा भूदित्येवमर्थम् । प्रकृतस्यैवाक्षरस्यामृताभयगुणविशिष्टस्योपासनं विधातव्यमित्यारम्भः । ओमित्यादि व्याख्यातम् ॥ १ ॥

देवा वै मृत्योर्मारकाद्बिभ्यतः किं कृतवन्त इत्युच्यते । त्रयीं विद्यां त्रयीविहितं कर्म प्राविशन्प्रविष्टवन्तो वैदिकं कर्म प्रारब्धवन्त इत्यर्थः । तन्मृत्योस्त्राणं मन्यमानाः । किञ्च ते कर्मण्यविनियुक्तैश्छन्दोभिर्मन्त्रैर्जपहोमादि कुर्वन्त आत्मानं कर्मान्तरेष्वच्छादयंश्छादितवन्तः । यद्यस्मादेभिर्मन्त्रैरच्छादयंस्तत्तस्माच्छन्दसां मन्त्राणां छादनाच्छन्दस्त्वं प्रसिद्धमेव ॥ २ ॥

तांस्तत्र देवान्कर्मपरान्मृत्युर्यथा लोके मत्स्यघातको मत्स्यमुदके नातिगम्भीरे [1]परिपश्येद्बडिशोदकस्रावोपायसाध्यं मन्यमान एवं पर्यपश्यद्दृष्टवान्मृत्युः कर्मक्षयोपायेन साध्यान्देवान्मेन इत्यर्थः । क्वासौ देवान्ददर्शेत्युच्यते—ऋचि साम्नि यजुषि । ऋग्यजुःसामसम्बन्धिकर्मणीत्यर्थः । ते नु देवा वैदिकेन कर्मणा संस्कृताः शुद्धात्मानः सन्तो

नरेन्द्रपुरीयं टिप्पणम्

अधिष्ठात्रादिभिरिन्द्रादिभिः । उद्गीथप्रकरणाविच्छेदज्ञापनार्थं प्रासङ्गिकं हित्वा प्रकृतानुसन्धानमित्याह—ओमित्येतदित्यादिना ॥ १-२ ॥

आनन्दगिरिटीका

प्रासङ्गिकं हित्वा प्रकृतमनुसन्धत्ते—ओमित्येतदित्यादीति । पुनरुपादानस्य तात्पर्यमाह—उद्गीथेति । आदिशब्देन पूर्वोक्तान्युपसरणानि गृह्यन्ते । उद्गीथस्य तैर्व्यवहितत्वात्प्रकरणविच्छेदशङ्कायां ततोऽन्यस्मिन्नर्थे प्रसङ्गः स्यात्स मा भूदित्येवमर्थं पुनरुपादानमित्यर्थः । देवा वै मृत्योरित्यादेस्तात्पर्यमाह—प्रकृतस्येति । अक्षरव्याख्यानप्रास्तावनुवादभागं प्रत्याह—ओमित्यादीति ॥ १ ॥

देवासुरा ह वै यत्रेत्यत्र व्याख्याता देवा मारकादासुरात्पाप्मनः सकाशादिति यावत् । कोऽयं कर्मणि प्रवेशो नाम तत्राऽऽह—वैदिकमिति । तदिति वैदिकं कर्मोच्यते । ते छन्दोभिरित्यादि व्याचष्टे—किञ्चेति । न हि सर्वे मन्त्राः सर्वत्र विनियुज्यन्ते । तथा चैकस्मिन्कर्मण्यनुष्ठीयमाने विनियुक्तान्मन्त्रान्हित्वा [2]कर्मान्तरेष्ववशिष्टैर्जपादि कुर्वन्तः स्वात्मानं देवाश्छादितवन्तः । तस्मान्न मृत्युवश्यता तेषामित्यर्थः । तेषां छान्दोभिश्छादितत्वे छन्दसां छन्दस्त्वप्रसिद्धिप्रकारमभिनयति—तत्तस्मादिति ॥ २ ॥

कर्मानुतिष्ठतां देवानां मृत्युवश्यता न व्यावृत्तेत्याह—तानिति । तत्रेति वैदिककर्मप्रारम्भोक्तिः । उशब्दोऽप्यर्थः । यथोक्तकर्मपरानपि तान्मृत्युः पर्यपश्यदिति सम्बन्धः । कर्मणां मृत्युपदगोचरत्वं दृष्टान्तेनाऽऽह—यथेति । दार्ष्टान्तिकभागस्य विवक्षितमर्थं संगृह्णाति—मृत्युरिति । दार्ष्टान्तिके क्षुद्रोदकस्थानीयं किं स्यादिति प्रश्नपूर्वकं दर्शयति—क्वासावित्यादिना । ऋगादीनां नित्यत्वेन क्षयाभावान्न क्षुद्रोदकस्थानीयतेत्याशङ्क्य विवक्षितमर्थमाह—ऋगिति । कर्मणश्च कृतकत्वेन फलतः स्वरूपतश्च क्षयिता प्रसिद्धेति भावः । मृत्युपरिहारोपायमुपदिशति—ते नु देवा इत्यादिना । कर्मभ्यः सकाशादूर्ध्वा व्यावृत्ता इत्यर्थः । सर्वकर्मसंग्रहार्थं कर्मभ्य इति

१. बडिशोदकस्रावेति—यथा बडिशेन मत्स्यो गृह्यते यथा वोदकमात्रमन्यत्र स्रावयित्वा अधःस्थितं मत्स्यं गृह्णन्ति तथा मृत्युः कर्मोपक्षयानन्तरं तावत्पर्यन्तं प्रतीक्ष्य देवान् गृह्णीयामिति मेने । तदुक्तं कर्मक्षयोपायेन साध्यान् गृहीतुं साध्यान् मेने ।

२. कर्मच्छिद्रेषु ।

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवँ सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४ ॥

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरँ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य चतुर्थः खण्डः

अथ खलु य उद्गीथः स प्रणवो यः[1] प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥

मृत्योश्चिकीर्षितं विदितवन्तः। विदित्वा च त ऊर्ध्वा व्यावृत्ताः कर्मभ्य ऋचः साम्नो यजुष ऋग्यजुःसामसम्बद्धात्कर्मणोऽभ्युत्थायेत्यर्थः। तेन कर्मणा मृत्युभयापगमं प्रति निराशास्तदपास्यामृताभयगुणमक्षरं स्वरं स्वरशब्दितं प्राविशन्नेव प्रविष्टवन्तः। ओङ्कारोपासनपराः संवृत्ताः। एवशब्दोऽवधारणार्थः सन्समुच्चयप्रतिषेधार्थः। तदुपासनपराः संवृत्ता इत्यर्थः ॥ ३ ॥

कथं पुनः स्वरशब्दवाच्यत्वमक्षरस्येत्युच्यते—यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवं सामैवं यजुः। एष उ स्वरः। कोऽसौ यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य यथागुणमेवामृता अभयाश्चाभवन्देवाः ॥ ४ ॥

स योऽन्योऽपि देववदेवैतदक्षरमेवममृतमभयगुणं विद्वान्प्रणौति स्तौति। उपासनमेवात्र स्तुतिरभिप्रेता। स तथैवैतदेवाक्षरं स्वरममृतमभयं प्रविशति। तत्प्रविश्य च राजकुलं प्रविष्टानामिव राज्ञोऽन्तरङ्गबहिरङ्गतावन्न परस्य ब्रह्मणोऽन्तरङ्गबहिरङ्गताविशेषः। किं तर्हि यदमृता देवा येनामृतत्वेन यदमृता अभूवंस्तेनैवामृतत्वेन विशिष्टस्तदमृतो भवति न न्यूनता नाप्यधिकताऽमृतत्व इत्यर्थः ॥ ५ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य चतुर्थः खण्डः

प्राणादित्यदृष्टिविशिष्टस्योद्गीथस्योपासनमुक्तमेवानूद्य प्रणवोद्गीथयोरेकत्वं कृत्वा तस्मिन्प्राणरश्मिभेद-

नरेन्द्रपुरीयं टिप्पणम्

अमृताभयगुणकब्रह्मदृष्ट्योङ्कारोपासनस्य कर्मनिरपेक्षस्यापेक्षिकामृतत्वप्राप्तिसाधनत्वं विद्यत इत्याह—समुच्चयेति॥३॥

स्वरसम्पाद्यत्वादोङ्कारे स्वरशब्दो लाक्षणिक इत्याह—यदा वा इति ॥ ४-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य चतुर्थः खण्डः

आनन्दगिरिटीका

बहुवचनम्। अवैदिककर्मत्यागस्य कर्मिष्वपि सिद्धत्वाद्वैदिककर्मत्यागार्थं विशिनष्टि—ऋच इति। कर्मत्यागमात्रात्कृतकृत्यताशङ्कां वारयति—तेनेति। किं तदक्षरं तदाह—ओङ्कारेति ॥ ३ ॥

उदात्तादिरूपत्वाभावादक्षरस्य न स्वरशब्दत्वमित्याशङ्क्य परिहरति—कथमित्यादिना। ऋचमाप्नोत्यध्ययनेन स्वाधीनां करोतीत्यर्थः। अतिस्वरत्यतिशयेनाऽऽदरधियोच्चारयतीति यावत्। ऋग्यजुःसाम्नां प्रत्येकमोङ्कारोच्चारणद्वारेणैवाऽऽप्तिदर्शनादित्यतिशब्दार्थः। उशब्दोऽपिपर्यायः। सम्प्रतिपन्नस्वरवदिति दृष्टान्तार्थः। अमृतमभयं तथाविधब्रह्मप्रतीकत्वादित्यर्थः। तत्प्रविश्य ब्रह्मबुद्ध्या तद्ध्यानं कृत्वेत्यर्थः ॥ ४ ॥

भवतु देवानामेवमस्माकं तु किमायातमित्याशङ्क्याऽऽह—स योऽन्योऽपीति। राजगृहं प्रविष्टस्य विशेषदर्शनादक्षरं प्रविष्टस्यापि फले विशेषः स्यादित्याशङ्क्याऽऽह—तत्प्रविश्येति। अमृतत्वेन विशिष्टा इति शेषः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य चतुर्थः खण्डः

खण्डान्तरस्य तात्पर्यमाह—प्राणादित्येति। प्रणवस्योद्गीथस्य चैकत्वं कृत्वा तस्मिन्सत्यध्यात्मं प्राण-

१. यः प्रणवः स उद्गीथः इत्यत्र ऋग्वेदस्थः प्रणवः स उद्गीथ इत्यभेद उक्तः। ओमित्येतदक्षरमुद्गीथमित्यत्र तु उद्गीथावयव ओङ्कार एव ग्राह्यः न तु सर्ववेदसाधारण इत्युक्तम्—इति भेदो ज्ञेयः। अत्र प्रणवे आदित्यदृष्टिं विनिन्द्य आदित्यरश्मिदृष्टिः बहुपुत्रत्वाय विधीयते।

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीँस्त्वं पर्यावर्तयाद्बहवो वै ते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥
अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥ ३ ॥

गुणविशिष्टदृष्ट्याऽक्षरस्योपासनमनेकपुत्रफलमिदानीं वक्तव्यमित्यारभ्यते—अथ खलु य उद्गीथः स प्रणवो बह्वृचानां यश्च प्रणवस्तेषां स एव च्छान्दोग्य उद्गीथशब्दवाच्यः। असौ वा आदित्य उद्गीथ एष प्रणवः। प्रणवशब्दवाच्योऽपि स एव बह्वृचानां नान्यः। उद्गीथ आदित्यः कथम्। उद्गीथाख्यमक्षरमोमित्येतदेष हि यस्मात्स्वरन्नुच्चारयन्ननेकार्थत्वाद्धातूनाम्। अथवा स्वरन्गच्छन्नेति। अतोऽसावुद्गीथः सविता ॥ १ ॥

तमेतमु एवाहमभ्यगासिषमाभिमुख्येन गीतवानस्म्यादित्यरश्म्यभेदं कृत्वा ध्यानं कृतवानस्मीत्यर्थः। तेन तस्मात्कारणान्मम त्वमेकोऽसि पुत्र इति ह कौषीतकिः कुषीतकस्यापत्यं कौषीतकिः पुत्रमुवाचोक्तवान्। अतो रश्मीनादित्यं च भेदेन त्वं पर्यावर्तयात्पर्यावर्तयेत्यर्थः। त्वंयोगात्। एवं बहवो वै ते तव पुत्रा भविष्यन्तीत्यधिदैवतम् ॥ २ ॥

अथानन्तरमध्यात्ममुच्यते। य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतेत्यादि पूर्ववत्। तथोमिति ह्येष प्राणोऽपि स्वरन्नेत्योमिति ह्यनुज्ञां कुर्वन्निव वागादिप्रवृत्त्यर्थमेतीत्यर्थः। न हि मरणकाले मुमूर्षोः समीपस्थाः प्राणस्योङ्करणं शृण्वन्तीति। एतत्सामान्यादादित्येऽप्योङ्करणमनुज्ञामात्रं द्रष्टव्यम् ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

प्राणानां रश्मीनां च भेद एव गुणः तद्विशिष्टदृष्ट्येति विग्रहः। गच्छन्सविता प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निवेति। ततः ओङ्कारत्वं सवितुरित्यर्थः ॥ १ ॥
आदित्यदृष्टिविशिष्टोद्गीथोपासनमुक्तमेवानूद्य निन्दति रश्मिभेददृष्टिविधानाय एतमेतमु एवेत्यादिना त्वंयोगादिति युष्मद्युपपदे मध्यमपुरुषविधानादित्यर्थः ॥ २-३ ॥

### आनन्दगिरिटीका

दृष्ट्याऽधिदैवतमादित्यदृष्ट्या च विशिष्टस्योद्गीथस्य यदुपासनमुक्तं तदेवानूद्य निन्दित्वा प्राणानां रश्मीनां च भेद एव गुणस्तद्विशिष्टदृष्ट्या तस्यैवोद्गीथावयवस्याक्षरस्यानेकपुत्रफलमुपासनमनेन ग्रन्थेन वक्तव्यमित्युत्तरो ग्रन्थः संप्रति प्रस्तूयत इत्यर्थः। अमृताभयगुणकाक्षरोपासनानन्तर्यमथशब्दार्थः। प्रणवोद्गीथयोरेकत्वे वैदिकप्रसिद्धिप्रदर्शनार्थं खल्वित्युक्तम्। तयोरेकत्वमुक्त्वाऽऽदित्यदृष्ट्योद्गीथोपास्तिमुक्तामनुवदति—असाविति। उद्गीथादित्ययोरेकत्वं प्रश्नपूर्वकमुपपादयति—उद्गीथ इत्यादिना। उच्चारयन्नेतीति सम्बन्धः। स्वरतेर्गत्यर्थत्वात्कथमुच्चारयन्नित्युच्यते तत्राऽऽह—अनेकार्थत्वादिति। गच्छन्सविता प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निव गच्छति तस्मादोङ्कारत्वं सवितुरित्याह—अथवेत्यादिना ॥ १ ॥

आदित्यदृष्ट्योद्गीथमुपदिष्टमनूद्य निन्दति—तमेतमिति। निन्दाफलं दर्शयति—अत इति। पर्यावर्तयादिति प्रथमपुरुषे श्रूयमाणे किमिति मध्यमपुरुषो व्याख्यायते तत्राऽऽह—त्वंयोगादिति। युष्मद्युपपदे मध्यमपुरुषविधानादित्यर्थः। रश्मिभेदगुणदृष्टिविशिष्टोद्गीथोपासनस्य फलं कथयति—एवमिति। वक्ष्यमाणेऽध्यात्मे बुद्धिसमाधानार्थमुक्तं देवताविषयं दर्शनमुपसंहरति—इत्यधिदैवतमिति ॥ २ ॥

अध्यात्मप्राणदृष्ट्योद्गीथोपास्तिमुक्तामनुवदति—अथेत्यादिना। कथं प्राणोद्गीथयोरेकत्वमित्याशङ्क्याऽऽह—तथेति। यथा प्राणिनां प्रवृत्त्यर्थमोमित्यनुज्ञां कुर्वन्निवाऽऽदित्यो गच्छतीत्युक्तं तद्वदिति यावत्। उक्तमेव व्यतिरेकद्वारा स्फोरयति—न हीति। मुमूर्षुसमीपवर्तिनो बन्धवो मरणकाले प्राणस्य वागादिप्रवृत्त्यर्थमनुज्ञाकरणं नैव जानन्ति। तथा च जीवदवस्थायामोमिति तदनुज्ञावशादेव वागादीनां प्रवृत्तिरालक्ष्यते। तस्मात्प्राणस्यानुज्ञामात्रमोङ्करणमित्यर्थः। प्राणादित्ययोरध्यात्माधिदैवतयोरुद्गीथत्वाविशेषात्प्राणवदादित्येऽप्यनुज्ञामात्रमोङ्करणमवधेयमित्याह—एतत्सामान्यादिति ॥ ३ ॥

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः
पुत्रमुवाच प्राणाँ्स्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥
अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति
होतृषदनाद्धैवापि[1] दुरुद्गीतमनुसमाहरतीत्यनुसमाहरतीति ॥ ५ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य पञ्चमः खण्डः

एतमु एवाहमभ्यगासिषमित्यादि पूर्ववदेव। अतो वागादीन्मुख्यं च प्राणं भेदगुणविशिष्टमुद्गीथं पश्यन्भूमानं मनसाऽभिगायतात्। पूर्ववदावर्तयेत्यर्थः। बहवो वै मे मम पुत्रा भविष्यन्तीत्येवमभिप्रायः सन्नित्यर्थः। प्राणादित्यैकत्वोद्गीथदृष्टेरेकपुत्रत्वफलदोषेणापोदितत्वाद्रश्मिप्राणभेददृष्टेः कर्तव्यता चोद्यतेऽस्मिन्काण्डे बहुपुत्रफलत्वार्थम् ॥४॥

अथ खलु य उद्गीथ इत्यादिप्रणवोद्गीथैकत्वदर्शनमुक्तं तस्यैतत्फलमुच्यते—होतृषदनाद्धोता यत्रस्थः शंसति तत्स्थानं होतृषदनं हौत्रात्कर्मणः सम्यक्प्रयुक्तादित्यर्थः। न हि देशमात्रात्फलमाहर्तुं शक्यम्। किं तद्धैवापि दुरुद्गीतं दुष्टमुद्गीतमुद्गानं कृतमुद्गात्रा स्वकर्मणि क्षतं कृतमित्यर्थः। तदनुसमाहरत्यनुसन्धत्त इत्यर्थः। चिकित्सयेव धातुवैषम्यसमीकरणमिति ॥ ५ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य पञ्चमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

भूमानं बहुत्वोपेतम् ॥ ४ ॥

प्रधानविज्ञानस्य फलमुपसंहृत्य प्रणवोद्गीथयोरेकत्वविज्ञानस्याङ्गभूतस्य फलाभिधानायोपक्रमत इत्याह—अथ खल्वित्यादिना। स्थानमात्रात् क्षतसन्धानासम्भवाल्लक्षणया व्याख्यातं—हौत्रादिति ॥ ५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य पञ्चमः खण्डः

आनन्दगिरिटीका

प्राणदृष्ट्योक्तामुद्गीथोपास्तिं निन्दित्वा विवक्षितामुपास्तिमुपन्यस्यति—एतमु एवेति। भूमानं बहुत्वोपेतमिति यावत्। मध्यमपुरुषे तातङ्ङादेशस्य वैकल्पिकत्वेऽपि प्रथमपुरुषशङ्कया दुरन्वयं व्यावर्तयति—पूर्ववदिति। एकत्वदृष्टिनिन्दाद्वारा प्रधानोपासनं सफलमुपसंहरति—प्राणेत्यादिना ॥ ४ ॥

पूर्वोत्तरयोर्ग्रन्थयोरसङ्गतिमाशङ्क्य तात्पर्यप्रदर्शनपूर्वकमुत्तरग्रन्थमवतार्य व्याकरोति—अथेत्यादिना। ननु यथाश्रुतं स्थानमेव होतृषदनं किं नेष्यते तत्राऽऽह—न हीति। हौत्रात्कर्मणो यत्फलमाद्रियते तत्प्रश्नपूर्वकमशेषतो दर्शयति—किं तदित्यादिना। निपातद्वयमवधारणातिशयफलकं क्रियापदेन सम्बध्यते। अपिशब्दस्तु निष्ठानन्तरभावितया नेतव्यः। दुष्टमुद्गानमेव स्पष्टयति—उद्गात्रेति। कथमन्यनिष्ठात्कर्मणोऽन्यत्र फलमाहर्तुं शक्यमित्याशङ्क्याऽऽह—चिकित्सयेति। उद्गाता प्रणवोद्गीथैकत्वविज्ञानमाहात्म्यात्प्रामादिकं स्वकर्मणि प्राप्तं क्षतं हौत्रात्कर्मणः सम्यक्प्रयुक्तात्प्रणवात्प्रतिसन्दधातीत्यर्थः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य पञ्चमः खण्डः

---

१. होतृषदनाद्धैवापीति—अत्र भाष्ये ब्रह्मसूत्रतृतीयाध्यायतृतीयपादस्थ''समाहारात्'' (ब्र० सू० ३।३।६८) इति सूत्रे चास्यार्थः प्रदर्शितः। अत्र ऋग्वेदीयप्रणवोद्गीथयोरैक्यज्ञानात् सामगस्योद्गातुः स्वकर्मणिक्षतं दुरुद्गीतपदोक्तं स्वरमात्राद्यपभ्रंशरूपं होतृकृतशंसनात् परिहरतीत्युक्तम्। सूत्रभाष्ये इदं वेदान्तरोदितपदार्थसम्बन्धसामान्यात् सर्ववेदोदितप्रत्ययसमाहारसूचकं लिङ्गमात्रमित्युक्तम्। इदं चाङ्गावबद्धोपासनानां नित्यत्वपूर्वपक्षोद्बलकतया तत्रोक्तम्।

अत्र विशिष्टाद्वैतिनो वदन्ति—दुरुद्गीतपदं न स्वरवर्णादिभ्रेषपरं अपि तु उपासनारहितोद्गीथगानपरम्। शाङ्करमते वेदनविधिप्रकरणे वेदनहानिप्रयुक्तं दुष्टत्वं तत्परिहारं च प्राप्तं परित्यज्य

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढँ् साम
तस्मादृच्यध्यूढँ् साम गीयत [1]इयमेव साऽग्निरमस्तत्साम ॥ १ ॥

अथेदानीं सर्वफलसम्पत्त्यर्थमुद्गीथस्योपासनान्तरं विधित्स्यते—इयमेव पृथिव्यृक्। ऋचि पृथिवीदृष्टिः कार्या। तथाऽग्निः साम। साम्न्यग्निदृष्टिः। कथं पृथिव्यग्न्योर्ऋक्सामत्वमिति। उच्यते। तदेतत्तदेतदग्न्याख्यं सामैतस्यां पृथिव्यामृच्यध्यूढमधिगतमुपरिभावेन स्थितमित्यर्थः। ऋचीव साम। तस्मादत एव कारणादृच्यध्यूढमेव साम गीयत इदानीमपि सामगैः। यथा च ऋक्सामनी नात्यन्तं भिन्ने अन्योन्यं तथैतौ पृथिव्यग्नी। कथम्, इयमेव पृथिवी सा सामनामार्धशब्दवाच्या। इतरार्धशब्दवाच्योऽग्निरमस्तदेतत्पृथिव्यग्निद्वयं सामैकशब्दाभिधेयत्वमापन्नं साम। तस्मान्नान्योन्यं भिन्नं पृथिव्यग्निद्वयं नित्यसंश्लिष्टमृक्सामनी इव। तस्माच्च पृथिव्यग्न्योर्ऋक्सामत्वमित्यर्थः। सामाक्षरयोः पृथिव्यग्निदृष्टिविधानार्थमियमेव साऽग्निरम इति केचित् ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

पुत्राद्यैश्वर्यैकदेशविषयोपासनानन्तरं ज्योतिष्टोमादावधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवमध्यात्मञ्चोद्गीथोपासनं प्रधानमस्मिन् प्रकरणे विधातुमिष्यते तदङ्गभूतमुपासनं प्रथमं विधीयते—इयमेवेत्यादिना। आधाराधेयभावसाम्येन कर्माङ्गभूतस्तोत्रगतयोः ऋक्सामयोः पृथिव्याग्निदृष्टिमुक्त्वा साम्यान्तरमाह—यथा चेति। स्तोत्रगतयोः ऋक्सामयोः परस्पराव्यभिचारात् सहप्रयोगनियमात् नात्यन्तभेदः। पृथिव्यग्न्योरप्येकशब्दवाच्यत्वात्तथेत्यर्थः। स्त्रीत्वात् साशब्दवाच्या पृथिवी। पुंस्त्वादग्निरमः श्रुतिनिर्देशाद्वा ॥ १ ॥

आनन्दगिरिटीका

इयमेवेत्यादिसन्दर्भस्य तात्पर्यमाह—अथेति। पुत्राद्यैश्वर्यैकदेशविषयोपासनोपदेशानन्तरमवसरे प्राप्ते ज्योतिष्टोमादावधिकृतस्य समग्रैश्वर्यप्राप्त्यर्थमधिदैवाध्यात्मविभागेनोद्गीथविषयमेवापूर्वमुपासनमस्मिन्ग्रन्थे विधातुमिष्टमित्यर्थः। तत्र तदङ्गभूतमुपासनमादौ विदधाति—इयमेवेति। पृथिव्यामृग्दृष्टिरत्र नेष्टा कर्माङ्गस्य संस्कर्तव्यत्वादित्यभिप्रेत्याऽऽह—ऋचीति। ऋचि यथा पृथिवीदृष्टिरनन्तरवाक्ये विहिता तथाग्निः सामेत्यत्राग्निदृष्टिः साम्नि विधीयते पूर्ववदित्याह—तथेति। ऋक्त्वं पृथिव्याः सामत्वं चाग्नेरप्रसिद्धमिति शङ्कते—कथमिति। ऋक्सामत्वसिद्धावित्युत्तरमाह—उच्यत इति। तयोराधाराधेयभावे गमकं दर्शयति—तस्मादिति। ऋचि पृथिवीदृष्टिः साम्नि चाग्निदृष्टिरित्यत्र हेत्वन्तरमाह—यथा चेति। पृथिव्यग्न्योरत्यन्तभेदाभावं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। कर्माङ्गयोः सह प्रयोगादृक्सामयोरन्योन्यमव्यभिचारान्नात्यन्तभेदस्तथा पृथिव्यग्न्योरप्येकशब्दवाच्यत्वान्नात्यन्तं भिन्नतेत्यर्थः। तयोरत्यन्तभेदाभावे फलितमाह—तस्माच्चेति। पृथिवी साशब्दवाच्या स्त्रीत्वादग्निरमः पुंस्त्वादिति द्रष्टव्यम्। पक्षान्तरमुत्थाप्याङ्गीकरोति—सामाक्षरयोरिति ॥ १ ॥

---

स्वरादिभ्रंशपरिहारोक्तिः न युक्ता। अपि च होतृशंसनेन स्वरादिभ्रंशपरिहारो लभ्यते न तूपासनानियमः। तेनास्य पूर्वपक्षोपकारासिद्धिः इति, तन्न। छान्दोग्यप्रथमे प्रस्तोत्रादीनां देवताविज्ञानहीनानामपि स्तोतृत्वमभ्यनुज्ञातं महर्षिणा चाक्रायणेन। तेनैव विज्ञानहीनस्य सुगीतत्वं सिध्यति। अपि च "यदेव विद्यया करोति—तदेव वीर्यवत्तरं भवती"ति पूर्ववाक्येनैव विद्याविहीनस्य वीर्यवत्त्वं सिद्धमेव। अतो दुरुद्गीतत्वमस्मद्भाष्योक्तमेव साधु। पूर्वपक्षोद्धलकत्वं तु लिङ्गमात्रमिति भाष्योक्तेः नानेन लिङ्गमात्रेण पूर्वपक्ष इति सूचितमेव।

अत्र तन्निर्धारणानियमसूत्रेणाङ्गोपासनानामनियमे सिद्धेऽपि तदुपरि शङ्का—अङ्गेषु यथाश्रयभावः इति सूत्रेण। तत्परिहारश्च न वा तत्सहभावाश्रुतेः इति सूत्रेणेति भामत्याद्युक्तं स्मर्तव्यम्।

१. इयमेवर्गग्निः सामेत्यादौ ऋचि पृथिवीदृष्टिः साम्नि अग्निदृष्टिश्च कर्तव्येति आदित्यादिमतयश्चाङ्ग उपपत्तेरित्यधिकरणे निर्णीतम्। कर्माङ्गत्वादुद्गीथादीनां तेषु आदित्यादिमतिभिः संस्क्रियमाणेषु कर्मसमृद्धिः यदेव विद्यया करोति—इत्यादि चोक्तमत्रैव।

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढँ् साम
तस्मादृच्यध्यूढँ् साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥ २ ॥
द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढँ् साम,
तस्मादृच्यध्यूढँ् साम गीयते द्यौरेव साऽऽदित्योऽमस्तत्साम ॥ ३ ॥
नक्षत्राण्येवर्क्चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढँ् साम
तस्मादृच्यध्यूढँ् साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥
अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम
तदेतदेतस्यामृच्यध्यूढँ् साम तस्मादृच्यध्यूढँ् साम गीयते ॥ ५ ॥
अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ [1]य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥

अन्तरिक्षमेवर्ग्वायुः सामेत्यादि पूर्ववत् ॥ २-३ ॥

नक्षत्राणामधिपतिश्चन्द्रमा अतः स साम ॥ ४ ॥

अथ यदेतदादित्यस्य शुक्लं भाः शुक्ला दीप्तिः सैवर्क्। अथ यदादित्ये नीलं परः कृष्णं परोऽतिशयेन काष्ण्यं तत्साम। तद्ध्येकान्तसमाहितदृष्टेर्दृश्यते ॥ ५ ॥

ते एवैते भाः शुक्लकृष्णत्वे सा चामश्च साम। अथ य एषोऽन्तरादित्ये आदित्यस्यान्तर्मध्ये हिरण्मयो हिरण्मय इव हिरण्मयः। न हि सुवर्णविकारत्वं देवस्य सम्भवति। ऋक्सामगेष्णत्वापहतपाप्मत्वासम्भवात्। न हि

नरेन्द्रपुरीयं टिप्पणम्

इतिकर्तव्यताभूतमुपासनमुक्त्वाऽनन्तरं प्रधानमुपास्यमुपदिशति—य एषोऽन्तरित्यादिना। चाक्षुषे च चक्षुषि उपास्ये सुवर्णविकारत्वस्याग्रहणात् गौण एव हिरण्मयशब्दो व्याख्येय इत्यर्थः ॥ ६ ॥

आनन्दगिरिटीका

कथं पुनर्नक्षत्रपर्याये तदेतदेतस्यामित्यादिवाक्यं न हि नक्षत्रेषु चन्द्रमसः स्थितिरत आह—नक्षत्राणामिति। नक्षत्राधिपत्यात्तदुपरिभावेन चन्द्रमसः स्थितेरित्यतःशब्दार्थः। नक्षत्रसहितं चन्द्रमसं परामष्टुं सशब्दः ॥ ४ ॥

अङ्गोपासनानि कानिचिदुक्त्वा तादृगेवोपासनान्तरमाह—अथेति। आदित्यस्य मण्डलात्मनो यद्रूपं शुक्लं दृश्यते ऋचि तद्दृष्टिः कर्तव्येत्यर्थः। तदेव रूपं विशिनष्टि—भा इति। तामेव व्याचष्टे—शुक्ला दीप्तिरिति। ऋचि यथा पूर्वोक्तरूपदृष्टिस्तथा साम्नि वक्ष्यमाणरूपदृष्टिरनुष्ठेयेत्याह—अथेति। नन्वादित्ये शौक्ल्यवदनतिशयं काष्ण्यं नास्माभिरनुभूयते तत्राऽऽह—तद्धीति। एकान्तेन समाहिता शास्त्रसंस्कृता यस्य दृष्टिस्तस्यादित्ये निरतिशयं काष्ण्यं दृश्यते तथा च तद्दृष्टिः साम्नि श्लिष्टेत्यर्थः ॥ ५ ॥

अथ यदेवैतदित्यादेस्तात्पर्यमाह—ते एवेति। अङ्गोपासनानि समाप्यानन्तरमाधिदैविकीं प्रधानोपासनां विवक्षुरुपास्यस्वरूपमुपन्यस्यति—अथेत्यादिना। किमिति हिरण्मयपदमुपमार्थं व्याख्यायते हिरण्यविकारत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्याऽऽह—न हीति। अपहतपाप्मत्वासम्भवं साधयति—न हीत्यादिना। पाप्मादीत्यादि-

१. अथ य एषोऽन्तरादित्य इत्यादि आधिदैविकोपासनाविधानार्थं उपास्यस्वरूपनिरूपणम्। इयमेवर्गित्यादि तु अङ्गोपासनमिति।

आदित्यान्तर्गतः पुरुषः "नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतय" इति यजुर्वेदसम्वादात् परमेश्वर इत्याहुः। अन्तस्तद्धर्मोपदेशात् इत्यधिकरणे रूपवत्त्व साधारत्वमर्यादावदैश्वर्यलिङ्गैः आदित्यान्तरुपास्यः पुरुषः जीव इति पूर्वपक्षं प्रापय्य सर्वपाप्मोदयलिङ्गात् परमात्मेति सिद्धान्तितम्।

**तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्योदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ७ ॥**

सौवर्णेऽचेतने पाप्मादिप्राप्तिरस्ति येन प्रतिषिध्येत। चाक्षुषे चाग्रहणात्। अतो लुप्तोपम एव हिरण्मयशब्दो ज्योतिर्मय इत्यर्थः। उत्तरेष्वपि समाना योजना। पुरुषः पुरि शयनात्पूरयति वा स्वेनाऽऽत्मना जगदिति। दृश्यते निवृत्तचक्षुर्भिः समाहितचेतोभिर्ब्रह्मचर्यादिसाधनापेक्षम्। तेजस्विनोऽपि श्मश्रुकेशादयः कृष्णाः स्युरित्यतो विशिनष्टि—हिरण्यश्मश्रुर्हिरण्यकेश इति। ज्योतिर्मयान्येवास्य श्मश्रूणि केशाश्चेत्यर्थः। आप्रणखात्प्रणखो नखाग्रं नखाग्रेण सह सर्वः सुवर्ण इव भारूप इत्यर्थः ॥ ६ ॥

तस्यैवं सर्वतः सुवर्णवर्णस्याप्यक्ष्णोर्विशेषः। कथं? तस्य यथा कपेर्मर्कटस्याऽऽसः [1]कप्यासः। आसेरुपवेशनार्थस्य करणे घञ्। कपिपृष्ठान्तो येनोपविशति। कप्यास इव पुण्डरीकमत्यन्ततेजस्व्येवमस्य देवस्याक्षिणी। उपमितोपमानत्वान्न हीनोपमा। तस्यैवंगुणविशिष्टस्य गौणमिदं नामोदिति। कथं गौणत्वम्। स एष देवः सर्वेभ्यः पाप्मभ्यः पाप्मना सह तत्कार्येभ्य इत्यर्थः। य आत्माऽपहतपाप्मेत्यादि वक्ष्यति। उदित उद् इत उद्गत इत्यर्थः।

नरेन्द्रपुरीयं टिप्पणम्

उपास्यरूपमुक्त्वा नामोपदिशति—तस्यैवमिति ॥ ७ ॥

आनन्दगिरिटीका

पदं तत्कार्यसंग्रहार्थम्। किञ्च चक्षुष्युपास्ये पुरुषे सुवर्णविकारत्वस्याग्रहणाद्गौणमेव हिरण्मयपदमित्याह—चाक्षुषे चेति। न च तत्राप्यातिदेशिकं तद्ग्रहणमुक्तसामगेष्णत्वादिना तादृशेन विरोधात्तस्माद्गौणमेव हिरण्मयपदमित्युपसंहरति—अत इति। हिरण्यश्मश्रुरित्यादिविशेषणेष्वपि तुल्यं गौणत्वमित्याह—उत्तरेष्वपीति। नन्वादित्यादिमण्डले पुरुषो नास्माभिर्दृश्यते तत्राऽऽह—निवृत्तचक्षुर्भिरिति। विशिष्टाधिकारिणामादित्यपुरुषदर्शनमुपपादयति—ब्रह्मचर्यादीति ॥ ६ ॥

सर्व एव सुवर्ण इति विशेषणादक्ष्णोरपि सुवर्णत्वे प्राप्ते प्रत्याह—तस्येति। विशेषमेव प्रश्नपूर्वकं विशदयति—कथमित्यादिना। यथा कप्यासवद्व्यवस्थितं पुण्डरीकं तथा तस्याक्षिणी इति योजना। आसशब्दनिष्पत्तिप्रकारं सूचयति—आसेरिति। घञन्तस्य शब्दस्य विवक्षितमर्थं कथयति—कपीति। तस्य करणत्वं स्फुटयति—येनेति। कपिः स कपिपृष्ठान्तः कप्यास इति शेषः। पदार्थमुक्त्वा वाक्यार्थमाह—कप्यास इवेति। निहीनोपमया देवस्य चक्षुषी व्यपदिशता तयोरपि निहीनत्वं व्यपदिष्टं स्यादित्याशङ्क्याऽऽह—उपमितेति। कप्यासेनोपमितं पुण्डरीकं तेनोपमानेनोपमितत्वाच्चक्षुषोर्न निहीनोपमानप्रयुक्तं निहीनत्वमित्यर्थः। यथोक्तस्याऽऽदित्यपुरुषस्य क्षेत्रज्ञत्वशङ्कां व्यावर्तयितुं नाम व्यपदिशति—तस्येति। नाम्नो गौणत्वं शङ्काद्वारा व्युत्पादयति—कथमित्यादिना। न तस्य सर्वपाप्मोदयस्तत्कार्यभाक्त्वादित्याशङ्क्याऽऽह—पाप्मनेति। आदित्यक्षेत्रज्ञेऽपि सर्वपाप्मोदयः सम्भवति, "न ह वै

---

१. कप्यासपदस्य कपिपृष्ठभाग इत्यर्थः तत्सदृशपद्मसदृशनेत्र इत्यर्थः भगवत्पादैरङ्गीकृतः। उपमितोपमानत्वान्न हीनोपमेति हीनोपमानत्वदोषोऽपि दूरीकृतः।

रामानुजीयास्तु उपमानोपमानस्य हीनत्वेऽपि दोषं पश्यन्तः कं पिबतीति कपिः कमलनालः सूर्यो वा तेनास्यते विकस्यते इति कप्यासः। के अप्यास्ते इति कप्यासः इति वा व्युत्पत्तिरित्याहुः। सर्वत्र विशेषणवैयर्थ्यं, कमलाक्षः कमलनयन इत्यादिप्रयोगेषु तादृशविशेषणं विनापि विवक्षितार्थावगमात्। तावतापि भगवन्नेत्रस्योपमानभूते कमले कपिशब्दस्य अश्लीलार्थस्य प्रयोगेण हीनोपमानस्यानिराकरणाच्च। अपि च योगापेक्षया रूढेरिव रूढिपूर्वकलक्षणायाश्च रूढिसन्निहितत्वात् प्राबल्यमुक्तं पूर्वतन्त्रे उद्गातृचमसमेकस्य श्रुतिसंयोगात् इत्यत्र। इत्थं च कप्यासशब्दस्य तत्सदृशे लक्षणैव युक्ता। अपि च जलपातृत्वं नालस्य सूर्यस्य चौपचारिकं कल्प्यम्। सिद्धान्ते तु पुण्डरीकपदस्य पद्मसामान्यवाचित्वात् रक्ताम्भोजबोधनाय कप्यासपदं सार्थकमित्यस्त्यतिशयः। अधिकं ब्रह्मविद्याभरणेऽन्तस्तद्धर्माधिकरणे द्रष्टव्यम्।

**तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥**

**इति छान्दोग्योपनिषदि प्रथमाध्यायस्य षष्ठः खण्डः**

अतोऽसावुन्नामा। तमेवंगुणसम्पन्नमुन्नामानं यथोक्तेन प्रकारेण यो वेद सोऽप्येवमेवोदेत्युद्गच्छति सर्वेभ्यः पाप्मभ्यः। ह् वा इत्यवधारणार्थौ निपातौ। उदेत्येवेत्यर्थः॥ ७॥

तस्योद्गीथत्वं देवस्याऽऽदित्यादीनामिव विवक्षितत्वादाह—तस्यर्क्च साम च गेष्णौ पृथिव्याद्युक्तलक्षणे पर्वणी। सर्वात्मा हि देवः। परापरलोककामेशितृत्वादुपपद्यते पृथिव्यग्न्यृक्सामगेष्णत्वम्। सर्वयोनित्वाच्च। यत एवमुन्नामा चासावृक्सामगेष्णश्च तस्मादृक्सामगेष्णत्वप्राप्तमुद्गीथत्वमुच्यते परोक्षेण परोक्षप्रियत्वाद्देवस्य तस्मादुद्गीथ इति। तस्मात्त्वेव हेतोरुद्ं गायतीत्युद्गाता। यस्माद्ध्येतस्य यथोक्तस्योन्नाम्नो गाताऽसावतो युक्तोद्गातेति नामप्रसिद्धिरुद्गातुः। स एष देव उन्नामा ये चामुष्मादादित्यात्पराञ्चः परागञ्चनादूर्ध्वा लोकास्तेषां लोकानां चेष्टे न केवलमीशितृत्वमेव चशब्दाद्धारयति च। "स दाधार पृथिवीं द्यामुतेमाम्" इत्यादिमन्त्रवर्णात्। किञ्च देवकामानामीष्ट इत्येतदधिदैवतं देवताविषयं देवस्योद्गीथस्य स्वरूपमुक्तम्॥ ८॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य षष्ठः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

आदित्यादीनामिवेति। यथाऽऽदित्यादीनामुद्गीथे सम्पाद्यत्वमस्मिन् प्रकरणे तथा परमात्मनोऽपि उद्गीथे सम्पाद्यत्वादुद्गीथशब्दवाच्यत्वं विवक्षितमित्यर्थः। इयमेवर्गग्निस्सामेति प्रक्रमात् पृथिव्यरनी व्याख्यातौ। कथं मण्डलस्थस्य परिच्छिन्नस्य तौ गौणौ सम्भवतस्तत्राह—सर्वात्मा हीति। मण्डलाधारत्वमुपासनार्थं न स्वतःपरिच्छिन्नत्वेनेत्यर्थः। अथवा परोक्षेणेति। "साक्षान्नामगोपनेन परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष" इति श्रुतेरित्यर्थः। देवस्योन्नामत्वे उद्गातृत्वप्रसिद्धि प्रमाणयति—तस्मात्त्वेवेति॥ ८॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य षष्ठः खण्डः

### आनन्दगिरिटीका

देवान्पापं गच्छती''ति श्रुतेरित्याशङ्क्य परमात्मविषयवाक्यशेषमुदाहरति—य आत्मेति। उक्तार्थयोगोऽतःशब्दार्थः। उपास्यं परमात्मानमुपन्यस्य तदुपासनमिदानीं सफलमुपन्यस्यति—तमेवंगुणसम्पन्नमिति। यथोक्तेन प्रकारेणोन्नामानमिति सम्बन्धः॥ ७॥

कथं परस्योपासनमित्यपेक्षायामुद्गीथे सम्पाद्येति दर्शयति—तस्येत्यादिना। यथाऽऽदित्यादीनामुद्गीथे सम्पाद्योपासनमत्र विवक्ष्यते तथा परमात्मनोऽपि तत्र सम्पाद्योपासनं विवक्षित्वा सर्वर्क्सामात्मत्वमाह तस्येत्यादिवाक्यमित्यर्थः। मण्डलावच्छिन्नस्य पुरुषस्य कथमृगादिगेष्णत्वमित्याशङ्क्याऽऽह—सर्वात्मेति। परस्य स्वारस्येन सर्वात्मत्वादाध्यानार्थं मण्डलावच्छेदादुपपन्नमृगादिगेष्णत्वमित्यर्थः। तत्रैव हेत्वन्तरमाह—परापरेति। सर्वात्मत्वं साधयति—सर्वयोनित्वादिति। सर्वकारणत्वेन सर्वात्मत्वादृगादिगेष्णत्वं युक्तमेवेत्यर्थः। तस्मादुद्गीथ इति वाक्यं योजयति—यत इति। प्राप्ते सति तस्मादुद्गीथ इत्यनेन वाक्येनोद्गीथत्वं परोक्षेण नाम्ना देवस्योच्यत इति योजना। किमिति परोक्षनाम्ना देवो व्यपदिश्यत इत्याशङ्क्य परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विष इति श्रुत्यन्तरमाश्रित्याऽऽह—परोक्षप्रियत्वादिति। उन्नामत्वे देवस्योद्गातुरुद्गातृत्वप्रसिद्धि प्रमाणयति—तस्मादिति। तच्छब्दार्थं स्फुटयति—यस्मादिति। प्रकृतस्योन्नाम्नो देवस्याऽऽगानादित्यतःशब्दार्थः। उद्गातुरुद्गातेति नामप्रसिद्धिरिति युक्तेति योजना। सर्वपाप्मोदयलिङ्गात्तस्य चान्यत्रासम्भवादादित्यान्तर्गतो देवः परमात्मेत्युक्तं तत्रैव हेत्वन्तरमाह—स एष इति। देवकामानामादित्यादुपरितनलोकेष्वधिष्ठातारो ये देवास्तेषां कामाः काम्यमानफलविशेषास्तेषामिति यावत्। न हि निरङ्कुशं लोककामेशितृत्वं परस्मादन्यत्र सम्भवति। "एष सर्वेश्वर" इति श्रुतेरिति भावः॥८॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य षष्ठः खण्डः

अथाध्यात्मं वागेवर्क्प्राणः साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते वागेव सा प्राणोऽमस्तत्साम ॥ १ ॥

चाक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते चक्षुरेव साऽऽत्माऽमस्तत्साम ॥ २ ॥

श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढँ साम तस्मादृच्यध्यूढँ साम गीयते । अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म [1]तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥ ५ ॥

अथाधुनाऽध्यात्ममुच्यते । वागेवर्क्प्राणः साम । अधरोपरिस्थानत्वसामान्यात् । प्राणो घ्राणमुच्यते सह वायुना, वागेव सा प्राणोऽम इत्यादि पूर्ववत् ॥ १ ॥

चक्षुरेवर्गात्मा साम । आत्मेति च्छायात्मा तत्स्थत्वात्साम ॥ २ ॥

श्रोत्रमेवर्ङ्मनः साम, श्रोत्रस्याधिष्ठातृत्वान्मनसः सामत्वम् ॥ ३ ॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्क् । अथ यन्नीलं परः कृष्णमादित्य इव दृक्शक्त्यधिष्ठानं तत्साम ॥ ४ ॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते । पूर्ववत् । सैवर्गध्यात्मं वागाद्या पृथिव्याद्या चाधिदैवतम् । प्रसिद्धा

### नरेन्द्रपुरीयं टिप्पणम्

अधिदैवतरूपानुचिन्तनमुक्त्वाऽऽध्यात्मिकोपासने अङ्गानुचिन्तनमाह—अथाधुनेत्यादिना । अङ्गानुचिन्तनानन्तरं प्रधानमनुचिन्तनीयमाह—अथ इति । सैवेति विधेयलिङ्गं भजते प्रकरणात् । प्रसिद्धयाच ऋचि वाच्यत्वं गौणं

### आनन्दगिरिटीका

आधिदैविकोपास्त्यानन्तर्यमथशब्दार्थः । ऋचि वाग्दृष्टिः साम्नि प्राणदृष्टिश्च कर्तव्येत्यत्र हेतुमाह—अधरेति । कथमृक्सामयोरिव वाक्प्राणयोरधरोपरिस्थानत्वं तत्राऽऽह—प्राण इति । स्थानमात्रत्वं व्यावर्तयति—सहेति ॥ १ ॥

भोक्तारं व्यावर्तयति—आत्मेति । छायात्मनः सामत्वे हेतुमाह—तत्स्थत्वादिति । चक्षुषि च्छायात्मनः स्थितत्वादृचि सामवदित्यर्थः ॥ २ ॥

आध्यात्मिकानि कानिचिदङ्गोपासनान्युक्त्वाऽनन्तरं प्रकारान्तरेणाङ्गोपासनमेव किञ्चिदुपदिशति—अथेति । अक्ष्णो यदेतद्रूपं शुक्लं दृश्यते ऋचि तद्दृष्टिः कर्तव्येत्यर्थः । तदेव रूपं विशिनष्टि—भा इति । ऋचि पूर्वोक्तरूपदृष्टिवद्वक्ष्यमाणरूपदृष्टिरपि साम्नि कर्तव्येत्याह—अथेति । यथाऽऽदित्यमण्डले समधिगम्यमतिकृष्णं रूपमुक्तं तथा चक्षुष्यपि दृक्शक्तेरधिष्ठानं तादृग्रूपमुपलभ्यते तद्दृष्टिः साम्नि कर्तव्येत्यर्थः ॥ ४ ॥

आध्यात्मिकप्रधानोपासनशेषत्वेनाङ्गोपासनान्युक्त्वाऽनन्तरं प्रधानोपासनाविषयं दर्शयति—अथेति । दृश्यत इति प्रयोगाच्छायात्माऽयमित्याशङ्क्याऽऽह—पूर्ववदिति । यथा पूर्वस्मिन्नाधिदैविके वाक्ये समाहितचेतोभिरादित्य-

---

१. तस्यैतस्य तदेव रूपं यदमुष्यरूपं—इत्यादिना आदित्यपुरुषगतहिरण्यश्मश्रुत्वादेः अक्षिपुरुषे अतिदेशः । अतिदेशो नाम येषां पदार्थानां यत्सम्बन्धितया विधानं तेषामेव तदन्यसम्बन्धित्वप्रतिपादकं वचनम् । देशमतिक्रान्तः अतिदेशः स्वदेशमतिक्रम्यान्यत्र सम्बन्धबोधकं वचनमित्यर्थः ।

च ऋक्पादबद्धाक्षरात्मिका । तथा साम । उक्थसाहचर्याद्वा स्तोत्रं सामोक्थं शस्त्रम् । उक्थादन्यत् तथा यजुः स्वाहास्वधावषडादि सर्वमेव वाग्यजुस्तत्स एव । सर्वात्मकत्वात्सर्वयोनित्वाच्चेति ह्यवोचाम । ऋगादिप्रकरणात्तद्ब्रह्मेति त्रयो वेदाः । तस्यैतस्य चाक्षुषस्य पुरुषस्य तदेव रूपमतिदिश्यते । किं तद्यदमुष्याऽऽदित्यपुरुषस्य । हिरण्मय इत्यादि यदधिदैवतमुक्तम् । यावमुष्य गेष्णौ पर्वणी तावेवास्यापि चाक्षुषस्य गेष्णौ । यच्चामुष्य नामोदित्युद्गीथ इति च तदेवास्य नाम । स्थानभेदाद्रूपगुणनामातिदेशादीशितृत्वविषयभेदव्यपदेशाच्चाऽऽदित्यचाक्षुषयोर्भेद इति चेत् । न । [१]अमुनाऽनेनैवेत्येकस्योभयात्मप्राप्त्यनुपपत्तेः । द्विधाभावेनोपपद्यत इति चेत् । वक्ष्यति हि स एकधा भवति त्रिधा भवतीत्यादि । न । चेतनस्यैकस्य निरवयवत्वाद्द्विधाभावानुपपत्तेः । तस्मादध्यात्माधिदैवतयोरेकत्वमेव । यत्तु रूपाद्यतिदेशो भेदकारणमवोचो न तद्भेदावगमाय । किं तर्हि स्थानभेदाद्भेदाशङ्का मा भूदित्येवमर्थम् ॥ ५ ॥

### नरेन्द्रपुरीयं टिप्पणम्

मुख्यया वृत्त्या चक्षुः पुरुष एवोच्यते सर्वात्मविवक्षया । तथा सामगौणं मुख्यत्वं च पुरुष एवेत्यर्थः । उक्थं शस्त्रं अप्रगीतं; स्तोत्रं प्रगीतम् । त्रयो वेदा इति । ब्राह्मणभाग इत्यर्थः रूपाद्यतिदेशस्य तात्पर्यं दर्शयितुं चोद्यमुद्भाव्य परिहरति—स्थानभेदादित्यादिना । अमुनाऽऽदित्येन पराचो लोकानाप्नोत्यनेन चाक्षुषपुरुषेण पातालपर्यन्तानाप्नोतीति फलाभिधानं न स्यादेकस्य द्वाभ्यामभेदायोगादतो न वास्तवोऽत्र भेदो विवक्षित इत्यर्थः । योगमाहात्म्येन यदनेकधाभावगमनं तदप्येकमनोऽनुविधाय्यनेकशरीराधिष्ठातृत्वं न त्वात्मन एव भेद इत्यर्थः ।

आदित्यमवधिं कृत्वा पराञ्चोऽर्वाञ्च इत्येतौ शब्दौ भास्करेण व्याख्यातौ । तदसत् । सन्निहितालम्बिन्याः श्रुतेर्विप्रकृष्टार्थत्वप्रसङ्गात् । सर्वेश्वरस्याप्यैश्वर्यमर्यादाकरणं स्थानभेदादनुचितं तनुभेदप्रदर्शनार्थं द्रष्टव्यम् । यस्मात्परमात्मैव सर्वोपाधिषु प्रविष्टो द्रष्टा ॥ १-५ ॥

### आनन्दगिरिटीका

पुरुषस्य दृश्यत्वमुक्तं तथा चाक्षुषपुरुषस्यापि विशिष्टाधिकारिभिरेव दृश्यत्वमेष्टव्यमित्यर्थः । छायात्मपक्षे वाक्यशेषविरोधमभिप्रेत्याऽऽह—सैवेति । येयमृग्यथा व्याख्याता सा सर्वा स एव पुरुष इत्यर्थः । ऋच्युक्तं न्यायं साम्न्यतिदिशति—तथेति । यत्किञ्चित्साम तत्सर्वं स एव पुरुष इत्यर्थः । ऋक्सामशब्दयोरर्थान्तरमाह—उक्थेति । ऋक्साम यद्वदिति दृष्टान्तस्तथाशब्दार्थः । कथमृगाद्यात्मत्वं परस्येत्याशङ्क्याऽऽह—सर्वात्मकत्वादिति । ब्रह्मशब्दस्य परमात्मविषयत्वं व्यावर्तयन्प्रकरणादित्युक्तन्यायेन त्रयो वेदाः स एव पुरुष इत्युपसंहारः । छायात्मनो जडस्य व्यावृत्त्यर्थं रूपातिदेशं दर्शयति—तस्येति । किं तदादित्यपुरुषस्य रूपमित्यपेक्षायामाह—हिरण्मय इत्यादीति । इतश्च नायं छायात्मेत्याह—यावमुष्येति । नामातिदेशोऽप्येतमर्थमुपोद्बलयतीत्याह—यच्चेति । आदित्यचाक्षुषयोरुपास्ययोर्भेदादुपासनाऽपि भिन्नेति शङ्कते—स्थानेति । आदित्यमण्डलं चक्षुश्चेति स्थाने भिद्येते रूपं हिरण्मयो हिरण्यश्मश्रुरित्यादि ऋगादिगेष्णत्वादिर्गुण उदित्यादि नाम तेषामतिदेशस्तस्यैतस्य तदेव रूपमित्यादिः । ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् । ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेत्यध्यात्मम् इत्ययमीशितृत्वविषयो भेदव्यपदेशः । अतश्चैतयोर्भेदादुपासनमपि भिन्नमेवेत्यर्थः । नोपास्यभेदादुपासनाभेदोऽस्तीति दूषयति—नेति । उपासकस्तावदमुनाऽऽदित्यात्मना पराचो लोकान्देवकामांश्चाऽऽप्नोति । स एवानेन चाक्षुषरूपेणार्वाचीनलोकान्मनुष्यकामांश्चाऽऽप्नोतीति श्रूयते । न चैकस्य वस्तुतो भिन्नोभयरूपत्वप्राप्तिरुपपद्यते । तस्माद्भेदकल्पना न युक्तेत्यर्थः । उभयात्मकत्वमेकस्यापि विद्यामाहात्म्याद्द्वैधभावोपगमादुपपन्नमिति शङ्कते—द्विधेति । एकस्य विद्यावशादनेकरूपत्वे वाक्यशेषं प्रमाणयति—वक्ष्यति हीति । एकस्यानेकशरीरपरिग्रहेऽपि न स्वरूपभेदोपपत्तिरिति परिहरति—न चेतनस्येति । एकत्वसाधकसद्भावस्तच्छब्दार्थः । परोक्तं भेदकमनुवदति—यत्त्विति । भेदकारणमित्यस्मादुपरिष्टादितिशब्दो द्रष्टव्यः । दूषयति—न तदित्यादिना । तदित्यतिदिश्यमानं रूपाद्युक्तम् ॥ ५ ॥

१. अमुनेति—उपासनफलप्राप्तिवचने सोऽमुनैव ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति । सोऽमुनैव ये चैतस्मादर्वाञ्च इत्युभयत्रापि एक एव पुरुषः अनुकृष्यते अतो नोपास्यभेद इत्यर्थः ।

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति
तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ॥ ६ ॥
अथ य एतदेवं विद्वान्साम गायत्युभौ स गायति सोऽमुनैव
स एष ये चामुष्मात्पराञ्चो लोकास्ताँ्श्चाऽऽप्नोति देवकामाँ्श्च ॥ ७ ॥
अथाऽनेनैव ये चैतस्मादर्वाञ्चो लोकास्ताँ्श्चाऽऽप्नोति
मनुष्यकामाँ्श्च तस्मादु हैवंविदुद्गाता ब्रूयात् ॥ ८ ॥
कं ते काममागायानीत्येष ह्येव कामागानस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ९ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य सप्तमः खण्डः

स एष चाक्षुषः पुरुषो ये चैतस्मादाध्यात्मिकादात्मनोऽर्वाञ्चोऽर्वाग्गता लोकास्तेषां चेष्टे मनुष्यसम्बन्धिनां च कामानाम्। तत्तस्माद्य इमे वीणायां गायन्ति गायकास्त एतमेव गायन्ति। यस्मादीश्वरं गायन्ति तस्मात्ते धनसनयो धनलाभयुक्ता धनवन्त इत्यर्थः ॥ ६ ॥

अथ य एतदेवं विद्वान्यथोक्तं देवमुद्गीथं विद्वान्साम गायत्युभौ स गायति चाक्षुषमादित्यं च। तस्यैवंविदः फलमुच्यते—सोऽमुनैवाऽऽदित्येन स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाऽऽप्नोति आदित्यान्तर्गतदेवो भूत्वेत्यर्थो देवकामांश्च ॥७॥

अथानेनैव चाक्षुषेणैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाऽऽप्नोति मनुष्यकामांश्च चाक्षुषो भूत्वेत्यर्थः। तस्मादु हैवंविदुद्गाता ब्रूयाद्यजमानं कमिष्टं ते तव काममागायानीति। एष हि यस्मादुद्गाता कामागानस्योद्गानेन कामं सम्पादयितुमीष्टे समर्थ इत्यर्थः। कोऽसौ? य एवं विद्वान्साम गायति साम गायति। द्विरुक्तिरुपासनसमाप्त्यर्था ॥८-९॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य सप्तमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

तस्माद्ये लौकिकं दातारं गायन्ति तेऽपि परमात्मानमेव गायन्तीति योजना ॥ ६ ॥

उपास्यस्वरूपं प्रदर्श्योपासनविधिं प्रक्रमते—य एतदेवं विद्वानित्यादिना। उभौ स गायतीत्येकेनाख्यातेनाभिधानात् समुच्चयविधिर्विवक्षितः। योऽग्निष्टोमाद्यधिकारी यजमानो ब्रह्मार्पणन्यायेन कर्म करोति तस्यैवाङ्गावबद्धोपासनफलं भवतीति। किन्तु स एवोद्गातारं प्रेरयति मदर्थमित्थं कुर्विति। स चाधिकद्रव्यलिप्सुस्तथैवानुतिष्ठति। पाठक्रमेण साङ्गमधिदैवतं प्रथममुपास्ते पश्चात् साङ्गमाध्यात्मिकं चिन्तयति यस्मादेवं तस्मात् समर्थोऽसौ यजमानं प्रति वक्तुमित्याह—यस्मादुद्गातेति ॥ ७-८-९ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य सप्तमः खण्डः

आनन्दगिरिटीका

आधिदैविकपुरुषवदाध्यात्मिकेऽपि पुरुषे निरतिशयैश्वर्यश्रवणाच्च तयोरैक्यमित्याह—स एष इति। तयोर्भेदाभावे हेत्वन्तरमाह—तत्तस्मादिति। ईश्वरस्यैव प्रागुक्तहेतोर्गानविषयत्वयोग्यत्वादित्यर्थः। तच्छब्दार्थं स्फुटयति—यस्मादिति ॥ ६ ॥

स्थानभेदेन यथोक्तोपासनवतः फलोक्त्यर्थं पातनिकां करोति—अथेति। एतत्सामेति सम्बन्धः। एवं विद्वानित्येतदेव विभजते—यथोक्तमिति। विद्वानित्यस्मादुपरिष्टादथशब्दः सम्बध्यते। सोऽमुनैव लोकान्कामांश्चाऽऽप्नोतीति सम्बन्धः। आप्तिप्रकारं विवृणोति—स एष इति। उपास्यवदुपासकस्यापि कुतो निरतिशयमैश्वर्यं न हि द्वयोर्निरङ्कुशमैश्वर्यं युक्तमित्याशङ्क्याऽऽह—आदित्येति। अमुनैवाऽऽदित्येनेत्युक्तमेवात्र व्यक्तीकृतम् ॥ ७ ॥

अथशब्दस्तथापर्यायः। चाक्षुषो भूत्वाऽनेनैव चाक्षुषेणैवेति सम्बन्धः। उक्तफलस्य याजमानत्वं दर्शयति—तस्मादिति। तच्छब्दार्थमेव कथयति—एष हीति। उद्गातारं विशिनष्टि—कोऽसाविति। उद्गीथे परस्य सम्पाद्योपासनं विभागेनोक्तमुपसंहरति—द्विरुक्तिरिति ॥ ८-९ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य सप्तमः खण्डः

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो
जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥ १ ॥
तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच
भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचँ श्रोष्यामीति ॥ २ ॥

अनेकधोपास्यत्वादक्षरस्य प्रकारान्तरेण परोवरीयस्त्वगुणफलमुपासनान्तरमानिनाय। इतिहासस्तु सुखावबोधनार्थः। त्रयस्त्रिसंख्याकाः। ह, इत्यैतिह्यार्थः। उद्गीथ उद्गीथज्ञानं प्रति कुशला निपुणा बभूवुः। कस्मिंश्चिद्देशे काले च निमित्ते वा समेतानामित्यभिप्रायः। न हि सर्वस्मिञ्जगति त्रयाणामेव कौशलमुद्गीथादिविज्ञाने। श्रूयन्ते ह्युषस्तिजानश्रुतिकैकेयप्रभृतयः सर्वज्ञकल्पाः। के ते त्रय इत्याह—शिलको नामतः शलावतोऽपत्यं शालावत्यः। चिकितायनस्यापत्यं चैकितायनः। दल्भगोत्रो दाल्भ्यो द्व्यामुष्यायणो वा। प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरित्येते त्रयस्ते होचुरन्योन्यमुद्गीथे वै कुशला निपुणा इति प्रसिद्धाः स्मः। अतो हन्त यद्यनुमतिर्भवतामुद्गीथ उद्गीथज्ञाननिमित्तां कथां विचारणां पक्षप्रतिपक्षोपन्यासेन वदामो वादं कुर्म इत्यर्थः। तथा च तद्विद्यसंवादे विपरीतग्रहणनाशोऽपूर्वविज्ञानोपजनः संशयनिवृत्तिश्चेति। अतस्तद्विद्यसंयोगः कर्तव्य इति चेतिहासप्रयोजनम्। दृश्यते हि शिलकादीनाम् ॥ १ ॥

तथेत्युक्त्वा ते समुपविविशुर्होपविष्टवन्तः किल। तत्र राज्ञः प्रागल्भ्योपपत्तेः स ह प्रवाहणो जैवलिरुवाचेतरौ "भगवन्तौ पूजावन्तावग्रे पूर्वं वदताम्"। ब्राह्मणयोरिति लिङ्गाद्राजाऽसौ। युवयोर्ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामि। अर्थरहितामित्यपरे वाचमिति विशेषणात् ॥ २ ॥

नरेन्द्रपुरीयं टिप्पणम्

आध्यात्माधिदैवतस्थानभेदाविच्छिन्नपरमात्मदृष्ट्योद्गीथोपासनमुक्त्वाऽनन्तरं स्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं परोवरीयस्त्वप्राप्तिफलकमानीतवान् वेदः, इति प्रकरणतात्पर्यकथनम्। इतिहासः आख्यायिका। इतिहपूर्वं वृत्तमित्यस्य भाव ऐतिह्यम्। अमुष्य प्रसिद्धस्यापत्यमामुष्यायणः, द्वयोरामुष्यायणो द्व्यामुष्यायणस्तव मम चायमिति परिभाषया धर्मतः परक्षेत्रे जनितः "अपुत्रेण परक्षेत्रे नियोगोत्पादितःसुतः। उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मतः॥" इति स्मृतेः। न जारजसुतः इत्यर्थः। किमर्थो वादारम्भ इत्यत आह—तथा चेति। सा विद्या एषां ते तद्विद्याः तैस्सम्वादे प्रत्यक्षं फलमित्यर्थः ॥ १-३ ॥

आनन्दगिरिटीका

अध्यात्माधिदैवतस्थानभेदावच्छिन्नपरमात्मदृष्ट्योद्गीथोपासनमखिलपाप्मापगमफलमुक्तम्। सम्प्रति स्थानभेदावच्छेदं हित्वा परोवरीयस्त्वगुणकपरमात्मदृष्ट्योद्गीथोपासनं परोवरीयस्त्वप्राप्तिफलकमानीतवानाम्नाय इति प्रकरणतात्पर्यमाह—अनेकधेति। तर्हि विवक्षितमुपासनमेवोच्यतां किमाख्यायिकयेत्याशङ्क्याऽऽह—इतिहासस्त्विति। इतिहासः पूर्ववृत्तम्। इतिह(स्य) भाव ऐतिह्यम्। समेतानामिति निर्धारणे षष्ठी। ननु सर्वस्मिञ्जगति त्रयाणामेवोद्गीथादिज्ञाने कौशलमिति किं नोच्यते किमिति तेषां मध्ये त्रयाणामेव तन्नैपुण्यं प्रतिज्ञायते तत्राऽऽह—न हीति। अमुष्य प्रसिद्धस्यापत्यमामुष्यायणो द्वयोरामुष्यायणो द्व्यामुष्यायणः। तव मम चायमिति परिभाषया धर्मतः परिगृहीत इति यावत्। किमर्थो वादारम्भ इत्यत आह—तथा चेति। प्रवृत्ते वादे तस्मिन्विवक्षितेऽर्थे विद्या येषां तैः सह सम्वादे दृष्टमेव फलमित्यर्थः। इतिशब्दस्य प्रयोजनमित्यनेन सम्बन्धः। वादारम्भस्य दृष्टफलत्वे फलितमाह—अत इति। इतिहासस्तु सुखावबोधार्थं इत्युक्तेन समुच्चयार्थश्चकारः। कथं यथोक्तं फलं दृष्टमित्याशङ्क्याऽऽह—दृश्यते हीति। शिलकादीनां तद्विद्ययोगे विपरीतधीध्वंसादिकं फलमिति शेषः ॥ १ ॥

तत्रेति निर्धारणार्था सप्तमी। राज्ञः प्रागल्भ्योपपत्तेरित्ययुक्तं तस्य राजत्वे हेत्वभावादित्याशङ्क्याऽऽह—ब्राह्मणयोरितीति। पक्षान्तरं विशेषणसामर्थ्यादुत्थाप्याङ्गीकरोति—अर्थेति ॥ २ ॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥ ३ ॥ का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥ ४ ॥ अपां का गतिरित्यसौ लोक इति होवाचामुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकँ सामाभिसंस्थापयामः स्वर्गसँ स्तावँ हि सामेति ॥ ५ ॥ तँ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥

उक्तयोः स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच—"हन्त यद्यनुमंस्यसे त्वा त्वां पृच्छानी"त्युक्त इतरः "पृच्छे"ति होवाच ॥ ३ ॥

लब्धानुमतिराह—का साम्नः, प्रकृतत्वादुद्गीथस्य। उद्गीथो ह्यत्रोपास्यत्वेन प्रकृतः। "परोवरीयांसमुद्गीथम्" इति च वक्ष्यति। गतिराश्रयः परायणमित्येतत्। एवं पृष्टो दाल्भ्य उवाच—स्वर इति। स्वरात्मकत्वात्साम्नः। यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवतीति युक्तं मृदाश्रय इव घटादिः। स्वरस्य का गतिरिति, प्राण इति होवाच। प्राणनिष्पाद्यो हि स्वरस्तस्मात्स्वरस्य प्राणो गतिः। प्राणस्य का गतिरित्यन्नमिति होवाच। अन्नावष्टम्भो हि प्राणः। "शुष्यति वै प्राण ऋतेऽन्नात्" इति हि श्रुतेः। "अन्नं दाम" इति च। अन्नस्य का गतिरित्याप इति होवाच। अप्सम्भवत्वादन्नस्य ॥ ४ ॥

अपां का गतिरित्यसौ लोक इति। अमुष्माल्लोकाद्वृष्टिः सम्भवति। अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्य उवाच—स्वर्गममुं लोकमतीत्याश्रयान्तरं साम न नयेत्कश्चिदिति होवाचाऽऽह। अतो वयमपि स्वर्गं लोकं सामाभिसंस्थापयामः। स्वर्गलोकप्रतिष्ठं साम जानीम इत्यर्थः। स्वर्गसंस्तावं स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम स्वर्गसंस्तावं हि यस्मात् 'स्वर्गो वै लोकः सामवेद" इति श्रुतिः ॥ ५ ॥

तमितरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच—अप्रतिष्ठितमसंस्थितं परोवरीयस्त्वेना-

नरेन्द्रपुरीयं टिप्पणम्

स्वरो ध्वनिभेदः तद्व्यङ्ग्यतया तदा श्रूयते तत्तादात्म्यमित्यर्थः। वत्सस्थानीयस्य प्राणस्यान्नं दाम बन्धनमित्यर्थः ॥ ४ ॥

आनन्दगिरिटीका

राज्ञा यथोक्तेन प्रकारेणोक्तयोर्ब्राह्मणयोर्मध्ये शालावत्यो दाल्भ्यं प्रत्युवाचेति सम्बन्धः ॥ ३ ॥

साम्नो गतिरित्यन्वयः। सामशब्दार्थमाह—प्रकृतत्वादिति। तस्य पूर्वोत्तरग्रन्थयोः प्रकृतत्वं प्रकटयति—उद्गीथो हीति। गतिशब्दस्य क्रियाविषयत्वं व्यावर्तयति—आश्रय इति। औपचारिकमाश्रयं निरस्यति—परायणमित्येतदिति। स्वरो ध्वनिभेदः कथमुद्गीथस्य गतिरित्याशङ्क्याऽऽह—स्वरात्मकत्वादिति। तद्व्यञ्जकतया तदाश्रयत्वेन तत्तादात्म्याद्भवति स्वरस्तस्य गतिरित्यर्थः। साम्नः स्वरात्मकत्वेऽपि कथं तद्गतित्वमित्याशङ्क्य दृष्टान्तेन परिहरति—यो यदात्मक इति। प्राणस्यान्नावष्टम्भत्वे वाजसनेयश्रुतिं प्रमाणयति—शुष्यतीति। वत्सस्थानीयस्य प्राणस्यान्नं दाम बन्धनमिति च श्रुतेरित्यर्थः। ता अन्नमसृजन्तेति श्रुतेरन्नस्याप्सम्भवत्वं द्रष्टव्यम् ॥ ४ ॥

कथमपामसौ लोको गतिस्तत्राऽऽह—अमुष्मादिति। इति पृष्टो दाल्भ्य उवाच हेति सम्बन्धः। तत्र च्छन्दसि कालनियमाभावमभिप्रेत्य क्रियापदं व्याकरोति—आहेति। यद्यपि परो नास्याऽऽश्रयान्तरं प्रतिपद्यते तथाऽपि त्वया तद्वाच्यमेवेत्याशङ्क्याऽऽह—अत इति। अतःशब्दार्थमेव स्फोरयति—स्वर्गेति। तस्मात्स्वर्गलोकप्रतिष्ठं सामेति पूर्वेण सम्बन्धः। स्वर्गसंस्तावं सामेत्यत्र प्रमाणमाह—स्वर्ग इति ॥ ५ ॥

उपदेशपारम्पर्यमागमः। यत्कृतकं तदनित्यमिति स्वर्गस्यान्तवत्त्वान्न परायणत्वं सम्भवतीत्याशयेनाऽऽह—किलेति चेति। यथोक्तं न्यायं सूचयतीति शेषः। न्यायागमाभ्यामप्रतिष्ठितं ते सामेत्युपसंहरति—दाल्भ्येति।

**हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकँ᳭ सामाभिसँ᳭स्थापयामः प्रतिष्ठासँ᳭स्तावँ᳭ हि सामेति ॥ ७ ॥**

सम्प्राप्तगति[1] सामेत्यर्थः। वा इत्यागमं स्मारयति किलेति च, दाल्भ्य ते तव साम। यस्त्वसहिष्णुः सामविदेतर्ह्येतस्मिन्काले ब्रूयात्कश्चिद्विपरीतविज्ञानमप्रतिष्ठितं साम प्रतिष्ठितमित्येवंवादापराधिनं मूर्धा शिरस्ते विपतिष्यति विस्पष्टं पतिष्यतीति। एवमुक्तस्यापराधिनस्तथैव तद्विपतेन्न संशयो न त्वहं ब्रवीमीत्यभिप्रायः[2]।

ननु मूर्धपाताऽर्हं चेदपराधं कृतवानतः परेणानुक्तस्यापि पतेन्मूर्धा; न चेदपराध्युक्तस्यापि नैव पतति। अन्यथाऽकृताभ्यागमः[3] कृतनाशश्च स्याताम्। नैष दोषः। कृतस्य कर्मणः शुभाशुभस्य फलप्राप्तेर्देशकालनिमित्तापेक्षत्वात्। तत्रैवं सति मूर्धपातनिमित्तस्याप्यज्ञानस्य पराभिव्याहारनिमित्तापेक्षत्वमिति ॥ ६ ॥

एवमुक्तो दाल्भ्य आह—हन्ताहमेतद्भगवत्तो वेदानि यत्प्रतिष्ठं सामेत्युक्तः प्रत्युवाच शालावत्यो विद्धीति होवाच। अमुष्य लोकस्य का गतिरिति पृष्टो दाल्भ्येन शालावत्योऽयं लोक इति होवाच। अयं हि लोको यागदान-

### नरेन्द्रपुरीयं टिप्पणम्

आगममुपदेशपारंपर्यम्। यत्कृतकं तदन्तवदित्यन्तवत्त्वात् स्वर्गस्य परायणत्वं न सम्भवतीत्यर्थः। मूर्धपातोपन्यासस्यानर्थक्यमाशङ्क्य परिहरति—नन्वित्यादिना। अपराधस्य मूर्धपातहेतोरपि सहकार्यपेक्षासम्भवादभिव्याहरणं नानर्थकमित्यर्थः ॥ ५-६ ॥

### आनन्दगिरिटीका

स्वर्गप्रतिष्ठितं सामेति ज्ञाने दोषं दर्शयति—यस्त्विति। असहिष्णुर्मिथ्यावचनमसहमानः सन्निति यावत्। एतस्मिन्काले मिथ्यावचनावस्थायामित्यर्थः। विपरीतं विज्ञानं यस्य स तथोक्तस्तं प्रतीति विग्रहः। तदेव विपरीतज्ञानभिनयति—अप्रतिष्ठितमिति। सामाप्रतिष्ठितं प्रतिष्ठितमिति विपरीतज्ञानं प्रति कश्चिद्ब्रूयादिति सम्बन्धः। तदीयवचनमेव दर्शयति—एवमिति। स तथा कथयतु मम तु किं स्यादित्याशङ्क्याऽऽह—एवमुक्तस्येति। तथैव विदुषः शापवाक्यानुसारेणेति यावत्। तदिति शिरोनिरुक्तिः। शापदानाय प्रवृत्तस्त्वयमिति शङ्कां वारयति—नत्विति। मूर्धपातोपन्यासानर्थक्यमाशङ्कते—नन्विति। अपराधाभावेऽपि परोक्तिवशान्मूर्धपाते दोषमाह—अन्यथेति। सति चापराधे परोक्तिवैधुर्यान्मूर्धपाताभावे दोषं कथयति—कृतेति। अपराधस्य मूर्धपातहेतोरपि सहकार्यपेक्षत्वादभिव्याहरणं नानर्थकमित्युत्तरमाह—नैष दोष इति। कर्मणः शुभादेराचरितस्य निमित्तापेक्षया फलहेतुत्वेऽपि प्रकृतेऽपराधिनि कुतो व्याहरणापेक्षेत्याशङ्क्याऽऽह—तत्रेति। तत्र शुभादौ कर्मण्येव निमित्तापेक्षया फलप्रदे सतीत्यर्थः। इति पराभिव्याहरणमर्थवदिति शेषः ॥ ६ ॥

हन्तेत्यादि व्याकरोति—एवमिति। कथमनुष्य लोकस्यैतल्लोकप्रतिष्ठत्वं तदाह—अयं लोक इति। आदि-

---

१. असमाप्तगति—गतिरत्र कारणं सामकारणपरम्पराविश्रान्तिभूमिरत्र वक्तव्यत्वेन प्रस्तुता। स्वर्गस्य तु ज्योतिश्चक्रान्तर्गतत्वेन चलत्वात्। प्रतिष्ठिते स्थिरे साम कारणपरम्परा न परिसमाप्यत इति शालावत्याभिप्रायः। स्वेन पृथिव्याः तथात्वेन वक्ष्यमाणत्वात् "पृथिवी प्रतिष्ठा" "पृथिवी दृढा" "आकाशे पृथिवी प्रतिष्ठिता" इत्यादिना पृथिव्याः चलनराहित्यावगमात् आर्यभटाभिमतः भूभ्रमणवादः पुराणादिविरुद्धत्वात् एतच्छ्रुतिविरुद्धत्वाच्च बाध्यः। अतः एव मत्स्यजिघृक्षुपक्षिशुष्कालाबुफलदृष्टान्तावलम्बनाभ्यां जैनयवनाभ्यां कल्पितौ भूपतनप्लवनवादावपि हेयौ पक्षत्रयेऽपि वियति क्षिप्तपाषाणखण्डादीनां पुनः क्षेत्रप्राप्त्यभावप्रसङ्गाच्च—न्यायरक्षामणिः।

२. न त्वहं तव मूर्धा पततु इति ब्रवीमि तव मत्सखित्वात्।

३. कृतहानं प्रतिष्ठितं सामेति स्वर्गलोकाभिप्रायेण वदता कृतस्य पापस्य हानं फलं विना नाशः। अकृतस्य असम्पादितस्य जीवनस्य अभ्यागमः।

तँ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच ॥ ८ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्याष्टमः खण्डः

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥

होमादिभिरमुं लोकं पुष्यतीति। "इतः प्रदानं देवा उपजीवन्ति" इति हि श्रुतयः। प्रत्यक्षं हि सर्वभूतानां धरणी प्रतिष्ठेति। अतः साम्नोऽप्ययं लोकः प्रतिष्ठैवेति युक्तम्। अस्य लोकस्य का गतिरित्युक्त आह शालावत्यः। न प्रतिष्ठामिमं लोकमतीत्य नयेत्साम कश्चित्। अतो वयं प्रतिष्ठां लोकं सामाभिसंस्थापयामः। यस्मात्प्रतिष्ठासंस्तावं हि प्रतिष्ठात्वेन संस्तुतं सामेत्यर्थः। "इयं वै रथन्तरम्" इति च श्रुतिः[१] ॥ ७ ॥

तमेवमुक्तवन्तं ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य सामेत्यादि पूर्ववत्। ततः शालावत्य आह—हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचेतरोऽनुज्ञात आह ॥ ८ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्याष्टमः खण्डः

अस्य लोकस्य का गतिरिति। आकाश इति होवाच प्रवाहणः। आकाश इति च पर आत्मा "आकाशो

नरेन्द्रपुरीयं टिप्पणम्

इयं पृथिवी रथन्तरमिति रथन्तरशब्दवाच्यस्य सामविशेषस्य पृथिवीत्वेन स्तुतत्वादुद्गीथस्यापि सामत्वाविशेषाद् पृथिव्यात्मत्वं सम्भाव्यत इत्यर्थः ॥ ७-८ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्याष्टमः खण्डः

विभुत्वादिगुणसाम्यादाकाशशब्दः परमात्मनि प्रयुक्तः कार्यवाचकेन वा कारणं लक्ष्यते सामीप्यादिति

आनन्दगिरिटीका

शब्दः श्राद्धादिसंग्रहार्थः। तत्रैव श्रुतिं प्रमाणयति—इतीति। अस्माल्लोकात्प्रदीयमानं चरुपुरोडाशाद्यग्निद्वारोपजीवन्ति देवा इति श्रौती प्रसिद्धिरित्यर्थः। भवतु परं लोकं प्रति प्रतिष्ठात्वमस्य लोकस्य तथाऽपि कथमयं लोकः साम्नः प्रतिष्ठेत्याशङ्क्याऽऽह—प्रत्यक्षं हीति। पृथिव्याः सर्वाणि भूतानि प्रति प्रतिष्ठात्वे फलितमाह—अत इति। साम्नोऽपि सर्वान्तर्भावादित्यर्थः। तथाऽपि प्रतिष्ठान्तरं त्वया वाच्यमित्याशङ्क्याऽऽह—अतो वयमिति। यस्मादेतल्लोकप्रतिष्ठात्वेन संस्तुतं साम तस्मादिदं साम प्रत्येतमेव लोकं प्रतिष्ठां जानीम इति योजना। कथं प्रतिष्ठात्वेन सामत्वाविशेषात्पृथिव्या साम संस्तुतमित्याशङ्क्याऽऽह—इयमिति। इयं वै रथन्तरमिति रथन्तरशब्दवाच्यस्य सामविशेषस्य पृथिवीत्वेन स्तुतत्वादुद्गीथस्यापि सामत्वाविशेषात्पृथिव्यात्मत्वं सम्भाव्यत इत्यर्थः ॥ ७ ॥

हन्ताहमेतदित्यत्रानन्तं सामैतदित्युच्यते ॥ ८ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्याष्टमः खण्डः

[२]आकाशशब्दस्य भूताकाशविषयत्वं व्यावर्त्य परमात्मविषयत्वं वाक्यशेषवशाद्दर्शयति—आकाश इति

---

१. तै० सं० ३-१-२१।

२. आकाशपदप्रतिपाद्यत्वेन श्रुतितात्पर्यविषयः परमात्मा न तु भूताकाशः तल्लिङ्गात् परमात्मत्वाव्यभिचारिणां सर्वभूतोत्पत्तिस्थितिलयकारणत्वपरोवरीयस्त्वानन्तत्वादीनां दर्शनात्। न च लिङ्गात् श्रुतेः अन्यथानयनमनुचितं श्रुतिलिङ्गसूत्रविरोधादिति वाच्यम्। लिङ्गस्यानन्यथासिद्धत्वे श्रुतेरपि बाध्यत्वाङ्गीकारात्। तथा हि "हस्तेनावद्यति स्रुवेणावद्यति स्वधितिनाऽवद्यति" इत्यादौ हस्तादीनामवदानसामान्यसाधनत्वश्रवणेऽपि हस्तादिसामर्थ्यरूपानन्यथासिद्धलिङ्गविरोधेन सङ्कोचसहिष्णूनामवद्यतिश्रुतीनामेव पुरोडाशादिकठिनद्रव्य–आज्यादिद्रवद्रव्य-मांसावदानविषयतया सङ्कोचरूपो बाधः। यथा वा "कृष्णलं

**स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्परोवरीयाँ्ँसमुद्गीथमुपास्ते ॥ २ ॥**

वै नामे"ति श्रुतेः। तस्य हि कर्म सर्वभूतोत्पादकत्वम्। तस्मिन्नेव हि भूतप्रलयः। तत्तेजोऽसृजत। तेजः परस्यां देवतायामिति हि वक्ष्यति। सर्वाणि ह वा इमानि भूतानि स्थावरजङ्गमान्याकाशादेव समुत्पद्यन्ते तेजोबन्नादिक्रमेण, सामर्थ्यात्[1]। आकाशं प्रत्यस्तं यन्ति प्रलयकाले तेनैव विपरीतक्रमेण हि यस्मादाकाश एवैभ्यः सर्वेभ्यो भूतेभ्यो ज्यायान्महत्तरोऽतः स सर्वेषां भूतानां परमयनं परायणं प्रतिष्ठा त्रिष्वपि कालेष्वित्यर्थः ॥ १ ॥

यस्मात्परं परं वरीयो वरीयसोऽप्येष वरः परश्च वरीयांश्च परोवरीयानुद्गीथः परमात्मा सम्पन्न इत्यर्थः। अत एव स एषोऽनन्तोऽविद्यमानान्तस्तमेतं परोवरीयांसं परमात्मभूतमनन्तमेवं विद्वान्परोवरीयांसमुद्गीथमुपास्ते। तस्यैतत्फलमाह—परोवरीयः परं परं वरीयो विशिष्टतरं जीवनं हास्य विदुषो भवति दृष्टं फलमदृष्टं च परोवरीयस उत्तरोत्तरविशिष्टतरानेव ब्रह्माकाशान्ताँल्लोकाञ्जयति य एतदेवं विद्वानुद्गीथमुपास्ते ॥ २ ॥

नरेन्द्रपुरीयं टिप्पणम्

द्रष्टव्यम्। बहुतरपरमात्मलिङ्गदर्शनं भूताकाशपरित्यागे कारणमाह—तस्य हीत्यादिना। सामर्थ्यादिति। क्रमाभिधायिश्रुत्यन्तरसामर्थ्यादित्यर्थः ॥ १ ॥

परं परं वरीयस इति स्वरप्राणान्नादेस्सकाशादित्यर्थः। परमात्मा सम्पन्न इति परमात्मतादात्म्यापन्न ओङ्कारस्तद्गुणक इत्यर्थः। अन्तवत्वदोषेण शालावत्यमतस्य निन्दितत्वात् स्वमते तदभावमाह—अत एवेति।

आनन्दगिरिटीका

चेति। किञ्च परस्याऽऽत्मनः सर्वभूतोत्पादकत्वं कर्मेति वेदान्तमर्यादा, तदिहाऽऽकाशे श्रुतं तथा च परमात्मैवाऽऽकाश-शब्द इत्याह—तस्य हीति। किञ्च परस्मिन्नेव भूतानां प्रलयः स चात्राऽऽकाशे श्रुतस्तस्मात्पर एवाऽऽत्माऽऽकाश इत्याह—तस्मिन्नेवेति। सर्वोत्पादकत्वं परस्य कर्मेत्यत्र मानमाह—तत्तेजोऽसृजतेति। परस्मिन्नेव लयो भूताना-मित्यत्रापि मानमाह—तेज इति। भवतु परस्याऽऽत्मनः सर्वोत्पादकत्वं कर्म तथाऽपि किमायातमाकाशस्येति चेत्तत्राऽऽह—सर्वाणीति। कथमयं क्रमो लभ्यते। अविशेषेण हि ततः सर्वोत्पत्तिः श्रुतेत्याशङ्क्याऽऽह—सामर्थ्यादिति। आत्मन आकाशः सम्भूतस्तत्तेजोऽसृजतेत्यादिश्रुतिबलादित्यर्थः। तथाऽपि कथमाकाशे सर्वभूतलयस्तत्राऽऽह—आकाशं प्रतीति। विपर्ययेण तु क्रमोऽत इति न्यायेनाऽऽह—विपरीतेति। आकाशस्य परमात्मत्वे हेत्वन्तरमाह—यस्मादिति। परायणत्वमपि तत्रैव लिङ्गमित्याह—अत इति ॥ १ ॥

आकाशस्तल्लिङ्गादिति न्यायेनाऽऽकाशस्य परमात्मत्वमुक्तमिदानीं तस्योद्गीथे सम्पादितस्य परोवरीयस्त्वं गुणमुपदिशति—यस्मादिति। उत्तरमुत्तरं श्रेष्ठादपि श्रेष्ठोऽयमित्येतत्। साममात्रस्य कथमयं गुणः स्यादित्या-शङ्क्याऽऽह—परमात्मेति। आकाशस्य परमात्मत्वे लिङ्गान्तरमाह—अत एवेति। परमात्मसम्पन्नत्वादिति यावत्। आकाशो हि प्रकृतोद्गीथे सम्पादितोऽनन्तः श्रुतः। न चाऽऽनन्त्यं ब्रह्मणोऽन्यत्र युक्तम्। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः। तस्मादाकाशो ब्रह्मेत्यर्थः। सम्प्रत्याकाशशब्दितस्य परस्योद्गीथे सम्पादितस्य परोवरीयस्त्वगुणविशिष्टस्यो-पास्तिं विदधाति—तमेतमिति। परं परमुपर्युपरीति यावत्। तस्मादेवमुपासीतेति भावः ॥ २ ॥

---

श्रपयेत्" इति श्रवणेऽपि कृष्णलेषु विक्लेदनफलकव्यापारासम्भवात् उष्णीकरण एवाधिश्रयणादीनां सामर्थ्यात् वस्तुसामर्थ्यरूपानन्यथासिद्धलिङ्गेन श्रपणश्रुतेः उष्णीकरणलक्षणासहिष्णोः मुख्यार्थ-त्यागरूपो बाधः—न्यायरक्षामणिः।

अत्रोद्गीथाकाशोपासनं सम्यदुपासनमिति प्रतीयते आनन्दगिरीये "उद्गीथे सम्पादितस्य परोवरीयस्त्व-गुणविशिष्टस्योपास्तिं विदधाति"—इत्युक्तेः। परन्तु उत्तरखण्डारम्भे परमात्मदृष्ट्या उद्गीथोपासनं परोवरीयस्त्वप्राप्तिफलकं इत्युक्तेः प्रतीकोपासनमेवेदमिति।

१. विपर्ययेण तु क्रमोऽत उपपद्यते चेति न्यायात्।

तँ᳖ हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रजाया-
मुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥
तथाऽमुष्मिँल्लोके लोक इति स य एतदेवं विद्वानुपास्ते परोवरीय एव
हास्यास्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य नवमः खण्डः

मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥ १ ॥

किं च तमेतमुद्गीथं विद्वानतिधन्वा नामतः शुनकस्यापत्यं शौनक उदरशाडिल्याय शिष्यायैतमुद्गीथदर्शनमुक्त्वोवाच। यावत्ते तव प्रजायां प्रजासन्ततावित्यर्थः। एनमुद्गीथं त्वत्सन्ततिजा वेदिष्यन्ते ज्ञास्यन्ति तावन्तं कालं परोवरीयो हैभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्य उत्तरोत्तरविशिष्टतरं जीवनं तेभ्यो भविष्यति ॥ ३ ॥

तथाऽदृष्टेऽपि परलोकेऽमुष्मिन्परोवरीयाँल्लोको भविष्यतीत्युक्तवाञ्शाण्डिल्यायातिधन्वा शौनकः। स्यादेतत्फलं पूर्वेषां महाभाग्यानां नैदंयुगीनानामित्याशङ्कानिवृत्तय आह—स यः कश्चिदेतदेवं विद्वानुद्गीथमेतर्ह्युपास्ते तस्याप्येवमेव परोवरीय एव हास्यास्मिँल्लोके जीवनं भवति तथाऽमुष्मिँल्लोके लोक इति लोके लोक इति ॥ ४ ॥

इति प्रथमाध्यायस्य छान्दोग्योपनिषच्छाङ्करभाष्ये नवमः खण्डः

उद्गीथोपासनप्रसङ्गेन प्रस्तावप्रतिहारविषयमप्युपासनं वक्तव्यमितीदमारभ्यते। आख्यायिका तु सुखावबोधार्था। मटचीहतेषु मटच्योऽशनयस्ताभिर्हतेषु नाशितेषु कुरुषु कुरुसस्येष्वित्यर्थः। ततो दुर्भिक्षे जात आटिक्याऽनुपजातपयोधरादिस्त्रीव्यञ्जनया सह जाययोषस्तिर्ह नामतश्चक्रस्यापत्यं चाक्रायणः। इभो हस्ती तमर्हतीतीभ्य ईश्वरो हस्त्यारोहो वा तस्य ग्राम इभ्यग्रामस्तस्मिन्प्रद्राणकोऽन्नालाभात्। द्रा कुत्सायां गतौ। कुत्सितां गतिं गतोऽन्त्यावस्थां प्राप्त इत्यर्थः। उवासोषितवान्कस्यचिद्गृहमाश्रित्य ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

निरतिशयत्वादेवेत्यर्थः। उपास्यस्वरूपमुक्त्वा तदुपासनविधिं फलमुपादिशदित्याह—तमेतं परोवरीयांसमित्यादिना। परं परं वरीय इति सर्वतः श्रेष्ठं धनदानमानादियुक्तमित्यर्थः ॥ २ ॥

विधिशेषमर्थवादमाह—किञ्चेति। अस्मिन्युगे भवाः ऐदंयुगीनाः तेषां ऐदंयुगीनानाम् ॥ ३-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य नवमः खण्डः

मटप्रमर्दने। अस्य मटनकर्तृत्वान्मटच्यः पाषाणवृष्टयः। गृहान्तराटनार्हत्वादाटकी युवत्या व्यभिचार-

आनन्दगिरिटीका

विधिशेषमर्थवादं दर्शयति—किञ्चेति। इतश्चात्र विधिरस्तीत्येतत्। तेभ्यस्तत्सन्ततिजा ये यथोक्तोद्गीथं वेदितारस्तदर्थमित्यर्थः ॥ ३ ॥

तथा दृष्टविशिष्टतरजीवनवदित्यर्थः। अदृष्टेऽपीति च्छेदः। स य एतमित्याद्युत्तरं वाक्यं शङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे—स्यादित्यादिना। अस्मिन्युगे भवन्तीत्यैदंयुगीनास्तेषामैदंयुगीनानां लोकः परोवरीयानिति शेषः। पुनरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य नवमः खण्डः

अथोद्गीथाक्षरोपासनस्यानेकधोक्तत्वाद्वक्तव्यानवशेषात्प्रपाठकपरिसमाप्तिरेव युक्तेत्याशङ्क्याऽऽह—उद्गीथेति। इदमा खण्डान्तरं परामृश्यते। प्रस्तावाद्युपासनं विवक्षितं चेत्तदेवोच्यतां किमनया कथयेत्याशङ्क्याऽऽह—आख्यायिका त्विति। मटच्यो मर्दनहेतवोऽशनयः पाषाणवृष्टयो वा। ततः सस्यनाशादित्येतत्। सर्वतः स्वैरसञ्चारेऽपि न व्यभिचारशङ्केति दर्शयितुमाटिक्येति विशेषणम्। प्रद्राणकपदस्य क्रियापदेन सम्बन्धः। कुत्सितगतिप्राप्तौ हेतुरन्नालाभादिति। प्रद्राणकशब्दार्थं धातूपन्यासद्वारा कथयति—द्रा कुत्सायामिति ॥ १ ॥

स हेभ्यं कुल्माषान्खादन्तं बिभिक्षे तँ् होवाच।
नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥ २ ॥
एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपान-
मित्युच्छिष्टं वै मे पीतँ् स्यादिति होवाच ॥ ३ ॥
न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमान-
खादन्निति होवाच कामो म उदपानमिति ॥ ४ ॥

सोऽन्नार्थमटन्निभ्यं कुल्माषान्कुत्सितान्माषान्खादन्तं भक्षयन्तं यदृच्छयोपलभ्य बिभिक्षे याचितवान्। तमुषस्ति होवाचेभ्यः। नेतोऽस्मान्मया भक्ष्यमाणादुच्छिष्टराशेः कुल्माषा अन्ये न विद्यन्ते। यच्च ये राशौ मे ममोपनिहिताः प्रक्षिप्ता इमे भाजने किं करोमीत्युक्तः प्रत्युवाचोषस्तिः ॥ २ ॥

एतेषामेतानित्यर्थः। मे मह्यं देहीति होवाच। तान्स इभ्योऽस्मा उषस्तये प्रददौ प्रदत्तवान्। अनुपानीयं समीपस्थमुदकं हन्त गृहाणानुपानमित्युक्तः प्रत्युवाच। उच्छिष्टं वै मे ममेदमुदकं पीतं स्याद्यदि पास्यामीत्युक्तवन्तं प्रत्युवाचेतरः ॥ ३ ॥

किं न स्विदेते कुल्माषा अप्युच्छिष्टा इत्युक्त आहोषस्तिर्न वा अजीविष्यं न जीविष्यामीमान्कुल्माषानखादन्नभक्षयन्निति होवाच। काम इच्छातो मे ममोदकपानं लभ्यत इत्यर्थः। अतश्चैतामवस्थां प्राप्तस्य विद्याधर्मयशोवतः स्वात्मपरोपकारसमर्थस्यैतदपि कर्म कुर्वतो नाऽऽगःस्पर्श[1] इत्यभिप्रायः। तस्यापि जीवितं प्रत्युपायान्तरेऽजुगुप्सिते सति जुगुप्सितमेतत्कर्म दोषाय। ज्ञानावलेपेन कुर्वतो नरकपातः स्यादेवेत्यभिप्रायः। प्रद्राणकशब्दश्रवणात् ॥ ४ ॥

नरेन्द्रपुरीयं टिप्पणम्

शङ्का, तदभावादित्यर्थः। आटिक्येति पाठे देशान्तराटनाय प्रवृत्तेत्यर्थः। यदिति निपातः "सुरापाः क्रमयो भवन्त्यभक्ष्यभक्षण" इत्यादिश्रुतिविरुद्धमभक्ष्यभक्षणं ब्रुवत्याः श्रुतेरनुपानं च प्रतिषेधन्त्यास्तात्पर्यमाह— अतश्चेति। अर्थवादस्य सामान्यवचनविरोधे प्रामाण्यासम्भवात् न प्रस्तावादिदेवताज्ञानबलात् पापाभावः सति

आनन्दगिरिटीका

यदृच्छया सहसेत्यर्थः। नेत इति वाक्योपादानं तद्व्याकरोति—अस्मादिति। यदित्यव्ययं बहुवचनान्तम्। उपनिहिताः कुल्माषा इति शेषः। एतेषां खल्विमे भाजने प्रक्षिप्ता इति योजना ॥ २ ॥

हन्त=कुल्माषा भक्षिताश्चेदित्यर्थः ॥ ३ ॥

किं प्रत्युवाचेत्याकाङ्क्षापूर्वकमाह—किमित्यादिना। अनुपानाभावेऽपि तुल्यं जीवनराहित्यमित्याशङ्क्याऽऽह—काम इति। अन्योच्छिष्टकुल्माषभक्षणमृषेर्वदन्त्याः श्रुतेस्तात्पर्यमाह—अतश्चेति। चाक्रायणस्य विदुषोऽभक्ष्यभक्षणदर्शनादिति यावत्। एतामवस्थां प्राप्तस्य जीवितसन्देहमापन्नस्येत्यर्थः। विद्याधर्मयशोवतो ज्ञानादिप्रयुक्तख्याति प्रपन्नस्येत्येतत्। स्वात्मोपकारे परोपकारे च सामर्थ्यं निग्रहानुग्रहशक्तिमत्त्वम्। एतत्कर्म जीवनमात्रकारणं कुत्सितं चेष्टितमित्यर्थः। उच्छिष्टोदकपानप्रतिषेधश्रुतेरभिप्रायमाह—तस्यापीति। एतत्कर्मेत्यभक्ष्यभक्षणोक्तिः। ननु ज्ञानिनो यथेष्टचेष्टाऽत्रानुज्ञायते। मैवम्। 'सर्वान्नानुमतिश्चेत्यादिन्यायविरोधादित्याह—ज्ञानेति। तस्मिन्नभिप्राये लिङ्गं दर्शयति—प्रद्राणकेति। चाक्रायणे प्रद्राणकशब्दप्रयोगात्परमापदमापन्नः

१. नाऽऽगःस्पर्श इति। सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ( ब्र० सू० ३-४-२८ ) इति सूत्रभाष्ये स्पष्टं तदुक्तं तत्रैव तदेतदुच्छिष्टोच्छिष्टपर्युषितभक्षणं दर्शयन्त्याः श्रुतेराशयातिशयो लक्ष्यते—प्राणात्ययप्रसङ्गे प्राणसन्धारणायाभक्ष्यमपि भक्षयितव्यमिति। स्वस्थावस्थायां तु तन्न कर्तव्यं विद्यावतापीत्यनुपानप्रत्याख्यानादवगम्यते। तस्माद् "न ह वा एवंविदि किञ्चन अनन्नं भवति" इति प्राणविद्यायां वचनमर्थवादो न विधिः।

स ह खादित्वाऽतिशेषाञ्जायाया आजहार साऽग्र
एव सुभिक्षा बभूव तान्प्रतिगृह्य निदधौ ॥ ५ ॥
स ह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि
धनमात्राँ राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥
तं जायोवाच हन्त पत इम एव कुल्माषा इति तान्खादित्वाऽमुं यज्ञं विततमेयाय ॥ ७ ॥
तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥ ८ ॥
प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥

तांश्च स खादित्वाऽतिशेषानतिशिष्टाञ्जायायै कारुण्यादाजहार। साऽऽटिक्यग्र एव कुल्माषप्राप्तेः सुभिक्षा शोभनभिक्षा लब्धान्नेत्येतद्बभूव संवृत्ता। तथाऽपि स्त्रीस्वाभाव्यादनवज्ञाय तान्कुल्माषान्पत्युर्हस्तात्प्रतिगृह्य निदधौ निक्षिप्तवती ॥ ५ ॥

स तस्याः कर्म जानन्प्रातरुषःकाले सञ्जिहानः शयनं निद्रां वा परित्यजन्नुवाच पत्न्याः शृण्वत्या यद्यदि वतेति खिद्यमानोऽन्नस्य स्तोकं लभेमहि तद्भुक्त्वाऽन्नं समर्थो गत्वा लभेमहि धनमात्रां धनस्याल्पम्। ततोऽस्माकं जीवनं भविष्यतीति। धनलाभे च कारणमाह—राजाऽसौ नातिदूरे स्थाने यक्ष्यते। यजमानत्वात्तस्याऽऽत्मनेपदम्। स च राजा मा मां पात्रमुपलभ्य सर्वैरार्त्विज्यैरार्त्विज्यकर्मभिरार्त्विक्कर्मप्रयोजनायेत्यर्थो वृणीतेति ॥ ६ ॥

एवमुक्तवन्तं जायोवाच—हन्त गृहाण हे पत इम एव ये मद्धस्ते विनिक्षिप्तास्त्वया कुल्माषा इति। तान्खादित्वाऽमुं यज्ञं राज्ञो विततं विस्तारितमृत्विग्भिरेयाय ॥ ७ ॥

तत्र च गत्वोद्गातॄनुद्गातृपुरुषानागत्य स्तुवन्त्यस्मिन्नित्यास्तावस्तस्मिन्नास्तावे स्तोष्यमाणानुपोपविवेश समीप उपविष्टस्तेषामित्यर्थः। उपविश्य स ह प्रस्तोतारमुवाच ॥ ८ ॥

हे प्रस्तोतरित्यामन्त्र्याभिमुखीकरणाय। या देवता प्रस्तावं प्रस्तावभक्तिमनुगताऽन्वायत्ता तां चेद्देवतां प्रस्तावभक्तेरविद्वान्सन्प्रस्तोष्यसि विदुषो मम समीपे। तत्परोक्षेऽपि चेद्विपतेत्तस्य मूर्धा कर्ममात्रविदामनधिकार एव

नरेन्द्रपुरीयं टिप्पणम्

कर्तृत्वे शक्यते वक्तुं किन्त्वन्नालाभेन जीवितात्ययमापन्नस्य निषिद्धभक्षणेऽपि पापाभावः। तर्हि तस्य कष्टावस्था-प्राप्तिः कुत उपलब्धेत्यत आह—प्रद्राणकेति ॥ ४-८ ॥

विदुषः समीपे तदनुज्ञानमलब्ध्वा तमवज्ञाय कर्म कुर्वतोऽपराधित्वमिति विशेषणं कुतोऽवगम्यते? तत्राह—तत्परोक्षेऽपि चेदिति। केवलकर्मिणां धूमादिमार्गश्रवणाच्चाज्ञस्य नानधिकार इत्याह—दक्षिणेति। वापीकूप-

आनन्दगिरिटीका

सन्कुल्माषानुच्छिष्टान्भक्षितवानिति प्रतिभाति। तथा च ज्ञानिनो यथेष्टाचारे प्रमाणाभावादनेकप्रमाणविरोधाच्च नासावत्र विवक्षित इत्यर्थः ॥ ४ ॥

स्त्रीस्वाभाव्यं पत्युराज्ञाकरणम्, संग्रहशीलत्वं वा। अत एवाग्रे दृश्यते ते ॥ ५ ॥

तस्याः कर्म कुल्माषाणां परिरक्षणम्। यक्ष्यतीति कस्मान्नोक्तं तत्राऽऽह—यजमानत्वादिति। राज्ञो यजमानत्वाद्यागफलस्याऽऽत्मगामित्वाद्यक्ष्यत इत्यात्मनेपदं प्रयुक्तमित्यर्थः। अन्येषामुपद्रष्टृत्वसम्भवे कुतस्त्वामेव राजा मानयिष्यतीत्याशङ्क्याऽऽह—स चेति ॥ ६ ॥

हन्तेत्यन्नलेशलाभश्चेदेवं धनलब्धिद्वारा जीवनहेतुरित्यर्थः ॥ ७ ॥

राज्ञो यज्ञस्तत्रेत्युच्यते। उद्गातुरेकत्वे कुतो बहूक्तिरित्याशङ्क्याऽऽह—उद्गातृपुरुषानिति। स्तुवन्त्यस्मिन्निति सप्तम्या सम्वाददेशो वा निर्दिश्यते ॥ ८ ॥

किमर्थमामन्त्रणं तदाह—अभिमुखीकरणायेति। विदुषः समीपे देवतामविद्वान्प्रस्तोष्यसि चेन्मूर्धा ते विपतिष्यतीत्यग्रे सम्बन्धः। नन्वविद्वन्निन्दाया विवक्षितत्वाद्विद्वत्समीपवचनमकिञ्चित्करमिति चेन्नेत्याह—तत्परोक्षेऽ-

**एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति ॥ १० ॥**

**एवमेव प्रतिहर्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासाञ्चक्रिरे ॥ ११ ॥**

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य दशमः खण्डः

कर्मणि स्यात् । तच्चानिष्टमविदुषामपि कर्मदर्शनात् । दक्षिणमार्गश्रुतेश्च । अनधिकारे चाविदुषामुत्तर एवैको मार्गः श्रूयेत । न च स्मार्तकर्मनिमित्त एव दक्षिणः पन्थाः । यज्ञेन दानेनेत्यादिश्रुतेः । तथोक्तस्य मयेति च विशेषणाद्विद्वत्समक्षमेव कर्मण्यनधिकारो न सर्वत्राग्निहोत्रस्मार्तकर्माध्ययनादिषु च । अनुज्ञायास्तत्र तत्र दर्शनात् कर्ममात्रविदामप्यधिकारः सिद्धः कर्मणीति । मूर्धा ते विपतिष्यतीति ॥ ९ ॥

एवमेवोद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत् । ते प्रस्तोत्रादयः कर्मभ्यः समारता उपरताः सन्तो मूर्धपातभयात्तूष्णीमासांचक्रिरेऽन्यच्चाकुर्वन्तः अर्थित्वात् ॥ १०-११ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य दशमः खण्डः

## नरेन्द्रपुरीयं टिप्पणम्

खननान्नप्रदानादि स्मार्तकर्म कुर्वतो धूमादिमार्गोऽस्तु । श्रौते तु विदुष एवाधिकारो भविष्यतीत्याशङ्क्याऽऽह—न चेति । तथोक्तस्येति । मूर्धा ते विपतिष्यतीति मयोक्तस्य मूर्धा ते व्यपतिष्यदित्युत्तरत्र विशेषश्रवणात् सन्निधानादेव प्रकृतेऽनधिकारो, न सर्वत्रेत्यर्थः । अविदुषः सर्वत्रानधिकारो नास्ति चेत्तर्हि किमधिकारप्रापकमित्यत आह—अनुज्ञापनेति[1] । एत एव समतिसृष्टाः स्तुवतामित्यनुज्ञाकरणदर्शनादित्यर्थः । युक्तं प्रस्तावस्य प्राणो देवतेति प्रशब्दसामान्यादित्यर्थः ॥ ९-११ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य दशमः खण्डः

## आनन्दगिरिटीका

पीति । तस्येत्यविद्वान्प्रस्तोतोच्यते । मा भूत्कर्ममात्रविदां कर्मण्यधिकार इति चेन्नेत्याह—तच्चेति । तेनोभौ कुरुत इत्यादिश्रुताविति शेषः । अविदुषामपि कर्माधिकारे हेत्वन्तरमाह—दक्षिणेति । तदेव व्यतिरेकद्वारा स्फोरयति—अनधिकारे चेति । तस्यैव समुच्चयफलत्वादित्यर्थः । ननु दक्षिणमार्गस्य वापीकूपतटाकादिस्मार्तकर्मप्रयुक्तत्वाद्वैदिके कर्मणि विद्वानेवाधिक्रियते नेत्याह—न चेति । यज्ञेन दानेन लोकाञ्जयन्तीति वैदिककर्मनिष्ठानामज्ञानामेव दक्षिणमार्गश्रवणादिति हेतुमाह—यज्ञेनेति । इतश्चाविदुषां विद्वत्समीपे कर्माधिकारो नास्तीत्याह—तथोक्तस्येति । देवताविज्ञानशून्यस्य ते मूर्धा विपतिष्यतीत्यनेन प्रकारेण मयोक्तस्य मूर्धा व्यपतिष्यदिति विशेषश्रवणाद्विद्वत्समीपे [2]तदनुज्ञामन्तरेण कर्म कुर्वतोऽपराधित्वात्तस्य कर्मण्यनधिकार एवेत्यर्थः । विद्वदसमीपे पुनरविदुषोऽपि कर्मण्यधिकारोऽस्तीत्याह—न सर्वत्रेति । अग्निहोत्रादौ श्रौते कर्मणि स्मार्तेषु च वापीकूपतटाकादिकर्मस्वध्ययनजपादिषु च विद्वत्सन्निधिमन्तरेणापि सर्वस्मिन्काले कर्ममात्रविदो नाधिकारोऽस्तीत्यशक्यं वक्तुमित्यर्थः । तत्र हेतुमाह—अनुज्ञेति । भगवन्तं वा अहं विविदिषाणीत्यादिना राज्ञा स्वकीयकर्मनिर्वर्तने प्रार्थनादर्शनादेत एव मया समतिसृष्टाः स्तुवतामिति चानुज्ञोपलम्भादस्त्येवाविदुषामपि कर्मण्यधिकार इत्यर्थः । उक्तमर्थमुपसंहरति—कर्ममात्रेति । विद्वत्समीपे तदनुज्ञामलब्ध्वा नास्ति कर्मानुष्ठानमित्येतन्निगमयितुमितिशब्दः । मूर्धा ते विपतिष्यतीत्येतदन्तं प्रस्तोतृविषयं वाक्यं व्याख्यातमित्यनुवदति—मूर्धेति ॥ ९ ॥

तूष्णीमित्यस्यार्थमाह—अन्यच्चेति । तत्र हेतुमाह—अर्थित्वादिति । तत्तद्देवताविषयविज्ञानार्थित्वेन कर्मान्तरमकुर्वन्तश्चाक्रायणाभिमुखाः स्थिता इत्यर्थः ॥ १०-११ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य दशमः खण्डः

---

१. अनुज्ञाया इति मूलपाठः ।

२. अत एवेदानीमपि विद्वत्समीपे यागादिकर्मणि आर्त्विज्यं कुर्वाणाः सर्वे विद्वांसं प्रणम्य तदनुज्ञां प्रार्थयन्तो दृश्यन्ते ।

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥
स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्याऽन्यानवृषि ॥ २ ॥
भगवाँ्स्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः
स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥
अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्
प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥
प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते
सैषा देवता[1] प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥

अथानन्तरं हैनमुषस्तिं यजमानो राजोवाच। भगवन्तं वै पूजावन्तंमहं विविदिषाणि वेदितुमिच्छामीत्युक्त उषस्तिरस्मि चाक्रायणस्तवापि श्रोत्रपथमागतो यदीति होवाचोक्तवान् ॥ १ ॥

स ह यजमान उवाच सत्यमेवमहं भगवन्तं बहुगुणमश्रौषं सर्वैश्च ऋत्विक्कर्मभिरार्त्विज्यैः पर्यैषिषं पर्येषणं कृतवानस्मि। अन्विष्य भगवतो वा अहमवित्त्याऽलाभेनान्यानिमानवृषि वृतवानस्मि ॥ २ ॥

अद्यापि भगवांस्त्वेव मे मम सर्वैरार्त्विज्यैर्ऋत्विक्कर्मार्थमस्त्वित्युक्तस्तथेत्याहोषस्तिः। किन्त्वथैवं तर्ह्येत एव त्वया पूर्वं वृता मया समतिसृष्टा मया सम्यक्प्रसन्नेनानुज्ञाताः सन्तः स्तुवताम्। त्वया त्वेतत्कार्यम्। यावत्त्वेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः प्रयच्छसि तावन्मम दद्या इत्युक्तस्तथेति ह यजमान उवाच ॥ ३ ॥

अथ हैनमौषस्त्यं वचः श्रुत्वा प्रस्तोतोपससादौषस्तिं विनयेनोपजगाम। प्रस्तोतर्या देवतेत्यादि मा मां भगवानवोचत्पूर्वम्। कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति ॥ ४ ॥

पृष्टः प्राण इति होवाच। युक्तं प्रस्तावस्य प्राणो देवतेति। कथं, सर्वाणि स्थावरजङ्गमानि भूतानि

आनन्दगिरिटीका

अथ हैनमित्यादि व्याकरोति—अथेति। प्रस्तोतृप्रभृतीनां तूष्णींभावादिति शेषः ॥ १ ॥

चाक्रायणस्य वचनमङ्गीकरोति—सत्यमिति। अङ्गीकारमेव स्फोरयति—एवमिति। आर्त्विज्यैरित्यस्य व्याख्यानमृत्विक्कर्मभिरिति। तदर्थमिति यावत्। यदि मामार्त्विज्यार्थमनुसंहितवानसि किमितीमानन्यान्वृतवानित्याशङ्क्याऽऽह—अन्विष्येति ॥ २ ॥

एवं गते किमधुना कर्तव्यमित्याशङ्क्याऽऽह—अद्यापीति। चाक्रायणानुमतिं श्रुत्वा किमिदमिति व्याकुलितेषु प्रस्तोतृप्रभृतिषु ब्रूते—किन्त्विति। उभयानुमत्यपेक्षयोऽनन्तर्यम्। ममालाभेनामीषां वृतत्वस्य निवृत्त्यवस्थायामित्याह—तर्हीति। अनुज्ञाताः सन्तः प्रस्तोत्रादयः स्तुतिं कुर्वतामित्याह—स्तुवतामिति। अस्त्वेवं त्वदर्थं पुनर्मया किं विधेयमित्याशङ्क्याऽऽह—त्वया त्विति ॥ ३ ॥

यजमानं प्रत्युषस्तिप्रोक्तं वचः श्रुत्वाऽनन्तरमेनमुषस्तिं प्रस्तोता त्यक्तव्याकुलत्वः शिष्यत्वेनोपसन्नवानित्याह—अथेति। उपगतिप्रकारमभिनयति—प्रस्तोतरिति ॥ ४ ॥

प्रतिवचनमादाय प्रशब्दसामान्यं गृहीत्वा तात्पर्यमाह—पृष्ट इति। कथमिह प्राणशब्दार्थो निश्चीयतामित्याशङ्क्य 'अत एव प्राण' इति न्यायेनाऽऽह—कथमिति। प्राणात्मनैव संविशन्तीति पूर्वेण सम्बन्धः। प्राण-

---

१. प्रस्तावदेवता प्राणः मुख्यप्राणो वा परमात्मा वा ? इति संशये स्वापकाले सर्वाणि भूतानि प्राणे संविशन्ति जागरे प्राणात्पुरागच्छन्तीत्यनुभवात् मुख्यप्राण एवोपास्य इति पूर्वपक्षे सिद्धान्तसूत्रम् "अत एव प्राण" इति (ब्र० सू० १.१.२३) अत एव तल्लिङ्गादेव प्राणशब्दप्रतिपाद्यमपि ब्रह्म। अत्रापि हि प्राणे स्वापावस्थायां सर्वभूतसंवेशनं जागरे तत उत्थानं च श्रूयते। न च परमात्मनोऽन्यत्र सर्वभूतसंवेशनोद्गमने स्तः। अतः प्राणः परमात्मेति।

अथ[1] हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥६॥ आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥७॥ अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥८॥ अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥९॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्यैकादशः खण्डः

प्राणमेवाभिसंविशन्ति प्रलयकाले प्राणमभि लक्षयित्वा प्राणात्मनैवोज्जिहते प्राणादेवोद्गच्छन्तीत्यर्थः उत्पत्तिकाले। अतः सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वांस्त्वं प्रास्तोष्यः प्रस्तवनं प्रस्तावभक्तिं कृतवानसि यदि मूर्धा शिरस्ते व्यपतिष्यद्विपतितमभविष्यत्तथोक्तस्य मया तत्काले मूर्धा ते विपतिष्यतीति। अतस्त्वया साधु कृतम्। मया निषिद्धः कर्मणो यदुपरममकार्षीरित्यभिप्रायः ॥ ५ ॥

तथोद्गाता पप्रच्छ कतमा सोद्गीथभक्तिमनुगताऽन्वायत्ता देवतेति ॥ ६ ॥

पृष्ट आदित्य इति होवाच। सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैरूर्ध्वं सन्तं गायन्ति शब्दयन्ति स्तुवन्तीत्यभिप्रायः। उच्छब्दसामान्यात्प्रशब्दसामान्यादिव प्राणोऽतः सैषा देवतेत्यादि पूर्ववत् ॥ ७ ॥

एवमेवाथ हैनं प्रतिहर्तोपससाद कतमा सा देवता प्रतिहारमन्वायत्तेति ॥ ८ ॥

पृष्टोऽन्नमिति होवाच। सर्वाणि ह वा इमानि भूतान्यन्नमेवाऽऽत्मानं प्रति सर्वतः प्रतिहरमाणानि जीवन्ति। सैषा देवता प्रतिशब्दसामान्यात्प्रतिहारभक्तिमनुगता। समानमन्यत्तथोक्तस्य मयेति। प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति समुदायार्थः। प्राणाद्यापत्तिः कर्मसमृद्धिर्वा फलमिति ॥ ९ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्यैकादशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

प्राणश्च पर आत्मा लिलक्षयिषितः कथमित्याकाङ्क्षायां तल्लिङ्गमाह—सर्वाणीति। अभीत्यस्य व्याख्यानं लक्षयित्वेति ॥ ५-९ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्यैकादशः खण्डः

आनन्दगिरिटीका

शब्दार्थस्य परमात्मत्वेन निर्णीतत्वमतःशब्दार्थः। चेच्छब्दार्थो यदीत्युक्तः। मया तथोक्तस्य मूर्धा ते विपतिष्यतीत्येवमुक्तस्य तव तत्काले स्वापराधावस्थायां मूर्धा व्यपतिष्यदेवेति योजना। प्रमादस्य महतस्त्वया परिहृतत्वादित्यतःशब्दार्थः ॥ ५ ॥

यथा प्रशब्दसामान्यात्प्राणः प्रस्तावदेवतेत्युक्तं तथाऽऽदित्योद्गीथयोरुच्छब्दसामान्यादुद्गीथदेवताऽऽदित्य इत्याह—उच्छब्देति। उक्तसामान्यपरामर्शार्थोऽतः शब्दः ॥ ६-७ ॥

एवमेव प्रस्तोतृवदुद्गातृवच्चेत्यर्थः। ऋत्विग्भ्यां प्रस्तावोद्गीथदेवतयोर्विज्ञानानन्तर्यमथशब्दार्थः ॥ ८ ॥

कथमन्नस्य प्रतिहारत्वं तदाह—सर्वाणीति। तां चेदविद्वानित्याद्यन्यदित्युच्यते। तथोक्तस्य मयेत्येतदन्तमिति शेषः। कीदृगुपासनमस्मिन्प्रकरणे विवक्षितमित्याशङ्क्याऽऽह—प्रस्तावेति। उपास्तित्रयस्य फलं दर्शयति—प्राणादीति ॥ ९ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्यैकादशः खण्डः

१. अत्रोद्गीथे आदित्यदृष्ट्योपासनं समग्रोद्गीथभक्तिविषयं पूर्वं तु तदवयवोङ्कारविषयमिति भेदः।

**अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥**
**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्यो-**
**चुरन्नं नो भगवानागायत्वशनायाम वा इति ॥ २ ॥**

अतीते खण्डेऽन्नाप्राप्तिनिमित्ता कष्टावस्थोक्तोच्छिष्टपर्युषितभक्षणलक्षणा। सा मा भूदित्यन्नलाभायाथानन्तरं शौवः श्वभिर्दृष्ट उद्गीथ उद्गानं सामातः प्रस्तूयते। तत्तत्र ह किल बको नामतो दल्भस्यापत्यं दाल्भ्यो ग्लावो वा नामतो मित्रायाश्चापत्यं मैत्रेयः। वाशब्दश्चार्थे। द्व्यामुष्यायणो ह्यसौ। वस्तुविषये क्रियास्विव विकल्पानुपपत्तेः। द्विनामा द्विगोत्र इत्यादि हि स्मृतिः। दृश्यते चोभयतः पिण्डभाक्त्वम्। उद्गीथे बद्धचित्तत्वादृषावनादराद्वा। वाशब्दः स्वाध्यायार्थः। स्वाध्यायं कर्तुं ग्रामाद्बहिरुद्वव्राजोद्गतवान्विविक्तदेशस्थोदकाभ्याशम्। उद्वव्राज प्रतिपालयाञ्चकारेति चैकवचनाल्लिङ्गादेकोऽसावृषिः। श्वोद्गीथकालप्रतिपालनादृषेः स्वाध्यायकरणमन्नकामनयेति लक्ष्यत इत्यभिप्रायः ॥ १ ॥

स्वाध्यायेन तोषिता देवतर्षिर्वा श्वरूपं गृहीत्वा श्वा श्वेतः संस्तस्मा ऋषये तदनुग्रहार्थं प्रादुर्बभूव प्रादुश्चकार। तमन्ये शुक्लं श्वानं क्षुल्लकाः श्वान उपसमेत्योचुरुक्तवन्तोऽन्नं नोऽस्मभ्यं भगवानागायत्वागानेन निष्पादयत्वित्यर्थः। मुख्यप्राणं वागादयो वा प्राणमन्वन्नभुजः स्वाध्यायपरितोषिताः सन्तोऽनुगृह्णीयुरेनं स्वरूपमादायेति युक्तमेवं प्रतिपत्तुम्। अशनायाम वै बुभुक्षिताः स्मो वा इति ॥ २ ॥

### नरेन्द्रपुरीयं टिप्पणम्

केपाञ्चिद्दृष्ट्या बकोऽसावन्येषां ग्लाव इति विकल्पो नाशङ्कनीयः। उदितानुदितहोमवत् सिद्धेऽर्थे विकल्पासम्भवादित्याह—वस्तुविषय इति। दालभ्यादन्यो वा मैत्रेय इत्याह—उद्गीथ इति। उदकाभ्याशमुदकस्य समीपं,

### आनन्दगिरिटीका

पूर्वोत्तरखण्डयोः सङ्गतिं दर्शयन्नुपासनान्तरं प्रस्तौति—अतीत इति। अन्नलाभस्यापेक्षितत्वमतःशब्दार्थः। प्रकारान्तरेणोद्गीथोपासनमन्नकामस्य प्रस्तुत्य प्रतिपत्तिसौकर्यार्थमाख्यायिकामादत्ते—तत्तत्रेति। न केवलं दल्भस्यापत्यं किन्तु मित्रायाश्चेति चार्थः। न च सा दल्भस्य पत्नीति युक्तम्। तथा सति मैत्रेयपदस्य वैयर्थ्यात्। पत्न्यन्तरापत्यत्वव्यावृत्त्यर्थमिति चेन्न। प्रयोजनाभावात्। नन्वत्र वाशब्दाद्द्वावृषी विवक्षिताविति चेन्नेत्याह—वाशब्द इति। कथं पुनर्दल्भस्यापत्यं बकस्तदभार्याया मित्रायाश्चापत्यं भवितुमुत्सहते तत्राऽऽह—द्व्यामुष्यायणो हीति। चैकितायनो दाल्भ्य इत्यत्रोक्तमेतदिति सूचयितुं हिशब्दः। उदितानुदितहोमवत्केषाञ्चिद्दृष्ट्या बकोऽसावन्येषां ग्लाव इत्येकस्मिन्नपि विकल्पो भविष्यति नेत्याह—वस्तुविषय इति। कथं पुनर्विना मानमेकस्यैव द्विनामत्वाद्यङ्गीक्रियते तत्राऽऽह—द्विनामेति। इत्यादिवाक्यं स्मृतिरूपं धर्मशास्त्रे प्रसिद्धमित्यर्थः। द्विगोत्रत्वमेकस्य लोकेऽपि प्रसिद्धमित्याह—दृश्यते चेति। यतः सुतो जायते येन चायं धर्मतो गृह्यते तयोरुभयोरित्याह—उभय इति। 'उभयोरप्यसावृक्थी पिण्डदाता च धर्मतः' इति स्मरन्तीत्यर्थः। दाल्भ्यादन्यो मैत्रेय इत्यङ्गीकृत्याऽऽह—उद्गीथ इति। तदुपास्तौ तात्पर्यमृषावनादरे हेतुः। तस्मादृषित्रयमृषिद्वयं वा विवक्षितमित्यर्थः। पक्षान्तरद्योतनार्थो वाशब्दः। श्रौतो वाशब्दस्तर्हि किमर्थमित्याशङ्क्य पाठादन्यन्न तस्य फलमित्याह—वाशब्द इति। मैत्रेयान्तं वाक्यं व्याख्याय स्वाध्यायमित्यादि व्याचष्टे—स्वाध्यायमिति। यदुक्तमृषिरेको बकादिशब्दैरुच्यत इति तत्र लिङ्गमाह—उद्वव्राजेति। शुनामुद्गीथः श्वोद्गीथस्तत्कालस्य प्रतिपालनं प्रतीक्षणमृषेर्दृश्यते तेषां चोद्गानमन्नार्थं तदृषेरपि स्वाध्यायकरणं तदर्थमित्याह—श्वोद्गीथेति। यथोक्तार्थवाचिशब्दाभावेऽपि सामर्थ्यादयमर्थो भातीत्याह—अभिप्राय इति ॥ १ ॥

तस्मा इत्यादि व्याचष्टे—स्वाध्यायेनेति। क्षुल्लकाः क्षुद्रकाः शिशव इति यावत्। श्वेतः श्वा कश्चिदृषिर्देवता वा। अन्ये च श्वानो देवता ऋषयो वेत्युक्तम्। सम्प्रति विवक्षितं पक्षमाह—मुख्येति। तमूचुरिति सम्बन्धः। तानेव विशिनष्टि—प्राणमन्विति। मुख्यप्राणसहितवागादिग्रहे हेतुमाह—स्वाध्यायेति। अन्यथा वाक्यमनिर्धारितार्थं स्यादिति भावः। किमित्यन्नं भवद्भ्यो मया सम्पाद्यते न हि भवतामभोक्तृणां तेन कृत्यमस्तीत्याशङ्क्य त्वन्निष्ठचेतनद्वारेणास्माकमपि भोगसिद्धेर्मैवमित्याह—अशनायाम वा इत्यादिना ॥ २ ॥

तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध वको
दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥ ३ ॥
तं ह यथैवेदं वहिष्पवमानेन स्तोष्यमाणाः सँ्रब्धाः
सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिञ्चक्रुः ॥ ४ ॥
ओ३मदा३मों३ पिबा३मों३ देवो वरुणः प्रजापतिः
सविता२ऽन्नमिहा२ऽऽहरदन्नपते३ऽन्नमिहा२ऽऽहरा२ऽऽहरो३मिति ॥ ५ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य द्वादशः खण्डः

एवमुक्ते श्वा श्वेत उवाच तान्क्षुल्लकाञ्शुन इहैवास्मिन्नेव देशे मा मां प्रातः प्रातःकाल उपसमीयातेति । दैर्घ्यं छान्दसं समीयातेति, प्रमादपाठो वा । प्रातःकालकरणं तत्काल एव कर्तव्या[व्यता]र्थम् । अन्नदस्य वा सवितुरपराह्णेऽनाभिमुख्यात् । तत्तत्रैव ह बको दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयाञ्चकार प्रतीक्षणं कृतवानित्यर्थः ॥३॥

ते श्वानस्तत्रैवाऽऽगम्य ऋषेः समक्षं यथैवेह कर्मणि वहिष्पवमानेन स्तोत्रेण स्तोष्यमाणा उद्गातृपुरुषाः संरब्धाः संलग्ना अन्योन्यमेव मुखेनान्योन्यस्य पुच्छं गृहीत्वाऽऽससृपुरासृप्तवन्तः परिभ्रमणं कृतवन्त इत्यर्थः । त एवं संसृप्य समुपविश्योपविष्टाः सन्तो हिं चक्रुर्हिङ्कारं कृतवन्तः ॥ ४ ॥

ओमदामों पिबामों देवो द्योतनात् । वरुणो वर्षणाज्जगतः । प्रजापतिः पालनात्प्रजानाम् । सविता प्रसवितृत्वात्सर्वस्याऽऽदित्य उच्यते । एतैः पर्यायैः स एवंभूत आदित्योऽन्नमस्मभ्यमिहाऽऽहरदाहरत्विति । त एवं हिं कृत्वा पुनरप्यूचुः—स त्वं हेऽन्नपते । स हि सर्वस्यान्नस्य प्रसवितृत्वात्पतिः । न हि तत्पाकेन विना प्रभूतमन्नमणुमात्रमपि जायते प्राणिनाम् । अतोऽन्नपतिः । हेऽन्नपतेऽन्नमस्मभ्यमिहाऽऽहराऽऽहरेति । अभ्यास आदरार्थः । ओमिति ॥५॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य द्वादशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

शुनामुद्गीथकालः श्वोद्गीथकालस्तस्य प्रतीक्षणमन्नार्थं हि शुनामुद्गानमित्यर्थः । क्षुल्लकाः अल्पपरिमाणाः मुख्यं प्राणं प्रति वागादयोऽवोचुरिति पूर्वेण सम्बन्धः । उद्गातृपुरुषा इत्यध्वर्युप्रमुखा यजमानपश्चिमास्संरब्धा अन्योन्यगृहीतवसनैकदेशाश्चात्वालं प्रति यथा सर्पन्तीत्यर्थः । हिङ्कारस्य सामावयवस्य स्वरूपमाह—ओमदाम इति । अदामाशनं करवाम पिबाम पानं करवाम । ओङ्कारो गानार्थः । ऋगक्षराणि गीयन्ते तद्व्यतिरिक्तानि वाच्यशून्यानि गीतिसिद्ध्यर्थानि स्तोभाक्षराणि परिभाष्यन्ते । तानि च कर्मापूर्वाणि आवृत्तिद्वारेण सप्रयोजनानीत्युपास्यानि ॥१-५॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य द्वादशः खण्डः

आनन्दगिरिटीका

किमिति प्रातःकालप्रतीक्षणं कृतं तत्राऽऽह—प्रातरिति । उद्गानस्येति शेषः । प्रातःकालप्रतीक्षणकरणे कारणान्तरमाह—अन्नस्येति । तस्य वृष्टिद्वाराऽन्नदत्वं द्रष्टव्यम् । तद्धेत्यादि व्याचष्टे—तत्तत्रेति । ऋषेरन्नकामत्वमितोऽवगतम् ॥ ३ ॥

ते हेत्यादि व्याकरोति—ते श्वान इति । समक्षमाससृपुरिति सम्बन्धः । उद्गातृपुरुषा इत्यध्वर्युप्रमुखा यजमानपर्यन्ता गृह्यन्ते । अन्योन्यं संलग्नाः सर्पन्तीति शेषः ॥ ४ ॥

हिङ्कारस्वरूपमाह—ओमित्यादिना । त्रिवारमोङ्कारो गानार्थमुच्चरितः । अदामाशनं करवाम । पिबाम पानं करवामेत्येतत् । इतिशब्दो हिङ्कारसमाप्त्यर्थः । अन्नप्रसवितृत्वमादित्यस्य साधयति—न हीति । इहेति प्रकृतदेशोक्तिः । ॐकारः सवितृप्रार्थनामन्त्रसमाप्त्यर्थः । भक्तिविषयोपास्तिसमाप्त्यर्थमितिपदम् ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य द्वादशः खण्डः

**अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकारः । आत्मेहकारोऽग्निरीकारः ॥ १ ॥**

**आदित्य ऊकारो निहव एकारो विश्वे देवा औहोयिकारः**
**प्रजापतिर्हिंङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥ २ ॥**

भक्तिविषयोपासनं सामावयवसम्बद्धमित्यतः सामावयवान्तरस्तोभाक्षर[1]विषयाण्युपासनान्तराणि संहतान्युपदिश्यन्तेऽनन्तरं सामावयवसम्बद्धत्वाविशेषात्—अयं वावाऽयमेव लोको हाउकारः स्तोभो रथन्तरे साम्नि प्रसिद्धः—"इयं वै रथन्तरमि"ति । अस्मात्सम्बन्धसामान्याद्धाउकारस्तोभोऽयं लोक इत्येवमुपासीत । वायुर्हाइकारः । वामदेव्ये सामनि हाइकारः प्रसिद्धः । वाय्वप्सम्बन्धश्च वामदेव्यस्य साम्नो योनिरित्यस्मात्सामान्याद्धाइकारं वायुदृष्ट्योपासीत । चन्द्रमा अथकारः । चन्द्रदृष्ट्याऽथकारमुपासीत । अन्ने हीदं स्थितम् । अन्नात्मा चन्द्रः । थकाराकारसामान्याच्च । आत्मेहकारः । इहेति स्तोभः प्रत्यक्षो ह्यात्मेति व्यपदिश्यते । इहेति च स्तोभः । तत्सामान्यात् । अग्निरीकारः । ईनिधनानि चाऽऽग्नेयानि सर्वाणि सामानीत्यतस्तत्सामान्यात् ॥ १ ॥

आदित्य ऊकारः । उच्चैरूर्ध्वं सन्तमादित्यं गायन्त्यूकारश्चायं स्तोभः । आदित्यदैवत्ये साम्नि स्तोभ ऊ इत्यादित्य ऊकारः। निहव इत्याह्वानमेकारः स्तोभः। एहीति चाऽऽह्वयन्तीति तत्सामान्यात्। विश्वे देवा औहोयिकारो

नरेन्द्रपुरीयं टिप्पणम्

तदुपासनविधेरवसरमाह—भक्तिविषयोपासनमिति । मैथुनेच्छावतीनामपां "वायुः पृष्ठे न्यवर्तत ततो वामदेव्यं सामाभवदि"ति श्रुतेर्वायुसम्बन्धस्य योनित्वमित्यर्थः ॥ १ ॥

आनन्दगिरिटीका

ननु भक्तिसम्बन्धानामुपासनानां जातत्वात्समस्तस्येत्यादिवक्तव्ये किमनन्तरखण्डेनेत्याशङ्क्याऽऽह—भक्तीति। इत्यतोऽस्मात्प्रसङ्गादिति यावत् । ऋगक्षराणि गीयन्ते । तद्व्यतिरिक्तानि वाच्यशून्यानि गीतिसिद्ध्यर्थानि स्तोभाक्षराणि परिभाष्यन्ते । तानि च कर्मापूर्वनिर्वृत्तिद्वारेण फलवत्त्वादुपास्यानि तदुपास्तिविधिपरमुत्तरं वाक्यमित्यर्थः । वक्ष्यमाणोपासनानां प्रत्येकं स्वातन्त्र्यं नास्तीत्याह—संहतानीति । तेषामनन्तरमुपदेशे हेतुमाह—सामावयवेति । न चैवंविधस्तोभो नास्तीति वाच्यमित्याह—रथन्तर इति । तथाऽपि कथं पृथिवीदृष्ट्या यथोक्तस्तोभस्योपास्यत्वं तदाह—इयमिति । इयं वै रथन्तरमित्यत्र पृथिव्या रथन्तरत्वं श्रुतं, प्रस्तुतश्च स्तोभो रथन्तरेऽस्तीत्युक्तं; तथा च यथोक्तात्सम्बन्धरूपात्सादृश्यात्पृथिवीदृष्ट्या हाउकार उपास्य इत्यर्थः। कथं पुनर्वायुदृष्ट्या हाइकारस्योपास्यत्वं तत्राऽऽह—वाय्वप्सम्बन्धश्चेति । हाइकारो वामदेव्ये साम्नि प्रसिद्धः । तस्य च वायोरपां च सम्बन्धो योनिर्मैथुनेच्छावतीनामपां वायुः पृष्ठे न्यवर्तत ततो वामदेव्यं सामाभवदिति श्रुतेः। तस्माद्यथोक्ताद्वामदेव्यसामसम्बन्धसामान्याद्वायुदृष्ट्या हाइकारमुपासीतेत्यर्थः। कथमथकारस्य चन्द्रदृष्ट्योपासनं तत्राऽऽह—अन्ने हीति। तथा च थकारसामान्याद्यथोक्तोपास्तिसिद्धिरिति शेषः। थकारवदकारसामान्याच्च चन्द्रदृष्ट्याऽथकारमुपासीतेत्याह—थकारेति। अथकारे तावद्यथोक्तोऽकारोऽन्नात्मनि चन्द्रमस्यपि सोऽस्तीति तद्युक्तं यथोक्तमुपासनमित्यर्थः। प्रथममप्रत्यक्षः पश्चात्प्रत्यक्षीभवन्निति शेषः । तत्सामान्यं इहेति व्यपदिश्यमानत्वं, तस्मादात्मदृष्टिरिहेति स्तोभे कर्तव्येत्याह—तत्सामान्यादिति । अग्निदृष्टिरीकाराख्ये स्तोभाक्षरे कर्तव्येत्यत्र हेतुमाह—ईनिधनानीति । ईकारो निधायते येषु सामसु तान्याग्नेयानि प्रसिद्धानि । तथा च तेष्वग्निरीकारश्चेत्युभयोर्भावादस्मात्सादृश्यादीकारमग्निदृष्ट्योपासीतेत्यर्थः ॥ १ ॥

ऊकारमादित्यदृष्ट्या कथमुपासीतेत्याशङ्क्याऽऽह—उच्चैरिति । ऊकारादित्ययोर्विधान्तरेण सादृश्यमाह—आदित्येति। एकारसामान्यान्निहवदृष्टिरेकारे स्तोभे कार्येत्याह—निहव इत्यादि । औहोयिकारस्य विश्वेदेव-

१. स्तोभाक्षराणि गीतिकालपरिपूरकत्वेन ऋगक्षरातिरेकेण गानकाले सामगानकृद्भिः स्वीक्रियमाणानि विहितान्यक्षराणि । तत्र निरर्थकःस्तोभः "हा उ" इत्यादिः प्रजापतेर्हृदयं इत्यादिश्च। सार्थकस्तोभाश्च "सेतूंस्तर" इत्यादयः ।

अनिरुक्तस्त्रयोदशः स्तोभः सञ्चरो हुङ्कारः ॥ ३ ॥
दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति
य एतामेवँ साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥

इति छान्दोग्योपनिषदि प्रथमाध्यायस्य त्रयोदशः खण्डः

इति छान्दोग्योपनिषद्ब्राह्मणे प्रथमोऽध्यायः समाप्तः

वैश्वदेव्ये साम्नि स्तोभस्य दर्शनात्। प्रजापतिर्हिङ्कारः। आनिरुक्त्याद्धिङ्कारस्य चाव्यक्तत्वात्। प्राणः स्वरः। स्वर इति स्तोभः। प्राणस्य च स्वरहेतुत्वसामान्यात्। अन्नं या या इति स्तोभोऽन्नम्। अन्नेन हीदं यातीत्यतस्तत्सामान्यात्। वागिति स्तोभो विराडन्नं देवताविशेषो वा। वैराजे साम्नि स्तोभदर्शनात् ॥ २ ॥

अनिरुक्तोऽव्यक्तत्वादिदं वेदं वेति निर्वक्तुं न शक्यत इत्यतः सञ्चरो विकल्प्यमानस्वरूप इत्यर्थः। कोऽसावित्याह—त्रयोदशः स्तोभो हुङ्कारः। अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्य इत्यभिप्रायः ॥ ३ ॥

दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम्। य एतामेवं यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं दर्शनं वेद तस्यैतद्यथोक्तं फलमित्यर्थः। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः। सामावयवविषयोपासनाविशेषपरिसमाप्त्यर्थो वेति ॥ ४ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये प्रथमाध्यायस्य त्रयोदशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ छान्दोग्योपनिषद्भाष्ये प्रथमोऽध्यायः समाप्तः

## नरेन्द्रपुरीयं टिप्पणम्

आनिरुक्त्यादिति। नीलपीतादिरूपेण निरुक्त्यविषयत्वात् प्रजापतेरित्यर्थः ॥ २ ॥

अव्यक्तत्वादिति। रूपादिरहितत्वादनिरुक्तः कारणात्मा अनेकधा कार्यरूपेण सञ्चरतीति सञ्चारः शाखाभेदेन हुङ्कारोऽपि विकल्प्यमानस्वरूपः त्रयोदशोऽयं वाव लोक इत्यारभ्य गण्यमानः ॥ ३-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां प्रथमाध्यायस्य त्रयोदशः खण्डः

इति शाङ्करछान्दोग्योपनिषद्भाष्यटिप्पणे प्रथमोऽध्यायः

## आनन्दगिरिटीका

दृष्ट्योपास्तौ हेतुमाह—वैश्वदेव इति। प्रजापतिदृष्ट्या हिङ्कारोपास्यत्वे हेतुः—आनिरुक्त्यादिति। नीलपीतादिरूपेण निरुक्त्यविषयत्वात्प्रजापतेरित्यर्थः। अव्यक्तत्वाद्रूपादिरहितत्वादित्यर्थः। प्राणस्य चेति चकारात्स्वरस्य चेत्यर्थः। स्वरहेतुत्वं तन्निर्वर्तकत्वेन तदात्मकत्वम्। अन्नं या इति वाक्यं व्याचष्टे—या इति। अन्नदृष्टिर्या इति स्तोभे कर्तव्येत्यत्र हेतुमाह—अन्नेति। विराड्दृष्टिर्वागिति स्तोभे कार्येत्यत्र हेतुमाह—वैराज इति ॥ २ ॥

अनिरुक्तः कारणात्मा। तस्यानिरुक्तत्वं साधयति—अव्यक्तत्वादिति। स चानेकधा कार्यरूपेण सञ्चरतीति सञ्चरः। हुङ्कारोऽपि शाखाभेदेन विकल्प्यमानस्वरूपस्त्रयोदशश्चायं वावेत्यारभ्य गण्यमानस्ततश्च कारणदृष्ट्या हुङ्कारमुपासीतेत्यर्थः। उक्तमेवोपपादयति—अव्यक्तो हीति। तत्र विकल्प्यमानत्वं हेतुः ॥ ३ ॥

नैतानि व्यस्तान्युपासनानि प्रत्येकं फलाश्रवणात्। समस्तं पुनरेकमिदमुपासनमेकफलत्वादित्यभिप्रेत्याऽऽह—स्तोभाक्षरेति। उपनिषदं वेदोपनिषदं वेदेत्यावृत्तेस्तात्पर्यमाह—द्विरभ्यास इति। प्रथमप्रपाठकव्याख्यानसमाप्तावितिशब्दः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां प्रथमाध्यायस्य त्रयोदशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्यभाष्यटीकायां प्रथमोऽध्यायः समाप्तः

## अथ द्वितीयोऽध्यायः

ॐ समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥

तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥

"ओमित्येतदक्षरमि"त्यादिना सामावयवविषयमुपासनमनेकफलमुपदिष्टम्। अनन्तरं च स्तोभाक्षरविषयमुपासनमुक्तम् । सर्वथाऽपि सामैकदेशसम्बद्धमेव तदित्यथेदानीं समस्ते साम्नि समस्तसामविषयाण्युपासनानि वक्ष्यामीत्यारभते श्रुतिः । युक्तं ह्येकदेशोपासनानन्तरमेकदेशिविषयमुपासनमुच्यत इति ।

समस्तस्य सर्वावयवविशिष्टस्य पाञ्चभक्तिकस्य साप्तभक्तिकस्य चेत्यर्थः। खल्विति वाक्यालङ्कारार्थः। साम्न उपासनं साधु। समस्ते साम्नि [१]साधुदृष्टिविधिपरत्वान्न पूर्वोक्तोपासननिन्दार्थत्वं साधुशब्दस्य। ननु पूर्वत्राविद्यमानं साधुत्वं समस्ते साम्न्यभिधीयते। न। साधु सामेत्युपास्त इत्युपसंहारात्। साधुशब्दः शोभनवाची। कथमवगम्यत इत्याह—यत्खलु लोके साधु शोभनमनवद्यं प्रसिद्धं तत्सामेत्याचक्षते कुशलाः। यदसाधु विपरीतं तदसामेति ॥ १ ॥

तत्तत्रैव साध्वसाधुविवेककरण उताप्याहुः—साम्नैनं राजानं सामन्तं चोपागादुपगतवान्। कोऽसौ यतोऽसाधुत्वप्राप्त्याशङ्का ? स इत्यभिप्रायः। शोभनाभिप्रायेण साधुनैनमुपागादित्येव तत्तत्राऽऽहुर्लौकिका बन्धनाद्यसाधुकार्यमपश्यन्तः। यत्र पुनर्विपर्ययो बन्धनाद्यसाधुकार्यं पश्यन्ति तत्रासाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः॥२॥

### नरेन्द्रपुरीयं टिप्पणम्

सामावयवसम्बद्धं ध्यानमुक्त्वा फलार्थिनः। समग्रसामसम्बद्धं ध्यानमत्र विधीयते ॥

"समस्तस्योपासनं साध्वि"ति वचनादवयवोपासनं निन्द्यते इति नाशङ्कनीयमित्याह—समस्त इति। आर्थिकीं निन्दां शङ्कते—नन्विति। विद्यमानत्वस्य विशेषणस्यानुपादानादर्थादप्यविद्यमानत्वं न लभ्यत इत्याह—न साध्विति ॥ १ ॥

असाधुत्वप्राप्त्याशङ्केति। औद्धत्यादिना ॥ २ ॥

### आनन्दगिरिटीका

पूर्वोत्तरप्रपाठकयोः सङ्गतिं दर्शयति—ओमित्येतदित्यादिना। सर्वथाऽपि सामावयवविषयत्वे स्तोभाक्षरविषयत्वे चेत्यर्थः। इतिशब्दो हेत्वर्थः। यस्मादेकदेशविषयाण्युपासनानि वृत्तानि तस्मात्तानि समस्तविषयाणि वक्तव्यानीत्यर्थः। एकदेशोपास्तिव्याख्यानन्तर्यमथशब्दार्थः। कथमुक्तवक्ष्यमाणोपासनयोरिदं पौर्वापर्यं तत्राऽऽह—युक्तं हीति। समस्तस्योपासनं साध्विति वचनादवयवोपासनं निन्दितत्वादननुष्ठेयमित्याशङ्क्याऽऽह—समस्त इति। अर्थादस्ति निन्देति शङ्कते—नन्विति। पूर्वत्रापि साधुत्वस्य विद्यमानस्यैव विशेषणत्वेनानुपादानान्नार्थादपि निन्देति परिहरति—न साध्विति। यत्खल्वित्यादि व्याख्यातुं पातनिकामाह—साधुशब्द इति। वाक्यमवतार्य व्याचष्टे—कथमित्यादिना ॥ १ ॥

किं पुनरेवं विवेककरणे कारणमित्याशङ्क्याऽऽह—तत्तत्रेति। विवेककरणोपायभेदविकल्पार्थमुतेत्युभयत्र पदम्। साम्नैनमित्यादिना साधुनेत्यादिवाक्यस्य पौनरुक्त्यमाशङ्क्य व्याख्यानव्याख्येयभावान्मैवमित्याह—शोभनेति। शोभनकार्यदर्शने सतीति यावत्। तत्रैव हेत्वन्तरमाह—बन्धनादिति। असाम्नेत्यादि व्याचष्टे—यत्रेति ॥ २ ॥

---

१. साधुः—अपूर्वविशिष्टदधिपयःप्रभृतयः, तत्कार्याः लोकाः ततश्च साधुत्वविशिष्टपृथिव्यादिलोकदृष्टिः कार्या।

अथोताप्याहुः साम नो बतेति यत् साधु भवति साधु बतेत्येव
तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ॥ ३ ॥
स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह
यदेनँ् साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

इति छान्दोग्योपनिषदि द्वितीयाध्यायस्य प्रथमः खण्डः

लोकेषु पञ्चविधँ् सामोपासीत पृथिवी हिङ्कारः । अग्निः
प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥

अथोताप्याहुः स्वसंवेद्यं साम नोऽस्माकं बतेत्यनुकम्पयतः संवृत्तमित्याहुः । एतत्तैरुक्तं भवति यत्साधु भवति साधु बतेत्येव तदाहुः । विपर्यये जातेऽसाम नो बतेति । यदसाधु भवत्यसाधु बतेत्येव तदाहुः तस्मात्सामसाधुशब्दयोरेकार्थत्वं सिद्धम् ॥ ३ ॥

अतः स यः कश्चित्साधु सामेति साधुगुणवत्सामेत्युपास्ते समस्तं साम साधुगुणवद्विद्वांस्तस्यैतत्फलमभ्याशो ह क्षिप्रं ह; यदिति क्रियाविशेषणार्थमेनमुपासकं साधवः शोभना धर्माः श्रुतिस्मृत्यविरुद्धा आ च गच्छेयुरागच्छेयुश्च न केवलमागच्छेयुरुप च नमेयुरुपनमेयुश्च भोग्यत्वेनोपतिष्ठेयुरित्यर्थः ॥ ४ ॥

इति छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य प्रथमः खण्डः

कानि पुनस्तानि साधुदृष्टिविशिष्टानि समस्तानि सामान्युपास्यानीति । इमानि तान्युच्यन्ते लोकेषु पञ्चविधमित्यादीनि । ननु लोकादिदृष्ट्या तान्युपास्यानि साधुदृष्ट्या चेति विरुद्धम् । न । साध्वर्थस्य लोकादिकार्येषु कारणस्यानुगतत्वात् मृदादिवद्घटादिविकारेषु । साधुशब्दवाच्योऽर्थो धर्मो ब्रह्म वा सर्वथाऽपि लोकादिकार्येष्वनु-

नरेन्द्रपुरीयं टिप्पणम्

कार्यगम्यं साधुत्वं पूर्वत्रोदाहृतमिदानीं स्वानुभवगम्यमुदाहरति—अथोतेति ॥ ३ ॥
क्रियाविशेषणमिति । आगच्छेयुरिति यत् तत् क्षिप्रमेवेत्यर्थः ॥ ४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य प्रथमः खण्डः

एकस्योभयदृष्टिविषयत्वं न सम्भवति । न हि घटदृष्टिगोचरः पटदृष्टेरपि गोचरः स्यादिति शङ्कते—नन्विति । अविरुद्धदृष्टिद्वयमेकस्मिन्नपि घटत इत्याह—न साध्वर्थस्येति । धर्म इति । कर्मापूर्वसहितो दधिपयः-

आनन्दगिरिटीका

कार्यगम्यं साधुत्वमसाधुत्वं चोक्त्वा स्वानुभवगम्यं तदुपन्यस्यति—अथेति । कार्यात्तस्य साधुत्वादिविवेकानन्तर्यमथशब्दार्थः । स्वसंवेद्यं साधुत्वमसाधुत्वं चेति शेषः । तत्र साधुत्वं स्वानुभवसिद्धमित्येतद्व्युत्पादयति—सामेति । यत्साध्वित्यादिवाक्यस्य पूर्वेण पौनरुक्त्यमाशङ्क्याऽऽह—एतदिति । असामेत्यादि व्याचष्टे—विपर्यय इति । बतेत्याहुरिति सम्बन्धः । किं तैरुक्तं भवति तदाह—यदसाध्विति । साधुशब्दः शोभनवाचीत्युक्तमुपसंहरति—तस्मादिति ॥ ३ ॥

तयोरेकार्थत्वमतःशब्दार्थः । उपासकमेव विशिनष्टि—समस्तमिति । आगच्छेयुरिति यत्तत्क्षिप्रमेवेति क्रियाविशेषणत्वं यदित्यस्य द्रष्टव्यम् ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य प्रथमः खण्डः

एकस्योभयदृष्टिविषयत्वमयुक्तम् । नहि घटदृष्टिगोचरः सन्पटदृष्टेरपि गोचरः स्यादिति शङ्कते—नन्विति । एकस्मिन्नपि प्रस्तुतं दृष्टिद्वयमविरुद्धमिति समाधत्ते—न साध्वर्थस्येति । यथा घटादिषु मृदाद्यनुगतं तथा साधुशब्दार्थस्य कारणस्य लोकादिषु कार्येष्वनुगतत्वात्तद्दृष्टौ साधुदृष्टेरनुगमात्र दृष्टिद्वयस्यैकत्र विरोधोऽस्तीत्यर्थः । तदेव स्फुटयति—साधुशब्देति । साध्वर्थस्य लोकेष्वनुगतिरपिशब्दार्थः । यत्रेति देवदत्तोक्तिः । सा घटादिदृष्टिस्तत्रेति

गतम्। अतो यथा यत्र घटादिदृष्टिर्मृदादिदृष्ट्यनुगतैव सा। तथा साधुदृष्ट्यनुगतैव लोकादिदृष्टिः। धर्मादिकार्यत्वाल्लोकादीनाम्। यद्यपि कारणत्वमविशिष्टं ब्रह्मधर्मयोः, तथाऽपि धर्म एव साधुशब्दवाच्य इति युक्तं "साधुकारी साधुर्भवती"ति धर्मविषये साधुशब्दप्रयोगात्। ननु लोकादिकार्येषु कारणस्यानुगतत्वादर्थप्राप्तैव तद्दृष्टिरिति साधु सामेत्युपास्त इति न वक्तव्यम्। न। शास्त्रगम्यत्वात्तद्दृष्टेः। सर्वत्र हि शास्त्रप्रापिता एव धर्मा उपास्या न विद्यमाना अप्यशास्त्रीयाः।

लोकेषु पृथिव्यादिषु पञ्चविधं पञ्चभक्तिभेदेन पञ्चप्रकारं साधु समस्तं सामोपासीत। कथम्। पृथिवी हिङ्कारः। लोकेष्विति या सप्तमी तां प्रथमात्वेन विपरिणमय्य पृथिवीदृष्ट्या हिङ्कारे पृथिवी हिङ्कार इत्युपासीत। व्यत्यस्य वा सप्तमीश्रुतिं लोकविषयां हिङ्कारादिषु पृथिव्यादिदृष्टिं कृत्वोपासीत। तत्र पृथिवी हिङ्कारः। प्राथम्य-

नरेन्द्रपुरीयं टिप्पणम्

प्रभृत्यवयवसमुदायः तत्परिणामत्वात् कार्यस्य तदनुगतिरुपपद्यते। कारणमेव विचित्रकार्यरूपेण शोभत इति साधुशब्दवाच्यमुक्तम्। तत्रापि विशेषमाह—यद्यपीति। अपूर्वत्वाभावेन विधिमाक्षिप्य समाधत्ते—नन्वित्यादिना। कारणानुगमस्यानुमानिकत्वेऽपि तद्दृष्टिकरणमपूर्वमेवेत्यर्थः। उत्कृष्टदृष्टिर्निकृष्टे विधीयत इति न्यायात् लोकानां फलत्वेनोत्कृष्टत्वात्तद्दृष्टिः साधनभूतेषु सामभागेषु विधातव्या सप्तमीपरिणम्येत्याह—लोकेष्विति। व्यत्यस्य वेति। लोकसम्बन्धा सप्तमी हिङ्कारादिषु नेतव्या। हिङ्कारादिसम्बन्धा च द्वितीया, लोकसम्बद्धतया नेतव्या। अध्यासस्य सादृश्यनिबन्धनत्वात् स्फुटसादृश्याभावेऽपि यथासम्भवं किञ्चित्सादृश्यं कल्पयति—प्राथम्येत्यादिना॥ १॥

आनन्दगिरिटीका

शेषः। ननु साधुशब्दार्थयोर्धर्मब्रह्मणोस्तुल्यं कारणत्वम्। तथा चात्र साधुशब्दार्थो न व्यवस्थितः स्यादन्याय्यं चानेकार्थत्वमित्याशङ्क्याऽऽह—यद्यपीति। धर्म एवेत्यत्र तथाऽपीति च वक्तव्यम्। ब्रह्मणि तु परमानन्दे साधुशब्दो भक्त्या गमयितव्यः[1]। न च धर्मस्य निमित्तकारणत्वान्न कार्येऽनुगतिरिति वाच्यम्। कर्मापूर्वसहितदधिपयःप्रभृत्यवयवसमुदायस्य धर्मत्वात्तत्परिणामत्वाच्च कार्यस्य तत्र तदनुगतिसिद्धेरिति द्रष्टव्यम्। अपूर्वत्वाभावेन विधिमाक्षिपति—नन्विति। कारणानुगमस्याऽऽनुमानिकत्वेऽपि तद्दृष्टिकरणमपूर्वमेवेति परिहरति—न शास्त्रगम्यत्वादिति। [2]"यश्चार्थादर्थो न स चोदनार्थ" इति न्यायेनोक्तं विवृणोति—सर्वत्रेति।

लोकेष्वित्यादिवाक्ये पञ्चविधसामदृष्ट्या लोकानामुपास्यत्वप्रतीतेरत्रापि हिङ्कारदृष्ट्या पृथिव्या ध्येयत्वे प्राप्ते प्रत्याह—लोकेष्वितीति। लोकाः पञ्चविधं सामेत्युपासीतेति विभक्तिविपरिणामेन प्रथमवाक्यार्थपर्यवसानात्तदनुसारेणात्रापि पृथिवीदृष्ट्या हिङ्कारे ध्येये सति पृथिवी हिङ्कार इति पृथिवीदृष्टिमारोप्य हिङ्कारमुपासीतेति द्वितीयवाक्यं पर्यवस्यतीत्यर्थः। लोकसम्बद्धा सप्तमीश्रुतिर्हिङ्कारादिषु तत्सम्बद्धा च द्वितीया लोकेषु नेतव्या। तथा च लोकविषया सप्तमी हिङ्कारादिषु तत्सम्बद्धा च द्वितीया लोकेषु व्यत्यस्य पृथिव्यादिदृष्टिं हिङ्कारादिषु कृत्वोपासीतेति पक्षान्तरमाह—व्यत्यस्येति। [3]"ब्रह्मदृष्टिरुत्कर्षादि"ति न्यायेन पक्षद्वयमुक्त्वा प्रतिवाक्यं व्याचष्टे—तत्रेति। उक्तरीत्याऽन्योपासने प्रस्तुते सतीति यावत्। अध्यासस्य सादृश्यनिबन्धनत्वाद्व्यक्तसादृश्याभावेऽपि यथाकथञ्चित्कल्पनीयमिति मत्वाऽऽह—प्राथम्येति। लोकेषु पृथिव्याः सामसु च हिङ्कारस्य च प्राथम्यमस्ति

१. तथा च साधुत्वविशिष्टपृथिव्यादिदृष्टिः कार्या तद्वैशिष्ट्यं च तत्कार्यत्वात्। आनन्दे ब्रह्मणि तद्धेतुत्वे लक्षणा।

२. यश्चार्थादर्थो न स चोदनार्थः। अत एव दर्शपूर्णमासयोः आज्येन अनूयाजा इज्यन्ते; विकृतौ अग्नीषोमीयपशौ प्रकृतिगताज्ये यत् शुद्धत्वं आर्थिकं तत् नातिदिश्यते। ततश्च विकृतिगतेन पृषदाज्येनानूयाजान् यजतीति वाक्येन प्राकृतशुद्धत्वस्थाने पृषत्ता न विधेया, प्रकृतौ शुद्धताया आर्थिकत्वेन अशास्त्रार्थतया तदनतिदेशात्।

३. ब्रह्मदृष्टिरिति—आदित्यादिमतयश्चाङ्ग उपपत्तेरिति न्याय एवात्रोचितः। तस्मिन्नेवाधिकरणे लोकेषु पञ्चविधं इत्यादिवाक्यानि उदाहृत्य विचारात्। ब्रह्मदृष्टिरिति तु आदित्यो ब्रह्मेत्यादौ आदित्यादौ ब्रह्मदृष्टिचोदना न विपरीतं अपकृष्टे उत्कृष्टदृष्टिः कार्या न विपरीतं प्रत्यवायप्रसङ्गात्।

**अथाऽऽवृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधँ सामोपास्ते ॥ ३ ॥**

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य द्वितीयः खण्डः

सामान्यात् । अग्निः प्रस्तावः । अग्नौ हि कर्माणि प्रस्तूयन्ते । प्रस्तावश्च भक्तिः । अन्तरिक्षमुद्गीथः । अन्तरिक्षं हि गगनम् । गकारविशिष्टश्चोद्गीथः । आदित्यः प्रतिहारः । प्रतिप्राण्यभिमुखत्वान्मां प्रति मां प्रतीति । द्यौर्निधनम् । दिवि निधीयन्ते हीतो गता इत्यूर्ध्वेषूर्ध्वंगतेषु लोकदृष्ट्या सामोपासनम् ॥ १ ॥

अथाऽऽवृत्तेष्ववाङ्मुखेषु पञ्चविधमुच्यते सामोपासनम् । गत्यागतिविशिष्टा हि लोकाः । यथा ते तथादृष्ट्यैव सामोपासनं विधीयते यतोऽत आवृत्तेषु लोकेषु । द्यौर्हिङ्कारः प्राथम्यात् । आदित्यः प्रस्तावः । उदिते ह्यादित्ये प्रस्तूयन्ते कर्माणि प्राणिनाम् । अन्तरिक्षमुद्गीथः पूर्ववत् । अग्निः प्रतिहारः । प्राणिभिः प्रतिहरणादग्नेः । पृथिवी निधनम् । तत आगतानामिह निधनात् ॥ २ ॥

उपासनफलं—कल्पन्ते समर्था भवन्ति हास्मै लोका ऊर्ध्वाश्चाऽऽवृत्ताश्च गत्यागतिविशिष्टा भोग्यत्वेन व्यवतिष्ठन्त इत्यर्थः । य एतदेवं विद्वाँल्लोकेषु पञ्चविधं समस्तं साधु सामेत्युपास्त इति सर्वत्र योजना पञ्चविधे सप्तविधे च ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य द्वितीयः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

द्यौर्हिङ्कार इत्याद्युपासनान्तरं न भवतीति सूचयन्नाह—गत्यागतीति । पूर्ववदित्यक्षरसाम्यादित्यर्थः । सप्तविधे च साधुगुणस्य योजना द्रष्टव्येत्यर्थः ॥ २-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य द्वितीयः खण्डः

आनन्दगिरिटीका

तस्मात्सामान्यादिति यावत् । अग्निदृष्ट्या प्रस्तावोपासने प्रस्तावत्वं सामान्यमाह—अग्नौ हीति । अन्तरिक्षदृष्ट्योद्गीथोपासने गकारसम्बन्धसादृश्यं दर्शयति—अन्तरिक्षं हीति । आदित्यदृष्ट्या प्रतिहारोपास्तौ प्रतिशब्दसामान्यं हेतुमाह—प्रतिप्राणीति । द्युदृष्ट्या निधनोपासने निधनत्वसामान्यमाह—दिवीति । उक्तमुपासनमुपसंहरति—इत्यूर्ध्वेष्विति ॥ १ ॥

अथाऽऽवृत्तेष्विति वाक्यं व्याकरोति—अथेति । पृथिवीमुख्येषु द्युपर्यन्तेषु पञ्चविधसामोपासनकथनानन्तर्यमथशब्दार्थः । पूर्वोत्तरग्रन्थयोर्मिथो विरोधं शङ्कित्वा परिहरति—गत्यागतीति । यथा वा ते गतिविशिष्टास्तथादृष्ट्यैव हिङ्काराद्युपासनं विहितम् । यथा चाऽऽगतिविशिष्टास्ते तथादृष्ट्यैव तदुपासनं विधीयते । तथा च शास्त्रानुसारेण क्रियमाणयोरुपासनयोर्न विरोधोऽस्तीत्यर्थः । द्विधोपास्तिविषयसन्दर्भयोर्विरोधाभावमनूद्य फलितमुपासनं दर्शयति—यत इति । द्युलोकदृष्ट्या हिङ्कारस्योपास्यत्वे हेतुमाह—प्राथम्यादिति । आवृत्तौ द्युलोकस्याऽऽरम्भे च हिङ्कारस्य प्राथम्यं द्रष्टव्यम् । आदित्यदृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह—उदित इति । पूर्ववदिति गकाराक्षरसामान्यं विवक्षितम् । अग्निदृष्ट्या प्रतिहारोपास्तौ हेतुमाह—प्राणिभिरिति । प्रतिहरणमितस्ततो नयनम् ॥ २ ॥

साध्विति पदं सर्वत्र द्रष्टव्यमित्याह—इति सर्वत्रेति । सर्वत्रेत्यस्य व्याख्या—पञ्चविध इत्यादिना ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य द्वितीयः खण्डः

वृष्टौ पञ्चविधँ् सामोपासीत पुरोवातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥

उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधँ् सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य तृतीयः खण्डः

सर्वास्वप्सु पञ्चविधँ् सामोपासीत मेघो यत्संप्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥ १ ॥

वृष्टौ पञ्चविधं सामोपासीत। लोकस्थितेर्वृष्टिनिमित्तत्वादानन्तर्यम्। पुरोवातो हिङ्कारः। पुरोवाताद्युद्ग्रहणान्ता हि वृष्टिः। यथा साम हिङ्कारादिनिधनान्तम्। अतः पुरोवातो हिङ्कारः। प्राथम्यात्। मेघो जायते स प्रस्तावः। प्रावृषि मेघजनने वृष्टेः प्रस्ताव इति हि प्रसिद्धिः। वर्षति स उद्गीथः श्रैष्ठ्यात्। विद्योतते स्तनयति स प्रतिहारः। प्रतिहृतत्वात् ॥ १ ॥

[1]उद्गृह्णाति तन्निधनम्। समाप्तिसामान्यात्। फलमुपासनस्य—वर्षति हास्मा इच्छातः। तथा वर्षयति हासत्यामपि वृष्टौ। य एतदित्यादि पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य तृतीयः खण्डः

सर्वास्वप्सु पञ्चविधं सामोपासीत। वृष्टिपूर्वकत्वात्सर्वासामपामानन्तर्यम्। मेघो यत्संप्लवत एकीभावेनेतरेतरं घनीभवति मेघो यदोन्नतस्तदा संप्लवत इत्युच्यते मेघस्तदाऽपामारम्भः स हिङ्कारः। यद्वर्षति स प्रस्तावः। आपः सर्वतो व्याप्तुं प्रस्तुताः। याः प्राच्यः स्यन्दन्ते स उद्गीथः श्रैष्ठ्यात्। याः प्रतीच्यः स प्रतिहारः प्रतिशब्दसामान्यात्। समुद्रो निधनम्। तन्निधनत्वादपाम् ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

लोकस्थितिराहुतिद्वारेण वृष्टौ निमित्तं भवतीति लोकदृष्ट्यनन्तरं वृष्टिदृष्टिर्विधीयते इत्याह—लोकस्थितिरिति ॥ १ ॥

उर्ध्वं गृह्णाति जलं रश्मिभिस्सविता शरदीति वृष्ट्यन्तो लक्ष्यते—उद्गृह्णातीति ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य तृतीयः खण्डः

प्राच्यो गङ्गाद्यास्तासु श्रैष्ठ्यं प्रसिद्धम् ॥ १ ॥

आनन्दगिरिटीका

ननु लोकदृष्ट्या सामोपास्त्यनन्तरं किमिति वृष्टिदृष्ट्या तदुपास्तिरुपन्यस्यते तत्राऽऽह—लोकस्थितेरिति। पुरोवातदृष्ट्या हिङ्कारोपासने हेतुमाह—पुरोवातादीति। उद्ग्रहणं वर्षोपसंहरणम्। अतःशब्दार्थमाह—प्राथम्यादिति। मेघजन्मदृष्ट्या प्रस्तावोपास्तौ हेतुमाह—प्रावृषीति। वर्षणदृष्ट्योद्गीथोपासने हेतुमाह—श्रैष्ठ्यादिति। विद्योतनस्तनयित्नुदृष्ट्या प्रतिहारोपासने कारणमाह—प्रतिहृतत्वादिति। विद्युतां स्तनयित्नूनां च प्रतिहृतत्वं विप्रकीर्णत्वं तेन प्रतिशब्दसादृश्याद्विद्योतनादिदृष्ट्या कर्तव्या प्रतिहारोपास्तिरित्यर्थः ॥ १ ॥

उद्ग्रहणदृष्ट्या निधनोपासने निदानमाह—समाप्तीति। वर्षति पर्जन्ये तदनुमन्तृत्वमकिञ्चित्करमित्याशङ्क्याऽऽह—असत्यामपीति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य तृतीयः खण्डः

किमिति वृष्टिदृष्टेरनन्तरमपां दृष्टिः साम्नि क्षिप्यते तत्राऽऽह—वृष्टिपूर्वकत्वादिति। मेघसम्प्लवदृष्ट्या हिङ्कारमारम्भसामान्यादुपासीतेत्याह—मेघ इति। वर्षदृष्ट्या प्रस्तावस्योपास्यत्वे हेतुमाह—आप इति। प्राच्यो नद्यो गङ्गाद्याः। प्रतीच्यस्तु नर्मदाद्या इति भेदः ॥ १ ॥

१. ऊर्ध्वं गृह्णाति समाप्तिं गच्छति।

न हाप्सु प्रैत्यप्सुमान्भवति य एतदेवं विद्वान्सर्वास्वप्सु पञ्चविधँ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य चतुर्थः खण्डः

ऋतुषु पञ्चविधँ सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः
प्रस्तावो वर्षा उद्‌गीथः शरत्प्रतिहारो हेमन्तो निधनम् ॥ १ ॥

कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधँ सामोपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वियीयाध्यायस्य पञ्चमः खण्डः

पशुषु पञ्चविधँ सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो
गाव उद्‌गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥

न हाप्सु प्रैति । [1]नेच्छति चेत् । अप्सुमानम्मान्भवति फलम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य चतुर्थः खण्डः

ऋतुषु पञ्चविधं सामोपासीत । ऋतुव्यवस्थाया यथोक्ताम्बुनिमित्तत्वादानन्तर्यम् । वसन्तो हिङ्कारः । प्राथम्यात् । ग्रीष्मः प्रस्तावः । यवादिसंग्रहः प्रस्तूयते हि प्रावृडर्थम् । वर्षा उद्‌गीथः । प्राधान्यात् । शरत्प्रतिहारः । रोगिणां[2] मृतानां च प्रतिहरणात् । हेमन्तो निधनम् । निवाते निधनात्प्राणिनाम् ॥ १ ॥

फलं—कल्पन्ते ह ऋतुव्यवस्थानुरूपं भोग्यत्वेनास्मा उपासकायर्तवः । ऋतुमानार्तवैर्भोगैश्च सम्पन्नो भवतीत्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य पञ्चमः खण्डः

पशुषु पञ्चविधं सामोपासीत । सम्यग्वृत्तेष्वृतुषु पशव्यः काल इत्यानन्तर्यम् । अजा हिङ्कारः । प्राधान्यात्

नरेन्द्रपुरीयं टिप्पणम्

न हाप्सु प्रैति । अनिमित्तं मरणं न प्राप्नोत्यनिच्छन् इत्यर्थः । अम्मानिति । कान्तारादिष्वपि तस्य जलं नलस्येवोपतिष्ठत इत्यर्थः ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य चतुर्थःपञ्चमौ खण्डौ

प्राधान्यादिति—अजाया यज्ञे मुख्यत्वादित्यर्थः । "तस्माज्जाता अजावय" इति श्रुतेरवीनामजासाहचर्यं सिद्धमित्यर्थः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य षष्ठः खण्डः

आनन्दगिरिटीका

तर्हि गङ्गादावपेक्षितमपि मरणं न स्यादिति चेत्तत्राऽऽह—नेच्छति चेदिति । असावुपासको मरुस्थलीष्वपि यथेच्छमुदकवान्भवतीत्यर्थः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य चतुर्थः खण्डः

किमिति सलिलदृष्ट्यनन्तरमृतुदृष्टिः साम्न्यारोप्यते तत्राऽऽह—ऋतुव्यवस्थाया इति ॥ १ ॥

ऋतुव्यवस्थानुरूपं तत्र क्रियाविशेषणम् । कस्यचिदनुपासितुरपि क्रमेण तत्तदृतुफलभोगभागितोपपत्तेर्नेदमुपासनानुरूपं फलमित्याशङ्क्याऽऽह—ऋतुमानिति । सम्पन्नः सर्वदा स्वेच्छावशादिति शेषः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयोध्यायस्य पञ्चमः खण्डः

ऋतुदृष्ट्यनन्तरं साम्नि पशुदृष्ट्यारोपकारणमाह—सम्यगिति । अजादृष्ट्या हिङ्कारोपासने हेतुद्वयमाह—प्राधान्यादित्यादिना । अजाया यज्ञसम्बन्धात्प्राधान्यम् । प्राथम्यं तु प्रथमपाठादिति द्रष्टव्यम् । "ब्राह्मणो

---

१. इच्छातः जले पतित्वा म्रियमाणविषये नेदं फलम् ।

२. रोगिणामारोग्यं प्रति हरणं; मृतानामरण्यं प्रति ।

**भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविधँ सामोपास्ते ॥ २ ॥**

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य षष्ठः खण्डः

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो वाक्प्रस्ताव-श्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाँसि वा एतानि ॥ १ ॥**

प्राथम्याद्वा। "अजः पशूनां प्रथम" इति श्रुतेः। अवयः प्रस्तावः। साहचर्यदर्शनादजादीनाम्। गावः उद्गीथः। श्रैष्ठ्यात्। अश्वाः प्रतिहारः। प्रतिहरणात्पुरुषाणाम्[1]। पुरुषो निधनम्। पुरुषाश्रयत्वात्पशूनाम् ॥ १ ॥

फलं—भवन्ति हास्य पशवः पशुमान्भवति। पशुफलैश्च भोगत्यागादिभिर्युज्यत इत्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य षष्ठः खण्डः

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत। परंपरं वरीयस्त्वगुणवत्प्राणदृष्टिविशिष्टं सामोपासीतेत्यर्थः। प्राणो घ्राणं हिङ्कारः। उत्तरोत्तरवरीयसां प्राथम्यात्। वाक्प्रस्तावः। वाचा हि प्रस्तूयते सर्वम्। वाग्वरीयसी प्राणात्। अप्राप्तमप्युच्यते वाचा, प्राप्तस्यैव तु गन्धस्य ग्राहकः प्राणः। चक्षुरुद्गीथः। वाचो बहुतरविषयं प्रकाशयति चक्षुरतो वरीयो वाचः, उद्गीथः। श्रैष्ठ्यात्। श्रोत्रं प्रतिहारः। [2]प्रतिहृतत्वात्। वरीयश्चक्षुषः सर्वतः श्रवणात्। मनो निधनम्। मनसि हि निधीयन्ते पुरुषस्य भोग्यत्वेन सर्वेन्द्रियाहृता विषयाः। वरीयस्त्वं च श्रोत्रान्मनसः। सर्वेन्द्रियविषयव्यापकत्वात्। अतीन्द्रियविषयोऽपि मनसो गोचर एवेति। यथोक्तहेतुभ्यः परोवरीयांसि प्राणादीनि वा एतानि ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

पशुप्रसूतपयःप्रभृतिभिः प्राणस्थितिरिति पशुदृष्ट्यनन्तरं प्राणदृष्टिविधानम्। प्राणः पञ्चवृत्तिः तत्र रूढत्वात् प्राणशब्दस्येति भास्करव्याख्यानमसत्। मुख्यात् प्राणाद्वागादीनां वरीयस्त्वायोगात् प्राणसम्वादे मुख्यस्यैव श्रैष्ठ्यावधारणात्। श्रोत्रेण कामानां प्रतिहृतत्वात्। वैदिका हि कामाः श्रोत्रेणान्तरात्मनि समर्प्यन्ते ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य सप्तमः खण्डः

आनन्दगिरिटीका

मनुष्याणामजः पशूनां तस्मात्ते मुख्या मुखतो ह्यसृज्यन्ते"ति श्रुतिमजाप्राधान्ये प्रमाणयति—अज इति। "तस्माज्जाता अजावय" इति श्रुतेरजानामवीनां च साहचर्यं हिङ्कारप्रस्तावयोश्च साहचर्यं प्रसिद्धम् ॥ १ ॥

पशुमान्भवतीत्यस्य पूर्वेण पौनरुक्त्यं[3] परिहरति—पशुफलैश्चेति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयोध्यायस्य षष्ठः खण्डः

पशुप्रसूतपयोघृतादिनिमित्तत्वात्प्राणस्थितेस्तद्दृष्ट्यनन्तरं प्राणदृष्ट्या सामोपास्तिं प्रस्तौति—प्राणेष्विति। प्राणशब्दस्य मुख्यप्राणविषयत्वं व्यावर्तयति—घ्राणमिति। मुख्यप्राणादुत्तरेषां वरीयस्त्वासम्भवात्तस्य सर्वश्रेष्ठतया निर्धारितत्वात्परंपरं वरीयसां वागादीनां मध्ये प्रथमभावित्वेनोक्तत्वाद्घ्राणमेवात्र प्राणशब्दमित्यर्थः। कथं प्राणाद्वाचो वरीयस्त्वं तत्राऽऽह—वाचेति। अप्राप्तत्वं व्यवहितत्वम्। चक्षुषो वरीयस्त्वं साधयति—वाच इति। शब्दस्येति यावत्। वाचः शब्दात्सकाशादित्यर्थः। उद्गीथत्वे चक्षुषो हेतुमाह—श्रैष्ठ्यादिति। मनसो वरीयस्त्वे हेत्वन्तरमाह—अतीन्द्रियेति। इति वरीयस्त्वमिति पूर्वेण सम्बन्धः। अप्राप्तमप्युच्यते वाचेत्यादयो यथोक्तहेतवः ॥ १ ॥

---

१. अश्वाः पुरुषान्नयन्ति स्वोद्दिष्टदेशं प्रति हरन्ति।
२. प्रतिशब्दं श्रोत्रस्याहृतत्वात्।
३. पशुमान् इत्यनेन।

परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं
विद्वान्प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य सप्तमः खण्डः

अथ सप्तविधस्य वाचि सप्तविधँ सामोपासीत यत्किञ्च वाचो
हुमिति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥
यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् ॥ २ ॥
दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो
भवति य एतदेवं विद्वान्वाचि सप्तविधँ सामोपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्याष्टमः खण्डः

एतद्दृष्ट्या विशिष्टं यः परोवरीयः सामोपास्ते परोवरीयो हास्य जीवनं भवतीत्युक्तार्थम्। इति तु पञ्चविधस्य साम्न उपासनमुक्तमिति सप्तविधे वक्ष्यमाणविषये बुद्धिसमाधानार्थम्। निरपेक्षो हि पञ्चविधे, वक्ष्यमाणे बुद्धि समाधित्सति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य सप्तमः खण्डः

अथानन्तरं सप्तविधस्य समस्तस्य साम्न उपासनं साध्विदमारभ्यते। वाचीति सप्तमी पूर्ववत्। वाग्दृष्टिविशिष्टं सप्तविधं सामोपासीतेत्यर्थः। यत्किञ्च वाचः शब्दस्य हुमिति यो विशेषः स हिङ्कारो हकारसामान्यात्। यत्प्रेति शब्दरूपं स प्रस्तावः प्रसामान्यात्। यत्—आ, इति स आदिः। आकारसामान्यात्। आदिरित्योङ्कारः। सर्वादित्वात् ॥ १ ॥

यदुदिति स उद्गीथः। उत्पूर्वत्वादुद्गीथस्य। यत्प्रतीति स प्रतिहारः। प्रतिसामान्यात्। यदुपेति स उपद्रव[1] उपोपक्रमत्वादुपद्रवस्य। यन्नीति तन्निधनम्। निशब्दसामान्यात् ॥ २ ॥

दुग्धेऽस्मा इत्याद्युक्तार्थम् ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्याष्टमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

अधिकसंख्याज्ञानस्याल्पसंख्याज्ञानपूर्वकत्वात् पञ्चविधोपासनानन्तरं सप्तविधोपासनमुच्यते। वाक्छब्देन शब्दसामान्यमुच्यते। तत्सप्तधा प्रविभज्य सामावयवेष्वध्यस्योपासनमुक्तम् ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्याष्टमः खण्डः

आनन्दगिरिटीका

उक्तोपसंहारविरहेऽपि वक्ष्यमाणे बुद्धिसमाधानं किं न स्यादित्याशङ्क्याऽऽह—निरपेक्षो हीति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य सप्तमः खण्डः

अधिकसंख्याज्ञानस्याल्पसंख्याज्ञानपूर्वकत्वात्पञ्चविधोपासनानन्तरं सप्तविधोपासनं प्रस्तौति—अथेति। [2]पूर्ववल्लोकेष्वितिवत्सप्तमी च नेतव्येत्यर्थः। वाक्शब्देन शब्दसामान्यमुच्यते तत्सप्तधाप्रविभक्तसामावयवेष्वारोप्योपासनं कर्तव्यमिति वाक्यार्थमाह—वाग्दृष्टीति। यत्किञ्च वाच इति वाक्योपादानं; तस्यार्थमाह—शब्दस्येति ॥ १-३ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्याष्टमः खण्डः

---

१. उपद्रवे उपशब्दस्योपक्रमे सद्भावात्।

२. विभक्तिव्यत्ययेन "साम्नि वाचमुपासीत" इत्येवम्।

**अथ खल्वमुमादित्यँ सप्तविधँ सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥**

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिं कुर्वन्ति हिङ्कारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

अवयवमात्रे साम्न्यादित्यदृष्टिः पञ्चविधेषूक्ता प्रथमे चाध्याये । अथेदानीं खल्वमुमादित्यं समस्ते साम्न्यवयवविभागशोऽध्यस्य सप्तविधं सामोपासीत । कथं पुनः सामत्वमादित्यस्येति । उच्यते । उद्गीथत्वे हेतुवदादित्यस्य सामत्वे हेतुः । कोऽसौ, सर्वदा समो वृद्धिक्षयाभावात्तेन हेतुना सामाऽऽदित्यो मां प्रति मां प्रतीति तुल्यां बुद्धिमुत्पादयति । अतः सर्वेण समोऽतः साम समत्वादित्यर्थः । उद्गीथभक्तिसामान्यप्रवचनादेव लोकादिषूक्तसामान्याद्धिङ्कारादित्वं गम्यत इति हिङ्कारादित्वे कारणं नोक्तम् । सामत्वे पुनः सवितुरनुक्तं कारणं न सुबोधमिति समत्वमुक्तम् ॥ १ ॥

तस्मिन्नादित्येऽवयवविभागश इमानि वक्ष्यमाणानि सर्वाणि भूतान्यन्वायत्तान्यनुगतान्यादित्यमुपजीव्यत्वेनेति विद्यात् । कथं, तस्याऽऽदित्यस्य यत्पुरोदयाद्धर्मरूपं स हिङ्कारो भक्तिस्तत्रेदं सामान्यं यत्तस्य हिङ्कारभक्तिरूपं तदस्याऽऽदित्यस्य साम्नः पशवो गवादयोऽन्वायत्ता अनुगतास्तद्भक्तिरूपमुपजीवन्तीत्यर्थः । यस्मादेवं तस्मात्ते हिङ्कुर्वन्ति पशवः प्रागुदयात् । तस्माद्धिङ्कारभाजिनो ह्येतस्याऽऽदित्याख्यस्य साम्नः तद्भक्तिभजनशीलत्वाद्धि त एवं वर्तन्ते ॥ २ ॥

नरेन्द्रपुरीयं टिप्पणम्

अनन्तरमादित्यदृष्टिर्विधीयते । तस्य वाङ्मयत्वादानन्तर्यम् । ननु पूर्वमप्यादित्यदृष्टिविशिष्टमुपासनमुक्तं ततः को विशेष इत्यत आह—अवयवमात्र इति । उच्चैःसन्तमादित्यं गायन्तीत्युद्गीथत्वे हेतुरुक्तः श्रुत्या । तथा सामत्वे हेतुरुच्यत इत्यर्थः । मां प्रत्यभिमुख उदित इति वा तुल्यबुद्धिरन्यशब्दस्यान्यत्र वृत्तिः किञ्चिन्निमित्तमन्तरेण न सम्भवतीति सामत्वे हेतुरुच्यते चेत्तर्हि पृथिवीहिङ्कार इत्यादौ श्रुत्या किन्नोक्तः। तत्राह—उद्गीथभक्तिसामान्येति। आदित्यस्योद्गीथेन सह श्रुत्या सामान्याभिधानात् तदनुसारेणास्मदुक्तप्राथम्यादिसामान्यादपि हिङ्कारादित्वमवगन्तुं शक्यत इति श्रुत्या नोक्तं निमित्तमित्यर्थः ॥ १-२ ॥

आनन्दगिरिटीका

वाग्दृष्टेरनन्तरमादित्यदृष्टिर्विधीयते । तस्य वाङ्मयत्वात् । न च तद्विधानं युक्तम् । पूर्वमप्यादित्यदृष्टिविशिष्टोपासनस्योपदिष्टत्वादित्याशङ्क्याऽऽह—अवयवमात्र इति । तस्य सामत्वे हेतुं पृच्छति—कथमिति । सर्वदेत्यादिवाक्यमुत्तरत्वेनाऽऽदत्ते—उच्यत इति । उच्चैः सन्तमादित्यं गायन्तीत्यादित्यस्योद्गीथत्वे हेतुः श्रुत्योक्तः । तथा सामत्वेऽपि तस्य हेतुरुच्यत इत्यर्थः । तमेव प्रश्नपूर्वकं विवृणोति—कोऽसाविति । नोदेता नास्तमेतेत्यादिदर्शनादित्यर्थः। मां प्रतीत्यादि व्याचष्टे—मां प्रतीति। अन्यशब्दस्यान्यत्र वृत्तिर्नान्तरेण किञ्चिन्निमित्तमित्यादित्यस्य सामत्वे हेतुरुच्यते चेत्तद्भेदानां हिङ्कारादित्वेऽपि कुतो निमित्तं श्रुत्या नोक्तमित्याशङ्क्याऽऽह—उद्गीथेति । आदित्यस्योद्गीथेन सहोध्र्वत्वं सामान्यं श्रुत्योक्तं तदनुसारेणास्मदुक्तप्राथम्यादिसामान्यं यथा पृथिव्यादिषु हिङ्कारादित्वं गम्यते तथाऽऽदित्यप्रभेदानामपि हिङ्कारादित्वं शक्यावगममिति श्रुत्या तेषां तद्भावे नोक्तं कारणमित्यर्थः। तर्हि सामत्वेऽपि कारणोत्प्रेक्षासम्भवान्न वक्तव्यं कारणमित्याशङ्क्याऽऽह—सामत्वे पुनरिति । समत्वं तत्र निमित्तमिति यावत् ॥ १ ॥

समः सर्वेणेत्युक्तं व्यक्तीकरोति—तस्मिन्निति । वेदनप्रकारं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । धर्मरूपं सुखकरत्वात् । धर्मकार्यात्मकं रूपमिति यावत् । तद्दृष्ट्या हिङ्कारोपासने प्राथम्यं हेतुः । पशवो यथोक्तमादित्यरूपमुपजीवन्तीत्यत्र किं प्रमाणं तदाह—यस्मादिति । तेषां हिङ्करणं साधयति—तस्मादित्यादि । तद्भक्तिभजनशीलत्वादित्यस्मात्प्रागेव तस्मादित्यस्य सम्बन्धः ॥ २ ॥

अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशँ॒साकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत्सङ्गववेलायाँ॒स आदिस्तदस्य वयाँ॒स्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायाऽऽत्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्याऽऽरण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षँ॒श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत्प्रथमोदिते सवितृरूपं तदस्याऽऽदित्याख्यस्य साम्नः स प्रस्तावस्तदस्य मनुष्या अन्वायत्ताः पूर्ववत् । तस्मात्ते प्रस्तुतिं प्रशंसां कामयन्ते । यस्मात्प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥

अथ यत्सङ्गववेलायां गवां रश्मीनां सङ्गमनं सङ्गमो यस्यां वेलायां, गवां वा वत्सैः सा सङ्गववेला तस्मिन्काले यत्सावित्रं रूपं स आदिर्भक्तिविशेष ओङ्कारस्तदस्य वयांसि पक्षिणोऽन्वायत्तानि । यत एवं तस्मात्तानि वयांस्यन्तरिक्षेऽनारम्बणान्यनालम्बनान्यात्मानमादायाऽऽत्मानमेवाऽऽलम्बनत्वेन गृहीत्वा परिपतन्ति गच्छन्त्यत आकारसामान्यादादिभक्तिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत्सम्प्रति मध्यन्दिन ऋजुमध्यन्दिन इत्यर्थः । स उद्गीथभक्तिस्तदस्य देवा अन्वायत्ताः । द्योतनातिशयात्तत्काले । तस्मात्ते सत्तमा विशिष्टतमाः । प्राजापत्यानां प्रजापत्यपत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥५॥

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णाद्यद्रूपं सवितुः स प्रतिहारस्तदस्य गर्भा अन्वायत्ताः । अतस्ते सवितुः प्रतिहारभक्तिरूपेणोर्ध्वं प्रतिहृताः सन्तो नावपद्यन्ते नाधः पतन्ति तद्द्वारे सत्यपीत्यर्थः । यतः प्रतिहारभाजिनो ह्येतस्य साम्नो गर्भाः ॥ ६ ॥

अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्याऽऽरण्याः पशवोऽन्वायत्ताः । तस्मात्ते पुरुषं

नरेन्द्रपुरीयं टिप्पणम्

गोशब्दवाच्यानां रश्मीनामादित्यमण्डले सङ्गमनं सम्बन्धगमनमित्यर्थः ॥ ३-६ ॥

आनन्दगिरिटीका

सवितरि प्रथमोदिते सति यत्तस्य रूपं तद्दृष्ट्या प्रस्तावस्योपास्यत्वे पूर्वस्मादानन्तर्यं हेतुः । यथोदयात् प्राचीनं रूपं पशुभिरुपजीव्यते तथेत्याह—पूर्ववदिति । उदयात्पराचीनमादित्यरूपं मनुष्या उपजीवन्तीत्यत्र लिङ्गमाह—तस्मादिति । प्रत्यक्षपरोक्षभावेन प्रस्तुतिप्रशंसयोर्भेदः ॥ ३ ॥

गोशब्दवाच्यानां रश्मीनां जगन्मण्डलेन सङ्गमनं सम्बन्धगमनमित्यर्थः । वत्सैः सङ्गमनमिति सम्बन्धः । सङ्गवकालीनमादित्यरूपमारोप्याऽऽदिभक्तेरोङ्कारस्योपास्यत्वे द्वयोराकारसामान्यं हेतुः । पक्षिणां यथोक्तमादित्यरूपमुपजीव्यमित्यत्र हेतुमाह—यत इति ॥ ४ ॥

ऋजुमध्यंदिने यदादित्यस्य रूपं तद्दृष्ट्योद्गीथोपासने श्रैष्ठ्यं हेतुः । तत्कालीनादित्यरूपस्य देवोपजीव्यत्वे हेतुमाह—द्योतनेति । तथाऽपि तस्य देवैरुपजीव्यत्वं कथमिति चेत्तत्राऽऽह—तस्मादिति ॥ ५ ॥

अथ यदूर्ध्वमिति वाक्यमादाय व्याचष्टे—मध्यंदिनादिति । तद्दृष्ट्या प्रतिहारोपासने प्रतिशब्दसामान्यं हेतुः । तस्मिन्काले सवितुरस्तं गिरिं प्रति हरणात् । यथोक्तमादित्यरूपं गर्भैरुपजीव्यमित्यत्र गमकमाह—अत इति । ऊर्ध्वं योनेरुपरिष्टाज्जठरं प्रतीत्यर्थः । यतो गर्भाः पूर्वोक्तविशेषणवन्तोऽत इति यावत् । तद्द्वारं पतनद्वारम् ॥ ६ ॥

तत्र तत्कालीनादित्यदृष्ट्योपद्रवमुपासीत तस्य तदाऽस्ताचलं प्रत्युपद्रवणादित्याह—अथेति । आरण्यानां पशूनां यथोक्तरूपोपजीवनमुपपादयति—तस्मादित्यादिना । श्वभ्रं गर्तं गुहेति यावत् ॥ ७ ॥

अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यँ सप्तविधँ सामोपास्ते ॥ ८ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य नवमः खण्डः

अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधँ सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥१॥

दृष्ट्वा भीताः कक्षमरण्यं श्वभ्रं भयशून्यमित्युपद्रवन्त्युपगच्छन्ति दृष्ट्वोपद्रवणादुपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥

अथ यत्प्रथमास्तमितेऽदर्शनं जिगमिषति सवितरि तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति पितृपितामहप्रपितामहरूपेण दर्भेषु निक्षिपन्ति तांस्तदर्थं पिण्डान्वा स्थापयन्ति। निधनसम्बन्धान्निधनभाजिनो ह्येतस्य साम्नः पितरः। एवमवयवशः सप्तधा विभक्तं खल्वमुमादित्यं सप्तविधं सामोपास्ते यस्तस्य तदापत्तिः फलमिति वाक्यशेषः॥८॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य नवमः खण्डः

मृत्युरादित्यः अहोरात्रादिकालेन जगतः प्रमापयितृत्वात् । तस्याततिरणायेदं सामोपासनमुपदिश्यते—अथ खल्वनन्तरम् । आदित्यमृत्युविषयसामोपासनस्य, आत्मसम्मितं स्वावयवतुल्यतया मितं परमात्मतुल्यतया वा सम्मितमतिमृत्यु मृत्युजयहेतुत्वात् । यथा प्रथमेऽध्याय उद्गीथभक्तिनामाक्षराण्युद्गीथ इत्युपास्यत्वेनोक्तानि, तथेह साम्नः सप्तविधभक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्योपास्यत्वेनोच्यन्ते । तदुपासनेन मृत्युगोचराक्षरसंख्यासामान्येन तं मृत्युं प्राप्य तदतिरिक्ताक्षरेण तस्याऽऽदित्यस्य मृत्योरतिक्रमणायैव संक्रमणं कल्पयति । अतिमृत्यु सप्तविधं सामोपासीत मृत्युमतिक्रान्तमतिरिक्ताक्षरसंख्ययेत्यतिमृत्यु साम । तस्य प्रथमभक्तिनामाक्षराणि हिङ्कार इत्येतत्त्र्यक्षरं भक्तिनाम प्रस्ताव इति च भक्तेस्त्र्यक्षरमेव नाम तत्पूर्वेण समम् ॥१॥

नरेन्द्रपुरीयं टिप्पणम्

श्वभ्रं गर्तम् ॥ ७-८ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य नवमः खण्डः

स्वशब्देन सामोच्यते तस्यावयवा हिङ्कारादयः तन्नामाक्षराणां त्रित्वेन तुल्यतया मितमित्यर्थः । यथा परमात्मा अवगमतो मृत्युतरणहेतुस्तथेदमुपासनमपीति परमात्मतुल्यत्वमित्यर्थः । आत्मसम्मितमतिमृत्यु चेति पदद्वयस्यार्थं सदृष्टान्तं स्फुटयति—यथेत्यादिना । आदित्यस्याहोरात्राभ्यां पौनःपुन्येन मृत्युहेतुत्वमस्ति लोके, अतोऽयं लोको मृत्युविषयत्वाद्दुःखात्मकः तदभावात् ब्रह्मलोकस्सुखात्मक इत्यर्थः ॥ १-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

तत्सवितृरूपमिति शेषः । तद्दृष्ट्या निधनोपासने समाप्तिसामान्यं हेतुः । यथोक्तमादित्यरूपं पितृभिरुपजीव्यमित्यत्र गमकमाह—तस्मादित्यादिना । तत्र तत्राथशब्दस्तत्तदुपासनानन्तर्यार्थो व्याख्येयः । एवं खल्वित्यादिवाक्यमपेक्षितं पूरयन्व्याकरोति —एवमिति ॥ ८ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य नवमः खण्डः

अथ खल्वात्मसंमितमित्यादेस्तात्पर्यमाह—मृत्युरिति । अनन्तरमित्यस्यापेक्षितं निक्षिपति—आदित्येति । स्वशब्देन सामोच्यते तस्यावयवा हिङ्कारादयस्तन्नामाक्षराणां त्रित्वेन त्रित्वेन तुल्यतया मितं ज्ञातं सामेत्यर्थः। यथा परमात्मावगमो मृत्योर्मोक्षणहेतुस्तथेदमुपासनमपीत्यर्थान्तरमाह—परमात्मेति । कीदृगत्रोपासनं विवक्षितमित्यपेक्षायां सदृष्टान्तमुत्तरमाह—यथेत्यादिना । उद्गीथ इत्युद्गीथभक्तेर्नाम तदक्षराणीति यावत् । सामत्वं तेषां नामाक्षराणामित्यध्याहार्यम् । तदुपासनं तेषामक्षराणामादित्यदृष्ट्योपासनमित्यर्थः। मृत्युगोचराक्षरसंख्यैकविंशतित्वलक्षणा। साऽस्त्येकाऽनेकेष्वक्षरेषु। तत्सामान्येन तेष्वक्षरेष्वादित्यदृष्ट्या मृत्युमादित्यमित्यर्थः। अतिक्रमणाय तत्साधनमुपासनमिति शेषः । अतिमृत्यु मृत्योरत्ययहेतुत्वादित्युक्तमेव स्पष्टयति—मृत्युमिति । नामाक्षराणि कथ्यन्त इति शेषः ॥ १ ॥

आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥३॥

निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविँ्शतिरक्षराणि ॥ ४ ॥

एकविँ्शत्याऽऽदित्यमाप्नोत्येकविँ्शो वा इतोऽसावादित्यो द्वाविँ्शेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥ ५ ॥

आप्नोति हाऽऽदित्यस्य जयं परो हास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधँ्सामोपास्ते सामोपास्ते ॥ ६ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य दशमः खण्डः

आदिरिति द्व्यक्षरं, सप्तविधस्य साम्नः संख्यापूरण ओङ्कार आदिरित्युच्यते । प्रतिहार इति चतुरक्षरम् । तत इहैकमक्षरमवच्छिद्याऽऽद्यक्षरयोः प्रक्षिप्यते । तेन तत्सममेव भवति ॥ २॥

उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यतेऽतिरिच्यते । तेन वैषम्ये प्राप्ते साम्नः समत्वकरणायाऽऽह—तदेकमपि सदक्षरमिति त्र्यक्षरमेव भवति । अतस्तत्समम् ॥ ३ ॥

निधनमिति त्र्यक्षरं तत्सममेव भवति । एवं त्र्यक्षरसमतया सामत्वं सम्पाद्य यथाप्राप्तान्येवाक्षराणि संख्यायन्ते—तानि ह वा एतानि सप्तभक्तिनामाक्षराणि द्वाविंशतिः ॥ ४ ॥

तत्रैकविंशत्यक्षरसंख्ययाऽऽदित्यमाप्नोति मृत्युम् । यस्मादेकविंश इतोऽस्माल्लोकादसावादित्यः संख्यया । "द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकवि ँ्श" इति श्रुतेरतिशिष्टेन द्वाविंशेनाक्षरेण परं मृत्योरादित्याज्जयत्याप्नोतीत्यर्थः । यच्च तदादित्यात्परं किं तत् ? नाकं कमिति सुखं तस्य प्रतिषेधोऽकं तन्न भवतीति नाकं कमेवेत्यर्थः । मृत्युविषयत्वाद्दुःखस्य विशोकं च तद्विगतशोकं मानसदुःखरहितमित्यर्थः । तदाप्नोतीति ॥ ५ ॥

उक्तस्यैव पिण्डितार्थमाह—एकविंशतिसंख्ययाऽऽदित्यस्य जयमाप्नोति परो हास्यैवंविद आदित्यजयान्मृत्युगोचरात्परो जयो भवति द्वाविंशत्यक्षरसंख्ययेत्यर्थः । य एतदेवं विद्वानित्याद्युक्तार्थम् । तस्यैतद्यथोक्तं फलमिति द्विरभ्यासः साप्तविध्यसमाप्त्यर्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

आद्यक्षरयोः आदिभक्तिनामाक्षरयोरिति यावत् । तेन प्रक्षेपेण तदादिभक्तिनाम प्रतिहारनाम्ना तुल्यमेवेत्यर्थः ॥ २-३ ॥

ननु यथोक्तया रीत्या चतुर्विंशत्यक्षराणि[1] तत्कथं तानि ह वा एतानि द्वाविंशतिरक्षराणीति तत्राऽऽह—एवमिति ॥ ४ ॥

आदित्यस्यास्माल्लोकादेकविंशत्वे श्रुत्यन्तरं प्रमाणयति—द्वादशेति । हेमन्तशिशिरावेकीकृत्य पञ्चर्तव इत्युक्तम् । आदित्यस्याहोरात्राभ्यां पौनःपुन्येन मृत्युहेतुत्वमस्मिँल्लोके दृश्यते । तदयं लोको मृत्युविषयत्वाद्दुःखात्मकस्तदभावाद्ब्रह्मलोकः सुखात्मक इति मत्वाऽऽह—मृत्युविषयत्वादिति ॥ ५ ॥

पूर्वेणोत्तरस्य पौनरुक्त्यमाशङ्क्याऽऽह—उक्तस्यैवेति । व्याख्यातस्यैव ग्रन्थस्य समुदायार्थः संक्षिप्य बुद्धिसौकर्यार्थमनन्तरग्रन्थेनोच्यते । तन्न पौनरुक्त्यमित्यर्थः । जयमनु परो जयो भवतीति सम्बन्धः । परो हास्येत्युपात्तं वाक्यं व्याकरोति—एवंविद इति । फलमिति शेष इति यावत् । साप्तविध्यं सप्तविधत्वं तदुपेतसामोपासनस्य समाप्त्यर्थोऽभ्यास इत्यर्थः ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य दशमः खण्डः

---

१. प्रस्तावगतसकारस्य उद्गीथगतदकारस्य च योजनात् चतुर्विंशतिः ।

**मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥ १ ॥**

**स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या महामनाः स्याच्चद्व्रतम् ॥ २ ॥**

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्यैकादशः खण्डः

**अभिमन्थति स हिङ्कारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनँ सँशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥**

विना नामग्रहणं पञ्चविधस्य सप्तविधस्य च साम्न उपासनमुक्तम् । अथेदानीं गायत्रादिनामग्रहणपूर्वकं विशिष्टफलानि सामोपासनान्तराण्युच्यन्ते यथाक्रमं गायत्रादीनां कर्मणि प्रयोगस्तथैव । मनो हिङ्कारो मनसः सर्वकरणप्रवृत्तीनां प्राथम्यात् । तदानन्तर्याद्वाक्प्रस्तावश्चक्षुरुद्गीथः श्रैष्ठ्यात् । श्रोत्रं प्रतिहारः प्रतिहृतत्वात् । प्राणो निधनं यथोक्तानां प्राणे निधनात्स्वापकाले । एतद्गायत्रं साम प्राणेषु प्रोतम्[1] । गायत्र्याः प्राणसंस्तुतत्वात् ॥ १ ॥

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति । अविकलकरणो भवतीत्येतत् । सर्वमायुरेति । शतं वर्षाणि सर्वमायुः पुरुषस्येति श्रुतेः । ज्योगुज्ज्वलं जीवति । महान्भवति प्रजादिभिर्महांश्च कीर्त्या । गायत्रोपासकस्यैतद्व्रतं भवति यन्महामनास्त्वक्षुद्रचित्तः स्यादित्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्यैकादशः खण्डः

अभिमन्थति स हिङ्कारः प्राथम्यात् । अग्नेर्धूमो जायते स प्रस्ताव आनन्तर्यात् । ज्वलति स उद्गीथो

नरेन्द्रपुरीयं टिप्पणम्

पूर्वोत्तरग्रन्थयोरर्थविशेषमाह—विना नामग्रहणमिति । नामग्रहणपूर्वकं प्रोतं प्रगतं सम्बद्धमित्यर्थः । "प्राणो वै गायत्री"ति प्राणसंस्तुतत्वम् । ज्योगिति शब्दो निपातः । उज्ज्वलं स्वपरोपकारसमर्थः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्यैकादशः खण्डः

समग्रप्राणस्यैव मथनकर्तृत्वसम्भवात् प्राणदृष्ट्यनन्तरं मन्थनादिदृष्टिर्विधीयते । अभिमन्थतीत्यादिना ॥१-२॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य द्वादशः खण्डः

आनन्दगिरिटीका

ननु पञ्चविधस्य सप्तविधस्य च साम्नो ध्यानं व्याख्यातम् । तथा च ज्ञातविषये वक्तव्याभावादलमनन्तरग्रन्थेनेत्याशङ्क्य पूर्वोत्तरग्रन्थयोरर्थभेदमाह—विनेत्यादिना । गायत्रं रथन्तरमित्यादिनामग्रहणेन विशिष्टानि विशिष्टफलानि चेत्यर्थः । कथं पुनर्वक्ष्यमाणेषूपासनेषु निर्देशक्रमसिद्धिस्तत्राऽऽह—यथाक्रममिति । यादृशं क्रममाश्रित्य तेषां कर्मणि प्रयोगः कर्मिणामिष्टस्तेनैव क्रमेण तदुपासनोक्तिरित्यर्थः । तत्र प्रा[प्रा]णस्य क्रियाज्ञानयोरसम्भवात्प्राणस्य प्रधानत्वात्तद्दृष्ट्या गायत्रोपास्तिमादौ दर्शयति—मनो हिङ्कार इत्यादिना । "प्राणमेव वागप्येती"त्यादिश्रुत्या स्वापकाले प्राणे वागादीनां निधनमवधेयम् । प्रोतं प्रगतं प्रतिष्ठितमिति यावत् । गायत्रस्य प्राणेषु प्रतिष्ठितत्वे हेतुमाह—गायत्र्या इति । प्राणो वै गायत्रीति हि श्रुतिः ॥ १ ॥

अविदुषोऽपि प्राणित्वसिद्धेर्नेदं विद्याफलमित्याशङ्क्याऽऽह—अविकलेति । कथं पुनर्नानाजनीनं सर्वमायुरेको ध्याता गन्तुमलमित्याशङ्क्याऽऽह—शतमिति । "शतायुर्वै पुरुष" इति श्रुतेरित्युच्यते । ज्योक्शब्दो निपातः स चोज्ज्वलनार्थः । उज्ज्वलः स्वपरोपकारसमर्थ इति यावत् ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्यैकादशः खण्डः

समग्रप्राणवतो मन्थनकर्तृत्वसम्भवात्प्राणदृष्ट्यनन्तरं मन्थनादिदृष्टिमवतारयति—अभिमन्थतीत्यादिना ।

---

१. "तत्सवितुर्वरेण्यमि"त्यस्यामृचि उत्पन्नं साम गायत्रम् ।

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य द्वादशः खण्डः

उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न काञ्चन परिहरेत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य त्रयोदशः खण्डः

हविःसम्बन्धाच्छ्रैष्ठ्यं ज्वलनस्य । अङ्गारा भवन्ति स प्रतिहारोऽङ्गाराणां प्रतिहृतत्वात् । उपशमः सावशेषत्वादग्नेः। संशमो निःशेषोपशमः समाप्तिसामान्यान्निधनमेतद्रथन्तर[1]मग्नौ प्रोतम् । मन्थने ह्यग्नेर्गीयते ॥ १ ॥

स य इत्यादि पूर्ववत् । ब्रह्मवर्चसी वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । तेजस्तु केवलं त्विड्भावः । अन्नादो दीप्ताग्निः। न प्रत्यङ्ङग्नेरभिमुखो नाऽऽचामेन्न भक्षयेत्किञ्चिन्न निष्ठीवेच्छ्लेष्मनिरसनं च न कुर्यात्तद्व्रतम्॥२॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य द्वादशः खण्डः

उपमन्त्रयते सङ्केतं करोति प्राथम्यात्स हिङ्कारः । ज्ञपयते तोषयति स प्रस्तावः । सहशयनमेकपर्यङ्कगमनं स उद्गीथः श्रैष्ठ्यात् । प्रति स्त्रीं शयनं स्त्रिया अभिमुखीभावः स प्रतिहारः । कालं गच्छति मैथुनेन पारं समाप्तिं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् । वाय्वम्बुमिथुनसम्बन्धात् ॥ १ ॥

स य इत्यादि पूर्ववत् । मिथुनी भवत्यविधुरो भवतीत्यर्थः । मिथुनान्मिथुनात्प्रजायत इत्यमोघरेतस्त्वमुच्यते । न काञ्चन काञ्चिदपि स्त्रियं स्वात्मतल्पप्राप्तां न परिहरेत्समागमार्थिनीम् । [2]वामदेव्यसामोपास-

## नरेन्द्रपुरीयं टिप्पणम्

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषयोर्मथनसामान्यान्मथनादिदृष्ट्यनन्तरं मैथुनदेवतादृष्टिर्विधीयते— उपमन्त्रयत इत्यादिना । पराङ्गनां नोपगच्छेदिति शास्त्रविरोधमाशङ्क्याह—वामदेव्यसामेति । विशेषविधानस्य सामान्यवचने नास्त्यतिभार इत्यर्थः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य त्रयोदशः खण्डः

## आनन्दगिरिटीका

उपशमः संशमश्चेत्यर्थभेदाभावात्पुनरुक्तिमाशङ्क्य सावशेषनिरवशेषत्वाभ्यां विशेषमाह—उपशम इति । कथं पुना रथन्तरसाम्नोऽग्नौ प्रतिष्ठितत्वम् । न हि तत्र किञ्चिन्निमित्तमुपलभ्यतेऽत आह—मन्थने हीति । मन्थनं निमित्तीकृत्याग्नेरुत्पत्तौ रथन्तरसाम्नो गीयमानत्वदर्शनादग्नौ तस्य प्रतिष्ठितत्वसिद्धिरित्यर्थः ॥ १ ॥

नन्वत्र ब्रह्मवर्चसीति फलमुक्तं बृहदुपासने तु तेजस्वी भवतीति वक्ष्यते । न च ब्रह्मवर्चसतेजसोर्भेदस्तथा च बृहद्रथन्तरोपासनयोर्न फलवैषम्यमत आह—वृत्तेति ॥ २॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य द्वादशः खण्डः

उत्तराधरारणिस्थानीययोः स्त्रीपुरुषोरवाच्ये कर्मणि प्रवृत्तयोर्मन्थनसामान्यान्मन्थनादिदृष्ट्यनन्तरं मैथुनदृष्टिं विदधाति—उपमन्त्रयत इत्यादिना । पुरुषो हि पशुकर्मार्थं स्त्रियं वस्त्रादिना प्रीणयति । तस्मिन्प्रारम्भसामान्यात्प्रस्तावदृष्टिरित्याह—ज्ञपयत इति । कुतो वामदेव्यस्य साम्नो मिथुने प्रोतत्वं तत्राऽऽह—वाय्वम्बुमिथुनेति । वायोरपां च मिथुनतया सम्बन्धाद्वामदेव्योत्पत्तेरुक्तत्वात्तस्य मिथुने प्रतिष्ठितत्वं युक्तमित्यर्थः ॥ १ ॥

न काञ्चनेतिवाक्यमादाय व्याचष्टे—काञ्चिदपीति । पराङ्गनां नोपगच्छेदिति स्मृतिविरोधमाशङ्क्याऽऽह—

१. "अभित्वा शूर नो नुमः" इत्यस्यामृचि गीयमानं साम रथन्तरम् ।

२. "कयानश्चित्र आभुवदूती" इत्यस्यामृचि गीयमानं साम वामदेव्यम् ।

उद्यन्हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः
प्रतिहारोऽस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥ १ ॥
स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति
ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य चतुर्दशः खण्डः

अभ्राणि सम्प्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो
विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥

नाङ्गत्वेन विधानात् एतस्मादन्यत्र प्रतिषेधस्मृतयः वचनप्रामाण्याच्च धर्मावगतेर्न प्रतिषेधशास्त्रेणास्य विरोधः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य त्रयोदशः खण्डः

उद्यन्सविता स हिङ्कारः प्राथम्याद्दर्शनस्य । उदितः प्रस्तावः प्रस्तवनहेतुत्वात्कर्मणाम् । मध्यन्दिन उद्गीथः श्रैष्ठ्यात् । अपराह्णः प्रतिहारः पश्वादीनां गृहान्प्रति हरणात् । यदस्तं यंस्तन्निधनं रात्रौ गृहे निधानात्प्राणिनाम् । एतद्बृहदादित्ये प्रोतं बृहत[1] आदित्यदैवत्यत्वात् ॥ १ ॥

स य इत्यादि पूर्ववत् । तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य चतुर्दशः खण्डः

अभ्राण्यब्भरणात्, मेघ उदकसेक्तृत्वात् । उक्तार्थमन्यत् । एतद्वैरूपं[2] नाम साम पर्जन्ये प्रोतम् । अनेकरूपत्वात् अभ्रादिभिः पर्जन्यस्य वैरूप्यम् ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

आदित्यस्य प्रजाप्रसवहेतुत्वात् प्रसवितृमैथुनदृष्ट्यनन्तरं प्रसवित्रादित्यदृष्टिर्विधीयते—उद्यन्नित्यादिना ॥१-२॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य चतुर्दशः खण्डः

पर्जन्यस्य सवितृकार्यत्वात् सवितृदृष्ट्यनन्तरं पर्जन्यदृष्टिर्विधीयते—अभ्राणीत्यादिना । मिह् सेचने मेहतीति मेघः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य पञ्चदशः खण्डः

आनन्दगिरिटीका

वामदेव्येति । विधिनिषेधयोः सामान्यविशेषविषयत्वेन व्यवस्था प्रसिद्धेति भावः । किं च शास्त्रप्रामाण्यादत्र धर्मोऽवगम्यते न काञ्चन परिहरेदिति च शास्त्रावगतत्वादवाच्यमपि कर्म धर्मो भवितुमर्हति । तथा च श्रौतेऽर्थे दुर्बलायाः स्मृतेर्न प्रतिस्पर्धितेत्याह—वचनेति । यथोक्तोपासनावतो ब्रह्मचर्यनियमाभावो व्रतत्वेन विवक्षितस्तत्र प्रतिषेधशास्त्रविरोधाशङ्केति भावः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य त्रयोदशः खण्डः

आदित्यस्य प्रजाप्रसवहेतुत्वात्तद्धेतुमैथुनदृष्ट्यनन्तरमादित्यदृष्टिमुत्थापयति—उद्यन्नित्यादिना ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य चतुर्दशः खण्डः

"आदित्याज्जायते वृष्टिरि"ति स्मृतेरादित्यकार्यत्वात्पर्जन्यस्याऽऽदित्यदृष्ट्यनन्तरं पर्जन्यदृष्टिं दर्शयति—अभ्राणीति । कथं वैरूपं साम तस्मिन्प्रतिष्ठितं तत्राऽऽह—अनेकेति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य पञ्चदशः खण्डः

---

१. "त्वामिद्धि हवामहे" इत्यस्यां गीयमानं बृहत्साम ।
२. "यद्याव इन्द्र ते शतमि"त्यस्यामृचि वैरूपं उत्पन्नम् ।

स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपाँश्च सुरूपाँश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य पञ्चदशः खण्डः

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥१॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्यर्तून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य षोडशः खण्डः

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥ १ ॥

विरूपांश्च सुरूपांश्चाजाविप्रभृतीन्पशूनवरुन्धे प्राप्नोतीत्यर्थः । वर्षन्तं न निन्देत्तद्व्रतम् ॥ २॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य पञ्चदशः खण्डः

वसन्तो हिङ्कारः प्राथम्यात् । ग्रीष्मः प्रस्ताव इत्यादि पूर्ववत् ॥ १ ॥

एतद्वैराजमृतुषु प्रोतं वेद विराजति ऋतुवद्यथर्तव आर्तवैर्धर्मैर्विराजन्त एवं प्रजादिभिर्विद्वानित्युक्तमन्यत् । ऋतून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य षोडशः खण्डः

पृथिवी हिङ्कार इत्यादि पूर्ववत् । शक्वर्य इति नित्यं बहुवचनं रेवत्य इव । लोकेषु प्रोताः ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

पर्जन्यायत्तत्वाहतुव्यवस्थायाः पर्जन्यदृष्ट्यनन्तरमृतुदृष्टिर्विधीयते—वसन्त इत्यादिना । प्राधान्यादित्याद्यत्वाहतूनां तस्येत्यर्थः[२] । हेमन्तशिशिरयोरेकत्वेन पञ्चर्तवः । अन्नोत्पत्तेर्निमित्तं ऋतवोऽन्नात्मा च विराट् । अतः परम्परया वैराजं ऋतुषु प्रोतम् ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य षोडशः खण्डः

ऋतुषु सम्यग्वृत्तेषु लोकस्थितेः प्रसिद्धत्वाहतुदृष्ट्यनन्तरं लोकदृष्टिर्विधीयते—पृथिवीत्यादिना । शक्वर्य इति सामनामधेयं महानाम्नीष्वृक्षु शक्वर्यो गीयन्ते तासामप्सम्बन्धः श्रूयते । "आपो ह वै महानाम्न्यः अप्सु लोकाः प्रतिष्ठिताः" इति च श्रूयते । अस्मात्सम्बन्धाल्लोकेषु शक्वर्यः प्रोताः लोककार्यत्वात् ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य सप्तदशः खण्डः

आनन्दगिरिटीका

पर्जन्यायत्तत्वाहतुव्यवस्थायास्तद्दृष्टेरनन्तरमृतुदृष्टिमाचष्टे—वसन्त इत्यादिना ॥ १ ॥

वैराजस्य साम्नो युक्तमृतुषु प्रोतत्वं तेषां स्वधर्मैर्विराजनादित्याह—एतदिति । यद्वर्तूनामन्नोत्पत्तिनिमित्तत्वाद्विराडात्मनश्चान्नत्वात्तस्य तेषु प्रतिष्ठितत्वात्तद्द्वारा वैराजमपि साम तेषु प्रोतमिति भावः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य षोडशः खण्डः

ऋतुषु सम्यग्वृत्तेषु लोकस्थितेः प्रसिद्धत्वाहतुदृष्ट्यनन्तरं लोकदृष्टिमाह—पृथिवीति । कथं शक्वर्य इत्येकस्यैव साम्नो नामधेयं बहुवचनाद्धि बहूनि सामानि प्रतीयन्ते तत्राऽऽह—शक्वर्य इतीति । नित्यबहुवचनत्वमुभयत्र तुल्यमिति द्योतनाय वक्ष्यमाणं दृष्टान्तयति—रेवत्य इवेति । महानाम्नीषु ऋक्षु शक्वर्यो गीयन्ते । तासां च

---

१. वैराजं—"विदा मघवन्" इत्यस्यामृचि उत्पन्नम् ।

२. प्राधान्यादिति मूलपाठमनुसृत्य ।

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य सप्तदशः खण्डः

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः
प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥ १ ॥

स य एवमेता [1]रेवत्यः पशुषु प्रोता वेद पशुमान्भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्याष्टादशः खण्डः

लोम हिंकारस्त्वक्प्रस्तावो माँ्ँसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

लोकी भवति लोकफलेन युज्यत इत्यर्थः । लोकान्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वियीयाध्यायस्य सप्तदशः खण्डः

अजा हिङ्कार इत्यादि पूर्ववत् । पशुषु प्रोताः ॥ १ ॥
पशून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्याष्टादशः खण्डः

लोम हिङ्कारो देहावयवानां प्राथम्यात् । त्वक्प्रस्ताव आनन्तर्यात् । मांसमुद्गीथः श्रैष्ठ्यात् । अस्थि प्रतिहारः प्रतिहृतत्वात् । मज्जा निधनमान्त्यात् । एतद्यज्ञायज्ञीयं नाम साम देहावयववेषु प्रोतम् ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

लोककार्यत्वात् पशूनां लोकदृष्ट्यनन्तरं पशुदृष्टिर्विधीयते—अजेत्यादिना । रेवत्य इति सामनामधेयं बहुवचनान्तम् ।" "रेवत्यो वै पशव" इति श्रुतेः पशुषु प्रोतत्वम् ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरोटिप्पण्यां द्वितीयाध्यायस्याष्टादशः खण्डः

पशव्यपयः प्रभृतिभिरङ्गानां पुष्टिप्रसिद्धेः पशुदेवतदृष्ट्यनन्तरं लोमाद्यङ्गदेवतादृष्टिर्विधीयते—लोमहिङ्कार इत्यादिना । प्रतिहृतत्वादिति । अस्थ्नां प्रतिहरणादस्थिषु प्रतिशब्दसाम्यमित्यर्थः । "रसो वै यज्ञायज्ञोयमि"ति

आनन्दगिरिटीका

"आपो वै महानाम्नीः" इत्यद्भिः सम्बन्धः स्मृतः अप्सु लोकाः प्रतिष्ठिता इति च श्रुतम् । तथा चास्मात्सम्बन्धाल्लोकेष शक्वर्यः प्रतिष्ठिता इत्याह—लोकेष्विति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य सप्तदशः खण्डः

पशूनां लोककार्यत्वाल्लोकदृष्ट्यनन्तरं पशुदृष्टिमुपन्यस्यति—अजेति । रेवत्य इति सामनामधेयं पूर्ववन्नित्यबहुवचनान्तम् । "पशवो वै रेवतीरि"ति श्रुत्यन्तरमाश्रित्याऽऽह—पशुष्विति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्याष्टादशः खण्डः

पशुविकारपयोदध्यादिना पुष्टिरङ्गानां दृष्टेति पशुदृष्ट्यनन्तरमङ्गदृष्टिमाह—लोमेति । रसो वै यज्ञायज्ञीयमिति श्रुतेरन्नरसविकारेण लोमादीनां सम्बन्धाद्यज्ञायज्ञीयं सामाङ्गेषु प्रतिष्ठितमित्याह—एतदिति ॥ १ ॥

---

१. "रेवतीर्नः सधमाद इन्द्रे" इत्यस्यां रैवतमुत्पन्नम् ।
२. "यज्ञायज्ञा वो अग्ने गिरा गिरश्च दक्षसे" इत्यस्यामृचि उत्पन्नम् साम यज्ञायज्ञीयम् ।

स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥२॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्यैकोनविंशः खण्डः

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि
प्रतिहारश्चन्द्रमा निधनमेतद्राजनं[1] देवतासु प्रोतम् ॥ १ ॥

स य एवमेतद्राजनं देवतासु प्रोतं वेदैतासामेव देवतानाँ्सलोकताँ्सार्ष्टिताँ्सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्राह्मणान्न निन्देत्तद्व्रतम् ॥२॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य विंशः खण्डः

अङ्गी भवति समग्राङ्गो भवतीत्यर्थः। नाङ्गेन हस्तपादादिना विहूर्छति न कुटिली भवति पङ्गुः कुणी वेत्यर्थः। संवत्सरं संवत्सरमात्रं मज्ज्ञो मांसानि नाश्नीयान्न भक्षयेत्। बहुवचनं मत्स्योपलक्षणार्थम्। मज्ज्ञो नाश्नीयात्सर्वदैव नाश्नीयादिति वा तद्व्रतम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्यैकोनविंशः खण्डः

अग्निर्हिङ्कारः प्रथमस्थानत्वात्। वायुः प्रस्ताव आनन्तर्यसामान्यात्। आदित्य उद्गीथः श्रैष्ठ्यात्। नक्षत्राणि प्रतिहारः प्रतिहृतत्वात्। चन्द्रमा निधनं कर्मिणां तन्निधनात्। एतद्राजनं देवतासु प्रोतं देवतानां दीप्तिमत्त्वात् ॥ १ ॥

विद्वत्फलम्—एतासामेवाग्न्यादीनां देवतानां सलोकतां समानलोकतां सार्ष्टितां समानर्द्धित्वं सायुज्यं सयुग्भावमेकदेहदेहित्वमित्येतत्। वाशब्दोऽत्र लुप्तो द्रष्टव्यः सलोकतां वेत्यादि। भावनाविशेषतः फलविशेषोपपत्तेः। गच्छति प्राप्नोति। समुच्चयानुपपत्तेश्च। ब्राह्मणान्न निन्देत्तद्व्रतम्। "एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा" इति श्रुतेर्ब्राह्मणनिन्दा देवतानिन्दैवेति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य विंशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

श्रुतेरन्नरसविकारो रोमादिः तत्सम्बन्धाद्यज्ञायज्ञीयमङ्गेषु प्रोतम्। कुणिः श्मश्रुरहितः मज्ज इति मांसप्रातिपदिकस्य द्वितीयाबहुवचनान्तं रूपम् ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्यैकोनविंशः खण्डः

अग्न्यादीनामङ्गेषु प्रतिष्ठितत्वादङ्गदृष्ट्यनन्तरमग्न्यादिदृष्टिर्विधीयते—अग्निर्हिङ्कार इत्यादिना ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य विंशः खण्डः

आनन्दगिरिटीका

कुणिः श्मश्रुरहितः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्यैकोनविंशः खण्डः

अग्न्यादीनामङ्गेषु प्रतिष्ठितत्वादङ्गदृष्ट्यनन्तरमग्न्यादिदृष्टिमुत्थापयति—अग्निरित्यादिना। राजनस्य साम्नो देवतासु प्रोतत्वे हेतुमाह—देवतानामिति ॥ १ ॥

फलविकल्पार्थं वाशब्दस्यात्रासत्त्वे कथं वाक्यं स्यादित्याशङ्क्याऽऽह—सलोकतां वेत्यादीति। कथं पुनरेकस्मिन्नुपासने फलत्रयं विकल्प्यते तत्राऽऽह—भावनेति। ननु फलत्रयमत्र समुच्चितमिष्यतां किमिति वाशब्दं गृहीत्वा विकल्प्यते तत्राऽऽह—समुच्चयेति। न हि मिथो विरुद्धं फलत्रयमेकत्र समुच्चेतुं शक्यमतोऽपि विकल्प-

१. "इन्द्रं नरोने मथिता हवं ते" इत्यस्यामृचि उत्पन्नं साम राजनम्।

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाँ्सि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥ १ ॥

स य एवमेतत्साम सर्वस्मिन्प्रोतं वेद सर्वँ् ह भवति ॥ २ ॥

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥

त्रयी विद्या हिङ्कारः। अग्न्यादिसाम्न आनन्तर्यं त्रयीविद्याया अग्न्यादिकार्यत्वश्रुतेः। हिङ्कारः प्राथम्यात्सर्वकर्तव्यानाम्। त्रय इमे लोकास्तत्कार्यत्वादनन्तरा इति प्रस्तावः। अग्न्यादीनामुद्गीथत्वं श्रैष्ठ्यात्। नक्षत्रादीनां प्रतिहृतत्वात्प्रतिहारत्वम्। सर्पादीनां धकारसामान्यान्निधनत्वमेतत्साम नामविशेषाभावात्सामसमुदायः [1]सामशब्दः सर्वस्मिन्प्रोतम्। त्रयीविद्यादि हि सर्वम्। त्रयीविद्यादिदृष्ट्या हिङ्कारादिसामभक्तय उपास्याः। अतीतेष्वपि सामोपासनेषु येषु येषु प्रोतं यद्यत्साम तद्दृष्ट्या तदुपास्यमिति। कर्माङ्गानां दृष्टिविशेषेणाज्यस्येव संस्कार्यत्वात् ॥ १ ॥

सर्वविषयसामविदः फलं—सर्वं ह भवति सर्वेश्वरो भवतीत्यर्थः। निरुपचरितसर्वभावे हि दिक्स्थेभ्यो बलिप्राप्त्यनुपपत्तिः ॥ २ ॥

तदेतस्मिन्नर्थ एष श्लोको मन्त्रोऽप्यस्ति। यानि पञ्चधा पञ्चप्रकारेण हिङ्कारादिविभागैः प्रोक्तानि त्रीणि त्रीणि त्रयीविद्यादीनि तेभ्यः पञ्चत्रिकेभ्यो ज्यायो महत्तरं परं च व्यतिरिक्तमन्यद्वस्त्वन्तरं नास्ति न विद्यत इत्यर्थः। तत्रैव हि सर्वस्यान्तर्भावः ॥ ३ ॥

नरेन्द्रपुरीयं टिप्पणम्

अग्न्यादिदृष्ट्यनन्तरं त्रयीविद्यादृष्टिविधाने कारणमाह—अग्न्यादिसाम्न इति। "अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद" इति श्रुतेरग्न्यादिभ्यस्त्रय्याः प्रादुर्भावोऽवगतः। अग्न्यादीनां च सामत्वं पूर्वोक्तं तदनन्तरं त्रय्या बुद्धिस्थत्वात्सामत्वमुच्यत इत्यर्थः। त्रयीविद्यादिदृष्ट्या साम्न उपास्यत्वं कथमिह गम्यते, तत्राह—अतीतेष्वपीति ॥ १-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्यैकविंशः खण्डः

आनन्दगिरिटीका

सिद्धिरित्यर्थः। ननु देवतादृष्ट्या राजनस्य साम्नो ध्यानाद्देवता न निन्देदिति वक्तव्ये कथमन्यथोच्यते तत्राऽऽह—एत इति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य विंशः खण्डः

अग्न्यादिदृष्ट्यनन्तरं त्रयीविद्यादृष्टिविधाने कारणमाह—अग्न्यादीति। यदग्न्याद्यात्मकं सामोपास्यमुक्तं तस्मादानन्तर्यमुपास्यायास्त्रयीविद्याया युज्यते। ऋग्वेदोऽग्नेर्यजुर्वेदो वायोरादित्यात्सामवेद इति श्रुतेस्त्रय्यास्तत्कार्यत्वावगमादित्यर्थः। तत्कार्यत्वात्त्रयीसाध्यकर्मफलत्वादित्यर्थः। कथं सर्वस्मिन्प्रोतमित्युक्त त्रयीविद्यादौ प्रोतमिति वक्तव्यत्वादत आह—त्रयीविद्यादीति। कथं पुनरत्र त्रयीविद्यादिदृष्ट्या साम्नो ध्येयत्वं गम्यते तत्राऽऽह—त्रयीति। न चास्यां प्रतिज्ञायां पूर्वेण सन्दर्भेण विरोधः शङ्कामर्हतीत्याह—अतीतेष्वपीति। तत्र हेतुमाह—कर्माङ्गानामिति। दर्शपूर्णमासाधिकारे "पत्न्यवेक्षितमाज्यं भवती"ति दृष्टिविशेषणमाज्यं सस्क्रियते। तथा सामप्रभेदानां दृष्टिविशेषणत्वाविशेषात्तेषां कर्माङ्गानां तत्तदङ्गदृष्ट्या संस्कर्तव्यत्वादित्यर्थः ॥ १ ॥

अथ यथाश्रुतं सर्वात्मत्वमेव किं न स्यादत आह—निरुपचरितेति ॥ २ ॥

सर्वविषयसामविदः सर्वेश्वरत्वमित्यत्र मन्त्रं सम्वादयति—तदेतस्मिन्निति। परमित्यस्यैव व्याख्यानमन्यदिति। वस्त्वन्तराभावे हेतुमाह—तत्रैवेति ॥ ३ ॥

---

१. सामशब्दबोध्यः।

[1]यस्तद्वेद स वेद सर्वँ सर्वा दिशो बलिमस्मै हरन्ति सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥४॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्यैकविंशः खण्डः

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत् ॥१॥

यस्तद्यथोक्तं सर्वात्मकं साम वेद स वेद सर्वं; स सर्वज्ञो भवतीत्यर्थः। सर्वा दिशः सर्वदिक्स्था अस्मा एवंविदे बलिं भोगं हरन्ति प्रापयन्तीत्यर्थः। सर्वमस्मि भवामीत्येवमेतत्सामोपासीत तस्यैतदेव व्रतम्। द्विरुक्तिः सामोपासनसमाप्त्यर्था ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्यैकविंशः खण्डः

सामोपासनप्रसङ्गेन गानविशेषादिसम्पदुद्गातुरुपदिश्यते। फलविशेषसम्बन्धात्। विनर्दि विशिष्टो नर्दः

नरेन्द्रपुरीयं टिप्पणम्

कर्माङ्गावबद्धोपासनानन्तरं कर्मफलयोगिगानादिविज्ञानं प्रासङ्गिकमुच्यत इत्याह—सामोपासनप्रसङ्गेनेति ॥ १ ॥

आनन्दगिरिटीका

सर्वज्ञत्वं सर्वेश्वरत्वं च तच्छब्दार्थः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्यैकविंशः खण्डः

सामोपासनं समाप्तं चेत्किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—सामेति। आदिशब्देन स्वरादयो वर्णा गृह्यन्ते किमित्युद्गातुर्यथोक्तोपास्तिरुच्यते तत्राऽऽह—फलेति। मृत्युपरिहारादिः फलविशेषस्तत्सम्बन्धादेषोपास्तिरनुष्ठेये-

1. "सर्वस्मिन् प्रोतं" इत्युपासनं विधाय "सर्वं ह भवती"ति फलमुक्तम्। अत्र सर्वमिति सर्वेश्वरो भवतीत्यर्थः, न तु सर्वेषामात्मेति; तथा सति "सर्वा दिशो बलिमस्मै हरन्ती"त्युक्तबलिस्वीकारानुपपत्तेरिति भाष्यम्।

माध्वैस्तु सर्वभाव इत्यर्थं इति भ्रान्त्या दूषणमुक्तम्—तथात्वे नारकित्वादेरपि प्राप्तिः। अतः असनात् मितिरूपत्वाच्चास्मीति हरिरित्यर्थकम्। उत्तमपुरुषत्वे ज्यायःपरशब्दौ व्यर्थौ अन्यस्यैवाभावात् इत्यादिकमकाण्डताण्डवायितं सर्वेश्वरो भवतीति व्याख्यानात्। ब्रह्मसाक्षात्कारप्राप्यसर्वात्मभावस्तु यथाश्रुत एव ततोऽन्याभावात् नारक्यात्मनोऽपि तदभेदात्। न च तद्गतदुःखप्रसक्तिः दुःखस्य मिथ्यात्वात् आनन्दस्य ब्रह्मरूपत्वेन तदभेदात्।

यत्तु जीवब्रह्मैक्ये ईश्वरस्य स्वज्ञानमस्तीति न तद्रूपस्य जीवस्याज्ञानं युक्तम्। औपाधिकभेदाङ्गीकारे उभयोरैक्यात् उपाधिरुभयोरज्ञत्वं कुर्यात्। तन्निमित्तदोषाश्चोभयत्र स्युः इति। तन्न। जीवः प्रतिबिम्बः ईश्वरो बिम्ब इत्यङ्गीकारात्। उपाधिगतदोषाणां प्रतिबिम्बे एव प्रसक्तेः। अवच्छिन्नो जीव इति वादे घटाकाशः धूमादिदोषवान् न तु महाकाश इतिवत् व्यवस्थोपपत्तेः।

तृतीयाध्याये "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इत्यस्य मध्वव्याख्या—सर्वमिदं ब्रह्मेति सामीप्याद्व्यपदेशः। ब्रह्मेति गुणपूर्णमित्यर्थः। तज्जलान् इति च जले अनिति "आनीदवातमि"ति श्रुतेः। एतत्सर्वमशब्दार्थ एव। अपि च इति शान्त उपासीत इत्यत्र उपासनाङ्गत्वेन विहितशमगुणार्थवादोऽयम्। तस्य च यस्मात् ब्रह्मण्येवोत्पत्तिस्थितिलयभाक्त्वात् सर्वं ब्रह्मैव तस्मात् परस्परविरोधं परिहृत्य शान्त उपासीत इत्यर्थः प्रतीयते। तस्य त्यागः कृतः। विष्णोः जलशायित्वेन शान्तेः पोषणाभावात्।

अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥ सर्वे स्वरा इन्द्रस्याऽऽत्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रँ शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥ अथ यद्येनमूष्मसूपालभेत प्रजापतिँ शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनँ स्पर्शेषूपालभेत मृत्युँ शरणं प्रपन्नोऽभूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

स्वरविशेष ऋषभकूजितसमोऽस्यास्तीति विनर्दि गानमिति वाक्यशेषः। तच्च साम्नः सम्बन्धि पशुभ्यो हितं पशव्यमग्नेरग्निदेवत्यं चोद्गीथ उद्गानम्। तदहमेवंविशिष्टं वृणे प्रार्थय इति कश्चिद्यजमान उद्गाता वा मन्यते। अनिरुक्तोऽमुकसम इत्यविशेषितः प्रजापतेः प्रजापतिदेवत्यः स न गानविशेषः। आनिरुक्त्यात्प्रजापतेर्निरुक्तः स्पष्टः सोमस्य, सोमदेवत्यः स उद्गीथ इत्यर्थः। मृदु श्लक्ष्णं च गानं वायोर्वायुदेवत्यं तत्। श्लक्ष्णं बलवच्च प्रयत्नाधिक्योपेतं चेन्द्रस्यैन्द्रं तद्गानम्। क्रौञ्चं क्रौञ्चपक्षिनिनादसमं बृहस्पतेर्बार्हस्पत्यं तत्। अपध्वान्तं भिन्नकांस्यस्वरसमं वरुणस्यैतद्गानम्। तान्सर्वानेवोपसेवेत प्रयुञ्जीत वारुणं त्वेवैकं वर्जयेत् ॥ १ ॥

अमृतत्वं देवेभ्य आगायानि साधयानि। स्वधां पितृभ्य आगायान्याशां मनुष्येभ्य आशां प्रार्थनां प्रार्थितमित्येतत्। तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मने मह्यमागायानीत्येतानि मनसा चिन्तयन्ध्यायन्नप्रमत्तः स्वरोष्मव्यञ्जनादिभ्यः स्तुवीत ॥ २ ॥

सर्वे स्वरा अकारादय इन्द्रस्य [1]बलकर्मणः प्राणस्याऽऽत्मानो देहावयवस्थानीयाः सर्व ऊष्माणः शषसहादयः प्रजापतेर्विराजः कश्यपस्य वाऽऽत्मानः। सर्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योरात्मानस्तमेवंविदमुद्गातारं यदि कश्चित्स्वरेषूपालभेत स्वरस्त्वया दुष्टः प्रयुक्त इत्येवमुपालब्ध इन्द्रं प्राणमीश्वरं शरणमाश्रयं प्रपन्नोऽभूवं स्वरान् प्रयुञ्जानोऽहं स इन्द्रो यत्तव वक्तव्यं त्वा त्वां प्रति वक्ष्यति स एव देव उत्तरं दास्यतीत्येनं ब्रूयात् ॥ ३ ॥

अथ यद्येनमूष्मसु तथैवोपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यति सञ्चूर्णयिष्यतीत्येनं ब्रूयात्। अथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात् ॥ ४ ॥

नरेन्द्रपुरीयं टिप्पणम्

स्वरविशेषज्ञानपूर्वकमुद्गानकाले अनुचिन्तनीयमाह—अमृतत्वमित्यादिना ॥ २ ॥

उद्गातुः केनाप्याक्षिप्तस्य प्रतीकारज्ञानाय स्वरादिदेवताज्ञानं कथयति—सर्वे स्वरा इत्यादिना ॥ ३-४ ॥

आनन्दगिरिटीका

त्यर्थः। पशुभ्यो हितत्वमस्य वचनादवगमयितव्यम्। वाक्यस्थमितिशब्दं व्याचष्टे—इति कश्चिदिति। इत्यविशेषितः। अनेन प्रकारेणायमिति विशेषितो व्यवच्छिद्य ज्ञातो न भवतीत्यर्थः। तस्य प्राजापत्यत्वे हेतुमाह—आनिरुक्त्यादिति। नीलपीतादिभिर्निदिश्यत्वावचनादित्यर्थः ॥ १ ॥

स्वरविशेषज्ञानपूर्वकमुद्गानकाले ध्यातव्यार्थमाह—अमृतत्वमिति। स्वरोष्मव्यञ्जनादिभ्य इत्यत्राऽऽदिशब्देन स्थानप्रयत्नादिसंग्रहः ॥ २ ॥

केनाप्याक्षिप्तस्योद्गातुरुद्गानकाले प्रतीकारज्ञानाय स्वरादिदेवताज्ञानमुपन्यस्यति—सर्वे स्वरा इति। शषसहादय इत्यादिशब्दस्तदवान्तरभेदाभिप्रायः यत्तव वक्तव्यमित्यस्मादूर्ध्वं तच्छब्दो द्रष्टव्यः ॥ ३ ॥

तथैव स्वरेष्विवेति यावत् ॥ ४ ॥

---

१. बलसाध्यकर्मकुर्वतः।

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे
ऊष्माणोऽग्रस्ता अनिरस्ता विवृत्ता वक्तव्याः प्रजापतेरात्मानं परिददानीति
सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य द्वाविंशः खण्डः

[1]त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसँ्स्थोऽमृतत्वमेति ॥ १ ॥

यत इन्द्राद्यात्मानः स्वरादयोऽतः सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः। तथाऽहमिन्द्रे बलं ददानि बलमादधानीति। तथा सर्वे ऊष्माणोऽग्रस्ता अन्तरप्रवेशिता अनिरस्ता बहिरप्रक्षिप्ता विवृता [विवृत्ता] विवृतप्रयत्नोपेताः प्रजापतेरात्मानं परिददानि प्रयच्छानीति। सर्वे स्पर्शा लेशेन शनकैरनभिनिहिता अनभिनिक्षिप्ता वक्तव्या मृत्योरात्मानं बालानिव शनकैः परिहरन् मृत्योरात्मानं परिहराणीति ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य द्वाविंशः खण्डः

ओङ्कारस्योपासनविध्यर्थं त्रयो धर्मस्कन्धा इत्याद्यारभ्यते। नैवं मन्तव्यं सामावयवभूतस्यैवोद्गीथादि-

## नरेन्द्रपुरीयं टिप्पणम्

देवताज्ञानबलेनोद्गात्रापि न प्रमत्तेन भवितव्यं स्वरादीनामन्यथोच्चारणे देवताशरीरभेदप्रसङ्गादत उच्चारणे तात्पर्यं कर्तव्यमित्याह—यत इन्द्राद्यात्मान इत्यादिना। अतिद्रुतोच्चारणेन वर्णो वर्णान्तरे यथा निक्षिप्तो न भवति तथा प्रयोक्तव्य इत्याह—अनभिनिहिता इति। मृत्योरात्मानं परिहराणीति ध्यात्वा प्रयोज्या इत्यर्थः ॥ ५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य द्वाविंशः खण्डः

अधिकृताधिकाराण्यङ्गावबद्धान्युपासनान्युक्त्वा स्वतन्त्राधिकारिगोचरमुपासनं विधातुं प्रक्रमत इत्याह—ओङ्कारेति। कर्माङ्गोपासनप्रकरणे स्वतन्त्रोङ्कारोपासनविधाने कोऽभिप्राय इत्यत आह—नैवं मन्तव्यमित्यादिना।

## आनन्दगिरिटीका

देवताज्ञानबलेनोद्गात्रा न प्रमत्तेन भवितव्यं स्वरादीनामन्यथोच्चारणे देवताशरीरभेदप्रसङ्गादतः स्वराद्युच्चारणे तात्पर्यं कर्तव्यमित्युद्गातार शिक्षयति—यत इति। प्रयोगकाले चिन्तनीयमर्थं कथयति—तथेति। यथोक्तरीत्या स्वराणां प्रयोगावस्थायामित्यर्थः। आदधानीति चिन्तयेदिति शेषः। तथेत्यूष्मणां प्रयोगावस्थायामिति यावत्। विवृतप्रयत्नोपेताः प्रयोक्तव्या इति शेषः। तत्रापि ध्यातव्यं दर्शयति—प्रजापतेरिति। अतिद्रुतोच्चारणेन वर्णो वर्णान्तरे यथा निक्षिप्तो न भवति तथा प्रयुज्यमानत्वमनभिनिक्षिप्तत्वम्। मृत्योरात्मानमिति वाक्योपादानं तस्यार्थमाह—बालानिवेति। यथा लोकः शनकैर्जलादिभ्यो बालान्परिहरति तथा मृत्योरात्मानमहं परिहराणीति ध्यात्वा स्पर्शानां प्रयोगः कर्तव्य इत्यर्थः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य द्वाविंशः खण्डः

अधिकृताधिकाराण्यङ्गावबद्धान्युपासनान्युक्तानि। सम्प्रति स्वतन्त्राधिकारिगोचरमोङ्कारोपासनं विधातुमारभते—ओङ्कारेति। अङ्गावबद्धोपासनाधिकारे यथोक्तस्वतन्त्रोपासनविधाने कोऽभिप्रायः श्रुतेरित्याशङ्क्याऽऽह—

---

१. त्रयो धर्मस्कन्धाः—सर्व एत इति आश्रमिणां उत्तरत्र वक्ष्यमाणत्वात् गृहस्थादीनां धर्मप्रतिपादनेन गृहस्थवानप्रस्थनैष्ठिका एव गृह्यन्ते।

"ब्रह्मसंस्थोऽमृतत्वमेती"त्यत्र ब्रह्मसंस्थपदेन परिव्राट् अवशिष्टो गृह्यते। पुण्यलोकात् पृथगमृतत्वश्रवणात् ब्रह्मलोकः वैकुण्ठलोको वा पुण्यलोको नामृतत्वमित्युक्तं भवति। इदं विशिष्टाद्वैतादीनां विलष्टम्।

लक्षणस्योङ्कारस्योपासनात्फलं प्राप्यत इति। किं तर्हि ? यत्सर्वैरपि सामोपासनैः कर्मभिश्चाप्राप्यं तत्फलममृतत्वं केवलादोङ्कारोपासनात्प्राप्यत इति। तत्स्तुत्यर्थं सामप्रकरणे तदुपन्यासः। त्रयस्त्रिसंख्याका धर्मस्य स्कन्धा धर्मस्कन्धाः धर्मविभागा इत्यर्थः। के त इत्याह—यज्ञोऽग्निहोत्रादिः। अध्ययनं सनियमस्य ऋगादेरभ्यासः। दानं बहिर्वेदि यथाशक्तिद्रव्यसंविभागो भिक्षमाणेभ्यः। इत्येष प्रथमो धर्मस्कन्धः। गृहस्थसमवेतत्वात्तन्निर्वर्तकेन गृहस्थेन निर्दिश्यते प्रथम एक इत्यर्थो द्वितीयतृतीयश्रवणान्नाऽऽद्यार्थः। तप एव द्वितीयस्तप इति कृच्छ्रचान्द्रायणादि तद्वांस्तापसः परिव्राड्वा न ब्रह्मसंस्थ[1] आश्रमधर्ममात्रसंस्थो; ब्रह्मसंस्थस्य त्वमृतत्वश्रवणात्। द्वितीयो धर्मस्कन्धः। ब्रह्मचार्याचार्यकुले वस्तुं शीलमस्येत्याचार्यकुलवासी। अत्यन्तं यावज्जीवमात्मानं नियमैराचार्यकुलेऽवसादयन्क्षपयन्देहं तृतीयो धर्मस्कन्धः। अत्यन्तमित्यादिविशेषणान्नैष्ठिक इति गम्यते। उपकुर्वाणस्य स्वाध्यायग्रहणार्थत्वान्न पुण्यलोकत्वं ब्रह्मचर्येण। सर्व एते त्रयोऽप्याश्रमिणो यथोक्तैर्धर्मैः पुण्यलोका भवन्ति। पुण्यो लोको येषां

नरेन्द्रपुरीयं टिप्पणम्

सनियमस्येति। प्राङ्मुखत्वादिनियमसहितस्य "वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। तद्दानं चैव शिष्येभ्यो वेदाभ्यासोऽपि पञ्चधा॥" वेद्यां यद्दीयते तस्य यज्ञाङ्गत्वात् पृथक्फलत्वं नास्तीति बहिर्वेदिग्रहणम्। ब्रह्मशब्दस्य यथाश्रुतं मुख्यमर्थमादाय परब्रह्मात्मना साक्षात्कारवत आत्यन्तिकममृतत्वमुक्तम्। प्रकरणपर्यालोचनया प्रणवे प्रतीके ब्रह्मोपासकस्य क्रमेणामृतत्वं द्रष्टव्यम्, भेदबुद्धेरनपायात्। कर्मिणामन्तवत्फलत्वाभिधानेन तन्निन्दया ब्रह्मसंस्थतायाः

आनन्दगिरिटीका

नैवमिति। न स्वतन्त्रस्य तस्योपासनादित्येवकारार्थः। कथं तर्हि मन्तव्यमित्यपेक्षायामाह—किं तर्हीति। सनियमस्य प्राङ्मुखत्वादिनियमसहितस्य पुरुषस्येति यावत्। अभ्यासश्च स्वीकरणं विचारो जपः शिष्येभ्यो दानमावृत्तिश्चेति पञ्चविधः। वेद्यां यद्दीयते तस्य यज्ञाङ्गत्वात्पृथक्फलवत्त्वं नास्तीति मन्वानो विशिनष्टि—बहिर्वेदीति। गृहस्थेन तदात्मनेत्यर्थः। कथं गृहस्थस्य प्राथम्यं ब्रह्मचारिणस्तथात्वादित्याशङ्क्याऽऽह—एक इत्यर्थ इति। उक्तव्याख्याने वाक्यशेषस्य गमकत्वमाह—द्वितीयेति। प्राथम्यमेव प्रथमशब्दस्य नार्थो ब्रह्मचारिप्राथम्यप्रसिद्धिविरोधादित्याह—नाऽऽद्यार्थ इति। कीदृगत्र परिव्राड्गृह्यते तत्राऽऽह—नेति। कुतोऽत्र ब्रह्मसंस्थो न गृह्यते तत्राऽऽह—ब्रह्मसंस्थस्येति। वानप्रस्थग्रहणममुख्यस्य परिव्राजोऽपि प्रदर्शनार्थम्। ब्रह्मचारीत्यादिवाक्यस्य नैष्ठिकविषयत्वं विशेषणसामर्थ्याद्दर्शयति—अत्यन्तमित्यादीति। अथोपकुर्वाणस्य ब्रह्मचारित्वाविशेषात्किमित्युपादानं न भवेत्तत्राऽऽह—उपकुर्वाणस्येति। ननु ब्रह्मचारिणो ब्रह्मचर्येण पुण्यलोको न श्रूयते तत्राऽऽह—सर्व इति। कथमाश्रमिणां पुण्यलोकविशेषवतां तदात्मकत्वमुच्यते तत्राऽऽह—पुण्य इति। आश्रमिषु प्रदर्श्यमानेषु किं परिव्राण्मुख्यो न प्रदर्श्यते

---

ब्रह्मसंस्थपदेन ब्रह्मनिष्ठः संन्यासी गृह्यते। अत्र ब्रह्मसूत्रतृतीयाध्यायचतुर्थपादीयसंन्यासाधिकरणे "परामर्शं जैमिनिरचोदना चापवदति हि"–इति सूत्रेण एषु शब्देषु आश्रमान्तराणां परामर्शं जैमिनिराचार्यो मन्यते, न विधिं विधायकशब्दाभावात्। अपि च "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यनेन अग्नित्यागी देवपुत्रस्याग्नेर्हन्तेति निन्दाबलादपि न संन्यासाश्रमसद्भावसिद्धिरिति पूर्वपक्षयित्वा "अनुष्ठेयं बादरायणः साम्यश्रुतेः" इति तदनन्तरसूत्रेण त्रयो धर्मस्कन्धा इति वाक्ये परामृष्ट एव परिव्राट् ब्रह्मसंस्थत्वस्यान्यत्रासम्भवेन तत्पदेनैव परिव्राट परामृश्यते।

"विधिर्वा धारणवत्" इति तदन्तरसूत्रेण सतीमप्येकवाक्यतां पुण्यलोकफलास्त्रय आश्रमिणो ब्रह्मसंस्थता त्वमृतत्वफलेति इतिवाक्ययोजनया प्रतीयमानां परित्यज्यास्मिन्वाक्ये संन्यासविधिरेवाङ्गीकर्तव्यो धारणवत् "अधस्तात् समिधं धारयन् अनुद्रवेत् उपरि हि देवेभ्यो धारयति" इत्यत्र दैवाग्निहोत्रे समिधः उपरिधारणवत्—इति संन्यासविधिरुक्तः।

१. अपितु इति शेषः आश्रममात्रसंस्थः परिव्राडत्र ग्राह्यः।

त इमे पुण्यलोका आश्रमिणो भवन्ति। अवशिष्टस्त्वनुक्तः परिव्राड्ब्रह्मसंस्थो ब्रह्मणि सम्यक्स्थितः सोऽमृतत्वं पुण्यलोकविलक्षणममरणभावमात्यन्तिकमेति नाऽऽपेक्षिकं देवाद्यमृतत्ववत्। पुण्यलोकात्पृथगमृतत्वस्य विभागकरणात्। यदि च पुण्यलोकातिशयमात्रममृतत्वमभविष्यत्ततः पुण्यलोकत्वाद्विभक्तं नावक्ष्यत्। विभक्तोपदेशाच्चाऽऽत्यन्तिकममृतत्वमिति गम्यते।

अत्र चाऽऽश्रमधर्मफलोपन्यासः [1]प्रणवसेवास्तुत्यर्थं न तत्फलविध्यर्थम्। स्तुतये च प्रवणसेवाया आश्रमधर्मफलविधये चेति हि भिद्येत वाक्यम्। तस्मात्स्मृतिसिद्धाश्रमफलानुवादेन प्रणवसेवाफलममृतत्वं ब्रुवन्प्रणवसेवां स्तौति। यथा पूर्णवर्मणः सेवा भक्तपरिधानमात्रफला राजवर्मणस्तु सेवा राज्यतुल्यफलेति तद्वत्। प्रणवश्च तत्सत्यं परं ब्रह्म तत्प्रतीकत्वात्। "एतद्ध्येवाक्षरं ब्रह्म एतद्ध्येवाक्षरं परमि"त्याद्याम्नायात्काठके युक्तं तत्सेवातोऽमृतत्वम्।

ब्रह्मसंस्थपदेन परिव्राजो ग्रहणे पूर्वपक्षः

अत्राऽऽहुः केचित्—चतुर्णामाश्रमिणामविशेषेण स्वकर्मानुष्ठानात्पुण्यलोकतेहोक्ता ज्ञानवर्जितानां सर्वं एते पुण्यलोका भवन्तीति। नात्र परिव्राडवशेषितः। परिव्राजकस्यापि ज्ञानं यमा नियमाश्च तप एवेति तप एव द्वितीय इत्यत्र तपःशब्देन परिव्राट्तापसौ गृहीतौ। अतस्तेषामेव चतुर्णां यो ब्रह्मसंस्थः प्रणवसेवकः सोऽमृतत्वमेतीति।

नरेन्द्रपुरीयं टिप्पणम्

स्तुतिदर्शनात् स्तुतेश्च विध्यर्थत्वाद् "अमृतत्वकामो ब्रह्मसंस्थो भवेदि"त्येकार्थपरत्वादेकमिदं वाक्यमित्याह—अत्र चेति।

स्वाभिप्रायेण व्याख्याय वृत्तिकारव्याख्यामनुवदति—अत्राहुरित्यादिना। ब्रह्मसंस्थशब्दं विरोद्धुं न

आनन्दगिरिटीका

तत्राऽऽह—अवशिष्टस्त्विति। कुतो हि पुण्यलोकवैलक्षण्यममृतत्वस्येत्याशङ्क्योक्तम्—आत्यन्तिकमिति। तस्यापेक्षिकत्वाभावे हेतुमाह—पुण्यलोकादिति। अमृतत्वस्य पुण्यलोकात्पृथग्विभागकरणात्ततोऽन्यत्वादात्यन्तिकत्वसिद्धिरिति योजना। उक्तमेवार्थं व्यतिरेकमुखेन साधयति—यदि चेत्यादिना। ब्रह्मशब्दस्य यथाश्रुतं मुख्यमर्थं गृहीत्वा परब्रह्मात्मना साक्षात्कारवतो निरङ्कुशममृतत्वमुक्तं प्रकरणालोचनया तु प्रणवप्रतीके ब्रह्मोपासकस्य क्रमेणामृतत्वं भेदबुद्धेरनपायाद्द्रष्टव्यम्। कर्मिणामन्तवत्फलत्वाभिधानेन तन्निन्दया ब्रह्मसंस्थतास्तुतिदर्शनात्तस्याश्च विध्यर्थत्वादमृतत्वकामो ब्रह्मसंस्थः स्यादित्येकार्थपरत्वादेकमिदं वाक्यमित्याह—अत्र चेत्यादिना। स्तुतये फलविधये चेदं वाक्यं किं न स्यादित्याशङ्क्याऽऽह—स्तुतये चेति। अर्थैकत्वादेकं वाक्यं तद्भेदे तद्भेदनियमादित्यर्थः। किंपरं तर्हीदं वाक्यं तत्राऽऽह—तस्मादिति। स्मृतिसिद्धेति। श्रुतेः स्मृत्यर्थानुवादत्वे वैपरीत्यात्तदनुमितश्रुतिसिद्धेति योज्यम्। स्तुतिमेव दृष्टान्तावष्टम्भेन स्पष्टयति—यथेत्यादिना। इतिशब्दोऽध्याहृतस्तुतय इत्यनेन सम्बध्यते। ननु ब्रह्मतत्त्वसेवातोऽमृतत्वं भवति न प्रणवसेवातस्तत्किमिति तस्य स्तुतिरित्याशङ्क्याऽऽह—प्रणवश्चेति। तत्र प्रमाणं दर्शयन्फलितमाह—एतद्ध्येवेति। स्वव्याख्यानं वर्जितदोषमुक्त्वा ब्रह्मसंस्थोऽमृतत्वमेतीत्यत्र वृत्तिकारीयं व्याख्यानमुत्थापयति—अत्रेति। ये खल्वाश्रमिणश्चत्वारो ज्ञानवर्जितास्तेषां सर्वेषामप्यविशेषेण स्वाश्रमविहितधर्मानुष्ठानेन पुण्यलोकभागिता सर्वं एते पुण्यलोका भवन्तीत्यत्रोक्ता। न तु पूर्वस्मिन्ग्रन्थे परिव्राडनुक्तः सन्नवशेषितोऽस्तीति योजना। ननु पूर्वस्मिन्ग्रन्थे वाचकपदं परिव्राजो नोपलभ्यते तथा चासाववशेषितस्तत्राऽऽह—परिव्राजकस्यापीति। ज्ञानं यमा नियमाश्चोपायभूता इति यावत्। परिव्राडपि पूर्वत्राभिहितश्चेद्ब्रह्मसंस्थवाक्यस्य कोऽर्थः स्यादित्याशङ्क्याऽऽह—अत इति। परिव्राजकस्यानवशिष्टत्वेन चतुर्णामुपदिष्टत्वाविशेषोऽतःशब्दार्थः। सामान्यनिर्देशे हेतुमाह—चतुर्णामिति। अप्रतिषेधाच्चेति च्छेदः। नन्वाश्रमान्तराणां कर्मार्थत्वात्तत्रैव व्यापृतत्वान्न ब्रह्मसंस्थतायां

---

१. प्रणवसेवास्तुत्यर्थमिति—गार्हस्थ्याद्याश्रमाणां फलस्य पुण्यलोकप्राप्तिरूपस्य स्मृतिकल्पितश्रुतिसिद्धत्वात् नात्र विधानमावश्यकमतस्तदनूद्य प्रणवसेवाफलं संन्यासिनः अमृतत्वं विधत्ते। उभयपरत्वे वाक्यभेदात् स्तुतिपरत्वे अर्थवादता विधिपरत्वेऽपूर्वार्थकत्वं स्यात्। अज्ञातज्ञापकत्वं विधित्वं ज्ञातपुनःकथनरूपानुवादत्वं चान्योन्यविरुद्धं नैकस्मिन्वाक्येऽङ्गीकर्तुं युक्तमित्यर्थः।

चतुर्णामधिकृतत्वाविशेषात् । ब्रह्मसंस्थत्वेऽप्रतिषेधाच्च । स्वकर्मच्छिद्रे च ब्रह्मसंस्थतायां सामर्थ्योपपत्तेः । न च [1]यववराहादिशब्दवद्ब्रह्मसंस्थशब्दः परिव्राजके रूढः । ब्रह्मणि संस्थितिनिमित्तमुपादाय प्रवृत्तत्वात् । न हि रूढिशब्दा निमित्तमुपाददते । सर्वेषां च ब्रह्मणि स्थितिरुपपद्यते । यत्र यत्र निमित्तमस्ति ब्रह्मणि संस्थितिस्तस्य तस्य निमित्तवतो वाचकं सन्तं ब्रह्मसंस्थशब्दं परिव्राडेकविषये संकोचे कारणाभावान्निरोद्धुमयुक्तम् । न च पारिव्राज्याश्रमधर्ममात्रेणामृतत्वम् । ज्ञानानर्थक्यप्रसङ्गात् । पारिव्राज्यधर्मयुक्तमेव ज्ञानममृतत्वसाधनमिति चेन्न । आश्रमधर्मत्वाविशेषात् । धर्मो वा ज्ञानविशिष्टोऽमृतत्वसाधनमित्येतदपि सर्वाश्रमधर्माणामविशिष्टम् । न च वचनमस्ति परिव्राजकस्यैव ब्रह्मसंस्थस्य मोक्षो नान्येषामिति । ज्ञानान्मोक्ष इति च सर्वोपनिषदां सिद्धान्तः । तस्माद्य एव ब्रह्मसंस्थः स्वाश्रमविहितकर्मवतां सोऽमृतत्वमेतीति ।

ज्ञानकर्मसमुच्चयपक्षनिरासः

न । [2]कर्मनिमित्तविद्याप्रत्यययोर्विरोधात् । कर्त्रादिकारकक्रियाफलभेदप्रत्ययवत्त्वं हि निमित्तमुपादायेदं

नरेन्द्रपुरीयं टिप्पणम्

युक्तमिति सम्बन्धः । रूढिपक्षे दोषान्तरमाह—न च पारिव्राज्येति । ज्ञानस्य किमित्यानर्थक्यं धर्मसहितस्य ज्ञानस्य ज्ञानसहितस्य वा धर्मस्याऽमृतत्वसाधनत्वादिति शङ्कमानस्य समुच्चयवाद आपद्यत इत्याह—पारिव्राज्यधर्मेत्यादिना । समुच्चयानुष्ठायी ब्रह्मसंस्थ इति वृत्तिकारमतं समुच्चयावष्टम्भेन दूषयति—न, कर्मेति । कर्मनिमित्तप्रत्ययस्य शुद्ध-

आनन्दगिरिटीका

सामर्थ्यमस्ति परिव्राजकस्य तु निर्व्यापारस्य ब्रह्मसंस्थता सुकरेत्यत आह—स्वकर्मेति । ननु परिव्राजके ब्रह्मसंस्थशब्दो रूढो गवादिशब्दवत् । तन्नासावाश्रमान्तरमास्कन्दति तत्राऽऽह—न चेति । निमित्तमादाय प्रवृत्तत्वेऽपि किमिति रूढिर्न स्यादित्याशङ्क्याऽऽह—न हीति । नन्वेष शब्दो नैमित्तिकोऽपि परिव्राजकमात्रमधिकरोति । तत्रैव निमित्तस्य सत्त्वात्तत्राऽऽह—सर्वेषां चेति । ननु पङ्कजादिशब्दा निमित्तमस्तीत्येतावता नेन्दीवरादौ वर्तन्ते किन्तु तामरसादिमात्रं विषयीकुर्वन्ति । तथा ब्रह्मसंस्थशब्दो निमित्तवत्यपि गृहस्थादावनवस्थितः परिव्राजकमेव परं गोचरयेदत आह—यत्रेति । ब्रह्मसंस्थशब्दं निरोद्धुमयुक्तमिति सम्बन्धः । रूढिपक्षे दोषान्तरमाह—न चेति । धर्मसहितस्य ज्ञानस्य ज्ञानसहितस्य वा धर्मस्यामृतत्वसाधनत्वान्न ज्ञानानर्थक्यमित्याशङ्क्याऽऽद्यपक्षमनुवदति—पारिव्राज्येति । पारिव्राज्यधर्मेणैवेति नायं नियमो गृहस्थादिधर्माणामप्याश्रमधर्मत्वेन तुल्यत्वात्तद्विशिष्टज्ञानममृतत्वहेतुरित्यपि वक्तुं सुकरत्वादित्याह—नाऽऽश्रमेति । द्वितीयं दूषयति—धर्मो वेति । यदि परिव्राजकधर्मो ज्ञानविशिष्टो मुक्तिहेतुरित्युच्यते तदैतदपि मुक्तिहेतुत्वं सर्वाश्रमधर्माणां ज्ञानविशिष्टानामविशिष्टम् । तथा च रूढिपक्षेऽपि परिव्राजकस्यैव ज्ञानान्मुक्तिरित्यर्थः । इतश्च परिव्राजकस्यैव मुक्तिभाक्त्वमसिद्धमित्याह—न चेति । मा तर्हि कस्यचिदपि मुक्तिर्भूदिति तत्राऽऽह—ज्ञानादिति । ब्रह्मसंस्थवाक्यार्थमुपसंहरति—तस्मादिति । परिव्राजकस्यैवामृतत्वमित्यनियमाज्ज्ञानादेव तदिति च नियमादित्यर्थः ।

---

१. यववराहेति—पूर्वतन्त्रे ( १।३।५ ) यववराहाधिकरणे स्थितम् । अत्र शब्दप्रयोगरूपाचारस्य यत्र आर्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः, यथा यवशब्दस्य वराहशब्दस्य पीलुशब्दस्य च । यवशब्दस्य दीर्घशूके आर्याणां प्रियङ्गुषु म्लेच्छानां वराहशब्दस्य वायसे म्लेच्छानां सूकरे आर्याणां प्रयोगः इति विप्रतिपत्तौ तयोस्तुल्यबलत्वम् म्लेच्छानामप्यभियुक्तत्वाविशेषादिति पूर्वपक्षः । सिद्धान्तस्तु शक्यतावच्छेदकभेदेनानेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिर्नोभयत्र । न च विनिगमनाविरहः आर्यप्रसिद्धेरेव नियामकत्वात् । आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति न म्लेच्छाः । अतः तत्प्रसिद्ध्या दीर्घशूके यवपदस्य वराहपदस्य सूकरे शक्तिः । प्रियङ्गुवायसादौ तु लक्षणया शक्तिभ्रमाद्वा प्रयोग इति ।

२. कर्मनिमित्तेति—कर्मणो निमित्तं क्रियाकारकादिभेदप्रत्ययो विद्याप्रत्ययो विद्यावत्पुरुषगतं ज्ञानं तच्च सर्वं ब्रह्म न तु तद्व्यतिरिक्तमस्ति इत्येवमात्मकं तयोर्विरोधादित्यर्थः ।

कुर्विदं मा कार्षीरिति कर्मविधयः प्रवृत्ताः। तच्च निमित्तं न शास्त्रकृतम्। सर्वप्राणिषु दर्शनात्। "सदेकमेवाद्वितीयं" "आत्मैवेदं सर्वं" "ब्रह्मैवेदं सर्वमि"तिशास्त्रजन्यः प्रत्ययो विद्यारूपः स्वाभाविकं क्रियाकारकफलभेदप्रत्ययं कर्मविधिनिमित्तमनुपमृद्य न जायते। भेदाभेदप्रत्यययोर्विरोधात्। न हि [1]तैमिरिकद्विचन्द्रादिभेदप्रत्ययमनुपमृद्य तिमिरापगमे चन्द्राद्येकत्वप्रत्यय उपजायते। विद्याविद्याप्रत्यययोर्विरोधात्। तत्रैवं सति यं भेदप्रत्ययमुपादाय कर्मविधयः प्रवृत्ताः स यस्योपमर्दितः सदेकमेवाद्वितीयं तत्सत्यं विकारभेदोऽनृतमित्येतद्वाक्यप्रमाणजनितेनैकत्वप्रत्ययेन स सर्वकर्मभ्यो निवृत्तो निमित्तनिवृत्तेः,[2] स च निवृत्तकर्मा ब्रह्मसंस्थ उच्यते, स च परिव्राडेवान्यस्यासम्भवात्। अन्यो ह्यनिवृत्तभेदप्रत्ययः सोऽन्यत्पश्यञ्शृण्वन्मन्वानो विजानन्निदं कृत्वेवं प्राप्नुयामिति हि मन्यते। तस्यैवं कुर्वतो न ब्रह्मसंस्थता। वाचारम्भणमात्रविकारानृताभिसन्धिप्रत्ययवत्वात्। न चासत्यमित्युपमर्दिते भेदप्रत्यये सत्यमिदमनेन कर्तव्यं मयेति प्रमाणप्रमेयबुद्धिरुपपद्यते। आकाश इव तलमलबुद्धिर्विवेकिनः। उपमर्दितेऽपि भेदप्रत्यये कर्मभ्यो न निवर्तते चेत्प्रागिव भेदप्रत्ययोपमर्दनादेकत्वप्रत्ययविधायकं वाक्यमप्रमाणीकृतं स्यात्। [3]अभक्ष्यभक्षणादिप्रतिषेधवाक्यानां प्रामाण्यवद्युक्तमेकत्ववाक्यस्यापि प्रामाण्यम्। सर्वोपनिषदां तत्परत्वात्।

### नरेन्द्रपुरीयं टिप्पणम्

ब्रह्मात्मतासाक्षात्कारस्य च परस्परविरोधात्समुच्चयो न सम्भवतीति वस्तुसंग्रहवाक्यं विवृणोति—कर्त्रादीत्यादिना। समुच्चयकारी चेत् ब्रह्मसंस्थो न भवति, कस्तर्हि ब्रह्मसंस्थ इत्यत आह—तत्रैवं सतीति। अन्यस्यासम्भवादिति। गृहस्थत्वाद्यभिमानवतो निमित्तनिवृत्त्या कर्मनिवृत्तेरसम्भवाद्विद्वत्संन्यास्येव ब्रह्मसंस्थ इत्युक्तम्। एतत् स्फुटयति—अन्यो हीत्यादिना। वाचारम्भणमात्रे विकारे अनृतशरीरादौ ब्राह्मणोऽहमित्याद्यभिसन्धानरूपो मिथ्याभिमानरूपः प्रत्ययो यस्यास्ति स तथोक्तः तस्य भावस्तस्मादित्यर्थः। ननु ब्रह्मविदोऽपि पूर्वसंस्कारवशात् द्वैतसत्यत्वाभिनिवेशे कर्मप्रवृत्तिसम्भवाद्ब्रह्मसंस्थता न सम्भाव्यत इत्याशङ्क्याह—न चासत्यमिति। असत्यमिदमिति विवेकेन सत्यत्वाभिनिवेशे उपमर्दिते न पुनस्सत्यत्वाभिनिवेशेन प्रवृत्तिरुपपद्यते। आभासरूपा तु भेदबुद्धिर्न कर्माधिकारित्वहेतुरित्यर्थः। अद्वैतज्ञानवतो निमित्तनिवृत्तेः कर्मनिवृत्तिरवश्यम्भाविनीत्युक्तम्। यस्तु ज्ञानित्वाभिमानेऽपि नैष्कर्म्यं नावलम्बते स विप्रलम्भकश्शास्त्रमप्यप्रमाणीकरोतीत्याह—उपमर्दितेऽपीति। एकत्वप्रत्ययजनकं शास्त्रं न भवत्येव प्रमाणं

### आनन्दगिरिटीका

ब्रह्मसंस्थः समुच्चयानुष्ठायीति वृत्तिकारमतं निराकरोति—न, कर्मेति। कर्मनिमित्तप्रत्ययस्य शुद्धब्रह्मात्मतासाक्षात्कारस्य च मिथो विरोधान्न समुच्चयसिद्धिरिति। वस्तुसंग्रहवाक्यं विवृणोति—कर्त्रादीति। कर्मविधयो निषेधाश्चेति द्रष्टव्यम्। तथाऽपि प्रत्ययत्वाविशेषात्कारकाकारकविधिनिषेधयोर्न विरोधोऽस्तीत्याशङ्क्याऽऽह—तच्चेति। प्रत्ययत्वेऽपि शास्त्रीयाशास्त्रीयतया विद्याविद्याभावेन विरोधोऽस्तीत्यर्थः। सति विरोधे किं स्यादत्राऽऽह—स्वाभाविकमिति। विद्यारूपः प्रत्यय इति पूर्वेण सम्बन्धः। तत्रोक्तमेव हेतुं स्मारयति—भेदेति। तत्र लोकप्रसिद्धमुदाहरणमाह—न हीति। भेदाभेदप्रत्यययोर्विद्याविद्यात्मनोर्विरोधेन समुच्चयासम्भवात्तदनुष्ठायी ब्रह्मसंस्थो न भवति चेत्कस्तर्हि ब्रह्मसंस्थः स्यादत्राऽऽह—तत्रेति। उक्तरीत्या समुच्चयायोगे सतीति यावत्। अन्यस्य गृहस्थादेर्ब्रह्मसंस्थतासम्भवमुक्तं साधयति—अन्यो हीति। वाचारम्भणमात्रे विकारेऽनृते शरीरादौ ब्राह्मणोऽहमित्याद्यभिसन्धानरूपो मिथ्याभिनिवेशात्मको यः प्रत्ययस्तद्वत्त्वादिति हेत्वर्थः। ननु ब्रह्मविदोऽपि संस्कारवशाद्द्वैतसत्यत्वाभिनिवेशपूर्वकं कर्मप्रवृत्तिसम्भवान्न ब्रह्मसंस्थता सुप्रतिपाद्येत्यत्र आह—न चेति। असत्यमिदमिति विवेकेन सत्यत्वाभिनिवेशे शिथिलीकृते पुनः सत्यत्वाभिनिवेशेन न प्रवृत्तिरुपपद्यते। आभासरूपा तु भेदबुद्धिर्न कर्मप्रवृत्तेहेतुरित्यर्थः। अद्वैतज्ञानवतो निमित्तनिवृत्त्या कर्मनिवृत्तिरवश्यम्भाविनीत्युक्तम्। विपक्षे दोषमाह—उपमर्दितेऽपीति। एकत्वप्रत्ययजनकं शास्त्रं न भवत्येव प्रमाणं पूर्वप्रवृत्तभेदप्रत्ययविरोधादिति मतमाशङ्क्याऽऽह—

---

१. तिमिरदोषजन्यम्। २. निमित्तं क्रियाफलकारकादिभेदप्रत्ययः।

३. प्रवर्तकवाक्यानामेव प्रामाण्यमिति मीमांसकमतनिरासाय निषेधबोधकवाक्यदृष्टान्तोक्तिः निषेधवाक्यानि न प्रवर्तनाबोधकानीति भट्टमतम्। प्रभाकरमतरीत्या तु नायं दृष्टान्तः, तन्मते निषेधवाक्यानामपि अकरणसङ्कल्पाख्यमानसव्यापारविधिपरत्वात्।

कर्मशास्त्रप्रामाण्योपपादनम्

कर्मविधीनामप्रामाण्यप्रसङ्ग इति चेत्। न। अनुपमर्दितभेदप्रत्ययवत्पुरुषविषये प्रामाण्योपपत्तेः स्वप्नादिप्रत्यय इव प्राक्प्रबोधात्। विवेकिनामकरणात्कर्मविधिप्रामाण्योच्छेद इति चेत्। न। काम्यविध्यनुच्छेददर्शनात्। न हि कामात्मता न प्रशस्तेत्येवंविज्ञानवद्भिः काम्यानि कर्माणि नानुष्ठीयन्त इति काम्यकर्मविषय उच्छिद्यन्तेऽनुष्ठीयन्त एव कामिभिरिति। तथा ब्रह्मसंस्थैर्ब्रह्मविद्भिर्नानुष्ठीयन्ते कर्माणीति न तद्विषय उच्छिद्यन्तेऽब्रह्मविद्भिरनुष्ठीयन्त एवेति। परिव्राजकानां भिक्षाचरणादिवदुत्पन्नैकत्वप्रत्ययानामपि गृहस्थादीनामग्निहोत्रादिकर्मानिवृत्तिरिति चेन्न। प्रामाण्यचिन्तायां पुरुषप्रवृत्तेरदृष्टान्तत्वात्। [1]न हि नाभिचरेदिति प्रतिषिद्धमप्यभिचरणं कश्चित्कुर्वन्दृष्ट इति शत्रौ

नरेन्द्रपुरीयं टिप्पणम्

पूर्वप्रवृत्तभेदप्रत्ययविरोधादिति कर्मश्रद्धाजडस्य मतमाशङ्क्याह—अभक्ष्येति। पूर्वप्रवृत्ताभक्ष्यभक्षणप्रत्ययविरोधेऽपि पर्युषितं न भक्षयेदित्यादिशास्त्रं यथा प्रमाणं रागादिदोषोत्थस्य प्रत्ययस्याप्रामाणत्वात्, तथैव भेदप्रत्ययस्याविद्योत्थत्वात्प्रामाण्यासम्भवात्तद्विरोधेऽप्यद्वैतशास्त्रस्य प्रामाण्यं युक्तमित्यर्थः। तात्पर्यस्याभावादप्रामाण्यं कार्यपरत्वाद्वेदस्येत्यपि न वाच्यमित्याह—सर्वेति। उपक्रमोपसंहारैक्यरूप्यादिषड्विधतात्पर्यलिङ्गदर्शनादित्यर्थः। भेदालम्बनकर्मविधिविरोधादप्रामाण्यं शङ्कित्वा परिहरति—तद्विधीनामिति। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन" इति स्मृतेस्सम्यग्दर्शिनां कर्मभ्य उपरमदर्शनादन्येऽपि उपरंस्यन्ति इत्याह—विवेकिनामिति। प्रकृतिपरवशत्वाल्लोकस्य न विवेकिप्रवृत्तिमनुवर्तते लोकः। "प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यती"त्युक्तम्। ततो ब्रह्मविदां नैष्कर्म्येऽपि न कर्मविधीनामप्रामाण्यप्रसङ्ग इत्याह—न काम्येति। यदुक्तमद्वैतज्ञानिनोऽवश्यम्भाविनी कर्मनिवृत्तिरिति। तद्दृष्टान्तेन विघटयति—परिव्राजकानामिति। अद्वैतज्ञानस्वभावपर्यालोचनायां भिक्षाचरणादिप्रवृत्तिरप्यघटमानैव, कथं सिद्धवदुदाह्रियते? कर्मप्रवृत्तिः समुच्चयवादिना प्रामाणिकी निरूपणीया। तत्र किं कस्यचित् प्रत्ययस्य प्रामाण्यमस्तीत्येतदेव चिन्तनीयम्, न तु प्रत्ययाभासमूलं प्रवृत्त्याभासमुदाहरणम्, अग्निहोत्रादिप्रवृत्तेराभासत्वाङ्गीकारे वैधसमुच्चयसिद्धान्तहानिप्रसङ्गादित्याभिप्रेत्याह—न, प्रामाण्येति। इतश्च नायं दृष्टान्त इत्याह—

आनन्दगिरिटीका

अभक्ष्येति। यथा न कलञ्जं भक्षयेदित्यादि शास्त्रं पूर्वप्रवृत्तकलञ्जादिभक्षणप्रत्ययविरोधेऽपि प्रमाणं रागादिदोषात्तस्य प्रत्ययस्याप्रमाणत्वात्तथैव भेदप्रत्ययस्याविद्योत्थत्वात्प्रामाण्यासम्भवात्तद्विरोधेऽप्यद्वैतशास्त्रस्य युक्तमेव प्रामाण्यमित्यर्थः। कार्यपरत्वादद्वैते तात्पर्याभावात्कुतस्तच्छास्त्रस्य प्रामाण्यमित्याशङ्क्याऽऽह—सर्वोपनिषदामिति। उपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्गदर्शनादद्वैते तात्पर्यं तासामवसीयते तद्युक्तमद्वैतशास्त्रस्य स्वार्थे प्रामाण्यमित्यर्थः। भेदालम्बनकर्मविधिविरोधान्नाद्वैतशास्त्रं स्वार्थे मानमिति शङ्कते—कर्मविधीनामिति। यथा स्वप्नप्रत्ययो गन्धर्वनगरादिप्रत्ययश्च प्राक्तत्त्वज्ञानादज्ञं पुरुषमधिकृत्य प्रमाणं तथा कर्मविधीनामप्यविदुषि पुरुषे प्रामाण्यसम्भवान्नाद्वैतशास्त्रस्य तद्विरोधोऽस्तीति परिहरति—नानुपमर्दितेति। "यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति स्मृतेस्तत्त्वदर्शिनां कर्मभ्यः सकाशादुपरमे सत्यन्येऽप्युपरंस्यन्ते। तथा च कर्मविधिविरोधतादवस्थ्यमिति शङ्कते—विवेकिनामिति। प्रकृतिपरवशत्वाल्लोकस्य नासौ विवेकी प्रकृतिमनुवर्तते। "प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति" इति स्मृतेः। ततो ब्रह्मविदां नैष्कर्म्येऽपि न कर्मविधीनामप्रामाण्यप्रसक्तिरित्युत्तरमाह—न काम्येति। तदेव प्रपञ्चयति—न हीति। इति नोच्छिद्यन्त इति शेषः। अस्तु, प्रस्तुते किमायातं तदाह—तथेति। अनुष्ठीयन्त एवेति तद्विधीनामनुच्छित्तिरिति वाक्यशेषः। अद्वैतवादिनोऽवश्यम्भाविनी कर्मनिवृत्तिरित्युक्तं दृष्टान्तेन विघटयन्नाशङ्कते—परिव्राजकानामिति। अद्वैतधीस्वभावालोचनायां भिक्षाटनादिप्रवृत्तिरप्यघटमानैवेति मन्वानः समाधत्ते—न, प्रामाण्येति। समुच्चयस्य प्रामाणिकत्वनिरूपणायां प्रत्ययाभासमूलस्य प्रवृत्त्याभासस्य

१. कर्मप्रवृत्तौ निमित्तं भेदप्रत्ययः, प्रतिषिद्धाचरणे रागः। तथा च प्रतिषिद्धेऽपि कश्चिद्रागात् प्रवर्तते। तथा भेदप्रत्यये निवृत्तेऽपि बुभुक्षया भिक्षाचरणे प्रवर्तते भिक्षा शरीरधारणे आवश्यकी। अग्निहोत्रादिकं तु नावश्यकं ब्रह्मविदः अनधिकारित्वेन प्रत्यवायाप्रसक्तेः। भिक्षाचरणप्रवृत्तिः केवलमाभासः न तु अग्निहोत्रादिप्रवृत्तिवत् प्रमाणनिवृत्ता।

द्वेषरहितेनापि विवेकिनाऽभिचरणं क्रियते। न च कर्मविधिप्रवृत्तिनिमित्ते भेदप्रत्यये बाधितेऽग्निहोत्रादौ प्रवर्तकं निमित्तमस्ति, परिव्राजकस्येव भिक्षाचरणादौ बुभुक्षादि प्रवर्तकम्। इहाप्यकरणे प्रत्यवायभयं प्रवर्तकमिति चेत्। न। भेदप्रत्ययवतोऽधिकृतत्वात्। भेदप्रत्ययवाननुपमर्दितभेदबुद्धिर्विद्यया यः स कर्मण्यधिकृत इत्यवोचाम। यो ह्यधिकृतः कर्मणि तस्य तदकरणे प्रत्यवायो न निवृत्ताधिकारस्य गृहस्थस्येव ब्रह्मचारिणो विशेषधर्माननुष्ठाने। एवं तर्हि सर्वः स्वाश्रमस्थ उत्पन्नैकत्वप्रत्ययः परिव्राडिति चेत्। न। स्वस्वामित्वभेदबुद्ध्यनिवृत्तेः। कर्मार्थत्वाच्चेतराश्रमाणाम्। "अथ कर्म कुर्वीय" इति श्रुतेः। तस्मात्स्वस्वामित्वाभावाद्भिक्षुरेक एव परिव्राट्। न गृहस्थादिः। एकत्वप्रत्ययविधिजनितेन प्रत्ययेन विधिनिमित्तभेदप्रत्ययस्योपमर्दितत्वाद्यमनियमाद्यनुपपत्तिः परिव्राजकस्येति चेत्। न। बुभुक्षादिनैकत्वप्रत्ययात्प्रच्यावितस्योपपत्तेर्निवृत्त्यर्थत्वात्। न च प्रतिषिद्धसेवाप्राप्तिः। एकत्वप्रत्ययोत्पत्तेः प्रागेव प्रतिषिद्धत्वात्। न हि रात्रौ कूपे कण्टके वा पतित उदितेऽपि सवितरि पतति तस्मिन्नेव। तस्मात्सिद्धं निवृत्तकर्मा भिक्षुक एव ब्रह्मसंस्थ इति।

नरेन्द्रपुरीयं टिप्पणम्

न चेति। अधिकारनिवृत्तेः प्रत्यवायप्राप्त्यभावात् कर्मसु प्रवृत्त्यभावात्। कर्मभ्यो निवृत्तिः पारिव्राज्यं चेत्तर्ह्यतिप्रसङ्ग इत्याह—एवं तर्हीति। कर्मसाधनं सर्वं त्यज्यते यज्ञोपवीतादि चेत्तर्हि न स्वाश्रमस्थता। न त्यज्यते चेत्तर्हि न पारिव्राज्यप्राप्तिः साधनसंग्रहस्य साध्यार्थत्वादित्याह—न स्वेति। यदुक्तमधिकारनिवृत्तेः प्रत्यवायाप्राप्तिः परिव्राजकानामिति तत्रानिष्टं प्रसञ्जयति—एकत्वप्रत्ययेति। एकत्वप्रत्ययार्थो विधिर्महावाक्यं, तज्जनितेन प्रत्ययेन विध्यधिकारस्योपमर्दितत्वान्नास्त्येव वैधं यमाद्यनुष्ठानम्। व्यवहारस्तु पूर्ववासनातो भविष्यतीत्याह—न बुभुक्षादिनेति। अहिंसादेर्यमस्य निवृत्त्यर्थत्वाच्च नैक्यप्रत्ययविरोध इत्याह—निवृत्तीति। यथोपन्यासं पूर्वपक्षमनूद्य निरस्यति—

आनन्दगिरिटीका

नोदाहरणत्वम्। अग्निहोत्रादिप्रवृत्तेरप्याभासत्वे प्रामाणिकसमुच्चयसिद्धान्तहानिरतो नैतच्चोद्यमित्यर्थः। एतदेव दृष्टान्तेन स्पष्टयति—न हीति। तद्वदविवेकिना कर्म क्रियमाणं दृष्टमिति विवेकिभिरपि तन्न क्रियते। भिक्षाटनादिप्रवृत्त्याभासस्त्वप्रामाणिकोऽग्निहोत्रादिप्रवृत्तेर्नोदाहरणमिति शेषः। इतश्च नेदमुदाहरणमित्याह—न चेति। अग्निहोत्रादावपि प्रवर्तकमस्तीति शङ्कते—इहापीति। अकरणकृतं प्रत्यवायाख्यं भयमविवेकिनो विवेकिनो वेति विकल्प्याऽऽद्यमङ्गीकरोति—न भेदेति। कर्मणि भेदबुद्धिमतोऽधिकृतत्वेऽपि तस्य तदकरणे किं स्यादित्याशङ्क्याऽऽह—यो हीति। द्वितीयं दूषयति—न निवृत्तेति। विवेकिनो निवृत्ताधिकारस्य प्रत्यवायाप्राप्त्या कर्मसु प्रवर्तकाभावात्कर्मभ्यो निवृत्तिरूपं पारिव्राज्यं चेदतिप्रसङ्गस्तर्हीति शङ्कते—एवं तर्हीति। कर्मसाधनं स्वयज्ञोपवीतादि त्यज्यते न वा। त्यज्यते चेन्न स्वाश्रमधर्मः। ततो यज्ञोपवीताद्यन्तरेण गार्हस्थ्यादिभावासम्भवात्। न त्यज्यते चेन्न पारिव्राज्यप्राप्तिः। साधनसंग्रहस्य साध्यार्थत्वादिति परिहरति—न स्वस्वामित्वेति। इतश्चाऽऽश्रमान्तरेषु न पारिव्राज्यमित्याह—कर्मार्थत्वादिति। जायापुत्रवित्तसम्पत्त्यानन्तर्यं श्रुतावथशब्दार्थः। गृहस्थादिषु स्वाश्रमस्थेष्वेव पारिव्राज्यस्य दुर्वचत्वे फलितमाह—तस्मादिति। विवेकवशाद्यज्ञोपवीतादौ स्वशब्दार्थे स्वामित्वबुद्ध्यभावादिति यावत्। यत्तु परिव्राजकस्य निवृत्ताधिकारस्य प्रत्यवायाप्राप्तिरिति तत्रानिष्टापत्तिमाशङ्कते—एकत्वेति। तद्विषयप्रत्ययस्य विधिरुत्पादकं [1]तत्त्वमस्यादिवाक्यं तज्जनितेनैकत्वविषयेण प्रत्ययेनेति यावत्। तथा च यथेष्टचेष्टाप्रसक्तिरिति शेषः। ज्ञानिनो वैधं यमादि नास्ति तत्प्रवृत्तिस्तु संस्कारवशादित्याशयेनाऽऽह—न बुभुक्षादिनेति। यो हि दृष्टेन दोषेण तत्त्वज्ञानात्कथञ्चित्प्रच्युतिमापादितस्तस्य संस्कारवशाद्यमनियमानुष्ठानमुपपद्यते। तस्य दोषकृततत्त्वप्रच्युतिप्रसूतानियतचेष्टानिवृत्त्यर्थत्वेनावश्यानुष्ठेयत्वात्। तथा च न यथेष्टचेष्टापत्तिरित्यर्थः। इतश्च विदुषो वैधप्रवृत्त्यभावेऽपि यथेष्टचेष्टा नास्तीत्याह—न चेति। अविदुषोऽपि न यथेष्टचेष्टा विदुषस्तु सा कुतस्त्येति दृष्टान्तेन स्फुटयति—न हीति। अन्येषां ब्रह्मसंस्थत्वासम्भवे फलितमुपसंहरति—तस्मादिति। परोक्तमनूद्याङ्गी

---

१. अज्ञातज्ञापकं वचनं विधिः अतः महावाक्यं विधिः, निषेधप्रतियोगित्वं विधित्वमिति पक्षे यजेतेत्यादिकमेव विधिः।

### ब्रह्मसंस्थः परिव्राडेवेति व्यवस्थापनम्

यत्पुनरुक्तं सर्वेषां ज्ञानवर्जितानां पुण्यलोकतेति । सत्यमेतत् । यच्चोक्तं तपःशब्देन परिव्राडप्युक्त इति । एतदसत् । कस्मात् । परिव्राजकस्यैव ब्रह्मसंस्थतासम्भवात् । स एव ह्यवशेषित इत्यवोचाम । एकत्वविज्ञानवतोऽग्निहोत्रादिवत्तपोनिवृत्तेश्च । भेदबुद्धिमत एव हि [1]तपःकर्तव्यता स्यात् । एतेन कर्मच्छिद्रे ब्रह्मसंस्थतासामर्थ्यं अप्रतिषेधश्च प्रत्युक्तः । तथा ज्ञानवानेव निवृत्तकर्मा परिव्राडिति ज्ञानवैयर्थ्यं प्रत्युक्तम् । यत्पुनरुक्तं यववराहादिशब्दवत्परिव्राजके न रूढो ब्रह्मसंस्थशब्द इति तत्परिहृतम् । तस्यैव ब्रह्मसंस्थतासम्भवान्नान्यस्येति[2] । यत्पुनरुक्तं रूढशब्दा निमित्तं नोपाददत इति । तन्न । गृहस्थतक्षपरिव्राजकादिशब्ददर्शनात् । [3]गृहस्थितिपारिव्राज्यतक्षणादिनिमित्तोपादाना अपि गृहस्थपरिव्राजकाश्रमिविशेषे विशिष्टजातिमति च तक्षेति रूढा दृश्यन्ते शब्दाः । न यत्र यत्र तानि निमित्तानि तत्र तत्र वर्तन्ते । [4]प्रसिद्धयभावात् । तथेहापि ब्रह्मसंस्थशब्दो निवृत्तसर्वकर्मतत्साधनपरिव्राडेकविषयेऽत्याश्रमिणि परमहंसाख्ये वृत्त इह भवितुमर्हति । मुख्यामृतत्वफलश्रवणात् । अतश्चेदमेवैकं वेदोक्तं

### नरेन्द्रपुरीयं टिप्पणम्

यत् पुनरुक्तमित्यादिना । अनिवृत्तभेदप्रत्यय इति । वैराग्यमात्रेण यः प्रव्रजति आतुरो वा विविदिषुर्वा तस्यार्धसंन्यासिनस्तपआत्मककर्मकर्तव्यसद्भावात्तपश्शब्देनोपादानमस्तु । न तावता सर्वसंन्यासिनः परमहंसस्यावशेषो निराकर्तुं शक्यत इत्यर्थः । इतश्च न तपश्शब्देन परमहंसः परामृष्ट इत्याह—एकत्वेति । एतेनेति । अनिवृत्तभेदप्रत्ययस्य ब्रह्मसंस्थताया असम्भवेनेत्यर्थः । एकत्वोपदेशेन भेदप्रत्ययनिरासादनिवृत्तभेदप्रत्ययस्यार्थाद्ब्रह्मसंस्थताप्रतिषेधस्सिद्ध इत्यर्थः । लौकिकरूढ्यभावेऽप्यन्यस्य ब्रह्मसंस्थताया असम्भवात् रूढिरापद्यत इत्याह—[5]परिहृतमेतदिति । गृहस्थितिश्च प्रव्रज्या च तक्षणादि च तान्येव निमित्तानि तेषां गृहस्थितिप्रव्रज्यातक्षणादिनिमित्तानामुपादानं स्वीकरणं विद्यते येषां ते तथोक्ताः । अपि तु [न] दृश्यन्त इत्यन्वयः । यज्ञोपवीतत्रिदण्डकमण्डल्वादिपरिग्रहः परिव्राजकेन कर्तव्यः इति च पारिव्राज्यविधिप्रकरणे श्रुतिर्न दृश्यते। ततोऽपि पारमहंस्यमेव श्रौतमित्यर्थः।

### आनन्दगिरिटीका

करोति—यत्पुनरिति । उक्तमर्थान्तरमनुवदति—यच्चेति । किं परिव्राजकस्य ज्ञानहीनस्याऽऽश्रममात्रनिष्ठस्य तपःशब्देनोपादानमाहो ज्ञानवतोऽपीति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—एतदसदिति । ज्ञानवतोऽपि तपस्वित्वात्तपःशब्देनोपादानमुचितमिति शङ्कित्वा प्रत्याह—कस्मादित्यादिना । तपःशब्देन नासौ गृहीत इति शेषः । तस्य च ज्ञानवतोऽवशिष्टत्वं प्रागेवोपदिष्टमित्याह—स एवेति । इतश्च परमहंसपरिव्राजको न तपःशब्देन परामृष्ट इत्याह—एकत्वेति । तदेव स्फोरयति—भेदेति । यत्तु कर्मच्छिद्रे गृहस्थादेरपि ब्रह्मसंस्थतासामर्थ्यमिति तत्प्रत्याह—एतेनेति । अनिवृत्तभेदप्रत्ययस्य ब्रह्मसंस्थत्वासंभवेनेति यावत् । सामर्थ्यं प्रत्युक्तमिति सम्बन्धः । यत्तु चतुर्णामपि ब्रह्मसंस्थताया अप्रतिषेध इति तत्राऽऽह—अप्रतिषेधश्चेति । एकत्वोपदेशेन भेदप्रत्ययनिरासादनिवृत्तभेदप्रत्ययस्यार्थाद्ब्रह्मसंस्थता प्रतिषिद्धेत्यर्थः । पारिव्राज्यमात्रेणामृतत्वे ज्ञानवैयर्थ्यमुक्तं परिहरति—तथेति। चोद्यान्तरमनूद्योक्तं परिहारं स्मारयति—यत्पुनरुक्तमिति । तत्र रूढोऽयं शब्द इति शेषं पञ्चम्या सूचयति । चोद्यान्तरमनूद्य दूषयति—यत्पुनरित्यादिना । आदिपदेन पङ्कजादिशब्दो गृह्यते । उक्तं प्रपञ्चयति—गृहस्थितीति । इहापीति प्रकृतवाक्योपादानम् । प्रकृते परमहंसे परिव्राजके ब्रह्मसंस्थपदमित्यत्र हेतुमाह—मुख्येति । इतश्च

---

१. तपः=अनशनादि ।

२. सिद्धान्ते ब्रह्मसंस्थशब्दस्य योगरूढत्वाङ्गीकारात् ।

३. गृहस्थितीति—यथा गृहस्थशब्दो योगात् गृहस्थित्यर्थकोऽपि रूढ्याऽऽश्रमविशेषे वर्तते ततश्च योगरूढ इत्याख्यायते तथा ब्रह्मसंस्थशब्दः परिव्राजके योगरूढ इत्यर्थः ।

४. एतेन पङ्कजादिशब्दाः केवलं यौगिका एव भेकादावप्रयोगस्तु पूर्वपूर्वप्रयोगाभावादिति सिद्धान्तः प्रकटितः, पङ्कजशब्दस्य पद्मत्वं प्रयोगोपाधिः इत्यर्थः ।

५. भाष्ये—तत्परिहृतमिति पाठः ।

पारिव्राज्यम् । न [1]यज्ञोपवीतत्रिदण्डकमण्डल्वादिपरिग्रह इति । "मुण्डोऽपरिग्रहोऽसङ्ग" इति श्रुतिः "अत्याश्रमिभ्यः परमं पवित्रमि"त्यादि च श्वेताश्वतरीये। "निःस्तुतिर्निर्नमस्कार" इत्यादिस्मृतिभ्यश्च। "तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः"। "तस्मादलिङ्गो धर्मज्ञोऽव्यक्तलिङ्गः" इत्यादिस्मृतिभ्यश्च।

यत्तु सांख्यैः कर्मत्यागोऽभ्युपगम्यते। क्रियाकारकफलभेदबुद्धेः सत्यत्वाभ्युपगमात् तन्मृषा। यच्च बौद्धैः शून्यताभ्युपगमादकर्तृत्वमभ्युपगम्यते। तदप्यसत्। तदभ्युपगन्तुः सत्त्वाभ्युपगमात्[2]। यच्चाज्ञैरलसतयाऽकर्तृत्वाभ्युपगमः सोऽप्यसन्, कारकबुद्धेरनिर्वर्तितत्वात्प्रमाणेन। तस्माद्वेदान्तप्रमाणजनितैकत्वप्रत्ययवत एव कर्मनिवृत्तिलक्षणं पारिव्राज्यं ब्रह्मसंस्थत्वं चेति सिद्धम्। एतेन गृहस्थस्यैकत्वविज्ञाने सति पारिव्राज्यमर्थसिद्धम्। नन्वग्न्युत्सादन-

### नरेन्द्रपुरीयं टिप्पणम्

निवृत्तसर्वकर्मतत्साधने परिव्राजकशब्दो मुख्य इत्यत्र सम्वादमाह—अत्याश्रमिभ्य इति। कर्मसाधनसम्पन्नानाश्रमिणोऽतीत्य वर्तन्त इत्यत्याश्रमिणः तेभ्यः इत्यर्थः। अधर्मज्ञ इति धर्मविचारनिष्ठारहितस्तत्रासारत्वप्रत्ययादित्यर्थः। कर्मनिवृत्तिमुपदिशद्भिः सांख्यादिमतमेवाश्रितमिति शङ्काऽपाकरणाय प्रक्रमते—यत्तु सांख्यैरित्यादिना। न निष्क्रियात्मज्ञानवलेन नैष्कर्म्यं सम्भवति। सांख्यानां क्रियाकारकादिबुद्धेरविवेकस्य च सत्यत्वेन ज्ञानमात्रापनोद्यत्वा-

### आनन्दगिरिटीका

पारमहंस्यमेव श्रौतमित्याह—अतश्चेति। एवकारार्थं कथयति—न, यज्ञोपवीतेति। इतिशब्दः संन्यासप्रकरणे तथाविधश्रुत्यभावप्रदर्शनार्थः। ब्रह्मसंस्थशब्दस्य परमहंसविषयत्वे श्रुत्यन्तरं सम्वादयति—श्रुतिरिति। अत्याश्रमिभ्यः पूर्वाश्रमत्रयमतीत्य सर्वकर्म त्यक्त्वा स्थितेभ्यः परमहंसपरिव्राजकेभ्य इति यावत्। परमं पवित्रं निरतिशयपरिशुद्धिकारणं परमपुरुषार्थसाधनं सम्यग्ज्ञानं प्रोवाचेत्यर्थः। स्मृतिभ्यश्च यथोक्तं पारिव्राज्यं सिध्यतीति शेषः। "अनाशिपमनारम्भमि"त्यादिवाक्यसंग्रहार्थमादिपदम्। कर्मणो बन्धहेतुत्वं तच्छब्दार्थः। लिङ्गस्य धर्मकारणत्वराहित्यं तस्मादित्युक्तम्। अलिङ्गो धर्मध्वजित्वरहितः। धर्मज्ञो यथावद्धर्मानुष्ठाता। अधर्मज्ञ इति वा पाठः। धर्मविचारनिष्ठारहितस्तत्रासारत्वप्रत्ययवानित्यर्थः। अलिङ्ग इत्युक्तेऽनाश्रमित्वमाशङ्क्याऽऽह—अव्यक्तेति। न व्यक्तं दम्भेन गृहीतं लिङ्गमाश्रमित्वमस्यास्तीत्यव्यक्तलिङ्गः। किन्त्वदम्भेन श्रुतिस्मृत्युक्तप्रकारेण तदस्यास्तीत्यर्थः। आदिपदं "त्यज धर्ममधर्मं चे"त्यादि ग्रहीतुम्। अत्रापि पूर्वपदान्वयः। ननु कर्मनिवृत्तिमुपदिशता त्वया सांख्यमतमेवाऽऽश्रितं तेनापि शरीरादिव्यापारोपरमद्वारा ध्याननिष्ठतायाः स्वीकृतत्वात्तत्राऽऽह—यत्त्विति। न हि तन्मते कूटस्थात्मधीवलेन नैष्कर्म्यं युक्तम्। क्रियाकारकादिबुद्धेरविवेकस्य च सत्यत्वेन ज्ञानमात्रापनोद्यत्वायोगात्। न च सर्वव्यापारोपरमसम्भवो मनोबुद्ध्यादीनां तच्छीलत्वात्। "न हि कश्चित्क्षणमपी"त्यादिस्मृतेः। अतः सांख्यवचो मिथ्यैवेत्यर्थः। ननु बौद्धेनापि नैरात्म्यमिच्छता नैष्कर्म्यमिष्टं तथा च कर्मत्यागमुपदिशता त्वयाऽपि तन्मतमेवानुमोदितं; नेत्याह—यच्चेति। तदभ्युपगन्तुरित्यत्राकर्तृत्वं तच्छब्दार्थः। "दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्" इति स्मृतेरालस्योपहतैरज्ञैरकर्तृत्वमुपेयते भवताऽपि कर्म त्यजता तन्मतमाहृतमित्याशङ्क्याऽऽह—यच्चाज्ञैरिति। अकर्तृत्वाभ्युपगम इति च्छेदः। ते हि मोहादेव कर्म त्यजन्तो न तत्फलं लभन्ते। "स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत्" इति स्मृतेः। वयं तु प्रमाणवशादेव कर्म त्यजन्तो न व्यामूढपक्षमाद्रियामहे। तस्मान्नैष्कर्म्यं श्रुतिस्मृतिप्रसिद्धमप्रत्याख्येयमिति भावः। पक्षान्तरे नैष्कर्म्योक्तेरमूलत्वे स्थिते फलितमुपसंहरति—तस्मादिति। यत्तु कैश्चिदैकाश्रम्यमाश्रितं तत्प्रत्यादिशति—एतेनेति। एकत्वविज्ञानेन भेदप्रत्ययस्योपमर्दितत्वोपपादनेनेति यावत्। एकत्वविज्ञानं परोक्षं विवक्षितम्। अपरोक्षस्य पारिव्राज्यमन्तरेणायोगात्। तस्योपरतिशब्दितस्य शमादिवत्साधनत्वश्रुतेरिति द्रष्टव्यम्। गृहस्थस्य पारिव्राज्ये श्रुतिविरोधं शङ्कते—नन्विति। ऐकात्म्यमेव सत्यं द्वैतमसत्यमिति विवेके

१. यज्ञोपवीतेति—यज्ञोपवीतादिकं कुटीचकादिविषयम्। इदं तु ब्रह्मसंस्थत्वं परमहंसविषयम्, तेषां यज्ञोपवीताद्यभाववचनात् "मुण्डोऽपरिग्रह" इति जाबालोक्तेः।

२. अभ्युपगन्तुः सत्त्वाभ्युपगमात्—बौद्धस्य आत्मा क्षणिकः अस्माभिः अभ्युपगन्ता आत्मा सत्यः अभ्युपगम्यते। तैस्तु क्षणिकत्वात् स नास्त्येव। माध्यमिकस्य तु शून्यवादित्वात् नैरात्म्यमेव अतो नास्माकं तन्मताभ्युपगमः।

प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति ॥ २ ॥

तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक्सन्तृण्णोङ्कार एवेदँ सर्वमोङ्कार एवेदँ सर्वम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य त्रयोविंशः खण्डः

दोषभाक्स्यात्परिव्रजन्। "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इति श्रुतेः। न। वेदेनैवोत्सादितत्वात्[1] उत्सन्न एव हि स एकत्वदर्शने जाते। अपागादग्नेरग्नित्वमिति श्रुतेः। अतो न दोषभाग्गृहस्थः परिव्रजन्निति ॥ १ ॥

यत्संस्थोऽमृतत्वमेति तन्निरूपणार्थमाह—प्रजापतिर्विराट् कश्यपो वा लोकानुद्दिश्य तेषु सारजिघृक्षयाऽभ्यतपदभितापं कृतवान्ध्यानं तपः कृतवानित्यर्थः। तेभ्योऽभितप्तेभ्यः सारभूता त्रयी विद्या सम्प्रास्रवत्प्रजापतेर्मनसि प्रत्यभादित्यर्थः। तामभ्यतपत्। पूर्ववत्। तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरितिव्याहृतयः॥२॥

तान्यक्षराण्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओङ्कारः सम्प्रास्रवत्तद्ब्रह्म, कीदृशमित्याह—तद्यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि पत्रावयवजातानि सन्तृण्णानि निविद्धानि व्याप्तानीत्यर्थः। एवमोङ्कारेण ब्रह्मणा परमात्मनः प्रतीकभूतेन सर्वा वाक्शब्दजातं सन्तृण्णा। "अकारो वै सर्वा वाक्" इत्यादिश्रुतेः। परमात्मविकारश्च

नरेन्द्रपुरीयं टिप्पणम्

सम्भवात्। न च व्यापारोपरमेण, मनःप्रभृतीनां तच्छीलत्वात्। "न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृदि"त्युक्तत्वात्। अतो नैष्कर्म्यं तेषां मिथ्यैवेत्यर्थः। यस्मादन्येषां नैष्कर्म्याभिधानं न मानमूलं तस्मादित्युपसंहारः, ऐकात्म्यमेव सत्यं द्वैतमग्न्याद्यनृतमिति ज्ञाने जाते अग्निरुच्छिन्न एव भवति। अवस्तुत्वाध्यवसायात्ततो न तत्त्यागे दोषप्राप्तिरित्याह—न वेदेनैवेति ॥ १-२ ॥

अस्तु वाग्जातमोङ्कारव्याप्तम्। तावता कथमोङ्कार एवेदं सर्वं स्यादाकाशादेः परमात्मविकारस्य पृथग्विद्यमानत्वादित्याशङ्क्याह—परमात्मविकारश्च नामधेयमात्रशब्दात्[2]। भेदेनार्थस्य सत्वे प्रमाणादर्शनात्

आनन्दगिरिटीका

जाते सत्यग्न्यादेरवस्तुत्वाध्यवसायात्तदभिनिवेशशैथिल्यान्न तत्त्यागे दोषप्राप्तिरिति दूषयति—न वेदेनेति। सम्यग्ज्ञाने सत्यग्न्यादेरुत्सन्नत्वे मानमाह—अपागादिति। गृहस्थस्यापि विवेकवतो वैराग्यद्वारा युक्तं पारिव्राज्यमित्याह—अत इति। इतिशब्दो ब्रह्मसंस्थवाक्यव्याख्यानसमाप्त्यर्थः ॥ १ ॥

किं तद्ब्रह्मेत्याकाङ्क्षायामाह—यत्संस्थ इति। लोकानामभितो दग्धत्वयाऽभितापप्रतिभासं व्यवच्छिनत्ति—ध्यानमिति। द्रवात्मत्वाभावे कथं प्रस्रवणं त्रय्याः स्यादित्याशङ्क्याऽऽह—प्रजापतेरिति। पूर्ववदिति। त्रयीविद्यासारजिघृक्षयाऽऽलोचितवानित्यर्थः ॥ २ ॥

कथं तस्य ब्रह्मशब्दवाच्यत्वमित्याशङ्क्य महत्तरत्वादित्याह—कीदृशमित्यादिना। तत्र ब्रह्मशब्दप्रवृत्तौ हेत्वन्तरं सूचयति—परमात्मन इति। ओङ्कारावयवस्याकारस्यापि सर्ववाग्व्याप्तिरस्ति किमु वक्तव्यमोङ्कारस्येति मन्वानः श्रुत्यन्तरमुदाहरति—अकार इति। ओमितीदं सर्वमित्यादिवाक्यमादिपदार्थः। ओङ्कारव्याप्तत्वेऽपि वाग्जातस्य न तस्य सर्वात्मत्वमाकाशादिपरमात्मविकारस्य पृथगेव विद्यमानत्वादित्याशङ्क्याऽऽह—परमात्मेति। सकलमपि जगत्परमात्मविकारत्वात्तदतिरेकेण नास्ति। स च प्रकृतादोङ्कारान्नातिरिच्यते। "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः" इति श्रुतेः। तस्माद्युक्तमोङ्कारस्य सर्वात्मत्वमित्यर्थः। ओङ्कारं सर्वात्मकं ब्रह्मरूप-

१. वेदेन "अपागादि"ति श्रुत्या। अथवा वेदः वेदनं तत्त्वज्ञानं तेन।

२. भाष्ये—नामधेयमात्रमिति पाठः।

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनँ रुद्राणां माध्यन्दिनँ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनम् ॥ १ ॥**

**क्व तर्हि यजमानस्य लोक इति स यस्तन्न विद्यात्कथं कुर्यादथ विद्वान्कुर्यात् ॥ २ ॥**

नामधेयमात्रमित्यत ओङ्कार एवेदँ सर्वमिति । द्विरभ्यास आदरार्थः । लोकादिनिष्पादनकथनमोङ्कारस्तुत्यर्थमिति ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य त्रयोविंशः खण्डः

सामोपासनप्रसङ्गेन कर्मगुणभूतत्वान्निवर्त्योङ्कारं परमात्मप्रतीकत्वादमृतत्वहेतुत्वेन महीकृत्य प्रकृतस्यैव यज्ञस्याङ्गभूतानि [1]सामहोममन्त्रोत्थानान्युपदिदिक्षन्नाह—ब्रह्मवादिनो वदन्ति यत्प्रातःसवनं तद्वसूनाम् । तैश्च प्रातःसवनसम्बद्धोऽयं लोको वशीकृतः सवनेशानैः । तथा रुद्रैर्माध्यन्दिनसवनेशानैरन्तरिक्षलोकः । आदित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशीकृतः । इति यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यते ॥ १ ॥

अतः क्व तर्हि यजमानस्य लोको यदर्थं यजते । न क्वचिल्लोकोऽस्तीत्यभिप्रायः । "लोकाय वै यजते यो यजते" इति श्रुतेः । लोकाभावे च स यो यजमानस्तं[2] लोकस्वीकरणोपायं सामहोममन्त्रोत्थानलक्षणं न विद्यान्न

नरेन्द्रपुरीयं टिप्पणम्

वागनुरक्तबुद्धिविषयत्वाच्च वाच्यं सर्वं वाङ्मात्रं, वाग्जातश्चोङ्कारमात्रम् । एवं सर्वात्मकमोङ्कारं ब्रह्मतयोपासीतेत्यर्थः ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य त्रयोविंशः खण्डः

प्रासङ्गिकं हित्वा प्रकृतमनुसरति—सामोपासनेत्यादिना। सामहोममन्त्रोत्थानं विधातुं तदपरिज्ञाने दोषमाह—

आनन्दगिरिटीका

मुपासीतेतिविधिसमाप्त्यर्थः इतिशब्दः । किमित्योङ्कारस्य लोकादिद्वारा निष्पत्तिरुच्यते तत्राऽऽह—लोकादीति । स्तुतिश्चोपास्त्यर्था । यत्स्तूयते तद्विधीयत इति स्थितेः । तथा च सिद्धमोङ्कारोपासनममृतत्वफलमिति वक्तुमितिशब्दः ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य त्रयोविंशः खण्डः

प्रासङ्गिकं हित्वा प्रकृतमनुसंधत्ते—सामेति । पञ्चविधं सप्तविधं च यज्ञाङ्गीभूतं साम तस्योपासनवचनादोङ्कारस्य तद्गुणस्य सुतरामेव कर्मगुणत्वे प्राप्ते ततस्तं व्यावर्त्य ब्रह्मप्रतीकत्वात्कैवल्यहेतुत्वेन तमेव महीकृत्य प्रस्तुतयज्ञाङ्गभूतसामादिविज्ञानविधानार्थमुत्तरवाक्यमित्यर्थः । सामहोममन्त्रोत्थानं सामादिज्ञानविधित्सया, तदपरिज्ञाने दोषमाह—ब्रह्मेत्यादिना । तेषां प्रातःसवनेशानत्वेऽपि यजमानस्य का हानिरित्याशङ्क्याऽऽह—तैश्चेति । यथा पृथिवीलोको वसुभिस्तथेति यावत् । अन्तरिक्षलोको वशीकृत इति पूर्वेण सम्बन्धः । तृतीयो लोको द्युलोकाख्यः । अस्तु तत्तद्देवानां तत्तल्लोकवशीकारस्तथाऽपि यजमानस्य लोकित्वे किमायातमित्याशङ्क्याऽऽह—इति यजमानस्येति ॥ १ ॥

परिशिष्टलोकाभावोऽतःशब्दार्थः । तर्हि देहपातादूर्ध्वमित्येतत् । लोकापेक्षां विनाऽपि विधिवशाद्यागो भविष्यतीत्याशङ्क्याऽऽह—लोकायेति । लोकत्रयस्य वस्वाद्यधीनतया यजमानानधीनत्वे तस्य तदधीनत्वार्थं यज्ञाद्यनुष्ठानमित्याशङ्क्याऽऽह—लोकाभावे चेति । अज्ञो यज्ञं स्वर्गादिसाधनीभूतं कथं कुर्यादित्याक्षेपाद-

१. साम—लोकद्वारसामगानम्, होमः अथ जुहोतीत्यादिना वक्ष्यमाणो होमः मन्त्रकरणकमुत्थानं तच्च अपजहि परिघमित्युक्त्वोत्तिष्ठतीति वक्ष्यमाणं ज्ञेयम् ।

२. यः तं न विद्यात्—अत्र भाष्ये तमिति लोकस्वीकरणोपायमिति व्याख्यातम् । ततः अथ विद्वान् उपायं विद्वान् कुर्यादित्यर्थः, उपायश्च साम, होमः मन्त्रपूर्वकमुत्थानमिति त्रयमत्रैव वक्ष्यमाणम् । रङ्गरामानुजीये तत्–यजमानप्राप्यलोकस्थानमिति व्याख्यातम् । उत्तरत्र प्रातस्सवनं सम्प्रयच्छन्तीति

पुरा [1]प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवँ सामाभिगायति ॥३॥

लो३कद्वारमपावा३र्णू ३३ पश्येम त्वा वयँ रा ३३३३३

हु३म् आ ३३ ज्या ३ यो ३ आ ३२११ इति ॥ ४ ॥

विजानीयात्सोऽज्ञः कथं कुर्याद्यज्ञं न कथञ्चन तस्य कर्तृत्वमुपपद्यत इत्यर्थः। सामादिविज्ञानस्तुतिपरत्वान्नाविदुषः कर्तृत्वं कर्ममात्रविदः प्रतिषिध्यते। स्तुतये च सामादिविज्ञानस्याविद्वत्कर्तृत्वप्रतिषेधाय चेति हि भिद्येत वाक्यम्। आद्ये चौषस्त्ये काण्डेऽविदुषोऽपि कर्मास्तीति हेतुमवोचाम। अथैतद्वक्ष्यमाणं सामाद्युपायं विद्वान्कुर्यात् ॥ २ ॥

किं तद्वेद्यमित्याह—पुरा पूर्वं प्रातरनुवाकस्य शस्त्रस्य प्रारम्भाज्जघनेन [2]गार्हपत्यस्य पश्चादुदङ्मुखः सन्नुपविश्य स वासवं वसुदैवत्यं सामाभिगायति ॥ ३ ॥

लोकद्वारमस्य पृथिवीलोकस्य प्राप्तये द्वारमपावृणु हेऽग्ने तेन द्वारेण पश्येम त्वा त्वां राज्यायेति ॥ ४ ॥

### नरेन्द्रपुरीयं टिप्पणम्

ब्रह्मवादिन इत्यादिना। सोऽज्ञः कथं कुर्यादित्यस्याभिप्रायमाह—सामादिविज्ञानेति। अथशब्दो हेत्वर्थः। यस्मात्सामाद्यज्ञाने अकरणमेव प्राप्तं तस्माद्विद्वान् कुर्यादित्यर्थः। अप्रगीतं ऋग्जातं शस्त्रं यत् प्रातःकाले शस्यते स प्रातरनुवाक इत्यर्थः। जघनेनेत्यस्य व्याख्या—पश्चादिति। जघनप्रदेशेन चेत्यर्थः पृथिव्यां क्षयति वसतीति

### आनन्दगिरिटीका

विद्वत्कर्मानुष्ठाननिन्दापरं वाक्यमित्याशङ्क्याऽऽह—सामादीति। अथेतीदं वाक्यं स्तुत्यर्थे निषेधार्थे च भविष्यति नेत्याह—स्तुतये चेति। इतश्चाविद्वत्कर्तृत्वं निषेद्धुमशक्यमित्याह—आद्ये चेति। मटचीहतेष्वित्यादौ विदुषः सन्निधाने तदनुज्ञामन्तरेणाविदुषः कर्म कर्तुमयुक्तम्। प्रत्यवायप्रसङ्गात्। तदसन्निधौ तु तेनापि क्रियमाणं कर्म न दुष्यतीत्युपपादितमित्यर्थः। अथशब्दो हेत्वर्थः। सामाद्यविज्ञाने यस्माद्यज्ञाद्यकरणमेव प्राप्तं तस्मादित्यर्थः ॥ २ ॥

ज्ञातव्यं सामादि प्रश्नपूर्वकं विवृणोति—किं तदित्यादिना। अप्रगीतमृग्जातं शस्त्रं यत्प्रातःकाले शस्यते प्रातरनुवाकः तस्येति यावत्। उपाकरणादित्यस्यार्थमाह—प्रारम्भादिति। जघनेनेत्येतद्व्याचष्टे—पश्चादिति। स गार्हपत्यस्य पृष्ठत उदग्भागे स्थित्वा वसुदेवताकं सामगानं कृतवानित्यर्थः। स वासवमित्यत्र सशब्दो यजमानविषयः ॥ ३ ॥

राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगायेत्यर्थः ॥ ४ ॥

---

श्रूयते—नहि सवनमेव यजमानलोकस्थानम्। अतः सवनसम्बद्धो लोकः तेन वसुभ्यो निष्क्रीतः स्यादित्यर्थो वक्तव्यः। अतः तं इत्यपहाय तत् इति पदच्छेदोऽयुक्तः। पूर्वंप्रकृतो लोकः पुल्लिङ्गः नपुंसकलिङ्गेन किमपि न प्रकृतम्। क्वशब्दार्थोऽपि कुत्र देशे इति स्यात् न कुत्र स्थाने इति। उत्तरत्र वक्ष्यमाणं सवनमपि न स्थानम्, अपितूपाय एवेति भाष्यकारीयव्याख्यानमेव शोभनम्।

१. प्रातरनुवाकः सोमयागे प्रधानयागदिवसे प्रातः सवनसंज्ञका यागाः क्रियन्ते। प्रथमं ग्रहपात्रेषु चमसपात्रेषु च सोमरसो गृह्यते। ततः सामगैः सामगानं ततः ऋग्वेदिभिः होतामैत्रावरुण इत्यादिभिः गानं विना दण्डाकारेण इन्द्रस्तुतिपराः ऋचः पठ्यन्ते। ततो यागाभ्यासः क्रियते—इति क्रमः। तत्र प्रातस्सवने प्रातरनुवाक इति प्रसिद्धोऽनुवाकः पठ्यते।

स्तोत्रं नाम प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम् शस्त्रं नामाप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानम्।

२. गार्हपत्यः यागशालायां पश्चिमदेशस्थोऽग्निः, उपाकरणं आरम्भः, आहवनीयः प्राग्भागस्थोऽग्निः, दक्षिणाग्निः दक्षिणभागस्थः।

अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मि ॥ ५ ॥

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनँ सम्प्रयच्छन्ति ॥ ६ ॥

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रँ सामाभिगायति ॥ ७ ॥

लो३कद्वारमपावा३र्णू३३पश्येम त्वा वयं वैरा३३३३३ हु३म् आ३३ज्या ३ यो ३ आ३२१११ इति ॥ ८ ॥

अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एताऽस्मि ॥ ९ ॥

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यन्दिनँ सवनँ सम्प्रयच्छन्ति ॥ १० ॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाऽऽहवनीयोस्योदङ्मुख उपविश्य स आदित्यँ स वैश्वदेवँ सामाभिगायति ॥ ११ ॥

लो३कद्वारमपावा३र्णू३३पश्येम त्वा वयँ स्वारा ३३३३३ हु३म् आ३३ ज्या३ यो३ आ३२१११ इति ॥ १२ ॥

आदित्यमथ वैश्वदेवं लो३कद्वारमपावा३र्णू३३ पश्येम त्वा वयँ साम्रा३३३३३हु३म् आ३३ ज्या३यो३आ३२१११ इति ॥ १३ ॥

अथानन्तरं जुहोत्यनेन मन्त्रेण नमोऽग्नये प्रह्वीभूतास्तुभ्यं वयं पृथिवीक्षिते पृथिवीनिवासाय लोकक्षिते पृथिवीलोकनिवासायेत्यर्थः। लोकं मे मह्यं यजमानाय विन्द लभस्व। एष वै मम यजमानस्य लोक एता गन्ताऽस्मि ॥ ५ ॥

अत्रास्मिँल्लोके यजमानोऽहमायुषः परस्तादूर्ध्वं मृतः सन्नित्यर्थः। स्वाहेति जुहोति। अपजह्यपनय परिघं लोकद्वारार्गलमित्येवं मन्त्रमुक्त्वोत्तिष्ठति एवमेतैर्वसुभ्यः प्रातःसवनसम्बद्धो लोको निष्क्रीतः स्यात्ततस्ते प्रातःसवनं वसवो यजमानाय सम्प्रयच्छन्ति ॥ ६ ॥

तथाऽऽग्नीध्रीयस्य दक्षिणाग्नेर्जघनेनोदङ्मुख उपविश्य स रौद्रं सामाभिगायति यजमानो रुद्रदैवत्यंवैराज्याय॥७-८॥

अन्तरिक्षक्षित इत्यादि समानम् ॥ ९-१० ।

तथाऽऽहवनीयस्योदङ्मुख उपविश्य स आदित्यदैवत्यमादित्यं वैश्वदेवं च सामाभिगायति क्रमेण स्वाराज्याय साम्राज्याय ॥ ११-१२-१३ ॥

आनन्दगिरिटीका

पृथिव्यां क्षियति वसतीति पृथिवीक्षित्तस्मै पृथिवीक्षिते। पृथिवीलोके मया लब्धे तव किं स्यादित्याशङ्क्याऽऽह—एष वै मम यजमानस्येति ॥ ५ ॥

स्वाहाशब्दो मन्त्रसमाप्त्यर्थो होमद्योतकः। सर्वेषु मन्त्रेष्वेतैः सामहोममन्त्रोत्थानैरित्यर्थः ॥ ६ ॥

यथा पृथिवीलोकजयोपायो दर्शितस्तथाऽन्तरिक्षलोकजयोपायोऽपि प्रदर्श्यत इत्याह—तथेति ॥ ७-८ ॥

अन्तरिक्षे क्षियतीत्यन्तरिक्षक्षिद्वायुस्तस्मै वायवे ॥ ९-१० ॥

यथा पृथिव्यन्तरिक्षयोराप्त्युपायस्तथा द्युलोकाप्त्युपायोऽप्युच्यत इत्याह—तथेति। स्वाराज्यमन्तरिक्षे स्वातन्त्र्यम्। आदित्यानामिव स्वातन्त्र्यमिह विवक्षितम् ॥ ११-१२-१३ ॥

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो
दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥ १४ ॥

एष वै यजमानस्य लोक एताऽस्म्यत्र यजमानः
परस्तादायुषः स्वाहाऽपहत परिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥

तस्मा आदित्याश्च विश्वे च देवास्तृतीयसवनँ सम्प्रयच्छन्त्येष
ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

इति च्छान्दोग्योपनिषदि द्वितीयाध्यायस्य चतुर्विंशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे द्वितीयोऽध्यायः समाप्तः

दिविक्षिद्भ्य इत्येवमादि समानमन्यत्। विन्दतापहतेति बहुवचनमात्रं विशेषः। याजमानं त्वेतत्। एताऽस्म्यत्र यजमान इत्यादिलिङ्गात् ॥ १४-१५ ॥

एष ह वै यजमान एवंवित् यथोक्तस्य सामादेर्विद्वान्यज्ञस्य मात्रां यज्ञयाथात्म्यं वेद यथोक्तम्। य एवं वेद य एवं वेदेति द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ १६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये द्वितीयाध्यायस्य चतुर्विंशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ छान्दोग्योपनिषद्विवरणे द्वितीयोऽध्यायः

नरेन्द्रपुरीयं टिप्पणम्

पृथिवीक्षित्तस्मै पृथिवीक्षिते। एतैरिति। सामगानेन होमेन मन्त्रत उत्थानेन चेत्यर्थः। आग्नीद्ध्रः ऋत्विग्भेदो यजुर्वित् तत्सम्बन्धादाग्नीद्ध्रीयो दक्षिणाग्निः। एतत् गानादिऋत्विक्कर्म किं वा यजमानकर्मेत्याकाङ्क्षायामाह—याजमानं त्विति ॥ १-१६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां द्वितीयाध्यायस्य चतुर्विंशः खण्डः

इति शाङ्करच्छान्दोग्यभाष्यटिप्पण्यां द्वितीयोऽध्यायः

आनन्दगिरिटीका

किमिदं सामाद्यार्त्विज्यमाहो याजमानिकमिति वीक्षायामाह—याजमानं त्विति। आदिपदेन लोकं मे यजमानायेति निर्देशो गृह्यते ॥ १४-१५ ॥

सामादिविज्ञानफलं कथयति—एष हेति। य एवं वेदेत्यस्य व्याख्या—यथोक्तस्येति। यथोक्तं सामादीत्येतत्। एवमित्युक्तप्रकारोक्तिः। तस्य यज्ञयाथात्म्यविदस्तदनुष्ठानद्वारा तत्फलं सम्भवतीत्यर्थः ॥ १६ ॥

इति श्रीमदानन्दगिरिटीकायां द्वितीयाध्यायस्य चतुर्विंशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां छान्दोग्योपनिषद्भाष्यटीकायां द्वितीयोऽध्यायः

## अथ तृतीयोऽध्यायः

ॐ । असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवँ्शोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥

असौ वा आदित्य इत्याद्यध्यायारम्भे सम्बन्धः । अतीतानन्तराध्यायान्त उक्तं यज्ञस्य मात्रां वेदेति यज्ञविषयाणि च सामहोममन्त्रोत्थानानि विशिष्टफलप्राप्तये यज्ञाङ्गभूतान्युपदिष्टानि । सर्वयज्ञानां च कार्यनिर्वृत्तिरूपः सविता महत्या श्रिया दीप्यते । स एष सर्वप्राणिकर्मफलभूतः प्रत्यक्षं सर्वैरुपजीव्यते । अतो यज्ञव्यपदेशानन्तरं तत्कार्यभूतसवितृविषयमुपासनं सर्वपुरुषार्थेभ्यः श्रेष्ठतमफलं विधास्यामीत्येवमारभते श्रुतिः—असौ वा आदित्यो देवमध्वित्यादि । देवानां मोदनान्मध्विव मध्वसावादित्यः । वस्वादीनां च मोदनहेतुत्वं वक्ष्यति सर्वयज्ञफलरूपत्वादादित्यस्य । कथं मधुत्वमित्याह—तस्य मधुनो द्यौरेव भ्रामरस्येव मधुनस्तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशः । तिर्यग्गतेव हि द्यौर्लक्ष्यते । अन्तरिक्षं च मध्वपूपो द्युवंशे लग्नः सल्लंम्बत इवातो मध्वपूपसामान्यादन्तरिक्षं मध्वपूपो मधुनः सवितुराश्रयत्वाच्च । मरीचयो रश्मयो रश्मिस्था आपो भौमाः सवित्राकृष्टाः "एता वा आपः

### नरेन्द्रपुरीयं टिप्पणम्

ॐ कर्माङ्गबद्धं विज्ञानं समाप्याथ प्रचक्रमे । कर्मादिफलभूतस्य स्वतन्त्रोपास्तिसिद्धये ॥

आदित्यं मधुदृष्ट्योपासीतेति विहिताया मधुदृष्टेः सम्पादनाय प्रसिद्धमधुसाम्यं दर्शयितुमुपक्रमते—कथं मधुत्वमित्यादिना । सवित्रा भूमेः सकाशादाकृष्टा आपो रश्मिस्था विद्यन्त इत्यत्र किं प्रमाणमित्यत आह—एता वा आप इति । भ्रमरबीजभूता हि पुत्रा मध्वपूपच्छिद्रस्था भवन्ति एताश्चापो अन्तरिक्षलक्षणो यो मध्वपूपः तदन्तर्गतरश्मिस्था भवन्ति । तत एतास्वप्सु भ्रमरबीजदृष्टिः कर्तव्येत्यर्थः ॥ १ ॥

### आनन्दगिरिटीका

कर्माङ्गबद्धं विज्ञानं परिसमाप्य कर्मफलस्याऽऽदित्यस्य स्वतन्त्रोपास्तिविध्यर्थमध्यायान्तरमारभमाणः सम्बन्धं प्रतिजानीते—असाविति । पूर्वोत्तरग्रन्थयोः सम्बन्धं प्रतिज्ञातं प्रकटयितुं वृत्तं कीर्तयति—अतीतेति । विशिष्टफलं पृथिव्यादिलोकत्रयम् । समनन्तरसंदर्भस्य तात्पर्यं वक्तुं पातनिकां करोति—सर्वेति । तस्य प्रेप्सितत्वं सूचयति—महत्येति । कथं पुनरादित्यस्य सर्वप्राणिकर्मफलभूतत्वमित्याशङ्क्य सर्वैरुपजीव्यत्वोपलम्भादित्याह—स एष इति । पातनिकां कृत्वोत्तरग्रन्थमुत्थापयति—अत इति । आदित्यस्य कर्मफलत्वादिति यावत् । तदुपदेशे हेत्वन्तरमाह—सर्वपुरुषार्थेभ्य इति । श्रेष्ठतमं फलं क्रमेण मुक्तिलक्षणमस्यास्तीति तथोक्तम् । आदित्ये कर्मफलशब्दप्रवृत्तिनिमित्तमुक्तं व्यक्तीकर्तुमाह—वस्वादीनां चेति । चकारो विद्वत्संग्रहार्थः । वक्ष्यत्यादित्यस्येति सम्बन्धः । तस्य सर्वेषां यज्ञानां फलरूपत्वादिति हेतुः । वस्वादयश्च कर्मफलभोक्तारस्तत्फलमादित्यं दृष्ट्वा तृप्यन्तीति युक्तमित्यर्थः । आदित्यं मधुदृष्ट्योपासीतेत्युक्तं तत्र प्रसिद्धमधुसाम्यमादित्यस्य श्रुत्युक्तमाकाङ्क्षापूर्वकं दर्शयति—कथमित्यादिना । दिवि तिरश्चीनवंशदृष्टौ निमित्तमाह—तिर्यग्गतेति । अन्तरिक्षनिवासिभिरुपरि विसारितनयनैरिति शेषः । अन्तरिक्षे मध्वपूपदृष्टिं कथयति—अन्तरिक्षमिति । मधुन इत्युभयत्र सम्बन्धः । मरीचयः पुत्रा इति वाक्यं व्याचष्टे—मरीचय इति । आपो भूमेराकृष्टा रश्मिस्थाः सन्तीत्यत्र प्रमाणमाह—एता इति । स्वराजः स्वतो भासमानस्य सवितुरिति

१. आदित्यः सर्वप्राणिकर्मफलभूतः—आदित्येन दत्तया द्रष्टया सौर्यप्रकाशेन च सर्वेषां प्राणिनां भोगप्राप्तेः । मधुविद्यायाः वस्वादिदेवस्वरूपप्राप्तिः फलं "वसूनामेवैको भूत्वा" इत्यादिलिङ्गात् । तादृशफलप्रेप्सा वसूनां न सम्भवति स्वत एव सिद्धत्वात् । अतः तद्दृष्टान्तेन देवानां ब्रह्मविद्यायां नाधिकारः इति पूर्वपक्षं "मध्वादिष्वसम्भवात् अनधिकारं जैमिनिः" इति सूत्रेण प्रदर्श्य "भावं तु बादरायणोऽस्ति हि" इति सूत्रेण ब्रह्मविद्यायां देवाधिकारः स्थापितः ब्रह्मसूत्रप्रथमाध्यायतृतीयपादे । मधुविद्यायामनधिकारेऽपि मोक्षेच्छासम्भवात् ब्रह्मविद्यायामधिकारो निष्प्रत्यूहः इत्यर्थः ।

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

**एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत ॥ ३ ॥**

स्वराजो यन्मरीचय" इति इति हि विज्ञायते । ता अन्तरिक्षमध्वपूपस्थरश्म्यन्तर्गतत्वाद्भ्रमरबीजभूताः पुत्रा इव हिता लक्ष्यन्त इति पुत्रा इव पुत्रा मध्वपूपनाड्यन्तर्गता हि भ्रमरपुत्राः ॥ १ ॥

तस्य सवितुर्मध्वाश्रयस्य मधुनो ये प्राञ्चः प्राच्यां दिशि गता रश्मयस्ता एवास्य प्राच्यः प्रागञ्चनान्मधुनो नाड्यो मधुनाड्य इव मध्वाधारच्छिद्राणीत्यर्थः । तत्र ऋच एव मधुकृतो लोहितरूपं सवित्राश्रयं मधु कुर्वन्तीति मधुकृतो भ्रमरा इव यतो रसानादाय मधु कुर्वन्ति । तत्पुष्पमिव पुष्पमृग्वेद एव । तत्र ऋग्ब्राह्मणसमुदायस्य ऋग्वेदाख्यत्वाच्छब्दमात्राच्च भोग्यरूपरसनिस्रावासम्भवादृग्वेदशब्देनात्र ऋग्वेदविहितं कर्म । ततो हि कर्मफलभूतमधुरसनिस्रावसम्भवात् । मधुकरैरिव पुष्पस्थानीयादृग्वेदविहितात्कर्मणोऽप आदाय ऋग्भिर्मधु निर्वर्त्यते । कास्ता आप इत्याह—ताः कर्मणि प्रयुक्ताः सोमाज्यपयोरूपा अग्नौ प्रक्षिप्तास्तत्पाकाभिनिर्वृत्ता अमृता अमृतार्थत्वादत्यन्तरसवत्य आपो भवन्ति । तद्रसानादाय ता वा एता ऋचः पुष्पेभ्यो रसमाददाना एव भ्रमराः ऋचः ॥ २ ॥

एतमृग्वेदमृग्वेदविहितं कर्म पुष्पस्थानीयमभ्यतपन्नभितापं कृतवत्य इवैता ऋचः कर्मणि प्रयुक्ताः । ऋग्भिर्हि मन्त्रैः शस्त्राद्यङ्गभावमुपगतैः क्रियमाणं कर्म मधुनिर्वर्तकं रसं मुञ्चतीत्युपपद्यते पुष्पाणीव भ्रमरैराचूष्य-

### नरेन्द्रपुरीयं टिप्पणम्

ऋग्वेदशब्देन कर्म लक्षयितुं मुख्यार्थे बाधकमाह—तत्र ऋग्ब्राह्मणेति । ऋग्वेदविहितं कर्म भवतु पुष्पस्थानीयं कथं ततो मधुनिष्पत्तिरित्याकाङ्क्षायामाह—ततो हीति । पुष्पाश्रया अपः समादाय मधुकरैर्मधु निर्वर्त्यते । अत्र कास्ता आपो याः समादाय ऋग्वेदोत्पन्नैर्मन्त्रैर्मधु निष्पाद्यत इत्याकाङ्क्षायां सोमाद्याहुतिसूक्ष्मावयवा इत्याह—ताः कर्मणीत्यादिना ॥ २ ॥

अभितापमभित आलोचनं रसनिस्रावार्थव्यापारं कृतवत्य इत्यर्थः ॥ ३ ॥

### आनन्दगिरिटीका

यावत् । तासां पुत्रत्वं प्रकटयति—ता इति । लोके हि भ्रमरबीजभूताः पुत्रा मध्वपूपच्छिद्रस्था दृश्यन्ते । एताश्चाऽऽपोऽन्तरिक्षलक्षणमध्वपूपान्तर्गतरश्मिस्था भवन्ति । ततश्चैतास्वप्सु भ्रमरबीजदृष्टिः कर्तव्येत्यर्थः ॥ १ ॥

प्राचीदिग्गतेष्वादित्यरश्मिषु प्राचीनमधुनाडीदृष्टिर्विधेयेत्याह—तस्येति । मध्वाश्रयस्य लोहितादिरूपं मधु वक्ष्यमाणं तदाधारस्येत्यर्थः । ऋक्षु मन्त्ररूपासु भ्रमरदृष्टिमारोपयति—तत्रेति । प्रकृतं मधु सप्तम्यर्थः । तासां मधुकृत्त्वं साधयति—लोहितेति । ऋग्वेदविहिते कर्मणि पुष्पदृष्टिं सम्पादयति—यत इति । ऋचो मधुकृत इति मन्त्राणां पृथक्कृतत्वादृग्वेदः पुष्पमित्यृग्वेदशब्देन ब्राह्मणसमुदायस्य वक्तव्यत्वात्कथञ्चिदृग्वेदविहिते कर्मणि तच्छब्देन लक्षिते पुष्पदृष्ट्यध्यासेऽपि कुतस्ततो मधुनिष्पत्तिरित्याशङ्क्याऽऽह—ततो हीति । तदेवोपपादयति—मधुकरैरिति । लोके तावदपः पुष्पाश्रयाः समादाय मधुकरैर्मधु निर्वर्त्यते तथेहापि मधुकरस्थानीयैरृङ्मन्त्रैस्तद्वेदविहितात्पुष्पस्थानीयात्कर्मणः सकाशादपो गृहीत्वा मधु निष्पाद्यते । तस्मात्कर्मणः स्वफलभूतमधुनिष्पत्तेरुपपत्तेस्तस्मिन्पुष्पदृष्टिरित्यर्थः । ता अमृता आप इति वाक्यं प्रश्नपूर्वकं व्याचष्टे—कास्ता इत्यादिना । कर्मणि प्रयुक्तत्वमभिनयति—अग्नाविति । अग्निपाकाभिनिर्वृत्तत्वमपूर्वात्मत्वं परम्परया मुक्त्यर्थत्वममृतार्थत्वम् । यद्वा रोहितरूपामृतनिर्वर्तकत्वं तदर्थत्त्वम् । उत्कृष्टफलवत्त्वमत्यन्तरसवत्त्वम् । ता वा एता इत्यादि व्याचष्टे—तद्रसानिति । यथा हि पुष्पेभ्यो भ्रमरा रसानाददानास्तान्यभितपन्ति तथैते मन्त्रास्तस्मिन्कर्मणि स्थितानम्मयान्रसानादाय मधु निर्वर्तयन्तो यथोक्तं कर्माभिमतं समालोचयन्ति स्मेत्यर्थः ॥ २ ॥

कथं पुनर्मन्त्राणां भ्रमरस्थानीयानां पुष्पस्थानीयमृग्वेदविहितं कर्माभितप्तवतां फलवत्त्वमित्याशङ्क्याऽऽह—

तद्यचक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितँ् रूपम् ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य प्रथमः खण्डः

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूँ्ष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि यजूँ्ष्येतं यजुर्वेदमभ्यतपँ्स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ् रसोऽजायत ॥ २ ॥

तद्यचक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लँ् रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य द्वितीयः खण्डः

माणानि । तदेतदाह—तस्यर्ग्वेदस्याभितप्तस्य । कोऽसौ रसो य ऋङ्मधुकराभितापनिःसृत इत्युच्यते । यशो विश्रुतत्वं तेजो देहगता दीप्तिरिन्द्रियं सामर्थ्योपेतैरिन्द्रियैरवैकल्यं वीर्यं सामर्थ्यं बलमित्यर्थः । अन्नाद्यमन्नं च तदाद्यं च येनोपयुज्यमानेनाहन्यहनि देवानां स्थितिः स्यात्तदन्नाद्यमेष रसोऽजायत यागादिलक्षणात्कर्मणः ॥ ३ ॥

यश आद्यन्नाद्यपर्यन्तं तद्यचक्षरद्विशेषेणाक्षरदगमत् । गत्वा च तदादित्यमभितः पार्श्वतः पूर्वभागं सवितुरश्रयदाश्रितवदित्यर्थः । अमुष्मिन्नादित्ये सञ्चितं कर्मफलाख्यं मधु भोक्ष्यामह इत्येवं हि यशआदिलक्षणफलप्राप्तये कर्माणि क्रियन्ते मनुष्यैः केदारनिष्पादनमिव कर्षकैः । तत्प्रत्यक्षं प्रदर्श्यते श्रद्धाहेतोस्तद्वा एतत् । किं तद्यदेतदादित्यस्योद्यतो दृश्यते रोहितं रूपम् ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य प्रथमः खण्डः

अथ येऽस्य दक्षिणा रश्मय इत्यादि समानम् । यजूंष्येव मधुकृतो यजुर्वेदविहिते कर्मणि प्रयुक्तानि । पूर्ववन्मधुकृत इव । यजुर्वेदविहितं कर्म पुष्पस्थानीयं पुष्पमित्युच्यते । ता एव सोमाद्या अमृता आपः ॥ १ ॥

तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपन्नित्येवमादि सर्वं समानम् । मध्वेतदादित्यस्य दृश्यते शुक्लं रूपम् ॥ २-३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य द्वितीयः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

कस्मादादित्यगमनं कर्मापूर्वस्योच्यत इत्यत आह—अमुष्मिन्नादित्य इति ॥ ४॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य प्रथमद्वितीयतृतीयखण्डाः

आनन्दगिरिटीका

एता ऋच इति । तासां कर्मणि प्रयुक्तत्वेऽपि किमायातं तदाह—ऋग्भिरिति । अभितप्तस्य रसोऽजायतेति सम्बन्धः । तं प्रश्नपूर्वकं विशदयति—कोऽसाविति ॥ ३ ॥

तच्छब्दार्थमाह—यशआदीति । अथानुष्ठितकर्मजनितं फलं कथमादित्यमाश्रयतीत्याशङ्क्याऽऽह—अमुष्मिन्निति । दृष्टान्ते भोक्ष्यामहे व्रीह्यादिजनितं फलमित्यभिप्रायेण व्रीह्यादिप्राप्त्यर्थमिति शेषः । किं तत्कर्मफलं यदादित्यमाश्रित्य तिष्ठतीत्याशङ्क्याऽऽह—तत्प्रत्यक्षमिति । कर्मफले प्रत्यक्षे तत्साधने कर्मणि कर्मिणां श्रद्धासिद्धयर्थमिति यावत् । तदेव फलं प्रश्नपूर्वकं विशदयति—किमित्यादिना ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य प्रथमः खण्डः

मध्वन्तरं दर्शयति—अथेति । वक्तव्यविशेषं कथयति—यजूंषीति । कथं तेषां मधुकृत्त्वं तदाह—पूर्ववदिति । ऋङ्मन्त्राणामृग्वेदविहिते कर्मणि प्रयुक्तानां यथा पूर्वं मधुकरत्वमुक्तं तथा यजुषामपीत्यर्थः । यजुर्वेदविहिते कर्मणि पुष्पदृष्टिमाचष्टे—यजुर्वेदेति । ता अमृता आप इत्यस्य पूर्ववद्व्याख्यानमित्याह—ता एवेति ॥ १ ॥

यजुषामादित्यसम्बन्धि मधु प्रत्यक्षं दर्शयति—एतदिति ॥ २-३ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य द्वितीयः खण्डः

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतँ सामवेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णँ रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य तृतीयः खण्डः

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्योऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परः कृष्णँ रूपम् ॥ ३ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य चतुर्थः खण्डः

अथ येऽस्य प्रत्यञ्चो रश्मय इत्यादि समानम् । तथा साम्नां मधु । एतदादित्यस्य कृष्णं रूपम् ॥ १-३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य तृतीयः खण्डः

अथ येऽस्योदञ्चो रश्मय इत्यादि समानम् । अथर्वाङ्गिरसोऽथर्वणाऽङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः कर्मणि प्रयुक्ता मधुकृतः । इतिहासपुराणं पुष्पम् । तयोश्चेतिहासपुराणयोरश्वमेधे पारिप्लवासु रात्रिषु कर्माङ्गत्वेन विनियोगः सिद्धः । मध्वेतदादित्यस्य परः कृष्णं रूपमतिशयेन कृष्णमित्यर्थः ॥ १-३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य चतुर्थः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

किं तत्कर्मसाध्यं रूपं यदादित्यं समाश्रितवदिति प्रत्यक्षीकरणाय प्रश्नः—इतिहासपुराणमिति । वैदिक्यः कथाः "मनुर्वैवस्वतो राजे"त्याद्यास्तासां चाश्वमेधे विनियोगो दृश्यते । पुत्रामात्यपरिवृताय राज्ञे अध्वर्युः पारिप्लवमाचक्षीतेति । तदाख्यानिर्वृत्तमपूर्वमादित्यमाश्रयति फलभूतमित्यर्थः ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य चतुर्थः खण्डः

आनन्दगिरिटीका

तृतीयं मधु कथयति—अथेति । ऋचां यजुषां च मधु यथा कथितं तथेति यावत् । तस्य शास्त्रप्रत्यक्षत्वं दर्शयति—एतदिति ॥ १-३ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य तृतीयः खण्डः

चतुर्थं मधु निदर्शयति—अथेति । किं तत्कर्मेत्याशङ्क्याऽऽह—इतिहासेति । तद्धयाथर्वणानामाङ्गिरसानां च प्रसिद्धं ब्राह्मणं तद्विहितं कर्म पुष्पं पुष्पस्थानीयमित्यर्थः । यदा प्रसिद्धयोरितिहासपुराणयोरुपादानं तदाऽपि न दूषणमित्याह—तयोश्चेति । अश्वमेधकर्मणि जामितापरिहारार्थं पारिप्लवो नानाविधोपाख्यानसमुदायो यत्र तत्पारिप्लवमाचक्षीतेतिविधिवशात्प्रयुज्यते । तासु रात्रिषु तस्यैव कर्मणोऽङ्गत्वेन मनुर्वैवस्वतो राजेत्येवंप्रकारयोर्विनियोगस्य पूर्वतन्त्रे पारिप्लवार्थाधिकरणेनैव सिद्धत्वात्तत्तत्सम्बन्धि कर्म पुष्पमित्यर्थः । अस्यापि मधुनः शास्त्रप्रत्यक्षतामाह—मध्वेतदिति ॥ १-३ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य चतुर्थः खण्डः

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या
एवाऽऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥
ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपँ्स्तस्याभि-
तप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यँ्रसोऽजायत ॥ २ ॥
तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥
ते वा एते रसानाँ्रसा वेदा हि रसास्तेषामेते रसास्तानि
वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य पञ्चमः खण्डः

तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै
देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

अथ येऽस्योर्ध्वा रश्मय इत्यादि पूर्ववत्। गुह्या गोप्या रहस्या एवाऽऽदेशा लोकद्वारीयादिविधय उपासनानि च कर्माङ्गविषयाणि मधुकृतो ब्रह्मैव शब्दाधिकारात्प्रणवाख्यं पुष्पम्। समानमन्यत्। मध्वेतदादित्यस्य मध्ये क्षोभत इव समाहितदृष्टेर्दृश्यते सञ्चलतीव ॥ १-३ ॥

ते वा एते यथोक्ता रोहितादिरूपविशेषा रसानां रसाः। केषां रसानामित्याह—वेदा हि यस्माल्लोकनिष्यन्दत्वात्सारा इति रसास्तेषां रसानां कर्मभावमापन्नानामप्येते रोहितादिविशेषा रसा अत्यन्तसारभूता इत्यर्थः। तथाऽमृतानाममृतानि। वेदा ह्यमृता नित्यत्वात्तेषामेतानि रोहितादीनि रूपाण्यमृतानि। रसानां रसा इत्यादि कर्मस्तुतिरेषा। यस्यैवंविशिष्टान्यमृतानि फलमिति ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य पञ्चमः खण्डः

तत्तत्र यत्प्रथमममृतं रोहितरूपलक्षणं तद्वसवः प्रातःसवनेशाना उपजीवन्त्यग्निना मुखेनाग्निना प्रधानभूतेनाग्निप्रधानाः सन्त उपजीवन्तीत्यर्थः। अन्नाद्यं रसोऽजायतेतिवचनात्कवलग्राहमश्नन्तीति प्राप्तं तत्प्रतिषिध्यते—न वै देवा अश्नन्ति न पिबन्तीति। कथं तर्ह्युपजीवन्तीत्युच्यते—एतदेव हि यथोक्तममृतं रोहितं रूपं दृष्ट्वोपलभ्य सर्वकरणैरनुभूय तृप्यन्ति। दृशेः सर्वकरणद्वारोपलब्ध्यर्थत्वात्। ननु रोहितं रूपं दृष्ट्वेत्युक्तं कथमन्येन्द्रियविषयत्वं

नरेन्द्रपुरीयं टिप्पणम्

शब्दानामृग्वेदादीनां प्रकृतत्वात् ब्रह्मापि शब्दात्मकं ग्राह्यमित्यर्थः ॥ १-३ ॥

ध्येयान् रूपभेदांस्तौति—ते वा एत इत्यादिना। लोकनिष्यन्दत्वादिति। लोकेभ्यो निर्गतत्वादित्यर्थः ॥४॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य पञ्चमः खण्डः

आनन्दगिरिटीका

पञ्चमं मधु दर्शयति—अथेति। लोकद्वारीयादिविधयो लोकद्वारमपावृणु पश्येम त्वा वयमित्यादयः। ब्रह्मशब्दार्थमाह - शब्दाधिकारादिति। ऋगादिशब्दानां प्रकृतत्वादित्यर्थः। अस्यापि मधुनः शास्त्रवशात्प्रत्यक्षतामाह—मध्वेतदिति। समाहितदृष्टेः शास्त्रार्थे समाहितचित्तस्येत्यर्थः ॥ १-३ ॥

पञ्च मधूनि व्याख्याय तेषां सर्वेषां ध्येयत्वसिद्ध्यर्थं स्तुतिं प्रकुरुते—ते वा एत इति। तस्मात्तेषामिति सम्बन्धः। कर्मणि विनियुक्तत्वेन तदङ्गत्वात्तद्भावापत्तिः। वेदानां कार्यत्वेऽपि प्रयत्नपूर्वकत्वाभावान्नित्यत्वम्। या मधुनि स्तुतिः सा कर्मस्तुतिरित्याह—रसानामिति। कर्मस्तुतिमभिनयति—यस्यैवमिति। रसानां रसा अमृतानाममृतानीत्येवंविशिष्टान्यमृतानि यस्य फलं कर्मणस्तस्य महाभाग्यं किं वक्तव्यमिति स्तूयते कर्मेत्यर्थः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य पञ्चमः खण्डः

अमृतानि ध्येयान्युक्त्वा तदुपजीविनो देवतागणाननुचिन्तनीयानुपदिशति—तत्तत्रेति। कबलग्राहं कबलं गृहीत्वा यथा लोकोऽश्नाति तद्वदित्येतत्। नन्वशनपानाभावे न युक्तमुपजीवनवचनमित्याशङ्क्य परिहरति—

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य षष्ठः खण्डः

रूपस्येति । न । यशआदीनां श्रोत्रादिगम्यत्वात् । श्रोत्रग्राह्यं यशः । तेजोरूपं चाक्षुषम् । इन्द्रियं विषयग्रहण-कार्यानुमेयं करणसामर्थ्यम् । वीर्यं बलं देहगत उत्साहः प्राणवत्ता । अन्नाद्यं प्रत्यहमुपजीव्यमानं शरीरस्थितिकरं यद्भवति रसो ह्येवमात्मकः सर्वः । यं दृष्ट्वा तृप्यन्ति सर्वे देवाः । दृष्ट्वा तृप्यन्तीत्येतत्सर्वं स्वकरणैरनुभूय तृप्यन्तीत्यर्थः । आदित्यसंश्रयाः सन्तो वैगन्ध्यादिदेहकरणदोषरहिताश्च ॥ १ ॥

किं ते निरुद्यमा अमृतमुपजीवन्ति । न । कथं तर्हि, एतदेव रूपमभिलक्ष्याधुना भोगावसरो नास्माकमिति बुद्ध्वाऽभिसंविशन्त्युदासते । यदा वै तस्यामृतस्य भोगावसरो भवेत्तदैतस्मादमृतादमृतभोगनिमित्तमित्यर्थः । एतस्माद्रूपादुद्यन्त्युत्साहवन्तो भवन्तीत्यर्थः । न ह्यनुत्साहवतामननुतिष्ठतामलसानां भोगप्राप्तिर्लोके दृष्टा ॥ ॥

स यः कश्चिदेतदेवं यथोदितमृङ्मधुकरतापरससंरक्षणमृग्वेदविहितकर्मपुष्पात्तस्य चाऽऽदित्यसंश्रयणं रोहित-रूपत्वं चामृतस्य प्राचीदिग्गतरश्मिनाडीसंस्थतां वसुदेवभोग्यतां तद्विदश्च वसुभिः सहैकतां गत्वाऽग्निना मुखेनोपजीवनं दर्शनमात्रेण तृप्तिं स्वभोगावसर उद्गमनं तत्कालापाये च संवेशनं वेद सोऽपि वसुवत्सर्वं तथैवानुभवति ॥ ३ ॥

कियन्तं कालं विद्वांस्तदमृतमुपजीवतीत्युच्यते—स विद्वान्यावदादित्यः पुरस्तात्प्राच्यां दिश्युदेता पश्चात्प्रतीच्या-मस्तमेता तावद्वसूनां भोगकालस्तावन्तमेव कालं वसूनामाधिपत्यं स्वाराज्यं पर्येता परितो गन्ता भवतीत्यर्थः । न यथा चन्द्रमण्डलस्थः केवलकर्मी परतन्त्रो देवानामन्नभूतः । किं तर्ह्ययमाधिपत्यं स्वराड्भावं चाधिगच्छति ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य षष्ठः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

अमृतानि ध्येयान्युक्त्वा अमृतोपजीविनो देवतागणाननुचिन्तनीयानुपदिशति—तत्रेत्यादिना। दृशिधातोस्सर्व-करणजातैर्जायमाना उपलब्धिरर्थ इति व्याख्यातं तदाक्षिप्य समाधत्ते—ननु रोहितमिति ॥ १-२ ॥

पाठक्रमेण ध्येयं रूपमनूद्य साधिकारध्यानविधिमाह—स यः कश्चिदित्यादिना ॥ ३-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य षष्ठसप्तमखण्डौ

आनन्दगिरिटीका

कथमित्यादिना । चक्षुषेति वक्तव्ये कथं सर्वकरणैरित्यधिकमुच्यते तत्राऽऽह—दृशेरिति । चक्षुषैव रूपग्रहणमिति नियममाश्रित्य शङ्कते—नन्विति । कर्मफलभूतस्य रसस्य लोहितामृतात्मकस्य नास्ति चक्षुर्मात्रग्राह्यत्वमिति परिहरति—नेत्यादिना । किमेतावता रसस्याऽऽयातं तदाह—रसो हीति । इति तस्यापि श्रोत्रादिग्राह्यतेति शेषः । एतदेवेत्यादिवाक्यमुपसंहरति—देवा इति । किं तेषां स्वतन्त्राणां तृप्तिर्नेत्याह—आदित्येति । वैगन्ध्यं दौर्गन्ध्यम् । आदिपदेन सम्भाविताः सर्वेऽपि देहकरणदोषा गृह्यन्ते ॥ १ ॥

एतस्माद्रूपादिति व्याख्यातस्यानुवादमात्रम् । उत्साहवतां देवानां यथोक्तामृतोपजीवित्वमित्यत्र लोक-प्रसिद्धिमनुकूलयति—न हीति ॥ २ ॥

पाठक्रमेणोक्तं ध्येयस्वरूपमनूद्य साधिकारं ध्यानविधिं दर्शयति—स य इति। वसुदेवभोग्यतां वसुभिर्देवैरुप-जीव्यत्वमिति यावत् । एतदित्यस्माकं मधु निदर्शयति । एवंशब्दार्थं विशदयति—यथोदितमिति । तथैव श्रुत्युक्त-क्रमेणैवेत्यर्थः ॥ ३ ॥

भोगकालपरिमाणं प्रश्नपूर्वकं निर्धारयति—कियन्तमिति । आधिपत्यं स्वाराज्यमिति विशेषणयोस्तात्पर्य-माह—न यथेति ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य षष्ठः खण्डः

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं
दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत
उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य सप्तमः खण्डः

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीत्यादि समानम् ॥ १-२-३ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो द्विगुणं कालं दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणां तावद्भोगकालः ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य सप्तमः खण्डः

तथा पश्चादुत्तरत ऊर्ध्वमुदेता विपर्ययेणास्तमेता । पूर्वस्मात्पूर्वस्माद्द्विगुणोत्तरोत्तरेण कालेनेत्यपौराणं दर्शनम् । सवितुश्चतुर्दिशमिन्द्रयमवरुणसोमपुरीषूदयास्तमयकालस्य तुल्यत्वं हि पौराणिकैरुक्तम् । मानसोत्तरस्य

नरेन्द्रपुरीयं टिप्पणम्

उक्ते श्रुत्यर्थे पुराणविरोधमुद्भाव्य परिहरति—पूर्वस्मादित्यादिना । उत्तरोत्तरपुरीषु भोगकालस्य द्विगुणत्वं पुराणसिद्धं कुतो न भवतीत्याशङ्कायामाह—मानसोत्तरसंज्ञकस्य गिरेर्मूर्धनि लग्नरथचक्राक्षस्य सवितुर्मेरुं प्रति प्रदक्षिणावृत्तेस्तुल्यत्वात्कालाधिक्ये कारणाभावात् द्वैगुण्यमुत्तरोत्तरपुरीषु न सम्भवतीत्यर्थः । भोगकालस्य द्वैगुण्यं न सवितृगतेराधिक्याभिप्रायेणोच्यते श्रुत्या, येन पुराणविरोधः स्यात् किन्तूत्तरोत्तरस्य द्विगुणेन कालेन

आनन्दगिरिटीका

प्रथममममृतमधिकृत्य चिन्तनीयमुक्त्वा द्वितीयममृतमाश्रित्य तद्दर्शयति—अथेति ॥ १-३ ॥

विद्याफलं कथयति—स यावदिति । यावद्वसूनां भोगकालस्ततो द्विगुणो रुद्राणां भोगकालः । यथा प्रथमामृतध्यायिनां वसुभिस्तुल्यो भोगकालस्तथा द्वितीयामृतध्यायिनामपि रुद्रैस्तुल्यो भोगकाल इत्यर्थः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य सप्तमः खण्डः

इतरामृतध्यायिनां फलानि निर्दिशति—तथेति । विपर्ययेण पुरस्ताद्दक्षिणतोऽधस्ताच्चेत्यर्थः । यथा पुरस्तादुदेता पश्चाच्चास्तमेता ततो दक्षिणतो द्विगुणेन कालेनोदेतोत्तरतश्चास्तमेतेत्युक्तम् । तथा ततो द्विगुणेन कालेन पश्चादुदेता पुरस्ताच्चास्तमेता तावानादित्यानां भोगकालः । तृतीयामृतध्यायिनामपि तावानेव भोगकालः । ततो द्विगुणेन कालेन यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता तावान्मरुतां भोगकालः । चतुर्थामृतध्यायिनामपि तावानेव भोगकालः । ततो द्विगुणेन कालेनोर्ध्वमुदेताऽधस्तादस्तमेता तावान्साध्यानां भोगकालः पञ्चमामृतचिन्तकानामपि तावानेवेत्यर्थः । यत्पूर्वपूर्वोदयास्तमयकालापेक्षया द्विगुणेन कालेनोत्तरोदयास्तमयावित्युक्तं तत्पुराणविरुद्धमिति शङ्कते—पूर्वस्मात्पूर्वस्मादिति । कथं श्रुत्युक्तस्यार्थस्य पुराणविरुद्धतेत्याशङ्क्याऽऽह—सवितुरिति । उक्तमेव संक्षिपति—मानसोत्तरस्येति । महागिरेर्मेरोः प्राकारवत्परितः स्थितस्य मूर्धनि संलग्नरथचक्रस्य सवितुर्मेरोः

**स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैत-देवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

**मूर्धनि मेरोः प्रदक्षिणावृत्तेस्तुल्यत्वादिति। अत्रोक्तः परिहार आचार्यैः। अमरावत्यादीनां पुरीणां द्विगुणोत्तरोत्तरेण कालेनोद्वासः स्यात्। उदयश्च नाम सवितुस्तन्निवासिनां प्राणिनां चक्षुर्गोचरापत्तिस्तदत्ययश्चास्तमनं न परमार्थत उदयास्तमने स्तः। तन्निवासिनां च प्राणिनामभावे तान्प्रति तेनैव मार्गेण गच्छन्नपि नैवोदेता नास्तमेतेति चक्षुर्गोचरापत्तेस्तदत्ययस्य चाभावात्। तथाऽमरावत्याः सकाशाद्द्विगुणं कालं संयमनी पुरी वसत्यतस्तन्निवासिनः**

नरेन्द्रपुरीयं टिप्पणम्

अमरावत्यादीनां दैत्योपहतानामुद्वासः स्यात्। तदपेक्षयोत्तरस्थानेषु भोगकालस्य द्वैगुण्यं श्रुत्योच्यत इत्यर्थः। किञ्च, न केवलं पूर्वोद्वासद्वैगुण्यापेक्षया उत्तरत्र भोगकालस्य द्वैगुण्यं द्विगुणवासापेक्षयापीत्याह—**तथाऽमरावत्या इति**। दक्षिणत उदयाभिधानं न सांयमिनीनिवासिनां दृष्ट्या तेषां हि न पुरत एवोदयः किन्त्वस्मद्बुद्धिमपेक्ष्यैव

आनन्दगिरिटीका

प्रदक्षिणावृत्तेस्तुल्यत्वात्कालाधिक्ये कारणाभावाच्च चतसृष्वपि पुरीषूदयास्तमयकालस्य तुल्यत्वम्। उक्तं हि विष्णुपुराणे—

"शक्रादीनां पुरे तिष्ठन्स्पृशत्येष पुरत्रयम्। विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान्द्वे पुरे तथा" ॥ इति

लैङ्गे चोक्तम्—

"मानसोपरि माहेन्द्री प्राच्यां मेरोः स्थिता पुरी। दक्षिणे भानुपुत्रस्य वरुणस्य तु वारुणी ॥
सौम्ये सोमस्य विपुला तासु दिग्देवताः स्थिताः। अमरावती संयमिनी सुखा चैव विभा क्रमात् ॥
लोकपालोपरिष्टात्तु सर्वतो दक्षिणायने। काष्ठां गतस्य सूर्यस्य गतिर्या तां निबोधत ॥
दक्षिणां प्रक्रमेद्भानुः क्षिप्तेषुरिव धावति। पुरान्तगो यदा भानुः शक्रस्य भवति प्रभुः ॥
सर्वैः सांयमनैः सौरो ह्युदयो दृश्यते द्विजाः। स एवं सुखवत्यां तु निशान्तस्तत्प्रदृश्यते ॥
अस्तमेति यदा सूर्यो विभायां विश्वदृग्विभुः। मया प्रोक्तोऽमरावत्यां यथाऽसौ वारितस्करः ॥
तथा संयमिनीं प्राप्य सुखां चैव विभां खगः। यदाऽपराह्णस्त्वाग्नेय्यां पूर्वाह्णो नैर्ऋते द्विजाः ॥
तदा स्वपररात्रश्च वायुभागे सुदारुणः। ऐशान्यां पूर्वरात्रस्तु गतिरेषाऽस्य सर्वतः" ॥ इति

तथा चोपरिष्टादमरावत्यास्तिष्ठन्मध्याह्नं तत्रेशकोणस्थानां तृतीययाममाग्नेयकोणस्थानामाद्यायामं संयमिन्या-मुदयं च करोति सविता। एवं यदा याम्ये मध्याह्ने तिष्ठति तदैन्द्रेऽस्तमयः। आग्नेये तृतीययामः। निर्ऋतिकोणे प्रथमो यामः। वारुण उदयः। यदा च वारुणे मध्याह्नस्तदा याम्येऽस्तमयः। निर्ऋतिकोणे तृतीयो यामः। वायव्ये प्रथमयामः। सौम्य उदयः। यदा च सौम्ये मध्याह्नस्तदा वारुणेऽस्तमयः। वायव्ये तृतीययामः। ईशानकोणे प्रथमो यामः। ऐन्द्र उदयः। तथाऽऽग्नेये कोणे वर्तमानस्तत्रत्यानां मध्यन्दिनं यमेन्द्रपुर्योराद्यतृतीययामौ निर्ऋतीशान-कोणयोरुदयास्तमयौ च करोति। एवं सर्वासु दिक्षु विदिक्षु चेति पौराणिके दर्शने तद्विरुद्धमिदं श्रुत्योक्तमित्यर्थः। यद्यपि श्रुतिविरोधे स्मृतिरप्रमाणं तथाऽपि यथाकथञ्चिद्विरोधपरिहारं द्रविडाचार्योक्तमुपपादयति—**अत्रेति**। यदाऽमरावती शून्या स्यात्तदा हि तां प्रति पुरस्तादुदेतीतिप्रयोगशून्यत्वाद्वसूनां भोगान्तः। एवमुत्तरासां पुरीणां विनाशे द्विगुणकालेन रुद्रादीनां भोगच्युतिः। अत इमां वचनव्यक्तिमाश्रित्य तमेव परिहारमाह—**अमरावत्या-दीनामिति**। तथाऽपि कथं विरोधसमाधिस्तत्राऽऽह—**उदयश्चेति**। [ तदुक्तम्— ]

"यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः। तिरोभावं च यत्रैति तदेवास्तमनं रवेः।
नैवास्तमनमर्कस्य नोदयः सर्वदा सतः। उदयास्तमने नाम दर्शनादर्शने रवेः" ॥ इति

अमरावत्यादिपुरीषु पूर्वपूर्वापेक्षयोत्तरोत्तरोद्वासकालद्वैगुण्यमस्तु। स्तां च दर्शनादर्शने सवितुरुदयास्तमयौ। स वा एष न कदाचनास्तमेति नोदेतीति श्रुतेर्वस्तुतो नोदयास्तमयौ स्तस्तथा च पुरीषु तुल्यत्वेन गच्छतः सवितुरुदयास्तमयकालवैषम्यमयुक्तमित्याशङ्क्याऽऽह—**तन्निवासिनां चेति**। भोगकालद्वैगुण्यं न सवितृगतेराधिक्या-

**स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥**

**इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्याष्टमः खण्डः**

प्राणिनः प्रति दक्षिणत इत्रोदेत्युत्तरतोऽस्तमेतीत्युच्यतेऽस्मद्बुद्धिं चापेक्ष्य । तथोत्तरास्वपि पुरीषु योजना । सर्वेषां च मेरुरुत्तरतो भवति । यदाऽमरावत्यां मध्याह्नगतः सविता तदा संयमन्यामुद्यन्दृश्यते तत्र मध्याह्नगतो वारुण्यामुद्यन्दृश्यते, तथोत्तरस्यां, प्रदक्षिणावृत्तेस्तुल्यत्वात् । इलावृतवासिनां सर्वतः पर्वतप्राकारनिवारितावित्य-

**नरेन्द्रपुरीयं टिप्पणम्**

दक्षिणत इत्यादिव्यपदेश इत्यर्थः । इतश्चास्मद्बुद्धिमपेक्ष्यैव दक्षिणत इत्याद्यभिधानं यतस्सर्वेषां मेरुरुत्तरः प्रसिद्धः ततो यथाऽस्माकं पुरतस्सवितुरुदये मेरुरुत्तरतो भवति । ततो याम्यादिपुरवासिनां पुरत एव सवितुरुदये मेरुरुत्तरतो भवति । ततो दक्षिणत इत्याद्यभिधानं तत्तत्पुरवासिदृष्ट्यपेक्षयेत्यर्थः । इतश्च न सवितृगतेर्द्वैगुण्यापेक्षया भोगकालस्य द्वैगुण्यं घटत इत्याह—यदाऽमरावत्यामित्यादिना । "शक्रादीनां पुरे तिष्ठन्स्पृशत्येव पुरत्रयमि"ति पुराणादपि याम्यादिपुरीषु न सवितुर्गत्याधिक्यमित्यर्थः । कथं तर्ह्यूर्ध्वमुदयाभिधानमर्वागस्तमयाभिधानं केषाञ्चिदित्या-काङ्क्षायामाह—इलावृतवासिनामिति । इलावृतसंज्ञकं वर्षं मेरोश्चतुर्दिशं प्रसिद्धं तत्रस्थानां दृष्ट्योर्ध्वमुदयो

**आनन्दगिरिटीका**

पेक्षया श्रुत्योच्यते येन पुराणविरोधः किं त्वमरावत्यादीनां पुरीणां दैत्योपहतानां पूर्वपूर्वापेक्षयोत्तरोत्तरपुरीणां द्विगुणेन कालेनोद्वासात्तदपेक्षयोत्तरोत्तरस्थानेषु भोगकाले द्वैगुण्यं श्रुत्योक्तमिति भावः । अथोद्वासकालाधिक्याद्भोग-च्युतिकालाधिक्यं न भोगकालाधिक्यमत आह—तथेति । यथोद्वासकालद्वैगुण्यमुक्तं तद्वदिति यावत् । अमरावती-निवासिप्राणिवर्गापेक्षया संयमिनीनिवासिनः प्राणिनः प्रति द्विगुणेन कालेन सवितुरुदयास्तमयाविति युक्तं च वक्तुम्। दर्शनादर्शनयोर्द्विगुणकालभावित्वात् । न च तन्निवासिदृष्ट्यपेक्षया दक्षिणोत्तरयोरुदयास्तमयौ । तत्तद्दृष्ट्या पूर्वपश्चिमयोरेव तद्भावात् । अस्मद्बुद्धिमपेक्ष्य तु दक्षिणत उदेत्युत्तरतश्चास्तमेतीत्युच्यते । इवशब्दस्तयोस्तन्नि-वासिजनापेक्षया दक्षिणोत्तरस्थयोरसत्वं द्योतयतीत्यर्थः । यथाऽमरावत्यपेक्षया संयमिन्यामुद्वासकालाधिक्यमुक्तं तथा तदपेक्षया वारुण्यां तदपेक्षया च विभायां तत्कालाधिक्यमवधेयमित्याह—तथेति । संयमिनीं चान्तर्भाव्य बहुवचनम् । इतश्चास्मद्बुद्धिमपेक्ष्य दक्षिणगत्यादिनाऽस्तमनमित्याह—सर्वेषां चेति । उद्यन्तमादित्यं पुरतोऽवलोकयतां वामभागे स्थितत्वान्मेरुः सर्वेषामेवोत्तरतो भवति । तथाचोदयास्तमयाभ्यां पूर्वापरदिग्विभागान्न तत्पुरवासिदृष्ट्यपेक्षया दक्षिणत इत्यादिवचनं किन्त्वस्मद्दृष्ट्यपेक्षयैवेत्यर्थः । उद्वासकालद्वैगुण्यापेक्षया भोगकालद्वैगुण्यमित्युक्तम् । संप्रति सवितृगत्याधिक्यापेक्षयैव भोगकालाधिक्यं किं न स्यादित्याशङ्क्य पुराणविरोधसमाधानासम्भवान्मैवमित्याह—यदेत्यादिना । यथा संयमिन्यां मध्याह्नगो वारुण्यामुद्यन्भवति तथा तस्यां मध्याह्नगो विभायामुद्यन्दृश्यत इत्याह—तथेति । उक्तं च वायुप्रोक्ते—

"मध्यगतस्त्वमरावत्यां यावद्भवति भास्करः । वैवस्वते संयमन उदयंस्तत्र दृश्यते ॥
सुखायामर्धरात्रश्च विभायामस्तमेति च" ॥ इति

कथं पुनः स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वं उदेताऽर्वाङस्तमेतेत्युच्यते । न हि तत्रोद्वासकालस्य वाऽधिकत्वमस्ति येनोदयास्तमयकालाधिक्याद्भोगकालाधिक्यं स्यादत आह—इलावृतेति । मेरोश्चतुर्दिशमिलावृतं नाम वर्षं प्रसिद्धम् । तन्निवासिनां प्राणिनामुभयतः पर्वताभ्यां मानसोत्तरसुमेरुभ्यां प्राकार-स्थानीयाभ्यामुभयोर्ध्वस्थितमहाक्षेण विनिवारितादित्यरश्मीनामूर्ध्वमुदेताऽर्वाङस्तमेता च सविता दृश्यते । इव-शब्दस्तूदयास्तमययोर्वस्तुतोऽसत्त्वद्योतनार्थं इत्यर्थः । कथं सवितोर्ध्वः सन्नुदेत्यर्वाङस्तमेति तत्राऽऽह—पर्वतेति । सर्वावृतप्रकाशस्य पर्वतयोरुपरितने छिद्रे प्रवेशादधोवर्तिनां प्राणिनामुपरिप्रसारितनेत्राणां सावित्रं प्रकाशं पश्यतां तत्रोद्यन्निव सवितोपलभ्यते प्रदेशान्तरे च दृश्यमानोऽधस्तादिवास्तमेति । यथोपरिष्टादत्यैरुपलभ्यमानो मेघस्ततो दूराद्दृशो भूतललग्नश्चेत्येवावसीयते तथेहापीत्यर्थः । भोगकालस्याविरोधेनाऽऽधिक्यमापाद्य तेनैव लिङ्गेनातिशय-

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं
दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता
दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य नवमः खण्डः

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन
न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥
स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैत-
देवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥
स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्व
उदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यँ स्वाराज्यं पर्येता ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य दशमः खण्डः

अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥

रश्मीनां सवितोर्ध्वं इवोदेताऽर्वागस्तमेता दृश्यते। पर्वतोर्ध्वच्छिद्रप्रवेशात्सवितृप्रकाशस्य। तथर्गाद्यमृतोपजीविनाममृतानां च द्विगुणोत्तरोत्तरवीर्यवत्त्वमनुमीयते भोगकालद्वैगुण्यलिङ्गेन। उद्यमनसंवेशनादि देवानां रुद्रादीनां विदुषश्च समानम् ॥ १-४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्याष्टमनवमदशमखण्डाः

कृत्वैवमुदयास्तमनेन प्राणिनां स्वकर्मफलभोगनिमित्तमनुग्रहं तत्कर्मफलोपभोगक्षये तानि प्राणिजातान्यात्मनि

नरेन्द्रपुरीयं टिप्पणम्

अधस्तादस्तमय इति व्यपदेशो घटत इत्यर्थः। भोगकालस्योक्तप्रकारेण द्वैगुण्ये सिद्धे अमृतादीनामप्यतिशयवत्त्वमुत्तरोत्तरस्थानेषु सिद्धमित्याह—तथर्गादीति। यच्च देवानां भोगावसरं बुद्ध्वोद्यमकरणं कालान्तरे चोपरमणं तदुपासकस्यास्ति न वेत्याकाङ्क्षायां भोक्तृत्वाविशेषादस्तीत्याह—उद्यमनेति ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य अष्टमनवमदशमखण्डाः

मधुविद्यायाः क्रमेण मुक्तिफलपर्यवसायितां दर्शयितुमाह—कृत्वैवमित्यादिना। क्रममुक्तौ विद्वदनुभवं

आनन्दगिरिटीका

वत्त्वममृतादेरपि कथयति—तथेति। भोगकालाधिक्ये सतीति यावत्। अनुमीयते कल्प्यते। यत्तु भोगकालमाकलय्योद्यमनं तदभावं ज्ञात्वोपरमणमग्न्यादिमुखत्वं दृष्टिमात्रेण तृप्तिमत्त्वं तत्सर्वं विदुषोऽपि कल्प्यते देवैः सममित्याह—उद्यमनेति ॥ १-४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य अष्टमनवमदशमखण्डाः

पञ्चभिः पर्यायैर्मधुविद्या यथावदुक्ता। क्रमेण मुक्तिफलपर्यवसायित्वं तस्या दर्शयितुमनन्तरवाक्यमवरुध्याऽऽह—कृत्वेत्यादिना। तस्मात्प्राण्यनुग्रहकालादनन्तरमिति तच्छब्दार्थः। ऊर्ध्वः सन्ब्रह्मीभूतो वर्तमान इति

न वै तत्र न निम्लोच नोदियाय कदाचन।
देवास्तेनाहँ सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥
न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा
हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥

संहृत्याथ ततस्तस्मादनन्तरं प्राण्यनुग्रहकालादूर्ध्वः सन्नात्मन्युदेत्योद्गम्य यान्प्रत्युदेति तेषां प्राणिनामभावात्स्वात्मस्थो नैवोदेता नास्तमेतैकलोऽद्वितीयोऽनवयवो मध्ये स्वात्मन्येव स्थाता। तत्र कश्चिद्विद्वान्वस्वादिसमानचरणो रोहिताद्यमृतभोगभागी यथोक्तक्रमेण स्वात्मानं सवितारमात्मत्वेनोपेत्य समाहितः सन्नेतं मन्त्रं दृष्ट्वोत्थितोऽन्यस्मै पृष्टवते जगाद। यतस्त्वमागतो ब्रह्मलोकात्किं तत्राप्यहोरात्राभ्यां परिवर्तमानः सविता प्राणिनामायुः क्षपयति यथेहास्माकमित्येवं पृष्टः प्रत्याह। तत्तत्र यथा पृष्टे यथोक्ते चार्थे एष श्लोको भवति तेनोक्तो योगिनेति श्रुतेर्वचनमिदम् ॥ १ ॥

न वै तत्र यतोऽहं ब्रह्मलोकादागतस्तस्मिन्न वै तत्रैतदस्ति यत्पृच्छसि। न हि तत्र निम्लोचोऽस्तमगमत्सविता न चोदियायोद्गतः कुतश्चित्कदाचन कस्मिंश्चिदपि काल इति। उदयास्तमयवर्जितो ब्रह्मलोक इत्यनुपपन्नमित्युक्तः शपथमिव प्रतिपेदे। हे देवाः साक्षिणो यूयं शृणुत यथा मयोक्तं सत्यं वचस्तेन सत्येनाहं ब्रह्मणा ब्रह्मस्वरूपेण मा विराधिषि मा विरुध्येयमप्राप्तिर्ब्रह्मणा मम मा भूदित्यर्थः ॥ २ ॥

सत्यं तेनोक्तमित्याह श्रुतिः—न ह वा अस्मै यथोक्तब्रह्मविदे नोदेति न निम्लोचति नास्तमेति किं तु ब्रह्मविदेऽस्मै सकृद्दिवा हैव सदैवाहर्भवति स्वयंज्योतिष्ट्वाद्य एतां यथोक्तां ब्रह्मोपनिषदं वेदगुह्यं वेद। एवं तन्त्रेण वंशादित्रयं प्रत्यमृतसम्बन्धं च यच्चान्यदवोचामैवं जानातीत्यर्थः। विद्वानुदयास्तमयकालापरिच्छेद्यं नित्यमजं ब्रह्म भवतीत्यर्थः ॥ ३ ॥

## नरेन्द्रपुरीयं टिप्पणम्

प्रमाणमाह—तत्र कश्चिदिति। आदित्याल्लब्धब्रह्मोपदेशो युक्तावस्थायां ब्रह्मणि स्थितो वियुक्तावस्थायां केन च स पृष्टः प्रोवाचेत्यर्थः ॥ १ ॥

निम्लोचेति। वर्णलोपश्छान्दसः निमुम्लोचेति युक्तं; तन्त्रेण योगपद्येनेत्यर्थः ॥ २-६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य एकादशः खण्डः

## आनन्दगिरिटीका

यावत्। आत्मन्युदेत्य स्वमहिम्नि प्रकाशं लब्ध्वेत्येतत्। स्थातेतिप्रयोगात्क्रममुक्तिरत्र विवक्षिता। तत्र विद्वदनुभवं प्रमाणयति—तत्रेति। क्रममुक्तिः सप्तम्यर्थः। यथोक्तक्रमेणा"सौ वा आदित्यो देवमध्वि"त्यादिना पञ्चामृतत्वेन स्थितमित्यर्थः। स्वमात्मानं वेद्यतया विद्वदात्मसम्भूतमित्यर्थः। आत्मत्वेनोपेत्याहंग्रहेण गृहीत्वेत्येतत्। कथं प्रश्न इत्याकाङ्क्षायामाह—यत इति। लब्धब्रह्मोपदेशो ब्रह्मविद्युक्तावस्थायां ब्रह्मणि स्थितः वियुक्तावस्थायां केनचित्पृष्टः प्रत्युवाचेत्यर्थः। कथं प्रत्युक्तिरिति तत्राऽऽह—तत्तत्रेति ॥ १ ॥

श्लोकमुपादाय व्याकरोति—न वै तत्रेत्यादिना। निमुम्लोचेत्यस्मिन्नर्थे निम्लोचेति च्छान्दसः प्रयोगः। इतिशब्दः पूर्वार्धव्याख्यासमाप्त्यर्थः। उत्तरार्धमुत्थापयति—उदयास्तमयेति। लोकत्वाविशेषादितरलोकवद्ब्रह्मलोकोऽपि नोदयास्तमयवर्जित इत्युक्तो विद्वानुत्तरार्धेन शपथं कुर्वन्परिहरतीत्यर्थः ॥ २ ॥

एवं मन्त्रदृक्शपथद्वारा निर्णीतेऽर्थे न हेत्याद्या किमर्था श्रुतिरित्याशङ्क्याऽऽह—सत्यमिति। न हेत्याद्यां श्रुतिमादाय व्याचष्टे—यथोक्तेति। ब्रह्मोपनिषदमित्यस्यार्थमाह—वेदगुह्यमिति। एवंशब्दमादाय व्याकरोति—एवमित्यादिना। वंशादित्रयं तिरश्चीनवंशो मध्वपूपो मधुनाड्यश्चेत्येवंरूपमित्यर्थः। प्रत्यमृतसम्बन्धं च लोहिताद्यमृतेष्वेकैकवस्वादीनां सम्बन्धमित्यर्थः। अन्यदित्युद्यमनसंवेशनादि गृह्यते। उक्तविद्याफलमुपसंहरति—विद्वानिति ॥ ३ ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्त-
द्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय[1] वाऽन्तेवासिने ॥ ५ ॥

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य
पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥ ६ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्यैकादशः खण्डः

गायत्री वा इदꣳ सर्वं भूतं यदिदं किञ्च वाग्वै
गायत्री [2]वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च ॥ १ ॥

तद्धैतन्मधुज्ञानं ब्रह्मा हिरण्यगर्भो विराजे प्रजापतय उवाच । सोऽपि मनवे । मनुरिक्ष्वाक्वाद्याभ्यः प्रजाभ्यः प्रोवाचेति विद्यां स्तौति ब्रह्मादिविशिष्टक्रमागतेति । किं च तद्धैतन्मधुज्ञानमुद्दालकायाऽऽरुणये पिता ब्रह्मविज्ञानं ज्येष्ठाय पुत्राय प्रोवाच ॥ ४ ॥

इदं वाव तद्यथोक्तमन्योऽपि ज्येष्ठाय पुत्राय सर्वप्रियार्हाय ब्रह्म प्रब्रूयात् । प्रणाय्याय वा योग्यायान्तेवासिने शिष्याय ॥ ५ ॥

नान्यस्मै कस्मैचन प्रब्रूयात्तीर्थद्वयमनुज्ञातमनेकेषां प्राप्तानां तीर्थानामाचार्यादीनाम् । कस्मात्पुनस्तीर्थ-सङ्कोचनं विद्यायाः कृतमित्याह—यद्यप्यस्मा आचार्यायेमां कश्चित्पृथिवीमद्भिः परिगृहीतां समुद्रपरिवेष्टितां समस्तामपि दद्यादस्या विद्याया निष्क्रयार्थमाचार्याय धनस्य पूर्णां सम्पन्नां भोगोपकरणैर्नासावस्य निष्क्रयो यस्मात्ततोऽपि दानादेतदेव यन्मधुविद्यादानं भूयो बहुतरफलमित्यर्थः । द्विरभ्यास आदरार्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्यैकादशः खण्डः

यत एवमतिशयफलैषा ब्रह्मविद्याऽतः सा प्रकारान्तरेणापि वक्तव्येति गायत्री वा इत्याद्यारभ्यते । गायत्री-

नरेन्द्रपुरीयं टिप्पणम्

तीर्थद्वयमिति विद्याप्रदानेऽधिकारिद्वयमित्यर्थः । विद्यया विद्यां यः प्राह स आचार्यः । आदिशब्दो धनदायी श्रोत्रियो मेधावी च गृह्यते—प्रकारान्तरेणेति । सवितृद्वारकब्रह्मविद्यानन्तरं सवितृदेवत्यगायत्रीद्वारेण ब्रह्मविद्योप-

आनन्दगिरिटीका

ननु विद्या सफला चेदुक्ता तर्हि किमुत्तरग्रन्थेनेत्याशङ्क्याऽऽह—तद्धैतदिति । स्तुतिमेवाभिनयति—ब्रह्मादीति—"तद्धैतदुद्दालकाये"त्यादिना विद्यायां योग्यं पात्रं प्रदर्श्यते । तद्व्याचष्टे—किंचेति । इतश्च स्तुत्यर्हमेत-द्विज्ञानमित्यर्थः । मधुविज्ञानं व्याकरोति—ब्रह्मविज्ञानमिति ॥ ४ ॥

तस्य परोक्षत्वं व्यावर्तयति—इदं वावेति । अथ ज्येष्ठाय पूत्राय ब्रह्म वक्तव्यमिति पूर्वेषामयं नियमो नेदानींतनानामित्यत आह—अन्योऽपीति । पात्रान्तरमनुजानाति—प्रणाय्यायेति ॥ ५ ॥

पुत्रशिष्याभ्यां पात्रान्तरं प्रत्याचष्टे—नेति । तीर्थद्वयं विद्याप्रदानेऽधिकारिद्वयमित्यर्थः । निर्धारणे षष्ठी । आचार्यो विद्यादाता । आदिपदाद्धनदायी श्रोत्रियो मेधावी च गृह्यते । सर्वेषामर्थिनामत्राधिकारमाशङ्क्य दूषयति—कस्मादित्यादिना । आचार्यायेति पुनरुपादानं क्रियापदेन तस्यान्वयद्योतनार्थं विद्यायामादरो वा मुख्यमधिकार-कारणं फलतीति भावः ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्यैकादशः खण्डः

गतेन ग्रन्थेनोत्तरग्रन्थस्य गतार्थत्वं परिहरति—यत इति । सवितृद्वारकब्रह्मविद्यानन्तरं तद्देवताकगायत्री-

१. प्रणाय्याय—प्रणाय्योऽसम्मतौ इति पाणिनिसूत्रात् भोगादौ सम्मतिरहितः विरक्तः प्रणाय्य इति व्याख्यातम् । तादृशशिष्यः अत्राधिकारी विद्याग्रहणे ।

२. वाग्वा इदं सर्वं भूतं शब्दार्थयोरभेदात् । तदुक्तं—"वाचारम्भणं विकारो नामधेयमि"ति ।

**द्वारेण चोच्यते। ब्रह्मणः सर्वविशेषरहितस्य नेति नेतीत्यादिविशेषप्रतिषेधगम्यस्य दुर्बोधत्वात्। सत्स्वनेकेषु च्छन्दःसु गायत्र्या एव ब्रह्मज्ञानद्वारतयोपादानं प्राधान्यात्। सोमाहरणात् [1]इतरच्छन्दोक्षराहरणेनेतरच्छन्दोव्याप्त्या च सर्वसवनव्यापकत्वाच्च यज्ञे प्राधान्यं गायत्र्याः। गायत्रीसारत्वाच्च ब्राह्मणस्य मातरमिव हित्वा गुरुतरां गायत्रीं ततोऽन्यद्गुरुतरं न प्रतिपद्यते यथोक्तं ब्रह्मापीति। तस्यामत्यन्तगौरवस्य प्रसिद्धत्वात्। अतो गायत्रीमुखेनैव ब्रह्मोच्यते।**

### नरेन्द्रपुरीयं टिप्पणम्

दिश्यते इत्यर्थः। निरतिशयफला चेद्ब्रह्मविद्या तर्हि निरुपाधिकमेव ब्रह्म प्रथमतः किं नोपदिश्यते? श्रोत्रियाणां तत्र वुद्धिस्थैर्यानुपपत्तेरित्याह—**गायत्रीद्वारेण चेति**। छन्दोऽन्तराणि परिहृत्य गायत्रीद्वारेणैव ब्रह्मोपदेशे को हेतुरित्याशङ्क्याह—**सत्स्विति**। प्राधान्ये हेतुमाह—**सोमाहरणादीति**। न केवलं सोमाहरणसाधनत्वात् गायत्र्याः प्राधान्यं हेत्वन्तरं चाह—**इतरेति**। इतरेषामुष्णिगनुष्टुवादीनामक्षराणि गायत्र्या अनन्तरमाह्रियन्ते षट्संख्यापूर्वकत्वात् सप्तादिसंख्यागणनस्य तेषु च सप्ताद्याक्षरेषु षडक्षराणामनुगतत्वादनुगतषडक्षरसंख्यया गायत्र्या व्याप्तानीतराणि च्छन्दांसि। ततो गायत्र्याः प्राधान्यमित्यर्थः। प्राधान्ये हेत्वन्तरमाह—**सर्वेति**। गायत्रछन्दस्कानि हि प्रातःसवने स्तोत्राणि; त्रैष्टुभं द्वितीयसवने जागतं तृतीयसवने। त्रैष्टुभाद्यक्षराणां च गायत्र्यक्षरैर्व्याप्तत्वात् सर्वसवनस्य व्यापकत्वं गायत्र्या इत्यर्थः। गायत्रीद्वारेण ब्रह्मोपदेशे श्रोत्रियाणां हेत्वन्तरमाह—**गायत्रीसारत्वाच्चेत्यादिना**। वाग्भूतपृथिवीशरीरहृदयप्राणप्रभेदैष्षड्विधां पाठक्रमेण गायत्रीमनुचिन्त्याजहल्लक्षणया गायत्र्याऽवच्छिन्नं

### आनन्दगिरिटीका

द्वारेण तद्विद्योपदिश्यत इत्यर्थः। ब्रह्मविद्याया विवक्षितत्वे ब्रह्मैवोपदिश्यतां किं गायत्र्युपदेशेनेत्याशङ्क्याऽऽह—**गायत्रीति**। तथाऽपि च्छन्दोन्तराणि विहाय किमिति गायत्रीद्वारैव ब्रह्मोपदिश्यते तत्राऽऽह—**सत्स्विति**। ब्रह्मज्ञानद्वारतया तदुपायतयेत्यर्थः। प्राधान्ये हेतुमाह—**सोमाहरणादिति**। सोमस्याऽऽहरणमानयनम्। तत्र साधनत्वं गायत्रीछन्दस्कानामृचां याजकैरिष्यते। तद्युक्तं तस्या यज्ञे प्राधान्यमित्यर्थः। यद्वा देवैः सोमाहरणमिच्छद्भिः छन्दसां गायत्रीत्रिष्टुब्जगतीनां तादर्थ्येन नियोगे जगतीत्रिष्टुभोर्मध्येमार्गमशक्त्या निवृत्तौ गायत्री सोमं प्राप्य रक्षिणस्तस्य विजित्य तं देवेभ्यः समाहरदित्यैतरेयकब्राह्मणे "सोमो वै राजाऽमुष्मिँल्लोक आसीदि"त्यत्र प्रसिद्धमतस्तत्प्राधान्यमित्यर्थः। तत्रैव हेत्वन्तरमाह—**इतरेति**। उष्णिगनुष्टुप्प्रभृतीनीतराणि च्छन्दांसि तेषां पादशोऽक्षराणि सप्ताष्टादिसंख्याकानि तेषामाहरणमापादनं[2] गायत्र्यक्षरैः पादशः षड्भिः क्रियतेऽधिकसंख्याया न्यूनसंख्यामन्तरेणासंभवात्तस्मादितरेषु च्छन्दःसु गायत्र्या व्याप्तेश्च प्राधान्यमित्यर्थः। अथवा गायत्रीव्यतिरिक्तयोस्त्रिष्टुब्जगतीछन्दसोः सोमाहरणोद्यतयोरशक्तयोर्मार्गमन्ये जगत्या त्यक्तानि त्रीण्यक्षराणि त्रिष्टुभा त्वेकमक्षरम्। ततश्चाष्टाचत्वारिंशदक्षरा जगती पञ्चचत्वारिंशदक्षरा संवृत्ता। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्च त्रिचत्वारिंशदक्षरा संवृत्ता। तत्र गायत्री सोममाहरन्ती त्यक्तानामक्षराणामाहरणेन पूर्णतां तयोरापाद्य ते व्याप्य स्थिता तेन तत्प्राधान्यमित्यर्थः[3]। तत्रैव हेत्वन्तरमाह—**सर्वसवनेति**। सर्वाणि प्रातःसवनं माध्यन्दिनं सवनं तृतीयसवनमित्येतानि तेषु गायत्र्या व्यापकत्वं मिश्रणं गायत्रं प्रातःसवनं त्रैष्टुभं माध्यदिनं जागतं तृतीयसवनमिति स्थितेऽपि त्रिष्टुब्जगत्योर्गायत्रीव्याप्तेरुक्तत्वात्तस्याश्च पादाभ्यां मुखेन च सोमाहरणद्वारेण सवनत्रयसम्बन्धादतश्च तस्या अस्ति यज्ञे प्राधान्यमित्यर्थः। कर्मणि तत्प्राधान्येऽपि कुतो ब्रह्मविद्यायां तत्प्राधान्यमित्याशङ्क्याऽऽह—**गायत्रीति**। ब्रह्मविद्यायां तत्प्राधान्यमिति शेषः। गायत्रीमेवाऽऽलम्बनत्वेन प्रतिपद्यते ब्रह्मेत्यत्र लोकप्रसिद्धिमनुकूलयति—**तस्यामिति**। गायत्र्या ब्रह्मज्ञानद्वारत्वेनोपादानमुक्तहेतुभ्यः सिद्धमित्युपसंहरति—**अत इति**।

---

१. इतरछन्दोऽक्षराहरणं त्रिष्टुप्छन्दसः सोमाहरणाय प्रस्थितस्य मध्ये मार्गं त्रयाणामक्षराणां पतनं तथा जगत्याः एकाक्षरपतनम्। गायत्री तु सोममाहर्तुं गता सोमेन सह इतरछन्दसोः मध्यपतितान्यक्षराण्यप्याहृतवतीत्यर्थः। टीकोक्तार्थस्तु सुगमः। अधिकसंख्यायां न्यूनान्तर्भावः।

२. आपूरणमित्यर्थः।

३. गायत्र्या सोमाहरणं शतपथब्राह्मणे श्रूयते—"चतुरक्षराणि वा छन्दांस्यग्र आसुः। ततो जगती सोममच्छापतत् सा एकमक्षरं हित्वाऽपतत्। ततो गायत्री सोममच्छापतत् सा तानि चाक्षराणि हरन्त्यागच्छत् सोमं च तस्मादष्टाक्षरा गायत्री" इत्यादि।

**या वै सा गायत्रीयं वाव सा येयं पृथिव्यस्याँ्**
**हीदँ् सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥**
**या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे**
**शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥**

गायत्री वा इत्यवधारणार्थो वैशब्दः। इदं सर्वं भूतं प्राणिजातं यत्किञ्च स्थावरं जङ्गमं वा तत्सर्वं गायत्र्येव। तस्याश्छन्दोमात्रायाः सर्वभूतत्वमनुपपन्नमिति गायत्रीकारणं वाचं शब्दरूपामापादयति गायत्रीं वाग्वै गायत्रीति। वाग्वा इदं सर्वं भूतम्। यस्माद्वाक्शब्दरूपा सती सर्वं भूतं गायति शब्दयत्यसौ गौरसावश्व इति च त्रायते च रक्षत्यमुष्मान्मा भैषीः किं ते भयमुत्थितमित्यादिना सर्वतो भयान्निवर्त्यमानो वाचा त्रातः स्यात्। यद्वाग्भूतं गायति च त्रायते च गायत्र्येव तद्गायति च त्रायते च वाचोऽनन्यत्वाद्गायत्र्याः। गानात्त्राणाच्च गायत्र्या गायत्रीत्वम् ॥१॥

या वै सैवंलक्षणा सर्वभूतरूपा गायत्री, इयं वाव सा येयं पृथिवी। कथं पुनरियं पृथिवी गायत्रीति, उच्यते–सर्वभूतसम्बन्धात्। कथं सर्वभूतसम्बन्धः, अस्यां पृथिव्यां हि यस्मात्सर्वं स्थावरं जङ्गमं च भूतं प्रतिष्ठितमेतामेव पृथिवीं नातिशीयते नातिवर्तत इत्येतत्। यथा गानत्राणाभ्यां भूतसम्बन्धो गायत्र्या एवं भूतप्रतिष्ठानाद्भूतसम्बद्धा पृथिव्यतो गायत्री पृथिवी ॥ २ ॥

या वै सा पृथिवी गायत्रीयं वाव सेदमेव। तत्किं, यदिदमस्मिन्पुरुषे कार्यकारणसङ्घाते जीवति शरीरं

### नरेन्द्रपुरीयं टिप्पणम्

ब्रह्माविक्षिप्तं[1] चिन्तयेदिति वाक्यार्थः। तत्र लक्षणानिमित्तमाह—तस्याः छन्दोमात्राया इति। उपासनप्रकरणेऽपि सदारोपे सम्भवत्यसदारोपकल्पनायाः त्याज्यत्वात्सर्वभूतसामानाधिकरण्यानुपपत्तेर्गायत्रीकारणं वाचं गायत्रीमापादयति वाचो हि मुख्यं सर्वात्मत्वं न सम्भवतीति तत्कारणं ब्रह्म लिलक्षयिषितमिति भावः ॥ १ ॥

गायत्र्या भूतसम्बन्धं सिद्धवत्कृत्य पृथिव्यादीनां भूतसम्बन्धेनैव गायत्रीत्वमाह—या वै सैवमित्यादिना ॥२-४॥

### आनन्दगिरिटीका

[2]तथा "चेतोर्पणनिगदादि"तिन्यायेन गायत्र्युपाधिकं ब्रह्मोपास्यमिति प्रतिजानीते—गायत्रीति। निपातमादाय व्याचष्टे—वा इति। अवधारणरूपमेवार्थं स्फुटयन्निदमित्यादि व्याकरोति—इदमिति। तदिदं सर्वं गायत्र्येवेति योजना। गायत्र्याः सर्वात्मकत्वाद्ब्रह्म दृष्ट्योपास्तिर्युक्तेत्युक्तं तत्रानुपपत्तिमाशङ्क्यानन्तरवाक्येनो(णो)त्तरमाह—तस्या इति। कथं वाचो गायत्रीत्वमित्याशङ्क्य तस्याः सर्वभूतसम्बन्धं दर्शयति—वागिति। कुतो गायत्रीत्वं तत्राऽऽह—यस्मादिति। भवत्वेवं वाचः स्वरूपं गायत्र्यास्तु किमायातं तदाह—यद्वागिति। गायत्रीनामनिर्वचनादपि वाच्युक्तं रूपं गायत्र्यामेव द्रष्टव्यमित्याह—गानादिति ॥ १ ॥

अस्ति हि वाचः सर्वभूतात्मकत्वं तद्वाचकत्वाद्वाच्यस्य च वाचकातिरेकेणानिरूपणात्तथा च वाग्भूता गायत्री सर्वभूतात्मिकेत्युक्तमिदानीं तस्या विधानान्तरमाह—या वै सेति। एवंलक्षणत्वं व्याचष्टे—सर्वेति। गायत्रीमनूद्य पृथिवीत्वं तस्य विहितं प्रश्नपूर्वकमुपपादयति—कथं पुनरपि। गायत्र्याः सर्वभूतसम्बन्धस्योक्तत्वात्पृथिव्यास्तत्सम्बन्धं चोद्यपूर्वकं व्युत्पादयति—कथमिति। सर्वस्य पृथिव्यां प्रतिष्ठितत्वं साधयति—एतामेवेति। तथाऽपि कथं पृथिव्या गायत्रीत्वं तदाह—यथेति ॥ २ ॥

सम्प्रति गायत्र्याः शरीररूपत्वं निरूपयति—या वा इति। गायत्र्यात्मिकां पृथिवीमनूद्य तस्या गायत्री-

---

१. चाञ्चल्यं विना।

२. तथा चेतोपर्णेति—ब्रह्मसूत्रेषु "छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम्" इति प्रथमाध्यायप्रथमपादस्थज्योतिरधिकरणगतं सूत्रम्। अयमर्थः—"अथ यदतः परो दिवो ज्योतिः" इत्यत्र यच्छब्देन न पूर्वप्रकृतब्रह्म परामर्शार्हं पूर्वत्र छन्दोऽभिधानात् ब्रह्मणः अप्रकृतत्वात् इति चेन्न तथा गायत्रीवच्चतुष्पात्त्वगुणसामान्यात्। चेतो ब्रह्मणि समर्प्यते येन सः चेतोऽर्पणः गायत्रीशब्दः तेन ब्रह्मणः एवाभिधानात् न छन्दोऽभिधानमित्यर्थः। तेन न्यायेनात्र गायत्र्युपाधिकं ब्रह्मैव गायत्रीपदार्थः।

**यद्वै तत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे**
**हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥**
**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम् ॥ ५ ॥**
**तावानस्य महिमा ततो ज्यायाँश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥६॥**

पार्थिवत्वाच्छरीरस्य । कथं शरीरस्य गायत्रीत्वमिति । उच्यते—अस्मिन्हीमे प्राणा भूतशब्दवाच्याः प्रतिष्ठिताः । अतः पृथिवीवद्भूतशब्दवाच्यप्राणप्रतिष्ठानाच्छरीरं गायत्री । एतदेव यस्माच्छरीरं नातिशीयन्ते प्राणाः ॥ ३ ॥

यद्वै तत्पुरुषे शरीरं गायत्रीदं वाव तत् । यदिदमस्मिन्नन्तर्मध्ये पुरुषे हृदयं पुण्डरीकाख्यमेतद्गायत्री । कथमित्याह—अस्मिन्हीमे प्राणाः प्रतिष्ठिता अतः शरीरवद्गायत्री हृदयम् । एतदेव च नातिशीयन्ते प्राणाः । "प्राणो ह पिता । प्राणो माता ।" इति, "अहिंसन्सर्वभूतानि" इति च श्रुतेर्भूतशब्दवाच्याः प्राणाः ॥ ४ ॥

सैषा चतुष्पदा षडक्षरपदा छन्दोरूपा सती भवति गायत्री षड्विधा वाग्भूतपृथिवीशरीरहृदयप्राणरूपा सती षड्विधा भवति । वाक्प्राणयोरन्यार्थनिर्दिष्टयोरपि गायत्रीप्रकारत्वम् । अन्यथा षड्विधसंख्यापूरणानुपपत्तेः । तदेतस्मिन्नर्थे एतद्गायत्र्याख्यं ब्रह्म गायत्र्यनुगतं गायत्रीमुखेनोक्तमृचाऽपि मन्त्रेणाभ्यनूक्तं प्रकाशितम् ॥ ५ ॥

तावानस्य गायत्र्याख्यस्य ब्रह्मणः समस्तस्य महिमा विभूतिविस्तारः । यावांश्चतुष्पात्षड्विधश्च ब्रह्मणो विकारः पादो गायत्रीति व्याख्यातः । अतस्तस्माद्विकारलक्षणाद्गायत्र्याख्याद्वाचारम्भणमात्रात्ततो ज्यायान्महत्तरश्च परमार्थसत्यरूपोऽविकारः पूरुषः पुरुषः सर्वपूरणात्पुरि शयनाच्च । तस्यास्य पादः सर्वा सर्वाणि भूतानि तेजोबन्नादीनि सस्थावरजङ्गमानि । त्रिपात्त्रयः पादा अस्य सोऽयं त्रिपात् । त्रिपादमृतं पुरुषाख्यं समस्तस्य गायत्र्यात्मनो दिवि द्योतनवति स्वात्मन्यवस्थितमित्यर्थ इति । ६ ॥

### नरेन्द्रपुरीयं टिप्पणम्

ननु गायत्र्यास्सर्वभूतसम्बन्धसिद्धये वागुपदिष्टा, हृदयस्य च भूतसम्बन्धसिद्धये प्राणा उपदिष्टाः न गायत्रीप्रभेदत्वेन; कथं तत्प्रभेदत्वेन तयोर्व्याख्यानमित्याशङ्क्याह—वाक्प्राणयोरिति । वाक्यशेषानुसाराद्वाक्प्राणयोरपि गायत्रीभेदत्वं मन्तव्यमित्यर्थः ॥ ५ ॥

ज्यायस्त्वमेवोत्तरार्द्धेन स्फुटयति—तस्याश्चेति ॥ ६ ॥

### आनन्दगिरिटीका

शरीरयोरभेदे हेतुमाह—पार्थिवत्वादिति । इदानीं गायत्रीशरीरयोरेकत्वं प्रश्नपूर्वकं कथयति—कथमित्यादिना । प्राणानां शरीरे प्रतिष्ठितत्वं प्रकटयति—एतदेवेति ॥ ३ ॥

अथ गायत्र्या हृदयत्वमावेदयति—यद्वै तदिति । गायत्र्याश्चैकत्वं प्रश्नपूर्वकं विवृणोति—एतदित्यादिना । हृदये प्राणानां प्रतिष्ठितत्वं प्रकटयति—एतदेवेति । प्राणानां भूतशब्दवाच्यत्वे तत्सम्बन्धे सति भूतसम्बन्धाद्गायत्र्याः शरीरादिभावः सम्भवति तेषां भूतशब्दवाच्यत्वे तु किं मानमित्याशङ्क्याऽऽह—प्राणो हेति । अहिंसावाक्येऽपि प्राणपरं मारणं प्रतिषिध्यते तथाच भूतशब्दः (तत्र)प्रतीतिगोचरो भवत्येवेत्याह—भूतेति ॥ ४ ॥

आध्यानशेषत्वेन गायत्र्याश्चतुष्पात्त्वं दर्शयति—सैषेति । लक्षयित्वा तस्याः षड्विधत्वमनूद्य साधयति—षड्विधेति । गायत्रीहृदययोः सर्वभूतसम्बन्धसिद्ध्यर्थमुपदिष्टयोर्वाक्प्राणयोर्गायत्रीप्रभेदत्वेन कथं व्याख्यानमित्याशङ्क्याऽऽह—वाक्प्राणयोरिति । विधिपक्षे वाक्यशेषयोगात्तयोरपि गायत्रीभेदत्वमित्यर्थः । तदेतस्मिन्नर्थे वाग्भूतपृथिवीशरीरहृदयप्राणभेदात्षड्विधां गायत्रीमनुचिन्त्याजहल्लक्षणया तदवच्छिन्नब्रह्मत्वं तदनुचिन्तयेदिति तच्छेषत्वेनैव पूर्वोक्ते स्थिते सतीत्यर्थः ॥ ५ ॥

समस्तस्य पादविभागविशिष्टस्येति यावत् । विस्तारमेव विवृणोति—यावानिति । "वाचारम्भणं विकारो नामधेयमि"ति वाक्यशेषमाश्रित्य विशिनष्टि—वाचारम्भणमात्रादिति । परमार्थसत्यत्वे हेतुमाह—अविकार इति । तावानस्येत्यादि स्पष्टयति—तस्येति । आदिपदेन वायुराकाशश्चेत्युभयमुक्तम् । ततो ज्यायानित्यादि स्फुटयति—त्रिपादिति । समस्तस्य प्रपञ्चात्मकस्येत्यर्थः । श्रुतावितिशब्दो मन्त्रसमाप्त्यर्थः ॥ ६ ॥

**यद्वै तद्ब्रह्मेतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः ॥ ७ ॥**

**अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥**

**अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णमप्रवर्तिनीँ श्रियं लभते य एवं वेद ॥ ९ ॥**

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य द्वादशः खण्डः

यद्वै तत्त्रिपादमृतं गायत्रीमुखेनोक्तं ब्रह्मेतीदं वाव तदिदमेव। तद्योऽयं प्रसिद्धो बहिर्धा बहिः पुरुषादाकाशो भौतिको यो वै स बहिर्धा पुरुषादाकाश उक्तः ॥ ७ ॥

अयं वाव स योऽयमन्तः पुरुषे शरीर आकाशो यो वै सोऽन्तः पुरुष आकाशः ॥ ८ ॥

अयं वाव स योऽयमन्तर्हृदये हृदयपुण्डरीक आकाशः। कथमेकस्य सत आकाशस्य त्रिधा भेद इति। उच्यते—बाह्येन्द्रियविषये जागरितस्थाने नभसि दुःखबाहुल्यं दृश्यते। ततोऽन्तःशरीरे स्वप्नस्थानभूते मन्दतरं दुःखं भवति स्वप्नान्पश्यतः। हृदयस्थे पुनर्नभसि न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति। अतः सर्वदुःखनिवृत्तिरूपमाकाशं सुषुप्तस्थानम्। अतो युक्तमेकस्यापि त्रिधा भेदाव्याख्यानम्। बहिर्धा पुरुषादारभ्याऽऽकाशस्य हृदये सङ्कोचकरणं चेतःसमाधानस्थानस्तुतये। यथा "त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते। अर्धतस्तु कुरुक्षेत्रमर्धतस्तु पृथूदकम्" इति तद्वत्। तदेतद्धार्दाकाशाख्यं ब्रह्म पूर्णं सर्वगतं न हृदयमात्रपरिच्छिन्नमिति मन्तव्यम्। यद्यपि हृदयाकाशे चेतः समाधीयतेऽप्रवर्ति न कुतश्चित्क्वचित्प्रवर्तितुं शीलमस्येत्यप्रवर्ति तदनुच्छित्तिधर्मकम्। यथाऽन्यानि भूतानि परिच्छिन्नान्युच्छित्तिधर्मकाणि न तथा हार्दं नभः। पूर्णामप्रवर्तिनीमनुच्छेदात्मिकां श्रियं विभूतिं गुणफलं लभते दृष्टं य एवं यथोक्तं पूर्णाप्रवर्तिगुणं ब्रह्म वेद जानातीहैव जीवंस्तद्भावं प्रतिपद्यत इत्यर्थः ॥९॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य द्वादशः खण्डः

**नरेन्द्रपुरीयं टिप्पणम्**

यद्ब्रह्म गायत्र्यवच्छिन्नमुपास्यमुक्तं हृदयाकाशे तदुपास्यमिति दर्शयितुं बाह्याकाशाभेदक्रमेण हृदयाकाशमवतारयति—यद्वैतमित्यादिना ॥ ७-८ ॥

उपाधिभेदादेकस्याप्याकाशस्य त्रिविधत्वं कल्पितमित्याह—उच्यत इत्यादिना। स्तुत्यर्थत्वमुदाहरति—यथेति। कुरुक्षेत्रमर्द्धतः इत्यर्धस्थानीयं, पृथूदकं चार्धतः द्विदलयुगलमुन्मीलितमुभयं नितरां श्रेष्ठमित्यर्थः ॥ ९ ॥

इति श्रीमन्नरेन्द्रपुरीयटिप्पण्यां तृतीयाध्यायस्य द्वादशः खण्डः

**आनन्दगिरिटीका**

यद्ब्रह्म गायत्र्यवच्छिन्नमुपास्यमुक्तं हृदयाकाशे तद्ध्येयमिति वक्तुं क्रमेण हृदयाकाशमवतारयति—यद्वै तदित्यादिना ॥ ७ ॥

एकस्याऽऽकाशस्य कथं त्रैविध्यमुक्तमिति शङ्कते—कथमिति। औपाधिकत्रैविध्यमविरुद्धमिति परिहरति—उच्यत इति। बाह्येन्द्रियविषयत्वं तद्विषयशब्दाद्याश्रयत्वं स्वप्नस्थानभूते नभसीति सम्बन्धः। "न कञ्चने"त्यादिना निषेधद्वयेन पूर्वप्रकारमवस्थाद्वयं निषिध्यते। निषेधफलमाह—अत इति। सर्वदुःखं स्थूलं वासनामयं च तन्निवृत्त्या निरूप्यमाणं हृदयाकाशमित्यर्थः। औपाधिकत्रैविध्यमुपसंहरति—अत इति। तथाऽपि किमित्यनेन क्रमेणाऽऽकाशस्य सङ्कोचो हृदये क्रियते तत्राऽऽह—बहिर्धेति। स्थानस्तुतिमुदाहरणेन स्फुटयति—यथेति। अत्र कुरुक्षेत्रमर्धतोऽर्धस्थानीयं पृथूदकमपि तथेति द्विदलयुगलमिव तदुभयं लोकत्रयापेक्षया विशिष्टतरमित्यर्थः। हृदयाकाशे चेतः समाधीयते चेत्ततश्चात्र परिच्छिन्नं ब्रह्म प्राप्तमित्याशङ्क्याऽऽह—तदेतदिति। पूर्णत्वेन जन्मनाशशून्यत्वं सिध्यतीत्याह—अप्रवर्तीति। प्रधानफलत्वं व्यावर्तयति—गुणफलमिति। दृष्टफलवते स्वर्गाप्तिरिति दृष्टमित्युक्तम्। ज्ञानमेव विशिनष्टि—इहैवेति। वर्तमानो देहः सप्तम्यर्थः। यो विद्वानेवं स तथोक्तं फलं लभत इति सम्बन्धः ॥ ९ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य द्वादशः खण्डः

**तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

तस्य ह वा इत्यादिना गायत्र्याख्यस्य ब्रह्मण उपासनाङ्गत्वेन द्वारपालादिगुणविधानार्थमारभ्यते। यथा लोके द्वारपाला राज्ञ उपासनेन वशीकृता राजप्राप्त्यर्था भवन्ति तथेहापीति। तस्येति प्रकृतस्य हृदयस्येत्यर्थः। एतस्यानन्तरनिर्दिष्टस्य पञ्च पञ्चसंख्याका देवानां सुषयो देवसुषयः स्वर्गलोकप्राप्तिद्वारच्छिद्राणि देवैः प्राणादित्यादिभी रक्ष्यमाणानीत्यतो देवसुषयस्तस्य स्वर्गलोकभवनस्य हृदयस्यास्य यः प्राङ्सुषिः [1]पूर्वाभिमुखस्य प्राग्गतं यच्छिद्रं द्वारं स प्राणस्तत्स्थस्तेन द्वारेण यः सञ्चरति वायुविशेषः स प्रागनितीति प्राणः। तेनैव सम्बद्धमव्यतिरिक्तं तच्चक्षुस्तथैव स आदित्यः "आदित्यो ह वै बाह्यः प्राणः" इति श्रुतेश्चक्षूरूपप्रतिष्ठाक्रमेण हृदि स्थितः। "स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषि" इत्यादि हि वाजसनेयके। प्राणवायुदेवतैव ह्येका चक्षुरादित्यश्च सहाऽऽश्रयेण। वक्ष्यति च—प्राणाय स्वाहेति हुतं हविः सर्वमेतत्तर्पयतीति। तदेतत्प्राणाख्यं स्वर्गलोकद्वारपालत्वाद्ब्रह्म। स्वर्गलोकं प्रतिपित्सुस्तेजश्चैतच्चक्षुरादित्यस्वरूपेण, अन्नाद्यत्वाच्च सवितुस्तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यामुपासीत। ततस्तेजस्व्यन्नादश्चाऽऽमयावित्वरहितो भवति य एवं वेद तस्यैतद्गुणफलम्। उपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहेतुर्भवतीति मुख्यं च फलम् ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

पूर्वोपासनशेषमेवोत्तरं ज्ञानमिति प्रकरणाविच्छेदमाह—तस्य ह वा इत्यादिना। स्वर्गलोकेति सुखात्मकं हृदयाकाशस्थं ब्रह्मोच्यते। बाह्य आदित्यः कथं हृदयसम्बन्ध इत्यत आह—चक्षूरूपेति। आदित्योऽधिष्ठातृतया चक्षुषि प्रतिष्ठितश्चक्षुश्च ग्राहकतया रूपेषु प्रतिष्ठितं नीलपीतादिषु। तानि च वासनारूपेण हृदये प्रतिष्ठितानीति क्रमेणादित्यो हृदि स्थित इत्यर्थः। एकसूत्रात्माभेदादपि प्राणाभेदेन चक्षुरादित्ययोरनुचिन्तनं युक्तमित्याह—प्राणवायुदेवतेति। तदेतत्प्राणाख्यं ब्रह्म स्वर्गलोकप्रतिपित्सुः पुमानुपासीतेति सम्बन्धः ॥ १ ॥

आनन्दगिरिटीका

वक्ष्यमाणज्ञानस्य स्वातन्त्र्यं परिहृत्य प्रकरणभेदं व्यावर्तयितुमुत्तरग्रन्थस्य तात्पर्यमाह—तस्येति। द्वारपालादीत्यादिपदेन तद्गतो विशेषो गृह्यते। ब्रह्मण्युपासनेनाप्रसिद्धितो द्वारपालोपास्तिरयुक्तेत्याशङ्क्याऽऽह—यथेति। इति तदुपास्तिरर्थवतीति शेषः। स्वर्गलोकशब्दः परमात्मविषयः "स्वर्गं लोकमित ऊर्ध्वं विमुक्ता" इति श्रुत्यन्तरात्। देवसुषित्वं साधयति—देवैरिति। स्वर्गलोकस्य परमात्मनो भवनमायतनं तस्येति यावत्। प्राक्त्वेऽनवस्थामाशङ्क्योक्तं पूर्वाभिमुखस्येति—तत्स्थस्तेनेति। तच्छब्दो हृदयविषयः—तेनैवेति। प्राणविषयस्तच्छब्दः। तदव्यतिरिक्तत्वं स्वातन्त्र्येण चक्षुषोऽकिञ्चित्करत्वम्। न हि चक्षुषा प्राणस्य सम्बन्धो न हि बाह्यस्य तत्सम्बन्धे निबन्धनमस्ति तत्राऽऽह —चक्षुरिति। अधिष्ठातृत्वेनाऽऽदित्यश्चक्षुषि प्रतिष्ठितश्चक्षुश्च ग्राहकतया रूपे प्रतिष्ठितं रूपदर्शने करणीभवति। तथैव प्राणस्य चक्षुष्ट्वमित्यर्थः। प्राणादित्ययोरैक्ये प्रमाणमाह—आदित्यो हेति। कथं यथोक्तस्याऽऽदित्यस्य हृदयसुषिद्वारस्थानत्वं ? वासनात्मना हृदये रूपाणि प्रतिष्ठितानि तदनेन क्रमेण आदित्यो हृदये प्रतितिष्ठतीत्यर्थः। तत्र श्रुत्यन्तरं प्रमाणयति—स आदित्य इति। एकदेवताऽभिन्नत्वादपि प्राणाभेदेन चक्षुरादित्ययोराध्यानं युक्तमित्याह—प्राणेति। आश्रयशब्देन रूपाणि हृदयं चोच्यते द्युलोको वा। आदित्यश्चक्षुषो-देवस्तदधिष्ठितस्य सर्वस्य प्राणात्मत्वे वाक्यशेषमनुकूलयति—वक्ष्यति चेति। न हि प्राणे तृप्यति सर्वस्य तृप्तिस्तादात्म्यमन्तरेण सम्भवतीति भावः। तदेतत्प्राणारूपं ब्रह्म स्वर्गलोकं प्रतिपित्सुः सन्पुरुषस्तेजोऽन्नाद्यमित्याभ्यां गुणाभ्यां विशिष्टमुपासीतेति सम्बन्धः। किमिति यथोक्तोऽधिकारी प्राणोपासने नियुज्यते तत्राऽऽह—स्वर्गेति। तथाऽपि कथं यथोक्तगुणद्वयवैशिष्ट्यं प्राणाख्यस्य ब्रह्मणः सिध्यति तत्र तेजःशब्दं व्याकुर्वन्नाह -तेजस्वीति। एतत्प्राणाख्यं ब्रह्मोभयरूपेण तेजस्वी। तथाच तेजोगुणविशिष्टतया तदुपासनामर्हति। सवितुश्चान्नदत्वं वृष्टिद्वारेण

---

१. अनवस्थामाशङ्क्य या कापि सुषिः प्राक् सुषिः स्यात् दक्षिणाभिमुखस्य दक्षिण एव प्राक् सुषिः इत्येवं अव्यवस्थाप्राप्तौ तन्निराकरणाय पूर्वाभिमुखस्येति विशेषणमित्यर्थः।

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रँ स चन्द्रमास्त-
देतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥ २ ॥
अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक्सोऽग्निस्तदेतद्ब्रह्मवर्च-
समन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥ ३ ॥

अथ योऽस्य दक्षिणः सुषिस्तत्स्थो वायुविशेषः स वीर्यवत्कर्म कुर्वन्विगृह्य वा प्राणापानौ, नाना वाऽनितीति व्यानस्तत्सम्बद्धमेव च तच्छ्रोत्रमिन्द्रियं तथा स चन्द्रमाः । "श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च"ति श्रुतेः । सहाश्रयौ पूर्ववत्तदेतच्छ्रीः विभूतिः श्रोत्रचन्द्रमसोर्ज्ञानान्नहेतुत्वमतस्ताभ्यां श्रीत्वम् । ज्ञानान्नवतश्च यशः ख्यातिर्भवतीति यशोहेतुत्वाद्यशस्त्वमतस्ताभ्यां गुणाभ्यामुपासीतेत्यादि समानम् ॥ २ ॥

अथ योऽस्य प्रत्यङ्सुषिः पश्चिमस्तत्स्थो वायुविशेषः स मूत्रपुरीषाद्यपनयन्नधोऽनितीत्यपानः सा तथा वाक् । तत्सम्बन्धात्तथाऽग्निस्तदेतद्ब्रह्मवर्चसं, वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । अग्निसम्बन्धाद्वृत्त-स्वाध्यायस्य । अन्नग्रसनहेतुत्वादपानस्यान्नाद्यत्वम् । समानमन्यत् ॥ ३ ॥

नरेन्द्रपुरीयं टिप्पणम्

नानावेति । स्कन्धसन्धिमर्मसु विविधमनिति चेष्टत इत्यर्थः । आध्यात्मिकस्य प्राणस्यैकैका वृत्तिरेकैकं करणं बाह्या चैकैका देवतेत्येतत्त्रयं प्रतिच्छिद्रं सम्बन्धमनुचिन्तनीयम् । सम्बन्धश्च श्रुत्युक्तत्वादेव यथाकथञ्चिदुपासनार्थो ग्राह्यः । श्रुत्यन्तरानुसारादपि ग्राह्य इत्याह—**श्रोत्रेण सृष्टा इति** । विराजः श्रोत्ररूपेण सृष्टा इत्यर्थः । ततश्च लावण्यात्कीर्तिसम्भवाल्लावण्यस्य च समानकार्यत्वात्समानः कीर्तिगुण इत्यर्थः ॥ २-४ ॥

आनन्दगिरिटीका

"आदित्याज्जायते वृष्टिः" इत्यादौ दृष्टम् । अतश्चान्नं च तदाद्यं चेति गुणान्तरविशिष्टत्वेनापि सवितृरूपं प्राणाख्यं ब्रह्म ध्यानार्हमित्यर्थः । किं तर्हि मुख्यं फलमिति तदाह—**उपासनेनेति** ॥ १ ॥

हृदयस्य पूर्वदिगवस्थितच्छिद्रसम्बन्धित्वेन प्राणमुक्त्वा व्यानः श्रोत्रं चन्द्रमाश्चेति त्रितयमितरसम्बन्ध-मुपास्यमित्याह—**अथेति** । वीर्यवत्कर्म कुर्वन्ननितीति सम्बन्धः । प्राणापानौ विगृह्य विरुध्य वाऽयमनितीति पक्षान्तरं नानास्कन्धसन्धिमर्मसु विविधमनिति चेष्टत इति विकल्पान्तरं तेन व्यानेन सम्बन्धः श्रोत्रस्य श्रुत्युक्तत्वाद्-ध्यानार्थो मन्तव्यः । यथा श्रोत्रस्य व्यानेन सम्बन्धस्तथा चन्द्रमसोऽपि तेन सम्बन्धस्य श्रुत्युक्तत्वादेव ध्यानार्थतया ग्राह्य इत्याह -**तथेति** । श्रोत्रचन्द्रमसोः सम्बन्धे श्रुत्यन्तरमनुकूलयति —**श्रोत्रेणेति** । यद्विराजः श्रोत्रं तदात्मना दिशश्चन्द्रमाश्चेत्येते सृष्टा इति श्रुतेरित्यर्थः । मिथः सम्बन्धेऽपि कथमनयोर्व्यानात्मत्वं ? व्याने तृप्यतीत्यादिवाक्य-शेषादवधेयमित्यर्थः । तदेतद्व्यानाख्यं ब्रह्म श्रीश्च यशश्चेत्याभ्यां गुणाभ्यामुपासीतेति सम्बन्धः । कथं तस्य गुणद्वयवतो ध्यानमित्याशङ्क्य श्रोत्रस्य ज्ञानहेतुत्वाच्चन्द्रमसोऽन्नहेतुत्वात्तयोराश्रयत्वेन तदात्मनो व्यानस्यापि तद्गुणत्वोपपत्तिरित्याह—**श्रोत्रेति** । व्यानाख्ये ब्रह्मणि गुणान्तरं साधयति—**ज्ञानेति** । उक्तस्य ब्रह्मणो गुणद्वय-सम्भवोऽतःशब्दार्थः । श्रीमानित्यादिफलवाक्यमादिशब्दार्थः । समानं तेजस्वीत्यादिवाक्येनेति शेषः ॥ २ ॥

हृदयस्य पश्चिमदिगवस्थितसुषिसम्बन्धित्वेनापानो वागग्निश्चेति त्रितयमन्योन्यसम्बन्धं ध्येयमित्याह—**अथ योऽस्येति** । सोऽपान इत्यस्यार्थमाह—**तत्स्थ इति**। सोऽपान इति सम्बन्धः। अपानशब्दं वायुविशेषे व्युत्पादयति—**मूत्रेति** । आदिशब्देन शुक्रादि गृह्यते । यथा चक्षुषः श्रोत्रस्य प्राणत्वं व्यानत्वं चोक्तं तथा वागपानो भवत्यपाने तृप्यतीत्यादिश्रुतेरित्याह—**सा तथेति** । यथा चक्षुरादिद्वारेणाऽऽदित्यादेः प्राणादिरूपत्वमुक्तं तथा वाचोऽधिष्ठातृत्वेन सम्बन्धादग्निस्तद्द्वारेणापानो भवतीत्याह—**तत्सम्बन्धादिति** । तदेतदपानाख्यं ब्रह्मवर्चसमन्नाद्यमित्याभ्यां गुणाभ्यां विशिष्टमुपासीतेति सम्बन्धः । ब्रह्मवर्चसं व्याचष्टे—**वृत्तेति** । कथमपानाख्ये ब्रह्मणि यथोक्तो गुणः सिध्यतीत्या-शङ्क्याग्निद्वारेत्याह—**अग्निसम्बन्धादिति** । तथाऽपि कथमन्नाद्यत्वमित्याशङ्क्यापानद्वारेणेत्याह—**अन्नेति** । ब्रह्मवर्च-सीत्यादिफलवाक्यं श्रीमानित्यादिना तुल्यार्थत्वान्न व्याख्यानापेक्षमित्याह—**समानमिति** ॥ ३ ॥

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान्व्युष्टिमान्भवति य एवं वेद ॥ ४ ॥
अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ॥ ५ ॥
ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥

अथ योऽस्योदङ्सुषिरुदग्गतः सुषिस्तत्स्थो वायुविशेषः सोऽशितपीते समं नयतीति समानः। तत्सम्बद्धं मनोऽन्तःकरणं स पर्जन्यो वृष्ट्यात्मको देवः पर्जन्यनिमित्ताश्चाऽऽप इति। "मनसा सृष्टा आपश्च वरुणश्च" इति श्रुतेः। तदेतत्कीर्तिश्च। मनसो ज्ञानस्य कीर्तिहेतुत्वात्। आत्मपरोक्षं विश्रुतत्वं कीर्तिः। यशः स्वकरणसंवेद्यं विश्रुतत्वम्। व्युष्टिः कान्तिर्देहगतं लावण्यम्। ततश्च कीर्तिसम्भवात्कीर्तिश्चेति। समानमन्यत् ॥ ४ ॥

अथ योऽस्योर्ध्वः सुषिः स उदान आ पादतलादारभ्योर्ध्वमुत्क्रमणादुत्कर्षार्थं च कर्म कुर्वन्ननितीत्युदानः स वायुस्तदाधारश्चाऽऽकाशस्तदेतद्वाय्वाकाशयोरोजोहेतुत्वादोजो बलं महत्वाच्च मह इति। समानमन्यत् ॥ ५ ॥

ते वा एते यथोक्ताः पञ्चसुषिसम्बन्धात्पञ्च ब्रह्मणो हार्दस्य पुरुषा राजपुरुषा इव द्वारस्थाः स्वर्गस्य हार्दस्य लोकस्य द्वारपा द्वारपालाः। एतैर्हि चक्षुःश्रोत्रवाङ्मनःप्राणैर्बहिर्मुखप्रवृत्तैर्ब्रह्मणो हार्दस्य प्राप्तिद्वाराणि निरुद्धानि। प्रत्यक्षं ह्येतदजितकरणतया बाह्यविषयासङ्गानृतप्ररूढत्वान्न हार्दे ब्रह्मणि मनस्तिष्ठति। तस्मात्सत्य-

नरेन्द्रपुरीयं टिप्पणम्

उदानस्य च पादतलादारभ्य मूर्धदेशपर्यन्तं धर्मः वृत्तिरिति पादेन्द्रियसम्बन्धः ॥ ५ ॥

उक्तध्येयानुवादेन सफलध्यानविधिं दर्शयति—ते वा एत इत्यादिना। ननु राज्ञो द्वारपालाः पुरप्रवेश-

आनन्दगिरिटीका

हृदयस्योत्तरसुषिसम्बन्धत्वेन समानो मनः पर्जन्यश्चेति त्रितयं परस्परसम्बद्धमुपास्यमित्याह—अथेति। समान इति सम्बन्धः। समानशब्दं वायुविशेषे व्युत्पादयति—अशितेति। मनसः समानेन सम्बन्धः समाने तृप्यतीत्यादिश्रुतेर्ग्राह्य इत्याह—तत्सम्बद्धमिति। मनसि तृप्यति पर्जन्यस्तृप्यतीति वाक्यशेषमाश्रित्य तयोः सम्बन्धमाह—पर्जन्य इति। श्रुत्यन्तरादपि तयोः सम्बन्धं वक्तुं पातनिकामाह—पर्जन्येति। शेषः प्रसिद्धिपरामर्शार्थः। तथाऽपि कथं पर्जन्यमनसोः सम्बन्धसिद्धिरित्याशङ्क्य वायोरपि कारणत्वेनाद्भिः सम्बन्धात्तद्द्वारा मिथोऽपि तत्सिद्धिरित्याह—मनसेति। तदेतत्समानाख्यं ब्रह्म कीर्तिश्च व्युष्टिश्चेत्याभ्यां गुणाभ्यामुपासीतेति सम्बन्धः। तस्मिन्ब्रह्मणि कीर्तिरूपं गुणं साधयति—मनस इति। व्युष्टेरर्थान्तरत्वं कीर्तेर्दर्शयति—आत्मेति। ततो व्युष्टेराचष्टे—स्वकरणेति। तामेवानुभवारूढतया कथयति—कान्तिरिति। कथं पुनर्देहगतस्य लावण्यस्य कीर्तितास्तवः शक्यते तत्राऽऽह—ततश्चेति। लावण्यं पञ्चम्यर्थः। इत्यसङ्कीर्णगुणद्वयविशिष्टमुपासनं सिद्धमित्यर्थः। कीर्तिमानित्यादिफलवाक्यस्य ब्रह्मवर्चसीत्यादिना तुल्यार्थत्वादव्याख्येयत्वमाह—समानमिति ॥ ४ ॥

हृदयस्योर्ध्वच्छिद्रवैशिष्ट्येनोदानो वायुराकाशश्चेति त्रितयमन्योन्यसम्बन्धमुपास्यमित्याह—अथ योऽस्येति। उत्क्रमणादुदान इति सम्बन्धः। उदाने तृप्यति वायुस्तृप्यतीति वाक्यशेषमाश्रित्याऽऽह—स वायुरिति। वायोराकाशत्वमाधाराधेयसम्बन्धाद्वायौ तृप्यत्याकाशस्तृप्यतीति श्रुतेश्चेत्याह—तदाधारश्चेति। तदेतदुदानाख्यं ब्रह्म पूर्ववदोजो महश्चेत्याभ्यां विशिष्टमुपासीतेति सम्बन्धः। उक्तगुणद्वयं निर्दिशति—वाय्वाकाशयोरिति। ओजस्वीत्यादिवाक्यस्य कीर्तिमानित्यादिना तुल्यार्थत्वमाह—समानमिति ॥ ५ ॥

तस्य ह वा एतस्येत्यादिनोक्तमनुवदति—ते वा इति। कथं ब्रह्मपुरुषास्तत्राऽऽह—राजपुरुषा इति। व्यपदिश्यन्त इत्यर्थः। तेषां द्वारपालत्वं प्रपञ्चयति—एतैरिति। तत्र स्वानुभवं प्रमाणयति—प्रत्यक्षं हीति।

¹अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे सँस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ७ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य त्रयोदशः खण्डः

मुक्तमेते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा इति । अतः स य एतानेवं यथोक्तगुणविशिष्टान्स्वर्गस्य लोकस्य द्वारपान्वेदोपास्त उपासनया वशीकरोति स राजद्वारपालानिवोपासनेन वशीकृत्य तैरनिवारितः प्रतिपद्यते स्वर्गं लोकं राजानमिव हार्दं ब्रह्म । किञ्चास्य विदुषः कुले वीरः पुत्रो जायते वीरपुरुषसेवनात् । तस्य चर्णापाकरणेन ब्रह्मोपासनप्रवृत्तिहेतुत्वम् । ततश्च स्वर्गलोकप्रतिपत्तये पारम्पर्येण भवतीति स्वर्गलोकप्रतिपत्तिरेवैकं फलम् ॥ ६ ॥

अथ यदसौ विद्वान्स्वर्गं लोकं वीरपुरुषसेवनात्प्रतिपद्यते । यच्चोक्तं "त्रिपादस्यामृतं दिवी"ति तदिदं लिङ्गेन

नरेन्द्रपुरीयं टिप्पणम्

निरोधकाः प्राणाश्च न तथा कथं तेषु द्वारपालशब्दप्रयोगः ? तत्राह—एतैर्हीति । वीराणां वीर्यवतामादित्यादीनां पुरुषाणां सेवनाद्वीरः पुत्रो जायत इत्युक्तम् । तत्तु न साक्षाद्विद्याफलमित्याह—तस्य चेति ॥ ६ ॥

अथशब्दो विद्यान्तरोपक्रमार्थः । यद्दीप्यते पुरस्ताद्दीप्यमानं ब्रह्म तत्कौक्षेये ज्योतिषि प्रतीक अध्यस्य दृष्टत्वश्रुतत्वाभ्यामुपासितव्यमिति हि मुख्योऽर्थः प्रतीयते । भाष्यकारस्त्वार्थिकमर्थमादाय तात्पर्यार्थमाह—यदसौ

आनन्दगिरिटीका

विवेकवैराग्याभ्यां वशीकृतश्रोत्रादिकरणग्रामोपेतत्वाभावात्परोक्षशब्दादिविषय आसङ्गरूपानृताक्रान्तत्वादित्यर्थः । एतैरेव विषयविमुखैर्ब्रह्मप्राप्तिद्वाराणि समाध्यादिना विवृतानीत्यभिप्रेत्योपसंहरति—तस्मादिति । ब्रह्मपुरुषानुक्ताननूद्य सफलमुपासनं दर्शयति—अत इति । अनियतानां चक्षुरादीनां ब्रह्मप्राप्तिप्रतिबन्धकत्वं नियतानां तु तत्प्राप्तिहेतुत्वमित्यतःशब्दार्थः । यथोक्तगुणविशिष्टत्वं चक्षुरादीनामादित्याद्यात्मकत्वम् । अदृष्टं फलमुक्त्वा दृष्टं फलमाह—किञ्चेति । यथोक्तपुत्रोत्पत्तिर्विवक्षितब्रह्मप्राप्तावनुपयुक्तेत्याशङ्क्याऽऽह—तस्य चेति । पुत्रस्य ध्यानानुसारित्वं हेतुत्वं ततःशब्दार्थः । पारम्पर्येणोपासनाद्वारेणेति यावत् । पुत्रस्य ध्यानद्वारा ब्रह्मप्राप्तिहेतुत्वे फलितमाह—इति स्वर्गेति ॥ ६ ॥

गायत्र्युपाधिकं ब्रह्मोपास्यं तादर्थ्येन द्वारपालोपास्तिश्च कर्तव्या । ततश्चाङ्गेषु श्रुतानि फलानि समुच्चित्य प्रधानोपासनादेव ब्रह्मप्राप्तिरित्युक्तम् । इदानीं विद्यान्तरं प्रस्तौति—अथेति । परस्ताद्दिवो दीप्यमानं ब्रह्म कौक्षेये ज्योतिषि प्रतीकेऽध्यस्य दृष्टत्वश्रुतत्वाभ्यामुपासितव्यमिति श्रौतमर्थं सिद्धवत्कृत्वाऽऽर्थिकमर्थमादाय तात्पर्यमाह—यदसौ

---

१. "अथ यदतः पर" इति वाक्यमधिकृत्य ब्रह्मसूत्रप्रथमाध्यायप्रथमपादे दशमाधिकरणे विचारितम्—इदं वाक्यं भौतिकज्योतिषो ध्यानविधायकं वा ब्रह्मोपासनपरं वेति संशयः अत्र कौक्षेयज्योतिषि अध्यस्यमानं ज्योतिः भौतिकज्योतिरेव न ब्रह्म दीप्यत इति आगन्तुकदीप्तिश्रवणात्, आरोपस्य साजात्यापेक्षत्वेन भौतिकस्यैव कौक्षेयज्योतिस्साजात्यात् "चक्षुष्यः श्रुतो भवति" इत्यल्पफलश्रवणात् । पूर्ववाक्यस्य "त्रिपादस्यामृतं दिवि" इत्यस्य दिवि इति भिन्नविभक्तिकत्वेनानियामकत्वात् इति प्राप्ते ब्रूमः—पूर्वत्र "पादोऽस्य सर्वाभूतानीति वाक्ये ब्रह्मणः प्रकृतत्वात् तस्यैव "यदतः" इत्यत्रत्ययच्छब्देन परामर्शात् ज्योतिरत्र ब्रह्मैव । अल्पफलादिकं ब्रह्मण्यपि नेतुं शक्यम् । दिवि दिव च इति चोभयमपि ब्रह्मणि अवस्थाभेदमाश्रित्य नेयम् । यथा वृक्षाग्रे श्येनः वृक्षाग्रात्परतः श्येन इति पूर्वत्र च छन्दोमात्रस्य सर्वात्मकत्वासम्भवात् गायत्र्यवच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति न ब्रह्मणः अप्रकृतत्वमिति । दीप्यमानत्वं च कार्यज्योतिषि मुख्यं तत्राध्यस्यमानब्रह्मणि लक्षणया प्रयुक्तम् । सारूप्यं चाध्यासे नावश्यकं "नाम ब्रह्मेत्युपासीत" इत्यादौ व्यभिचारात् ।

चक्षुःश्रोत्रेन्द्रियगोचरमापादयितव्यम्, यथाऽग्न्यादि धूमादिलिङ्गेन। तथा ह्येवमेवेदमिति यथोक्तेऽर्थे दृढा प्रतीतिः स्यात्। अनन्यत्वेन च निश्चय इति। अत आह—यदतोऽमुष्माद्दिवो द्युलोकात्परः परमिति लिङ्गव्यत्ययेन। ज्योतिर्दीप्यते। स्वयंप्रभं सदाप्रकाशत्वाद्दीप्यत इव दीप्यत इत्युच्यते। अग्न्यादिवज्ज्वलनलक्षणाया दीप्तेरसम्भवात्। [1]विश्वतः पृष्ठेष्वित्येतस्य व्याख्यानं सर्वतः पृष्ठेष्विति। संसारादुपरीत्यर्थः। संसार एव हि सर्वः। असंसारिण एकत्वान्निर्भेदत्वाच्च। अनुत्तमेषु तत्पुरुषसमासाशङ्कानिवृत्तय आहोत्तमेषु लोकेष्विति सत्यलोकादिषु हिरण्यगर्भादि-कार्यस्थपरस्येश्वरस्याऽऽसन्नत्वादुच्यत उत्तमेषु लोकेष्विति। इदं वावेदमेव तद्यदिदमस्मिन्पुरुषेऽन्तर्मध्ये ज्योतिश्चक्षुः-श्रोत्रग्राह्येण लिङ्गेनौष्णिम्ना शब्देन चावगम्यते। यत्त्वचा स्पर्शरूपेण गृह्यते तच्चक्षुष्यैव। दृढप्रतीतिकरत्वात्त्वचः। अविनाभूतत्वाच्च रूपस्पर्शयोः।

## नरेन्द्रपुरीयं टिप्पणम्

विद्वानित्यादिना। चक्षुः श्रोत्रेन्द्रियगोचरमिति। दृष्टं श्रुतं मयेत्यापादयितव्यं लिङ्गद्वारेण मन्ददृष्टिं प्रति। यथा विप्रतिपन्नं प्रति धूमादिलिङ्गेनाग्न्यादि प्रत्याय्यत इत्यर्थः। कौक्षेयस्य ज्योतिषो जीवसन्निकर्षाज्जीवाभेदं परिकल्प्य कौक्षेयज्योतिर्ब्रह्मेत्यभेदप्रतिपत्तौ जीवब्रह्मणोरनन्यत्वेन निश्चयोऽर्थात्सिध्यतीत्यर्थः। ननु सर्वशब्दस्यासङ्कुचित-वृत्तित्वादात्मापि तेन संगृहीतः। कथं ततः ऊर्ध्वं ब्रह्मेति सङ्गच्छते तत्राह—संसार एव हीति। सर्वशब्दस्यानेकार्थ-वाचकत्वादात्मनश्चैकत्वान्न मुखतस्सर्वशब्दात् प्रतीतिरित्यर्थः। न उत्तमा अनुत्तमेति तत्पुरुषसमासशङ्कानिवृत्तये बहुव्रीहिसमाससिद्धिरर्थात्। आसन्नत्वादिति। नित्याभिव्यक्तत्वादित्यर्थः। चक्षुष्यो भवतीति फलवचनानुसारेण

## आनन्दगिरिटीका

विद्वानिति। वीराणां वीर्यवतामादित्यादीनां पुरुषाणां सेवनादाध्यानादिति यावत्। लिङ्गेन स्पर्शविशेषेण श्रवणविशेषेण चेत्यर्थः—चक्षुःश्रोत्रेन्द्रियगोचरमिति। मन्ददृष्टिं प्रति दृष्टं श्रुतं च मयेत्यापादयितव्यम्। अन्यथा दृष्टत्वश्रुतत्वाभ्यां ब्रह्मणि ध्यानासिद्धेरित्यर्थः। परस्याप्रतिपत्तौ लिङ्गेन प्रत्यायने दृष्टान्तमाह—यथेति। विप्रतिपन्नं प्रति धूमादि-लिङ्गेनाग्न्यादि प्रत्याय्यते तथा स्पर्शादिलिङ्गेन दृष्टत्वादिविशिष्टमिदं प्रत्येतव्यमित्यर्थः। यथोक्तस्य ज्योतिषो लिङ्गेन प्रत्यायनं किमिति क्रियते तत्राऽऽह—तथा हीति। लिङ्गद्वारा तस्य प्रत्यायने सति गुणद्वयविशिष्टमेवेदं ज्योति-र्नान्यथेत्येवं यथोक्ते परस्मिन्नुपास्यज्योतिषि दृढा धीः स्यात्। तदभावात्तद्गुणस्य ज्योतिषोऽध्यानादित्यर्थः। मा भूत्परस्य ज्योतिषो यथोक्तगुणस्याशेषोपासनमित्याशङ्क्याऽऽह—अनन्यत्वेनेति। कौक्षेयस्य ज्योतिषः सन्निकर्षा-ज्जीवाभेदं परिकल्प्य जाठरं ज्योतिर्ब्रह्मेत्यनन्यत्वेन ध्याने जीवब्रह्मणोरेकतया निश्चयश्चार्थात्सिध्यति। अतो यथोक्तोपास्तिरर्थवतीत्यर्थः। अथशब्दस्य विद्यान्तरारम्भार्थत्वमभ्युपेत्यानन्तरग्रन्थस्य तात्पर्यमुक्त्वाऽवशिष्टान्यक्ष-राण्यवतार्य व्याकरोति—अत आहेत्यादिना। यदित्युपक्रम्य ज्योतिरित्युपसंहारात्पर इति पुंलिङ्गप्रयोग-माशङ्क्याऽऽह—परमिति। कादाचित्कप्रकाशत्वाभावात्कथं दीप्यत इति प्रयोगस्तत्राऽऽह—स्वयंप्रभमिति। कस्मादि-वेति प्रयुज्यते मुख्यमेव दीप्यमानत्वं किं न स्यादित्याशङ्क्याऽऽह—अग्न्यादीति। हेतोरुभयत्र सम्बन्धः।

सर्वशब्दस्यासङ्कुचितवर्तित्वादात्मनोऽपि तेन संगृहीतत्वात्कथं तस्मादूर्ध्वं ब्रह्मेत्युपपन्नमित्याशङ्क्याऽऽह—संसारादिति। तस्यैव सर्वशब्दवाच्यत्वमुपपादयति—संसार एव हीति। तस्यानेकत्वेन सर्वशब्दार्हत्वादित्यर्थः। आत्मनि सर्वशब्दानुपपत्तिमाह—असंसारिण इति। सर्वशब्दस्यानेकार्थवाचित्वादात्मनि चैकत्वात्प्रकारभेदस्य च नित्यमुक्ते तस्मिन्नसम्भवान्न तस्य सर्वशब्दात्प्रतीतिरित्यर्थः। उत्तमा न भवन्तीत्यनुत्तमास्तेष्विति तत्पुरुषाशङ्कायां तन्निवृत्तिद्वारा बहुव्रीहिसिद्ध्यर्थं विशेषणमित्याह—तत्पुरुषेति। किमिति तेषु परब्रह्म निर्दिश्यते तस्य सर्वगतत्वादित्या-शङ्क्याऽऽह—हिरण्यगर्भादीति। तत्कार्यात्मना स्थितं परं ब्रह्मोत्तमेषु लोकेष्वित्युच्यते। तस्य सर्वत्र सतोऽपि सत्यलोकादिषु हिरण्यगर्भाद्यात्मनाऽतिशयेन नित्याभिव्यक्तत्वादित्यर्थः। यदिति सर्वनाम्ना प्रकृतं ब्रह्म परामृश्यते तस्योपास्यत्वार्थं संसारादुपरिष्टादवस्थानमुक्तम्। इदानीं कौक्षेये ज्योतिषि तदारोपयति—इदमिति। कौक्षेये ज्योतिषि प्रतीके प्रमाणं दर्शयि—चक्षुरिति। चक्षुष्यो भवतीतिफलवचनानुसारेण स्पर्शरूपैक्यमाध्यासिक-मादायोष्णिम्नश्चाक्षुषत्वं द्रष्टव्यम्। रूपस्पर्शयोरैक्याध्यासं स्फुटयति—यत्त्वचेति। यदुष्णं तेजो द्रव्यात्मकं त्वगिन्द्रियेण स्पर्शरूपेण गृह्यते तच्चक्षुषैव गृह्यते तत्र हेतुमाह—दृढेति। त्वचो दृढायां प्रतीतौ हेतुत्वाच्चक्षुषा

१. विश्वतः पृष्ठेषु—इत्यत्र विश्वशब्दस्य सङ्कुचितवृत्तित्वमाशङ्क्य सर्वत इत्युक्तम्।

कथं पुनस्तस्य ज्योतिषो लिङ्गं त्वग्दृष्टिगोचरत्वमापद्यत इति, आह—यत्र यस्मिन्काले। एतदिति क्रियाविशेषणम्। अस्मिञ्शरीरे हस्तेनाऽऽलभ्य संस्पर्शेनोष्णिमानं रूपसहभाविनमुष्णस्पर्शभावं विजानाति। स ह्यूष्णिमा नामरूपव्याकरणाय देहमनुप्रविष्टस्य चैतन्यात्मज्योतिषो लिङ्गमव्यभिचारात्। न हि जीवन्तमात्मानमूष्णिमा व्यभिचरति "उष्ण एव जीविष्यञ्शीतो मरिष्यन्नि"ति हि विज्ञायते। मरणकाले च तेजः परस्यां देवतायामिति परेणाविभागत्वोपगमात्। अतोऽसाधारणं लिङ्गमौष्ण्यमग्नेरिव धूमः। अतस्तस्य परस्यैषा दृष्टिः साक्षादिव दर्शनं दर्शनोपाय इत्यर्थः।

तथा तस्य ज्योतिष एषा श्रुतिः श्रवणंश्रवणोपायोऽप्युच्यमानः। यत्र यदा पुरुषो ज्योतिषो लिङ्गं शुश्रूषति श्रोतुमिच्छति तदैतत्कर्णावपिगृह्यैतच्छब्दः क्रियाविशेषणम्। अपिगृह्यापिधायेत्यर्थोऽङ्गुलिभ्यां प्रोर्णुत्य निनदमिव रथस्येव घोषो निनदस्तमिव शृणोति नदथुरिव ऋषभकूजितमिव शब्दो यथा चाग्नेर्बहिर्ज्वलत एवं शब्दमन्तःशरीर उपशृणोति तदेतज्ज्योतिर्दृष्टश्रुतलिङ्गत्वाद्दृष्टं च श्रुतं चेत्युपासीत। तथोपासनाच्चक्षुष्यो दर्शनीयः श्रुतो विश्रुतश्च। यत्स्पर्शगुणोपासननिमित्तं फलं तद्रूपे सम्पादयति चक्षुष्य इति। रूपस्पर्शयोः सहभावित्वात्। इष्टत्वाच्च दर्शनीयतायाः। एवं च विद्यायाः फलमुपपन्नं स्यान्न तु मृदुत्वादिस्पर्शवत्त्वे। य एवं यथोक्तौ गुणौ वेद। स्वर्गलोकप्रतिपत्तिस्तूक्तमदृष्टं फलम्। द्विरभ्यास आदरार्थः॥ ७॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य त्रयोदशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

स्पर्शस्य रूपैक्यमाध्यासिकमादायोष्णिम्नश्चाक्षुषत्वमुक्तम्। रूपस्पर्शयोरैक्याध्यासं स्फुटयति—यदुष्णत्वं तेजोद्रव्यात्मकं त्वगिन्द्रियेण स्पर्शरूपेण गृह्यते तच्चक्षुषैव गृह्यते। रूपतादात्म्यापन्नद्रव्याभेदादुष्णत्वस्येत्यर्थः। किञ्च

आनन्दगिरिटीका

तादात्म्यारोपादित्यर्थः। यद्रूपवद्भवति तत्स्पर्शवदिति नियमाच्च रूपस्पर्शयोस्तादात्म्याध्यासात्तस्य चाक्षुषत्वसिद्धिरित्याह—अविनाभूतत्वाच्चेति।

शब्दो यस्य ज्योतिषो लिङ्गमौष्ण्यं तस्य त्वगिन्द्रियग्राह्यस्य चाक्षुषत्वमुपपादयितुं पृच्छति—कथमिति। तस्यैषा दृष्टिरित्यादिवाक्येनोत्तरं दर्शयन्यत्रेत्यादि व्याकरोति—आहेत्यादिना। यथैतद्विज्ञानं स्यात्तथेति विज्ञानक्रियायां विशेषणमेतदिति पदमित्यर्थः। संस्पर्शेनोष्णिमानं विजानाति चेत्कथं तर्हि तस्य चाक्षुषत्वमित्याशङ्क्याऽऽह—रूपसहभाविनमिति। भवत्वौपचारिकमौष्ण्यस्य चाक्षुषत्वं तथाऽपि कथं तस्य लिङ्गत्वमित्याशङ्क्य जीवनप्रत्यायनद्वारा कौक्षेयज्योतिषि तस्य लिङ्गत्वं साधयति—स हीति। जीवात्मना तस्याव्यभिचारं स्फोरयति—न हीति। तत्रैव श्रुतिं संवादयति—उष्ण एवेति। यदा जीवस्य लिङ्गमौष्ण्यं तदा परस्यापि ज्योतिषस्तल्लिङ्गं भवति, जीवपरयोरेकत्वावगमादित्याह—मरणकाले चेति। वागादि मनसि मनः प्राणे प्राणस्तेजसि तदध्यक्षलक्षणपरस्यां देवतायां परमात्माख्यायां सम्पद्यत इति श्रुत्या जीवस्य परेण तदर्थात्मना सहाभिन्नत्वस्योपगमाज्जीवस्य लिङ्गं तद्भवति परस्य लिगमित्यर्थः। यदा हि जीवस्य परस्य च यथोक्तलिङ्गादवगतिस्तदा तत्र कौक्षेयज्योतिषस्तदधिकरणस्य सुतरामवगतिरस्तीत्याह—अत इति। उष्णस्य जाठरे ज्योतिषि प्रतीके लिङ्गत्वे सति तल्लिङ्गमाह—तस्येति। विष्णोरिव प्रतिमायां जाठरेण ज्योतिषा परस्य ज्योतिषस्तादात्म्यादित्यर्थः।

प्रतीकद्वारा दृष्ट्युपायवत्तस्य श्रवणोपायं लिङ्गान्तरं दर्शयति—तथेति। अपिगृह्य शृणोतीति सम्बन्धः। यथा श्रवणमेतद्भवति तथा शृणोतीति श्रवणक्रियाया विशेषणमेतच्छब्द इति योजना। प्रोर्णुत्य पिधायेति यावत्। श्रूयमाणशब्दस्य वाच्यार्थभावस्फुटीकरणार्थमनेकदृष्टान्तोपादानम्। कौक्षेयज्योतिष्यारोपितस्य ज्योतिषो ध्येयस्य ध्यानोपायाङ्गत्वेन गुणद्वयमुपदिशति—तदेतदिति। दृष्टमित्युपासने फलमाचष्टे—तथेति। श्रुतमित्युपासने फलमाह—श्रुत इति। कथं पुनः स्पर्शगुणोपासने स्पर्श्यो भवतीति वक्तव्ये चक्षुष्यो भवतीत्युच्यते तत्राऽऽह—यत्स्पर्शेति। सम्पादने निमित्तमाह—रूपस्पर्शयोरिति। इतश्च चक्षुष्यो भवतीति फलवचनमुचितमित्याह—इष्टत्वाच्चेति। फलवचनमपि सम्पादयति न कल्पकमित्याह—एवं चेति। यदा स्पर्शगुणोपासननिमित्तं फलं रूपे सम्पाद्यते तदा विद्यायाः श्रुतं फलमुपपन्नमिति फलश्रुतिरनुकूलिता स्यात्। रूपविशेषवति चक्षुष्यशब्दस्य प्रसिद्धत्वादित्यर्थः। यदि

[1]सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत । अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥

पुनस्तस्यैव त्रिपादमृतस्य ब्रह्मणोऽनन्तगुणवतोऽनन्तशक्तेरनेकभेवोपास्यस्य विशिष्टगुणशक्तिमत्त्वेनोपासनं विधित्सन्नाह—सर्वं समस्तं; खल्विति वाक्यालङ्कारार्थो निपातः । इदं जगन्नामरूपविकृतं प्रत्यक्षादिविषयं ब्रह्म कारणं वृद्धतमत्वाद्ब्रह्म । कथं सर्वस्य ब्रह्मत्वमित्यत आह—तज्जलानिति । तस्माद्ब्रह्मणो जातं तेजोवन्नादिक्रमेण

नरेन्द्रपुरीयं टिप्पणम्

लोकेऽपि यद्वस्तु त्वगिन्द्रियात्सामान्यतः प्रतिपन्नं तत्र चक्षुषो विशेषवति प्रसिद्धत्वात् । मृदुत्वादिस्पर्शवत्वे फले कल्प्यमाने न विद्याफलमुपपन्नं यथाश्रुतं स्यादित्यर्थः । निष्कामस्योपासनाच्चित्तशुद्धिद्वारेण ब्रह्मप्रतिपत्तिरपि भवतीत्याह—स्वर्गलोकेति ॥ ७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य त्रयोदशः खण्डः

पूर्वत्र प्रतीकद्वारेण ब्रह्मोपासनमुक्तमिदानीं प्रतीकं हित्वा सगुणब्रह्मोपासनं विधीयत इत्याह—पुनस्तस्यैवेत्यादिना । बृहत्तमत्वादिति निरतिशयमहत्त्वादित्यर्थः । तज्जञ्च तल्लञ्च तदनञ्च तज्जलानम् । छान्दसोऽ-

आनन्दगिरिटीका

पुनर्मृदुत्वादिस्पर्शगुणस्योपासननिमित्तं फलं कल्प्यते तदा चक्षुष्यो भवतीति श्रुतं फलं नैवोपपन्नं स्यात्ततश्च फलश्रुतिरपबाधिता भवेदित्याह—न त्विति । कस्येदं फलमित्यपेक्षायामाह—य एवमिति । ननु परस्य ज्योतिषो जाठरे ज्योतिष्यारोपितस्य यथोक्तगुणवतो ध्यानात्कथमिदमत्यल्पं फलमननुरूपमुपदिश्यते तत्राऽऽह—स्वर्गलोकेति । फलवत्यां विद्यायामादरो विवक्षितः ॥ ७ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य त्रयोदशः खण्डः

प्रतीकद्वारा ब्रह्मोपासनमुक्त्वा प्रतीकं हित्वा सगुणब्रह्मोपासनमुपन्यस्यति—पुनरित्यादिना । तस्य निरुपाधिकत्वं व्यावर्तयति—अनन्तेति । कथमेकस्यानन्तगुणत्वं तत्राऽऽह—अनन्तशक्तेरिति । ननु पूर्वमेवास्योपासनान्यतिवृत्तानि तथा च वक्तव्यशेषो नास्तीत्याशङ्क्याऽऽह—अनेकेति । अनेकेषु भेदेषु गायत्र्याद्युपाधिषूपास्यस्यापि ब्रह्मणो मनोमयत्वादिविशिष्टगुणत्वेन विशिष्टशक्तिमत्त्वेन चोपासनान्तरविधानार्थमुत्तरवाक्यमित्यर्थः । तस्येदमा परामर्शे हेतुमाह—प्रत्यक्षादीति । ब्रह्मशब्दस्य निरुपाधिकार्थविषयत्वं व्यावर्तयति—कारणमिति । कथं तस्य ब्रह्मत्वं तत्राऽऽह—वृद्धतमत्वादिति । निरतिशयमहत्त्वादित्यर्थः । सर्वमनूद्य तस्य ब्रह्मत्वविधाने युक्तिं प्रश्नपूर्वकमाह—कथमित्यादिना । तज्जं च तल्लं च तदनं च तज्जलान् । अवयवलोपश्छान्दसः । तत्र तज्जत्वं जगतो व्युत्पादयति—

१. सर्वं खल्विदं ब्रह्म—एतद्वाक्यमधिकृत्य ब्रह्मसूत्रेषु प्रथमाध्यायद्वितीयपादे प्रथमाधिकरणं चिन्तितम्—तज्जं च तल्लं च तदनं चेति कर्मधारये मध्यमपदानां लोपः जज्जलानमिति वाच्ये तज्जलानिति छान्दसः प्रयोगः (र) । इह मनोमयत्वादिगुणविशिष्टतया उपास्यो जीवो वा ब्रह्म वेति संशयः "सर्वं खल्विदं ब्रह्मे"ति तु शमविध्यर्थवादतया वाक्यान्तरम्, उपासनं तु "सक्रतुं कुर्वीते"त्यनेन । तद्विषयश्च "मनोमयः प्राणशरीर" इत्यादिना प्रतिपाद्यते । तत्र मनोमयत्वादीनां जीवे स्वरसात्, जीव एवोपास्यः, सत्यकायत्वं सति अकामत्वं, सत्यसङ्कल्पत्वं सति असङ्कल्पत्वं, अणुत्वं स्वभावतः ज्यायस्त्वं ब्रह्मभावापेक्षया ज्ञेयम् । अन्ते ब्रह्मशब्दः एतन्निर्णयानुसारेण जीवपरः इदं ब्रह्मायातीतिवत् । इति पूर्वपक्षः । सिद्धान्तस्तु—सर्वत्र वेदान्तेषु प्रसिद्धस्य ब्रह्मण एवायमुपास्यत्वेनोपदेशः । प्राणः शरीरं यस्य स प्राणमय इत्यादौ सर्वनाम्ना पूर्वप्रकृतस्य शमविध्यर्थवादगतत्वेन भिन्नवाक्यस्थस्यापि अत्र बुद्धिस्थत्वेन परामर्शान्मनोमय इति मयडपि विशेष्यतया ब्रह्मैव परामृशति । अतः परमेव ब्रह्मोपास्यम्, एवं सति "सत्यसङ्कल्पः आकाशात्मा सर्वकाम" इत्यादीनां मुख्यार्थे सामञ्जस्यं लभ्यते अत्र रात्रिसत्रन्यायेन वाक्यशेषगतमनोमयापेक्षया विश्वजिन्न्यायस्य गुरोरपि ब्रह्मगामित्वेन फलवतः श्रुतितात्पर्यगमकस्य बलीयस्त्वात् ब्रह्मैवोपास्यमिति सर्वत्रेति सूत्रतात्पर्यम् ।

**मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

सर्वम् । अतस्तज्जम् । तथा तेनैव जननक्रमेण प्रतिलोमतया तस्मिन्नेव ब्रह्मणि लीयते तदात्मतया श्लिष्यत इति तल्लम् । तथा तस्मिन्नेव स्थितिकालेऽनिति प्राणिति चेष्टत इति । एवं ब्रह्मात्मतया त्रिषु कालेष्वविशिष्टं तद्व्यतिरेकेणाग्रहणात् । अतस्तदेवेदं जगत् । यथा चेदं तदेवैकमद्वितीयं तथा षष्ठे विस्तरेण वक्ष्यामः । यस्माच्च सर्वमिदं ब्रह्म, अतः शान्तो रागद्वेषादिदोषरहितः संयतः सन्यत्तत्सर्वं ब्रह्म तद्वक्ष्यमाणैर्गुणैरुपासीत ।

कथमुपासीत । क्रतुं कुर्वीत क्रतुर्निश्चयोऽध्यवसायः एवमेव नान्यथेत्यविचलः प्रत्ययस्तं क्रतुं कुर्वीतोपासीतेत्यनेन व्यवहितेन सम्बन्धः । किं पुनः क्रतुकरणेन कर्तव्यं प्रयोजनम् । कथं वा क्रतुः कर्तव्यः । क्रतुकरणं चाभिप्रेतार्थसिद्धिसाधनं कथमित्यस्यार्थस्य प्रतिपादनार्थमथेत्यादिग्रन्थः । अथ खल्विति हेत्वर्थः । यस्मात्क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषो जीवः । यथाक्रतुर्यादृशः क्रतुरस्य सोऽयं यथाक्रतुर्यथाध्यवसायो यादृङ्निश्चयोऽस्मिँल्लोके जीवन्निह पुरुषो भवति तथेतोऽस्माद्देहात्प्रेत्य मृत्वा भवति । क्रत्वनुरूपफलात्मको भवतीत्यर्थः । एवं ह्येतच्छास्त्रतो दृष्टम् । "यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्" इत्यादि । यत एवं व्यवस्था शास्त्रदृष्टाऽतः स एवं जानन्क्रतुं कुर्वीत यादृशं क्रतुं वक्ष्यामस्तम् । यत एवं शास्त्रप्रामाण्यादुपपद्यते क्रत्वनुरूपं फलमतः स कर्तव्यः क्रतुः ॥ १ ॥

कथम् । मनोमयो मनःप्रायः । मनुतेऽनेनेति मनस्तत्स्ववृत्त्या विषयेषु प्रवृत्तं भवति तेन मनसा तन्मयः,

नरेन्द्रपुरीयं टिप्पणम्

वयवलोपः । कथमुपासीतेति कियत्पर्यन्तं प्रत्ययमावर्तनीयमित्याकाङ्क्षायां तत्त्वनिश्चयपर्यन्तमिति दर्शयितुं व्यवहितं वाक्यमवतारयति—क्रतुं कुर्वीतेति ॥ १ ॥

मनोमय इत्यादिः द्वितीयान्तत्वेन परिणेयः क्रतुविषयसङ्कल्पत्वान्मनोमयं निश्चिन्वीतेति । मनोमयः प्राण-

आनन्दगिरिटीका

**तस्मादिति** । तल्लत्वमुपपादयति—**तथेति** । विपर्ययेण तु क्रमोऽत इति न्यायात्प्रतिलोमतया जननव्युत्क्रमेण तस्मिन्नेव ब्रह्मणि लीयते जगदिति कृत्वा यथा तज्जं तथेति योजना । तत्र लयो नाम जगतः शून्यतेति शङ्कां व्यावर्तयति—**तदात्मतयेति** । तदनत्वं प्रतिपादयति—**तथेति** । यथा तज्जं तल्लं च तथा तदनं च जगदित्यर्थः । इति तदनमिति शेषः । युक्तिसिद्धमर्थं निगमयति—**एवमिति** । ब्रह्मव्यतिरेकेण त्रिष्वपि कालेषु जगतोऽग्रहणात्तदात्मत्वेनाविशिष्टं जगत्तदेव स्यादिति योजना । युक्तिसिद्धमपि जगतो ब्रह्मत्वं प्रत्यक्षादिविरुद्धं नाङ्गीकारमर्हति । न हि सद्वितीयमद्वितीयं युक्तमित्याशङ्क्याऽऽह—**यथा चेति** । सर्वस्य ब्रह्मत्वे फलितमाह—**यस्माच्चेति** ।

कियन्तं कालं प्रत्ययमावर्तयेदित्याकाङ्क्षापूर्वकं तत्त्वनिश्चयपर्यन्तमिति दर्शयितुं व्यवहितं वाक्यमवसार्य व्याचष्टे—**कथमित्यादिना** । उपासीतेत्यस्य क्रतुं कुर्वीतेत्यनेन व्यवहितेन सम्बन्ध इति योजना । क्रत्वनुष्ठानस्य फलं पृच्छति—**किं पुनरिति** । तत्र क्रतुकरणं च केन प्रकारेणेति प्रश्नान्तरं दर्शयति—**कथं वेति** । ब्रह्मभावसाधनत्वात्क्रतुकरणस्य फलप्रश्नो नास्तीत्याशङ्क्याऽऽह—**क्रतुकरणं चेति** । न हि जीवस्य स्थितस्य नष्टस्य वा सद्भावः संभवतीति भावः । क्रतुकरणस्येदं प्रयोजनं स च क्रतुरेवं क्रियते तत्करणं वाऽनया रीत्या ब्रह्मसद्भावं साधयतीत्यस्यार्थजातस्य प्रतिपादनार्थमा खण्डसमाप्तेरथेत्यादिरुत्तरो ग्रन्थ इत्याह—**इत्यस्यार्थस्येति** अथ खल्वित्यत्र पूर्ववत्खलुशब्दोऽथशब्दस्तु हेत्वर्थ इत्यत्र हेतुरूपमर्थं विवृणोति—**यस्मादिति** । यद्वाऽथेत्यारभ्य पुरुष इत्यन्तो ग्रन्थो हेत्वर्थ इत्युक्त्वा तमेव हेतुरूपमर्थं दर्शयति—**यस्मादिति** । यथाक्रतुरित्यस्मादधस्तात्तस्माच्छब्दो द्रष्टव्यः । अस्मिँल्लोक इति श्रुतिमादाय व्याचष्टे—**जीवन्निहेति** । इह वर्तमाने देहे जीवन्सन्निति यावत् । क्रतुकरणेन किं कर्तव्यं फलमिति प्रश्नं व्याचष्टे—**तथेति** । क्रत्वनुरूपफलात्मकत्वे पुरुषस्य स्मृतिं सम्वादयति—**एवं हीति** । शास्त्रमेवोदाहरति—**यं यमिति** । कथं वा क्रतुः कर्तव्य इति प्रश्नं प्रत्याह—**यत इति** । क्रत्वनुरूपफलात्मकः पुरुषो भवतीत्येवंरूपा व्यवस्थेति यावत् । एवं जानन्क्रत्वनुरूपं फलमिति शास्त्रतः पश्यन्नित्यर्थः । कोऽसौ क्रतुरित्याशङ्क्याऽऽह—**यादृशमिति** । स क्रतुं कुर्वीतेत्यस्यार्थं निगमयति—**यत एवमिति** ॥ १ ॥

क्रतुकरणप्रकारमेव प्रश्नपूर्वकं प्रकटयति—**कथमित्यादिना** । कथमिदं मनःप्रायत्वमित्यपेक्षायां मनःशब्दार्थ-

तथा प्रवृत्त इव तत्प्रायो निवृत्त इव च। अत एव प्राणशरीरः प्राणो लिङ्गात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितः। "यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः" इति श्रुतेः। स शरीरं यस्य स प्राणशरीरः। "मनोमयः प्राणशरीरनेता" इति च श्रुत्यन्तरात्। भारूपः। भा दीप्तिश्चैतन्यलक्षणं रूपं यस्य स भारूपः।

सत्यसङ्कल्पः। सत्या अवितथाः सङ्कल्पा यस्य सोऽयं सत्यसङ्कल्पः। न यथा संसारिण इवानैकान्तिकफलः सङ्कल्प ईश्वरस्येत्यर्थः। अनृतेन मिथ्याफलत्वहेतुना प्रत्यूढत्वात्सङ्कल्पस्य मिथ्याफलत्वम्। वक्ष्यत्यनृतेन हि प्रत्यूढा इति। आकाशात्मा। आकाश इवाऽऽत्मा स्वरूपं यस्य स आकाशात्मा। सर्वगतत्वं सूक्ष्मत्वं रूपादिहीनत्वं चाऽऽकाशतुल्यतेश्वरस्य। सर्वकर्मा। सर्वं विश्वं तेनेश्वरेण क्रियत इति जगत्सर्वं कर्मास्य स सर्वकर्मा। 'स हि सर्वस्य कर्ता" इति श्रुतेः। सर्वकामः। सर्वे कामा दोषरहिता अस्येति सर्वकामः। 'धर्माविरुद्धो भूतेषु कामोऽस्मि" इति स्मृतेः। ननु कामोऽस्मीति वचनादिह बहुव्रीहिर्न संभवति सर्वकाम इति। न, कामस्य कर्तव्यत्वाच्छब्दादिवत्पारार्थ्यप्रसङ्गाच्च देवस्य। तस्माद्यथेह सर्वकाम इति बहुव्रीहिस्तथा कामोऽस्मीतिस्मृत्यर्थो वाच्यः।

सर्वगन्धः। सर्वे गन्धाः सुखकरा अस्य सोऽयं सर्वगन्धः। "पुण्यो गन्धः पृथिव्याम्" इति स्मृतेः। तथा रसा अपि विज्ञेयाः। अपुण्यगन्धरसग्रहणस्य पाप्मसम्बन्धनिमित्तत्वश्रवणात्। "तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धि

## नरेन्द्रपुरीयं टिप्पणम्

शरीर इति गुणद्वयं जीवगतमपि जीवाभेदविवक्षया ब्रह्मण्युपदिश्यते। संमूर्छितः सम्पिण्डितः। कामसामानाधिकरण्ये बाधकदर्शनाद्बहुव्रीहिरेव न्याय्य इत्याह—न, कामस्येति। कामस्य तदैक्ये ब्रह्मणः स्वातन्त्र्यं हीयेत। अतो ब्रह्मणः[1] पारतन्त्र्यमात्रं कामोऽस्मीत्यत्रापि स्मृतौ विवक्षितमित्यर्थः। तथेति सुखकरणगन्धवद्रसा अपि सुखकरा

## आनन्दगिरिटीका

प्रदर्शनपूर्वकं तत्प्रायत्वं व्युत्पादयति—मनुत इति। मनोद्वारा तदुपाधिः पुरुषो विषयप्रवणो भवतीत्यर्थः। तत्प्रायत्वफलमाह—तथेति। पुरुषो हि तत्प्रायः सन्मनसि प्रवर्तमाने स्वयमपि तद्वदेव प्रवृत्त इव लक्ष्यते। तथा निवर्तमाने मनसि निवृत्त इव चावगम्यते। वस्तुतस्तु पुरुषो न प्रवृत्तो निवृत्तो वा ध्यायतीवेत्यादिश्रुतेरित्यर्थः। अत एव मनोमयत्वादेवेति यावत्। संमूर्छितत्वं संपिण्डितत्वम्। विज्ञानशक्तेः क्रियाशक्तेश्चैकस्मिन्नेव लिङ्गात्मनि संपिण्डितत्वे श्रुत्यन्तरं प्रमाणयति—यो वा इति। आथर्वणीं श्रुतिं यथोक्ते विशेषणद्वये प्रमाणयति—मनोमयः प्राणेति। मनोवृत्तिभिर्विभाव्यमानत्वादात्मा मनोमयः प्राण एव प्रत्यगात्मनः सूक्ष्मं शरीरं तस्य चासौ स्थूलाद्देहाद्देहान्तरं प्रति नेतेत्याथर्वणश्रुतेरात्मनि विशेषणद्वयसिद्धिः। एतच्च विशेषणद्वयं जीवगतमपि तदभेदविवक्षया ब्रह्मणि द्रष्टव्यमित्यर्थः।

सत्यसङ्कल्प इत्यत्र विशेषणेन ध्वनितमर्थं दर्शयति—न यथेति। इवशब्दस्तथार्थः। कथं संसारिसङ्कल्पस्यानैकान्तिकफलत्वं तत्राऽऽह—अनृतेनेति। सङ्कल्पस्यानृतेन संसारिणि प्रत्यूढत्वे वाक्यशेषं प्रमाणयति—वक्ष्यतीति। जडाजडयोराकाशेतरयोर्न तुल्यतेत्याशङ्क्याऽऽह—सर्वगतत्वमिति। सर्वकर्मेति सर्वक्रियाश्रयत्वमीश्वरस्योच्यते तदयुक्तं निष्क्रियत्वश्रुतेरित्याशङ्क्य व्याचष्टे—सर्वमिति। संसारिभ्यो विशेषसिद्धयर्थं विशिनष्टि—दोषरहिता इति। उदाहृतां स्मृतिमाश्रित्योक्तमाक्षिपति—नन्विति। कामसामानाधिकरण्ये बाधकोपलम्भाद्बहुव्रीहिरेवेति परिहरति—न कामस्येति। तस्य कार्यत्वात्तदैक्ये ब्रह्मणोऽनादित्वं बाध्यते चेतनशेषत्वाच्च कामस्य तदैक्ये ब्रह्मणः स्वातन्त्र्यं हीयते। तथा च कर्मधारयासम्भवाद्बहुव्रीहिरेवेत्यर्थः। कथं तर्हि कामोऽस्मीति तादात्म्यस्मृतिरित्याशङ्क्याऽऽह—तस्मादिति। कामेश्वरयोः सामानाधिकरण्यासम्भवात्प्रकृतश्रुतौ बहुव्रीहिर्यथेष्टस्तथा स्मृतावपि ब्रह्मपारतन्त्र्यमात्रं कामस्य विवक्षितम्, श्रुत्यनुसारेण स्मृतेर्नेतव्यत्वादित्यर्थः।

सर्वशब्दाद्दुर्गन्धानामपि ब्रह्मणि प्राप्तौ विशिनष्टि—सुखकरा इति। सर्वशब्दसङ्कोचे कारणमाह—पुण्य इति। यथा सर्वगन्ध इत्यत्र सुखकरा गन्धा ब्रह्मसम्बन्धिनो दर्शितास्तथा सर्वरस इत्यत्रापि सुखकरा एव रसास्तत्सम्बन्धिनो ग्राह्या इत्याह—तथेति। अत्रापि सर्वशब्दसङ्कोचे कारणमाह—अपुण्येति। न तद्ग्रहणं

१. ब्रह्मापेक्षया।

**एष म आत्माऽन्तर्हृदयेऽणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥ ३ ॥**

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥**

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य चतुर्दशः खण्डः

च। पाप्मना ह्येष विद्धः" इति श्रुतेः। न च पाप्मसंसर्ग ईश्वरस्य, अविद्यादिदोषस्यानुपपत्तेः। सर्वमिदं जगदभ्यात्तोऽभिव्याप्तः। अततेर्व्याप्त्यर्थस्य कर्तरि निष्ठा। तथाऽवाक्युच्यतेऽनयेति वाग्वागेव वाकः। यद्वा वचेर्घञन्तस्य करणे वाक्। स यस्य विद्यते स वाकी न वाक्यवाकी। वाक्प्रतिषेधश्चात्रोपलक्षणार्थः। गन्धरसादिश्रवणादीश्वरस्य प्राप्तानि घ्राणादीनि करणानि गन्धादिग्रहणाय। अतो वाक्प्रतिषेधेन प्रतिषिध्यन्ते तानि। "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यादिमन्त्रवर्णात्। अनादरोऽसंभ्रमः। अप्राप्तप्राप्तौ हि संभ्रमः स्यादनाप्तकामस्य। न त्वाप्तकामत्वान्नित्यतृप्तस्येश्वरस्य संभ्रमोऽस्ति क्वचित् ॥ २ ॥

एष यथोक्तगुणो मे ममाऽऽत्माऽन्तर्हृदये हृदयपुण्डरीकस्यान्तर्मध्येऽणीयानणुतरो व्रीहेर्वा यवाद्वेत्याद्यत्यन्तसूक्ष्मत्वप्रदर्शनार्थम्। श्यामाकाद्वा श्यामाकतण्डुलाद्वेति परिच्छिन्नपरिमाणादणीयानित्युक्तेऽणुपरिमाणत्वं प्राप्तमाशङ्क्यातस्तत्प्रतिषेधायाऽऽरभते—एष म आत्माऽन्तर्हृदये ज्यायान्पृथिव्या इत्यादिना। ज्यायःपरिमाणाच्च ज्यायस्त्वं दर्शयन्ननन्तपरिमाणत्वं दर्शयति ॥ ३ ॥

मनोमय इत्यादिना ज्यायानेभ्यो लोकेभ्य इत्यन्तेन यथोक्तगुणलक्षण ईश्वरो ध्येयो न तु तद्गुणविशिष्ट

नरेन्द्रपुरीयं टिप्पणम्

एव परमेश्वरसम्बन्धिनोऽपि ज्ञेयाः। सर्वशब्दसङ्कोचे कारणमाह—पुण्यगन्धेति। अवाकी सर्वेन्द्रियरहित इत्युक्तम्। कुतस्तर्हीन्द्रियसम्बन्धप्राप्तिर्येन निषेधः स्यात् इत्याह—गन्धगरसादीति ॥ २ ॥

पुनर्वचनस्य तात्पर्यं दर्शयितुमुपक्रमते—यथोक्तगुण इत्यादिना ॥ ३ ॥

आनन्दगिरिटीका

परस्मिन्निति शेषः। तच्छब्दार्थमेवोपपादयति—पाप्मना हीति। एष इति घ्राणप्राणोक्तिः। भवतु पाप्मसंसर्गकृतमपुण्यगन्धादिग्रहणं तथाऽपि कथं तदीश्वरे सर्वज्ञे नास्तीत्याशङ्क्याऽऽह—न चेति। निमित्ताभावादीश्वरस्य न स्वसम्बन्धित्वेनापुण्यगन्धादिग्रहणमित्यर्थः। तस्य पाप्मासंसर्गे हेतुमाह—अविद्यादीति। आदिपदेनास्मितारागद्वेषाभिनिवेशादयो गृह्यन्ते।

अभ्यात्त इति रूपं तदर्थं च दर्शयन्कर्मणि निष्ठां व्यावर्तयति—अततेरिति। वाकशब्दस्य निष्पत्तिप्रकारं रचयति—वचेरिति। अत्रेति श्रुतेरीश्वरस्य चोक्तिः। उपलक्षणार्थो घ्राणादिप्रतिषेधस्येति शेषः। अथेश्वरे घ्राणादिप्राप्तेरभावात्तत्प्रतिषेधो नोपलक्ष्येतात आह—गन्धेति। आदिशब्देन कामादिरुक्तः। युक्तं चान्योपलक्षणं साक्षादेवान्यत्र प्रतिषेधश्रवणादित्याह—अपाणीति। आदिपदेन स वेत्ति वेद्यमित्यादि गृह्यते। ईश्वरस्य संभ्रमाभावं प्रतिपादयति—अप्राप्तप्राप्तौ हीति ॥ २ ॥

यथोक्तस्य परस्य प्रत्यगात्माभेदं दर्शयति—एष इति। व्रीह्याद्यनेकोपादानस्योपयोगमाह—अत्यन्तेति। अणीयस्त्वज्यायस्त्वव्यपदेशयोर्मिथो विरोधमाशङ्क्य परिहरति—श्यामाकेति। पृथिव्यन्तरिक्षादिवदीश्वरस्य सातिशयं महत्त्वं विवक्षितमिति शङ्कां वारयति—ज्यायःपरिमाणाच्चेति। पुनरुक्तेरुपयोगमाह—मनोमय इत्यादिनेति ॥ ३ ॥

यस्तैर्लक्ष्यते स एवेश्वरः केवल इति यावत्। ईश्वरो यथोक्तगुणो ध्येय इत्युक्ते गुणानामपि ध्यानकर्मत्वं

एव यथा राजपुरुषमानय चित्रगुं वेत्युक्ते न विशेषणस्याप्यानयने व्याप्रियते तद्वदिहापीति प्राप्तमतस्तन्निवृत्त्यर्थं सर्वकर्मेत्यादि पुनर्वचनम्। तस्मान्मनोमयत्वादिगुणविशिष्ट एवेश्वरो ध्येयः। अत एव षष्ठसप्तमयोरिव तत्त्वमस्यात्मैवेदं सर्वमिति नेह स्वाराज्येऽभिषिञ्चति। एष म आत्मैतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति लिङ्गान्न त्वात्मशब्देन प्रत्यगात्मैवोच्यते। ममेति षष्ठ्याः सम्बन्धार्थप्रत्यायकत्वादेतमभिसम्भवितास्मीति च कर्मकर्तृत्वनिर्देशात्।

ननु षष्ठेऽप्यथ सम्पत्स्य इति सत्सम्पत्तेः कालान्तरितत्वं दर्शयति। न, आरब्धसंस्कारशेषस्थित्यर्थपरत्वात् न कालान्तरितार्थता। अन्यथा तत्त्वमसीत्येतस्यार्थस्य बाधप्रसङ्गात्। यद्यप्यात्मशब्दस्य प्रत्यगर्थत्वं सर्वं खल्विदं ब्रह्मेति च प्रकृतमेष म आत्माऽन्तर्हृदय एतद्ब्रह्मेत्युच्यते, तथाप्यन्तर्धानमीषदपरित्यज्यैवैतमात्मानमितोऽस्माच्छरीरात्प्रेत्याभिसम्भवितास्मीत्युक्तम्। यथाक्रतुरूपस्याऽऽत्मनः प्रतिपत्ताऽस्मीति यस्यैवंविदः स्याद्भवेदद्धा सत्यमेवं स्यामहं प्रेत्य एवं न स्यामिति न च विचिकित्साऽस्तीत्येतस्मिन्नर्थे क्रतुफलसम्बन्धे स तथैवेश्वरभावं प्रतिपद्यते विद्वानित्येतदाह स्मोक्तवान्किल शाण्डिल्यो नामर्षिः। द्विरभ्यास आदरार्थः॥ ४॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य चतुर्दशः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

स्वरूपवाच्यात्मशब्दप्रयोगाज्जीवरूपत्वेनैव ब्रह्म कस्मान्न विवक्ष्यते लिङ्गाच्छ्रुतेर्बलीयस्त्वादिति शङ्कित्वा परिहरति—[1]नन्वित्यादिना। लिङ्गानुगृहीतषष्ठीश्रुतिविरोधाद् भेदापरित्यागेऽपि स्वभावाभेदादप्यात्मश्रुत्युपपत्तेः न तद्बलेनाद्वैतवाक्यार्थासिद्धिरित्यर्थः। भेदलिङ्गाच्चेदिह भेदो विवक्षितस्तर्हि षष्ठेऽपि भेदलिङ्गदर्शनान्नाखण्डवाक्यार्थसिद्धिरिति प्रसङ्गादाशङ्क्य परिहरति—ननु षष्ठेऽपीत्यादिना। आरब्धस्संस्कारस्सुखादिर्येन कर्मणा तच्छेषस्थितौ तात्पर्यादित्यर्थः। उक्तमर्थमाक्षिप्याह—यद्यपीत्यादिना। सगुणब्रह्मोपासकस्य सक्रतुत्वप्रकाशमात्रान्नादृष्टफलसिद्धिः। किन्तु देहपातकालेऽपि साक्षात्कारानुवृत्त्या भवितव्यमित्यभिप्रेत्याह—यथा क्रत्विति। अध्यवसायानुरूपस्य सगुणस्य परमात्मनः प्रतिपत्तावद्धाऽस्मीति निश्चयेऽपि पुनरभिध्योपदेशान्मरणकालेऽपि साक्षात्कारेण भवितव्यमिति गम्यत इत्यर्थः॥ ४॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य चतुर्दशः खण्डः

### आनन्दगिरिटीका

दुर्वारमित्याशङ्क्याऽऽह—यथेति। पुनरुक्तिफलमुपसंहरति—तस्मादिति। सगुणस्येश्वरस्य ध्येयत्वे गमकान्तरमाह—अत एवेति। स्वरूपवाचकस्याऽऽत्मनः श्रुत्यनुपपत्तेर्न तद्बलादद्वैतवाक्यार्थसिद्धिरित्यर्थः।

भेदलिङ्गाच्चेदिह भेदो विवक्षितस्तर्हि षष्ठेऽपि तल्लिङ्गदर्शनान्नाखण्डवाक्यार्थसिद्धिरिति शङ्कते—नन्विति। नात्र भेदो विवक्षितः। आरब्धः संस्कारः सुखादिर्येन कर्मणा तच्छेषस्थितौ तात्पर्यादिति परिहरति—नाऽऽरब्धेति। सत्सम्पत्तौ कालान्तरितत्वमेवात्र विवक्षितं किं न स्यादित्याशङ्क्याऽऽह—नेति। कालान्तरभावित्वे सम्पत्तेरिष्टे तत्त्वमसीति ब्रह्मभावस्य वर्तमानोपदेशानुपपत्तेरिति हेतुमाह—अन्यथेति। ननु प्रकरणानुगृहीताभ्यामात्मब्रह्मशब्दाभ्यामत्रापि ब्रह्मात्मैक्यमेव विवक्षितमित्यत आह—यद्यपीति। लिङ्गानुगृहीतषष्ठीश्रुतिवशात्प्रकरणानुगृहीते श्रुती कथञ्चिन्नेतव्ये प्रकरणश्रुतिभ्यां लिङ्गश्रुत्योर्बलवत्त्वादात्मश्रुतेश्चान्यथोपपत्तेरुक्तत्वादिति भावः।

सगुणब्रह्मोपासकस्य सक्रुत्तत्त्वधीमात्रान्नादृष्टं फलं सिध्यति। किन्तु देहपातकालेऽपि साक्षात्कारानुवृत्त्या भवितव्यमित्यभिप्रेत्याऽऽह—यथाक्रतुरूपस्येति। अध्यवसायानुरूपस्य सगुणस्य परमात्मनोऽहं प्रतिपत्ताऽस्मीत्येवंविदो यस्याद्धा स्यान्निश्चयः प्रेत्याहमेष स्यामेव न तु न स्यामिति क्रतुफलसम्बन्धे संशयोऽस्ति। स क्रत्वनुसारेणैव परमात्मभावं प्राप्नोति। तथा चाद्धेति वाक्यान्मरणकालेऽपि साक्षात्कारेण भवितव्यमिति प्रतिभातीत्यर्थः। यथोक्तस्यार्थस्य साम्प्रदायिकत्वं कथयति—इत्येतदिति। आदरः क्रतुफलसम्बन्धविषयः॥ ४॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य चतुर्दशः खण्डः

१. अत्र नन्वात्मशब्देन इति मूलपाठः सूच्यते।

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो
द्यौरस्योत्तरं बिलँ् स एष कोशो वसुधानस्तस्मिन्विश्वमिदँ् श्रितम् ॥ १ ॥

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची
सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न
पुत्ररोदँ् रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदँ् रुदम् ॥ २ ॥

अस्य कुले वीरो जायत इत्युक्तम्। न वीरजन्ममात्रं पितुस्त्राणाय। "तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः" इति श्रुत्यन्तरात्। अतस्तद्दीर्घायुष्ट्वं कथं स्यादित्येवमर्थं कोशविज्ञानारम्भः। अभ्यर्हितविज्ञानव्यासङ्गादनन्तरमेव नोक्तं तदिदानीमेवाऽऽरभ्यते—अन्तरिक्षमुदरमन्तःसुषिरं यस्य सोऽयमन्तरिक्षोदरः कोशः कोश इवानेकधर्मसादृश्यात्कोशः। स च भूमिबुध्नो भूमिर्बुध्नो मूलं यस्य स भूमिबुध्नो न जीर्यति न विनश्यति त्रैलोक्यात्मकत्वात्। सहस्रयुगकालावस्थायी हि सः। दिशो ह्यस्य सर्वाः स्रक्तयः कोणाः। द्यौरस्य कोशस्योत्तरमूर्ध्वं बिलं स एष यथोक्तगुणः कोशो वसुधानो वसु धीयतेऽस्मिन्प्राणिनां कर्मफलाख्यमतो वसुधानः। यस्मिन्नन्तर्विश्वं समस्तं प्राणिकर्मफलं सह तत्साधनैरिदं यद्गृह्यते प्रत्यक्षादिप्रमाणैः श्रितमाश्रितं स्थितमित्यर्थः॥ १॥

तस्यास्य प्राची दिक्प्राग्गतो भागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम। सहमाना नाम सहन्तेऽस्यां पापकर्मफलानि यमपुर्यां प्राणिन इति सहमाना नाम दक्षिणा दिक्। तथा राज्ञी नाम प्रतीची पश्चिमा दिग्राज्ञी राज्ञा वरुणेनाधिष्ठिता सन्ध्यारागयोगाद्वा। सुभूता नाम भूतिमद्भिरीश्वरकुबेरादिभिरधिष्ठितत्वात्सुभूता नामोदीची। तासां दिशां वायुर्वत्सो दिग्जत्वाद्वायोः। "पुरोवात" इत्यादिदर्शनात्। स यः

### नरेन्द्रपुरीयं टिप्पणम्

व्यवहितेनोत्तरग्रन्थस्य सम्बन्धं दर्शयितुं व्यवहितमनुवदति—अस्य कुल इत्यादिना। अनुशासनेन कर्तव्योपदेशेन विषयीकृतं पुत्रं पितुर्ल्लोकप्राप्तिसाधनमाहुरिति विशेषणात्पुत्रजन्ममात्रं पितुर्नरकत्राणाय न भवतीति गम्यते। अनुशासनञ्च वेदाध्ययनतदर्थज्ञानतदनुष्ठानपर्यन्तं सति दीर्घे जीविते सफलं स्यादिति पुत्रस्य दीर्घायुष्यसिद्धये विज्ञानारम्भः। अनन्तरं तत्रैव किन्नोक्तमित्यत आह—अभ्यर्हितेति। कोशशब्देन हिरण्यादिनिक्षेपाधिकरणमञ्जूषादिरुच्यते। तद्दृष्टिस्त्रैलोक्यात्मनि विधीयते—अन्तरिक्षोदर इत्यादिना॥ १-२॥

### आनन्दगिरिटीका

शाण्डिल्यविद्यया समनन्तरग्रन्थस्य सम्बन्धो नास्तीत्याशङ्क्य व्यवहितेन सम्बन्धं दर्शयितुमनुवदति—अस्येति। सम्प्रत्युत्तरग्रन्थस्य तात्पर्यं वक्तुं भूमिकां करोति—न वीरेति। तत्र बृहदारण्यकश्रुतिं प्रमाणयति—तस्मादिति। पुत्रस्य लोक्यत्वादिति यावत्। अनुशासनेन विषयीकृतस्य पुत्रस्य लोकप्राप्तिसाधनत्वात्। अनुशासनं वेदाध्ययनम्। पुत्रजन्मोक्त्यनन्तरमेव किमित्येतद्विज्ञानं नोपदिष्टमित्याशङ्क्याऽऽह—अभ्यर्हितेति। गायत्र्युपाधिकब्रह्मोपासनस्य कौक्षेये ज्योतिष्यारोप्य परब्रह्मोपासनमभ्यर्हितं तस्य च मनोमयत्वादिगुणकब्रह्मोपासनमन्तरङ्गम्। तथा च तद्वचनेन वैयग्र्यादनन्तरमेव कोशविज्ञानं नोक्तमिति। निवृत्ते तु व्यासङ्गे तद्दृष्टिरिदानीं यथोक्तफलसिद्ध्यर्थमुच्यत इत्यर्थः। कोशशब्देन हिरण्यादिनिक्षेपाधारा मञ्जूषोच्यते। कथं त्रैलोक्यात्मनः कोशत्वं तत्राऽऽह—कोश इवेति। अनेकधर्मसादृश्यं विशदयति—स चेति। तथाऽपि कथमविनाशित्वं तत्राऽऽह—सहस्रेति। त्रैलोक्यात्मनि कोशदृष्टिस्तत्रापि भूमौ बुध्नदृष्टिरित्युक्तम्। कोशस्य च सापेक्षमविनाशित्वं ध्येयत्वेन दर्शितम्। सम्प्रति दिक्षु कोशकोणदृष्टिः कर्तव्येत्याह—दिशो हीति। दिवि कोशस्योर्ध्वबिलत्वबुद्धिं दर्शयति—द्यौरिति। यथोक्ते कोशे वसुधानत्वदृष्टिं दर्शयति—यथोक्तेति। तदेव समर्थयते—तस्मिन्निति॥ १॥

कोशकोणत्वेनोक्तासु दिक्ष्ववान्तरविभागमाह—तस्येत्यादिना। दिशां विशिष्टनामवतीनामनुचिन्तनीयत्वमुक्त्वा तत्सम्बन्धिनं वायुं तद्वत्समरणधर्माणं चिन्तयेदित्याह—तासामित्यादिना। पुरोवातादीत्यादिशब्दस्तथा-

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्ये-ऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥ ३ ॥

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदँ सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥ ४ ॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥

अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥ ६ ॥

अथ यदवोचँ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥७॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य पञ्चदशः खण्डः

कश्चित्पुत्रदीर्घजीविताय्र्थ्येवं यथोक्तगुणं वायुं दिशां वत्समभृतं वेद स न पुत्ररोदं पुत्रनिमित्तं रोदनं न रोदिति पुत्रो न म्रियत इत्यर्थः। यत एवं विशिष्टं कोशदिग्वत्सविषयं विज्ञानमतः सोऽहं पुत्रजीविताय्र्थ्येवमेतं वायुं दिशां वत्सं वेद जाने। अतो मा पुत्ररोदं रुदं मा रुदं पुत्रमरणनिमित्तम्। पुत्रोरोदो मम मा भूदित्यर्थः॥ २॥

अरिष्टमविनाशिनं कोशं यथोक्तं प्रपद्ये प्रपन्नोऽस्मि पुत्रायुषे। अमुनाऽमुनाऽमुनेति त्रिर्नाम गृह्णाति पुत्रस्य। तथा प्राणं प्रपद्येऽमुनाऽमुनाऽमुना, भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना, सर्वत्र प्रपद्य इति त्रिर्नाम गृह्णाति पुनः पुनः॥ ३॥

स यदवोचं प्राणं प्रपद्य इति व्याख्यानार्थमुपन्यासः। प्राणो वा इदँ सर्वं भूतं यदिदं जगत्। "यथा वाऽरा नाभावि"ति वक्ष्यति। अतस्तमेव सर्वं तत्तेन प्राणप्रपदनेन प्रापत्सि प्रपन्नोऽभवम्॥ ४॥

तथा भूः प्रपद्य इति त्रीँल्लोकान्भूरादीन्प्रपद्य इति तदवोचम्॥ ५॥

अथ यदवोचं भुवः प्रपद्य इत्यग्न्यादीन्प्रपद्य इति तदवोचम्॥ ६॥

अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदादीन्प्रपद्य इत्येव तदवोचमिति। उपरिष्टान्मन्त्राञ्जपेत्ततः पूर्वोक्तमजरं कोशं सदिग्वत्सं यथावद्ध्यात्वा द्विर्वचनमादरार्थम्॥ ७॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य पञ्चदशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

त्रैलोक्यात्मानं कोशाकारं परिकल्प्य तस्य चतस्रो दिशो विशिष्टनामवतीरनुचिन्त्य तत्सम्बन्धिनं वायुं तद्वत्समरणधर्माणं चिन्तयेदिति प्रधानविद्योक्ता तदङ्गजपमाह—अरिष्टमित्यादिना। अमुनेति तेन पुत्रेण निमित्तभूतेन तस्य दीर्घजीवितं निमित्तीकृत्येत्यर्थः॥ ३-७॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य पञ्चदशः खण्डः

आनन्दगिरिटीका

विधलौकिकवैदिकप्रयोगसंग्रहार्थः। यथोक्तस्य विज्ञानस्य फलवत्त्वमिदानीं दर्शयति—स य इति। यथोक्तगुणमित्यस्य प्रकटीकरणममृतमिति। सफलमुपासनमुपदिष्टमुपसंहरति—यत इति॥ २॥

दीर्घायुष्ट्वं पुत्रस्य कामयमानस्त्रैलोक्यात्मानं कोशाकारं परिकल्प्य तस्य चतस्रो दिशो विशिष्टनाम-वतीस्तासां स्त्रीत्वं तत्सम्बन्धेन वायुं तद्वत्समरणधर्माणं चिन्तयेदिति प्रधानोपास्तिरुक्ता। सम्प्रति तदङ्गं जपं दर्शयति—अरिष्टमित्यादिना। अमुना तेन पुत्रेण निमित्तीभूतेन दीर्घायुष्ट्वं निमित्तीकृत्येत्यर्थः। सर्वत्र सर्वेषु प्रपद्य इति क्रियापदमुपायं दर्शयितुं पुनरुपात्तं निमित्तनिवेदनार्थं च पुनः पुनर्मन्त्रेषु पुत्रस्य त्रिर्नाम गृह्णातीति योजना॥३॥

अरिष्टमित्यादिमन्त्रस्य प्रागेव व्याख्यातत्वात्प्राणमित्यादिमन्त्रमादाय व्याचष्टे—स यदिति। सशब्दो वक्तृविषयः। प्राणस्य सर्वात्मत्वे वाक्यशेषानुगुण्यं दर्शयति—यथेति। तत्सार्वात्म्यमतःशब्दार्थः॥ ४-५-६॥

कदा पुनरेषां मन्त्राणां जप इत्यपेक्षायां पूर्वोक्तप्रधानविद्यानन्तरमित्याह—उपरिष्टादिति। ध्यात्वोपरिष्टा-दिति सम्बन्धः यथोक्ते विज्ञाने जपे वाऽऽदरः॥ ७॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य पञ्चदशः खण्डः

[1]पुरुषो वाव यज्ञस्तस्य यानि चतुर्विँ शतिवर्षाणि तत्प्रातःसवनं चतुर्विँ शत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदँ सर्वं वासयन्ति ॥ १ ॥

पुत्रायुष उपासनमुक्तं जपश्च । अथेदानीमात्मनो दीर्घजीवनायेदमुपासनं जपं च विदधदाह । जीवन्हि स्वयं पुत्रादिफलेन युज्यते नान्यथा इत्यत आत्मानं यज्ञं सम्पादयति—पुरुषः पुरुषो जीवनविशिष्टः कार्यकरणसङ्घातो यथाप्रसिद्ध एव । वावशब्दोऽवधारणार्थः । पुरुष एव यज्ञ इत्यर्थः । तथा हि सामान्यैः सम्पादयति यज्ञत्वम् । कथम् । तस्य पुरुषस्य यानि चतुर्विंशतिवर्षाण्यायुषस्तत्प्रातःसवनं यज्ञस्य । केन सामान्येनेत्याह—चतुर्विंशत्यक्षरा गायत्री छन्दो गायत्रं गायत्रीछन्दस्कं हि विधियज्ञस्य प्रातःसवनम् । अतः प्रातःसवनसम्पन्नेन चतुर्विंशतिवर्षायुषा युक्तः पुरुषः । अतो विधियज्ञसादृश्याद्यज्ञः । तथोत्तरयोरप्यायुषोः सवनद्वयसम्पत्तिस्त्रिष्टुब्जगत्यक्षरसंख्यासामान्यतो वाच्या । किञ्च तदस्य पुरुषयज्ञस्य प्रातःसवनं विधियज्ञस्येव वसवो देवा अन्वायत्ता अनुगताः । सवनदेवतात्वेन

नरेन्द्रपुरीयं टिप्पणम्

प्रसिद्धयज्ञावयवसादृश्यात्पुरुषेण स्वात्मनि यज्ञदृष्टिः कर्तव्येत्युक्तं, कथं सादृश्याद्यज्ञसम्पादनमित्याकाङ्क्षायां षोडशाधिकं वर्षशतं पुरुषस्यायुः फलभूतं त्रेधा प्रविभज्य सवनत्रयदृष्टिः कर्तव्येत्याह—तस्य पुरुषस्येत्यना । विधितोऽनुष्ठीयमानस्य बाह्ययज्ञस्य प्रातःकालोपलक्षितं कर्मरूपं प्रातस्सवनं तत्र स्तोत्रादि गायत्रच्छन्दस्कमित्यर्थः ॥१॥

आनन्दगिरिटीका

वृत्तमनूद्य पुरुषो वावेत्यादिखण्डान्तरमवतारयति—पुत्रायुष इति । किमित्यात्मनो दीर्घजीवनं समर्थ्यते तत्राऽऽह—जीवन्निति । यथोक्तफलहेतुभूतां विद्यामुत्थापयति—इत्यत आत्मानमिति । कथंभूतस्याऽऽत्मनो यज्ञत्वं सम्पाद्यते तत्राऽऽह—पुरुष इति ।

अवधारणार्थं समर्थयते—तथा हीति । यज्ञावयवसादृश्यात्पुरुषे यज्ञदृष्टिः कर्तव्येत्युक्तम् । कथं सादृश्याद्यज्ञसम्पादनमिति पृच्छति—कथमिति । तत्र षोडशाधिकं वर्षशतं पुरुषस्याऽऽयुः फलभूतं तत्त्रेधा प्रविभज्य चतुर्विंशतिवर्षायुषि प्रातःसवनदृष्टिः कर्तव्येत्याह—तस्येति । गायत्र्याश्छन्दसश्चतुर्विंशत्यक्षरत्वेऽपि कथं शब्दोक्ता प्रातःसवनदृष्टिरित्याशङ्क्याऽऽह—गायत्रीति । विधितोऽनुष्ठीयमानस्य बाह्ययज्ञस्य प्रातःकालोपलक्षितं कर्म प्रातःसवनं तत्र स्तोत्रादि गायत्रच्छन्दस्कं "गायत्रं प्रातःसवनमि"ति च श्रुतिरित्यर्थः । यथोक्ते पुरुषायुषि प्रातःसवने चतुर्विंशत्यक्षराणि फलितमाह—अत इति । तथाऽपि कथं पुरुषायुषस्य यज्ञत्वं तदाह—अत इति । अतःशब्दस्यैवार्थो विधियज्ञसादृश्यादिति । विधिनाऽनुष्ठीयमानो यज्ञो विधियज्ञस्तेन सादृश्यं पुरुषस्य प्रातःसवनसम्बन्धस्तस्मात्पुरुषो यज्ञ इत्यर्थः । यथा यथोक्ते पुरुषायुषि प्रातःसवनसम्पत्तिस्तथा वक्ष्यमाणयोरपि पुरुषायुषोर्माध्यन्दिनं सवनं तृतीयसवनमिति सवनद्वयसम्पत्तिर्द्रष्टव्येत्याह—तथेति । चतुर्विंशतिवर्षमितपुरुषायुषि प्रातःसवनमतः संख्यासामान्याद्वक्ष्यमाणपुरुषायुषोः सवनद्वयसम्पत्ती किं कारणमित्याशङ्क्याऽऽह—त्रिष्टुबिति । चतुश्चत्वारिंशदक्षरा त्रिष्टुप्प्रसिद्धा । त्रैष्टुभं च माध्यन्दिनं सवनम् । अष्टाचत्वारिंशदक्षरा जगती । जागतं च तृतीयसवनम् । अतः संख्यासामान्यादुत्तरयोः पुरुषायुषोः सवनद्वयसम्पत्तिर्युक्तेत्यर्थः ।

पुरुषस्य यज्ञत्वे विधियज्ञेन सह सादृश्यान्तरमाह—किंचेति । प्रातःसवने वसूनां तद्देवतात्वेनान्वयात्तत्त्वमेव संक्षिपति—सवनदेवतात्वेन स्वामिन इत्यर्थ इति । वसूनां सवनस्वामित्वमुभयत्र तुल्यमित्युक्ते प्रसिद्धान्वसून्पुरुष-

---

१. पुरुषयज्ञः तैत्तिरीयकेऽपि श्रुतः स चास्मात् पुरुषयज्ञात् भिन्नो वा उतायमेव वा ? अभिन्नत्वे अत्रगतानां गुणानां तत्रोपसंहारः तत्रत्यानां चात्रोपसंहारः, भिन्नत्वे न गुणोपसंहारः इति फलभेदः । अयं विचारः तृतीयाध्यायस्य तृतीयपादे "पुरुषविद्यायामिव चेतरेषामनाम्नानात्" इत्यधिकरणे प्रवर्तितः । तैत्तिरीयके च "तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी" इत्यारभ्य पुरुषयज्ञः श्रुतः । तत्र च "विदुषो यज्ञस्ये"ति समानाधिकरणे षष्ठ्यौ विद्वानेव यो यज्ञः तस्येत्यर्थः । मरणावभृथत्वं चोभयत्र समानम्—इति विद्यैक्ये प्राप्ते तैत्तिरीयके आत्मनः विदुषो यजमानत्वोक्त्या तस्य यज्ञत्वं न सम्भवति । अतो विद्याभेद इति सिद्धान्तः ।

तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यन्दिनँ सवनमनुसन्तनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥ २ ॥ अथ यानि चतुश्चत्वारिँ शद्वर्षाणि तन्माध्यन्दिनँ सवनं चतुश्चत्वारिँ शदक्षरा त्रिष्टुप्त्रैष्टुभं माध्यन्दिनँ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदँ सर्वँ रोदयन्ति ॥ ३ ॥ तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनँ सवनं तृतीयसवनमनुसन्तनुतेति माऽहं प्राणानाँ रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥४॥ अथ यान्यष्टाचत्वारिँ शद्वर्षाणि तत्तृतीयसवनमष्टाचत्वारिँ शदक्षरा जगती जागतं तृतीयसवनं तदस्याऽऽदित्या अन्वायत्ताः प्राणा वावाऽऽदित्या एते हीदँ सर्वमाददते ॥ ५ ॥ तं चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥

स्वामिन इत्यर्थः। पुरुषयज्ञेऽपि विधियज्ञ इवाग्न्यादयो वसवो देवाः प्राप्ता इत्यतो विशिनष्टि—प्राणा वाव वसवो वागादयो वायवश्च। ते हि यस्मादिदं पुरुषादिप्राणिजातमेते वासयन्ति। प्राणेषु हिं देहे वसत्सु सर्वमिद वसति नान्यथा। इत्यतो वसनाद्वासनाच्च वसवः ॥ १ ॥

तं चेद्यज्ञसम्पादितमेतस्मिन्प्रातःसवनसम्पन्ने वयसि किञ्चिद्व्याध्यादि मरणशङ्काकारणमुपतपेद्दुःखमुत्पादयेत्स तदा यज्ञसम्पादी पुरुष आत्मानं यज्ञं मन्यमानो ब्रूयाज्जपेदित्यर्थः इमं मन्त्रं हे प्राणा वसव इदं मे प्रातःसवनं मम यज्ञस्य वर्तते तन्माध्यन्दिनं सवनमनुसन्तनुतेति माध्यन्दिनेन सवनेनाऽऽयुषा सहितमेकीभूतं सन्ततं कुरुतेत्यर्थः। माऽहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये विलोप्सीय विलुप्येय विच्छिद्येयेत्यर्थः। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। स तेन जपेन ध्यानेन च ततस्तस्मादुपतापादुदेत्युद्गच्छति। उद्गम्य विमुक्तः सन्नगदो ह्यनुपतापो भवत्येव ॥ २ ॥

अथ यानि चतुश्चत्वारिंशद्वर्षाणीत्यादि समानम्। रुदन्ति रोदयन्तीति प्राणा रुद्राः। क्रूरा हि ते मध्यमे वयस्यतो रुद्राः ॥ ३ ॥

तथाऽऽदित्याः प्राणाः। ते हीदं शब्दादिजातमाददतेऽत आदित्यास्तृतीयसवनमायुः षोडशोत्तरवर्षशतं समापयतानुसन्तनुत यज्ञं समापयतेत्यर्थः। समानमन्यत् ॥ ४-६ ॥

नरेन्द्रपुरीयं टिप्पणम्

पुरुषयज्ञविद्यायामङ्गभूतमाशीर्वादप्रयोगमाह—तं चेदित्यादिना ॥ २-७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य षोडशः खण्डः

आनन्दगिरिटीका

यज्ञेऽपि प्राप्तान्प्रत्युदस्यति—पुरुषयज्ञेऽपीति। तेषु वसुशब्दप्रवृत्तिं साधयति—ते हीति। निमित्तान्तरमाह—प्राणेषु हीति। प्राणानां वसुत्वमुपपादितमुपसंहरति—इत्यत इति ॥ १ ॥

सम्प्रति पुरुषयज्ञविद्याङ्गभूतमाशीर्वादप्रयोगं दर्शयति—तं चेदिति। अनुसन्तनुतेत्यत्रानुपदमेकीभावे। मन्त्रजपस्य सानुबन्धित्वं विधियज्ञेन ॥ २ ॥

समानं तस्य यानि चतुर्विंशतिवर्षाणीत्यादिनेति शेषः। प्राणेषु रुद्रशब्दप्रवृत्तौ निमित्तमाह—रुदन्तीति। यदुक्तं रोदयन्तीति रुद्रा इति तदुपपादयति—क्रूरा हीति ॥ ३ ॥

यथा प्राणा वसवो रुद्राश्चोक्तास्तथेति यावत्। तेष्वादित्यशब्दप्रवृत्तौ निमित्तमाह—ते हीति। तं चेदित्यादिना पूर्वेण ग्रन्थेन तं चेदेतस्मिन्नित्यादिवक्ष्यमाणग्रन्थस्य तुल्यार्थत्वान्न व्याख्यानापेक्षेत्याह—समानमन्यदिति ॥ ४-६ ॥

एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्र ह षोडशं वर्षशतं जीवति य एवं वेद[1] ॥ ७ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य षोडशः खण्डः

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥ २ ॥

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥ ३ ॥

निश्चिता हि विद्या फलायेत्येतद्दर्शयन्नुदाहरति—एतद्यज्ञदर्शनं ह स्म वै किल तद्विद्वानाह महिदासो नामतः। इतराया अपत्यमैतरेयः। किं कस्मान्मे ममैतदुपतपनमुपतपसि स त्वं हे रोग योऽहं यज्ञोऽनेन त्वत्कृतेनोपतापेन न प्रेष्यामि न मरिष्याम्यतो वृथा तव श्रम इत्यर्थः। इत्येवमाह स्मेति पूर्वेण सम्बन्धः। स एवंनिश्चयः सन्षोडशं वर्षशतमजीवत्। अन्योऽप्येवंनिश्चयः षोडशं वर्षशतं प्रजीवति य एवं यथोक्तं यज्ञसम्पादनं वेद जानाति स इत्यर्थः ॥७॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य षोडशः खण्डः

स यदशिशिषतीत्यादियज्ञसामान्यनिर्देशः पुरुषस्य पूर्वेणैव सम्बध्यते। यदशिशिषत्यशितुमिच्छति। तथा पिपासति पातुमिच्छति। यन्न रमत इष्टाद्यप्राप्तिनिमित्तं यदेवंजातीयकं दुःखमनुभवति ता अस्य दीक्षाः। दुःखसामान्याद्धियज्ञस्येव ॥ १ ॥

अथ यदश्नाति यत्पिबति यद्रमते रतिं चानुभवतीष्टादिसंयोगात्तदुपसदैः समानतामेति। उपसदां च पयोव्रतत्वनिमित्तं सुखमस्ति। अल्पभोजनीयानि चाहान्याश्वासन्नानीति प्रश्वासोऽतोऽशनादीनामुपसदां च सामान्यम् ॥२॥

अथ यद्धसति यज्जक्षति भक्षयति यन्मैथुनं चरति स्तुतशस्त्रैरेव तत्समानतामेति। शब्दवत्त्वसामान्यात् ॥३॥

नरेन्द्रपुरीयं टिप्पणम्

अपरमपि यज्ञाङ्गं सादृश्यात्सम्पाद्यत इत्याह—स यदशिशिषतीत्यादिना। अशिशिषादौ दीक्षादृष्टिः कर्तव्या, मौञ्ज्यभ्यञ्जनादिनियमबाहुल्येन दीक्षाया दुःखहेतुत्वादित्यर्थः ॥ १ ॥

आनन्दगिरिटीका

महिदासोदाहरणस्य तात्पर्यमाह—निश्चिता हीति। तदेतद्यज्ञदर्शनं विद्वानाह स्मेति सम्बन्धः। ह वा इति निपातयोः किलेत्यर्थः। उक्तस्य वोदाहरणस्य प्रसिद्धिविषयः। हे रोग कस्मान्मां त्वमुपतपसीति सम्बन्धः। कस्मादित्याक्षेपे हेतुमाह—योऽहमिति। यो यज्ञः सोऽहमनेनेति योजना। इतिशब्दस्यान्वयमाचष्टे—इत्येवमिति। निश्चिताया विद्याया ध्यानं प्रति फलं कथयति—स एवमिति। यद्यपि महिदासस्य यथोक्तनिश्चयवतो यथोक्तं तथाऽपीदानींतनस्य किमायातमित्याशङ्क्याऽऽह—अन्योऽपीति। प्रजीवतीति जीवनस्य प्रकर्षो रोगाद्युपतापराहित्यं प्रशब्देनोच्यते। एवंनिश्चय इत्युक्तं पुरुषं विशदयति—य एवमिति ॥ ७ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य षोडशः खण्डः

ननु पूर्वेणाऽऽशीर्वादप्रयोगेणोदाहरणेनैव समनन्तरग्रन्थस्य सम्बन्धो नोपलभ्यते तत्राऽऽह—स यदिति। पूर्वेण तस्य यानि चतुर्विंशतिवर्षाणीत्यादिना सादृश्यनिर्देशेनेत्यर्थः। एवंजातीयकमशनायादिकृतमिति यावत्। अशिशिषादिषु दीक्षादृष्टौ हेतुमाह—दुःखेति ॥ १ ॥

दीक्षावचनसादृश्यात्पुरुषस्य यज्ञत्वमुक्तमिदानीमुपसदुपेतत्वसादृश्यादपि तस्य यज्ञत्वं विज्ञेयमित्याह—अथेति। अशनादिषु कथमुपसद्दृष्टिस्तत्राऽऽह—उपसदां चेति। पयोव्रतत्वं पयोभक्षणयुक्तत्वम्। यज्ञे यान्यहाल्पभोजनीयानि प्रसिद्धानि तानि चोपसत्सु क्रियमाणान्याश्वासन्नानीति तासु प्रश्वासः स्वास्थ्यविशेषः। अशनादिषु च सोऽस्तीति प्रसिद्धमिति भावः। सुखनिमित्तत्वं क्लेशनिवृत्तिहेतुत्वं च सामान्यम् ॥ २ ॥

स्तुतशस्त्रवैशिष्ट्यसाम्यादपि पुरुषस्य यज्ञत्वमित्याह—अथ यदिति। हासादिषु स्तुतशस्त्रदृष्टौ हेतुमाह—शब्दवत्त्वेति ॥ ३ ॥

१. पुरुषविद्यायाम्।

अथ यत्तपो दानमार्जवमहिँ्सा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥

तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसँ्शितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः । धर्मपुष्टिकरत्वसामान्यात् ॥ ४ ॥

यस्माच्च यज्ञः पुरुषस्तस्मात्तं जनयिष्यति माता यदा तदाऽऽहुरन्ये सोष्यतीति तस्य मातरं यदा च प्रसूता भवति तदाऽसोष्ट पूर्णिकेति विधियज्ञ इव सोष्यति सोमं देवदत्तोऽसोष्ट सोमं यज्ञदत्त इति, अतः शब्दसामान्याद्वा पुरुषो यज्ञः । पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यत्यसोष्टेति शब्दसम्बन्धित्वं विधियज्ञस्येव । किञ्च तन्मरणमेवास्य पुरुषयज्ञस्यावभृथः समाप्तिसामान्यात् ॥ ५ ॥

तद्धैतद्यज्ञदर्शनं घोरो नामत आङ्गिरसो गोत्रतः कृष्णाय देवकीपुत्राय शिष्यायोक्त्वोवाच तदेतत्त्रयमित्यादिव्यवहितेन सम्बन्धः । स चैतद्दर्शनं श्रुत्वाऽपिपास एवान्याभ्यो विद्याभ्यो बभूव । इत्थं च विशिष्टेयं विद्या यत्कृष्णस्य देवकीपुत्रस्यान्यां विद्यां प्रति तृड्विच्छेदकरीति पुरुषयज्ञविद्यां स्तौति । घोर आङ्गिरसः कृष्णायोक्त्वेमां विद्यां किमुवाचेति तदाह—स एवं यथोक्तयज्ञविदन्तवेलायां मरणकाल एतन्मन्त्रत्रयं प्रतिपद्येत जपेदित्यर्थः । किं तदक्षितमक्षीणमक्षतं वाऽसीत्येकं यजुः सामर्थ्यादादित्यस्थं प्राणं चैकीकृत्याऽऽह । तथा तमेवाऽऽहाच्युतं स्वरूपादप्रच्युतमसीति द्वितीयं यजुः । प्राणसंशितं प्राणश्च स संशितं सम्यक्तनूकृतं च सूक्ष्मं तत्त्वमसीति तृतीयं यजुः । तत्रैतस्मिन्नर्थे विद्यास्तुतिपरे द्वे ऋचौ मन्त्रौ भवतो न जपार्थे । त्रयं प्रतिपद्येतेति त्रित्वसंख्याबाधनात् । पञ्चसंख्या हि तदा स्यात् ॥ ६ ॥

### नरेन्द्रपुरीयं टिप्पणम्

उपसच्छब्दवाच्या इष्टिस्तच्छ्रुतिवद्धं व्रतं श्रूयते "पयोव्रतं ब्राह्मणस्य स्यादि"त्यादि । ततस्सुखसाधनत्वसामान्यादशनादिषूपसद्दृष्टिः कर्तव्येत्यर्थः ॥ २-३-४ ॥

प्रकारान्तरेण पुरुषस्य यज्ञत्वं सम्पादयति—यस्माच्च यज्ञ इत्यादिना। "षूङ् प्राणिप्रसवे" षूङ् अभिषवे"इति धातुद्वयदर्शनात्प्रसवे कण्डने च सवनशब्दस्साधारणस्ततस्सवनशब्दवत्त्वसामान्याद्वा पुरुषे यज्ञदृष्टिः कर्तव्येत्यर्थः ॥५॥

विशिष्टपुरुषसम्बन्धसङ्कीर्तनेन विद्यां स्तोतुं विद्याङ्गजपञ्च विधातुमुपक्रमते—तद्धैतदित्यादिना । कं देवं प्रत्युच्यते अक्षितमसीति तत्राह—सामर्थ्यादिति निकृष्टस्य स्तुतिसम्बन्धानुपपत्तेः पुरुषयज्ञे सवनदेवतात्वेन प्राणानां प्रस्तुतत्वेन देवतान्तरस्याभिधानानुपपत्तेश्च प्राणानामेवाधिदैविकं रूपं सविता जप्यमन्त्रार्थत्वेन सम्बध्यत इत्यर्थः । जप्यमन्त्रप्रतिपाद्यं सावित्रं तत्त्वं ऋग्भ्यामपि प्रतिपादितमिति प्रत्ययदार्ढ्यार्थमाह—तत्रैतस्मिन्नित्यादिना ।

### आनन्दगिरिटीका

दक्षिणावत्त्वसाम्यादपि पुरुषस्य यज्ञत्वमवधेयमित्याह—अथेति । तपोदानादिषु दक्षिणादृष्टौ हेतुमाह—धर्मेति । प्रकारान्तरेण पुरुषस्य यज्ञत्वं साधयति—यस्माच्चेति । "षूङ् प्राणिप्रसवे" "षुञ् अभिषवे" इति धातुद्वयदर्शनात्प्रसवे कण्डने च साधारणः सवनशब्दस्ततः सवनशब्दवत्त्वसामान्याद्वा पुरुषे यज्ञदृष्टिः कर्तव्येत्यर्थः । पुरुषगतं शब्दसामान्यं विशदयति—पुनरिति । यत्पुनरस्य पुरुषाख्यस्य विधियज्ञस्येव सोष्यतीत्यादिशब्दसम्बन्धित्वं तदुत्पादनमेव तदिति योजना । अवभृथसम्बन्धित्वादपि पुरुषस्य यज्ञत्वमस्तीत्याह—किंचेति ॥ ५ ॥

पुरुषे यज्ञदृष्टिरुक्ता सम्प्रति विशिष्टपुरुषसम्बन्धेन विद्यां स्तोतुं विद्याङ्गं च जपं विधातुपक्रमते—तद्धैतदिति। देवकीपुत्रस्यैतद्दर्शनश्रवणफलमाह—स चेति । किमर्थेयं गुरुशिष्याख्यायिकेत्याह—इत्थं चेति । अक्षितमसीति कीदृशीं देवतां प्रत्युच्यते तत्राऽऽह—सामर्थ्यादिति । निकृष्टस्य स्तुतिसम्बन्धायोगात्पुरुषयज्ञे सवनदेवतान्तरानुपपत्तेश्च प्राणानामेवाऽऽधिदैविकं रूपमादित्याख्यं जप्यमन्त्रार्थत्वेन सम्बध्यत इत्यर्थः । द्वितीयमन्त्रस्यार्थान्तरं वारयति—तथेति । प्रथममन्त्रवदित्यर्थः । न च द्वयोरेकार्थत्वे सत्यन्यतरस्य वैयर्थ्यं द्वयोरपि जप्यत्वेनोपयुक्तत्वादिति द्रष्टव्यम् । मन्त्रत्रयप्रतिपाद्यं सावित्रं तत्त्वमृग्भ्यामपि प्रतिपादितमिति प्रत्ययदार्ढ्यार्थमाह—तत्रेति । किमिति विद्यास्तुति-

आदित्प्रत्नस्य रेतसः। उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरँ् स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्य सप्तदशः खण्डः

आदिदित्यत्राऽऽकारस्यानुबन्धस्तकारोऽनर्थक इच्छब्दश्च। प्रत्नस्य चिरन्तनस्य पुराणस्येत्यर्थः। रेतसः कारणस्य बीजभूतस्य जगतः सदाख्यस्य ज्योतिः प्रकाशं पश्यन्ति। आशब्द उत्सृष्टानुबन्धः पश्यन्तीत्यनेन सम्बध्यते। किं तज्ज्योतिः पश्यन्ति। वासरमहरहरिव तत्सर्वतो व्याप्तं ब्रह्मणो ज्योतिः। निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधनैः शुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः।

परः परमिति लिङ्गव्यत्ययेन, ज्योतिष्परत्वात्। यदिध्यते दीप्यते दिवि द्योतनवति परस्मिन्ब्रह्मणि वर्तमानम्। येन ज्योतिषेद्धः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते ग्रहतारागणा विभासन्ते।

किञ्चान्यो मन्त्रदृगाह यथोक्तं ज्योतिः पश्यन्। उद्वयं तमसोऽज्ञानलक्षणात्परि परस्तादिति शेषः। तमसो वाऽपनेतृ यज्ज्योतिरुत्तरमादित्यस्थं परिपश्यन्तो वयमुदगन्मेति व्यवहितेन सम्बन्धः। तज्ज्योतिः स्वः स्वमात्मीयमस्मद्धृदि स्थितम्। आदित्यस्थं च तदेकं ज्योतिः। यदुत्तरमुत्कृष्टतरमूर्ध्वतरं वाऽपरं ज्योतिरपेक्ष्य पश्यन्त उदगन्म

नरेन्द्रपुरीयं टिप्पणम्

स्वःपश्यन्त इति शाखान्तरीयपाठं व्याचष्टे। स्व आत्मीयमिति ज्योतिरुत्तममित्यस्य समस्तपदत्वान्न पौनरुक्त्यम् ॥ ६-७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य सप्तदशः खण्डः

आनन्दगिरिटीका

परत्वमनयोरिष्यते जपार्थत्वमेव किं न स्यात्तत्राऽऽह—नेत्यादिना। अनयोर्जपार्थत्वेऽपि त्रित्वसंख्यायाः सत्त्वान्न सा बाध्येत्याशङ्क्याऽऽह—पञ्चेति। अनयोर्जप्यत्वे पञ्चकं प्रतिपद्येतेति पञ्चसंख्याया वक्तव्यत्वात्त्रित्वं बाधितं स्यादित्यर्थः ॥ ६ ॥

"आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम्। परो यदिध्यते दिवि" इति मन्त्रस्य प्रतीकग्रहणमादित्प्रत्नस्य रेतस इति, तत्पदच्छेदपूर्वकं व्याचष्टे—आदित्यादिना। इच्छब्दश्चानर्थक इति पूर्वेण सम्बन्धः। किं तत्कारणमित्यपेक्षायां सदेव सोम्येदमित्यादिश्रुतिसिद्धं ब्रह्मेत्याह—सदाख्यस्येति। आनन्दं ब्रह्मणो विद्वानितिवत्प्रत्नस्य ज्योतिरिति सम्बन्धो द्रष्टव्यः। उत्सृष्टानुबन्धो ध्वस्ततकारः स इति यावत्। ननु ब्रह्मस्वरूपभूतमेतज्ज्योतिर्नैव सर्वे पश्यन्तो दृश्यन्ते तत्राऽऽह—निवृत्तचक्षुष इति। निवृत्तानि विमुखीकृतानि विषयेभ्यश्चक्षूंषि करणानि येषां ते तथा। अत एव ब्रह्मविदः, "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" इति श्रुत्यन्तरम्। तत्रैवोपायान्तरं सूचयति—ब्रह्मचर्यादीति।

"स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्।
सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः।
विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥"

[ इत्युक्तं ] ब्रह्मचर्यम्। आदिपदेनाहिंसाऽस्तेयादयो गृह्यन्ते। एतैर्निवृत्तिप्रधानैः साधनैः शुद्धमुद्दीपितमन्तःकरणं येषां ते तथा। व्यत्यये हेतुमाह—ज्योतिष्परत्वादिति। यत्स्वमहिमप्रतिष्ठितं दीप्यते तत्परं ज्योतिरिति सम्बन्धः। दीप्यमानत्वं विवृणोति—येनेति।

मन्त्रान्तरमवतारयति—किञ्चेति। इतश्च विद्यास्तुत्यर्थेति यावत्। किमाहेत्यपेक्षायां द्वितीयं मन्त्रमादत्ते—उद्वयमिति। तं व्याकरोति—तमस इत्यादिना। तस्यैव ज्योतिषः प्रभाने ज्योतिर्नान्यदस्तीत्यर्थः। देवत्वेन प्रत्यगात्मत्वमाह—स्वरिति। तयोरेकत्वं "स यश्चायमि"त्यादिषु श्रुत्यन्तरसिद्धं दर्शयति—आदित्यस्थमिति। तत्पदार्थं त्वंपदार्थं चोक्त्वा तयोरैक्यमुक्तमिदानीमेकीभूतं ज्योतिर्विशिनष्टि—यदुत्तरमिति। एकत्वधीफलं कथयति—पश्यन्त

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥१॥**
**तदेतच्चतुष्पाद्ब्रह्म वाक्पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवाऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥२॥**

वयम् । कमुदगन्मेत्याह । देवं द्योतनवन्तं देवत्रा देवेषु सर्वेषु सूर्यं रसानां रश्मीनां प्राणानां च जगत ईरणात्सूर्यस्त-मुदगन्म गतवन्तो ज्योतिरुत्तमं सर्वज्योतिर्भ्य उत्कृष्टतममहो प्राप्ता वयमित्यर्थः। इदं तज्ज्योतिर्यदृग्भ्यां स्तुतं यद्यजुस्त्रयेण प्रकाशितम् । द्विरभ्यासो यज्ञकल्पनापरिसमाप्त्यर्थः ॥ ७ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्य सप्तदशः खण्डः

मनोमय ईश्वर उक्त आकाशात्मेति च ब्रह्मणो गुणैकदेशत्वेन । अथेदानीं मनआकाशयोः समस्तब्रह्मदृष्टि-विधानार्थं आरम्भो मनो ब्रह्मेत्यादि । मनो मनुतेऽनेनेत्यन्तःकरणं तद्ब्रह्म परमित्युपासीतेति एतदात्मविषयं दर्शनमध्यात्मम् । अथाधिदैवतं देवताविषयमिदं वक्ष्यामः । आकाशो ब्रह्मेत्युपासीत । एवमुभयमध्यात्ममधिदैवतं चोभयं ब्रह्मदृष्टिविषयमादिष्टमुपदिष्टं भवति । आकाशमनसोः सूक्ष्मत्वात् । मनसोपलभ्यत्वाच्च ब्रह्मणो योग्यं मनो ब्रह्मदृष्टेः । आकाशश्च सर्वगतत्वात्सूक्ष्मत्वादुपाधिहीनत्वाच्च ॥ १ ॥

तदेतन्मन आख्यं चतुष्पाद्ब्रह्म, चत्वारः पादा अस्येति । कथं चतुष्पात्त्वं मनसो ब्रह्मण इत्याह—वाक्प्राणश्चक्षुः श्रोत्रमित्येते पादा इत्यध्यात्मम् । अथाधिदैवतमाकाशस्य ब्रह्मणोऽग्निर्वायुरादित्यो दिश इत्येते । एवमुभयमेव चतुष्पाद्ब्रह्माऽऽदिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥ २ ॥

नरेन्द्रपुरीयं टिप्पणम्

उत्तरखण्डस्य व्यवहितेन सम्बन्धमाह—**मनोमय इत्यादिना** । ब्रह्मगुणस्यैकदेशत्वेन मनआकाशश्चोक्तौ तद्ग्रहणाशक्तस्य मनआकाशयोस्सम्पूर्णब्रह्मदृष्टिरुच्यत इत्यर्थः । प्रतीकान्तराणि विहाय मनआकाशयोर्ब्रह्मदृष्टिकरणे कारणञ्चास्तीत्याह—**आकाशमनसोरिति** ॥ १ ॥

अध्यात्ममधिदैवतञ्च विहितस्योपासनाङ्गानुचिन्तनमाह—**तदेतन्मन आख्यमित्यादिना** । प्रतितिष्ठति गच्छति ॥ २-६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्याष्टादशः खण्डः

आनन्दगिरिटीका

इति । फलमेव प्रश्नपूर्वकं विवृणोति—**कमित्यादिना** । फलविषयं स्वानुभवं दर्शयति—**अहो इति** । मन्त्राणां मन्त्रयोश्चैकवाक्यत्वमुपसंहरति—**इदं तदिति** ॥ ७ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य सप्तदशः खण्डः

ननु यज्ञविज्ञानेन वक्ष्यमाणविज्ञानस्य न सङ्गतिरस्तीति कथं पौर्वापर्यमित्याशङ्क्यानन्तरखण्डस्य व्यवहितेन सम्बन्धमाह—**मनोमय इति** । इति चेश्वर उक्त इति पूर्वेण सम्बन्धः । तत्र ब्रह्मणो गुणयोरेकदेशत्वेन मन आकाशश्चोक्त इत्याह—**ब्रह्मण इति** । यथोक्तगुणकब्रह्मदृष्ट्यसमर्थस्य तयोरेव सम्पूर्णब्रह्मदृष्टिकथनार्थमुत्तर-ग्रन्थमवतारयति—**अथेति** । एवमुभयमुपदिष्टं भवतीति सम्बन्धः । तदेवोभयं विभजते—**अध्यात्ममिति** । कथं मनोदृष्टिविषयत्वेनाध्यात्मं मनो ब्रह्मेत्युपासनं विधित्स्यते तत्राऽऽह—**मनसेति** । तथाऽपि कथं ब्रह्मदृष्टेराकाशं विषयी-भवति न हि तेनोपलभ्यते ब्रह्मेत्याशङ्क्याऽऽह—**आकाशश्चेति** । ब्रह्मदृष्टेर्योग्यमिति पूर्वेण सम्बन्धः ॥ १ ॥

अध्यात्ममधिदैवतं च विहितस्योपासनस्याङ्गानुचिन्तनं दर्शयति—**तदेतदिति** । मनसश्चतुष्पात्त्वं प्रश्नपूर्वकं व्युत्पादयति—**कथमित्यादिना** । आधिदैविकस्याऽऽकाशस्य चतुष्पात्त्वं प्रकटयति—**अथेत्यादिना** । मनआकाशयोरुक्तं चतुष्पात्त्वं निगमयति—**एवमिति** ॥ २ ॥

वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥ प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥ चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपतिं च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥ श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ ६ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्याष्टादशः खण्डः

आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् । तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् ॥१॥

तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पाद इतरपादत्रयापेक्षया । वाचा हि पादेनेव गवादि वक्तव्यविषयं प्रति प्रतितिष्ठति । अतो मनसः पाद इव वाक् । तथा प्राणो घ्राणः पादः । तेनापि गन्धविषयं प्रति चङ्क्रमति । तथा चक्षुः पादः श्रोत्रं पाद इत्येवमध्यात्मं चतुष्पात्त्वं मनसो ब्रह्मणः । अथाधिदैवतमग्निवाय्वादित्यदिश आकाशस्य ब्रह्मण उदर इव गोः पादा विलग्ना उपलभ्यन्ते । तेन तस्याऽऽकाशस्याग्न्यादयः पादा उच्यन्ते । एवमुभयमध्यात्मं चैवाधिदैवतं चतुष्पादादिष्टं भवति । तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः । सोऽग्निनाऽधिदैवतेन ज्योतिषा भाति च दीप्यते तपति च सन्तापं चौष्ण्यं करोति । अथवा तैलघृताद्याग्नेयाशनेनेद्धा वाग्भाति च तपति च वदनायोत्साहवती स्यादित्यर्थः । विद्वत्फलं भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं यथोक्तं वेदः ॥ ३ ॥

तथा प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना गन्धाय भाति च तपति च । तथा चक्षुरादित्येन रूपग्रहणाय श्रोत्रं दिग्भिः शब्दग्रहणाय । विद्याफलं समानं सर्वत्र ब्रह्मसम्पत्तिरदृष्टं फलं य एवं वेद । द्विरुक्तिर्दर्शनसमाप्त्यर्था ॥ ४-५-६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्याष्टादशः खण्डः

आदित्यो ब्रह्मणः पाद उक्त इति तस्मिन्सकलब्रह्मदृष्ट्यर्थमिदमारभ्यते - आदित्यो ब्रह्मेत्यादेश

आनन्दगिरिटीका

आध्यात्मिकान्पादान्प्रपञ्चयति—तत्रेति । पादत्वं वाचो व्युत्पादयति—वाचा हीति । यथा गवादि गन्तव्यं पादेनैव प्राप्नोति देवदत्तोऽपि वाचैव पादेन वक्तव्यं विषयं प्रतिलभते । तेन तस्या युक्तं पादत्वमित्यर्थः । प्राणस्य वाच इव पादत्वं दर्शयति—तेनापीति । आधिदैविकान्पादान्विवृणोति—अथेति । यथा गोरुदरे पादा लग्ना लक्ष्यन्ते तथाऽऽकाशस्योदर इवाग्न्यादयो लग्ना दृश्यन्ते । तस्मात्तस्य ते पादा इव भवन्तीत्यर्थः । द्विविधपादविवरणमुपसंहरति—एवमिति । सम्प्रत्याध्यात्मिकपादानामाधिदैविकपादैरधिष्ठेयतया सम्बन्धोऽनुचिन्तनीय इति दर्शयितुमुपक्रमते—तत्रेति । सोऽग्निनेत्यादेरर्थान्तरमाह—अथवेति । कीर्तियशसोः प्रत्यक्षत्वपरोक्षत्वाभ्यां भेदः ॥३॥ सर्वत्रेत्युभयतः सम्बध्यते ॥ ४-५-६ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्याष्टादशः खण्डः

खण्डान्तरस्य सङ्गतिमाह—आदित्य इति । तस्येत्यादित्यो गृह्यते । अनभिव्यक्तनामरूपत्वाभिप्रायेणा-

उपदेशस्तस्योपव्याख्यानं क्रियते स्तुत्यर्थम्। [1]असदव्याकृतनामरूपमिदं जगदशेषमग्रे प्रागवस्थायामुत्पत्तेरासीन्न त्वसदेव। कथमसतः सज्जायेतेत्यसत्कार्यत्वस्य प्रतिषेधात्। नन्विहासदेवेति विधानाद्विकल्पः स्यात्। न, क्रियास्विव वस्तुनि विकल्पानुपपत्तेः[2]। कथं तर्हीदमसदेवेति। नन्ववोचामाव्याकृतनामरूपत्वादसदिवासदिति। नन्वेवशब्दोऽवधारणार्थः। सत्यमेवं, न तु सत्त्वाभावमवधारयति। किं तर्हि? व्याकृतनामरूपाभावमवधारयति नामरूपव्याकृतविषये सच्छब्दप्रयोगो दृष्टः। तच्च नामरूपव्याकरणमादित्यायत्तं प्रायशो जगतः। तदभावे ह्यन्धं तम इदं न प्रज्ञायेत किञ्चनेत्यतस्तत्स्तुतिपरे वाक्ये सदपीदं प्रागुत्पत्तेर्जगदसदेवेत्यादित्यं स्तौति ब्रह्मदृष्ट्यर्हत्वाय। आदित्यनिमित्तो हि लोके सदिति व्यवहारः। यथाऽसदेवेदं राज्ञः कुलं सर्वगुणसम्पन्ने पूर्णवर्मणि राजन्यसतीति तद्वत्। न च सत्त्वमसत्त्वं वेह जगतः प्रतिपिपादयिषितमादित्यो ब्रह्मेत्यादेशपरत्वात्। उपसंहरिष्यत्यन्त आदित्यं ब्रह्मेत्युपास्त इति।

तत्सदासीत्तदसच्छब्दवाच्यं प्रागुत्पत्तेः स्तिमितमनिस्पन्दमसदिव सत्कार्याभिमुखमीषदुपजातप्रवृत्ति सदा-

नरेन्द्रपुरीयं टिप्पणम्

अनभिव्यक्तनामरूपाभिप्रायेणासच्छब्दो गौणो व्याख्यातः। तत्रैवकारावष्टम्भेन शङ्कते—नन्विहेति। कथमसतस्सज्जायेतेत्यसत्कारणस्य षष्ठे निराकरिष्यमाणत्वात्तत्र सत्कारणं भवतु। अत्र त्वसत्वावधारणादसत्कारणं भविष्यतीत्युदितानुदितहोमवद्विकल्प इत्यर्थः। क्रियायाः कर्तृतन्त्रत्वात्कर्तुरिच्छया भवेद्विकल्पः। सिद्धस्य तु कर्त्रिच्छाननुविधायित्वान्न विकल्पस्सम्भवति। न हि स्थाणुः कस्यचिदिच्छया पुरुषो भवतीत्याह—न क्रियास्विवेति। पूर्वकालीनसत्वाभिधायकासीच्छब्दस्य वाक्यशेषे श्रवणान्नोपक्रमे सत्वाभावावधारणं विवक्षितम्। अभिव्यक्त्यवधारणमादित्यस्तुत्यर्थमित्याह—सत्यमेवमित्यादिना। किञ्चोपक्रमोपसंहारैकरूप्येण आदित्ये ब्रह्मदृष्टिविधिपरमिदं वाक्यं न तस्य कारणसत्वे तात्पर्यं कल्पयितुं शक्यत इत्याह—न च सत्यत्वमिति। ईषदुपजातप्रवृत्तीति

आनन्दगिरिटीका

सच्छब्दो गौणो व्याख्यातस्तत्रैवकारावष्टम्भेन शङ्कते—नन्विहेति। कथमसतः सज्जायेतेत्यसत्कारणत्वस्य षष्ठे निराकरिष्यमाणत्वात्तत्र सत्कारणं भवतु प्रकृते तु सावधारणादसच्छब्दादसदेव कारणं विवक्षितमित्युदितानुदितहोमवद्विकल्प इत्यर्थः। क्रियायाः कर्तृतन्त्रत्वात्तदिच्छया तत्र विकल्पात्, वस्तुनस्तु सिद्धस्य तदिच्छाननुविधायित्वान्नविकल्पः सम्भवति। न हि स्थाणुरेव कस्यचिदपेक्षया पुरुषो भवतीति परिहरति—न क्रियास्विवेति। विकल्पासम्भवे वाक्यस्य गतिर्वक्तव्येति पृच्छति—कथमिति। असच्छब्दस्य वा गतिरवधारणस्य वा पृच्छ्यते? तत्राऽऽद्यं प्रत्याह—नन्विति। द्वितीयं शङ्कते—नन्वेवशब्द इति। तस्य का गतिरिति शेषः। पूर्वकालीनसत्त्वाभिधायकासीच्छब्दस्य वाक्यशेषे श्रवणान्नोपक्रमेऽपि सत्त्वाभावावधारणं विवक्षितं किन्त्वभिव्यक्त्यभावावधारणमादित्यस्तुत्यर्थमिति समाधत्ते—सत्यमेवमिति। क्व पुनरियमादित्यस्तुतिरुपयुज्यते तत्राऽऽह—ब्रह्मदृष्टीति। जगतो नामरूपव्याकरणमादित्यायत्तमिति तदुपपादयति—आदित्येति। तथाऽपि कथमादित्यस्तुतिरित्याशङ्क्य दृष्टान्तेन दर्शयति—यथेति। किञ्चोपक्रमोपसंहारैकरूप्येणाऽऽदित्ये ब्रह्मदृष्टिविधिपरमिदं वाक्यं न तस्य कारणसत्त्वे तात्पर्यं कल्पयितुं शक्यमनन्यथासिद्धकल्पकाभावादित्याह—न चेति। तत्परत्वं कथमवगतमित्याशङ्क्योपसंहारस्योपक्रमानुसारित्वादित्याह—उपसंहरिष्यतीति।

कथं तस्यासच्छब्दवाच्यत्वं तदाह—स्तिमितमिति। सत्त्वं तर्हि कथमिति तदाह—कार्येति। बीजस्योच्छून-

१. असदेवेदमग्र आसीत्—अत्र असतः शशविषाणकल्पस्य कारणत्वासम्भवात् प्रागुत्पत्तेः अनभिव्यक्तनामरूपं ब्रह्म असच्छब्देनाभिधीयते। अत एव तत्सदासीदिति असदेवाकृष्य तत्र सच्छब्दः प्रयुज्यते। इदमुक्तं "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः", "समाकर्षात्" इति सूत्राभ्याम्। (१-४-१४-१५)

२. वस्तुनि विकल्पानुपपत्तेरिति—क्रियायां विकल्पो दृश्यते अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति। वस्तुनि तु एकरूपत्वाद् द्रष्टुः स्थाणुर्वा पुरुषो वेति विकल्पबुद्धावपि न वस्तुभेद इत्यर्थः।

तद्यद्रजतँ् सेयं पृथिवी यत्सुवर्णँ् सा द्यौर्यज्जरायु ते पर्वता यदुल्वँ् स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेयमुदकँ् स समुद्रः ॥ २ ॥

अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूद-तिष्ठन्त्सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे च कामाः ॥ ३ ॥

सोऽसत्ततो लब्धपरिस्पन्दं तत्समभवदल्पतरनामरूपव्याकरणेनाङ्कुरीभूतमिव बीजम्। ततोऽपि क्रमेण स्थूलीभवत्तदद्भ्य आण्डं समवर्तत संवृत्तम्। आण्डमिति दैर्घ्यं छान्दसम्। तदण्डं संवत्सरस्य कालस्य प्रसिद्धस्य मात्रां परिमाणम-भिन्नस्वरूपमेवाशयत स्थितं बभूव। तत्ततः संवत्सरपरिमाणात्कालादूर्ध्वं निरभिद्यत निर्भिन्नं वयसामिवाण्डम्। तस्य निर्भिन्नस्याण्डस्य कपाले द्वे रजतं च सुवर्णं चाभवतां संवृत्ते ॥ १ ॥

तत्तयोः कपालयोर्यद्रजतं कपालमासीत्सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः। यत्सुवर्णं कपालं सा द्यौर्द्युलोकोपलक्षितमूर्ध्वं कपालमित्यर्थः। यज्जरायु गर्भपरिवेष्टनं स्थूलमण्डस्य द्विशकलीभावकाल आसीत्ते पर्वता बभूवुः। यदुल्वं सूक्ष्मं गर्भपरिवेष्टनं तत्सह मेघैः समेघो नीहारोऽवश्यायो बभूवेत्यर्थः। या गर्भस्य जातस्य देहे धमनयः शिरास्ता नद्यो बभूवुः। यत्तस्य बस्तौ भवं वास्तेयमुदकं स समुद्रः ॥ २ ॥

अथ यत्तदजायत गर्भरूपं तस्मिन्नण्डे सोऽसावादित्यस्तमादित्यं जायमानं घोषाः शब्दा उलूलव उरूरवो विस्तीर्णरवा उदतिष्ठन्नुत्थितवन्त ईश्वरस्येवेह प्रथमपुत्रजन्मनि सर्वाणि च स्थावरजङ्गमानि भूतानि सर्वे च तेषां भूतानां कामाः काम्यन्त इति विषयाः स्त्रीवस्त्रान्नादयः। यस्मादादित्यजन्मनिमित्ता भूतकामोत्पत्तिस्तस्मादद्यत्वेऽपि तस्याऽऽदित्यस्योदयं प्रति प्रत्यायनं प्रत्यस्तगमनं च प्रत्यथवा पुनः पुनः प्रत्यागमनं प्रत्यायनं तत्प्रति तन्निमित्ती-कृत्येत्यर्थः। सर्वाणि च भूतानि सर्वे च कामा घोषा उलूलवश्चानूत्तिष्ठन्ति। प्रसिद्धं ह्येतदुदयादौ सवितुः ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

बीजस्योच्छूनतावत्कारणस्य सिसृक्षावस्थोच्यते—लब्धपरिस्पन्दमिति। लब्धपरिणामं भूतसूक्ष्माकारेणाभवदित्यर्थः। क्रमेणेति। पञ्चीकरणप्रक्रियया अन्योन्यावयवानुप्रवेशेन स्थूलभूतावस्थं भवतीत्यर्थः। अद्भ्यः इत्यप्सहितेभ्यो भूतेभ्य इत्यर्थः ॥ १ ॥

अवश्यायो हिमः बभूवेत्यर्थः ॥ २ ॥

उलूलव इति शब्दविशेषा उत्सवकालीना गौडदेशे प्रसिद्धाः ॥ ३ ॥

### आनन्दगिरिटीका

तावत्कारणस्य सिसृक्षावस्थां दर्शयति—ईषदिति। लब्धपरिस्पन्दं प्राप्तपरिणामं सद्भूतसूक्ष्माकारेणाभवदित्यर्थः। सूक्ष्मभूतोत्पत्त्यनन्तरं स्थूलभूतोत्पत्तिमाह—ततोऽपीति। भूतसूक्ष्माकारप्राप्तेरनन्तरं पञ्चीकरणप्रक्रिययाऽन्योन्या-वयवानुप्रवेशेन स्थूलभूतावस्थमासीत्यर्थः। स्थूलेभ्यश्च भूतेभ्योऽण्डनिर्वृत्तिं प्रतिजानीते—अद्भ्य इति। अप्सहितेभ्यो भूतेभ्य इत्यर्थः ॥ १ ॥

अवश्यायशब्देन हिममुच्यते ॥ २ ॥

उलूलव इत्युत्सवकालीनाः शब्दविशेषा देशविशेषे प्रसिद्धाः। स्त्रीवस्त्रान्नादय उदतिष्ठन्निति पूर्वेण सम्बन्धः। किमत्र प्रमाणमित्याशङ्क्याऽऽह—प्रसिद्धं हीति। एतदिति भूताद्युत्थानम् ॥ ३ ॥

स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह यदेनँ साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्यैकोनविंशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे तृतीयोऽध्यायः समाप्तः

स यः कश्चिदेतमेवं यथोक्तमहिमानं विद्वान्सन्नादित्यं ब्रह्मेत्युपास्ते स तद्भावं प्रतिपद्यत इत्यर्थः। किञ्च दृष्टं फलमभ्याशः क्षिप्रं तद्विदो यदिति क्रियाविशेषणमेनमेवंविदं साधवः। शोभना घोषाः। साधुत्वं घोषादीनां यदुपभोगे पापानुबन्धाभावः। आ च गच्छेयुरागच्छेयुश्चोप च निम्रेडेरन्नुपनिम्रेडेरंश्च न केवलमागमनमात्रं घोषाणामुपसुखयेयुश्चोपसुखं च कुर्युरित्यर्थः। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः आदरार्थश्च ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये तृतीयाध्यायस्यैकोनविंशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ च्छान्दोग्योपनिषद्विवरणे तृतीयोऽध्यायः

## नरेन्द्रपुरीयं टिप्पणम्

क्रियाविशेषणमिति। साधवो घोषा आगच्छेयुरिति यत्तत् क्षिप्रमेवाप्रतिबन्धेनैवेत्यर्थः ॥ ४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां तृतीयाध्यायस्य एकोनविंशः खण्डः

इति श्रीशाङ्करच्छान्दोग्यभाष्यटिप्पण्यां तृतीयोऽध्यायः

## आनन्दगिरिटीका

अदृष्टफलमाहत्योक्त्वा दृष्टफलमाचष्टे—किञ्चेति। तद्विदो दृष्टफलमिति सम्बन्धः—क्रियाविशेषणमिति। एवंविदं साधवो घोषा आगच्छेयुरिति यत्तत्क्षिप्रमप्रतिबन्धेनैवेत्यर्थः। आदित्ये ब्रह्मदृष्टिरादरस्य विषयः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्यैकोनविंशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां च्छान्दोग्यभाष्यटीकायां तृतीयोऽध्यायः

अस्याः छान्दोग्योपनिषदः आदितः पञ्चाध्यायाः प्रायेणोपासनाविधिपराः। षष्ठाध्यायो निर्गुणब्रह्मपरो जीवब्रह्मैक्यस्य, जीवन्मुक्तेश्च निर्धारणपरश्च। सप्तमे भूमविद्या निर्गुणब्रह्मपरा। "नाम ब्रह्मेत्युपासीते"त्यादिकं तु प्रतीकोपासनपरम्। अष्टमाध्यायः प्रजापतिविद्यामारभ्य निर्गुणब्रह्मपरः आदौ दहरोपासनाविधिपरः।

उपासनानि त्रिविधानि—अहंग्रहोपासनं, प्रतीकोपासनं, कर्माङ्गावबद्धोपासनं चेति। तत्र गायत्रीविद्या, ज्योतिर्विद्या, शाण्डिल्यविद्या, अक्षिपुरुषविद्या, जाबालविद्या, रैक्वविद्या, अन्तरादित्यब्रह्मविद्या चाहंग्रहोपासनारूपाः। प्रतीकोपासनं च अध्यासः, सम्पदिति द्विधा। आरोप्यप्रधाना सम्पदुपासना यथा—उद्गीथे आकाशाख्यब्रह्मोपासना। अध्यासश्च—आदित्यं ब्रह्मेत्युपास्ते, उद्गीथे प्राणदृष्टिः, मनसि ब्रह्मदृष्टिरित्यादयः। अधिष्ठानप्रधाना इमाः। तृतीयम्—उद्गीथावयवप्रणवे ब्रह्मदृष्टिः इत्यादि। उपासनानि बह्वीषु शाखासु प्रतिपाद्यन्ते यथा प्राणविद्या छान्दोग्यबृहदारण्यकयोः शाण्डिल्यविद्या इह शतपथब्राह्मणे च। तत्र यद्यपि विद्यानां क्वचिदुपास्यविषये प्रायः उपासनाङ्गेषु वैलक्षण्यं स्यात्, यथा पञ्चाग्निविद्यायां बृहदारण्यके षष्ठाग्निकथनम्, अङ्गाधिक्यं च तैत्तिरीयकोक्तदहरविद्यायां तथापि न विद्याभेदः "सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्" इति न्यायात्। यथा भिन्नशाखाम्नातानामग्निहोत्रादीनां न भेदः, परन्तु अतिरिक्ताङ्गानि स्वशाखासूपसंहृत्य कर्माण्यनुष्ठेयानि तद्वत्। भिन्नशाखासूपासनानां कर्मणां च विधानं तत्तच्छाखिनामुपयोगाय। "स्वाध्यायोऽध्येतव्यः" इति विधिना एकेन पुरुषेण स्वकुलक्रमागतशाखामात्राध्ययननियमात्। परन्तु शाखान्तरं दृष्टप्रयोजनायाध्येतुं शक्यते प्रतिषेधाभावात्। अत एव सर्वे यजुर्वेदिनः कठवाजसनेयादिशाखागतोपनिषदध्ययनमपि कुर्वन्ति।

सर्वाण्युपासनानि कर्तव्यानीति न नियमः चित्तविक्षेपप्रसंगात्। अत एव "विकल्पोऽविशिष्टफलत्वात्" इतिसूत्रेण ब्रह्मलोकप्रापकाणां सर्वेषामुपासनानां विकल्पः न तु समुच्चयः इत्युक्तम्। अत एव शिवविष्णुदुर्गागणपत्याद्युपासनानां विकल्प एव एकफलकत्वादिति सिद्धान्तः। अहंग्रहोपासनानां फलं तु ब्रह्मलोकस्थेन ब्रह्मणा सगुणेश्वरेण वा प्राणोपासनादिषु हिरण्यगर्भरूपसमष्टिप्राणेन एकीभावः "सायुज्यं गच्छती"त्युक्तेः। अत एव ब्रह्म लोकप्रापकः अर्चिरादिमार्गोऽपि ध्यातव्यः उपासकेनेत्युक्तं भाष्यकारेण।

# अथ चतुर्थोऽध्यायः

ॐ । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस । स ह सर्वत आवसथान्मापयाञ्चक्रे सर्वत एव मेऽन्नमत्स्यन्तीति ॥ १ ॥

अथ ह हँसा निशायामतिपेतुस्तद्धैवँ हँसो हँसमभ्युवाद हो होऽयि भल्लाक्ष भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥ २ ॥

वायुप्राणयोर्ब्रह्मणः पाददृष्टचध्यासः पुरस्ताद्वर्णितः। अथेदानीं तयोः साक्षाद्ब्रह्मत्वेनोपास्यत्वायोत्तरमारभ्यते। सुखावबोधार्थाऽऽख्यायिका, विद्यादानग्रहणविधिप्रदर्शनार्था च श्रद्धान्नदानानुद्धतत्वादीनां च विद्याप्राप्तिसाधनत्वं प्रदर्श्यत आख्यायिकया। जानश्रुतिर्जनश्रुतस्यापत्यम्। ह ऐतिह्यार्थः। पुत्रस्य पौत्रः पौत्रायणः स एव श्रद्धादेयः श्रद्धापुरःसरमेव ब्राह्मणादिभ्यो देयमस्येति श्रद्धादेयः। बहुदायी प्रभूतं दातुं शीलमस्येति बहुदायी। बहुपाक्यो बहु पक्तव्यमहन्यहनि गृहे यस्यासौ बहुपाक्यः। भोजनार्थिभ्यो बह्वस्य गृहेऽन्नं पच्यत इत्यर्थः। एवंगुणसम्पन्नोऽसौ जानश्रुतिः पौत्रायणो विशिष्टे देशे काले च कस्मिंश्चिदास बभूव। स ह सर्वतः सर्वासु दिक्षु ग्रामेषु नगरेषु चाऽऽवसथानेत्य वसन्ति येष्वित्यावसथास्तान्मापयाञ्चक्रे कारितवानित्यर्थः। सर्वत एव मे ममान्नं तेष्वावसथेषु वसन्तोऽत्स्यन्ति भोक्ष्यन्त इत्येवमभिप्रायः॥ १॥

तत्रैवं सति राजनि तस्मिन्घर्मकाले हर्म्यतलस्थेऽथ ह हंसा निशायां रात्रावतिपेतुः। ऋषयो देवता वा

नरेन्द्रपुरीयं टिप्पणम्

सूत्रावच्छेदभेदत्वादादित्यस्येह शास्त्रतः।
आदित्योपासनादूर्ध्वं सूत्रोपासनमुच्यते॥

अध्यात्ममधिदैवं च वायुप्राणयोः सूत्रात्मकयोरुपासनं पूर्वाध्यायेऽप्युक्तम्। ततः कोऽत्र विशेष इत्यत आह—वायुप्राणयोरिति। ब्रह्मत्वेनेति कार्यब्रह्मरूपेणेत्यर्थः।

"धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे॥

इति शास्त्रार्थं जानन् रैक्वः पुष्कलं धनमादाय विद्यां प्रादाज्जानश्रुतिश्च पुष्कलं धनं दत्त्वैव विद्यामाददे। ततोऽन्योऽप्याददीतेति विधिप्रदर्शनार्था वाऽऽख्यायिकेत्यर्थः॥ १॥

आनन्दगिरिटीका

आदित्यस्य सूत्रावच्छेदभेदत्वात्तदुपासनानन्तरं सूत्रोपासनमुपन्यस्ते। नन्वध्यात्ममधिदैवतं च वायुप्राणयोः सूत्रात्मभूतयोरुपासनं पूर्वाध्यायेऽपि व्याख्यातं तथा च कोऽत्र विशेषो येन तदुपासनं पुनरारभ्यतेऽत आह—वायुप्राणयोरिति। साक्षात्पादकल्पनं विनेति यावत्। ब्रह्मत्वेन ब्रह्मकार्यरूपेणेत्यर्थः। विद्येति।

"धर्मार्थौ यत्र न स्यातां शुश्रूषा वाऽपि तद्विधा। तत्र विद्या न वप्तव्या शुभं बीजमिवोषरे"॥

इति स्मृतिमनुसंधाय पुष्कलधनमादाय रैक्वो राज्ञे विद्यां प्रादाज्जानश्रुतिश्च शास्त्रार्थं ज्ञात्वा पुष्कलधनं दत्त्वैव श्रद्धादिसंपन्नस्ततो विद्यामाददौ। तथाऽन्योऽपि दाता ग्रहीता वा स्यादिति तद्दानग्रहणयोर्विधिप्रदर्शनार्था चाऽऽख्यायिकेत्यर्थः। ननु षट्शतानि गवामित्यादिदर्शनाद्धनदानमेव विद्याग्रहणे साधनमिह प्रतीयते न तु श्रद्धादीत्याशङ्क्याऽऽह—श्रद्धेति। आदिपदेन तात्पर्यप्रणिपातादयो गृह्यन्ते। आख्यायिकया तदु ह पुनरेवेत्यादिलक्षणयेति यावत्। जनश्रुतस्य पुत्रो यस्तस्य पौत्रः पौत्रायणः स च प्रकृतो जानश्रुतिरेवेत्याह—पुत्रस्येति। श्रद्धया देयस्याल्पत्वशङ्कां वारयति—बहुदायीति। बहुपाकस्य फलमाह—भोजनेति। उक्तस्य राज्ञो वर्तमानत्वाभावादसत्त्वमाशङ्क्योक्तमेवमिति। स्वसमीपं प्राप्तेभ्य एवार्थिभ्योऽसावन्नं ददातीत्याशङ्क्याऽऽह—स हेति॥ १॥

विशिष्टान्नदानफलं दर्शयितुमारभते—तत्रेति। वाक्यार्थं दर्शयति—ऋषय इति। संबोधनाभ्यासस्य

तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तँ सयुग्वानमिव
रैक्वमात्थेति यो नु कथँ सयुग्वा रैक्व इति ॥ ३ ॥
यथा कृतायविजितायाधरेयाः संयन्त्येवमेनँ सर्वं तदभिसमेति
यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ४ ॥

राज्ञोऽन्नदानगुणैस्तोषिताः सन्तो हंसारूपा भूत्वा राज्ञो दर्शनगोचरेऽतिपेतुः। तत्तस्मिन्काले तेषां पततां हंसानामेकः पृष्ठतः पतन्नग्रतः पतन्तं हंसमभ्युवादाभ्युक्तवान्हो होऽयीति भो भो इति सम्बोध्य भल्लाक्ष भल्लाक्षेत्यादरं दर्शयन् यथा पश्य पश्याऽऽश्चर्यमिति तद्वत्। भल्लाक्षेति मन्ददृष्टित्वं सूचयन्नाह। अथवा सम्यग्ब्रह्मदर्शनाभिमानवत्त्वात्तस्यासकृदुपालब्धस्तेन पीड्यमानोऽमर्षितया तत्सूचयति भल्लाक्षेति। जानश्रुतेः पौत्रायणस्य समं तुल्यं दिवा द्युलोकेन ज्योतिः प्रभास्वरमन्नदानादिजनितप्रभावजमाततं व्याप्तं द्युलोकस्पृगित्यर्थः। दिवाऽह्ना वा समं ज्योतिरित्येतत्। तन्मा प्रसाङ्क्षीः सञ्जनं सक्तिं तेन ज्योतिषा सम्बन्धं मा कार्षीरित्यर्थः। तत्प्रसञ्जनेन तज्ज्योतिस्त्वा त्वां मा प्रधाक्षीर्मा दहत्वित्यर्थः पुरुषव्यत्ययेन मा प्रधाक्षीदिति ॥ २ ॥

तमेवमुक्तवन्तं पर इतरोऽग्रगामी प्रत्युवाचारे निकृष्टोऽयं राजा वराकस्तं कमु एनं सन्तं केन माहात्म्येन युक्तं सन्तमिति कुत्सयत्येनमेवं सबहुमानमेतद्वचनमात्थ रैक्वमिव, सयुग्वानं सह युग्वना गन्त्र्या वर्तत इति सयुग्वा रैक्वः। तमिवाऽऽत्थैनम्। अननुरूपमस्मिन्नयुक्तमीदृशं वक्तुं रैक्व इवेत्यभिप्रायः। इतरश्चाऽऽह—यो नु कथं त्वयोच्यते सयुग्वा रैक्व इत्युक्तवन्तं भल्लाक्ष आह शृणु यथा स रैक्वः ॥ ३ ॥

यथा लोके कृतायः कृतो नामायो द्यूतसमये प्रसिद्धश्चतुरङ्कः स यदा जयति द्यूते प्रवृत्तानां तस्मै

नरेन्द्रपुरीयं टिप्पणम्

भल्लाक्षेति। भद्राक्षशब्दो विरुद्धलक्षणया मन्ददृष्टित्वं सूचयतीत्यर्थः। महात्मा नातिक्रमणीयो जानश्रुतिरित्येतमपि धर्मं न जानासि वृथैव सम्यग्ज्ञानाभिमानं वहसि इत्युपालम्भं वा सूचयतीत्याह—तत्सूचयतीति। मा प्रधाक्षीरिति मध्यमपुरुषस्य त्वंयोगे विधानादत्र त्वंयोगाभावात् प्रथमपुरुषतया विपरिणामः कर्तव्य इत्यर्थः ॥ २ ॥

युगं वहतीति युग्यो बलीवर्दोऽश्वो वा, सोऽस्यामस्तीति युग्वा मत्वर्थीयोऽकारः सह तया वर्तत इति सयुग्वा। वनिप्प्रत्ययान्तो निपातः। ईदृशं प्रशंसावचनं ज्ञानसम्पन्ने रैक्वे युक्तं न केवलकर्मनिष्ठे राजनि इति कर्मनिन्दया ज्ञानं विधित्सितमित्यर्थः ॥ ३ ॥

आनन्दगिरिटीका

विषयमाह—आदरं दर्शयन्निति। तदेव दृष्टान्तेन स्पष्टयति—यथेति। भल्लाक्षशब्दार्थमाह—भल्लेति। भल्लाक्षशब्दो भद्राक्षविषयः सन्विरुद्धलक्षणया मन्ददृष्टित्वसूचकः। भल्लाक्षशब्दस्य विषयान्तरमाह—अथवेति। तस्य पृष्ठगामिनो हंसस्य महात्मा नातिक्रमणीयो विजानतेति सम्यग्दर्शनाभिमानशालित्वात्तेनाग्रगामी हंसो जानश्रुतिमतिचिक्रमिषुममर्षितया पीड्यमानः सन्न त्वं धर्मं जानासि ज्ञानाभिमानं तु वहसीत्युपालब्धस्तत्र भल्लाक्षेत्युपालम्भस्वरूपं सूचयतीत्यर्थः। पृष्ठगामी हंसो निन्दापूर्वकमग्रगामिनं (णं) हंसं संबोध्य किमूचिवानित्यपेक्षायामाह—जानश्रुतेरिति। मा प्रधाक्षीरिति पाठे कथं मा प्रधाक्षीदित्युच्यते तत्राऽऽह—पुरुषव्यत्ययेनेति। मध्यमपुरुषं प्रथमपुरुषं कृत्वा व्याख्यानमित्यर्थः ॥ २ ॥

एवं सन्तमेनं प्राणिमात्रं राजानमधिकृत्य सबहुमानमेतद्वचनमात्थेति कुत्सयतीति सम्बन्धः। तत्र वैधर्म्यदृष्टान्तमाह—रैक्वमिवेति। युगं वहतीति युग्यो बलीवर्दोऽश्वो वाऽस्यामस्तीति युग्वा शकटी तया सह वर्तत इति सयुग्वा रैक्वः। वकारो मत्वर्थीयः त्वं रैक्वं ज्ञानमाहात्म्ययुक्तमधिकृत्य यथा प्रशंसावचनं तथा कर्मिणमेनं राजानमधिकृत्य कथमेवमात्थेत्यर्थः। उक्तं वाक्यार्थं संकलयति—अननुरूपमिति। अस्मिन्वराके राजनि धर्ममात्रनिष्ठे नेदमनुरूपं वचनं रैक्वे पुनर्विज्ञानवति यथोक्तं वचो युक्तमेवेति। इतरः पृष्ठगामी हंसः। यः सयुग्वा रैक्वस्त्वयोच्यते स कथं नु स्यादित्यन्वयः ॥ ३ ॥

स रैक्वो येन प्रकारेण स्यात्तं प्रकारं शृण्विति प्रतिज्ञाय प्रकारप्रदिदर्शयिषया दृष्टान्तमाह—यथेति।

तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान एव क्षत्तारमुवा-
चाङ्गारे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथँ सयुग्वा रैक्व इति ॥ ५ ॥
यथा कृतायविजितायाधरेयाः संयन्त्येवमेनँ सर्वं तदभिसमेति यत्किञ्च
प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

विजिताय तदर्थमितरे त्रिद्व्येकाङ्का अधरेऽयास्त्रेताद्वापरकलिनामानः संयन्ति संगच्छन्तेऽन्तर्भवन्ति। चतुरंके कृताये त्रिद्व्येकाङ्कानां विद्यमानत्वात्तदन्तर्भवन्तीत्यर्थः। यथाऽयं दृष्टान्त एवमेनं रैक्वं कृतायस्थानीयं त्रेताद्यायस्थानीयं सर्वं तदभिसमेत्यन्तर्भवति रैक्वे। किं तद्यत्किंच लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति तत्सर्वं रैक्वस्य धर्मेऽन्तर्भवति। तस्य च फले सर्वप्राणिधर्मफलमन्तर्भवतीत्यर्थः। तथाऽन्योऽपि कश्चिद्यस्तद्वेद्यं वेद। किं तद्यद्वेद्यं स रैक्वो वेद। तद्वेद्यमन्योऽपि यो वेद तमपि सर्वप्राणिधर्मजातं तत्फलं च रैक्वमिवाभिसमेतीत्यनुवर्तते। स एवंभूतो मया विद्वानेतदुक्त एवमुक्तो रैक्ववत्स एव कृतायस्थानीयो भवतीत्यभिप्रायः॥ ४॥

तदु ह तदेतदीदृशं हंसवाक्यमात्मनः कुत्सारूपमन्यस्य विदुषो रैक्वादेः प्रशंसारूपमुपशुश्राव श्रुतवान्हर्म्यतलस्थो राजा जानश्रुतिः पौत्रायणः। तच्च हंसवाक्यं स्मरन्नेव पौनःपुन्येन रात्रिशेषमतिवाहयामास। ततः स बन्दिभी राजा स्तुतियुक्ताभिर्वाग्भिः प्रतिबोध्यमान उवाच क्षत्तारं संजिहान एव शयनं निद्रां वा परित्यजन्नेव हेऽङ्ग वत्सारे स सयुग्वानमिव रैक्वमात्थ किं माम्। स एव स्तुत्यर्हो नाहमित्यभिप्रायः। अथवा सयुग्वानं रैक्वमात्थ गत्वा मम तद्दिदृक्षा; तदेवशब्दोऽवधारणार्थोऽनर्थको वा वाच्यः। स च क्षत्ता

नरेन्द्रपुरीयं टिप्पणम्

ईयते प्राप्यते जयोऽनेनेत्ययः संज्ञायामिणः करणे घञ् कर्तरि च संज्ञायामिति स्मरणात्। यदवलम्बनेन द्यूतकृज्जयाद्यश्नुते। वराङ्कगणनायां यत्र चत्वारोऽनुशिष्यन्ते स कृतायः। यत्र त्रयः स त्रेतायः। यत्र द्वौ स द्वापरायः। यत्रैकः स कलिनामा। तत्र कृतायविजिताय व्यस्तायाः संयन्त्यपरे अयाः बहुसंख्यायामल्पसंख्याया अन्तर्भावः प्रसिद्ध इत्यर्थः। अन्येषां कर्मणां ज्ञानानां च क्षुद्रफलत्वाद्रैक्वस्य ज्ञानफले महत्तरेऽन्तर्भावस्संभवति, न केवलं रैक्वस्यैतन्माहात्म्यं किन्त्वन्यस्यापीति जानश्रुतेरनुग्रहाय प्रोवाचेत्याह—यद्वेद्यमिति॥ ४-५-६॥

आनन्दगिरिटीका

द्यूतस्य समयः संकेतस्तदनुष्ठानकालो [वा] येन द्यूतविद्यायामेजति सोऽक्षस्तस्य कश्चिद्भागोऽयशब्दवाच्यस्तत्र यश्चतुरङ्को भागश्चत्वारोऽङ्काश्चिह्नान्यस्मिन्निति व्युत्पत्तेः कृतनामव्यवहृतेन [तेन] यदा द्यूते प्रवृत्तानां मध्ये स कोऽपि जयति तदा तस्मै कृतनामवते विजितायाधरेऽयाः संयन्तीति सम्बन्धः। तदर्थं व्याचष्टे—तदर्थमिति। अधरेयान् व्याकरोति—अधरेया इति। तानेव विशिनष्टि—त्रेतेति। अक्षस्य यस्मिन्भागे त्रयोऽङ्काः स त्रेता नामायो भवति। यत्र तु द्वावङ्कौ स द्वापरनामकः। यत्रैकोऽङ्कः स कलिसंज्ञ इति विभागः। तादर्थ्येनेतराङ्काना(णा)मन्तर्भावमुक्तं व्यक्तीकरोति—चतुरङ्क इति। तदन्तर्भवन्ति तस्मिन्कृते त्रेतादयस्तेऽन्तर्भवन्तीति यावत्। महासंख्यायामवान्तरसंख्यान्तर्भावः प्रसिद्ध एवेत्यर्थः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति। रैक्वमभिव्याप्य सर्वं समेतीत्यस्यार्थं संक्षिपति—अन्तर्भवतीति। रैक्वे सर्वस्यान्तर्भावं प्रश्नपूर्वकं प्रकटयति—किं तदित्यादिना। तद्धर्मस्य महत्त्वादन्येषां च धर्मजातस्याल्पत्वात्तस्यैतरस्मिन्नन्तर्भावः संभवतीत्यर्थः। किंच सर्वेषां प्राणिनां धर्मफलमल्पीयस्त्वान्महत्तरे रैक्वस्य धर्मफलेऽन्तर्भवतीत्याह—तस्य चेति। न केवलं रैक्वस्यैतन्माहात्म्यं किंत्वन्यस्यापि ज्ञानवतोऽस्तीति जानश्रुतेरनुग्रहार्थमाह—तथेति॥ ४॥

प्रतिपन्नहंसवचनखेदित इतरो राजा रात्रिशेषमतिवाह्य शयनं जहदात्मनः समीपस्थं स्तुतिकर्तारं क्षत्तारमङ्गारे हेत्यादिवाक्यमुक्तवान्। तस्याभिप्रायमाह—स एवेति। कथमिवशब्दो द्वितीये घटते। तत्राऽऽह—

स ह क्षत्ताऽन्विष्य नाविदमिति प्रत्येयाय तँ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥ ७ ॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तँ हाभ्युवाद त्वं नु भगवः
सयुग्वा रैक्व इत्यहँ ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य प्रथमः खण्डः

तदु ह जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तँ हाभ्युवाद ॥१॥

रैक्वेमानि षट्शतानि गवामयं निष्कोऽयमश्वतरीरथो नु
म एतां भगवो देवताँ शाधि यां देवतामुपास्स इति ॥ २ ॥

प्रत्युवाच रैक्वानयनकामो राज्ञोऽभिप्रायज्ञो यो नु कथं सयुग्वा रैक्व इति, राज्ञैवं चोक्त आनेतुं तच्चिह्नं ज्ञातुमिच्छन्यो नु कथं सयुग्वा रैक्व इत्यवोचत् । स च भल्लाक्षवचनमेवावोचत् ॥ ५-६ ॥

तस्य स्मरन्स ह क्षत्ता नगरं ग्रामं वा गत्वाऽन्विष्य रैक्वं नाविदं न व्यज्ञासिषमिति प्रत्येयाय प्रत्यागतवान् । तं होवाच क्षत्तारमरे यत्र ब्राह्मणस्य ब्रह्मविद एकान्तेऽरण्ये नदीपुलिनादौ विविक्ते देशेऽन्वेषणाऽनुमार्गणं भवति तत्तत्रैनं रैक्वमर्छं ऋच्छ गच्छ तत्र मार्गणं कुर्वित्यर्थः ॥ ७ ॥

इत्युक्तः क्षत्ताऽन्विष्य तं विजने देशेऽधस्ताच्छकटस्य गन्त्र्याः पामानं खर्जूं कषमाणं कण्डूयमानं दृष्ट्वाऽयं नूनं सयुग्वा रैक्व इत्युप समीप उपविवेश विनयेनोपविष्टवान् । तं च रैक्वं हाभ्युवादोक्तवान् । त्वमसि हे भगवो भगवन्सयुग्वा रैक्व इति । एवं पृष्टोऽहमस्मि ह्यरा ३ अर इति ह्यनादर एव प्रतिजज्ञेऽभ्युपगतवान् । स तं विज्ञायाविदं विज्ञातवानस्मीति प्रत्येयाय प्रत्यागत इत्यर्थः ॥ ८ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य प्रथमः खण्डः

तत्तत्र ऋषेर्गार्हस्थ्यं प्रत्यभिप्रायं बुद्ध्वा धनार्थितां चो ह, एव जानश्रुतिः पौत्रायणः षट्शतानि गवां निष्कं कण्ठहारमश्वतरीरथमश्वतरीभ्यां युक्तं रथं तदादाय धनं गृहीत्वा प्रतिचक्रमे रैक्वं प्रति गतवान् । तं च गत्वाऽभ्युवाद हाभ्युक्तवान् ॥ १ ॥

हे रैक्व गवां षट्शतानीमानि तुभ्यं मयाऽऽनीतान्ययं निष्कोऽश्वतरीरथश्चायमेतद्धनमादत्स्व भगवोऽनुशाधि च मे मामेतां यां च देवतां त्वमुपास्से तद्देवतोपदेशेन मामनुशाधीत्यर्थः ॥ २ ॥

नरेन्द्रपुरीयं टिप्पणम्

क्षत्तारं प्रतिहारं; अवधारणार्थः इवः [आत्थ] ब्रूहीत्यर्थः । छन्दसि कालनियमाभावात् । यो रैक्वः स कथं नु किंलक्षणक इत्यर्थः । राजा लक्षणविशेषापरिज्ञानात् भल्लाक्षवचनमेवावोचन् । तस्य स्मरन्निति योगे कर्मणि षष्ठी । तद्वाक्यं स्मरन्नित्यर्थः । पुलिनं सैकतं नदीतटं पामरवर्जितं; दौस्थ्येऽपि पारिव्रज्याऽस्वीकारात् गार्हस्थ्याभिप्रायं रिक्तहस्तस्य क्षत्तुरवज्ञाकरणाद्धनार्थितां च बुद्ध्वेत्यर्थः ॥ ७-८ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य प्रथमः खण्डः

गर्दभाश्वयोर्जाता जातिरश्वतरी ॥ १-२ ॥

आनन्दगिरिटीका

तदेति । अवधारणस्यापि नोपयोगोऽस्तीति चेत्तत्राऽऽह—अनर्थको वेति । प्रश्नवाक्यं व्याचष्टे—राज्ञेति । यो नु कथमित्यादि पूर्ववद्व्याख्येयम् ॥ ५-६ ॥

तस्येति कर्मणि षष्ठी ॥ ७ ॥

मया हि गार्हस्थ्यं चिकीर्ष्यते तदर्थं च धनमर्थ्यते न चायं तादर्थ्येन किंचिदुपकर्तुमित्याशयेनानादरं विज्ञातवानस्मि यदुक्तलक्षणं रैक्वं तस्य च गार्हस्थ्याभिप्रायं धनार्थित्वं चेति शेषः ॥ ८ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाऽध्यायस्य प्रथमः खण्डः

क्षत्तृवचने श्रुते सतीति सप्तम्यर्थः । धनार्थितां च बुद्ध्वेति पूर्वेण सम्बन्धः । उहशब्दस्य पूर्ववदत्राप्येवकारोऽर्थः ॥ १ ॥

तमु ह परः प्रत्युवाचाह हारेत्वा [1]शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥

तँ हाभ्युवाद रैक्वेदँ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥ ४ ॥

तमेवमुक्तवन्तं राजानं प्रत्युवाच परो रैक्वः। अहेत्ययं निपातो 'विनिग्रहार्थीयोऽन्यत्रेह त्वनर्थकः। एवशब्दस्य पृथक्प्रयोगात्। हारेत्वा हारेण युक्तेत्वा गन्त्री सेयं हारेत्वा गोभिः सह तवैवास्तु तिष्ठतु न ममापर्याप्तेन कर्मार्थमनेन प्रयोजनमित्यभिप्रायो हे शूद्रेति। ननु राजाऽसौ क्षत्तृसम्बन्धात्स ह क्षत्तारमुवाचेत्युक्तम्। विद्याग्रहणाय च ब्राह्मणसमीपोपगमाच्छूद्रस्य चानधिकारात्कथमिदमननुरूपं रैक्वेणोच्यते हे शूद्रेति। तत्राऽऽहुराचार्याः—हंसवचनश्रवणाच्छुगेनमाविवेश। तेनासौ शुचा श्रुत्वा रैक्वस्य महिमानं वा आद्रवतीति ऋषिरात्मनः परोक्षज्ञतां दर्शयञ्शूद्रेत्याहेति। शूद्रवद्वा धनेनैवैनं विद्याग्रहणायोपजगाम न च शुश्रूषया। न तु जात्यैव शूद्र इति। अपरे पुनराहुरल्पं धनमाहृतमिति रुषैवैनमुक्तवाञ्छूद्रेति। लिङ्गं च बह्वाहरण उपादानं धनस्येति। तदुहर्षेर्मतं ज्ञात्वा पुनरेव जानश्रुतिः पौत्रायणो गवां सहस्रमधिकं जायां चर्षेरभिमतां दुहितरमात्मनस्तदादाय प्रतिचक्रमे क्रान्तवान्। ३ ॥

रैक्वेदं गवां सहस्रमयं निष्कोऽयमश्वतरीरथ इयं जायार्थं मम दुहिताऽऽनीताऽयं च ग्रामो यस्मिन्नास्से

### नरेन्द्रपुरीयं टिप्पणम्

विनिग्रहार्थीय इति। निवारणार्थः। इह त्वेवकारेण तस्य कृतत्वाद् हेत्यनर्थक इत्यर्थः। शूद्रशब्दो न शूद्रजातीयवचन इति चोद्यमुखेन दर्शयति—ननु राजेत्यादिना ॥ ३ ॥

### आनन्दगिरिटीका

अत्रापि विनिग्रहार्थत्वसंभवे किमित्यानर्थक्यमित्याशङ्क्य तवैवेत्येवकारादेव विनिग्रहसिद्धिरित्याह—एवशब्दस्येति। गार्हस्थ्यार्थिनस्तव कर्मानुष्ठानार्थमिदं धनं तिष्ठतादिति चेन्नेत्याह—न ममेति। शूद्रशब्देन जानश्रुतेः संबोधनमनुचितमिति चोदयति—नन्विति। तस्याशूद्रत्वे हेत्वन्तरमाह—विद्याग्रहणायेति। तस्य श्रुतिद्वारा विद्याधिकारो नास्तीत्यपशूद्राधिकरणे निर्धारितमित्याशयेनाऽऽह—शूद्रस्य चेति। जानश्रुतेः सति क्षत्रियत्वे शूद्रसम्बोधनमयोग्यमित्युपसंहरति—कथमिति। न जातिशूद्रो जानश्रुतिः किंतु क्षत्रियोऽस्मिन्गौणः शूद्रशब्द इत्येकीयमतोपन्यासेन परिहरति—तत्रेति। तेन शुगाविष्टत्वेनासौ जानश्रुतिः शुचा हेतुना रैक्वमाद्रवतीति शूद्रः श्रुत्वा वा हंसवाक्यं रैक्वमाद्रवतीति नैमित्तिकं तत्र शूद्रपदमित्यर्थः। तथाऽपि किमिति शूद्रपदेन राजानमृषिः संबोधयतीत्याशङ्क्याऽऽह—ऋषिरिति। उक्तप्रकारद्वयसमाप्ताविति शब्दः। प्रकारान्तरेण जानश्रुतेः शूद्रत्वं गौणं व्युत्पादयति—शूद्रवद्वेति। न च शुश्रूषया तेन शूद्र इति शेषः। मुख्यं शूद्रत्वं क्षत्तृसंबन्धेन व्यावर्तयति—न त्विति। क्षत्रिये जानश्रुतौ शूद्रशब्दप्रवृत्तौ निमित्तान्तरमाह—अपरे पुनरिति। तत्र गमकं दर्शयति—लिङ्गञ्चेति। यद्दषेर्मतमधिकधनार्थित्वमिति यावत्। अधिकं षट्शतेभ्यः सकाशादिति शेषः ॥ ३ ॥

---

१. शूद्र इति—अत्र शूद्र इति रैक्वेण जानश्रुतेः सम्बोधनात् तस्य चोत्तरत्र संवर्गविद्योपदेशनात् लिङ्गात् जातिशूद्रस्यापि विद्यास्वधिकार इति पूर्वपक्षे सिद्धान्तः "शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि"—इति सूत्रम् (१-३-३४)।

अयमर्थः—अत्र शूद्रपदं न जातिशूद्रपरं अपि तु यौगिकं शुचा आद्रवतीति शूद्रः। जानश्रुतिः स्वस्य विद्याहीनतया अपमानकरं हंसवाक्यं श्रुत्वा रैक्वात् विद्यावत्त्वेन हंससूचितात् विद्यां प्राप्तुं रैक्वसमीपमाजगाम रैक्वं अभिदुद्राव इति कथाऽत्र प्रकरणे स्पष्टा। इमं वृत्तान्तं परोक्षमपि स्वयं तपोबलेन ज्ञात्वा स्वसमीपमागतं जानश्रुतिं शूद्रेति सम्बोधयन् स्वस्य परोक्षज्ञतां सूचयतीत्यर्थः। रूढ्यपेक्षया प्रतिपन्नयोगस्य प्राबल्यं इति न्यायोऽत्र सूचितः।

**तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥**

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य द्वितीयः खण्डः

**वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

तिष्ठसि स च त्वदर्थं मया कल्पितः तदेतत्सर्वमादायानुशाध्येव मा मां हे भगव इत्युक्तस्तस्या जायार्थमानीताया राज्ञो दुहितुर्हैव मुखं द्वारं विद्याया दाने तीर्थमुपोद्गृह्णञ्जानन्नित्यर्थः ।

ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः ।
विद्यया वा विद्यां प्राह तानि तीर्थानि षण्मम ॥

इति विद्याया वचनं विज्ञायते हि । एवं जानन्नुपोद्गृह्णन्नुवाचोक्तवान् । आजहाराऽऽहृतवान्भवान्यदिमा गा यच्चान्यद्धनं तत्साध्विति वाक्यशेषः । शूद्रेति पूर्वोक्तानुकृतिमात्रं न तु कारणान्तरापेक्षया पूर्ववत् । अनेनैव मुखेन विद्याग्रहणतीर्थेनाऽऽलापयिष्यथा आलापयसीति मां भाषयसीत्यर्थः । ते हैते ग्रामा रैक्वपर्णा नाम विख्याता महावृषेषु देशेषु यत्र येषु ग्रामेषूवासोषितवान् रैक्वस्तानसौ ग्रामानदादस्मै रैक्वाय राजा । तस्मै राज्ञे धनं दत्तवते ह किलोवाच विद्यां स रैक्वः ॥ ४-५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य द्वितीयः खण्डः

वायुर्वाव संवर्गो वायुर्बाह्यो वावेत्यवधारणार्थः । संवर्गः संवर्जनात्संग्रहणात्संग्रसनाद्वा संवर्गः । वक्ष्यमाणा अग्न्याद्या देवता आत्मभावमापादयतीत्यतः संवर्गः । संवर्जनाख्यो गुणो ध्येयो वायुवत् । कृतायान्तर्भावदृष्टान्तात् । कथं संवर्गत्वं वायोरित्याह । यदा यस्मिन्काले वा अग्निरुद्वायत्युद्वासनं प्राप्नोत्युप-

## नरेन्द्रपुरीयं टिप्पणम्

विद्यादाने तस्याः कन्यायाः द्वारता तद्दातारं च जानश्रुतिं तीर्थं जानन्नुवाचेति सम्बन्धः । द्रव्यदातुस्तीर्थत्वे प्रमाणमाह—ब्रह्मचारीति । तीर्थेन योग्येन साधनेनेत्यर्थः । रैक्वेण ग्रामादिकमादाय विद्योपदिष्टेत्यस्माननुज्ञापयति श्रुतिः—ते हैत इत्यादिना । महावृषेषु महापुण्येषु सान्तर्ग्रामक्षेत्रसामीप्यात् ॥ ४-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य द्वितीयः खण्डः

संवर्जनादित्यस्य व्याख्या संग्रहणादिति । सर्वस्य स्थितिकाले स्वात्मनि धारणादित्यर्थः । गुणिनो वायोरेव ध्येयत्वं न गुणस्येति नाशङ्कनीयमित्याह—संवर्जनाख्य इति । वायौ सर्वस्यान्तर्भावे हि कृतायदृष्टान्तो भवति नान्यथा ततः सर्वान्तर्भावादिगुणो ध्येय इत्यर्थः ॥ १ ॥

## आनन्दगिरिटीका

विद्यादाने तस्या द्वारत्वं तद्दातुश्च वरज्ञानदानतीर्थतां जानन्नुवाचेति सम्बन्धः । धनदातुर्विद्यादानतीर्थत्वे प्रमाणमाह—ब्रह्मचारीति । तस्या द्वारतां विद्यादाने तद्दातुस्तीर्थतां च जानन्नुवाचेत्युक्तमनुवदति—एवं जानन्निति । किमुक्तमित्यपेक्षायामाह—आजहारेति । तत्र वैधर्म्यदृष्टान्तमाह—पूर्ववदिति । अल्पधनहरणानिच्छायां कारणापेक्षायां शूद्रेति सम्बोधनवदित्यर्थः । रैक्वेण ग्रामादिकं गृहीत्वा विद्या जानश्रुतये दत्तेत्यस्मान्प्रति श्रुतिर्ज्ञापयति—ते हैत इति । महावृषेषु महापुण्येष्विति यावत् ॥ ४-५ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य द्वितीयः खण्डः

कथं विद्यामुक्तवानित्याशङ्क्याधिदैवतं तदुक्तिप्रकारं दर्शयति—वायुरित्यादिना । प्राणो वाव संवर्ग इति वक्ष्यमाणेनापुनरुक्तार्थं वायुं व्याचष्टे—वायुर्बाह्य इति । संवर्जनादित्यस्य व्याख्या संग्रहणादिति । संग्रहणपक्षं समर्थयते—वक्ष्यमाणा इति । किमिति संवर्गत्वं वायोरुपदिश्यते तत्र दृष्टान्तश्रुतिं प्रमाणयति—कृतायेति । संग्रसना-

यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान्संवृङ्क्त इत्यधिदैवतम् ॥ २ ॥
अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति
प्राणं चक्षुः प्राणँ् श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति ॥ ३ ॥
तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥
अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं
परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥ ५ ॥

शाम्यति तदाऽऽसावग्निर्वायुमेवाप्येति वायुस्वाभाव्यमपिगच्छति। तथा यदा सूर्योऽस्तमेति वायुमेवाप्येति। यदा चन्द्रोऽस्तमेति वायुमेवाप्येति। ननु कथं सूर्याचन्द्रमसोः स्वरूपावस्थितयोर्वायावपिगमनम्। नैष दोषः। अस्तमनेऽदर्शनप्राप्तेर्वायुनिमित्तत्वात्। वायुना ह्यस्तं नीयते सूर्यः चलनस्य वायुकार्यत्वात्। अथवा प्रलये सूर्याचन्द्रमसोः स्वरूपभ्रंशे तेजोरूपयोर्वायावेवापिगमनं स्यात् ॥ १ ॥

तथा यदाऽऽप उच्छुष्यन्त्युच्छोषमाप्नुवन्ति तदा वायुमेवापियन्ति। वायुर्हि यस्मादेवैतानग्न्याद्यान्महाबलान्संवृङ्क्ते। अतो वायुः संवर्गगुण उपास्य इत्यर्थः। इत्यधिदैवतं देवतासु संवर्गदर्शनमुक्तम् ॥ २ ॥

अथानन्तरमध्यात्ममात्मनि संवर्गदर्शनमिदमुच्यते। प्राणो मुख्योवाव संवर्गः। स पुरुषो यदा यस्मिन्काले स्वपिति प्राणमेव वागप्येति वायुमिवाग्निः प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो हि यस्मादेवैतान्वागादीन्सर्वान्संवृङ्क्त इति ॥ ३ ॥

तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ वायुरेव देवेषु संवर्गः प्राणः प्राणेषु वागादिषु मुख्यः ॥ ४ ॥

अथैतयोः स्तुत्यर्थमियमाख्यायिकाऽऽरभ्यते। हेत्यैतिह्यार्थः। शौनकं च शुनकस्यापत्यं शौनकं कापेयं कपिगोत्रमभिप्रतारिणं च नामतः कक्षसेनस्यापत्यं काक्षसेनिं भोजनायोपविष्टौ परिविष्यमाणौ सूपकारैर्ब्रह्मचारी ब्रह्मविच्छौण्डो बिभिक्षे भिक्षितवान्। ब्रह्मचारिणो ब्रह्मविन्मानितां बुद्ध्वा तं जिज्ञासमानौ तस्मा उ भिक्षां न ददतुर्न दत्तवन्तौ ह किमयं वक्ष्यतीति ॥ ५ ॥

नरेन्द्रपुरीयं टिप्पणम्

संवृङ्क्ते संवृणीते संहरति चेत्यर्थः ॥ २-३ ॥

तौ वा इति द्वित्वश्रवणात् पृथगनुचिन्तनीयत्वं विद्यैक्येऽप्यग्निहोत्रादेः सायं प्रातः प्रवृत्तिभेदवदित्यर्थः ॥ ४ ॥

चतुःसंख्याकानग्न्यादीन्यो देवस्संहृतवान् कः स त्वं किं जानासि तमिति शौनकं पुरोहितं काक्षसेनिं

आनन्दगिरिटीका

द्वेत्युक्तं पक्षमाकाङ्क्षापूर्वकं व्युत्पादयति—कथमित्यादिना। सूर्याचन्द्रमसोर्वायावपिगमनमाक्षिपति—नन्विति। आप्रलयात्तयोरधिकारपदे स्थित्यङ्गीकारात्स्वरूपावस्थितत्वं द्रष्टव्यम्। सूर्यादेः स्वरूपावस्थानेऽपि वायावप्ययः सम्भवतीति समाधत्ते—नैष दोष इति। अस्तमने सति सूर्यादेरदर्शनप्राप्तेर्वाय्वधीनत्वं व्युत्पादयति—वायुना हीति। सूर्यग्रहणं चन्द्रमसोऽप्युपलक्षणम्। गौणस्तर्हि वायावप्ययः सूर्यादेरित्याशङ्क्य पक्षान्तरमाह—अथवेति। सङ्गतिसमये हि संहरति वेत्यर्थः ॥ १-२ ॥

कथं प्राणस्य संवर्गत्वमित्याशङ्क्याऽऽह—स पुरुष इति। तस्मात्संवर्ग इत्यध्यात्ममिति शेषः ॥ ३ ॥

वायुप्राणावधिदैवताध्यात्मभेदेन संवर्गगुणावुक्तावुपसंहरति—ताविति ॥ ४ ॥

अथ हेत्याद्यनन्तरवाक्यं व्याचष्टे—अथैतयोरिति। ब्रह्मविच्छौण्डो ब्रह्मविदां मध्ये शूरमात्मानं मन्यमान इति यावत्। बुद्ध्वा लिङ्गविशेषेणेति शेषः। जिज्ञासमानावित्युक्तमेव व्यनक्ति—किमयमिति ॥ ५ ॥

स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति
मर्त्या अभिप्रतारिन्बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥

तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायाऽऽत्मा देवानां जनिता
प्रजानाँ्हिरण्यदँ्ष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो
यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्ताऽस्मै भिक्षामिति ॥ ७ ॥

स होवाच ब्रह्मचारी महात्मनश्चतुर इति द्वितीयाबहुवचनम्। देव एकोऽग्न्यादीन्वायुर्वागादीन्प्राणः। कः स प्रजापतिर्जगार ग्रसितवान् । कः स जगारेति प्रश्नमेके । भुवनस्य भवन्त्यस्मिन्भूतानीति भुवनं भूरादिः सर्वो लोकस्तस्य गोपा गोपायिता रक्षिता गोप्तेत्यर्थः। तं कं प्रजापतिं हे कापेय नाभिपश्यन्ति न जानन्ति मर्त्या मरणधर्माणोऽविवेकिनो वा हेऽभिप्रतारिन्बहुधाऽध्यात्माधिदैवताधिभूतप्रकारैर्वसन्तम्। यस्मै वा एतदहन्यहन्यन्नमदनायाऽऽह्रियते संस्क्रियते च तस्मै प्रजापतय एतदन्नं न दत्तमिति ॥ ६ ॥

तदु ह ब्रह्मचारिणो वचनं शौनकः कापेयः प्रतिमन्वानो मनसाऽऽलोचयन्ब्रह्मचारिणं प्रत्येयायाऽऽजगाम । गत्वा चाऽऽह—यं त्वमवोचो न पश्यन्ति मर्त्या इति तं वयं पश्यामः। कथम्? आत्मा सर्वस्य स्थावरजङ्गमस्य। किंच देवानामग्न्यादीनामात्मनि संहृत्य ग्रसित्वा पुनर्जनितोत्पादयिता वायुरूपेणाधिदैवतमग्न्यादीनाम्। अध्यात्मं च प्राणरूपेण वागादीनां प्रजानां च जनिता। अथ वाऽऽत्मा देवानामग्निवागादीनां जनिता प्रजानां स्थावरजङ्गमानाम्। हिरण्यदंष्ट्रोऽमृतदंष्ट्रोऽभग्नदंष्ट्र इति यावत्। बभसो भक्षणशीलः। अनसूरिः सूरिर्मेधावी न सूरिरसूरिस्तत्प्रतिषेधोऽनसूरिः सूरिरेवेत्यर्थः। महान्तमतिप्रमाणमप्रमेयमस्य प्रजापतेर्महिमानं विभूतिमाहुर्ब्रह्मविदः। यस्मात्स्वयमन्यैरनद्यमानोऽभक्ष्यमाणो यदनन्नमग्निवागादिदेवतारूपमत्ति भक्षयतीति। वा इति निरर्थकः। वयं हे ब्रह्मचारिन्, आ, इदमेवं यथोक्तलक्षणं ब्रह्म वयमा उपास्महे। वयमिति व्यवहितेन

नरेन्द्रपुरीयं टिप्पणम्

च राजानं प्रति प्रश्नविषयकं शब्दं व्याचक्षत इत्यर्थः। ओङ्कारं प्राणमात्मानञ्चैकत्वेन पश्यन् ब्रह्मचारी मह्यं भिक्षां यन्न ददतुरित्यज्ञत्वमेव तयोः ख्यापयन्नाह—यस्मै वा इत्यादि ॥ ५-६ ॥

आनन्दगिरिटीका

चतुर इति द्वितीयाबहुवचनदर्शनान्महात्मन इति तादृगेवेत्याह—द्वितीयेति। यद्वा महात्मन इत्यस्य पञ्चम्यादौ चतुर इत्यस्य च समीचीने प्रयोगदर्शनादिह तथा मा भूदिति मत्वाऽऽह—महात्मन इति। अतो हि जगारेति सम्बन्धः। कः शब्दः प्रजापतिविषयो व्याख्यातः। सम्प्रति पक्षान्तरमाह—कः स इति। यस्ताञ्जगार स कः स्यादिति प्रश्नमेके वदन्तीत्यर्थः। अत्तारं प्राणमात्मानं चैकत्वेन पश्यन्ब्रह्मचारी मह्यं भिक्षां यन्न ददतुर्भवन्तौ तत्तस्मै देवायैव न ददतुरित्यज्ञत्वमेव तयोर्दर्शयन्नाह—यस्मा इति ॥ ६ ॥

दर्शनमेव प्रश्नद्वारा विशदयति—कथमित्यादिना। अधिदैवतमग्न्यादीनां वायुरूपेण जनितेति सम्बन्धः। तस्य प्राथमिकं [कर्त्वं] कृत्वा दर्शयति—आत्मनीति। अग्न्यादीन्प्रलयकाले देवः स्वात्मनि वायुरूपेण ग्रसित्वा पुनरुत्पत्त्यवस्थायामुत्पादयितेति योजना। अध्यात्मं वागादीनपि स्वापावस्थायां स्वात्मनि प्राणरूपे संहृत्य पुनः प्रबोधावस्थायां तेषामुत्पादयिता देवः प्राणरूपेणेत्याह—अध्यात्मं चेति। देवानामग्न्यादीनां प्रजानां वागादीनां च जनितेत्युक्तं सम्प्रति व्याख्यान्तरमाह—अथ वेति। अभग्नदंष्ट्रः सर्वसंहर्तुरपि न काचन ग्लानिर्भवतीत्यर्थः। प्रजापतेर्महिम्नोऽतिप्रमाणत्वं प्रकटयति—यस्मादिति। इतिशब्दात्परस्ताद्यच्छब्दस्य सम्बन्धः तदर्थश्च यस्मादित्युक्तस्तस्मात्प्रजापतेर्महिमानमतिप्रमाणमाहुरिति पूर्वेण सम्बन्धः। वै वयमित्यादिभागं पदच्छेदपूर्वकमादाय व्याचष्टे—वयमित्यादिना। क्रियापदेन वयमित्यस्य सम्बन्धमुक्तमुपपादयति—वयमिति। ब्रह्मचारिन्निदं वयमा समन्तादुपास्महे ब्रह्मेत्युक्त्वा

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दश कृतँ सैषा विराडन्नादी तयेदं सर्वं दृष्टँ सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥ ८ ॥**

**इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य तृतीयः खण्डः**

सम्बन्धः। अन्ये न वयमिदमुपास्महे। किं तर्हि परमेव ब्रह्मोपास्मह इति वर्णयन्ति। दत्तास्मै भिक्षामित्यवोचद्भृत्यान् ॥ ७ ॥

तस्मा उ ह ददुस्ते हि भिक्षाम्। ते वै ये ग्रस्यन्तेऽग्न्यादयो यश्च तेषां ग्रसिता वायुः पञ्चान्ये वागादिभ्यः, तथाऽन्ये तेभ्यः पञ्चाध्यात्मं वागादयः प्राणश्च, ते सर्वे दश भवन्ति संख्यया, दश सन्तस्तत्कृतं भवति, ते चतुरङ्क एकाय एवं चत्वारः त्र्यङ्कायः एवं त्रयोऽपरे द्व्यङ्कायः एवं द्वावन्यावेकाङ्काय एवमेकोऽन्य, इत्येवं दश सन्तस्तत्कृतं भवति। यत एवं तस्मात्सर्वासु दिक्षु दशस्वप्यग्न्याद्या वागाद्याश्च दशसंख्यासामान्यादन्नमेव "दशाक्षरा विराड् विराडन्नमि"ति हि श्रुतिः। अतोऽन्नमेव दशसंख्यत्वात्। तत एव दश कृतं कृतेऽन्तर्भावाच्चतुरायत्वेनेत्यवोचाम।

**नरेन्द्रपुरीयं टिप्पणम्**

ब्रह्मचारिन् आ इदमिति पदच्छेदेन व्याख्याय ब्रह्मचारिन् न इदमिति पदच्छेदेन व्याचष्टे—अन्य इति ॥ ७ ॥

आत्मा देवानामित्यादिगुणजातं प्रकृते संवर्गविज्ञाने आख्यायिकाद्वारेणोपदिश्य गुणान्तरोपदेशायाह—ते वै ये ग्रस्यन्त इत्यादिना। कृतमिति कृतायोपलक्षितं द्यूतं कृतायमात्रस्य दशसंख्यावत्वासम्भवात्, तस्य सर्वस्यात्तृत्वेन प्रसिद्धेस्संख्यासामान्यात्कृतत्वसम्पादनेनात्तृत्वं सम्पादितम्। इदानीं दशसंख्यावत्वेनैव सम्पादयति—

**आनन्दगिरिटीका**

प्रकारान्तरेण पदच्छेदपूर्वकं व्याख्यानान्तरमाह—अन्ये नेति। शौनकस्याभिप्रतारिणश्च ज्ञानातिशयं दर्शयित्वा यतिश्च ब्रह्मचारी चेत्यादिस्मृतिमनुसृत्याऽऽह—दत्तेति ॥ ७ ॥

आख्यायिकाद्वारा प्रकृतायां संवर्गविद्यायामात्मा देवानामित्यादिगुणजातमुपदिश्य गुणान्तरमुपदेष्टुमनन्तरवाक्यमवतारयति—ते वा इति। तद्व्याचष्टे—ये ग्रस्यन्त इति। त एते वागादिभ्यः सकाशादन्ये पञ्चेति सम्बन्धः। अधिदैवतमग्न्यादीन्वायुसहितान्पञ्चोक्त्वा तेनैव प्रकारेणाध्यात्ममपि तेभ्यः सकाशादन्ये प्राणसहिता वागादयः पञ्च सन्तीत्याह—तथेति। अवान्तरसंख्याविनिवेशमुक्त्वा तत्रैव महासंख्यानिवेशं दर्शयति—ते सर्वे इति। दशसंख्यासम्बन्धात्तेषां संख्ययेति। कृतायोपलक्षितं द्यूतं कृतमित्युच्यते। तत्र दशसंख्यावत्त्वस्य वक्तव्यत्वादिति द्रष्टव्यम्। यदुक्तमग्न्यादयो वागादयश्च दश सन्तस्तत्कृतं भवतीति तदुपपादयति—चतुरङ्क इत्यादिना। एकस्तावदयो द्यूते चतुरङ्को दृश्यते तद्वदग्न्यादयो वागादयश्च ग्रस्यमानाश्चत्वारो भवन्ति। यथा च द्यूते त्रेतानामकोऽयस्त्र्यङ्को गृह्यते तथाऽग्न्यादयो वागादयश्चैकैकन्यूनास्त्रयः। तथा च द्वापरनामायो द्व्यङ्को जायते तद्वद्वागादिष्वग्न्यादिषु च द्वौ द्वौ वर्जयित्वा द्वौ द्वौ भवतः। तथा च तत्र कलिसंज्ञायो भवत्येकाङ्कः योऽग्न्यादीनां ग्रसिता वायुर्वागादीनां ग्रसिता प्राणश्चैकस्तेभ्यो ग्रस्यमानेभ्योऽन्य इत्येवं ग्रसितृत्वेन ग्रस्यमानत्वेन च दश सन्तस्ते पूर्वोक्तं कृतं भवतीत्यर्थः। द्यूतस्य सर्वान्नात्तृत्वप्रसिद्ध्या दशसंख्यावतां देवानां कृतत्वसम्पादनेनात्तृत्वं सम्पादितम्। इदानीं दशसंख्यावत्त्वेनैव विराट्त्वसम्पादनेन तेषामन्नत्वं सम्पादयति—यत इति। अग्न्यादिषु वागादिषु च मिलितेषु दशसंख्यावत्त्वेऽपि कथमनेन तद्वत्त्वं तथा च कथं संख्यासामान्यं तेषामन्नसंख्यासामान्यसम्पादनमित्याशङ्क्याऽऽह—दशाक्षरेति। विराड्दशसंख्यावती प्रसिद्धा सा चान्नमिति श्रूयते, तथा च यथोक्तेष्वग्न्यादिषु वागादिषु च समुदितेषु संख्यासामान्याद्विराट्त्वं सम्पाद्यान्नत्वसम्पादनं सुशकमित्याह—अत इति। तेषु कृतत्वेनान्न(तृ ?)त्वं सम्पादितमुपसंहरति—तत एवेति। द्यूतस्यायचतुष्टयविशिष्टत्वेन कृतोपलक्षितेन तत्र दशसंख्यायाः सत्त्वात्तत एव संख्यासामान्यादग्न्यादयश्च कृतं भवति ततश्च तेषामत्तृत्वमित्युक्तमित्यर्थः।

**'सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे ब्रह्मचर्यं भवति विवत्स्यामि किङ्गोत्रोन्वहमस्मीति ॥ १ ॥**

सैषा विराड्दशसंख्या सत्यन्नं चान्नाद्यन्नादिनी च कृतत्वेन। कृते हि दशसंख्याऽन्तर्भूताऽतोऽन्नमन्नादिनी च सा। तथा विद्वान्दशदेवतात्मभूतः सन्विराट्त्वेन दशसंख्ययाऽन्नं कृतसंख्ययाऽन्नादी तया अन्नान्नादिन्या इदं सर्वं जगद्दशदिक्संस्थं दृष्टं कृतसंख्याभूतयोपलब्धम्। एवंविदोऽस्य सर्वं कृतसंख्याभूतस्य दशदिक्संबद्धं दृष्टमुपलब्धं भवति। किंचान्नादश्च भवति य एवं वेद यथोक्तदर्शी। द्विरभ्यास उपासनसमाप्त्यर्थः ॥ ८ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य तृतीयः खण्डः

सर्वं वागाद्यग्न्यादि चान्नान्नादत्वसंस्तुतं जगदेकीकृत्य षोडशधा प्रविभज्य तस्मिन्ब्रह्मदृष्टिर्विधातव्येत्यार-

नरेन्द्रपुरीयं टिप्पणम्

यत एवमित्यादिना। अन्तर्भावादिति। दशसंख्यायाः कृते विद्यमानत्वादित्यर्थः— सैषेति। विधेयलिङ्गभजनं; विराट्त्वस्य विधेयत्वात् विराजश्च स्त्रीलिङ्गत्वात्। तदेतच्छब्दयोस्त्वनूद्यमानार्थत्वे त एते दश प्रकृताः विराडित्यवगन्तव्या इत्यर्थः। तथेति दशसंख्यावच्छिन्नया देवतया अग्न्यादिप्रकाशितवायुप्राणप्रेरितचक्षुरादिभिः सर्वं दृश्यं इति दृष्टं भवतीत्युच्यते। विदुषः फलमाह—एवंविदोऽस्येति। अन्नादश्च भवति प्राणदेवता भूत्वा यथोक्तदर्शनस्तस्य सर्वं भोग्यं भवतीति पूर्वेण सम्बन्धः ॥ ८ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य तृतीयः खण्डः

एकीकृत्येति। कारणरूपेणैक्यमादायेत्यर्थः ॥ १ ॥

आनन्दगिरिटीका

सम्प्रति प्रकृतेष्वग्न्यादिषु विराट्त्वमन्नत्वमिति त्रयमुपसंहरति—सैषेति। विराजो विधेयत्वात्तस्याश्च स्त्रीलिङ्गतया सैषेति विधेयलिङ्गभजनम्। त एते प्रकृता देवा विराडित्यवगन्तव्याः। सा च दशदेवतात्मिका दशसंख्यावती भवत्यन्नमिति देवतानामन्नत्वसिद्धिः। अन्नादीत्यस्य विराजा सम्बन्धादन्नादिनीति व्याख्यानम्। ततश्च देवतात्मिका विराट्कृतत्वेनान्नादिनीति तदात्मकानामग्न्यादीनामप्यत्तृत्वसिद्धिरित्यर्थः। विराट्त्वेनान्नत्वं कृतत्वेनात्तृत्वं चेति सम्पत्तिद्वयमग्न्यादौ दर्शितमुपसंहरति—कृते हीति। कृतोपलक्षिते द्यूते दशसंख्याऽन्तर्भूता प्रसिद्धा। सा चाग्न्यादौ दर्शिता। तथा च संख्यासामान्याद्द्यूतगतमत्तृत्वमग्न्यादिषु सम्पाद्यते तेनेदं दशकमन्नादीत्युच्यते विराड् वेदे दशसंख्यावतीत्युक्तम्। सा चान्नं, विराडन्नमित्युक्तत्वात्। ततश्च विराट्सम्पत्त्या भवति प्रकृतं दशकमन्नमित्यर्थः। सगुणं संवर्गदर्शनमुक्त्वा तत्फलं वक्तुं विद्वत्स्वरूपं सङ्गिरते—तथेति। यथाऽग्न्यादीनां विराट्त्वेनान्नत्वं कृतत्वेन चान्नादत्वं तथा वायुमग्न्याद्यात्मकं प्राणं च वागाद्यात्मकमेकीकृत्याऽऽत्मत्वेन विद्वान्दशदेवतास्वरूपभूतः सन्दशसंख्यया विराट्त्वेनान्नं कृतशब्दितयुगं तद्गतदशसंख्यावच्छिन्नतया कृतत्वेनान्नादी भवतीत्यर्थः। फलोक्त्युपयोगित्वेनार्थान्तरमाह—तयेति। कृतोपलक्षितद्यूतस्थसंख्यावच्छिन्नत्वेनावस्थितयाऽन्नत्वेनान्नादित्वेन व्यवस्थितया सर्वमिदं जगद्दशसु दिक्षु संस्थितं दृष्टमुपलब्धं भवति। न हि देवतादशकं हित्वा जगन्नाम किञ्चिदस्ति। तथा च दृष्टे देवतादशके दृष्टमेव सर्वं जगद्भवेदित्यर्थः। भूमिकामेवं कृत्वा फलं दर्शयति—एवंविद इति। वायुं प्राणमत्तारमात्मत्वेन पश्यतः कृतसंख्यावच्छिन्नतया स्थितस्य दशदेवताभूतस्य सर्वं जगद्दृष्टं भवति। दृष्टदेवतातिरिक्तस्य जगतोऽभावादित्यर्थः। यो यथोक्तदर्शी प्राणो भूत्वा सर्वत्रान्नादश्च भवतीति फलान्तरम् ॥ ८ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य तृतीयः खण्डः

पूर्वेण सम्बन्धं दर्शयितुमुत्तरस्य तात्पर्यमाह—सर्वमिति। एकीकृत्य कारणरूपेणैक्यमादायेत्यर्थः। तर्हि

---

१. सत्यकामकथां शुद्धां सम्प्रदायानुसारिणीम्।
पाश्चात्याश्च स्वकीयाश्च विपर्यस्यन्ति मोहतः ॥
तत्तत्त्वं विवृणोम्यत्र स्फुटं भाष्ये प्रदर्शितम् ॥
तथा हि—सत्यकामो जाबालः जबालां मातरमामन्त्रयांचक्रे भवति ब्रह्मचर्यं गुरौ वत्स्यामि किं

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥**

स्यते। श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनायाऽऽख्यायिका। सत्यकामो ह नामतो हशब्द ऐतिह्यार्थो जबालाया अपत्यं जाबालो जबालां स्वां मातरमामन्त्रयांचक्र आमन्त्रितवान्। ब्रह्मचर्यं स्वाध्यायग्रहणाय हे भवति विवत्स्याम्याचार्यकुले, किंगोत्रोऽहं किमस्य मम गोत्रं सोऽहं किंगोत्रो न्वहमस्मीति ॥ १ ॥

एवं पृष्टा जबाला सा हैनं पुत्रमुवाच—नाहमेतत्तव गोत्रं वेद हे तात यद्गोत्रस्त्वमसि। कस्मान्न वेत्सीत्युक्ता-

आनन्दगिरिटीका

तस्मिन्ब्रह्मदृष्टिरेव विधीयतां किमित्याख्यायिका प्रणीयते तत्राऽऽह—श्रद्धातपसोरिति। ब्रह्मचर्यवासस्योद्देश्यं फलं दर्शयति—स्वाध्यायेति। आचार्यो हि माणवकमुपनयते विज्ञातकुलगोत्रमेवेति मन्वानः पृच्छति—किङ्गोत्रोऽहमिति ॥ १ ॥

अतिथ्यभ्यागताद्यधिकृत्य परिचर्याजातं बहु चरन्ती भर्तृगृहे यतोऽहं स्थिता तेन परिचरन्ती सती परिचरणचित्ततया गोत्रादीन्नापृच्छम्। तथा च तत्स्मरणे मनो मम नाऽऽसीदिति। गोत्रादिप्रश्नाभावे हेत्वन्तर-

---

गोत्रोऽहमिति। सा चैनमुवाच बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे। साहमेतन्न वेद यद्गोत्रस्त्वमसि। गुरुसमीपे सत्यकामो जाबालोऽहमस्मि भोः इति ब्रुवीथा इति। एवमेव जाबालः हारिद्रुमतं गौतममेत्य "भवत्सु ब्रह्मचर्यं वत्स्यामी"ति प्रार्थयामास। तेन च गोत्रे पृष्टे मात्रा यदुक्तं तदेव प्रोवाच। गुरुश्च नैतदब्राह्मणो वक्तुमर्हति न सत्यादगा इत्युक्त्वा तं शिष्यत्वेन परिजग्राहेति मूलम्। अत्र आधुनिकाः केचित् "बह्वहं चरन्ती" इत्यस्य बहु व्यभिचरन्ती यौवने त्वामलभे। अतः बहुपतिकत्वात् मम न जाने त्वत्पितरं; अतो न मे त्वद्गोत्रपरिज्ञानमिति व्याख्याय प्राचीनकाले वर्णाश्रमव्यवस्था नासीत् यः सत्यं वदति स ब्राह्मणः इत्येव नियमः इति—कल्पयन्ति। श्रीशङ्करभगवत्पादाः रामानुजमध्वाचार्यौ च ऋजुनैव मार्गेण एकरूपेणैव कथां विवृण्वन्ति। तथा हि—बह्वहं पत्या सह यौवने सञ्चरन्ती पत्युः अतिथीनां च शुश्रूषां कुर्वती आसं तदैव त्वं जातः। अनन्तरं च त्वत्पिता दिवङ्गतः। अतः त्वद्गोत्रं त्वत्पित्राऽनुक्तत्वात् न जानामीति। गुरुश्च तद्वचनं यथार्थमिति गृहीत्वा तं उपनिन्ये इति।

अत्र नवीनव्याख्यानं बहुधा दोषयुक्तम्। तथा हि—लोकप्रसिद्धो मनुष्यस्वभाव एव शास्त्रेष्वनूद्यते विद्याविशेषविधानाय अर्थवादरूपेण। तत्र च या काचन स्त्री अत्यन्तपामरा वा पर्वतादिषु वसन्ती वा चण्डाली वा किं स्वकीयव्यभिचारकथामन्यत्र प्रकटयेद्वा, तत्रापि स्वपुत्रे, तत्रापि इमां कथां स्वगुरौ प्रकाशयेति वदेद्वा इति प्रथमं विचारणीयम्। सर्वथा असम्भावितमिदं स्त्रीस्वभावविरोधात्। यौवने त्वामलभे इत्युक्तेः अयमभिप्रायः यौवने लज्जया पत्या सह सम्भाषितुमपि नावसरः दूरे गोत्रं प्रष्टुं, वार्धके तु पुत्रोपनयनकन्याविवाहादौ गोत्रं पुरोहितादिभिः पुनः पुनरुच्यमानं श्रवणपथमधिरोहति। प्रथमाध्यायगतचाक्रायणोपाख्याने तु आटिक्या सह जायया उषस्तिर्ह चाक्रायण इति अनभिव्यक्तयौवना आटिकी भर्त्रा सह सञ्चरन्ती इत्युक्तम्। अत्र यौवने इति विशेषः। यौवनोक्तिस्तु गोत्रापरिज्ञानकारणं तत्काल एव भर्तृवियोगं च सूचयति। अपि च परिचारिणीति शब्दः शुश्रूषापरः न क्वचिदपि व्यभिचरणे प्रयुक्तः। अपि च गोत्रापरिज्ञानमेव तया प्रोक्तं न भर्त्रपरिज्ञानम्। गोत्रं तु मूलपुरुषं सूचयति।

अपि च उत्तराध्याये छान्दोग्य एव उद्दालकादयः षडृषयः वैश्वानरविद्याप्रेप्सया अश्वपतिं केकयराजनं गच्छन्ति। स चेमान् विशुद्धान् ब्राह्मणान् स्वदेशे आवासवृत्त्यादिकं दत्वा स्थापयितुमिच्छन् वदति "न मे स्तेनो जनपदे नानाहिताग्निः न स्वैरी स्वैरिणी कुतः? वसन्तु भवन्तः इति"। अत्र स्वदेशे स्वैरिणी स्याच्चेद्दृषयो न वसेयुरिति भीत्या 'न स्वैरिणी' इति वदति। स्वैरिण्यभावात् शिष्टानां वासयोग्यः

**स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥३॥**

**तँ होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरँ सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साऽहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहँ सत्यकामो जाबालोऽस्मि भो इति ॥४॥**

ऽऽह—बह्वहं भर्तृगृहे परिचर्याजातमतिथ्यभ्यागतादि चरन्त्यहं परिचारिणी परिचरन्तीति परिचरणशीलैवाहं परिचरणचित्ततया गोत्रादिस्मरणे मम मनो नाभूत्। यौवने च तत्काले त्वामलभे लब्धवत्यस्मि। तदैव ते पितोपरतः। अतोऽनाथाऽहं साऽहमेतन्न वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः यदाचार्येण पृष्ट इत्यभिप्रायः ॥ २ ॥

स ह सत्यकामो हारिद्रुमतं हरिद्रुमतोऽपत्यं हारिद्रुमतं गौतमं गोत्रत एत्य गत्वोवाच ब्रह्मचर्यं भगवति पूजावति त्वयि वत्स्याम्यत उपेयामुपगच्छेयं शिष्यतया भगवन्तमित्युक्तवन्तं तं होवाच गौतमः। किंगोत्रो नु सोम्यासीति विज्ञातकुलगोत्रः शिष्य उपनेतव्य इति पृष्टः प्रत्याह सत्यकामः। स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि। किं त्व-

नरेन्द्रपुरीयं टिप्पणम्

यौवने चेति लज्जया नापृच्छमिति सूचयति ॥ २-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य चतुर्थपञ्चमखण्डौ

आनन्दगिरिटीका

माह—**यौवन इति**। यद्यपि तस्यामवस्थायां लज्जया गोत्रादि नाप्राक्षीस्तथाऽपि कालान्तरे किमिति पितरं न पृष्टवतीत्याशङ्क्याऽऽह—**तदैवेति**। तथाऽपि किमित्यन्यमभिज्ञं नाप्राक्षीरित्याशङ्क्याऽऽह—**अत इति**। प्रथमं लज्जया पितरं प्रति न प्रश्नः पुनश्च तस्योपरतत्वात्पश्चान्न दुःखबाहुल्यादन्यं प्रति प्रश्न इति स्थिते प्रश्नाभावफलमाह—**साऽहमिति**। किं तर्हि तव ज्ञानमस्ति तदाह—**जबाला त्विति**। एवं स्थिते किमाचार्यं प्रति मया वक्तव्यमित्याशङ्क्याऽऽह—**स त्वमिति**। नापृष्टः कस्यचिद्ब्रूयादिति न्यायं सूचयति—**यदेति** ॥ २ ॥

मातृवचनश्रवणानन्तरं किं कृतवानित्यपेक्षायामाह—**स हेति**। आचार्यसमीपे ब्रह्मचर्यवासः शिष्यभावादृते न सिध्यतीत्यभिमन्वानायोक्तम्—**अत इति**। किमनया काकदन्तपरीक्षया भवता त्वहमुपनेतव्योऽस्मीत्याशङ्क्याऽऽह—**विज्ञातेति**। मातरं पृष्ट्वा विज्ञायाऽऽगम्यतामित्याशङ्क्याऽऽह—**किं त्वित्यादिना** ॥ ३-४ ॥

---

मदीयो जनपदः इति भावः। एवं सति तत्काल एव सन् हारिद्रुमतो गौतमः जाबालं स्वैरिणीपुत्रं शृण्वन् तस्माद्देशान् झटित्येव पलायेत, न तु स्वैरिणीपुत्रस्योपदेशे प्रवर्तेत। उपदिशति च। तस्मान्न स्वैरिणी जबाला। अपि च जबालायाः बहुपतिकत्वं कल्पयन्तः मूर्खाः सत्यकामः कस्योत्पन्नः ब्राह्मणस्य वा अन्यस्य वा इति सा न जानातीति वदन्ति। इदं तु अनुभवविरुद्धम् अत एव बृहस्पतिपत्नी तारा देवैः पृष्टा सती बुधः चन्द्रस्यैवोत्पन्न इति प्रतिजज्ञे।

अपि च सत्यकामः सत्यमेवावददिति कथं गौतमो निश्चिकायेति विवेक्तव्यम् सत्यवादित्वात् सः ब्राह्मण इति प्रबुद्धवानिति च श्रूयते। यदि कादाचित्कं सत्यवचनं ब्राह्मणत्वे हेतुः तदा न कोऽपि न ब्राह्मण इति व्याकुलीभावः। यदि जन्मप्रभृति मरणान्तं सत्यवादित्वं ब्राह्मणत्वे हेतुः तदा प्रसिद्धब्राह्मण्यानामपि दुर्लभं ब्राह्मण्यं स्यात्। अतः एवं मन्यते गौतमः—बालः यदि स्वयमब्राह्मणस्सन् गुरुं वञ्चयितुमिच्छेत् तदा श्रीपरशुरामसमीपे धनुर्विद्याग्रहणाय गतः कर्ण इव यत्किञ्चिद्गोत्रमात्मनः कल्पयेत्। न तु मम मातरमपृच्छं सापि न वेद इति विषादं प्रकटयेत्। अतः ब्राह्मण एवायमिति निरधारयत् इति वक्तव्यम्। आधुनिकानां परदर्शितदर्शिनां व्यामोह एवायं यत् स्वैरिणीपुत्रोऽयम् वर्णव्यवस्था च नासीत्पूर्वकाले इति कल्पनम्। व्यभिचारोत्पन्नस्य कुण्डगोलकादेः न ब्राह्मण्यमनुमन्यते शास्त्रकारैरित्यपि न विस्मर्तव्यम्।

[1]तँ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधँ सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय[2] कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तेयेति स ह वर्षगणं प्रोवास ता यदा सहस्रँ संपेदुः ॥ ५ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य चतुर्थः खण्डः

अथ हैनमृषभोऽभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रँ स्मः प्रापय न आचार्यकुलम् ॥ १ ॥

पृच्छं पृष्टवानस्मि मातरम् । सा मया पृष्टा मां प्रत्यब्रवीन्माता । बह्वहं चरन्तीत्यादि पूर्ववत् । तस्या अहं वचः स्मरामि सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥ ३-४ ॥

तं होवाच गौतमो नैतद्वचोऽब्राह्मणो विशेषेण वक्तुमर्हत्यार्जवार्थसंयुक्तम् । ऋजवो हि ब्राह्मणा नेतरे स्वभावतः । यस्मान्न सत्याद्ब्राह्मणजातिधर्मादगा नापेतवानसि । अतो ब्राह्मणं त्वामुपनेष्येऽतः संस्कारार्थं होमाय समिधं सोम्याऽऽहरेत्युक्त्वा तमुपनीय कृशानामबलानां गोयूथान्निराकृत्यापकृष्य चतुःशता चत्वारि शतानि गवामुवाचेमा गाः सोम्यानुसंव्रजानुगच्छ । इत्युक्तस्ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच—नासहस्रेणापूर्णेन सहस्रेण नाऽऽवर्तेय न प्रत्यागच्छेयम् । स एवमुक्त्वा गा अरण्यं तृणोदकबहुलं द्वंद्वरहितं प्रवेश्य स ह वर्षगणं दीर्घं प्रोवास प्रोषितवान् । ताः सम्यग्गावो रक्षिता यदा यस्मिन्काले सहस्रं संपेदुः संपन्ना बभूवुः ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य चतुर्थः खण्डः

तमेतं श्रद्धातपोभ्यां सिद्धं वायुदेवता दिक्संबन्धिनी तुष्टा सत्यृषभमनुप्रविश्यर्षभापन्नाऽनुग्रहायाथ हैनमृष-

नरेन्द्रपुरीयं टिप्पणम्

उपसमाधायेति इन्धनैः प्रज्वाल्येत्यर्थः । एक उपशब्दोऽनर्थकः ॥ १-२ ॥

आनन्दगिरिटीका

ब्राह्मणस्य वाऽनृतं विना कथमार्जसंयुक्तवचनमित्याशङ्क्याऽऽह—ऋजवो हीति । क्षत्रियादीनामपि केषाञ्चिदार्जवमस्तीत्याशङ्क्याऽऽह—नेतर इति । ऋजुवचनत्वेन ब्राह्मणत्वं प्रतिजानीते—यस्मादिति । उपनीयाध्याप्य चेति शेषः । तस्यानुग्रहार्थं शुश्रूषामादिष्टवानित्याह—कृशानामिति । आचार्यनियोगश्च शिष्येण सफलीकर्तव्य इत्याशयेनाऽऽह—इत्युक्त इति । सम्पन्ना बभूवुस्तदैनमृषभोऽभ्युक्तवानिति सम्बन्धः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य चतुर्थः खण्डः

कथमृषभः सत्यकामं प्रति वक्तुमलं न हि लोके बलीवर्दस्य मनुष्यं प्रति वचनं दृष्टमत आह—तमेतमिति ।

---

१. तदभावनिर्धारणे च प्रवृत्तेरिति सूत्रे ( १-३-३७ ) श्रीव्यासाचार्यैः सत्यकामस्य शूद्रत्वाभावनिर्धारणानन्तरमेवोपदेशे प्रवृत्तिः गोतमस्य श्रूयमाणा शूद्राणां वेदपूर्वकं ब्रह्मविद्योपदेशे अनधिकारं सूचयतीति प्रत्यपादि ।

२. उपनयनं द्विविधं एकमध्ययनाङ्गं उपनीय तु यश्शिष्यं वेदमध्यापयेद् द्विज-इत्यादिशास्त्रसिद्धम् । अपरं ब्रह्मविद्याङ्गं "अधीहि भगव इति होपससाद सनत्कुमारं नारदः" "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादिशास्त्रसिद्धम् । उभयविधमप्युपनयनं सत्यकामः प्रार्थयामास उपेयां भगवन्तं इति तद्वचनात् । गुरुस्तु तं ब्राह्मणं विज्ञाय उपनीय अध्ययनं च कारयित्वा गुरुशुश्रूषया शुद्धान्तःकरणाय तस्मै ब्रह्मविद्यामप्युपदेक्ष्यामीति मत्वा तमुपनिन्ये ( ब्रह्मविद्याभरणे ) अस्याः उपासनायाः फलं तु एकैकपादोपासनस्य यत्फलमुक्तं प्रकाशवान् भवति अनन्तवान् भवति इत्यादिना तत्समुदाय एव फलान्तराश्रवणात् ।

ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥

स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य पञ्चमः खण्डः

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

भोऽभ्युवादाभ्युक्तवान्सत्यकाम ३ इति संबोध्य, तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ । प्राप्ताः सोम्य सहस्रं स्मः पूर्णा तव प्रतिज्ञाऽतः प्रापय नोऽस्मानाचार्यकुलम् ॥ १ ॥

किंचाहं ब्रह्मणः परस्य ते तुभ्यं पादं ब्रवाणि कथयानि । इत्युक्तः प्रत्युवाच—ब्रवीतु कथयतु मे मह्यं भगवान् । इत्युक्त ऋषभस्तस्मै सत्यकामाय होवाच । प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः । तथा प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य ब्रह्मणः पादश्चतुष्कलश्चतस्रः कला अवयवा यस्य सोऽयं चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम प्रकाशवानित्येवं नामाभिधानं यस्य । तथोत्तरेऽपि पादास्त्रयश्चतुष्कला ब्रह्मणः ॥ २ ॥

स यः कश्चिदेवं यथोक्तमेतं ब्रह्मणश्चतुष्कलं पादं विद्वान्प्रकाशवानित्यनेन गुणेन विशिष्टमुपास्ते तस्येदं फलं प्रकाशवानस्मिन् लोके भवति प्रख्यातो भवतीत्यर्थः । तथाऽदृष्टं फलं प्रकाशवतो ह लोकान्देवादिसंबन्धिनो मृतः सञ्जयति प्राप्नोति । य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य पञ्चमः खण्डः

सोऽग्निस्ते पादं वक्तेत्युपरराम ऋषभः । स सत्यकामो ह श्वोभूते परेद्युर्नैत्यकं नित्यं कर्म कृत्वा गा अभिप्रस्थापयांचकाराऽऽचार्यकुलं प्रति । ताः शनैश्चरन्त्य आचार्यकुलाभिमुख्यः प्रस्थिता यत्र यस्मिन्काले देशेऽभि सायं निशायामभिसंबभूवुरेकत्राभिमुख्यः संभूताः, तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ऋषभवचो ध्यायन् ॥ १ ॥

आनन्दगिरिटीका

सत्यकामं श्रद्धादिसम्पन्नमेनमथ तस्यामवस्थायामृषभोऽनुग्रहायाभ्युवादेति सम्बन्धः । ऋषभस्य स्वरूपमाह—वायुदेवतेति । अरण्ये तत्र तत्र गाश्चारयतः श्रद्धापूर्वकं तपश्चरतो वायुदेवता कथं तुष्टेत्याशङ्क्याऽऽह—दिक्सम्बन्धिनीति ॥ १ ॥

वाक्यान्तरं च मदीयं श्रूयतामित्याह—किञ्चेति । वायुदेवता दिक्सम्बन्धिनीत्युक्त्वाद्दिग्गोचरमेव दर्शनमुवाचेत्याह—प्राचीति । ब्रह्मणः पादस्येति व्यधिकरणे षष्ठ्यौ । एकपादेव ब्रह्मेति विभ्रमं व्युदस्यति—तथेति ॥ २ ॥

प्रथमपादोपासकस्य दृष्टमदृष्टं च फलमाह—स य इत्यादिना । कस्येदं फलमित्युक्ते पूर्वोक्तमेवोपासकमनुवदति—य एतमिति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य पञ्चमः खण्डः

अवशिष्टं पादत्रयं कथं द्रष्टव्यमिति बुभुत्समानं सत्यकामं प्रत्याह—सोऽग्निरिति । अविदुषो विद्याभिमाननिमित्तकर्मत्यागो न युक्त इति मत्वाऽऽह—सत्यकाम इति । अभि सायं बभूवुः सायंकालं प्राप्ता इति यावत् । तस्य ब्रह्मचर्यमव्यावृत्तमिति सूचयति—तत्रेति । उपोपविवेश तत्रोपशब्दाभ्यां गवामग्नेश्च सामीप्ये निवेशनमस्योच्यते । अर्थिने विद्या वक्तव्येति सूचयति—ऋषभेति ॥ १ ॥

तमग्निरभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य षष्ठः खण्डः

हँसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तँ हँस उपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥

तमग्निरभ्युवाद सत्यकाम ३ इति संबोध्य, तमसौ सत्यकामो भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ॥२॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलेत्यात्मगोचरमेव दर्शनमग्निरब्रवीत्। एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स यः कश्चिद्यथोक्तं पादमनन्तवत्त्वेन गुणेनोपास्ते स तथैव तद्गुणो भवत्यस्मिंल्लोके। मृतश्चानन्तवतो ह लोकान्स जयति य एतमेवमित्यादि पूर्ववत् ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य षष्ठः खण्डः

सोऽग्निर्हंसस्ते पादं वक्तेत्युक्त्वोपरराम। हंस आदित्यः। शौक्ल्यात्पतनसामान्याच्च। स ह श्वोभूत इत्यादि समानम् ॥ १-२ ॥

नरेन्द्रपुरीयं टिप्पणम्

आत्मगोचरमिति। पृथिव्यादीनां गार्हपत्यतनुत्वेन वक्ष्यमाणत्वात् गार्हपत्यगोचरमित्यर्थः। मद्गुर्जलकाकः आपोमयः प्राण इति वक्ष्यति। ततोऽप्सम्बन्धात् प्राणदेवता कल्प्यते ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य षष्ठसप्तमाष्टमाः खण्डाः

आनन्दगिरिटीका

आत्मगोचरमग्नेस्त्वास्य विद्यमानमित्यर्थः। यद्वा पृथिव्यादिरूपेणाग्नेरवस्थानादग्निविषयमित्यर्थः। यथोक्तपादे गुणविशेषं निर्दिशति—एष वा इति ॥ ३ ॥

द्वितीयपादोपासकस्य द्विविधं फलं दर्शयति—स य इति। यथोक्तं चतुष्कलमिति यावत्। तथैवोपास्यगुणानुरोधेनेत्यर्थः। तद्गुणस्तेन गुणेन गुणवाननन्तवानविच्छिन्नसन्तानो भवतीत्यर्थः। अनन्तवतो लोकानक्षयानित्येतत् ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थोऽध्यायस्य षष्ठः खण्डः

अवशिष्टपादद्वयं कथं ज्ञातव्यमिति जिज्ञासमानं प्रत्याह—सोऽग्निरिति। पक्षिविशेषविषयत्वं हंसशब्दस्य व्यावर्तयति—आदित्य इति। कथं तत्र हंसशब्दस्य प्रवृत्तिरित्याशङ्क्याऽऽह—शौक्ल्यादिति ॥ १-२ ॥

स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य सप्तमः खण्डः

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥
तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥
ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कल पादो ब्रह्मण आयतनवान्नाम ॥ ३ ॥
स य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वाँश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

इति च्छान्दोग्योपनिषदि तृतीयाध्यायस्याष्टमः खण्डः

अग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्येति ज्योतिर्विषयमेव च दर्शनं प्रोवाचातो हंसस्याऽऽदित्यत्वं प्रतीयते। विद्वत्फलं—ज्योतिष्मान्दीप्तियुक्तोऽस्मिँल्लोके भवति। चन्द्रादित्यादीनां ज्योतिष्मत एव च मृत्वा लोकाञ्जयति। समानमुत्तरम् ॥ ३४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य सप्तमः खण्डः

हंसोऽपि मद्गुष्टे पादं वक्तेत्युपरराम। मद्गुरुदकचरः पक्षी स चाप्सम्बन्धात्प्राणः स ह श्वोभूत इत्यादि पूर्ववत् ॥ १ ॥

स च मद्गुः प्राणः स्वविषयमेव च दर्शनमुवाच प्राणः कलेत्यादि, आयतनवानित्येवं नाम। आयतनं नाम मनः सर्वकरणोपहृतानां भोगानां तद्यस्मिन्पादे विद्यत इत्यायतनवान्नाम पादः ॥ २-३ ॥

तं पादं तथैवोपास्ते यः स आयतनवानाश्रयवानस्मिँल्लोके भवति। तथाऽऽयतनवत एव सावकाशाँल्लोकान्मृतो जयति। य एतमेवमित्यादि पूर्ववत् ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्याष्टमः खण्डः

आनन्दगिरिटीका

आदित्योऽपि स्वविषयमेव दर्शनमुक्तवानित्याह—अग्निरिति। तृतीये पादेऽपि गुणविशेषमुपदिशति—एष वा इति। यतो हेतोर्ज्योतिर्विषयमेव दर्शनमुक्तवानत एव तस्याऽऽदित्यत्वं प्रतिभातीत्यादित्यत्वे हंसस्य गमकान्तरमाह—ज्योतिर्विषयमेवेति। य एतमेवं विद्वानित्याद्युत्तरम् ॥ ३-४ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य सप्तमः खण्डः

अवशिष्टं पादान्तरं तर्हि कथं ज्ञायतामित्याशङ्क्याऽऽह—हंसोऽपीति। मद्गुशब्दस्य वाच्यमर्थमन्वाचष्टे—मद्गुरिति। तस्य कथं सत्यकामं प्रत्युपदेष्टृत्वमत आह—स चेति ॥ १ ॥

तं मद्गुरुपनिपत्येत्यत्र मद्गुशब्दार्थं पूर्वोक्तमेव स्मारयति—मद्गुः प्राण इति। प्राणः कलेत्याद्यायतनवानित्येवमिति यथोक्तगुणं समर्थयते—आयतनमित्यादिना। तद्यस्मिन्पादे वर्तते सोऽयमायतनवान्नाम पाद इति द्रष्टव्यमिति योजना ॥ २-३ ॥

द्विविधं विद्याफलमभिप्रेते—तं पादमिति। तथैवाऽऽयतनवत्त्वगुणाक्रान्तत्वेनैवेत्यर्थः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्याष्टमः खण्डः

प्राप हाऽऽचार्यकुलं तमाचार्योऽभ्युवाद–सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाँ्स्त्वेव मे कामे ब्रूयात् ॥ २ ॥

श्रुतँ्ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥ ३ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य नवमः खण्डः

स एवं ब्रह्मवित्सन्प्राप ह प्राप्तवानाचार्यकुलम् । तमाचार्योऽभ्युवाद सत्यकाम ३ इति । भगव इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि । प्रसन्नेन्द्रियः प्रहसितवदनश्च निश्चिन्तः कृतार्थो ब्रह्मविद्भवति । अत आचार्यो ब्रह्मविदिव भासीति । को न्विति वितर्कयन्नुवाच कस्त्वामनुशशासेति । स चाऽऽह सत्यकामोऽन्ये मनुष्येभ्यः । देवता मामनुशिष्टवत्यः । कोऽन्यो भगवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहेतेत्यभिप्रायः । अतोऽन्ये मनुष्येभ्य इति ह प्रतिजज्ञे प्रतिज्ञातवान् । भगवांस्त्वेव मे कामे ममेच्छायां ब्रूयात्किमन्यैरुक्तेन नाहं तद्गणयामीत्यभिप्रायः ॥ २ ॥

किंच श्रुतं हि यस्मान्मम विद्यत एवास्मिन्नर्थे भगवद्दृशेभ्यो भगवत्समेभ्य ऋषिभ्यः । आचार्याद्धैव विद्या विदिता साधिष्ठं साधुतमत्वं प्रापदिति प्राप्नोतीत्यतो भगवानेव ब्रूयादित्युक्त आचार्योऽब्रवीत्तस्मै तामेव दैवतैरुक्तां विद्याम् । अत्र ह न किंचन षोडशकलविद्यायाः किंचिदेकदेशमात्रमपि न वीयाय न विगतमित्यर्थः । द्विरभ्यासो विद्यापरिसमाप्त्यर्थः ॥ ३ ॥

इति च्छान्दोग्योपनिच्छाङ्करभाष्ये चतुर्थाध्यायस्य नवमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

कामे; निमित्ते सप्तमीयं कामपरिपूर्तिं निमित्तीकृत्याभिलषितसिद्धयर्थमित्यर्थः ॥ १-२ ॥

पादचतुष्टयानुध्यानं समुच्चितमेका विद्या तत्तत्फलं च संहृत्यैकविद्याफलत्वेन परिणेयमेकैकपादोपासनस्य कृतार्थत्वाहेतुत्वादित्याचार्योपदेशः सार्थक इत्यर्थः ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य नवमः खण्डः

आनन्दगिरिटीका

ब्रह्मविदिव भासीत्युक्ते कीदृशो ब्रह्मविदित्यपेक्षायामाह—प्रसन्नेन्द्रिय इति । सत्यकामस्यापि तल्लक्षणवत्त्वमतःशब्दार्थः । मां त्वदाचार्यमवज्ञाय मच्छिष्यं त्वां कोऽन्यो मनुष्यो मच्छापादभीतः शिष्यत्वेनाऽऽदायानुशासनं कृतवान्यदनुशासनात्ते ब्रह्मविद्या जातेति साक्षेपं पृच्छति—कस्त्वामिति । मनुष्येभ्य सकाशादन्ये मामनुशिष्टवन्त इति सामान्यप्रतिज्ञां विभजते—देवता इति । देवतानामेवोपदेष्टृत्वं व्यतिरेकद्वारा विशदयति—कोऽन्य इति । प्रतिज्ञां निगमयति—अत इति । मया तर्हीदानीं न किञ्चिदस्ति तव कर्तव्यमित्याशङ्कां वारयति—भगवानिति ॥ २ ॥

इतश्च भगवानेव ब्रवीतु मे विद्यामित्याह—किञ्चेति । तदेव कारणं दर्शयति—श्रुतमिति । अस्मिन्नर्थे आचार्यादेव विद्या श्रोतव्येत्येवंलक्षणे । श्रुतमेव विशदयति—आचार्यादिति । विदिता प्राप्तेति यावत् । आचार्याधीना धीरेव फलवतीत्यतःशब्दार्थः । विद्यान्तरमाचार्येणोक्तमिति शङ्कामेवकारेण वारयति । दैवतैराचार्येण च सत्यकामायोक्तां विद्यामस्मान्प्रति श्रुतिर्ज्ञापयति—अत्रेति । न विगतं किन्तु पूर्णैव विद्या वाय्वादिभिराचार्येण चोपदिष्टेति शेषः । तत्रापि पादचतुष्टयानुध्यानसमुच्चितमेकमेव विज्ञानं तत्फलं च संहृत्यैकविज्ञानफलत्वेन परिणेयमेकैकपादोपासनस्य कृतार्थत्वाहेतुत्वादित्याचार्योपदेशस्यैव सार्थकत्वमिति द्रष्टव्यम् ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां तृतीयाध्यायस्य नवमः खण्डः

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादश
वर्षाण्यग्नीन्परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयँ स्तँ ह स्मैव न समावर्तयति ॥ १ ॥

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाऽग्नयः
परिप्रवोचन्प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे ॥ २ ॥

स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच—ब्रह्मचारिन्नशान किं नु नाश्नासीति स
होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥ ३ ॥

अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीद्धन्तास्मै
प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

पुनर्ब्रह्मविद्यां प्रकारान्तरेण वक्ष्यामीत्यारभते गतिं च तद्विदोऽग्निविद्यां च। आख्यायिका पूर्ववच्छ्रद्धातपसोर्ब्रह्मविद्यासाधनत्वप्रदर्शनार्था—उपकोसलो ह वै नामतः कमलस्यापत्यं कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य, हः ऐतिह्यार्थः। तस्याऽऽचार्यस्य द्वादश वर्षाण्यग्नीन्परिचचाराग्नीनां परिचरणं कृतवान्। स ह स्माऽऽचार्योऽन्यान्ब्रह्मचारिणः स्वाध्यायं ग्राहयित्वा समावर्तयंस्तमेवोपकोसलमेकं न समावर्तयति स्म ह ॥ १ ॥

तमाचार्यजायोवाच तप्तो ब्रह्मचारी कुशलं सम्यगग्नीन्परिचचारीत्परिचरितवान्। भगवांश्चाग्निषु भक्तं न समावर्तयति। अतोऽस्मद्भक्तं न समावर्तयतीति ज्ञात्वा त्वामग्नयो मा परिप्रवोचन्गर्हां तव मा कुर्युः। अतः प्रब्रूह्यस्मै विद्यामिष्टामुपकोसलायेति। तस्मा एवं जाययोक्तोऽपि हाप्रोच्यैवानुक्त्वैव किंचित्प्रवासांचक्रे प्रवसितवान् ॥ २ ॥

स होपकोसलो व्याधिना मानसेन दुःखेनानशितुमनशनं कर्तुं दध्रे धृतवान्मनः। तं तूष्णीमग्न्यगारेऽवस्थितमाचार्यजायोवाच हे ब्रह्मचारिन्नशान भुङ्क्ष्व किं नु कस्मान्नु कारणान्नाश्नासीति। स होवाच बहवोऽनेकेऽस्मिन्पुरुषेऽकृतार्थे प्राकृते कामा इच्छाः कर्तव्यं प्रति नानाऽत्ययोऽतिगमनं येषां व्याधीनां कर्तव्यचिन्तानां ते नानात्यया व्याधयः कर्तव्यताप्राप्तिनिमित्तानि चित्तदुःखानीत्यर्थः। तैः प्रतिपूर्णोऽस्मि। अतो नाशिष्यामीति ॥ ३ ॥

उक्त्वा तूष्णींभूते ब्रह्मचारिण्यथ हाग्नयः शुश्रूषयाऽऽवर्जिताः कारुण्याविष्टाः सन्तस्त्रयोऽपि समूदिरे संभूयोक्त-

नरेन्द्रपुरीयं टिप्पणम्

पूर्वं सप्रपञ्चब्रह्मोपासनमुक्तमिदानीं कार्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासनं विधीयते। अग्निविद्याया अपि तच्छेषत्वादित्याह—पुनर्ब्रह्मविद्यामित्यादिना ॥ १ ॥

तप्त इति। बहुक्लेशं कृतवानित्यर्थः ॥ २ ॥

जाया मे स्यात् प्रजा मे स्याद्वित्तं मे स्यादिति नानाविषयेषु प्रवेशो येषां कर्तव्यविषयचिन्तानां त एव व्याधय इत्यर्थः ॥ ३-४ ॥

आनन्दगिरिटीका

सप्रपञ्चब्रह्मोपासनमुक्त्वा कार्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासनं वक्तुं खण्डान्तरमवतारयति—पुनरिति। न केवलं ब्रह्मविद्याशेषत्वादित्यर्थः। पूर्ववदिति। यथा पूर्वस्मिन्खण्डे श्रद्धातपसोर्ब्रह्मोपासनाङ्गत्वप्रदर्शनायाऽऽख्यायिकेत्युक्तं तद्वदित्यर्थः ॥ १ ॥

तप्त इति। भवदपेक्षितां शुश्रूषां विदधानो बहुकायक्लेशं कृतवानित्यर्थः। विवक्षितशुश्रूषाकरणमेव विशदयति—कुशलमिति। किमिति भवत्या मां ब्रूहीदमिदानीमुच्यते न हि मत्तोऽन्यत्र त्वदनुरागो युक्तिमानित्याशङ्क्य भगवति स्नेहादित्याह—भगवानिति। अग्नीन्परिचरमाणब्रह्मचारिणोऽसमावर्तनमतःशब्दार्थः। गर्हापरिहारो द्वितीयेनातः शब्देन परामृश्यते। आचार्यशुश्रूषापरं शिष्यं देवतैवानुगृह्णातीति ज्ञापयितुमारभते—तस्मा इति ॥ २ ॥

आचार्याभिप्रायमजानतः शिष्यस्य दुःखप्राप्तिं दर्शयति—स हेति। अतिगमनं वस्तुस्वरूपमतीत्य विषयेषु प्रवेश इति यावत्। नानात्यया इति कामानां विशेषणम्। कथं तेन व्याधयो विशेष्यन्ते तत्राऽऽह—कर्तव्येति। कामा एव व्याधय इत्यर्थः ॥ ३ ॥

**स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं चोचुः ॥ ५ ॥**

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य दशमः खण्डः

वन्तः। हन्तेदानीमस्मै ब्रह्मचारिणेऽस्मद्भक्ताय दुःखिताय तपस्विने श्रद्दधानाय सर्वेऽनुशास्मोऽनुप्रब्रवाम ब्रह्मविद्यामिति। एवं संप्रधार्य तस्मै होचुरुक्तवन्तः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

स होवाच ब्रह्मचारी विजानाम्यहं यद्भवद्भिरुक्तं प्रसिद्धपदार्थकत्वात्प्राणो ब्रह्मेति। यस्मिन्सति जीवनं यदपगमे च न भवतीति तस्मिन्वायुविशेषे लोके रूढोऽतो युक्तं ब्रह्मत्वं तस्य। तेन प्रसिद्धपदार्थकत्वाद्विजानाम्यहं यत्प्राणो ब्रह्मेति। कं च तु खं च न विजानामीति। ननु कंखंशब्दयोरपि सुखाकाशविषयत्वेन प्रसिद्धपदार्थकत्वमेव, कस्माद्ब्रह्मचारिणोऽज्ञानम्? नूनं सुखस्य कंशब्दवाच्यस्य क्षणप्रध्वंसित्वात्खंशब्दवाच्यस्य चाऽऽकाशस्याचेतनस्य कथं ब्रह्मत्वमिति मन्यते। कथं च भवतां वाक्यमप्रमाणं स्यादिति। अतो न विजानामीत्याह।

तमेवमुक्तवन्तं ब्रह्मचारिणं ते हाग्नयः ऊचुः यद्वाव यदेव वयं कमवोचाम तदेव खमाकाशमित्येवं खेन विशेष्यमाणं कं विषयेन्द्रिसंयोगजात्सुखान्निवर्तितं स्यान्नीलेनेव विशेष्यमाणमुत्पलं रक्तादिभ्यः। यदेव खमित्याकाशमवोचाम तदेव च कं सुखमिति जानीहि। एवं च सुखेन विशेष्यमाणं खं भौतिकादचेतनात्खान्निवर्तितं स्यान्नीलोत्पलवदेव। सुखमाकाशस्थं नेतरल्लौकिकम्। आकाशं च सुखाश्रयं नेतरद्भौतिकमित्यर्थः। नन्वाकाशं चेत्सुखेन विशेषयितुमिष्टमस्त्वन्यतरदेव विशेषणं यद्वाव कं तदेव खमित्यतिरिक्तमितरत्। यदेव खं तदेव कमिति पूर्वविशेषणं वा। ननु सुखाकाशयोरुभयोरपि लौकिकसुखाकाशाभ्यां व्यावृत्तिरिष्टेत्यवोचाम।

### नरेन्द्रपुरीयं टिप्पणम्

सुखाकाशयोरितरेतरविशेषणविशेष्यभावाग्रहणात् ब्रह्मचारिणो व्यामोहोऽभूत् तत इतरेतरविशेषणविशेष्यभावप्रदर्शनेन मोहमप्यपनिन्युरग्नय इत्याह—तमेवमुक्तवन्तमित्यादिना। इतरेतरविशेषणविशेष्यभावमाक्षिपति—नन्वाकाशश्चेदिति। पूर्वविशेषणं वा अतिरिक्तम्। आकाशश्रयं सुखमित्युक्ते लौकिकाकाशाल्लौकिकसुखाच्च

### आनन्दगिरिटीका

आचार्यप्रवासात्तज्जायाया ब्रह्मचारिण्यनुग्रहात्तस्य चानशनाध्यवसायादनन्तरमित्यथशब्दार्थः। हन्तेति यद्यर्थः, अस्मद्भक्तं ब्रह्मचारिणमुपेक्ष्य देशान्तरं गतस्तर्हीति यावत्। अथ पुनरेत्याऽऽचार्यो ब्रह्मविद्यामस्मै विवक्षितां च वक्ष्यति किं त्वरयेत्याशङ्क्याऽऽह—दुःखितायेति। ब्रह्मविद्यासाधनसम्पत्तिमस्य दर्शयति—तपस्विन इति ॥ ४ ॥

प्राणो ब्रह्मेति भवद्भिरुक्तं तदहं विजानामीति सम्बन्धः। तत्र हेतुमाह—प्रसिद्धेति। प्राणपदस्य प्रसिद्धार्थत्वमेव समर्थयते—यस्मिन्निति। एवंभूतः प्राणशब्द इति शेषः। प्राणशब्दस्य प्रसिद्धार्थत्वेऽपि कुतो ब्रह्मत्वं तस्मिन्प्रसिद्धमित्याशङ्क्याऽऽह—अत इति। कार्यकरणसंघाते नष्टेऽग्रहणादित्यतःशब्दार्थः। स्वकीयज्ञानसमुच्चयार्थश्चकारः। विजानाम्यहमित्युक्तमुपसंहरति—तेनेति। स्वेनाज्ञातं ब्रह्मचारी दर्शयति—कं चेति। तस्याज्ञानमाक्षिपति—नन्विति। प्राणशब्दस्य वायुविशेषविषयत्वेन प्रसिद्धार्थत्ववदित्यपेरर्थः। ब्रह्मचारिणोऽभिप्रायं दर्शयन्नुत्तरमाह—नूनमिति। ननु विरुद्धार्थत्वादग्नीनां वाक्यं भवत्वप्रमाणमित्याशङ्क्याऽऽह—कथं चेति। विरुद्धार्थत्वप्रतीतेराप्तवाक्यस्य चाप्रामाण्यायोगाद्युक्तं ब्रह्मचारिणोऽज्ञानमिति निगमयति—अत इति।

खस्य विशेषणत्वं कस्य च विशेष्यत्वमित्यङ्गीकारे फलं कथयति—इत्येवमिति। कस्य विशेषणत्वं खस्य विशेष्यत्वमित्येवमपि विशेषणविशेष्यत्वमवगन्तव्यमित्याह—यदेवेति। यथोक्तविशेषणविशेष्यभावे फलमाह—एवं चेति। यद्वावेत्यादिवाक्यार्थमुक्तमेव प्रतिपत्तिसौकर्यार्थं संक्षिपति—सुखमिति। इतरेतरविशेषणविशेष्यत्वमाक्षिपति—नन्विति। अन्यतरदेवेत्यत्र यदेव खमित्येतदुच्यते यद्वाव कं तदेव खमित्यत्र यद्वाव कमितीतरद्विशेषणमतिरिक्तमधिकमकिंचित्करमिति योजना। यदि तु यदेव खं तदेव कमिति खेन कं विशेष्यते, तदा यदेव खमित्येतदेव विशेषणमस्तु। यद्वाव कमिति पूर्वविशेषणमकिंचित्करमित्याह—यदेवेति। वाशब्दोऽतिरिक्तमित्येतदनुकर्षणार्थः। विशेषणयोरर्थवत्त्वं पूर्वोक्तं सिद्धान्ती स्मारयति—नन्विति। तथा च सुखस्य लौकिकसुखाद्व्यावृत्त्यर्थं यदेव खमिति विशेषणमाकाशस्य च लौकिकाकाशाद्व्यावृत्त्यर्थं यद्वाव कमिति विशेषणमर्थवदिति शेषः।

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति**
**य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

सुखेनाऽऽकाशे विशेषिते व्यावृत्तिरुभयोरर्थप्राप्तैवेति चेत्सत्यमेवं किन्तु सुखेन विशेषितस्यैवाऽऽकाशस्य ध्येयत्वं विहितं न त्वाकाशगुणस्य विशेषणस्य सुखस्य ध्येयत्वं विहितं स्यात्। विशेषणोपादानस्य विशेष्यनियन्तृत्वेनैवोपक्षयात्। अतः खेन सुखमपि विशेष्यते ध्येयत्वाय। कुतश्चैतन्निश्चीयते। कंशब्दस्यापि ब्रह्मशब्दसम्बन्धात्कं ब्रह्मेति। यदि हि सुखगुणविशिष्टस्य खस्य ध्येयत्वं विवक्षितं स्यात्कं खं ब्रह्मेति ब्रूयुरग्नयः प्रथमम्। न चैवमुक्तवन्तः। किं तर्हि कं ब्रह्म खं ब्रह्मेति। अतो ब्रह्मचारिणो मोहापनयनाय कंखंशब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशो युक्त एव यद्वाव कमित्यादिः।

तदेतदग्निभिरुक्तं वाक्यार्थमस्मद्बोधाय श्रुतिराह—प्राणं च हास्मै ब्रह्मचारिणे। तस्याऽऽकाशस्तदाकाशः। प्राणस्य सम्बन्ध्याश्रयत्वेन हार्द आकाश इत्यर्थः। सुखगुणवत्त्वनिर्देशात्तं चाऽऽकाशं सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसम्पर्कादेव ब्रह्मेत्युभयं प्राणं चाऽऽकाशं च समुच्चित्य ब्रह्मणी ऊचुरग्नय इति ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य दशमः खण्डः

सम्भूयाग्नयो ब्रह्मचारिणे ब्रह्मोक्तवन्तः। अथानन्तरं प्रत्येकं स्वस्वविषयां विद्यां वक्तुमारेभिरे। तत्राऽऽदा-

नरेन्द्रपुरीयं टिप्पणम्

व्यावृत्तिः सिद्धैव भवतीति। द्वितीयं विशेषणमनर्थकमेवेत्याह सिद्धान्ती—सत्यमेवमिति। इतश्च गुणस्य ध्येयत्वं विवक्षितमित्याह—कुतश्चेति ॥ ५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य दशमः खण्डः

प्रधानविद्यामुपदिश्याङ्गविधानायोपक्रमते—सम्भूयेत्यादिना। भोज्यत्वं लक्षणं ययोः पृथिव्यन्नयोस्तयो-

आनन्दगिरिटीका

अन्यतरविशेषणवशादपि यथोक्तव्यावृत्तिसिद्धेरकिंचित्करं विशेषणद्वयमिति शङ्कते—सुखेनेति। यदा सुखेनाऽऽकाशं विशेष्यते तदा भूताकाशादाकाशं व्यावर्तितं भवति सुखस्य तद्विशेषणत्वायोगात्। सुखमपि लौकिकसुखाद्व्यवच्छिद्यते। लौकिकसुखस्याऽऽकाशविशेषणत्वानुपपत्तेः। अतः सुखेनाऽऽकाशस्याऽऽकाशेन सुखस्य वा विशेषितत्वसामर्थ्यात्प्राप्तैव सुखाकाशयोर्लौकिकसुखाकाशाभ्यां व्यावृत्तिरित्यन्यतरदेव विशेषणमर्थवदित्यर्थः। किमन्यतरस्यैव विशेषणस्य व्यावर्तकत्वमित्यापाद्यते किं वा तस्यैवार्थवत्त्वमिति तत्राऽऽद्यमङ्गीकरोति—सत्यमेवमिति। द्वितीयं दूषयति—न त्वित्यादिना। विशिष्टस्यैव ध्येयत्वे विशेषणस्यापि ध्येयत्वं सिध्यतीति चेन्नैवं दण्डी प्रैषानन्वाहेतिवद्विशेषणस्यान्यथासिद्धत्वादित्याह—विशेषणेति। द्वयोरपि विशेषणयोरर्थवत्त्वं निगमयति—अत इति। विधान्तरेण ध्येयत्वासम्भवादित्यतःशब्दार्थः। खमिव सुखेनेत्यपेरर्थः। इतश्च सुखाकाशयोरितरेतरविशेषणविशेष्यत्वमेषितव्यमित्याह—कुतश्चेति। कुतःशब्दोपात्तमितःशब्दार्थं स्फुटयति—कंशब्दस्येति। खं ब्रह्मेति खंशब्दस्य ब्रह्मशब्दसम्बन्धवदित्यपेरर्थः। गुणगुणिनोरुभयोरपि ध्येयत्वसिद्ध्यर्थमितरेतरविशेषणविशेष्यत्वं कंशब्दस्य खंशब्दस्य च प्रत्येकं ब्रह्मशब्दसम्बन्धादपि स्वीकर्तव्यमित्युक्तं व्यतिरेकद्वारा साधयति—यदि हीति। उक्तरीत्या द्वयोरपि ध्येयत्वमतःशब्दार्थः। ब्रह्मचारिणो मोहो नामान्योन्यविशेषणविशेष्यत्वाग्रहणादाकाशस्यैव गुणिनो ध्येयत्वं न तु सुखस्य गुणस्येति विभ्रमः।

प्राणं चेत्यादि वाक्यं नाग्नीनां न ब्रह्मचारिणः। तथा च कथमुपाख्यायिकायामिदं निर्वहतीत्याशङ्क्याऽऽह—तदेतदिति। आकाशस्य प्राणसम्बन्धित्वं कया विधयेत्यपेक्षायामाह—आश्रयत्वेनेति। कार्यब्रह्मोपासनसमुच्चितं कारणब्रह्मोपासनमुपसंहर्तुमितिशब्दः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य दशमः खण्डः

प्रधानविद्यामुपदिश्याङ्गविद्याविधानायोपक्रमते—संभूयेति। अनन्तरं प्रधानविद्योपदेशादिति शेषः। अग्नि-

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्यैकादशः खण्डः

अथ हैनमन्वाहार्यपचनोऽनुशशासाऽऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

वेनं ब्रह्मचारिणं गार्हपत्योऽग्निरनुशशास । पृथिव्यग्निरन्नमादित्य इति ममैताश्चतस्रस्तनवः । तत्र य आदित्य एष पुरुषो दृश्यते सोऽहमस्मि गार्हपत्योऽग्निर्यश्च गार्हपत्योऽग्निः स एवाहमादित्ये पुरुषोऽस्मीति । पुनः परावृत्त्या स एवाहमस्मीति वचनम् । पृथिव्यन्नयोरिव भोज्यत्वलक्षणयोः सम्बन्धो न गार्हपत्यादित्ययोः । अत्तृत्वपक्तृत्वप्रकाशनधर्मा अविशिष्टा इत्यत एकत्वमेवानयोरत्यन्तम् । पृथिव्यन्नयोस्तु भोज्यत्वेनाऽऽभ्यां सम्बन्धः ॥ १ ॥

स यः कश्चिदेवं यथोक्तं गार्हपत्यमग्निमन्नान्नादत्वेन चतुर्धा प्रविभक्तमुपास्ते सोऽपहते विनाशयति पापकृत्यां पापं कर्म । लोकी लोकवांश्चास्मदीयेन लोकेनाऽऽग्नेयेन तद्वान्भवति यथा वयमिह च लोके । सर्वं वर्षशतमायुरेति प्राप्नोति ज्योगुज्ज्वलं जीवति नाप्रख्यात इत्येतत् । न चास्यावराश्च ते पुरुषाश्चास्य विदुषः सन्ततिजा इत्यर्थः । न क्षीयन्ते सन्तत्युच्छेदो न भवतीत्यर्थः । किं च तं वयमुपभुञ्जामः पालयामोऽस्मिंश्च लोके जीवन्तममुष्मिंश्च परलोके । य एतमेवं विद्वानुपास्ते यथोक्तं तस्यैतत्फलमित्यर्थः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्यैकादशः खण्डः

अथ हैनमन्वाहार्यपचनोऽनुशशास दक्षिणाग्निरापो दिशो नक्षत्राणि चन्द्रमा इत्येता मम चतस्रस्तनवश्चतुर्धाऽहमन्वाहार्यपचन आत्मानं प्रविभज्यावस्थितः तत्र य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाह-

नरेन्द्रपुरीयं टिप्पणम्

गार्हपत्येन यथा सम्बन्धः तथा न गार्हपत्यादित्ययोः किन्तु तादात्म्यलक्षण एवेत्यत्र हेतुमाह—अत्तृत्वेति । चतुर्मूर्तिरहमन्नान्नादत्वलक्षण इति गार्हपत्य उपदिदेशेत्यर्थः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य एकादश. खण्डः

दक्षिणादिक्सम्बन्धाच्च दक्षिणाग्निचन्द्रमसोरेकत्वं शेषत्वं दिगात्मत्वं च सिद्धमित्यर्थः—दक्षिणाग्नेरिति । दक्षिणाग्निं प्रत्यन्नत्वसामान्यादितिः ज्योतिष्ट्वाविशेषादेकत्वं द्रष्टव्यमित्यर्थः ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य द्वादशः खण्डः

आनन्दगिरिटीका

विद्यां वक्तुमारब्धानामग्नीनां मध्ये प्रथममिति श्रुतावथशब्दार्थः । पृथिव्यादिचतुष्टयमनूद्याग्न्यादित्ययोरवान्तरभेदं दर्शयति—तत्रेति । एवमग्न्यादित्ययोस्तादात्म्यमितीतिशब्दार्थः । य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्येतावतैव तयोस्तादात्म्यसिद्धेः स एवाहमस्मीति पुनरुक्तिरनर्थिकेत्याशङ्क्याऽऽह—पुनरिति । भोज्यत्वं लक्षणं स्वभावो ययोस्तयोर्गार्हपत्येन यथा सम्बन्धस्तथा गार्हपत्यादित्ययोर्न सम्बन्धः किन्तु तादात्म्यलक्षण एवेत्यत्र हेतुमाह—अत्तृत्वेति । पृथिव्यादावपि तादात्म्यं किं न स्यादित्याशङ्क्याऽऽह—पृथिवीति । आभ्यामग्न्यादित्याभ्यामिति यावत् । स एवाहमस्मीति परावृत्त्या पुनर्वचनं यथोक्तार्थविशेषसिद्ध्यर्थमिति भावः ॥ १ ॥

उक्ताया विद्याया गार्हपत्यविषयाया द्विविधं फलं दर्शयति—स यः कश्चिदित्यादिना । कस्यैतत्फलमित्यपेक्षायामुक्तमेव संक्षिपति—य एतमेवमिति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्यैकादशः खण्डः

गार्हपत्योपदेशानन्तर्यमथशब्दार्थः । अबादिचतुष्टयमनूद्य दक्षिणाग्नौ चन्द्रे च विशेषं दर्शयति—तत्रेति ।

[1]स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति [2]ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य द्वादशः खण्डः

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिँश्च लोकेऽमुष्मिँश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य त्रयोदशः खण्डः

मस्मीति पूर्ववत् । अन्नसम्बन्धाज्ज्योतिष्ट्वसामान्याच्चान्वाहार्यपचनचन्द्रमसोरेकत्वं दक्षिणा(ण)दिक्सम्बन्धाच्च । अपां नक्षत्राणां च पूर्ववदन्नत्वेनैव सम्बन्धः । नक्षत्राणां चन्द्रमसो भोग्यत्वप्रसिद्धेः । अपामन्नोत्पादकत्वादन्नत्वं दक्षिणाग्नेः पृथिवीवद्गार्हपत्यस्य । समानमन्यत् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य द्वादशः खण्डः

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति समाप्येताश्चतस्रस्तनवः । य एष विद्युति पुरुषो

आनन्दगिरिटीका

अन्वाहार्यपचनचन्द्रमसोस्तादात्म्येनावन्नेन नक्षत्राणां च ताभ्यां भोज्यत्वेन सम्बन्ध इति वक्तुं पुनर्वचनमित्याह—स एवेति । कथं पुनरन्वाहार्यपचनचन्द्रमसोस्तादात्म्यं तत्राऽऽह—अन्नसम्बन्धादिति । प्रसिद्धं हि दर्शपूर्णमासयोरन्वाहार्यपचने हविःश्रपणम् । ते चन्द्रं प्राप्यान्नं भवन्तीत्यादौ चन्द्रमसि प्रसिद्धोऽन्नसम्बन्धः । तस्मात्तयोस्तादात्म्यमित्यर्थः । तयोरेकत्वे हेत्वन्तरमाह—ज्योतिष्ट्वेति । तत्रैव हेत्वन्तरमाह—दक्षिणेति । अन्वाहार्यपचनो हि दक्षिणाग्निरुच्यते । चन्द्रमाश्च दक्षिणेन पथा प्राप्यमाणो दक्षिणस्यां दिशि भवतीति गम्यते । उत्तरदिगधिष्ठातुरपि तस्य तत्सम्बन्धानिवारणात्तद्युक्तं तयोरैक्यमित्यर्थः । अपां नक्षत्राणां च चन्द्रवदन्वाहार्यपचनेन तादात्म्यमाशङ्क्याऽऽह—अपामिति । पूर्ववत्पृथिव्यन्नयोस्तयोर्गार्हपत्यादित्याभ्यामन्नत्वेन सम्बन्धवदिति यावत् । सम्बन्धोऽन्वाहार्यपचनचन्द्रमोभ्यामिति शेषः । कथं नक्षत्राणामन्नत्वं तत्राऽऽह—नक्षत्राणामिति । कथं पुनरपामन्नत्वं तदाह—अपामिति । दक्षिणाग्नेर्दक्षिणाग्निं प्रतीति यावत् । पृथिव्या गार्हपत्याग्निं प्रत्यन्नत्ववदित्युदाहरणार्थः । स य एतमेवं विद्वानित्याद्यन्यदित्युक्तम् ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य द्वादशः खण्डः

गार्हपत्यस्य दक्षिणाग्नेश्चोपासनानन्तर्यमथशब्दार्थः । तत्रावान्तरभेदं दर्शयति—य एष इति । सोऽहमस्मीत्याद्यन्यत्समानमिति सम्बन्धः । यथा पूर्वं ज्योतिष्ट्वाविशेषाद् गार्हपत्यादित्ययोरन्वाहार्यपचनचन्द्रमसोश्च साम्य-

---

१. स य एतमेवं विद्वानिति—अग्निविद्यानां ब्रह्मविद्याङ्गत्वं; तासामङ्गत्वे द्वारप्रदर्शनपराणि तद्गतफलवचनानि । तथा हि—अपहते पापकृत्यामित्यनेन ब्रह्मोपासनाप्रवृत्तिप्रतिबन्धकदुरितनिवृत्तिरुच्यते । लोकीभवतीत्यनेन अर्चिरादिमार्गप्रथमपर्वरूपाग्निप्राप्तिरुच्यते । सुखाकाशब्रह्मोपासकस्य मरणानन्तरं देवयानमार्गप्राप्तिरुच्यते न विलम्बेन । अत एवास्योपासकस्य पुत्रादिभिः शवसंस्काराकरणेऽपि देवयानप्राप्तिरुक्ता । सर्वमायुरेतीत्यनेन दीर्घायुष्ट्वं तेन दीर्घकालोपासनलाभः ।

२. ज्योग्जीवतीत्यनेन चित्तविक्षेपं विना उपासनप्रवृत्तौ अपेक्षितधनधान्यादिसमृद्धिरुक्ता । वंशाविच्छेदश्च ज्ञानकर्मसन्तत्यविच्छेद उच्यते । उपवयं तं भुञ्जाम इत्यनेन अग्नीनामुपासकसंरक्षणमुच्यते तच्चोपासकस्य ऐहिकामुष्मिकप्रतिबन्धकनिवृत्तये भवति ( न्यायरक्षामणिः ) ।

ते होचुरुपकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या चाऽऽचार्यस्तु ते [1]गतिं वक्तेत्याजगाम हास्याऽऽचार्यस्तमाचार्योऽभ्युवादोपकोसल३ इति ॥ १ ॥

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु माऽनुशिष्याद्भो इतीहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

दृश्यते सोऽहमस्मीत्यादि पूर्ववत्सामान्यात् । दिवा ( द्य्वा ) काशयोस्त्वाश्रयत्वाद्विद्युदाहवनीययोर्भोग्यत्वेनैव सम्बन्धः । समानमन्यत् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य त्रयोदशः खण्डः

ते पुनः सम्भूयोचुर्होपकोसलैषा सोम्य ते तवास्मद्विद्याऽग्निविद्येत्यर्थः । आत्मविद्या पूर्वोक्ता प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति च । आचार्यस्तु ते गतिं वक्ता विद्याफलप्राप्तय इत्युक्त्वोपरेमुरग्नयः । आजगाम हास्याऽऽचार्यः कालेन । तं च शिष्यमाचार्योऽभ्युवादोपकोसल ३ इति ॥ १ ॥

भगव इति ह प्रतिशुश्राव । ब्रह्मविद इव सोम्य ते मुखं प्रसन्नं भाति को नु त्वाऽनुशशासेत्युक्तः प्रत्याह । को नु माऽनुशिष्यादनुशासनं कुर्याद्भो भगवंस्त्वयि प्रोषित इतीहापेव निह्नुतेऽपनिह्नुत इवेति व्यवहितेन सम्बन्धो न चापनिह्नुते न च यथावदग्निभिरुक्तं ब्रवीतीत्यभिप्रायः । कथमिमेऽग्नयो मया परिचरिता उक्तवन्तो नूनं यतस्त्वां दृष्ट्वा वेपमाना इवेदृशा दृश्यन्ते पूर्वमन्यादृशाः सन्त इतीहाग्नीनभ्यूदेऽभ्युक्तवान्काक्वाऽग्नीन्दर्शयन् । किं नु सोम्य किल ते तुभ्यमवोचन्नग्नय इति पृष्ट इत्येवमिदमुक्तवन्त इत्येवं ह प्रतिजज्ञे प्रतिज्ञातवान्प्रतीकमात्रं

नरेन्द्रपुरीय टिप्पणम्

प्राणस्य चात्तृत्वादन्नाहवनीयरूपे निवेशः । दिवाकाशयोरन्नत्वे हेतुमाह—दिवाकाशयोश्चेति ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य त्रयोदशः खण्डः

काक्वेति—ध्वनिभेदेन ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य चतुर्दशः खण्डः

आनन्दगिरिटीका

मुक्तं तथा ज्योतिष्ट्वसामान्याद्विद्युदाहवनीययोस्तादात्म्यमेष्टव्यमित्याह—पूर्ववदिति । कथं तर्हि ताभ्यां दिवाकाशयोः सम्बन्धस्तत्राऽऽह—दिवा (द्य्वा)काशयोस्त्विति । आहवनीयस्य फलत्वाद्दिवो विषयत्वं तत्र होमादिद्वारा निष्पन्नापूर्वस्य द्युलोकफलत्वाभ्युपगमाद्विद्युतस्त्वाकाशाश्रयत्वं प्रसिद्धमतो विद्युदाहवनीययोर्भोग्यत्वेनैव दिवा-(द्य्वा) काशयोः सम्बन्ध इत्यर्थः । स य एतमेवमित्याद्यन्यदित्युक्तम् ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य त्रयोदशः खण्डः

अग्नीनां मिथो विसंवादं व्यावर्तयति—ते पुनरिति । तथाऽप्यात्मविद्या श्रोतव्येत्याशङ्क्याऽऽह—आत्मविद्येति । कथमाचार्योपदेशमन्तरेण भगवदुपदेशवशादेव मे विद्या फलवत्याचार्याद्धैव विद्या विदिता साधिष्ठमित्यादि हि प्रागुक्तमत आह—आचार्यस्त्विति ॥ १ ॥

अपनिह्नुत इवेत्यत्रेवशब्दतात्पर्यं दर्शयति—न चेति । उक्तमभिप्रायमाकाङ्क्षापूर्वकं विवृणोति—कथमित्यादिना । काक्वा स्वरभङ्गेन भीतः सन्नुक्तवानस्फुटमिति यावत् । भीतिं शिष्यस्यापनयन्नाचार्यो ब्रूते—किं नु सोम्येति । आचार्यवाक्यस्थमितिशब्दमनूद्य व्याचष्टे—इत्येवमिति । पृष्टः सन्निति पूर्वेण सम्बन्धः ।

---

१. गतिं वक्तेति । अत्र गतिशब्दः गम्यत इति व्युत्पत्त्या फलपरः । प्रथमं फल एव जिज्ञासोदयात् अन्यत्र फलानुक्तेश्च ब्रह्मविद्यायाः । अत एव लोकान् वाव किल ते अवोचन् इत्यनेन अग्निविद्याफलमुक्तमनूद्य पापासंश्लेषफलमुपसंह्रियते ।

**इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥**

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य चतुर्दशः खण्डः

**[1]य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥**

किञ्चिन्न सर्वं यथोक्तमग्निभिरुक्तमवोचत्। यत आहाऽऽचार्यो लोकान्वाव पृथिव्यादीन्हे सोम्य किल तेऽवोचन्न ब्रह्म साकल्येन। अहं तु ते तुभ्यं तद्ब्रह्म यदिच्छसि त्वं श्रोतुं वक्ष्यामि, शृणु तस्य मयोच्यमानस्य ब्रह्मणो ज्ञानमाहात्म्यं यथा पुष्करपलाशे पद्मपत्र आपो न श्लिष्यन्त एवं यथा वक्ष्यामि ब्रह्मैवंविदि पापं कर्म न श्लिष्यते न सम्बध्यत इत्येवमुक्तवत्याचार्य आहोपकोसलो ब्रवीतु मे भगवानिति तस्मै होवाचाऽऽचार्यः ॥ २-३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य चतुर्दशः खण्डः ॥ २-३ ॥

य एषोऽक्षिणि पुरुषो दृश्यते निवृत्तचक्षुर्भिर्ब्रह्मचर्यादिसाधनसम्पन्नैः शान्तैर्विवेकिभिर्दृष्टेर्द्रष्टा "चक्षुषश्चक्षुः" इत्यादिश्रुत्यन्तरात्। नन्वग्निभिरुक्तं वितथं यत आचार्यस्तु ते गतिं वक्तेति गतिमात्रस्य वक्तेत्यवोचन्भविष्यद्विषयापरिज्ञानं चाग्नीनाम्। नैष दोषः। सुखाकाशस्यैवाक्षिणि दृश्यत इति द्रष्टुरनुवादात्। एष आत्मा प्राणिनामिति

नरेन्द्रपुरीयं टिप्पणम्

अपूर्वविद्योपदेशं मत्वा शङ्कते—नन्वग्निभिरिति। अग्निवचनादुपदेष्टृभेदेऽपि विद्यैक्यमवगम्यते। प्रकृतविद्यायामेव स्थानाद्युपदेश आचार्येण क्रियते ततो विद्याभेदाभावाभिधायित्वादग्नीनां गतिशब्दस्य स्थानाद्युपलक्षणार्थत्वान्न मृषावादित्वमित्याह—नैष दोष इति ॥ १-२ ॥

आनन्दगिरिटीका

यस्मादग्निभिरुक्तमाचार्याय प्रतीकद्वारा शिष्यो निवेदितवांस्तस्मादाचार्यः प्राप्तः सावकाशमित्याह—यत इति। कं ब्रह्म खं ब्रह्मेत्यादिना ब्रह्मापि तैरुक्तमित्याशङ्क्याऽऽह—न ब्रह्मेति। कथं तर्हि साकल्येन ब्रह्म ज्ञातव्यमित्यत आह—अहं त्विति। ब्रह्मज्ञाने किं स्यादित्याशङ्क्याऽऽह—शृण्विति ॥ २-३ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य चतुर्दशः खण्डः

कथमुपसन्नायाऽऽचार्यो ब्रह्मचारिणे ब्रह्मविद्यामुक्तवानित्यत आह—य एष इति। अक्षिस्थाने तदुपलक्षितो द्रष्टा य एष पुरुषो दृश्यत इति सम्बन्धः। नासौ सर्वेषां छायात्मातिरिक्तो दृष्टिगोचरतामाचरतीत्याशङ्क्याधिकारिणो विशिनष्टि—निवृत्तेति। निवृत्तानि विषयेभ्यो विमुखानि चक्षूंपि बाह्यानि करणानि येषां तैरिति यावत्। बाह्यकरणानां स्ववशत्वाधीनं विशेषणान्तरमाधत्ते—ब्रह्मचर्यादीति। मनसो विषयपारवश्यराहित्ये विशेषणान्तरमाह—शान्तैरिति। तेषां निवृत्तचक्षुष्ट्वं हेतुमाह—विवेकिभिरिति। पुरुषोऽक्षिणि द्रष्टेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति—चक्षुष इति। आचार्येणापूर्वविद्योपदेशादग्नीनामुक्तिर्मिथ्या प्राप्तेति शङ्कते—नन्विति। अग्निवचनस्य गत्यन्तरमाह—भविष्यदिति। नाग्नीनामुक्तिर्मृषा नापि तेषां भविष्यद्विषयाज्ञानमिति दूषयति—नैष दोष इति। यत्सुखगुणक-

---

१. उपकोसलविद्यामधिकृत्य अन्तर उपपत्तेरित्यधिकरणे विचारः कृतः ( १-२-१३ ) तथा हि—य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति इत्यत्र श्रूयमाणः पुरुषः प्रतिबिम्बात्मा, उत जीवात्मा, उत चक्षुरधिष्ठाता देवतात्मा उत परमेश्वर इति सन्देहे परमेश्वर इति सिद्धान्तः आत्मत्वामृतत्वाभयत्वादीनां तत्रैव सम्भवात्। वामनीत्वसंयद्वामत्वादीनां तत्रैवोपपत्तेः। अक्षिस्थाननिर्देशस्तु उपासनार्थः। कं खं ब्रह्मेति सुखाकाशब्रह्मनिर्देशः, देवयानमार्गनिर्देशश्च परमात्मन्येवोपपद्यते। प्रतिबिम्बस्तु स्थिरत्वाभावात् अमृतत्वादिगुणानां तस्मिन्नसम्भवाच्च नात्र ग्रहणमर्हति।

एतँ संयद्वाम इत्याचक्षत एतँ हि सर्वाणि वामान्यभि-
संयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति [1]सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥

अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्य-
माणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाँस्तान्मासेभ्यः संवत्सरँ संवत्सरादादित्य-

होवाचैवमुक्तवानेतद्यदेवाऽऽत्मतत्त्वमवोचाम। एतदमृतममरणधर्म्यविनाश्यत एवाभयं यस्य हि विनाशाशङ्का तस्य भयोपपत्तिस्तदभावादभयमत एवैतद्ब्रह्म बृहदनन्तमिति। किञ्चास्य ब्रह्मणोऽक्षिपुरुषस्य माहात्म्यं तत्तत्र पुरुषस्य स्थानेऽक्षिणि यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति पक्ष्मावेव गच्छति न चक्षुषा सम्बध्यते पद्मपत्रेणेवोदकम्। स्थानस्याप्येतन्माहात्म्यं किं पुनः स्थानिनोऽक्षिपुरुषस्य निरञ्जनत्वं वक्तव्यमित्यभिप्रायः ॥ १ ॥

एतं यथोक्तं पुरुषं संयद्वाम इत्याचक्षते। कस्मात्। यस्मादेतं सर्वाणि वामानि वननीयानि संभजनीयानि शोभनान्यभिसंयन्त्यभिसङ्गच्छन्तीत्यतः संयद्वामः। तथैवंविदमेनं सर्वाणि वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥

एष उ एव वामनीर्यस्मादेष हि सर्वाणि वामानि पुण्यकर्मफलानि पुण्यानुरूपं प्राणिभ्यो नयति प्रापयति वहति चाऽऽत्मधर्मत्वेन। विदुषः फलं—सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥

एष उ एव भामनीरेष हि यस्मात्सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादिरूपैर्भाति दीप्यते। "तस्य भासा सर्वमिदं विभाति" इति श्रुतेरतो भामानि नयतीति भामनीः। य एवं वेदासावपि सर्वेषु लोकेषु भाति ॥ ४ ॥

अथेदानीं यथोक्तब्रह्मविदो गतिरुच्यते। यद्यदि उ चैवास्मिन्नेवंविदि शव्यं शवकर्म मृते कुर्वन्ति यदि च न

नरेन्द्रपुरीयं टिप्पणम्

नैयायिकादिलक्षणवदत्यन्तभेदशङ्कानिरासायाह—वहति चेति। परमेश्वर एव हि सर्वभूतेषु प्रतिबिम्बितः सन् फलवोढा भवति। न तु जात्यन्तरभूतान्प्रतिभावयति। वस्तुतः परिच्छेदेनानित्यत्वादिप्रसङ्गादित्यर्थः ॥३-४॥

आनन्दगिरिटीका

माकाशमुपास्यमग्निभिरुपदिष्टं तस्यैव कारणब्रह्मणो द्रष्टृरूपस्याक्षिणि दृश्यत इत्यनुवादो गतिव्याख्यानायाऽऽचार्येण क्रियते तन्नास्ति दोषद्वयमित्यर्थः। अक्षिणि दृश्यत इति प्रयोगादाचार्येण च्छायात्मा विवक्षित इत्याशङ्क्याऽऽह—एष इति। इतश्च नायं पुरुषश्छायात्मेत्यनन्तरवाक्यमवतार्य व्याकरोति—एतदित्यादिना। इतिशब्दो यथोक्तगुणैरुपास्यः पुरुषो न च्छायात्मा भवितुमर्हतीत्यर्थः। असङ्गत्वाच्च नायं छायात्मेत्याह—किञ्चेति। माहात्म्यं स्थानद्वारेणोच्यत इति शेषः। किमेतावता पुरुषस्याऽऽयातमित्याशङ्क्याऽऽह—स्थानस्यापीति ॥ १ ॥

तस्यैवोपास्यत्वार्थं गुणान्तरं दर्शयति—एतमिति। पुरुषस्य संयद्वामत्वं ब्रह्मविदुक्त्या सिद्धमपि नावयवार्थ-मन्त्रेण व्यक्तीभवतीति शङ्कते—कस्मादिति। अवयवार्थोपन्यासेन परिहरति—यस्मादिति। गुणोपास्तिफलमाह—तथेति। उपास्यगुणानुसारेणेत्यर्थः एवंविदं संयद्वामगुणविशिष्टपुरुषोऽस्मीति वेदितारमित्येतत् ॥ २ ॥

गुणान्तरमुपास्यत्वाय दर्शयति—एष इति। तद्व्युत्पादयति—एष इति ॥ ३ ॥

गुणान्तरं ध्यानायोक्त्वा व्युत्पादयति—एष इत्यादिना। आदित्यादिरूपेणास्यैव दीप्यमानत्वे श्रुत्यन्तर-मनुकूलयति—तस्येति। गुणोपास्तिफलमाह—य एवमिति ॥ ४ ॥

गतिं वक्तुं पूर्वोक्तब्रह्मविद्यायासधिकगुणानेवाऽऽचार्योऽन्ववादीदिदानीं तामेव गतिमवतारयति—अथेति। तां वक्तुं पातनिकां करोति—यद्यदीति। करणाकरणाभ्यां विदुषो न वृद्धिर्नापि हानिरित्यत्र श्रुत्यन्तरं प्रमाणयति—

१. सर्वाणि वामानि नयति सर्वेषु लोकेषु भातीत्यादिफलोपपादकतया तद्गुणविशिष्टब्रह्मोपासनमुक्तं गुरुणा एतं संयद्वाम इत्याचक्षते एष उ एव वामनीः भामनीरित्यादिभिः तत्क्रतुन्यायानुरोधात्।

मादित्याचन्द्रमसं[1] चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स [2]एनान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नाऽऽवर्तन्ते नाऽऽवर्तन्ते ॥ ५ ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य पञ्चदशः खण्डः

कुर्वन्ति ऋत्विजः सर्वथाप्येवंवित्तेन शवकर्मणाऽकृतेनापि प्रतिबद्धो न ब्रह्म[न] प्राप्नोति। न च कृतेन शवकर्मणाऽस्य कश्चनाभ्यधिको लोकः। "न कर्मणा वर्धते नो कनीयान्" इति श्रुत्यन्तरात्। शवकर्मण्यनादरं दर्शयन्विद्यां स्तौति न पुनः शवकर्मैवंविदो न कर्तव्यमिति। अक्रियमाणे हि शवकर्मणि कर्मणा फलारम्भे प्रतिबन्धः कश्चिदनुमीयतेऽन्यत्र। यत इह विद्याफलारम्भकाले शवकर्म स्याद्वा न वेति विद्यावतोऽप्रतिबन्धेन फलारम्भं दर्शयति। ये सुखाकाशमक्षिस्थं संयद्वामो वामनीर्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च तेषामन्यत्कर्म भवतु मा वा भूत्सर्वथाऽपि [3]तेऽर्चिषमेवाभिसम्भवन्त्यर्चिरभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्त इत्यर्थः।

नरेन्द्रपुरीयं टिप्पणम्

यदु चैवास्मिन्निति वाक्यस्य तात्पर्यमुक्त्वाऽर्थिकं तात्पर्यमाह—अक्रियमाणेऽपीति। अपिशब्दस्य प्रतिबन्धशब्देन सम्बन्धः विद्यावतोऽप्रतिबन्धेन फलारम्भ इति विशेषणाद्विद्याहीनस्य प्रतिबन्धोऽपि स्यादिति तर्क्यत इत्यर्थः। सत्यलोकस्थमिति। देशावच्छेदेन किमिति व्याख्यायते। मुख्यमेव ब्रह्मशब्दालम्बनं किन्नोच्यते तत्राह—

आनन्दगिरिटीका

न कर्मणेति। अथ यदु चैवेत्यादिवाक्यस्य तात्पर्यं दर्शयति—शवकर्मणीति। तात्पर्यान्तरं दर्शयति—न पुनरिति। यदि विदुषोऽपि शवकर्म कर्तव्यं कस्तर्हि तस्य विशेषस्तत्राऽऽह—अक्रियमाणे हीति। अन्यत्रेत्यविद्यावानुच्यते—इहेति। प्रस्तुतवाक्यस्य विद्यावतो वोक्तिरिति शवकर्मण्यनादरपूर्वकमिति शेषः। विद्यावतः शवकर्मभावाभावयोरप्रतिबन्धः फलं सिध्यति। अविद्यावतस्तु शवकर्माकरणे कर्माणि न फलदानीति विद्यास्तुतिरिहाभिप्रेतेति भावः। तेऽर्चिषमेवेत्यत्र तच्छब्दार्थं व्याचष्टे—ये सुखाकाशमिति।

---

१. आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतं इत्युक्तेः तदनन्तरं विद्युल्लोकाद्वरुणलोकं ततः इन्द्रलोकं ततः प्रजापतिलोकं ततो ब्रह्मलोकं इति क्रमो ज्ञेयः।

२. स एनान् ब्रह्म गमयति—इत्यत्र गन्तव्यं ब्रह्म सविशेषं वा निर्विशेषं वेति सन्दिह्य ब्रह्मशब्दस्य मुख्यार्थं परं ब्रह्मैव गमयति इति प्राप्ते कार्यमेव गमयति इति कार्यं बादरिरस्य गत्युपपत्तेः ( ब्र० सू० ४-३-७ ) इत्यधिकरणे निर्णीतं, परं ब्रह्म सर्वतो व्याप्तं यत्रैव म्रियते तत्रैवास्ति इति अमानवपुरुषेण गमयितव्यत्वाभावात् सत्यलोकस्थब्रह्मा अत्र ब्रह्मपदार्थः तमेवामानवः पुरुषो गमयति तत्रैव गत्युपपत्तेरिति निर्णीतम्।

ब्रह्मलोकगमनं च प्रतीकोपासकव्यतिरिक्तानामेव अहंग्रहोपासकानां शास्त्रीयं प्रतीकदृष्टीनां तु विद्युल्लोकान्तमेव गमनं; कुतः ? तत्क्रतुन्यायात् अहंग्रहोपासकाः ब्रह्मक्रतवः ब्राह्ममैश्वर्यमासीदेयुः प्रतीकप्रधानास्त्वितरे तदनुगुणां गतिमश्नुवते इत्युक्तं—अप्रतीकालम्बनान्नयति इत्यधिकरणे ( ४-३-६ ) एवं सति अतत्क्रतूनां पञ्चाग्निविदां ब्रह्मलोकगमनं वाचनिकं ज्ञेयम्। अयं च मार्गो ब्रह्मोपासकेन अनुसन्धेयः न चादृष्टो मार्गो गमनायोपतिष्ठते "स एनमविदितो न भुनक्ति" इति न्यायात्।

३. तेऽर्चिषमभिसम्भवन्ति—इत्यत्रार्चिरादिपदेन तदभिमानिनो ग्राह्याः न तु जडा आर्चिरादय इति "आतिवाहिकास्तल्लिङ्गात्" इत्यधिकरणे निर्णीतम् ( ४-३-४ ) तथा हि—चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति इति वाक्यशेषे चेतनस्य गमयितृत्वं दर्शयति। तच्च न तन्मात्रविषयम् पूर्वत्रापि चेतनानामेव गमयितृत्वे सति अन्तेपि तथैव प्राप्तौ प्राप्तमानवत्वनिवृत्तिपरत्वाद्वाक्यस्य। अपि च गन्तारोऽपि जीवाः सम्पिण्डितकरणग्रामाः जडतुल्याः; आतिवाहिका अपि जडाश्चेत् अभिमतस्थानगमनानुपपत्तिः अतः आतिवाहिकाः अर्चिरादयः तत्तदभिमानिदेवता इति सिद्धम्।

अर्चिषोऽर्चिर्देवताया अहरहरभिमानिनीं देवतामह्न आपूर्यमाणपक्षं शुक्लपक्षदेवतामापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङुत्तरां दिशमेति सविता तान्मासानुत्तरायणदेवतां तेभ्यो मासेभ्यः संवत्सरं संवत्सरदेवतां ततः संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्तत्रस्थांस्तान्पुरुषः कश्चिद्ब्रह्मलोकादेत्यामानवो मानव्यां सृष्टौ भवो मानवो न मानवोऽमानवः स पुरुष एनान्ब्रह्म सत्यलोकस्थं गमयति गन्तृगन्तव्यगमयितृत्वव्यपदेशेभ्यः। सन्मात्रब्रह्मप्राप्तौ तदनुपपत्तेः। ब्रह्मैव सन्ब्रह्माप्येतीति हि तत्र वक्तुं न्याय्यम्। सर्वभेदनिरासेन सन्मात्रप्रतिपत्तिं वक्ष्यति। न चादृष्टो मार्गोऽगमनायोपतिष्ठते। "स एनमविदितो न भुनक्ति" इति श्रुत्यन्तरात्। एष देवपथः देवैरर्चिरादिभिः गमयितृत्वेनाधिकृतैः उपलक्षितः पन्था देवपथ उच्यते। ब्रह्म गन्तव्यं तेन चोपलक्षित इति ब्रह्मपथः। एतेन प्रतिपद्यमाना गच्छन्तो ब्रह्मेमं मानवं मनुसम्बन्धिनं मनोः सृष्टिलक्षणमावर्तं[1] नाऽऽवर्तन्त आवर्तन्तेऽस्मिन्नजनन-

नरेन्द्रपुरीयं टिप्पणम्

गन्तृगन्तव्येति। नास्त्येव कस्यापि सन्मात्रप्रतिपत्तिरत्रेति न वाच्यमित्याह—सर्वभेदेति। ननु जीवस्य सन्मात्रं ब्रह्म चेत् पारमार्थिकं रूपं तर्हि उपासकस्याप्यगमनमेव न्याय्यं तत्राह—न चेति। एकत्वलक्षणो मार्गोऽनवगतो नागमनायोपतिष्ठते। अज्ञानप्रतिबन्धाद्गमनभ्रान्तिरुपपद्यत इत्यर्थः। गमनायेति पदच्छेदे वा मोक्षप्राप्तये न हेतुरित्यर्थः। स परमात्मा एनमधिकारिणमनवगतः स्वात्मप्रकाशनेन न पालयतीत्यर्थः॥ ५॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य पञ्चदशः खण्डः

आनन्दगिरिटीका

सत्यलोकस्थमिति देशव्यवच्छेदेन किमिति व्याख्यायते मुख्यमेव ब्रह्मशब्दालम्बनं किं नोच्यते तत्राऽऽह—गन्तृगन्तव्येति। एतेभ्यो हेतुभ्यः सत्यलोकस्थं ब्रह्म न मुख्यमिति सम्बन्धः। मुख्यब्रह्मप्राप्तावपि यथोक्तव्यपदेशा भविष्यन्तीत्याशङ्क्याऽऽह—सन्मात्रेति। तदनुपपत्तेर्न तादृग्ब्रह्म ब्रह्मशब्दमिति शेषः। अनुपपत्तिमेव स्फोरयति—ब्रह्मैवेति। तत्रेति मुख्यप्राप्तिरुच्यते। कस्यचिदपि सन्मात्रब्रह्मप्राप्तिरत्र नास्तीत्याशङ्क्याऽऽह—सर्वभेदेति। वक्ष्यति षष्ठेऽध्याये श्रुतिरिति शेषः। जीवस्य सन्मात्रं ब्रह्म पारमार्थिकं रूपं चेदुपासकस्यापि न गतिरुचिता तस्यापि ब्रह्मातिरिक्तस्वरूपाभावादित्याशङ्क्याऽऽह—न चेति। एकत्वलक्षणो मार्गो न दृष्टश्चेदगमनाय नोपतिष्ठते। न हि ध्याननिष्ठस्यादृष्टमेकत्वं गमनं वारयितुं पारयत्यज्ञानप्रतिबन्धात्। तस्य गमनभ्रान्तिसम्भवादित्यर्थः। यद्वैकत्वलक्षणो मार्गो नावगतो न गमनाय मोक्षायोपस्थितो भवतीत्यर्थः। तत्र प्रमाणमाह—स एनमिति। स परमात्मा प्रत्यक्त्वेनाज्ञातः सन्नेनमधिकारिणं मुक्तिप्रदानेन न पालयतीत्यर्थः। प्रकृतां गतिमुपसंहरति—एष इति। गतिफलं निगमयति—एतेनेति। इममिति विशेषणादनावृत्तिरस्मिन्कल्पे। कल्पान्तरे त्वावृत्तिरिति सूच्यते। आवर्तशब्दं व्याकरोति—

ब्रह्मलोकगमनाय बह्व्यः सृतयः समाम्नाताः यथा "एतैरेव रश्मिभिरूर्ध्व आक्रमते" "स एनं देवयानमासाद्य" "तेऽर्चिषमभिसम्भवन्ति" "सूर्यद्वारेण ते विरजाः प्रयान्ति"त्यादयः ते सर्वे न भिन्नभिन्ना मार्गाः। अर्चिरादिमार्ग एव प्रथितः "ये चामी श्रद्धां सत्यमुपासते" इत्यादौ। एकैवैषा सृतिः अनेकविशेषणा ब्रह्मलोकप्रपदनी। "अथैतयोः पथोर्न कतरेण च न"—इति मार्गद्वयभ्रष्टानां अधोगतिं ब्रुवंती पितृयाणव्यतिरिक्तमेकमेव देवयानं दर्शयति। वायुमब्दावविशेषविशेषाभ्याम् तेऽर्चिषमभिसम्भवन्तीत्यादिना मासेभ्यः संवत्सरं संवत्सरादादित्यं इत्युक्तं तत्र संवत्सरात्पराञ्चं आदित्यादर्वाञ्चं वायुं अभिसंभवन्ति इति ज्ञेयम् मासेभ्यो देवलोकं इत्यन्यत्रोक्तेः मासेभ्यः संवत्सरं संवत्सरात् देवलोकं इति क्रमः।

१. 'इममावर्तं नावर्तन्ते' इत्युक्तेः अन्यस्मिन् मन्वन्तरे आवर्तन्ते इति लभ्यते। तत्रायं विशेषः येषु उपासनेषु पुनरावृत्त्यभावः श्रुतः यथा प्रश्नोपनिषदि "स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति यथा वा "ब्रह्मलोकमभिसम्पद्यते न स पुनरावर्तते" इति तत्रैव न पुनरावृत्तिः यत्रापि ब्रह्मलोकं गताः ब्रह्मणा सह ब्रह्मविचारं कृत्वा तत्रैव ब्रह्मसाक्षात्कुर्वन्ति तत्रापि न पुनरावृत्तिः यतः "च्छायातपयोरिव ब्रह्मलोके" इत्युक्तेः ब्रह्मलोके ब्रह्मसाक्षात्कारः सुलभः तत्रापि न पुनरावृत्तिः। इतरेषां पुनरावृत्तिः जयविजयादीनामिव स्यादेवेत्यर्थः।

**एष ह वै यज्ञो योऽयं पवत एष ह यन्निदँ् सर्वं पुनाति यदेष यन्निदँ् सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ॥ १ ॥**

मरणप्रबन्धचक्रारूढा घटीयन्त्रवत्पुनः पुनरित्यावर्तस्तं न प्रतिपद्यन्ते। नावर्तन्ते नाऽऽवर्तन्त इति द्विरुक्तिः सफलाया विद्यायाः परिसमाप्तिप्रदर्शनार्था[1] ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य पञ्चदशः खण्डः

रहस्यप्रकरणे प्रसङ्गादारण्यकत्वसामान्याच्च यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चित्तार्था विधातव्यास्तदभिज्ञस्य चर्त्विजो ब्रह्मणो मौनमित्यत इदमारभ्यते-एष ह वा एष वायुर्योऽयं पवतेऽयं यज्ञः। ह वा इति प्रसिद्धार्थावद्योतकौ निपातौ। वायुप्रतिष्ठो हि यज्ञः प्रसिद्धः श्रुतिषु। "स्वाहा वातेधाः।" "अयं वै यज्ञो योऽयं पवते" इत्यादिश्रुतिभ्यः। वात एव हि चलनात्मकत्वात्क्रियासमवायी। "वात एव यज्ञस्याऽऽरम्भको वातः प्रतिष्ठा" इति च

नरेन्द्रपुरीयं टिप्पणम्

पूर्वत्र विदुषां फलप्राप्तये मार्ग उक्तः। तत्प्रसङ्गेन यज्ञस्य समाप्तिगमनाय मार्गाः कथ्यन्त इत्याह—रहस्यप्रकरणे प्रसङ्गादिति। यज्ञस्य देवतोद्देशेन द्रव्यत्यागात्मकत्वात् क्रियायाश्च क्षणभङ्गिन्या गतिमत्वासम्भवात्कथं

आनन्दगिरिटीका

आवर्तन्त इति। सफलाया यथोक्तेन गतिपूर्वकेण फलेन सहिताया इति यावत्। कार्यब्रह्मोपासनसमुच्चिता कारणब्रह्मोपासना यथोक्ता न विद्यासहिताऽविद्याऽत्र विवक्षिता तस्या इत्यर्थः॥ ५॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य पञ्चदशः खण्डः

पूर्वोत्तरग्रन्थयोरसङ्गतिमाशङ्क्य प्रासङ्गिकीं सङ्गतिमाह—रहस्यप्रकरण इति। रहस्यमुपासनं तत्प्रकरणे विदुषां फलप्राप्तये मार्गोपदेशप्रसङ्गेन यज्ञस्य समाप्तिगमनायानन्तरग्रन्थेन मार्गोपदेशादस्ति सङ्गतिरित्यर्थः। किञ्च पूर्वोत्तरग्रन्थयोरारण्यकत्वेन समानत्वादपि सङ्गतिरस्तीत्याह—आरण्यकत्वेति। किञ्चाग्निविषया विद्या प्रकृता यज्ञे च सिद्धेऽग्निसम्बन्धे यदि किमपि क्षतमुत्पद्यते तदा प्रायश्चित्तार्था व्याहृतयो विधातव्या इत्यनन्तरग्रन्थप्रवृत्तिरिति सङ्गत्यन्तरमाह—यज्ञ इति। प्रकृतायामुपासनायां मौनमङ्गीक्रियते वाग्व्यापारे विक्षिप्तचित्ततया ध्यानानुष्ठानासिद्धेः। ऋत्विग्विशेषस्य च प्रायश्चित्ताभिज्ञस्य मौनमत्र विधीयते तेनास्ति मिथः सङ्गतिरित्याह—तदभिज्ञस्येति। यज्ञस्य देवतोद्देशेन द्रव्यत्यागात्मकत्वात्क्रियायाश्च क्षणभङ्गिन्या गतिमत्त्वायोगान्मार्गोपदेशासम्भवात्कथमाद्या सङ्गतिरित्याशङ्क्य गतिमत्त्वं सम्पादयितुं यज्ञस्य वायुरूपत्वमाह—एष इत्यादिना। यज्ञो वाय्वात्मक इति श्रौती प्रसिद्धिस्तामेव प्रकटयति—वायुप्रतिष्ठ इति। श्रुतीरुदाहरति—स्वाहेति। स्वाहाकारमुच्चार्य वाते वायौ धीयते क्षिप्यत इति वातेधा यज्ञः। श्रुत्यन्तरमाह—अयमिति। आदिशब्देन "वाताद्यज्ञः प्रयुज्यता"मिति श्रुतिर्गृह्यते। आदर्शितश्रुतीनामर्थं संगृह्णाति—वात इति। यो यज्ञः क्रियासमवायी तत्समुदायात्मकः स वायुरेव। द्वयोश्चलनात्मकत्वाविशेषात्। तस्माद्वायुप्रतिष्ठस्तदात्मको यज्ञ इत्यर्थः। वायुप्रतिष्ठो यज्ञ इत्यत्र श्रुत्यन्तरमाह—वात एवेति।

---

१. उपकोसलशाण्डिल्याद्युपासनानि किं समुच्चित्य कर्तव्यानि उत विकल्पेनेति संशये यथाकामं समुच्चय इति पूर्वपक्षे प्राप्ते सिद्धान्तः विकल्पोऽविशिष्टफलत्वात्। (३-३-५९)

अविशिष्टमासां फलं उपास्यसाक्षात्कारः ब्रह्मलोकप्राप्तिश्च अतः विकल्प एव न्याय्यः समुच्चयपक्षे चित्तविक्षेपसम्भवात् उपास्यविषयकसाक्षात्कारासम्भव एव।

काम्यास्तु यथाकामं समुच्चीयेरन् न वा इति च तत्रोक्तम्।

अङ्गावबद्धोपासनास्तु उद्गीथोपासनादयः ताः आश्रयीभूतोद्गीथवत् न समुच्चीयेरन्। अत एव चाक्रायणः उपासनारहितानामप्युद्गात्रादीनां यज्ञे स्तोत्रकरणमनुमेने "यदेव विद्यया करोति तदेव वीर्यवत्तरं भवती"त्यनेन विद्यारहितकर्मणः वीर्यवत्त्वसूचनाच्च।

तयोरन्यतरां मनसा सँ्स्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतराँ्स यत्रोपाकृते[1] प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति ॥ २ ॥

अन्यतरामेव वर्तनीँ् सँ्स्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो रिष्यति यज्ञँ् रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापीयान्भवति ॥ ३ ॥

श्रवणात् । एष ह यन्गच्छंश्चलन्निदं सर्वं जगत्पुनाति पावयति शोधयति । न ह्यचलतः शुद्धिरस्ति । दोषनिरसनं चलतो हि दृष्टं न स्थिरस्य । यद्यस्माच्च यन्नेष इदं सर्वं पुनाति तस्मादेष एव यज्ञो यत्पुनातीति । तस्यास्यैवं विशिष्टस्य यज्ञस्य वाक्च मन्त्रोच्चारणे व्यापृता । मनश्च यथाभूतार्थज्ञाने व्यापृतम् । ते एते वाङ्मनसे वर्तनी मार्गौ याभ्यां यज्ञस्तायमानः प्रवर्तते ते वर्तनी । प्राणापानपरिचलनवत्या हि "वाचश्चित्तस्य चोत्तरोत्तरक्रमो यद्यज्ञः" इति हि श्रुत्यन्तरम् । अतो वाङ्मनसाभ्यां यज्ञो वर्तत इति वाङ्मनसे वर्तनी उच्येते यज्ञस्य ॥ १ ॥

तयोर्वर्तन्योरन्यतरां वर्तनीं मनसा विवेकज्ञानवता संस्करोति ब्रह्मर्त्विग्वाचा वर्तन्या होताऽध्वर्युरुद्गातेत्येते त्रयोऽप्यृत्विजोऽन्यतरां वाग्लक्षणां वर्तनीं वाचैव संस्कुर्वन्ति । तत्रैवं सति वाङ्मनसे वर्तनी संस्कार्ये यज्ञे । अथ स ब्रह्मा यत्र यस्मिन्काल उपाकृते प्रारब्धे प्रातरनुवाके शस्त्रे पुरा पूर्वं परिधानीयाया ऋचो ब्रह्मैतस्मिन्नन्तरे काले

नरेन्द्रपुरीयं टिप्पणम्

मार्गोपदेश इत्याशङ्क्य गतिमत्वसम्भावनायाह—एष ह वा इति । स्वाहाकारोच्चारणेन वाते आधीयते निक्षिप्यत इति वातेधा यज्ञ इत्यर्थः । वायोश्चलनात्मकत्वाच्च यज्ञस्य क्रियासमवायी यज्ञ इति शेषः । वायोः पवनत्वसाम्यादपि वायुयज्ञयोरेकत्वमित्याह—एष ह यन्निति । चलत इति । स्नानादिकुर्वतः स्पर्शादिदोषनिरसनं दृष्टमित्यर्थः ॥१ ॥

वागेका वर्त्तनी मनश्चापरा वर्त्तनी समुदिते वर्तन्यौ मार्गावित्यर्थः । प्राणापानाभ्यां परिचलनं विद्यते यस्याः सा तथोक्ता तस्या मनसाभिध्यायन् वाचमभिव्याहरन् पूर्वापरीभावक्रमेण यज्ञं सम्पादयतीत्यर्थः । वाचेति—सम्यक् प्रयुक्तयेत्यर्थः । प्रातरनुवाकस्य समाप्तिर्यया सा परिधानीया ऋक् यथैकेति ॥ २-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य षोडशः खण्डः

आनन्दगिरिटीका

पवनत्वश्रुत्याऽपि वायुयज्ञयोरेकत्वमाह—एष ह यन्निति । विनाऽपि वायुं शुद्धिः सिध्यतीत्याशङ्क्याऽऽह—न हीति । अचलतो विहितक्रियामननुतिष्ठत इति यावत् । शुद्धिर्नाम दोषनिरासः । स च निषिद्धं परित्यक्तुं यतमानस्य सिध्यति । न तु निषिद्धक्रियात्यागोदासीनस्य दोषनिरासात्मिका शुद्धिः सम्भवति । चलनं च वायुः । तस्माद्वायुरेव चलनद्वारा सर्वं जगत्पुनातीत्याह—दोषेति । वायोरस्तु पावनत्वं प्रकृते किमायातमित्याशङ्क्याऽऽह—यद्यस्मादिति । वाय्वात्मना गतिविशिष्टस्य यज्ञस्य मार्गद्वयमुपदिशति—तस्येति । एवं विशिष्टस्य पावनस्य वायुरूपस्येति यावत् । यज्ञस्योक्तमार्गद्वयवैशिष्ट्ये सोपस्कारमैतरेयवाक्यमुदाहरति—प्राणेति । प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां परिचलनं विद्यते यस्यास्तस्या वाचश्चित्तस्य च पूर्वापरभावक्रमेण यज्ञः सम्पाद्यते। मनसा हि ध्यायन्वाचमभिव्याहरन्पूर्वापरीभावेन यज्ञं सम्पादयतीत्यर्थः । यज्ञस्य मार्गद्वयविशिष्टत्वमुपसंहरति—अत इति ॥ १॥

तयोरन्योन्यमुपकार्योपकारकभावं दर्शयति—तयोरिति । वाचा सम्यक्प्रयुक्तयेति शेषः । संस्कृतायां च वाग्वर्तन्यां तयैव यज्ञो निष्पन्नो भवतीत्याह—वाचैवेति । किं तर्हि मनोवर्तन्या संस्क्रियत इत्याशङ्क्याऽऽह—तत्रेति । यज्ञस्य द्वाभ्यां मार्गाभ्यां नीयमानत्वे पूर्वोक्तरीत्या स्थिते सतीति यावत् । मनोवर्तन्याः संस्काराभावे प्रत्यवायं दर्शयति—अथेत्यादिना । मनोवर्तनी ब्रह्मणा वाग्वर्तनी च होतृप्रभृतिभिः संस्कार्येति व्यवस्थान्तर-

१. उपाकृते प्रातरनुवाके । प्रातरनुवाको नाम शस्त्रविशेषः गानं विना देवतागुणप्रकाशकः होत्रा सुत्यादिने प्रातः पठनीयः तत्काले ब्रह्मणा मौनेन स्थेयम् । यदि ब्रह्मा यत्किञ्चिद्वदति तर्हि यज्ञभ्रेषो भवति तत्प्रायश्चित्तं च व्याहृतिभिर्होमः उत्तरानुवाके विधीयते । उपाकरणं उपक्रमः ।

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा
व्यववदत्युभे एव वर्तनी सँस्कुर्वन्ति न हीयतेऽन्यतरा ॥ ४ ॥
स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः
प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान्भवति ॥५॥

इति च्छान्दोग्योपनिषदि चतुर्थाऽध्यायस्य षोडशः खण्डः

प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानाँ रसान्प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥१॥
स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानाँ रसान्प्रावृहदग्नेर्ऋचो वायोर्यजूँषि सामान्यादित्यात्

व्यववदति मौनं परित्यजति यदि तदाऽन्यतरामेव वाग्वर्तनीं संस्करोति। ब्रह्मणाऽसंस्क्रियमाणा मनोवर्तनी हीयते विनश्यति च्छिद्रीभवत्यन्यतरा। स यज्ञो वाग्वर्तन्यैवान्यतरया वर्तितुमशक्नुवन्रिष्यति। कथमिवेत्याह। स यथैकपात्पुरुषो व्रजन्गच्छन्नध्वानं रिष्यति, रथो वैकेन चक्रेण वर्तमानो गच्छन्रिष्यत्येवमस्य यजमानस्य कुब्रह्मणा यज्ञो रिष्यति विनश्यति। यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति। यज्ञप्राणो हि यजमानः। अतो युक्तो यज्ञरेषे रेषस्तस्य। स तं यज्ञमिष्ट्वा तादृशं पापीयान्पापतरो भवति ॥ २-३ ॥

अथ पुनर्यत्र ब्रह्मा विद्वान्मौनं परिगृह्य वाग्विसर्गमकुर्वन्वर्तते यावत्परिधानीयाया न व्यववदति तथैव सर्वर्त्विज उभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतराऽपि। किमिवेत्याह। पूर्वोक्तविपरीतौ दृष्टान्तौ। एवमस्य यजमानस्य यज्ञः स्ववर्तनीभ्यां वर्तमानः प्रतितिष्ठति स्वेनाऽऽत्मनाऽविनश्यन्वर्तत इत्यर्थः। यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स यजमान एवं मौनविज्ञानवद्ब्रह्मोपेतं यज्ञमिष्ट्वा श्रेयान्भवति श्रेष्ठो भवतीत्यर्थः ॥ ४-५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य षोडशः खण्डः

अत्र ब्रह्मणो मौनं विहितं तद्भ्रेषे ब्रह्मत्वकर्मणि चान्यस्मिंश्च होत्रादिकर्मरेषे व्याहृतिहोमः प्रायश्चित्तमिति तदर्थं व्याहृतयो विधातव्या इत्याह—प्रजापतिर्लोकानभ्यतपल्लोकानुद्दिश्य तत्र सारजिघृक्षया ध्यानलक्षणं तपश्चचार। तेषां तप्यमानानां लोकानां रसान्साररूपान्प्रावृहदुद्धृतवाञ्जग्राहेत्यर्थः। कान्। अग्निं रसं पृथिव्याः। वायुमन्तरिक्षात्। आदित्यं दिवः ॥ १ ॥

पुनरप्येवमेवमग्न्याद्याः स एतास्तिस्रो देवता उद्दिश्याभ्यतपत्। ततोऽपि सारं रसं त्रयीविद्यां जग्राह ॥ २॥

नरेन्द्रपुरीयं टिप्पणम्

( ये ) सम्यक्प्रयोक्तारः ( तेषां ) नित्यानुष्ठानमुक्त्वा नैमित्तिकप्रायश्चित्तविधानायोपक्रमते इत्याह—अत्र ब्रह्मण इत्यादिना ॥ १-२ ॥

आनन्दगिरिटीका

मित्यर्थः। स ब्रह्मेत्यन्वयं सूचयति—ब्रह्मेति। पुनरुक्तिस्तस्य क्रियापदेन सम्बन्धद्योतनार्था। एतस्मिन्नन्तरे काले प्रातरनुवाकशस्त्रमारभ्य तत्परिसमाप्तेरन्तरावस्थायामित्यर्थः। वाचो होत्रादिभिः संस्कार्यत्वमस्तु, मनसश्च ब्रह्मसंस्कार्यत्वं मा भूदेतावता यज्ञस्य किमायातमित्याशङ्क्याऽऽह—स यज्ञ इति। यज्ञभ्रंशमेवाऽऽकाङ्क्षाद्वारा व्युत्पादयति—कथमित्यादिना। नाशेऽपि यज्ञस्य यजमानस्य किमायातमित्याशङ्क्याऽऽह—यज्ञप्राणो हीति। वाग्वर्तनीसंस्काराभावेऽपि तुल्यो दोषः ॥ २-३ ॥

मौनगुणं दर्शयति—अथ पुनरिति। तथैव सम्यगनुष्ठातार इति यावत्। तथा ब्रह्मा चान्ये चर्त्विजो द्वे वर्तन्यौ संस्कुर्वन्त्येवेत्याह—नेति। वर्तनीद्वयसंस्कारे किं स्यादित्यपेक्षायामाह—एवमिति ॥ ४-५ ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य षोडशः खण्डः

नित्यानुष्ठानमुक्त्वा नैमित्तिकप्रायश्चित्तविधानार्थमुपक्रमते—अत्रेति। तद्भ्रेषे ब्रह्मणो मौनभ्रंशे सतीति यावत्। रसान्विशेषतो ज्ञातुं पृच्छति—कानिति ॥ १ ॥

एवं यथा लोकानभ्यतपत्तथेति यावत्। जग्राहेति सम्बन्धः ॥ २ ॥

स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्
प्रावृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥ ३ ॥
तद्यदृक्तो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव
तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टँ संदधाति ॥ ४ ॥
अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ
जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यज्ञस्य विरिष्टँ संदधाति ॥ ५ ॥
अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव
तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टँ संदधाति ॥ ६ ॥

स एतां पुनरभ्यतपत्त्रयीं विद्याम्। तस्यास्तप्यमानाया रसं भूरिति व्याहृतिमृग्भ्यो जग्राह। भुवरिति व्याहृतिं यजुर्भ्यः। स्वरिति व्याहृतिं सामभ्यः। अत एव लोकदेववेदरसा महाव्याहृतयः। अतस्तत्तत्र यज्ञे यद्यृक्त ऋक्सम्बन्धादृङ्निमित्तं रिष्येद्यज्ञः क्षतं प्राप्नुयाद्भूः स्वाहेति गार्हपत्ये जुहुयात्। सा तत्र प्रायश्चित्तिः। कथम्, ऋचामेव तदिति क्रियाविशेषणं, रसेनर्चां वीर्येणौजसर्चां यज्ञस्य ऋक्सम्बन्धिनो यज्ञस्य विरिष्टं विच्छिन्नं क्षतरूपमुत्पन्नं सन्दधाति प्रतिसन्धत्ते ॥ ३-४ ॥

अथ यदि यजुष्टो यजुर्निमित्तं रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्। तथा सामनिमित्ते रेषे स्वः स्वाहेत्याहवनीये जुहुयात्। तथा पूर्ववद्यज्ञं सन्दधाति। ब्रह्मनिमित्ते तु रेषे त्रिष्वग्निषु तिसृभिर्व्याहृतिभिर्जुहुयात्। त्रय्या हि विद्यायाः स रेषः। "अथ केन ब्रह्मत्वमित्यनयैव त्रय्या विद्यया" इति श्रुतेः। न्यायान्तरं वा मृग्यं ब्रह्मत्वनिमित्ते रेषे ॥ ५-६ ॥

नरेन्द्रपुरीयं टीप्पणम्

ऋक्तः इति ऋक्शब्दात्तसिः। क्रियाविशेषणमिति—यज्ञस्य क्षतं सन्दधातीति यत्तत् ऋचामेव रसेन सन्दधातीत्यर्थः ॥ ३-४ ॥

साधारणस्य कार्यस्य साधारणसामग्रीजन्यत्वनियमाद्वेदत्रयसाधारणे ब्रह्मत्वे वेदत्रयसाधारणमेव प्रायश्चित्तं वाच्यमित्येको न्याय उक्तः। इदानीमज्ञानस्यैव दोषत्वप्रसिद्धेर्ब्रह्मणः सर्ववेदार्थाभिज्ञस्य ज्ञानमाहात्म्येनैव दोषनिरासात् नान्यत्प्रायश्चित्तं विधेयमिति न्यायान्तरमाह—न्यायान्तरं वेति ॥ ५-६ ॥

आनन्दगिरिटीका

तदेव विवृणोति—भूरिति व्याहृतिमित्यादिना। प्रथमोऽतःशब्दो यत इत्यस्मिन्नर्थे। यद्यृक्त इति। ऋक्शब्दस्तस्मिन्। उक्तप्रायश्चित्तमेवाऽऽकाङ्क्षापूर्वकं विवृणोति—कथमित्यादिना। क्रियाविशेषणमिति। यज्ञस्य क्षतं सन्दधातीति यत्तदृचामेव रसेन सन्दधातीत्यर्थः। ओजसा सन्दधातीति सम्बन्धः ॥ ३-४ ॥

तथा च यथोक्ते साधने सतीत्यर्थः। यथा पूर्वस्मिन्प्रायश्चित्ते यज्ञस्य क्षतमिव रसेन होता सन्दधाति तथा द्वितीयतृतीयप्रायश्चित्तयोरपि यजुषां साम्नां च रसेनाध्वर्युरुद्गाता च तत्क्षतं संधत्त इत्याह—पूर्ववदिति। होत्राद्यपराधाधीनयज्ञभ्रंशे प्रायश्चित्तमुक्त्वा ब्रह्मापराधकृते यज्ञनाशे किं प्रायश्चित्तमित्याशङ्क्याऽऽह—ब्रह्मेति। यथायथोक्तप्रायश्चित्ते लिङ्गं दर्शयति—त्रय्या हीति। ब्रह्मणस्त्रयीसारत्वे प्रमाणमाह—अथ केनेति। साधारणकार्यस्य साधारणसामग्रीजन्यत्वनियमाद्वेदत्रयसाधारणे ब्रह्मत्वे वेदत्रयसाधारणमेव प्रायश्चित्तं वाच्यमित्येको न्यायो दर्शित.। संप्रत्यस्यैव वेदैकत्वप्रसिद्धेर्ब्रह्मणः सर्ववेदार्थाभिज्ञस्य ज्ञानमाहात्म्येनैव दोषनिरासान्नान्यत्प्रायश्चित्तं विधेयमिति न्यायान्तरमाह—न्यायान्तरं वेति ॥ ५-६ ॥

तद्यथा लवणेन सुवर्णं संदध्यात्सुवर्णेन रजतं रजतेन त्रपु
त्रपुणा सीसँ सीसेन लोहं लोहेन दारु दारु चर्मणा ॥ ७ ॥
एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य
विरिष्टँ संदधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥ ८ ॥
एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदँ
ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्तते तत्तद्गच्छति ॥ ९ ॥

तद्यथा लवणेन सुवर्णं सन्दध्यात् । क्षारेण टङ्कणादिना खरे; मृदुत्वकरं हि तत् । सुवर्णेन रजतमशक्यसन्धानं सन्दध्यात् । रजतेन तथा त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा चर्मबन्धनेन । एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण रसाख्येनौजसा यज्ञस्य विरिष्टं सन्दधाति । भेषजकृतो ह वा एष यज्ञः । रोगार्त इव पुमांश्चिकित्सकेन सुशिक्षितेनैष यज्ञो भवति । कोऽसौ । यत्र यस्मिन्यज्ञ एवंविद्यथोक्तव्याहृतिहोमप्रायश्चित्तविद्ब्रह्मर्त्विग्भवति स यज्ञ इत्यर्थः ॥ ७-८ ॥

किञ्चैष ह वा उदक्प्रवण उदङ्निम्नो दक्षिणोच्छ्रायो यज्ञो भवति । उत्तरमार्गप्रतिपत्तिहेतुरित्यर्थः । यत्रैवंविद्ब्रह्मा भवत्येवंविदं ह वै ब्रह्माणमृत्विजं प्रत्येषाऽनुगाथा ब्रह्मणः स्तुतिपरा । यतो यत आवर्तते कर्म प्रदेशादृत्विजां यज्ञः क्षतीभवंस्तत्तद्यज्ञस्य क्षतरूपं प्रतिसन्दधत्प्रायश्चित्तेन गच्छति परिपालयतीत्येतत् ॥ ९ ॥

नरेन्द्रपुरीयं टीप्पणम्

वस्तुस्वभाववैचित्र्यात् समुत्पन्नस्यापि क्षतस्य केनचित्सन्धानं जाघटीति इति दृष्टान्तमाह—तद्यथा लवणेनेत्यादिना । भेपभेपजेनैव कृतः संस्कृतः ॥ ७-८ ॥

गाथेति । गायत्र्यादिव्यतिरिक्तच्छन्दः कर्तॄन्यजमानादीनभिरक्षति ब्रह्मेति सम्बन्धः ॥ ९-१० ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां चतुर्थाध्यायस्य सप्तदशः खण्डः

इति श्रीशाङ्करच्छान्दोग्यभाष्यटिप्पण्यां चतुर्थोऽध्यायः[1]

आनन्दगिरिटीका

वस्तुस्वभाववैचित्र्यादुत्पन्नस्यापि क्षतस्य केनचित्सन्धानं भवतीत्यत्र दृष्टान्तानाह—तद्यथेत्यादिना । किं तत्र साधनमिति तद्दर्शयति—क्षारेणेति । खरे सुवर्णे वह्निसंयुक्ते द्रवीभूते क्षारप्रक्षेपेण टङ्कणादिना मृदुकरणं मिथोऽवयवसंयोजने सन्धानं प्रसिद्धमित्यर्थः । रजतं सुवर्णेन स्वरसतस्तावदशक्यसन्धानं तथाऽपि वह्निसयोगपूर्वकं पूर्ववदेव तत्रापि प्रसिद्धं सन्धानमित्याह—सुवर्णेनेति । रजतेनेत्यादावपि यथोक्तं द्रष्टव्यम् । सन्दधाति ब्रह्मेति शेषः । भेषजेनेव कृतः संस्कृत इति यावत् । तदेव स्फुटयति—रोगार्त इति । भवति संस्कृत इति शेषः ॥ ७-८ ॥

इतश्चैवंविदा ब्रह्मणा भवितव्यमित्याह—किञ्चेति । गाथाशब्दो गायत्र्यादिच्छन्दोव्यतिरिक्तच्छन्दोविषयः । यतो यतः प्रदेशात्कर्माऽऽवर्तत इत्युक्तं विवृणोति—ऋत्विजामिति । यत्र यत्र प्रदेशे यज्ञस्य क्षतिरध्वर्युप्रभृतीनामभवत्तत्र तत्र यज्ञस्य क्षतरूपं प्रायश्चित्तेन प्रतिसन्दधानो ब्रह्मा कर्तॄन्परिपालयतीति सम्बन्धः ॥ ९ ॥

१. अस्मिन्नध्याये उपकोसलविद्योक्ता "कं ब्रह्म खं ब्रह्मे"त्यादिना । तत्रोपास्यब्रह्मणः संयद्वामत्वादिगुणा उक्ताः । तथा पूर्वाध्याये शाण्डिल्यविद्या उक्ता । "मनोमयः प्राणशरीरो भारूप" इत्यादिना । तत्र च उपास्यब्रह्मणः मनोमयत्वादिगुणा उक्ताः तथा अष्टमाध्याये दहरविद्या वक्ष्यते । तत्र च दहराकाशरूपब्रह्मणः अपहतपाप्मत्वादयो वक्ष्यन्ते । एवं पञ्चमाध्याये वैश्वानरविद्या वक्ष्यते । तत्र च ब्रह्मणः द्युमूर्धत्वादयः । तत्र संशयः--किमासां विद्यानामैक्यं परस्परं गुणोपसंहारश्च उत भेदः गुणानुसंहारश्चेति । तत्र च वेद्यं रूपं विद्यायाः द्रव्यदैवतमिव यागस्य । वेद्यश्चैक एवेश्वरः आसु विद्यासु । तस्मात् विद्यापौष्कल्याय गुणोपसंहार इति प्राप्ते ब्रूमः—नानाशब्दादिभेदात् ( ब्र० सू० ३-३-५८ ) । विद्याभेदेऽप्येवं-

मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानँ सर्वाँ-श्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १० ॥

इति च्छान्दोग्योपनिषदि चतुर्थाध्यायस्य सप्तदशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे चतुर्थोऽध्यायः समाप्तः

मानवो ब्रह्मा मौनाचरणान्मननाद्वा ज्ञानवत्त्वात्ततो ब्रह्मैवैकर्त्विक्कुरून्कर्तॄन्। योद्धृनारूढानश्वा वडवा यथाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तत्कृतदोषापनयनात्। यत एवंविशिष्टो ब्रह्मा विद्वांस्तस्मादेवंविदमेव यथोक्तव्याहृत्यादिविदं ब्रह्माणं कुर्वीत नानेवंविदं कदाचनेति। द्विरभ्यासोऽध्याय-परिसमाप्त्यर्थः ॥ १० ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य सप्तदशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ च्छान्दोग्योपनिषद्विवरणे चतुर्थोऽध्यायः

### आनन्दगिरिटीका

ऋत्विजि ब्रह्मणि मानवशब्दप्रवृत्तौ निमित्तद्वयमाह—मौनेति। ज्ञानातिशयस्तच्छब्दार्थः। कर्तॄनभिरक्षतीति सम्बन्धः। उक्तमर्थं दृष्टान्तेन प्रकटयति—योद्धृनित्यादिना। प्रकरणार्थमुपसंहरति—एवमिति ॥ १० ॥

इति श्रीमदानन्दगिरिटीकायां चतुर्थाध्यायस्य सप्तदशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां च्छान्दोग्योपनिषद्भाष्यटीकायां चतुर्थोऽध्यायः

---

जातीयका विद्या भिन्नैव। शब्दादिभेदात्। शब्दभेदः तत्तद्गुणविशिष्टब्रह्मरूपवेद्यभेदप्रापकशब्दभेदः विशिष्टस्य शुद्धाद्भेदात्। ततश्च विद्याभेदः गुणानुपसंहारश्च। एतासां विद्यानां अर्चिरादिना ब्रह्मलोक-प्राप्तिरूपफलस्य एकत्वात् विकल्प एव न समुच्चयः यस्य स्यादद्धा न विचिकित्सास्तीति उपास्य साक्षात्काराधीनं फलं; एकेन चोपासनेन साक्षात्कारसिद्धौ इतरवैयर्थ्यं च।

काम्योपासनानां तु समुच्चयोऽपि फलभेदात् भिन्नफलानामप्याकाङ्क्षितत्वात् यथा "न पुत्ररोदं रोदिति" इति भुवनकोशविद्या, दीर्घायुष्ट्वार्थं पुरुषो वाव यज्ञ—इत्याद्युपासनं च।

# अथ पञ्चमोऽध्यायः

ॐ [1]यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥

सगुणब्रह्मविद्याया उत्तरा गतिरुक्ता। अथेदानीं पञ्चमेऽध्याये पञ्चाग्निविदो गृहस्थस्योर्ध्वरेतसां च श्रद्धालूनां विद्यान्तरशीलिनां तामेव गतिमनूद्यान्या दक्षिणदिक्सम्बन्धिनी केवलकर्मिणां धूमादिलक्षणा पुनरावृत्तिरूपा तृतीया च ततः कष्टतरा संसारगतिर्वैराग्यहेतोर्वक्तव्येत्यारभ्यते। प्राणः श्रेष्ठो वागादिभ्यः प्राणो वाव संवर्ग इत्यादि च बहुशोऽतीते ग्रन्थे प्राणग्रहणं कृतम्। स कथं श्रेष्ठो वागादिषु सर्वैः संहत्यकारित्वाविशेषे? कथं च तस्योपासनमिति तस्य श्रेष्ठत्वादिगुणविधित्सयेदमनन्तरमारभ्यते—यो ह वै कश्चिज्ज्येष्ठं च प्रथमं वयसा श्रेष्ठं च गुणैरभ्यधिकं वेद स ज्येष्ठश्च ह वै श्रेष्ठश्च भवति। फलेन पुरुषं प्रलोभ्याभिमुखीकृत्याऽऽह—प्राणो वाव ज्येष्ठश्च वयसा वागादिभ्यः। गर्भस्थे हि पुरुषे प्राणस्य वृत्तिर्वागादिभ्यः पूर्वं लब्धात्मिका भवति यया गर्भो विवर्धते

## नरेन्द्रपुरीयं टिप्पणम्

ॐ अर्चिराद्यां गतिं प्रोच्य विद्यान्तरफलान्तरे।
अर्चिराद्यादिसम्बन्धं प्रवक्तव्यमितीर्यते ॥

कर्मसमुच्चितविद्यायाः केवलकर्मणां च फलं संसारगतिभेदरूपमिहोच्यते। कर्मसिद्धिश्च धनसम्पत्तौ सत्यां धनसम्पत्तिश्च ब्राह्मणस्य श्रैष्ठ्ये सति भवतीति श्रैष्ठ्यसिद्ध्यै तावदुपासनं प्राणस्य पूर्वत्रानुक्तं वक्तव्यमित्याह—प्राणो वावेत्यादिना ॥ १-६ ॥

## आनन्दगिरिटीका

वृत्तमनूद्य वर्तिष्यमाणाध्यायस्य सङ्गतिं सङ्गिरते—सगुणेति। विद्यान्तरं पञ्चाग्निविद्यातिरिक्ता सगुणविद्या। तच्छीलिनां तन्निष्ठानामिति यावत्। तामेव गतिमर्चिरादिलक्षणामित्यर्थः। ततो गतिद्वयात्तृतीया च विद्याकर्मरहितानामिति शेषः। अथ क्रमेण मुक्तिसम्भवादुत्तरा गतिरुच्यतां किमिति दक्षिणा तृतीया च संसाररूपा गतिरतिनिकृष्टा व्यपदिश्यते तत्राऽऽह—कष्टतरेति। सगुणब्रह्मविद्यावतामर्चिराद्यां गतिमुक्त्वा समुच्चितानामसमुच्चितानां कर्मणां संसारगतिप्रभेदरूपं फलं वक्तुमयमारम्भ इत्यर्थः। कर्मविधिश्च धनसम्पत्तौ सत्यां भवति। तत्सम्पत्तिश्च ब्राह्मणस्य श्रैष्ठ्ये सत्येव सम्भवतीति श्रैष्ठ्यसिद्धये प्राणोपासनं पूर्वत्रानुक्तं वक्तव्यमित्यन्तरग्रन्थसङ्गतिं वदन्प्रसङ्गं करोति—प्राणः श्रेष्ठ इत्यादिना। प्राणो ब्रह्मेत्यादिवाक्यमादिशब्दार्थः। उदाहृतानुदाहृतश्रुत्यन्तरसमुच्चयार्थश्चकारः। प्राणस्य वागादिभ्यः श्रैष्ठ्यमुक्तमाक्षिपति—स कथमिति। सर्वैर्वागादिभिः संहत्य प्राणस्य कार्यकरत्वे सम्प्रतिपन्ने स एव कथं श्रेष्ठो निर्धार्यते तेषामन्यतमस्यैव श्रैष्ठ्यं किं न स्यादित्यर्थः। तस्यैवोपास्यतया श्रैष्ठ्यमाशङ्क्य वागादीनामन्यतमस्योपास्यत्वमपास्य प्राणस्यैव नोपास्यत्वं हेत्वभावादित्याक्षेपान्तरमाह—कथं चेति। प्राणस्य श्रेष्ठत्वं ज्येष्ठत्वमित्यादिगुणविधानार्थमेव तावत्प्रथममारभ्यते—यो ह वै ज्येष्ठं चेति। आद्यं चोद्यं परिहरति—प्रथममिति। प्राणस्यैवोपासनं न वागादीनामित्येतदनन्तरमारभ्यतेऽथ ह प्राण उच्चिक्रमिषन्नित्यादिनेति द्वितीयं चोद्यमुद्धरति—इदमनन्तरमिति। कोऽसौ ज्येष्ठत्वश्रेष्ठत्वगुणो वेदितव्य इत्यत आह—फलेनेति। कुतो वागादिभ्यो ज्येष्ठ्यं प्राणस्य प्रतीतं सर्वे हि वागादयः सप्राणाः सहैव गर्भस्थे स्वतो वृत्तिभागिनो भवन्ति तत्राऽऽह—

---

१. यो ह वै ज्येष्ठं च श्रेष्ठं च वेद इत्यादि। अत्र प्राणोपासनं विधीयते। श्रेष्ठत्वं निर्धार्य तस्य वसिष्ठत्वादिगुणाः छान्दोग्ये बृहदारण्यके च श्रुताः कौषीतक्यान्तु इमे गुणा न श्रुताः श्रेष्ठत्वमात्रं निर्धारितम्। तत्र यत्र वसिष्ठत्वादयो न श्रुताः तत्रापि इमे गुणा उपसंहार्याः प्राणविद्यायाः एकत्वात् इति निरधारि "सर्वाभेदादन्यत्रेमे" इत्यधिकरणे ( ब्र० सू० ३-३-१० )।

यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥

यो ह वै सम्पदं वेद सँ हास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनँ ह स्वानां भवति मनो ह वा आयतनम् ॥ ५ ॥

अथ ह प्राणा अहँ श्रेयसि व्यूदिरेऽहँ श्रेयानस्म्यहँ श्रेयानस्मीति ॥ ६ ॥

ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन्को नः श्रेष्ठ इति तान्होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥ ७ ॥

चक्षुरादिस्थानावयवनिष्पत्तौ सत्यां पश्चाद्वागादीनां वृत्तिलाभ इति प्राणो ज्येष्ठो वयसा भवति। श्रेष्ठत्वं तु प्रतिपादयिष्यति सुहय इत्यादिनिदर्शनेन। अतः प्राण एव ज्येष्ठश्च श्रेष्ठश्चास्मिन्कार्यकरणसङ्घाते ॥ १ ॥

यो ह वै वसिष्ठं वसितृतममाच्छादयितृतमं वसुमत्तमं वा यो वेद स तथैव वसिष्ठो ह भवति स्वानां ज्ञातीनाम्। कस्तर्हि वसिष्ठ इत्याह। वाग्वाव वसिष्ठो वाग्मिनो हि पुरुषा वसन्त्यभिभवन्त्यन्यान्वसुमत्तमाश्चातो वाग्वसिष्ठः ॥ २ ॥

यो ह वै प्रतिष्ठां वेद स चास्मिँल्लोकेऽमुष्मिंश्च परे प्रतितिष्ठति ह। का तर्हि प्रतिष्ठेत्याह—चक्षुर्वाव प्रतिष्ठा। चक्षुषा हि पश्यन्समे च दुर्गे च प्रतितिष्ठति यस्मादतः प्रतिष्ठा चक्षुः ॥ ३ ॥

यो ह वै सम्पदं वेद तस्मा अस्मै दैवाश्च मानुषाश्च कामाः सम्पद्यन्ते ह। का तर्हि सम्पदित्याह—श्रोत्रं वाव सम्पत्। यस्माच्छ्रोत्रेण वेदा गृह्यन्ते तदर्थविज्ञानं च ततः कर्माणि क्रियन्ते ततः कामसम्पदित्येवं कामसम्पद्धेतुत्वाच्छ्रोत्रं वाव संपत् ॥ ४ ॥

यो ह वा आयतनं वेदाऽऽयतनं ह स्वानां भवत्याश्रयो भवतीत्यर्थः। किं तदायतनमित्याह—मनो ह वा आयतनम्। इन्द्रियोपहृतानां विषयाणां भोक्त्रर्थानां प्रत्ययरूपाणां मन आयतनमाश्रयः। अतो मनो ह वा आयतनमित्युक्तम् ॥ ५ ॥

अथ ह प्राणा एवं यथोक्तगुणाः सन्तोऽहंश्रेयस्यहं श्रेयानस्म्यहं श्रेयानस्मीत्येतस्मिन्प्रयोजने व्यूदिरे नाना विरुद्धं चोदिर उक्तवन्तः ॥ ६ ॥

ते ह—ते हैवं विवदमाना आत्मनः श्रेष्ठत्वविज्ञानाय प्रजापतिं पितरं जनयितारं कञ्चिदेत्योचुरुक्तवन्तो हे भगवन्को नोऽस्माकं मध्ये श्रेष्ठोऽभ्यधिको गुणैरित्येवं पृष्टवन्तः। तान्पितोवाच ह यस्मिन्वो युष्माकं मध्ये उत्क्रान्ते

आनन्दगिरिटीका

गर्भस्थे हीति। तत्र गर्भविवृद्धिदर्शनं प्रमाणयति—यथेते। कदा तर्हि वागादीनां वृत्तिलाभस्तत्राऽऽह—चक्षुरादीति। प्राणस्य ज्यैष्ठ्यं प्रतिपादितं निगमयति—इति प्राण इति। गुणद्वयमुपास्यत्वाय दर्शितं निगमयति—अत इति ॥ १॥

तदर्थत्वेनैव गुणान्तरं दर्शयति—यो ह वा इति। वसुमत्तमं धनवत्त्वादन्येषां निवासकारणमित्यर्थः। तथैवेत्युपासनानुसारेणेति यावत्। वसिष्ठो ह भवतीति वासयिता वेत्यर्थः। वाचो वसिष्ठत्वं समर्थयते—वाग्मिनो हीति। वसुमत्तमाश्च तेनान्यान्निवासयन्तीति शेषः ॥ २॥

गुणान्तरमाध्यानायोपदिशति—यो हेति। प्रतिष्ठात्वं चक्षुषो विशदयति—चक्षुषा हीति ॥ ३ ॥

गुणान्तरमाह—यो ह वा इति। देवाः कामाः स्वर्गादयो (वा) मानुषाः पश्वादयः। श्रोत्रस्य सम्पत्त्वं साधयति—यस्मादिति। इत्येवं यस्मात्तस्मादिति योजना ॥ ४॥

संप्रति गुणान्तरमाह—यो हेति। कथं पुनरायतनत्वं मनसः सिद्धमित्यत आह—इन्द्रियोपहृतानामिति॥५॥

यथोक्ता गुणा मुख्यप्राणगामिनो न प्रत्येकं वागादिषु भवन्तीति वक्तुमाख्यायिकां प्रमाणयति—अथेति॥६॥

कञ्चिद्विराजं कश्यपादीनामन्यतमं वेत्यर्थः। शरीरस्य पापिष्ठत्वं पापकार्यप्रधानत्वम्। इवशब्दोऽवधारणार्थः।

सा ह वागुच्चक्राम सा सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा अकला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥ ८ ॥

चक्षुर्होच्चक्राम तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाऽन्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥९॥

श्रोत्रँ होच्चक्राम तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥१०॥

मनो होच्चक्राम तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥११॥

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून्सङ्खिदेदेवमितरान्
प्राणान्समखिदत्तँ हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

शरीरमिदं पापिष्ठमिवातिशयेन जीवतोऽपि, समुत्क्रान्तप्राणं ततोऽपि पापिष्ठतरमिवातिशयेन दृश्यते कुणपमस्पृश्यमशुचि दृश्येत स वो युष्माकं श्रेष्ठ इत्यवोचत्काक्वा तद्दुःखं परिजिहीर्षुः ॥ ७ ॥

तथोक्तेषु पित्रा प्राणेषु सा ह वागुच्चक्रामोत्क्रान्तवती। सा चोत्क्रम्य संवत्सरमात्रं प्रोष्य स्वव्यापारान्निवृत्ता सती पुनः पर्येत्येतरान्प्राणानुवाच कथं केन प्रकारेणाशकत शक्तवन्तो यूयं मदृते मां विना जीवितुं धारयितुमात्मानमिति ते होचुर्यथाऽकला इत्यादि। अकला मूका यथा लोकेऽवदन्तो वाचा जीवन्ति। कथम्? प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवं सर्वकरणचेष्टां कुर्वन्त इत्यर्थः। एवं वयमजीविष्मेत्यर्थः। आत्मनोऽश्रेष्ठतां प्राणेषु बुद्ध्वा प्रविवेश ह वाक्पुनः स्वव्यापारे प्रवृत्ता बभूवेत्यर्थः। समानमन्यच्चक्षुर्होच्चक्राम श्रोत्रं होच्चक्राम मनो होच्चक्रामेत्यादि। यथा बाला अमनसोऽप्ररूढमनस इत्यर्थः ॥ ८-९-१०-११ ॥

एवं परीक्षितेषु वागादिष्वथानन्तरं ह स मुख्यः प्राण उच्चिक्रमिषन्नुत्क्रमितुमिच्छन्किमकरोदित्युच्यते। यथा लोके सुहयः शोभनोऽश्वः पड्वीशशङ्कून्पादबन्धनकीलान्परीक्षणायाऽऽरूढेन कशयाहतः सन्सङ्खिदेत्समुत्खनेत् समुत्पाटयेत्, एवमितरान्वागादीन्प्राणान्समखिदत्समुद्धृतवान्। ते प्राणाः सञ्चालिताः सन्तः स्वस्थाने स्थातुमनुत्सहमाना अभिसमेत्य मुख्यं प्राणं तमूचुर्हे भगवन्नेधि भव नः स्वामी यस्मात्त्वं नोऽस्माकं श्रेष्ठोऽसि मा चास्माद्देहादुत्क्रमीरिति ॥ १२ ॥

नरेन्द्रपुरीयं टिप्पणम्

अथ ह प्राण इत्यतः प्राक्तनस्यावान्तरतात्पर्यमाह—कः श्रेष्ठ इति। न त्वं श्रेष्ठ इत्युक्ते यदेकस्य दुःखं तत्परिजिहीर्षन् काक्वा स्वरभङ्गेन पितोवाच, न स्फुटमित्यर्थः ॥ ७-१२ ॥

आनन्दगिरिटीका

उक्तमेवार्थं संक्षिप्याऽऽह—कुणपमिति। त्यक्तप्राणं शवरूपमिति यावत्। ननु प्रजापतिः सर्वज्ञो मुख्यमेव प्राणं किमिति श्रेष्ठं नाभिवदति तत्राऽऽह—काक्वेति। अयं श्रेष्ठ इत्युक्ते यत्तेषां वागादीनां दुःखं तत्परिहर्तुमिच्छन्प्रजापतिः स्वरभङ्गोपायविशेषेण श्रेष्ठमुक्तवान्न स्फुटमित्यर्थः ॥ ७ ॥

अन्यदित्यस्य विषयमाह—चक्षुरिति। बालानामपि बहिरन्तरिन्द्रियवत्त्वाविशेषात्कथममनस इति विशेषणमत आह—अप्ररूढेति ॥ ८-९-१० ११ ॥

परीक्षितेषु श्रेष्ठतारहितेषु निरूप्य निश्चितेष्वित्येतत्। पदनशीलाः पादास्तेषां संहतिः पड्विस्तस्या ईशा नियामकाः शङ्कवो वर्णविकारश्छान्दसः। तान्यथोक्तानश्वो युगपदुत्पाटयेद्यथेति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ
हैनं चक्षुरुवाच यदहं प्रतिष्ठाऽस्मि त्वं तत्प्रतिष्ठाऽसीति ।।१३।।
अथ हैनँ श्रोत्रमुवाच यदहँ सम्पदस्मि त्वं तत्सम्पदसीत्यथ
हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति ।।१४।।
न वै वाचो न चक्षूँषि न श्रोत्राणि न मनांसीत्याचक्षते
प्राणा इत्येवाऽऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ।।१५।।

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य प्रथमः खण्डः

अथ हैनं वागादयः प्राणस्य श्रेष्ठत्वं कार्येणाऽऽपादयन्त आहुर्बलिमिव हरन्तो राज्ञे विशः। कथं, वाक् तावदुवाच यदहं वसिष्ठोऽस्मि। यदिति क्रियाविशेषणं यद्वसिष्ठत्वगुणाऽस्मीत्यर्थः। त्वं तद्वसिष्ठस्तेन वसिष्ठत्वगुणेन त्वं तद्वसिष्ठोऽसि तद्गुणस्त्वमित्यर्थः। अथवा तच्छब्दोऽपि क्रियाविशेषणमेव। त्वत्कृतस्त्वदीयोऽसौ वसिष्ठत्वगुणोऽज्ञानान्ममेति मयाऽभिमत इत्येतत्। तथोत्तरेषु योज्यं चक्षुःश्रोत्रमनःसु ।। १३-१४ ।।

श्रुतेरिदं वचो युक्तमिदं वागादिभिर्मुख्यं प्राणं प्रत्यभिहितं यस्मान्न वै लोके वाचो न चक्षूंषि न श्रोत्राणि न मनांसीति वागादीनि करणान्याचक्षते लौकिका आगमज्ञा वा। किं तर्हि ? प्राणा इत्येवाऽऽचक्षते कथयन्ति यस्मात्प्राणो ह्येवैतानि सर्वाणि वागादीनि करणजातानि भवत्यतो मुख्यं प्राणं प्रत्यनुरूपमेव वागादिभिरुक्तमिति प्रकरणार्थमुपसञ्जिहीर्षति।

ननु कथमिदं युक्तं चेतनावन्त इव पुरुषा अहंश्रेष्ठतायै विवदन्तोऽन्योन्यं स्पर्धेरन्निति। न हि चक्षुरादीनां वाचं प्रत्याख्याय प्रत्येकं वदनं सम्भवति। तथाऽपगमो देहात्पुनः प्रवेशो ब्रह्मगमनं प्राणस्तुतिर्वोपपद्यते।

नरेन्द्रपुरीयं टिप्पणम्

पाटनशीलाः पटवः पादाः तेषां संहतिः पड्वो तस्या ईशा नियामकाः शङ्कवः वर्णविकारश्छान्दसः।।१२-१४।।
वागाद्यभिमानात् व्युत्थाय श्रुतिरेव वागादेः प्राणाधीनतां ब्रवीतीत्युत्तरस्य तात्पर्यमाह—श्रुतेरिद वच इति। सर्वाण्येव करणानि यदि वाक्तन्त्राणि स्युः तर्हि वाच इत्येव तानि ब्रूयुः। चक्षुस्तन्त्राणि यदि स्युस्तदा सर्वाण्येव चक्षूंषीति ब्रूयुः। न चैवं ब्रुवन्ति, प्राणा इति तु ब्रुवन्ति। तस्मात् प्राणपारतन्त्र्यं सिद्धमित्यर्थः। आख्यायिकाया यथाश्रुतमर्थमाक्षिप्य विवक्षितेऽर्थे तात्पर्यमाह—कथमिदमित्यादिना। अग्न्यादयश्चेतनावत्यो

आनन्दगिरिटीका

मयि श्रेष्ठत्वधीर्युष्माकमस्तीति कथं ज्ञातुं शक्यमित्याशङ्क्याऽऽह—अथेति। वचनं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। क्रियाविशेषणत्वमेव विशदयति—यद्वसिष्ठत्वेति। वसिष्ठत्वेन गुणेनाहं गुणवानस्मीति यत्तत्त्वमेवेति योजना। अनन्तरं वाक्यमादाय व्याचष्टे—त्वमित्यादिना। तद्वसिष्ठ इति समस्तपदमिति गृहीत्वा व्याख्याय पक्षान्तरमाह—अथ वेति। यच्छब्दवदित्यपेरर्थः। अहं वसिष्ठत्वगुणोऽस्मीति यत्तत्त्वमेव वसिष्ठत्वगुणोऽसीति कथमिदानीमुच्यते। अन्यथा हि पूर्वमभिधानं तवाऽऽसीदित्याशङ्क्याऽऽह—त्वत्कृत इति। वाचि दर्शितं न्यायं चक्षुरादावतिदिशति—तथेति ।। १३-१४ ।।

वागादिवचनादुत्थाय प्राणाधीनतां वागादेः श्रुतिरेव कथयतीत्युत्तरस्य "न वै वाच" इत्यादेस्तात्पर्यमाह—श्रुतेरिति। तदेव च सोपस्कारं व्याकरोति—युक्तमित्यादिना। यदि सर्वाण्येव करणानि वाक्तन्त्राणि स्युस्तर्हि वाच इत्येव तानि ब्रूयुः। यदि चक्षुस्तन्त्राणि स्युस्तदा सर्वाण्येव चक्षूंषीति वदेयुः। न चैवं वदन्ति, प्राणा इति तु तानि कथयन्ति। तस्मात्प्राणपारतन्त्र्यं करणानां सिद्धमित्यर्थः। वागादिभिरुक्तं त्वं तद्वसिष्ठोऽसीत्यादि प्राणस्यैव यथोक्तगुणवतो ध्येयत्वं प्रकरणार्थः। साक्षादुपसंहारादर्शनादुपसञ्जिहीर्षतीत्युक्तम्।

आख्यायिकाया यथाश्रुतमर्थमाक्षिपति—नन्विति। यथा पुरुषाश्चेतनावन्तो विवदमानाः स्पर्धन्ते तथा

तत्राग्न्यादिचेतनावद्देवताधिष्ठितत्वाद्वागादीनां चेतनावत्त्वं तावत्सिद्धमागमतः । तार्किकसमयविरोध इति चेद्देह एकस्मिन्ननेकचेतनावत्त्वे । न । ईश्वरस्य निमित्तकारणत्वाभ्युपगमात् । ये तावदीश्वरमभ्युपगच्छन्ति तार्किकास्ते मनआदिकार्यकरणानामाध्यात्मिकानां बाह्यानां च पृथिव्यादीनामीश्वराधिष्ठितानामेव नियमेन प्रवृत्तिमिच्छन्ति रथादिवत् । न चास्माभिरग्न्याद्याश्चेतनावत्योऽपि देवता अध्यात्मं भोक्त्र्योऽभ्युपगम्यन्ते, किं तर्हि, कार्यकरणवतीनां हि तासां प्राणैकदेवताभेदानामध्यात्माधिभूताधिदैवभेदकोटिविकल्पानामध्यक्षतामात्रेण नियन्तेश्वरोऽभ्युपगम्यते । स ह्यकरणः । "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।" इत्यादिमन्त्रवर्णात् । "हिरण्यगर्भं पश्यत जायमानम्" । "हिरण्यगर्भं जनयामास पूर्वम्" इत्यादि च श्वेताश्वतरीयाः पठन्ति । भोक्ता कर्मफलसम्बन्धी देहे तद्विलक्षणो जीव इति वक्ष्यामः ।

## नरेन्द्रपुरीयं टिप्पणम्

देवतास्ताभिरधिष्ठितत्वात्तादात्म्याभिप्रायेण वागादीनां चेतनावत्त्वसम्भवाद्वदनसंवदनादिव्यवहारः सम्भवतीत्युक्तमागमानुसारेण । तत्र कुतर्कविरोधं शङ्कते—तार्किकेति । एकस्मिन्देहे अनेकचेतनवत्वे विरुद्धानेकाभिप्रायानुविधायित्वे शरीरस्य भेदप्रसङ्गान्निश्चेष्टत्वप्रसङ्गाद्वा नैकं शरीरमनेकचेतनाधिष्ठितमित्यर्थः । एकमनेकचेतनाधिष्ठितं न भवतीति तार्किकाणामपि न शक्यं वक्तुमित्याह–न, ईश्वरस्येति । अथैकस्यानेकभोक्त्रधिष्ठितत्वं न सम्भवतीत्यभिप्रायः तदस्माभिरपि नेष्यत इत्याह—न चास्माभिरिति । स्वकर्मोपार्जित एव देहे देवतानां भोक्तृत्वं, न निकृष्टे मनुष्यादिदेहे अधिष्ठातृतामात्रं त्वैश्वर्ययोगादित्यर्थः । किं तर्ह्यधिष्ठातृदेवताकार्यकरणानां देवतान्तरं चैवं तत्राप्यन्यदित्यनवस्था स्यादित्यर्थः, परिहरति—कार्यकरणवतीनां हीति । अध्यात्माधिभूताधिदेवानां भेदैः कोटिभिर्विकल्पो यासामिति विग्रहः । ईश्वरस्यापि नियन्तृत्वात् कार्यकरणवत्वं स्यात् देवतानामिवेति तत्राह—स ह्यकरण इति । प्राणः सूत्रात्मा हिरण्यगर्भ एका देवता समष्टिव्यष्टिरूपा तदवस्थाभेदानामग्न्यादीनां नियन्तेश्वर इत्युक्तं तत्र प्रमाणमाह—हिरण्यगर्भमिति । देवतानामीश्वरस्य च भोक्तृत्वाभावे कस्तर्हि भोक्तेत्यत आह—भोक्ता कर्मेति ।

## आनन्दगिरिटीका

वागादयोऽचेतनाः स्वकीयश्रेष्ठत्वसिद्ध्यर्थं विप्रतिपन्ना मिथः स्पर्धेरन्निति नैव युक्तमचेतनेषु स्पर्धादिरदर्शनादित्यर्थः । किं च वाग्व्यतिरिक्तानामन्योन्यं वचनमेवानुचितं वचनस्य वाग्व्यापारत्वादित्याह—न हीति । किञ्च वागादीनां देहादपसर्पणमप्ययुक्तमचेतनत्वादित्याह—तथेति । वाशब्दो न हीत्यस्यानुकर्षणार्थः ।

अग्न्यादयश्चेतनावत्यो देवतास्ताभिरधिष्ठितत्वात्तादात्म्याभिप्रायेण वागादीनां चेतनावत्त्वसम्भवाद्वदनादिव्यवहारः सम्भवतीत्यग्निर्वाग्भूत्वा मुखं प्राविशदित्यादिश्रुतिमनुसृत्योत्तरमाह—तत्रेति । एकस्मिन्देहेऽनेकचेतनावतां प्रसह्य विरुद्धानेकाभिप्रायानुविधायित्वेन देहस्योन्मथनप्रसङ्गादक्रियत्वप्रसङ्गाद्वा नानेकचेतनाधिष्ठितत्वमेकस्य देहस्य सम्भवतीति शङ्कते—तार्किकेति । किमेकशरीरमनेकचेतनाधिष्ठितं न भवति किं वा तैर्निर्णीतकर्तृभोक्त्रधिष्ठितमिति विकल्प्याऽऽद्यं दूषयति—नेति । अस्ति हि परमते शरीरस्य जीवाधिष्ठितस्यैवेश्वराधिष्ठितत्वं तथाचैकशरीरमनेकचेतनाधिष्ठितं न भवतीति नास्ति सेश्वरवादिनां शङ्केत्यर्थः । संग्रहवाक्यं विवृणोति—ये तावदिति । अचेतनानां चेतनाधिष्ठितानामेव प्रवृत्तिरित्यत्र दृष्टान्तमाह—रथादिवदिति । द्वितीयं प्रत्याह—न चेति । [यदि] कार्यकरणानामधिष्ठातृदेवता तर्हि तत्कार्यकरणानां किमधिष्ठातृदेवतान्तरमिति पृच्छति—किं तर्हीति । देवताकार्यकरणानामधिष्ठातृदेवतान्तरमिष्टं चेदनवस्था स्यादिति मन्वानं प्रत्याह—कार्यकरणवतीनामिति । शाकल्यब्राह्मणमनुसृत्याऽऽह—प्राणेति । ननु भूयस्यो देवताः कथं तासां प्राणलक्षणैकदेवताप्रभेदत्वमत आह—अध्यात्मेति । अध्यात्माधिभूताधिदेवानां भेदकोटिभिर्विकल्पो यासामिति विग्रहः । नियन्तृत्वप्रयुक्तव्यापारवत्त्वं वारयितुं विशिनष्टि—अध्यक्षतामात्रेणेति । अथेश्वरस्यापि नियन्तृत्वात्कार्यकरणवत्त्वं देवतानामिव स्यादिति चेन्नेत्याह—स हीति । अकरणत्वमकार्यत्वस्योपलक्षणम् । तत्र श्रुतिं प्रमाणयति—अपाणीति । आदिपदेन च "न तस्य कार्यं करणं च विद्यत" इत्यादिमन्त्रवर्णो गृहीतः । सूत्रात्मा हिरण्यगर्भः सा चैका समष्टिरूपा देवता तदवस्थाभेदानां देवतानामीश्वरो नियन्तेत्युक्तं तत्र प्रमाणमाह—हिरण्यगर्भमिति । आदिपदेन "हिरण्यगर्भः समवर्तते"त्यादि गृह्यते । देवानामीश्वरस्य चास्मिन्देहे भोक्तृत्वाभावे कस्य भोक्तृत्वमित्यत आह—भोक्तेति । तद्विलक्षणो देवतेश्वराभ्यां व्यावृत्त इति यावत् ।

**स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमा श्वभ्य आशकुनिभ्य इति होचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

वागादीनां चेह संवादः कल्पितो विदुषोऽन्वयव्यतिरेकाभ्यां प्राणश्रेष्ठतानिर्धारणार्थम्। यथा लोके पुरुषा अन्योन्यमात्मनः श्रेष्ठतायै विवदमानाः कञ्चिद्गुणविशेषाभिज्ञं पृच्छन्ति को नः श्रेष्ठो गुणैरिति। तेनोक्ता एकैकश्येनादः कार्यं साधयितुमुद्यच्छत येनादः कार्यं साध्यते स वः श्रेष्ठ इत्युक्तास्तथैवोद्यच्छन्त आत्मनोऽन्यस्य वा श्रेष्ठतां निर्धारयन्ति। तथेमं संव्यवहारं वागादिषु कल्पितवती श्रुतिः। कथं नाम विद्वान्वागादीनामेकैकस्याभावेऽपि जीवनं दृष्टं न तु प्राणस्येति प्राणश्रेष्ठतां प्रतिपद्येतेति। तथाच श्रुतिः कौषीतकिनाम्—"जीवति वागपेतो मूकान्हि पश्यामो जीवति चक्षुरपेतोऽन्धान्हि पश्यामो जीवति श्रोत्रापेतो बधिरान्हि पश्यामो जीवति मनोपेतो बालान्हि पश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्नः इत्याद्या ॥ १५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य प्रथमः खण्डः

स होवाच मुख्यः प्राणः किं मेऽन्नं भविष्यतीति। मुख्यं प्राणं प्रष्टारमिव कल्पयित्वा वागादीन्प्रतिवक्तॄनिव कल्पयन्ती श्रुतिराह—यदिदं लोकेऽन्नजातं प्रसिद्धमा श्वभ्यः श्वभिः सहाऽऽशकुनिभ्यः सह शकुनिभिः सर्वप्राणिनां यदन्नं तत्तवान्नमिति होचुर्वागादय इति। प्राणस्य सर्वमन्नं प्राणोऽत्ता सर्वस्यान्नस्येत्येवं प्रतिपत्तये कल्पिताख्यायिकारूपाद्व्यावृत्य स्वेन श्रुतिरूपेणाऽऽह—तद्वा एतद्यत्किञ्चिल्लोके प्राणिभिरन्नमद्यतेऽनस्य प्राणस्य तदन्नं प्राणेनैव तदद्यत इत्यर्थः। सर्वप्रकारचेष्टाव्याप्तिगुणप्रदर्शनार्थमन इति प्राणस्य प्रत्यक्षं नाम। प्राद्युपसर्गपूर्वत्वे हि विशेषगतिरेव स्यात्। तथाच सर्वान्नानामत्तुर्नामग्रहणमितीदं प्रत्यक्षं नामान इति सर्वान्नानामत्तुः साक्षादभिधानम्। न ह वा

नरेन्द्रपुरीयं टिप्पणम्

वागादिशब्दवाच्याश्चेतनावत्यो देवता अभ्युपगम्य परिहारः उक्तः तेनापि कथं नाम प्रयोजनमन्यत्रैव तात्पर्यादित्याह—वागादीनां चेहेति। कथं नाम विद्वान् प्राणश्रेष्ठतां प्रतिपद्येतेति सम्बन्धः ॥ १५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य प्रथमः खण्डः

वागादीनां स्वामी श्रैष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यामुपदिश्य तदङ्गभूतवासोदृष्टिविधानायोपक्रमत इत्याह—स होवाचेत्यादिना। प्राणशब्दं हित्वा अनशब्दप्रयोगे तात्पर्यमाह—सर्वप्रकारेति।

आनन्दगिरिटीका

वागादिशब्दवाच्याश्चेतनावत्यो देवता इति स्वीकृत्याऽऽख्यायिकायाः स्वार्थनिर्वृत्त्यर्थमुक्तमिदानीं तस्यास्तात्पर्यमाह—वागादीनां चेति। कल्पनाप्रयोजनमाह—विदुष इति। यथोक्तां कल्पनां दृष्टान्तेन स्पष्टयति—यथेत्यादि। तेनोक्ता इत्युक्तमेव व्यनक्ति—एकैकश्येनेति। विदुष इत्यादिनोक्तं प्रयोजनं प्रकटयति—कथं नामेति। विद्वान्प्राणश्रेष्ठतां कथं नाम प्रतिपद्येतेति सम्बन्धः। प्रतिपत्तिप्रकारं संक्षिपति—वागादीनामिति। फलवती कल्पनेति शेषः। दृष्टेऽप्यर्थे श्रुतिमनुग्राहकत्वेन दर्शयति—तथा चेति ॥ १५ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य प्रथमः खण्डः

वागादीनां स्वामी श्रैष्ठ्यादिगुणः प्राणोऽस्मीति विद्यादिति प्रधानविद्यामुपदिश्य तद्दर्शनाङ्गभूतान्नवासोदृष्टिविधानार्थे प्रक्रमे प्रथममन्नदृष्टिं विधातुं प्रसङ्गं प्रकुरुते—स होवाचेति। मुख्यस्य प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं च काल्पनिकमित्याह—मुख्यमिति। यदिदमित्युक्तमेव च यत्पदं वाक्यार्थकल्पनार्थं यदन्नमित्यत्रानूद्यते। तद्वा एतदित्याद्युत्तरवाक्यस्य पूर्ववाक्यादर्थभेदाभावमाशङ्क्याऽऽह—प्राणस्येति। प्राणशब्दं विहायानशब्दप्रयोगे तात्पर्यमाह—सर्वप्रकारेति। अन चेष्टायामितिधातुजस्यानशब्दस्योपादानं सर्वप्रकारचेष्टया प्राणस्य व्याप्तिगुणप्रदर्शनार्थम्। तथा च यः कोऽपि दहति शोषयति प्लावयति वा स सर्वोऽपि प्राण एवेति युक्तं प्राणस्यान इति नामेत्यर्थः। प्रत्यक्षं पूर्वोक्तधातुजन्म नामेति यावत्। उक्तमेवार्थं समर्थयते—प्रादीति। अनशब्दस्येति शेषः। न प्राणस्य सर्वचेष्टाप्तिरित्येवकारार्थः। तथा च प्राणादिशब्दोपादाने विशेषव्याप्तिरेवेति स्थिते सतीत्यर्थः। अन इति

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

एवंविदि यथोक्तप्राणविदि प्राणोऽहमस्मि सर्वभूतस्थः सर्वान्नानामत्तेति तस्मिन्नेवंविदि ह वै किञ्चन किञ्चिदपि प्राणिभिराद्यं सर्वैरनन्नमनाद्यं न भवति सर्वमेवंविद्यन्नं भवतीत्यर्थः। प्राणभूतत्वाद्विदुषः। "प्राणाद्वा एष उदेति प्राणेऽस्तमेति" इत्युपक्रम्य—"एवंविदो ह वा उदेति सूर्य एवंविद्यस्तमेति" इति श्रुत्यन्तरात् ॥ १ ॥

स होवाच पुनः प्राणः। पूर्ववदेव कल्पना। किं मे वासो भविष्यतीत्याप इति होचुर्वागादयः। यस्मात्प्राणस्य वास आपस्तस्माद्वा एतदशिष्यन्तो भोक्ष्यमाणा भुक्तवन्तश्च ब्राह्मणा विद्वांस एतत्कुर्वन्ति। किम्। अद्भिर्वासस्थानीयाभिः पुरस्ताद्भोजनात्पूर्वमुपरिष्टाच्च भोजनादूर्ध्वं च परिदधति परिधानं कुर्वन्ति मुख्यस्य प्राणस्य लम्भुको लम्भनशीलो वासो ह भवति। वाससो लब्धैव भवतीत्यर्थः। अनग्नो ह भवति। वाससो लम्भुकत्वेनार्थसिद्धैवानग्नतेत्यनग्नो ह भवतीत्युत्तरीयवान्भवतीत्येतत्।

भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं शुद्धचर्थं विज्ञातं तस्मिन्प्राणस्य वास इति दर्शनमात्रमिह विधीयते। अद्भिः परिदधतीति नाऽऽचमनान्तरम्। यथा लौकिकैः प्राणिभिरद्यमानमन्नं प्राणस्येति दर्शनमात्रं तद्वत्कि मेऽन्नं किं मे वास इत्यादिप्रश्नप्रतिवचनयोस्तुल्यत्वात्। यद्याचमनमपूर्वं तादर्थ्येन क्रियते तदा कृम्याद्यन्नमपि प्राणस्य भक्ष्यत्वेन विहितं स्यात्। तुल्ययोर्विज्ञानार्थयोः प्रश्नप्रतिवचनयोः प्रकरणस्य विज्ञानार्थत्वादर्धजरतीयो न्यायो न युक्तः कल्पयितुम्।

### नरेन्द्रपुरीयं टिप्पणम्

अनचेष्टायामिति धातुजस्यानशब्दस्योपादानं सर्वप्रकारचेष्टायाः प्राणस्य व्याप्तिगुणप्रदर्शनार्थम्। तथा च यः कोऽपि दहति शोषयति प्लावयति वा स सर्वोऽपि प्राण एवेति सिद्धं भवतीत्यर्थः ॥ १ ॥

### आनन्दगिरिटीका

प्रत्यक्षमिदं नाम सर्वान्नानामत्तुर्नामग्रहणमिति सम्बन्धः। तदेव व्याचष्टे—**सर्वान्नानामिति**। ततश्च प्राणशब्दस्य प्राणविदः सर्वमन्नं चेत्तद्विदुषो भक्ष्याभक्ष्यविभागासिद्धौ तद्विषयं शास्त्रं विरुध्येतेत्याशङ्क्याऽऽध्यात्मिकं रूपं हित्वाऽधिदैविकेन रूपेण तस्य सर्वान्नत्वे विभागशास्त्रमाध्यात्मिकपरिच्छेदविषयत्वेनाविरुद्धमित्याह—**प्राणभूतत्वादिति**। प्राणभूतो विद्वानित्यत्र श्रुत्यन्तरं संवादयति—**प्राणादिति** ॥ १ ॥

प्राणविद्याङ्गत्वेनान्नदृष्टिरुपदिष्टा। संप्रति तदङ्गत्वेन वासोदृष्टिं प्रस्तौति—**स होवाचेति**। अत्रापि प्राणस्य प्रष्टृत्वं वागादीनां प्रतिवक्तृत्वं च कल्पितमेवेत्याह—**पूर्ववदिति**। अपां प्राणं प्रति वासोरूपत्वे गमकमाह—**यस्मादिति**। वासोदृष्टिफलमाचष्टे—**लम्भुक इति**। अनग्नो ह भवतीत्यस्य पौनरुक्त्यमाशङ्क्यार्थविशेषमाह—**वासस इति**। आचमनान्तरं प्राणविदो विधीयत एवंविदशिष्यन्नाचामेदिति श्रुतेरित्याशङ्क्याऽऽह—**भोक्ष्यमाणस्येति**। आदिपदेन प्रतिवचने गृह्येते। सर्वप्राणिभोग्येऽन्ने तस्यान्नमितिदृष्टिवदाचमनीयास्वप्सु तस्य विधीयते वासोदृष्टिरित्युक्तं व्यतिरेकद्वारा विवृणोति—**यदीति**। तादर्थ्येनानग्नतार्थत्वेनेति यावत्। अथ पूर्वमन्नदृष्टिरेव विधीयते सर्वान्नभक्षणस्य प्रमाणविरुद्धत्वादिह त्वपूर्वमाचमनमविरोधाद्विधीयतामित्याशङ्क्याऽऽह—**तुल्ययोरिति**।

१. छन्दोगा वाजसनेयिनश्च प्राणसम्वादे प्राणस्य श्वादिमर्यादं अन्नमाम्नाय आपो वास आमनन्ति। ततः छन्दोगाः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति इति। वाजसनेयिनस्तु तद्विद्वांसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा चाचामन्ति-इति तस्मादेवं वित् अशिष्यन्नाचामेत् अशित्वा चाचामेत् एतमेव तदनमनग्नं कुरुते इति श्रूयते। तत्र आचमनं अनग्नताचिन्तनमुभयं विधीयते उत स्मृतिप्राप्ताचमनविषयासु अप्सु अनग्नताचिन्तनमात्रं विधीयत इति विचार्य अमृतोपस्तरणमसि अमृतापिधानमसि इति मन्त्रमुच्चार्य कर्तव्यासु भोजनस्याद्यन्तयोः अप्सु अनग्नताचिन्तनमात्रं विधीयत इति निर्धारितं कार्याख्यानादपूर्वं इत्यधिकरणे ( ब्र० सू० ३-३-१८ )।

तद्धैतत्सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥

अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्याँ रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ४ ॥

यत्तु प्रसिद्धमाचमनं प्रायत्यार्थं प्राणस्यानग्नतार्थं च न भवतीत्युच्यते न तथा वयमाचमनमुभयार्थं ब्रूमः । किं तर्हि प्रायत्यार्थाचमनसाधनभूता आपः प्राणस्य वास इति दर्शनं चोद्यत इति ब्रूमः । तत्राऽऽचमनस्योभयार्थत्वप्रसङ्गदोषचोदनाऽनुपपन्ना । वासोर्थ एवाऽऽचमने तद्दर्शनं स्यादिति चेत् । न । वासोज्ञानार्थवाक्ये वासोर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदः आचमनस्य तदर्थत्वमन्यार्थत्वं चेति । प्रमाणाभावात् ॥ २ ॥

तदेतत्प्राणदर्शनं स्तूयते । कथम् । तद्धैतत्प्राणदर्शनं सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदोऽपत्यं वैयाघ्रपद्यस्तस्मै गोश्रुत्याख्यायोक्त्वोवाचान्यदपि वक्ष्यमाणं वचः । किं तदुवाचेत्याह—यद्यपि शुष्काय स्थाणव एतद्दर्शनं ब्रूयात्प्राणविज्जायेरन्नुत्पद्येरन्नेवास्मिन्स्थाणौ शाखाः प्ररोहेयुश्च पलाशानि पत्राणि, किमु जीवते पुरुषाय ब्रूयादिति ॥ ३ ॥

अथानन्तरं यदि महन्महत्त्वं जिगमिषेद्गन्तुमिच्छेन्महत्त्वं प्राप्तुं यदि कामयेतेत्यर्थः । तस्येदं कर्म विधीयते । महत्त्वे हि सति श्रीरुपनमते । श्रीमतो ह्यर्थप्राप्तं धनं ततः कर्मानुष्ठानं ततश्च देवयानं पितृयाणं वा पन्थानं

नरेन्द्रपुरीयं टिप्पणम्

प्राणविद आचमनान्तरं विधीयते एवंविदशिष्यन्नाचमेदिति श्रुत्यन्तरादिति केचित्तान् प्रत्याचमनक्रिया तत्साधनभूतास्वप्सु वासः सङ्कल्पना क्रियान्तरं प्राणस्यानग्नत्वार्थम् इति क्रियाभेदान्नैकस्य क्रियास्वरूपस्यैवोभयार्थत्वप्रसङ्ग इत्युक्तम् । तत्र शङ्कते—वासोऽर्थं एवेति । अन्यार्थास्वप्स्वन्यार्थत्वचिन्तनं प्रमाणविरोधात्कर्तुमशक्यम् । तत एवंवित्संयोगेन वासोऽर्थमाचमनान्तरमेव विधेयम्, तत्र चानग्नताचिन्तनमात्रे च वस्तुविरोधाप्रसङ्गाद्दृष्टिविधिपरमेव वाक्यमित्यर्थः[1] ॥ २-३ ॥

गोदोहनवदधिकृताधिकारमिदं वक्ष्यमाणं कर्म प्राणविदोऽत्राधिकार इत्याह—यथोक्तप्राणविद इति । दीक्षायां भवन्मौञ्ज्यभ्यञ्जनादि दैक्षं सर्वमेव नानुतिष्ठति, प्रकृतिधर्मा हि विकृतावनुवर्तन्ते । आग्नेयधर्मा इव

आनन्दगिरिटीका

एकस्याऽऽचमनस्य शुद्ध्यर्थत्वमनग्नतार्थत्वं च वक्तुमशक्यं विरोधादित्याशङ्क्याऽऽह—यत्त्विति । विरोधो यथा स्यात्तथेति यावत् । तर्हि कीदृगाचमनं विवक्षितमित्याह—किं तर्हीति । प्रयतस्य भावः प्रायत्यं तदर्था याऽऽचमनक्रिया तत्साधनभूतास्वप्सु वासःसङ्कल्पनं क्रियान्तरमत्र विवित्सितमित्याह—प्रायत्येति । क्रियाभेदे फलितमाह—तत्रेति । अन्यार्थास्वप्स्वन्यार्थत्वचिन्तने प्रमाणविरोधाद्विधियोगेन वासोर्थमाचमनान्तरमेव विधेयं तत्र चानग्नतार्थत्वचिन्तनमुचितमिति शङ्कार्थः । वासोर्थापूर्वाचमनविधाने तत्रानग्नतार्थत्वदृष्टिविधाने च वाक्यभेदप्रसङ्गात्प्रसिद्धाचमनसाधनभूतास्वप्सु वासोदृष्टिपरमेव च वाक्यमित्युत्तरमाह—नेत्यादिना । वासोर्थत्वमन्यार्थत्वं दृष्ट्यर्थत्वमित्युक्ते प्रमाणस्यैकस्य वाक्यस्याप्रमाणत्वप्रसङ्गादिति यावत् ॥ २ ॥

तद्धैतदित्यादिवाक्यं न विधानार्थं नापि फलवचनं तथा च व्यर्थमित्याशङ्क्याऽऽह—तदेतदिति । स्तुतिमेव प्रश्नपूर्वकं विवृणोति—कथमिति । जीवते पुरुषाय प्राणविद्याविदे तद्दर्शनं ब्रूयात्तदाऽस्मिन्महाफलं भवतीति किमु वक्तव्यमिति योजना ॥ ३ ॥

गोदोहनवदधिकृताधिकारमिदं कर्म प्राणविदोऽस्मिन्नधिकारोऽस्तीत्याह—यथोक्तेति । अनन्तरं प्राणविद्यानिष्पत्तेरिति शेषः । वाक्यशेषं पूरयति—तस्येति । महत्त्वद्वारा विषयोपभोगकामुकस्य कर्मविधायि शास्त्रं श्येनादिशास्त्रवदनर्थफलमेवेत्याशङ्क्याऽऽह—महत्त्वे हीति । तस्येति प्रकृतमन्थाख्यकर्मोक्तिः । कालादीत्यादिशब्दो द्रव्यादि-

१. वासोऽर्थापूर्वाचमनविधाने तत्र चानग्नतार्थत्वदृष्टिविधाने वाक्यभेदप्रसङ्गात् प्रसिद्धाचमनीयास्वप्सु वासोदृष्टिपरमेव वाक्यम् ।

वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत्सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥ ५ ॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमा हि ते सर्वमिदँ स हि ज्येष्ठः श्रेष्ठो राजाऽधिपतिः स मा ज्यैष्ठ्यँ श्रैष्ठ्यँ राज्यमाधिपत्यं गमयत्वहमेवेदँ सर्वमसानीति ॥ ६ ॥

प्रतिपत्स्यत इत्येतत्प्रयोजनमुररीकृत्य महत्त्वप्रेप्सोरिदं कर्म न विषयोपभोगकामस्य। तस्यायं कालादिविधिरुच्यते—अमावास्यायां दीक्षित्वा दीक्षित इव भूमिशयनादिनियमं कृत्वा तपोरूपं सत्यवचनं ब्रह्मचर्यमित्यादिधर्मवान्भूत्वेत्यर्थः। न पुनर्दैक्षमेव कर्मजातं सर्वमुपादत्ते। अतद्विकारत्वान्मन्थाख्यस्य कर्मणः। "उपसद्व्रती" इति श्रुत्यन्तरात्पयोमात्रभक्षणं च शुद्धिकारणं तप उपादत्ते। पौर्णमास्यां रात्रौ कर्माऽऽरभते सर्वौषधस्य ग्राम्यारण्यानामोषधीनां यावच्छक्त्यल्पमल्पमुपादाय तद्वितुषीकृत्याऽऽममेव पिष्टं दधिमधुनोरौदुम्बरे कंसाकारे चमसाकारे वा पात्रे श्रुत्यन्तरात्प्रक्षिप्योपमथ्याग्रतः स्थापयित्वा ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावावसथ्य आज्यस्याऽऽवापस्थाने हुत्वा स्रुवसंलग्नं मन्थे संपातमवनयेत्संस्रवमधः पातयेत् ॥ ४ ॥

समानमन्यत्। वसिष्ठाय प्रतिष्ठायै संपद आयतनाय स्वाहेति प्रत्येकं तथैव संपातमवनयेद्धुत्वा ॥ ५ ॥

अथ प्रतिसृप्याग्नेरीषदपसृप्याञ्जलौ मन्थमाधाय जपतीमं मन्त्रम्। अमो नामास्यमा हि ते। अम इति प्राणस्य नाम। अन्नेन हि प्राणः प्राणिति देह इत्यतो मन्थद्रव्यं प्राणस्यान्नत्वात्प्राणत्वेन स्तूयतेऽमो नामासीति। कुतः। यतोऽमा सह हि यस्मात्ते तव प्राणभूतस्य सर्वं समस्तं जगदिदमतः। स हि प्राणभूतो मन्थो ज्येष्ठः श्रेष्ठश्च। अत एव च राजा दीप्तिमानधिपतिश्चाधिष्ठाय पालयिता सर्वस्य। स मा मामपि मन्थः प्राणो ज्यैष्ठ्यादिगुणपूगमात्मनो गमयत्वहमेवेदं सर्वं जगदसानि भवानि प्राणवत्। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥ ६ ॥

## नरेन्द्रपुरीयं टिप्पणम्

सौर्यचरुनिर्वापे प्रकृतिवद्विकृतिः कर्तव्येति न्यायात्। मन्थकर्मणस्तु दीक्षाविकृतित्वाभावान्न तद्धर्मानुवृत्तिरित्यर्थः। पिष्टमौदुम्बरे पात्रेऽपि दधिमधुनोर्मध्ये निक्षिप्यालोडयाग्रे संस्थाप्य पश्चादाज्यं जुहुयादावापस्थाने अग्नेर्मध्यप्रदेश इत्यर्थः। हुत्वा चाज्यशेषं स्रुवलग्नमम्मथिते पिष्टे प्रक्षिपेदित्यर्थः ॥ ४-५ ॥

अमेति निपातः सहार्थः—आत्मन इति। स्वस्य ज्यैष्ठ्यादिगुणसमुदायं प्राणाभिन्नो मन्थो मां प्रति गमयत्विति प्राणवित्प्रार्थयते ॥ ६ ॥

## आनन्दगिरिटीका

संग्रहार्थः। दैक्षं दीक्षायां भवं मौञ्ज्यभ्यञ्जनादि न सर्वमेवायमनुतिष्ठति। प्रकृतिधर्मा हि विकृतावनुवर्तन्ते। प्रकृतिवद्विकृतिः कर्तव्येति न्यायात्। न चेदं कर्म कस्यचिद्विकृतिरतो यथोक्तधर्मवत्त्वमेवात्र विवक्षितमित्यर्थः। दीक्षित्वेत्यनेन विवक्षितं धर्मान्तरमाह—उपसदिति। उपसदो नामेष्टयः प्रवर्ग्याहस्सु प्रसिद्धाः। तासु व्रतं पयोमात्रभक्षणं तदुपेतो भूत्वा मन्थं सम्पाद्य जुहोतीति वाजसनेयके समानप्रकरणे श्रवणादिति यावत्। पिष्टं कृत्वा तदाममपक्वमेव दधिमधुनोः सम्बन्धिपात्रे प्रक्षिप्येति सम्बन्धः। औदुम्बरत्वे नियमः। पात्रस्याऽऽकारे तु विकल्पः। कथमश्रुतं पात्रमत्र कल्प्यते तत्राऽऽह—श्रुत्यन्तरादिति। औदुम्बरे कंसाकारे कंसे चमसे वेति वाजसनेये श्रवणात्सर्वशाखाप्रत्ययन्यायेनापेक्षितं पात्रमत्र गृहीतमित्यर्थः। आवसथसम्बन्धी लौकिकोऽग्निरावसथ्यो विवक्षितो यस्मिन्नौपासनाख्यं कर्म क्रियते। आज्यस्य हुत्वेति सम्बन्धः। आवापस्थानमाहुतिप्रक्षेपप्रदेशो गृह्योक्तः ॥ ४ ॥

वसिष्ठाय स्वाहेत्यादिवाक्यं पूर्ववाक्येन तुल्यार्थमित्याह—समानमिति। तुल्यत्वमेव स्पष्टयति—वसिष्ठायेति। स्वाहेति मन्त्रं समुच्चार्य हुत्वेति सम्बन्धः। तथैव प्रथमहोमानन्तरमित्यर्थः ॥ ५ ॥

आहुत्यानन्तर्यमथशब्दार्थः। भवतु प्राणस्येदं नाम मन्थस्य तु कथं मन्त्रार्थत्वमित्याशङ्क्याऽऽह—अन्नेन हीति। प्रतिज्ञातेऽर्थे प्रश्नपूर्वकं हेतुमाह—कुत इति। अतश्चामो नामासीति पूर्वेण सम्बन्धः। हेतुं व्याचष्टे—यस्मादिति ॥ ६ ॥

अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठँ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति निर्णिज्य कँ सं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥७॥

तदेष श्लोको यदा कर्मसु काम्येषु स्त्रियँ स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शने तस्मिन्स्वप्ननिदर्शने ॥ ८ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य द्वितीयः खण्डः

अथानन्तरं खल्वेतया वक्ष्यमाणयर्चा पच्छः पादश आचामति भक्षयति, मन्त्रस्यैकैकेन पादेनैकैकं ग्रासं भक्षयति । तद्भोजनं सवितुः सर्वस्य प्रसवितुः । प्राणमादित्यं चैकीकृत्योच्यते । आदित्यस्य वृणीमहे प्रार्थयेमहि मन्थरूपम् । येनान्नेन सावित्रेण भोजनेनोपभुक्तेन वयं सवितृस्वरूपापन्ना भवेमेत्यभिप्रायः । देवस्य सवितुरिति पूर्वेण सम्बन्धः । श्रेष्ठं प्रशस्यतमं सर्वान्नेभ्यः सर्वधातमं सर्वस्य जगतो धारयितृतममतिशयेन विधातृतममिति वा । सर्वथा भोजनविशेषणम् । तुरं त्वरं तूर्णं शीघ्रमित्येतत् । भगस्य देवस्य सवितुः स्वरूपमिति शेषः । धीमहि चिन्तयेमहि विशिष्टभोजनेन संस्कृताः शुद्धात्मानः सन्त इत्यभिप्रायः । अथवा भगस्य श्रियः कारणं महत्त्वं प्राप्तुं कर्म कृतवन्तो वयं तद्धीमहि चिन्तयेमहीति सर्वं च मन्थलेपं पिबति निर्णिज्य प्रक्षाल्य कंसं कंसाकारं चमसं चमसाकारं वौदुम्बरं पात्रम् । पीत्वाऽऽचम्य पश्चादग्नेः प्राक्शिराः संविशति चर्मणि वाऽजिने स्थण्डिले केवलायां वा भूमौ । वाचंयमो वाग्यतः सन्नित्यर्थः । अप्रसाहो न प्रसह्यते नाभिभूयते स्त्र्याद्यनिष्टस्वप्नदर्शनेन यथा तथा संयतचित्तः सन्नित्यर्थः । स एवंभूतो यदि स्त्रियं पश्येत्स्वप्नेषु तदा विद्यात्समृद्धं ममेदं कर्मेति ॥ ७ ॥

तदेतस्मिन्नर्थ एष श्लोको मन्त्रोऽपि भवति । यदा कर्मसु काम्येषु कामार्थेषु स्त्रियं स्वप्नेषु स्वप्नदर्शनेषु स्वप्नकालेषु वा पश्यति समृद्धिं तत्र जानीयात् । कर्मणां फलनिष्पत्तिर्भविष्यतीति जानीयादित्यर्थः । तस्मिन्स्त्र्यादि-प्रशस्तस्वप्नदर्शने सतीत्यभिप्रायः । द्विरुक्तिः कर्मसमाप्त्यर्था ॥ ८ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य द्वितीयः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

विधातृतममिति । निर्मातृ सर्वस्य सवित्रभेदेनेत्यर्थः ॥ ७-८ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य द्वितीयः खण्डः

आनन्दगिरिटीका

अनन्तरं जपकर्मणः सकाशादिति शेषः । तदेव स्पष्टयति—मन्त्रस्येति । मन्त्रस्यैकैकेन पादेन मन्थस्यैकैकं ग्रासं भक्षयतीति योजना । भोजनं मन्थरूपमिति सम्बन्धः । तत्कथं सवितुः स्यात्प्राणस्य हि मन्थद्रव्यमन्नमित्युक्तं तत्राऽऽह—प्राणमिति । उच्यते सवितुर्भोजनमिति शेषः । प्राणादित्ययोरेकत्वे फलितं वाक्यार्थमाह—आदित्यस्येति । मन्थरूपं तद्भोजनमिति पूर्वेण सम्बन्धः । प्रार्थनाविषयं भोजनमेव विशिनष्टि—येनेति । तस्यैव विशेषणान्तरं श्रेष्ठ-मित्यादि । स्थितिकारणत्वमुक्त्वा जनकत्वं पक्षान्तरमाह—अतिशयेनेति । जगद्धचासौ फलदाने ध्यातुः शैघ्रयम् । किमिति भोजने कथ्यमाने ध्यानमुच्यते तत्राऽऽह—विशिष्टेति । शुद्धधीत्वं ध्यानकारणमुक्त्वा प्रकृतकर्मवत्प्रेप्सित-महत्त्वे हेतुत्वादपि ध्यानमनुष्ठेयमित्याह—अथवेति । सावित्रं रूपमुक्तम् । नियमेनौदुम्बरं वैकल्पिकाकारे विशेषः । पात्रं प्रक्षाल्य पिबतीति सम्बन्धः । मन्थलेपं पात्रं प्रक्षाल्य पीत्वाऽऽचमनपूर्वकमग्नेः पश्चिमभागे कृष्णाजिनव्यवहितायां केवलायां वा भूमौ प्राक्शिरा भूत्वा शयीतेत्याह—पीत्वेति । शयानस्य कर्तव्यं दर्शयति—वाचंयम इति । तस्य स्वप्ने कथञ्चिदुत्तमस्त्रीदर्शने शुभागमः सूच्यत इत्याह—स एवंभूत इति ॥ ७-८ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य द्वितीयः खण्डः

श्वेतकेतुर्हाऽऽरुणेयः पञ्चालानाँ᳭ समितिमेयाय तँ᳭ ह प्रवाहणो
जैवलिरुवाच कुमारानु त्वाऽशिषत्पितेत्यनु हि भगव इति ॥ १ ॥
वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्त ३ इति न
भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगव इति ॥ २ ॥
वेत्थ यथाऽसौ लोको न संपूर्यत३ इति न भगव इति वेत्थ यथा
पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥
अथानु किमनुशिष्टोऽवोचथा यो हीमानि न विद्यात् कथँ᳭ सोऽनुशिष्टो ब्रुवीतेति स हाऽऽयस्तः
पितुरर्धमेयाय तँ᳭ होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाऽशिषमिति ॥ ४ ॥

ब्रह्मादिस्तम्बपर्यन्ताः संसारगतयो वक्तव्या वैराग्यहेतोर्मुमुक्षूणामित्यत आख्यायिकाऽऽरभ्यते—श्वेतकेतुर्नामतो ह, इत्यैतिह्यार्थः। अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयः पञ्चालानां जनपदानां समितिं सभामेयायाऽऽजगाम। तमागतवन्तं ह प्रवाहणो नामतो जीवलस्यापत्यं जैवलिरुवाचोक्तवान्। हे कुमारानु त्वा त्वामशिषदन्वशिषत्पिता। किमनुशिष्टस्त्वं पित्रेत्यर्थः। इत्युक्तः स आहानु ह्यनुशिष्टोऽस्मि भगव इति सूचयन्नाह ॥ १ ॥

तं होवाच यद्यनुशिष्टोऽसि वेत्थ यदितोऽस्माल्लोकादध्यूर्ध्वं यत्प्रजाः प्रयन्ति यद्गच्छन्ति तत्किं जानीष इत्यर्थः। न भगव इत्याहेतरो न जानेऽहं तद्यत्पृच्छसि। एवं तर्हि वेत्थ जानीषे यथा येन प्रकारेण पुनरावर्तन्त इति। न भगव इति प्रत्याह। वेत्थ पथोर्मार्गयोः सहप्रयाणयोर्देवयानस्य पितृयाणस्य च व्यावर्तनमितरेतरवियोगस्थानं सह गच्छतामित्यर्थः। न भगव इति ॥ २ ॥

वेत्थ यथाऽसौ लोकः पितृसम्बन्धी यं प्राप्य पुनरावर्तन्ते बहुभिः प्रयद्भिरपि येन कारणेन न सम्पूर्यत इति। न भगव इति प्रत्याह। वेत्थ यथा येन क्रमेण पञ्चम्यां पञ्चसंख्याकायामाहुतौ हुतायामाहुतिनिर्वृत्ता आहुतिसाधनाश्चाऽऽपः पुरुषवचसः पुरुष इत्येवं वचोऽभिधानं यासां हूयमानानां क्रमेण षष्ठाहुतिभूतानां ताः पुरुषवचसः पुरुषशब्दवाच्या भवन्ति पुरुषाख्यां लभन्त इत्यर्थः। इत्युक्तो नैव भगव इत्याह। नैवाहमत्र किञ्चन जानामीत्यर्थः ॥ ३ ॥

अथैवमज्ञः सन्किमनु कस्मात्त्वमनुशिष्टोऽस्मीत्यवोचथा उक्तवानसि। यो हीमानि मया पृष्टान्यर्थजातानि

नरेन्द्रपुरीयं टिप्पणम्

महत्त्वं प्राप्तस्य धनसम्पत्तौ विद्यासहितं केवलं च कर्म संप्रवर्तते तद्गत्यभिधानायारम्भ इत्याह—ब्रह्मादीति ॥ १-२ ॥

आहुतिनिर्वृत्ता इति अन्त्येऽग्नौ शरीराहुतौ प्रक्षिप्तायां ततो निष्पन्ना धूमेन सहोर्ध्वं सञ्चरन्ति—आहुतिसाधनाश्चेति। दधिपयःप्रभृतय इत्यर्थः। अन्त्याहुत्यपेक्षया षष्ठाहुतिभूतायामित्यर्थः ॥ ३-४ ॥

आनन्दगिरिटीका

प्राणविद्या तदङ्गकर्म चेत्युभयमुक्तमिदानीमग्निविद्यामाख्यातुकामस्तावदाख्यायिकातात्पर्यमाह—ब्रह्मादीति। तासां च वक्तव्यत्वे हेतुमाह—वैराग्यहेतोरिति। राजा कुमारेति सम्बोधयन्नभिमानं श्वेतकेतोरपनिनीषति ॥ १ ॥

यथेत्यस्यार्थमाह—येनेति। विद्वदविदुषोस्तुल्यमार्गयोः सतोर्द्वौ मार्गौ तयोर्मध्ये देवयानस्येत्यादि योज्यम्। उक्तं वाक्यार्थं संक्षिपति—इतरेतरेति। विदुषां च कर्मिणां च मार्गद्वयमधिकृत्य सह प्रस्थितानां यत्र मिथो वियोगो भवति तत्किं वेत्थेत्यर्थः ॥ २ ॥

पितृलोकसम्बन्धिनं लोकमेव व्याकरोति—यं प्राप्येति। आहुतिनिर्वृत्ता इत्यस्य व्याख्यानमाहुतिसाधनाश्चेति। अपूर्वरूपाणामपां भूतान्तरसमुच्चयार्थश्चकारः। अथवा पयोघृतादिरूपेणाऽऽहुतिं साधयन्तीति चाऽऽहुत्या पुनरपूर्वात्मना निष्पन्ना इत्यर्थः। क्रमेणेति। श्रद्धासोमवृष्ट्यन्नरेतसां हवनद्वारेणेति यावत्। षष्ठाहुतिभूतानामन्त्येष्टिविधानेन शरीराहुतिद्वारा सूक्ष्मतां गतानामित्यर्थः ॥ ३ ॥

त्वत्पृष्टार्थजातातिरिक्तविषयमनुशासनं ममास्तीत्यनुशिष्टोऽस्मीत्युक्तमित्याशङ्क्याऽऽह—यो हीति ॥ ४ ॥

पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत्तेषां नैकञ्चनाशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाऽहमेषां नैकञ्चन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यमिति ॥ ५ ॥

स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हाञ्चकार स ह प्रातः सभाग उदेयाय तँ होवाच मानुषस्य भगवन्गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्री बभूव ॥ ६ ॥

न विद्यान्न विजानीयात्कथं स विद्वत्स्वनुशिष्टोऽस्मीति ब्रुवीत। इत्येवं स श्वेतकेतुः राज्ञाऽऽयस्त आयासितः सन्पितुरर्धं स्थानमेयायाऽऽगतवांस्तं च पितरमुवाचाननुशिष्यानुशासनमकृत्वैव मा मां किल भगवान्समावर्तनकालेऽब्रवीदुक्तवाननु त्वाऽशिषमन्वशिषं त्वामिति ॥ ४ ॥

यतः पञ्च पञ्चसंख्याकान्प्रश्नान्राजन्यबन्धू राजान्या बन्धवोऽस्येति राजन्यबन्धुः स्वयं दुर्वृत्त इत्यर्थः। अप्राक्षीत्पृष्टवांस्तेषां प्रश्नानां नैकञ्चनैकमपि नाशकं न शक्तवानहं विवक्तुं विशेषेणार्थतो निर्णेतुमित्यर्थः। स होवाच पिता यथा मा मां वत्स त्वं तदाऽऽगतमात्र एवैतान्प्रश्नानवद उक्तवानसि तेषां नैकञ्चनाशकं विवक्तुमिति तथा मां जानीहि. त्वदीयाज्ञानेन लिङ्गेन मम तद्विषयमज्ञानं जानीहीत्यर्थः। कथं, यथाऽहमेषां प्रश्नानामेकञ्चनैकमपि न वेद न जान इति यथा त्वमेवाङ्गैतान्प्रश्नान्न जानीषे तथाऽहमप्येतान्न जान इत्यर्थः। अतो मय्यन्यथाभावो न कर्तव्यः। कुत एतदेवं यतो न जाने यद्यहमिमान्प्रश्नानवेदिष्यं विदितवानस्मि कथं ते तुभ्यं प्रियाय पुत्राय समावर्तन-काले पुरा नावक्ष्यं नोक्तवानस्मीत्युक्त्वा स ह गौतमो गोत्रतो राज्ञो जैवलेरर्धं स्थानमेयाय गतवान्। तस्मै ह गौतमाय प्राप्तायार्हामर्हणां चकार कृतवान्। स च गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले सभागे सभां गते राज्ञ्युदेयाय। भजनं भागः पूजा सेवा सह भागेन वर्तमानो वा सभागः पूज्यमानोऽन्यैः स्वयं गौतम उदेयाय राजान-मुद्गतवान्। तं होवाच गौतमं राजा मानुषस्य भगवन्गौतम मनुष्यसम्बन्धिनो वित्तस्य ग्रामादेर्वरं वरणीयं कामं वृणीथाः प्रार्थयेथाः। स होवाच गौतमस्तवैव तिष्ठतु राजन्मानुषं वित्तम्। यामेव कुमारस्य मम पुत्रस्यान्ते समीपे वाचं पञ्चप्रश्नलक्षणामभाषथा उक्तवानसि तामेव वाचं मे मह्यं ब्रूहि कथयेत्युक्तो गौतमेन राजा स ह कृच्छ्री दुःखी बभूवः। कथं त्विदमिति ॥ ५-६ ॥

नरेन्द्रपुरीयं टिप्पणम्

श्रद्धाहुत्यपेक्षया पञ्चमत्वं द्रष्टव्यम्। यथेत्यज्ञातप्रकरणे। सभाग इति सप्तम्यन्तं पदं मत्वा राजविशेषणं व्याख्यातम्। प्रथमान्तमादाय ब्राह्मणविशेषणं व्याख्याति—भजनमिति ॥ ५-६-७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य तृतीयः खण्डः

आनन्दगिरिटीका

अननुशिष्य त्वामन्वशिषमिति कथमुक्तवानस्मीत्याशङ्क्याऽऽह—यत इति। नैकञ्चनेत्युक्तमेव नञ्पदं नाशक-मिति सम्बन्धं दर्शयितुं पुनरुपात्तम्। अतो मां प्रति तव मिथ्यावादिता सिद्धेति शेषः। पिता स्वकीयमिथ्या-वादित्वशङ्कां परिहरति—स होवाचेति। यथा मा त्वमित्यादिवाक्यं पूरयित्वा व्याख्यायानन्तरवाक्यमाकाङ्क्षा-पूर्वकमुत्थापयति—कथमित्यादिना। तद्व्याचष्टे—यथेति। अज्ञानाविशेषोऽतःशब्दार्थः। अन्यथाभावो ज्ञातेऽपि विषये तवानुक्तिरिति यावत्। त्वदीयमज्ञानं कुतो हेतोर्मया ज्ञातव्यमित्याशङ्कामुद्भाव्यानन्तरवाक्येनोत्तरमाह—कुत इत्यादिना। अतस्तव पात्रभूतस्यानुपदेशान्मदीयमज्ञानं ज्ञातव्यमिति शेषः। अर्हणां योग्यां पूजामित्यर्थः। सभागपदं सप्तम्यन्तं राजविषयं प्रथमान्तं गौतमविषयमिति भेदः। गौतममागतं योगक्षेमार्थिनं बुद्ध्वा राजा प्रसन्नः सन्नुक्तवानित्याह—तं होवाचेति। तर्हि कृतकृत्यस्य तव किमित्यागमनमित्याशङ्क्याऽऽह—यामेवेति। कृच्छ्रीभाव-मभिनयति—कथमिति ॥ ५-६ ॥

**तँ ह चिरं वसेत्याज्ञापयाञ्चकार तँ होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक्त्वत्तः पुरा विद्या ब्राह्मणान्गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥**

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य तृतीयः खण्डः

**[1]असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो**
**धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥ १ ॥**

स ह कृच्छ्रीभूतोऽप्रत्याख्येयं ब्राह्मणं मन्वानो न्यायेन विद्या वक्तव्येति मत्वा तं ह गौतमं चिरं दीर्घकालं वसेत्येवमाज्ञापयाञ्चकाराऽऽज्ञप्तवान्। यत्पूर्वं प्रत्याख्यातवान्राजा विद्यां यच्च पश्चाच्चिरं वसेत्याज्ञप्तवान्, तन्निमित्तं ब्राह्मणं क्षमापयति हेतुवचनोक्त्या—तं होवाच राजा सर्वविद्यो ब्राह्मणोऽपि सन्यथा येन प्रकारेण मा मां हे गौतमावदस्त्वं तामेव विद्यालक्षणां वाचं मे ब्रूहीत्यज्ञानात्तेन त्वं जानीहि। तत्रास्ति वक्तव्यं यथा येन प्रकारेणेयं विद्या प्राक्त्वत्तो ब्राह्मणान्न गच्छति न गतवती, न च ब्राह्मणा अनया विद्ययाऽनुशासितवन्तः, तथैतत्प्रसिद्धं लोके यतस्तस्मादु पुरा पूर्वं सर्वेषु लोकेषु क्षत्रस्यैव क्षत्रजातेरेवानया विद्यया प्रशासनं प्रशास्तृत्वं शिष्याणामभूद्बभूव। क्षत्त्रियपरम्परयैवेयं विद्यैतावन्तं कालमागता। तथाऽप्यहमेतां तुभ्यं वक्ष्यामि त्वत्सम्प्रदानादूर्ध्वं ब्राह्मणान्गमिष्यति। अतो मया यदुक्तं तत्क्षन्तुमर्हसीत्युक्त्वा तस्मै होवाच विद्यां राजा ॥ ७ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य तृतीयः खण्डः

पञ्चम्यामाहुतावाप इत्ययं प्रश्नः प्राथम्येनापाक्रियते। तदपाकरणमन्वितरेषामपाकरणमनुकूलं भवेदिति।

नरेन्द्रपुरीयं टिप्पणम्

व्युत्क्रमेण निराकरणे कारणमाह—तदपाकरणमन्वितरेषां प्रश्नानामपाकरणं सौकर्येण स्यादावृत्त्यादिज्ञानसम्भवादित्यर्थः। अग्निहोत्राहुत्योः कार्यारम्भानुवादेन पञ्चाग्निविद्येह विधीयत इत्यवान्तरप्रकरणस्य तात्पर्यं

आनन्दगिरिटीका

गौतमस्य वचनं [यदि] राज्ञो दुःखीभावकारणं तर्हि प्रत्याख्यायतामित्याशङ्क्याऽऽह—स हेति। किमिति तर्हि चिरं वसेत्युक्तवानित्यत आह—न्यायेनेति। संवत्सरं वसेति यावत्। वक्तव्या विद्येति शेषः। कथं राज्ञो ब्राह्मणं प्रत्याज्ञां कुर्वतो न प्रत्यवायः स्यादित्याशङ्क्याऽऽह—यत्पूर्वमिति। प्रत्याख्यानादिविषयं हेतुवचनम्। न केवलं विद्यावशादेव श्रैष्ठ्यं किन्तु जातितोऽपीत्यपेरर्थः। तर्हि ब्रूहि तां वाचमित्याशङ्क्याऽऽह—तत्रेति। विद्याप्रवचने प्रस्तुते सतीति यावत्। यथेत्यस्यापेक्षितं पूरयति—तथेति। प्रसिद्धमेव स्फोरयति—तस्मादिति। ब्राह्मणानामनया विद्यया प्रशास्तृत्वस्य प्रागभावादिति यावत्। इतिशब्दोपात्तमर्थं कथयति—क्षत्त्रियेति। उक्तप्रत्याख्यानादिकारणमतःशब्दार्थः ॥ ७ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य तृतीयः खण्डः

ननु यथाप्रश्नमेव प्रतिवचनमुचितं पञ्चमं तु प्रश्नं प्राथम्येन प्रतिवदता क्रमो निराकृतस्तत्र किं कारणमत आह—पञ्चम्यामिति। अर्थक्रममनुसृत्य पाठक्रमोऽभिधातव्य इत्यर्थः। ननु वाजसनेयकेऽग्निहोत्रप्रकरणेऽग्निहोत्रा-

---

१. (१) पञ्चाग्निविद्यामधिकृत्य भूयान् विचारः ब्रह्मसूत्रतृतीयाध्यायप्रथमपादे प्रवर्तितः। सर्वोऽप्ययं विचारः जीवस्य संसारे वैराग्यजननार्थः। तत्रादौ "तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः" इति सूत्रेण जीवः भूतसूक्ष्मैः संपरिष्वक्त एव देहान्तरं गच्छति "वेत्थ यथा पञ्चम्यामाहुतौ आपः पुरुषवचसो भवन्तीति प्रश्नः उत्तरं च द्युपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चाग्निषु श्रद्धासोमवृष्ट्यन्नरेतोरूपाः पञ्चाहुतीर्दर्शयित्वा इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति तत्रापः यजमानेन क्रियमाणा या आहुतयः तेषां सूक्ष्मरूपाः यजमानं परिवेष्ट्य गच्छन्ति तेषां अब्बाहुल्यात् आप इति व्यवहारः श्रद्धाशब्दश्च अप्पर एष। (२) द्वितीये—"कृतात्ययेऽनुशयवानि"ति सूत्रेण स्वर्गादवरोहतां तत्र भुक्तातिरिक्तः कर्मशेषोऽस्तीति निर्णीतम्।

अग्निहोत्राहुत्योः कार्यारम्भो यः स उक्तो वाजसनेयके। तं प्रति प्रश्नाः—उत्क्रान्तिराहुत्योर्गतिः प्रतिष्ठा तृप्तिः पुनरावृत्तिर्लोकं प्रत्युत्थायी इति। तेषां चापाकरणमुक्तं तत्रैव—"ते वा एते आहुती हुते उत्क्रामतस्ते अन्तरिक्षमाविशतस्ते अन्तरिक्षमेवाऽऽहवनीयं कुर्वाते वायुं समिधं मरीचीरेव शुक्लामाहुतिं ते अन्तरिक्षं तर्पयतस्ते तत उत्क्रामत इत्याद्येवमेव पूर्ववद्दिवं तर्पयतस्ते तत आवर्तेते। इमामाविश्य तर्पयित्वा पुरुषमाविशत ततः स्त्रियमाविश्य लोकं प्रत्युत्थायी भवति" इति। तत्राग्निहोत्राहुत्योः कार्यारम्भमात्रमेवंप्रकारं भवतीत्युक्तम्। इह तु तं कार्यारम्भमग्निहोत्रापूर्वविपरिणामलक्षणं पञ्चधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाह—असौ वाव लोको गौतमाग्निरित्यादि। इह सायंप्रातरग्निहोत्राहुती हुते पयआदिसाधने श्रद्धापुरःसरे आहवनीयाग्निसमिद्धूमार्चिरङ्गार-

नरेन्द्रपुरीयं टिप्पणम

दर्शयितुं शतपथोक्तं तावदग्निहोत्राहुत्योः कार्यारम्भं सम्वादाय दर्शयति—अग्निहोत्राहुत्योरित्यादि। "न त्वेनयोस्त्वमुत्क्रान्तिं न गतिं न प्रतिष्ठां न तृप्तिं न पुनरावृत्तिं न लोकं प्रत्युत्थायिनमि"ति जनकस्य षट्प्रश्नवाक्यमर्थत उपन्यस्यति—तं कार्यारम्भं प्रतीति। लोकममुं प्रत्युत्थातुं शीलमस्येत्युत्थायी परिणामः कथमाहुत्योर्भवतीत्यर्थः। नन्विहापां पञ्चम्यामाहुतौ पुरुषवचस्त्वं पृष्टम्। तदेव प्रत्युच्यते—नाग्निहोत्राहुत्योरेव कार्यारम्भः प्रतीयते कथं शातपथसंवाद इत्याशङ्क्याह—इह सायंप्रातरिति। भाविते अनुष्ठिते दध्याज्यसम्बन्धित्वादाहुती एव लक्षणयेहाऽप

आनन्दगिरिटीका

हुत्यपूर्वपरिणामं जगदित्युक्तं तदेवेहापि विवक्ष्यत इति चेत्किमनेन पिष्टपेषणन्यायेनेत्याशङ्क्यार्थभेदं वक्तुमग्निहोत्रप्रकरणस्थितमर्थमनुवदति—अग्निहोत्राहुत्योरिति। उक्तप्रकारमेव प्रदर्शयन्प्रथमं याज्ञवल्क्यस्य जनकं प्रति षट्प्रश्नानुत्थापयति—तं प्रतीति। कार्यारम्भस्तच्छब्दार्थः। अग्निहोत्राहुत्यन्नापूर्वपरिणामो जगदिष्यते। तत्राग्निहोत्रे सायं प्रातश्च हुतयोराहुत्योरस्माल्लोकादुत्क्रान्तिः। उत्क्रान्तयोः परलोकं प्रति गतिः। गतयोस्तत्र प्रतिष्ठा। प्रतिष्ठितयोः स्वाश्रये सम्पाद्यमाना तृप्तिः। तृप्तिमापाद्यावस्थितयोः पुनरिमं लोकं प्रत्यावृत्तिः। आवृत्तयोराश्रयः पुमान्कथममुं लोकं प्रत्युत्थानशीलो भवतीति कार्यारम्भमधिकृत्य षट्प्रश्नाः प्रवृत्ता इत्यर्थः। तत्रैव वाजसनेयके याज्ञवल्क्यं प्रति जनकस्य प्रतिवचनं दर्शयति—तेषां चेति। अपूर्वरूपे खल्वाहुती यजमानमुत्क्रामन्तं परिवेष्ट्योत्क्रामतः। ते च धूमादिना यजमानेऽन्तरिक्षमाविशति तदाश्रितत्वात्तदाविशतः। ते पुनरन्तरिक्षस्थयजमानानुकूलतया स्थिते स्वयमन्तरिक्षाधिकरणे तदाहवनीयमिव कुर्वाते। आहुत्यधिकरणस्याऽऽहवनीयत्वात् तत्र वायुं समिधमिव कुरुतः। वायुनाऽन्तरिक्षस्य समिध्यमानत्वात्। शुक्लां शुद्धामाहुतिमिव मरीचीरेवाऽऽदधाते। मरीचीनामन्तरिक्षे व्याप्तत्वात्। ते चान्तरिक्षस्थे तन्निष्ठं यजमानं फलोन्मुखमादधाते। ते पुनरन्तरिक्षादुत्क्रामति यजमाने सहोत्क्रामतः। यजमाने च द्युलोकमाविशति सहाऽऽविशतः। तमाविश्य तमेवाऽऽहवनीयं कुर्वाते आदित्यं समिधमित्याद्यन्तरिक्षवदेवोक्तम्। यथा वाऽऽहुती पूर्वमन्तरिक्षं तर्पयत इत्युक्तं तथैव द्युलोकस्थयजमानं फलदानेन सुखिनमातन्वाते। ते चाऽऽरब्धक्षये ततो द्युलोकाद्यजमाने पृथिवीमाविशत्यब्भूते सहाऽऽवर्तेते। पृथिवीं चाऽऽविश्य व्रीह्यादिना स्वाश्रयं श्लेषयित्वा रेतःसिचं पुरुषमाश्रयद्वारेणाऽऽविशतः। पुरुषाच्च रेतोद्वारा द्वितीयां प्रकृतिमाविश्य गर्भीभूतं कर्मानुष्ठानयोग्यं देहभागिनमापादयतः। ततोऽसौ पारलौकिकं कर्मानुष्ठायान्ते लोकं प्रत्युत्थानशीलो भवति। इति सर्वं जनकेनोक्तमित्यर्थः। तथाऽपि कथमर्थभेदसिद्धिरित्याशङ्क्योक्तमेव संक्षिप्याऽऽह—तत्रेति। वाजसनेयकं सप्तम्यर्थः। प्रकृतश्रुतेरर्थविशेषं दर्शयति—इह त्विति। पञ्चधा द्युपर्जन्यपृथिवीपुरुषयोषित्प्रकारैरिति यावत्। पञ्चाग्निसम्बन्धमवतार्य प्रथमपर्यायस्य तात्पर्यमाह—इहेति। अयं लोको भूलोकस्तस्मिन्नित्यर्थः। आहुत्योरप्समवायित्वसिद्ध्यर्थं विशिनष्टि—पयआदीति। तयोः श्रद्धात्वसिद्ध्यर्थं श्राद्धापुरःसरे इत्युक्तम्। तयोरधिकरणोऽग्नि-

(३) अवरोहतां यथेतमाकाशं आकाशाद्वायुर्भूत्वा इत्यादौ आकाशादिभावः संश्लेपमात्रं न तु तद्भावः अन्यस्य अन्यभावः मुख्यो न भवति यतः। इत्युक्तम्।

(४) तत्रैव प्राग्व्रीह्यादिप्रतिपत्तेः अल्पमल्पं कालं आकाशादिभावेनावस्थानं व्रीह्यादिभावानन्तरं तु "अतो वै खलु दुर्निष्प्रपतरं"—इत्युक्तेः महान् विलम्वो जायते शरीरग्रहणायेत्युक्तम्।

(५) तत्रापि अन्यैः जीवैरधिष्ठिते व्रीह्यादौ एते संश्लेपमात्रं गच्छन्तीत्युक्तम्।

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥**

**इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्थः खण्डः**

विस्फुलिङ्गभाविते कर्त्रादिकारकभाविते चान्तरिक्षक्रमेणोत्क्रम्य द्युलोकं प्रविशन्त्यौ सूक्ष्मभूते अप्समवायित्वादप्शब्दवाच्ये श्रद्धाहेतुत्वाच्च श्रद्धाशब्दवाच्ये तयोरधिकरणोऽग्निरन्यच्च तत्सम्बन्धं समिदादीत्युच्यते। या चासावग्न्यादिभावनाऽऽहुत्योः साऽपि तथैव निर्दिश्यते। असौ वाव लोकोऽग्निर्हे गौतम यथाऽग्निहोत्राधिकरणमाहवनीय इह। तस्याग्नेर्द्युलोकाख्यस्याऽऽदित्य एव समित्तेन हीद्धोऽसौ लोको दीप्यते। अतः समिन्धनात्समिदादित्यः। रश्मयो धूमस्तदुत्थानात्, समिधो हि धूम उत्तिष्ठति। अहरर्चिः प्रकाशसामान्यात्, आदित्यकार्यत्वाच्च चन्द्रमा अङ्गाराः। अहःप्रशमेऽभिव्यक्तेः। अर्चिषा हि प्रशमेऽङ्गारा अभिव्यज्यन्ते। नक्षत्राणि विस्फुलिङ्गाश्चन्द्रमसोऽवयवा इव विप्रकीर्णत्वसामान्यात् ॥ १ ॥

तस्मिन्नेतस्मिन्यथोक्तलक्षणेऽग्नौ देवा यजमानप्राणा अग्न्यादिरूपा अधिदैवतम्। श्रद्धामग्निहोत्राहुतिपरिणामावस्थारूपाः सूक्ष्मा आपः श्रद्धाभाविताः श्रद्धा उच्यन्ते। "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यपां होम्यतया प्रश्ने श्रुतत्वात्। "श्रद्धा वा आपः श्रद्धामेवाऽऽरभ्य प्रणीय प्रचरति" इति च विज्ञायते। तां श्रद्धारूपां जुह्वति। तस्या आहुतेः सोमो राजाऽपां श्रद्धाशब्दवाच्यानां द्युलोकाग्नौ हुतानां परिणामः सोमो राजा सम्भवति। यथर्ग्वेदादिपुष्परसा ऋगादिमधुकरोपनीतास्त आदित्ये यशआदिकार्यं रोहितादिरूपलक्षणमारभन्त इत्युक्तं तथेमा अग्निहोत्राहुतिसमवायिन्यः सूक्ष्माः श्रद्धाशब्दवाच्या आपो द्युलोकमनुप्रविश्य चान्द्रं कार्यमारभन्ते फलरूपमग्निहोत्राहुत्योः। यजमानाश्च तत्कर्तार आहुतिमया आहुतिभावनाभाविता आहुतिरूपेण कर्मणाऽऽकृष्टाः श्रद्धाप्समवायिनो

नरेन्द्रपुरीयं टिप्पणम्

उच्यन्ते नान्य इति संवादो घटते अर्थसादृश्यप्रत्यभिज्ञानादित्यर्थः। न केवलाहुती एव निर्दिश्येते या चाग्न्यादिकल्पना प्रसिद्धाग्निहोत्राहुत्योः साप्यत्र निर्दिश्यते ततोऽपि कार्यारम्भोऽनुवादः प्रतीयत इत्यर्थः ॥ १ ॥

श्रद्धाशब्दस्याप्यप्सु लक्षणया प्रयोगे कारणमाह। अग्निहोत्राहुत्योः परिणाम एवावस्था तद्रूपा। श्रुत्यन्तरे श्रद्धाशब्दस्याप्यप्सु लक्षणया प्रयोगो दृष्ट इत्याह—श्रद्धा इति। अपः प्रणीय कर्म निर्वर्तयतीत्यर्थः। ननु सोमो ब्राह्मणानां राजा प्रागेव सिद्धः। कथमिदानीं भवतीत्युच्यते तन्मण्डलाश्रयकार्यजननादुपचारत इत्याह—यथेति। अग्निहोत्राहुत्योः फलं चान्द्रकार्यमित्यनुपपन्नं भोक्तृगमनाप्रतीतौ फलं चानुपपत्तेरिति प्रासङ्गिकमाशङ्क्याह—

आनन्दगिरिटीका

रित्यादिकल्पनोपयोगित्वेन विशेषणान्तरमादत्ते—आहवनीयेति। तयोः स्वातन्त्र्यं परिहरति—कर्त्रादीति। अधिकरणशब्दो भावप्रधानो धर्मिपरः। काल्पनिको द्युलोकाख्योऽग्निस्तत्सम्बन्धमिति तच्छब्दोऽग्निविषयः। अन्यच्चेत्युक्तं स्पष्टयति—समिदादीति। आदिशब्दो धूमार्चिरङ्गारादिविषयः। पर्यायतात्पर्यमुक्त्वाक्षराणि व्याकरोति—असावित्यादिना। इहेत्येतल्लोकनिर्देशः पूर्वेण सम्बध्यते। तदुत्थानादित्यत्र तच्छब्देनाऽऽदित्यो गृहीतः ॥ १ ॥

अध्यात्माधिदैवविभागेन देवान्विशदयति—यजमानेति। प्रत्ययविशेषत्वेन श्रद्धाया होम्यत्वानुपपत्तिरित्याशङ्क्य श्रद्धां व्याकरोति—अग्निहोत्रेति। किञ्च प्रश्नप्रतिवचनयोरेकार्थत्वात्प्रश्ने चापां होम्यतया श्रुतत्वात्प्रतिवचनेऽपि ताः श्रद्धाशब्दिता होम्यतया विवक्षिता इत्याह—पञ्चम्यामिति। अप्सु श्रद्धाशब्दस्य वृद्धव्यवहारप्रयोगाभावान्नैवमित्याशङ्क्याऽऽह—श्रद्धेति। कथमापः श्रद्धाशब्देन प्रसिद्धवदुच्यन्ते तत्राऽऽह—श्रद्धामिति। श्रद्धापूर्वकहोममुद्दिश्य पयःसोमाज्यादिसाधनं संपाद्य जुहोतीति तैत्तिरीयकाः पठन्ति। तथा चाप्सु श्रद्धाशब्दः सम्भवतीत्यर्थः। उक्तमर्थं दृष्टान्तेन स्पष्टयति—यथेत्यादिना। उक्तं मधुविद्यायामिति शेषः। चान्द्रं कार्यं चन्द्रसमीपस्थं तत्सदृशं शरीरमित्यर्थः। तथाऽपि यजमानानां कथं फलवत्त्वमत आह—यजमानाश्चेति। आहुती तच्छब्दवाच्ये प्राधान्यं मयडर्थः। तदेव स्पष्टयति—आहुतिभावनाभाविता इति। तत्संस्तुतास्तदनुसारिणस्तदाश्रया इत्यर्थः। तद्भावितत्वफलमाह - आहुतिरूपेणेति। तेनाऽऽकृष्टत्वं वशीकृतत्वम्। आहुतिभाविता इत्युक्तं स्पष्टयति—श्रद्धेति। तत्पूर्वकं पयःसोमादिसाध्यं यत्कर्म तदाश्रया इत्यर्थः। सोमभूतास्तत्समीपस्थं शरीरं प्राप्य तत्स्वरूपा इत्यर्थः। कथं

**'पर्जन्यो वाव गौतमाग्निस्तस्य वायुरेव समिदभ्रं**
**धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥**

द्युलोकमनुप्रविश्य सोमभूता भवन्ति । तदर्थं हि तैरग्निहोत्रं हुतम् । अत्र त्वाहुतिपरिणाम एव पञ्चाग्निसम्बन्धक्रमेण प्राधान्येन विवक्षित उपासनार्थं न यजमानानां गतिः । तां त्वविदुषां धूमादिक्रमेणोत्तरत्र वक्ष्यति विदुषां चोत्तरां विद्याकृताम् ॥ २ ॥

इति च्छान्दोग्योपनिच्छाङ्करभाष्ये पञ्चमाध्यायस्य चतुर्थः खण्डः

द्वितीयहोमपर्यायार्थमाह—पर्जन्यो वाव पर्जन्य एव गौतमाग्निः पर्जन्यो नाम वृष्ट्युपकरणाभिमानी देवताविशेषः । तस्य वायुरेव समित् । वायुना हि पर्जन्योऽग्निः समिध्यते । पुरोवातादिप्राबल्ये वृष्टिदर्शनात् । अभ्रं

नरेन्द्रपुरीयं टिप्पणम्

यजमानाश्चेति । यजमाना अपि कर्माक्षिप्ता गच्छन्ति चेत् किमिति तद्गमनमात्रं नोक्तमित्याशङ्क्याह—अत्र त्विति ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य चतुर्थः खण्डः

आनन्दगिरिटीका

सोमसारूप्यं कर्मिणां फलमित्याशङ्क्याऽऽह—तदर्थमिति । यजमानानां सोमभावो गतिमन्तरेण न सिध्यति । तथा च वक्तव्या गतिरित्याशङ्क्याऽऽह—अत्रेति । आहवनीयोऽग्निः सप्तम्यर्थः । सा तर्हि कुत्रोच्यते न हि तदुक्तिमन्तरेण यथोक्तं फलं सिध्यत्यत आह—तां त्विति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य चतुर्थः खण्डः

---

१. पञ्चाग्निविद्यासम्बन्धिनामधिकरणानां कथं वैराग्यहेतुत्वमिति परिमलकारैर्विवेचितं—तद्यथा—"तदन्तरप्रतिपत्तौ" (ब्र० सू० ३-१-१) इत्यधिकरणे सकलसंसारदुःखायतनस्य भूतेन्द्रियसङ्घातरूपदेहसम्बन्धस्य आब्रह्मसाक्षात्कारमिह परत्र च गतागतयोरनुवृत्तिः सूचिता । तत्रैव च "भाक्तं वा" इति सूत्रभागेन देवलोकगतानां देवैर्भक्ष्यत्वरूपं भृत्यभावेन देवभोग्यत्वमुक्त्वा स्वर्गानुभवस्य तुच्छत्वं सातिशयत्वं च सूचितम् । द्वितीयाधिकरणे देहस्यापि कारणतया सर्वक्लेशनिदानस्य कर्मबन्धस्य ब्रह्मज्ञानपर्यन्तमनुवृत्तिरुक्ता । "कृतात्यये" इत्यनेन कर्मफलस्य स्वर्गादेः क्षयिष्णुत्वं सूचितम् । तदपि स्वर्गादि यावज्जीवं प्रातरादिरात्रिपर्यन्तं स्मृतिविहितस्नानसन्ध्यादिविहिताचरणनिषिद्धवर्जनादिसापेक्षं दुष्करमिति "चरणादिति चेत्" इति सूत्रेणोक्तम् । तृतीये अनिष्टादिकारिणां शुभमार्गेण गतिर्वा ग्रामं गच्छन् वृक्षमूलोपसर्पणमिव स्वर्गदर्शनं वा नास्तीत्युक्तम् । चतुर्थे स्वर्गादवरोहतामाकाशादिभावश्रवणात् तदभिमानिदेवतानामिवाकाशादिशरीरकत्वप्रयुक्तः कियानपि दिव्यभोगोऽस्तीति शङ्का न कार्या । आकाशादिभावस्य तत्संश्लेषमात्रत्वादित्युक्तम् । पञ्चमे स्वर्गादवतरतां व्रीह्यादिषु सुखभोगरहितमवस्थानमात्रमित्यपि हेयत्वं सूचितम् । षष्ठे व्रीह्यादिसंश्लेषो यदि तदभिमानिजीवरूपेण चेत् दुःखं तेषां हवनपर्यन्तमेव भवेत् इत्याश्वासनिवृत्तिरुक्ता । स च संश्लेषो व्रीहीणां शोषणकुसूलावस्थापनावहननफलीकरणपाकभक्षणादिष्वनुवर्तमानः पितृवीर्यात्मना परिणामपर्यन्त इति रेतस्सिग्योगसूत्रेण प्रत्यपादि । कथञ्चित् पुरुषवीर्यानुप्रवेशेऽपि योषितमप्राप्य तेषां न शरीरलाभः । यदि वीर्यं ब्रह्मचारिणां वन्ध्यास्त्रीणां वा शरीरमनुप्रविशेत् तदा न देहप्राप्तिः । तद्वीर्यपरिणामान्तरक्रमेण पुनरपि युवपुरुषभक्षणविषयत्वं प्राप्य तद्वीर्यसंसृष्टानां ऋतुमतीनां योषितां गर्भकोशप्रवेशानन्तरमेव क्वचिज्जन्मनि भोगाश्रयस्य भोगमोक्षसाधनानुष्ठानोपयोगिनः शरीरस्य लाभ इति योनेः शरीरमिति चरमसूत्रेण प्रदर्शितम् ।

तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वति तस्या आहुतेर्वर्षँ सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य पञ्चमः खण्डः

पृथिवी वाव गौतमाग्निस्तस्याः संवत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नँ सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य षष्ठः खण्डः

पुरुषो वाव गौतमाग्निस्तस्य वागेव समित्प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य सप्तमः खण्डः

धूमो धूमकार्यत्वाद्धूमवच्च लक्ष्यमाणत्वात्। विद्युदर्चिः। प्रकाशसामान्यात्। अशनिरङ्गाराः। काठिन्याद्विद्युत्सम्बन्धाद्वा। ह्रादुनयो विस्फुलिङ्गाः। ह्रादुनयो गर्जितशब्दाः। मेघानां विप्रकीर्णत्वसमान्यात् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत्सोमं राजानं जुह्वति। तस्या आहुतेर्वर्षं सम्भवति। श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य पञ्चमः खण्डः

पृथिवी वाव गौतमाग्निरित्यादि पूर्ववत्। तस्याः पृथिव्याख्यस्याग्नेः संवत्सर एव समित्। संवत्सरेण हि कालेन समिद्धा पृथिवी व्रीह्यादिनिष्पत्तये भवति। आकाशो धूमः, पृथिव्या इवोत्थित आकाशो दृश्यते। यथाऽग्नेर्धूमः। रात्रिरर्चिः पृथिव्या ह्यप्रकाशात्मिकाया अनुरूपा रात्रिः। तमोरूपत्वात्। अग्नेरिवानुरूपमर्चिः। दिशोऽङ्गारा उपशान्तत्वसामान्यात्। अवान्तरदिशो विस्फुलिङ्गाः क्षुद्रत्वसामान्यात् ॥ १ ॥

तस्मिन्नित्यादि समानम्। तस्या आहुतेरन्नं व्रीहियवादि सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य षष्ठः खण्डः

पुरुषो वाव गौतमाग्निः। तस्य वागेव समित्। वाचा हि मुखेन समिध्यते पुरुषो न मूकः। प्राणो धूमो धूम इव मुखान्निर्गमनात्। जिह्वार्चिर्लोहितत्वात्। चक्षुरङ्गारा भास आश्रयत्वात्। श्रोत्रं विस्फुलिङ्गाः। विप्रकीर्णत्वसाम्यात् ॥ १ ॥

समानमन्यत्। अन्नं जुह्वति व्रीह्यादिसंस्कृतम्। तस्या आहुते रेतः सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य सप्तमः खण्डः

आनन्दगिरिटीका

द्वितीयहोमसम्बन्धी द्वितीयः पर्यायस्तस्यार्थं निर्ज्ञातुं तमेव पर्यायमादत्ते श्रुतिरित्यर्थः। पुरोवातादीत्यादिशब्देन वर्षहेतुर्वायुभेदो गृह्यते। उक्तं चाभ्राणां धूमकार्यत्वं पौराणिकैः—

"यज्ञधूमोद्भवं त्वभ्रं द्विजानां च हितं सदा। दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतम् ॥
मृतधूमोद्भवं त्वभ्रमशुभाय भविष्यति। अभिचाराग्निधूमोत्थं भूतनाशाय वै द्विजाः" ॥ इति ॥ १ ॥

अध्यात्मं यजमानस्य प्राणा, इन्द्रादयस्त्वधिदैवतं देवा इत्याह—पूर्ववदिति। सोमं राजानमित्यादि व्याचष्टे—श्रद्धाख्या इति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य पञ्चमषष्ठसप्तमखण्डाः

योषा वाव गौतमाग्निस्तस्या उपस्थ एव समिद्यदुपमन्त्रयते स
धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः ॥ १ ॥
तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः सम्भवति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्याष्टमः खण्डः

योषा वाव गौतमाग्निः । तस्या उपस्थ एव समित् । तेन हि सा पुत्राद्युत्पादनाय समिध्यते । यदुपमन्त्रयते स धूमः । स्त्रीसम्भवादुपमन्त्रणस्य । योनिरर्चिर्लोहितत्वात् । यदन्तः करोति तेऽङ्गारा अग्निसम्बन्धात् । अभिनन्दाः सुखलवा विस्फुलिङ्गाः क्षुद्रत्वात् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति । तस्या आहुतेर्गर्भः सम्भवतीति । एवं श्रद्धासोमवर्षान्नरेतोहवनपर्यायक्रमेणाऽऽप एव गर्भीभूतास्ताः । तत्रापामाहुतिसमवायित्वात्प्राधान्यविवक्षाऽऽपः पञ्चम्यामाहुतौ पुरुषवचसो भवन्तीति । न त्वाप एव केवलाः सोमादिकार्यमारभन्ते । न चाऽऽपोऽत्रिवृत्कृताः सन्तीति । त्रिवृत्कृतत्वेऽपि विशेषसंज्ञालाभो दृष्टः पृथिवीयमिमा आपोऽयमग्निरित्यन्यतमबाहुल्यनिमित्तः । तस्मात्समुदितान्येव भूतान्यब्बाहुल्यात्कर्मसमवायीनि सोमादिकार्यारम्भकाण्याप इत्युच्यन्ते । दृश्यते च द्रवबाहुल्यं सोमवृष्ट्यन्नरेतोदेहेषु । बहुद्रवं च शरीरं यद्यपि पार्थिवम् । तत्र पञ्चम्यामाहुतौ हुतायां रेतोरूपा आपो गर्भीभूताः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्याष्टमः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

गर्भस्य पञ्चात्मकत्वात् कथमाप एवोच्यन्ते तत्राह—तत्रापामिति । भूतान्तरगुणस्यापि पचनपाकादेः सोमादिकार्येषूपलम्भान्न केवला आप आरभन्त इत्युक्तम् । किञ्चास्यामवस्थायां केवला आप एव न सन्ति "तासां त्रिवृतं त्रिवृतमेकैकामकरो"दिति श्रुतेरित्याह—न चेति । सर्वस्य त्र्यात्मकत्वे विशेषव्यपदेशो न स्यादित्यपि न वाच्यमित्याह—त्रिवृत्कृतास्वपीति ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्याष्टमः खण्डः

### आनन्दगिरिटीका

तस्या आहुतेर्गर्भः सम्भवतीत्युक्तं व्यक्तीकरोति—एवमिति । यथोक्तया रीत्या श्रद्धादीनां रेतोन्तानां यानि द्युलोकादिषु योषिदन्तेष्वग्निषु हवनानि तेषामेकैकस्मिन्पर्याये यः क्रमो व्याख्यातस्तेनेति यावत् । कथं पुनरापो गर्भीभवन्ति भूतान्तराणामपि तुल्यो गर्भीभावस्तस्य पाञ्चभौतिकत्वादत आह—तत्रेति । भूतानां मध्ये । किमित्यपां प्राधान्यविवक्षयैष निर्देशस्तासामेव केवलानां कार्यारम्भकत्वविवक्षा किं न स्यात्तत्राऽऽह—न त्विति । भूतान्तरासहकृतानां केवलानामपामारम्भकत्वे यदारब्धं कार्यं न तद्भोगायतनं तस्य जलबुद्बुदवदत्यन्तचञ्चलत्वादित्यर्थः । केवलानामप्त्वमुपेत्योक्तमिदानीं तदेव नास्तीत्याह—न चेति । इतिशब्दस्तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति श्रुतेरिति हेत्वर्थः । सर्वस्य त्रिवृत्कृतत्वे कथं दृष्टो विशेषव्यपदेशो युज्येतेत्याशङ्क्याऽऽह—त्रिवृत्कृतत्वेऽपीति । अपां प्राधान्यविवक्षया प्रश्नप्रतिवचनयोरप्शब्द इत्युक्तमुपसंहरति—तस्मादिति । केवलानामपामसत्त्वादिति यावत् । कथमारम्भकेषु भूतेष्वपां बाहुल्यमवगतमित्याशङ्क्य कार्यद्वारा तदधिगतिरित्याह—दृश्यते चेति । सोमादीनामब्बाहुल्येऽपि कथं पार्थिवशरीरस्य तद्बाहुल्यमित्याशङ्क्याऽऽह—बहुद्रवं चेति । पञ्चमप्रश्ननिर्णयमुपसंहर्तुं पातनिकां करोति—तत्रेति । योषाग्नाविति यावत् । गर्भीभूताः पुरुषवचसो भवन्तीति सम्बन्धः ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्याष्टमः खण्डः

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाऽथ जायते ॥ १ ॥**

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥२॥**

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य नवमः खण्डः

इति त्वेवं तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति व्याख्यात एकः प्रश्नः। यत्तु द्युलोकादिमां प्रत्यावृत्तयोराहुत्योः पृथिवीं पुरुषं स्त्रियं क्रमेणाऽऽविश्य लोकं प्रत्युत्थायी भवतीति वाजसनेयक उक्तं तत्प्रासङ्गिकमिहोच्यते। इह च प्रथमे प्रश्न उक्तं वेत्थ यदितोऽधि प्रजाः प्रयन्तीति। तस्य चायमुपक्रमः। स गर्भोऽपां पञ्चमः परिणामविशेष आहुतिकर्मसमवायिनीनां श्रद्धाशब्दवाच्यानामुल्बावृत उल्बेन जरायुणाऽऽवृतो वेष्टितो दश वा नव वा मासानन्तर्मातुः कुक्षौ शयित्वा यावद्वा यावता कालेन न्यूनेनातिरिक्तेन वाऽथानन्तरं जायते।

उल्बावृत इत्यादि वैराग्यहेतोरिदमुच्यते। कष्टं हि मातुः कुक्षौ मूत्रपुरीषवातपित्तश्लेष्मादिपूर्णे तदनुलिप्तस्य गर्भस्योल्बाशुचिपटावृतस्य लोहितरेतोऽशुचिबीजस्य मातुरशितपीतरसानुप्रवेशेन विवर्धमानस्य निरुद्धशक्तिबलवीर्यतेजःप्रज्ञाचेष्टस्य शयनम्। ततो योनिद्वारेण पीड्यमानस्य कष्टतरा निःसृतिर्जन्मेति वैराग्यं ग्राहयति। मुहूर्तमप्यसह्यं दश वा नव वा मासानतिदीर्घकालमन्तः शयित्वेति च ॥ १ ॥

स एवं जातो यावदायुषं पुनः पुनर्घटीयन्त्रवद्गमनागमनाय कर्म कुर्वन्कुलालचक्रवद्वा तिर्यग्भ्रमणाय

### नरेन्द्रपुरीयं टिप्पणम्

उत्तरवाक्यस्य तात्पर्यमाह—यत्तु द्युलोकाविति। गर्भीभावमात्रेणापां पुरुषवचस्त्वस्य निराकृतत्वादुल्बावृतो जायत इति प्रासङ्गिकमुच्यत इत्यर्थः। तात्पर्यान्तरमाह—इह चेति। प्रजानामूर्ध्वगमनमुत्तरत्र निरूपणीयम्; तादर्थ्येन प्रजोत्पत्तिरुच्यत इत्यर्थः। शक्तिरन्तःकरणसामर्थ्यं, बलं शरीरसामर्थ्यं, वीर्यमिन्द्रियसामर्थ्यं, तेजः प्रागल्भ्यं, सङ्घातसामर्थ्यं, प्रज्ञा चेतना, जीवधर्मः चेष्टा प्राणधर्मः एते सर्वे निरुद्धा यस्य तस्येति विग्रहः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य नवमः खण्डः

### आनन्दगिरिटीका

उक्तार्थे वाक्यं योजयति—इति त्विति। अपां गर्भीभावोक्तिमात्रेण पुरुषवचस्त्वस्य निर्णीतत्वादलमुत्तरग्रन्थेनेत्याशङ्क्य तस्य तात्पर्यमाह—यत्त्विति। आहुत्योः सम्बन्धीति शेषः। प्रासङ्गिकं गर्भीभावोक्तिप्रसङ्गादागतमिति यावत्। इहेति प्रकृतश्रुत्युक्तिः। प्रासङ्गिकीं सङ्गतिं त्यक्त्वा साक्षादेव पूर्वोत्तरग्रन्थयोरस्ति सङ्गतिरिति तात्पर्यान्तरमाह—इह चेति। प्रजानामूर्ध्वगमनमुत्तरत्र निरूपयिष्यते। तादर्थ्येन तासामुत्पत्तिरादावुच्यत इत्यर्थः। द्विधा सङ्गतिमुक्त्वा वाक्याक्षराणि योजयति—स गर्भ इति। सोमवृष्ट्यन्नरेतांस्यपेक्ष्य पञ्चमत्वं गर्भाख्यस्य परिणामस्य द्रष्टव्यम्। अपां प्रकृतत्वद्योतनार्थमाहुतीत्यादिविशेषणद्वयम्। अथवा पूर्वोक्तात्कालान्न्यू[ने]नाधिकेन वा कालेन यावता जन्तुः समग्राङ्गो जायते तावता कालेन कुक्षौ शयित्वेति संबन्धः। अनन्तरं योनितो निर्गमनकारणीभूतकर्माभिव्यक्तेरिति शेषः। उल्बावृतत्वं कुक्षौ चिरं शयनं योनितो निःसरणमित्येतदशेषमतिप्रसिद्धं किमिति श्रुत्या व्यपदिश्यते तत्राऽऽह—उल्बावृत इत्यादीति। वैराग्यार्थत्वमस्य स्फुटयति—कष्टं हीति। श्लेष्मादीत्यादिशब्देनासृक्पूयस्नायुमज्जादीनि गृह्यन्ते। तदनुलिप्तस्येति तच्छब्दो मूत्रपुरीषादिविषयः। शक्तिर्बुद्धिसामर्थ्यम्। बलं देहसामर्थ्यम्। वीर्यमिन्द्रियसामर्थ्यम्। तेजः शरीरगता कान्तिः। प्रज्ञा चेतना जीवधर्मः। चेष्टा प्राणधर्मः। ता निरुद्धा यस्य तस्येति विग्रहः। मातुरुदरे शयानस्य कष्टत्वेऽपि तदुदराद्योनिद्वारा निःसरणं सुखकरमिति चेन्नेत्याह—तत इति। तद्ग्राहकत्वप्रकारमेवाभिनयति—मुहूर्तमपीति। यन्मातुरन्तःशयनं मुहूर्तमपि दुःसहं तत्कथं दीर्घकालं शयितुं शक्यम्। कथं च दश वा नव वा मासानन्तः शयित्वा पुनर्योनिद्वारा दुष्करं निःसरणं दुःसह्यं स्यादिति वैराग्यं ग्राहयति श्रुतिरित्यर्थः ॥ १ ॥

जातस्य पुनरनर्थो नास्तीत्याशङ्क्याऽऽह—स एवमिति। यावदायुषमित्येतद्व्याचष्टे—पुनरिति। घटी-

**तद्य इत्थं विदुः। ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासाँ स्तान्॥ १॥**

यावत्कर्मणोपात्तमायुस्तावज्जीवति। तमेनं क्षीणायुषं प्रेतं मृतं दिष्टं कर्मणा निर्दिष्टं परलोकं प्रति यदि चेज्जीवन्वैदिके कर्मणि ज्ञाने वाऽधिकृतस्तमेनं मृतमितोऽस्माद्ग्रामादग्नयेऽग्न्यर्थमृत्विजो हरन्ति पुत्रा वाऽन्त्यकर्मणे। यत एवेत आगतोऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण, यतश्च पञ्चभ्योऽग्निभ्यः संभूत उत्पन्नो भवति तस्मा एवाग्नये हरन्ति स्वामेव योनिमग्निमापादयन्तीत्यर्थः॥ २॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य नवमः खण्डः

वेत्थ यदितोऽधि प्रजाः प्रयन्तीत्ययं प्रश्नः प्रत्युपस्थितोऽपाकर्तव्यतया। तत्तत्र लोके प्रत्युत्थितानामधिकृतानां गृहमेधिनां य इत्थमेवं यथोक्तं पञ्चाग्निदर्शनं द्युलोकाद्यग्निभ्यो वयं क्रमेण जाता अग्निस्वरूपाः पञ्चाग्न्यात्मान इत्येवं विदुर्जानीयुः। कथमवगम्यत इत्थं विदुरिति गृहस्था एवोच्यन्ते नान्य इति? गृहस्थानां ये त्वनित्थंविदः केवलेष्टापूर्तदत्तपरास्ते धूमादिना चन्द्रं गच्छन्तीति वक्ष्यति। ये चारण्योपलक्षिता वैखानसाः परिव्राजकाश्च श्रद्धातप इत्युपासते तेषां चेत्थंविद्भिः सहार्चिरादिना गमनं वक्ष्यति पारिशेष्यादग्निहोत्राहुतिसम्बन्धाच्च गृहस्था एव गृह्यन्त इत्थं विदुरिति। ननु ब्रह्मचारिणोऽप्यगृहीता ग्रामश्रुत्याऽरण्यश्रुत्या चानुपलक्षिता विद्यन्ते कथं पारिशेष्यसिद्धिः? नैष दोषः।

नरेन्द्रपुरीयं टिप्पणम्

पारिशेष्यात् पञ्चाग्निविद्याया गृहस्थाधिकारित्वमाह—**गृहस्थानां ये त्वित्यादिना**। ग्रामः सपत्नीकवासः पत्नीसम्बन्धाभावान्न ग्रामश्रुत्या गृहीता ब्रह्मचारिणः गुरुकुलवासित्वात् नारण्यश्रुत्याप्युपलक्षिताः। ततस्ते कस्मादित्थंविदो न गृह्यन्त इत्युक्ते तेषामखण्डितब्रह्मचर्येणैवार्चिरादिगतिलाभान्न पञ्चाग्निवित्त्वेन प्रयोजनमित्याह—**नैष दोष इति**। तथा वैष्णवम्। "अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम्। स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनाम्॥ स्मृतं तेषां तु यत्स्थानं स्मृतं तद्वै वनौकसाम्।" अर्यम्ण आदित्यस्योत्तरेणायनेनोपलक्षितः पन्थाः। इत्थंवित्त्वस्य गृहस्थान् प्रत्यर्थवत्त्वं विभज्य कथयति—**ये गृहस्था इति**। न केवलं पञ्चाग्निवित्त्वं गृहस्थानां सगुणब्रह्मवित्त्वञ्च तेषां सम्भवतीत्यत्र प्रमाणमाह—**अथ यदुचेति**। शव्यकर्माकरणेऽप्यर्चिरादिप्राप्त्यभिधानं गृहस्थानामधिकारद्योतकं परिव्राजकादिष्वन्त्येष्ट्यसम्भवेन विद्यास्तुतेरप्यसम्भवादित्यर्थः। आश्रमाणां सर्वेषां विहितत्वेन साम्यावष्टम्भेन शङ्कते—**नन्विति**। अग्निहोत्रादिवैदिककर्मबाहुल्ये च सत्यगमनमयुक्तं कर्मभूयस्त्वात् फलभूयस्त्वमिति न्याय-

आनन्दगिरिटीका

यन्त्रवदूर्ध्वगमनार्थं वा निषिद्धं कर्म पौनःपुन्येनाऽऽचरन्यावत्कर्मणाऽर्जितमायुस्तावदस्मिन्देहे जीवति ततो म्रियते। तथा च जातस्य मृत्युर्ध्रौव्यान्नास्ति सम्यग्ज्ञानं विना स्वस्तिप्राप्तिरित्यर्थः। अस्तु तर्हि मृतस्य कृतकृत्यतेत्याशङ्क्याऽऽह—**तमेतमिति**। सर्वस्य तर्हि मृतस्य परलोकित्वं स्यादिति चेन्नेत्याह—**यदीति**। तदा परलोकं प्रति कर्मणा निर्दिष्टमिति पूर्वेण सम्बन्धः। युक्तं च तन्मृतस्याग्न्यर्थं नयनमित्याह—**यत इति**॥ २॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य नवमः खण्डः

स उल्बावृत इत्यादिनोक्तमनुवदति—**वेत्थेति**। प्रत्युपस्थितः प्रजोत्पत्तिप्रदर्शनेन प्रसक्त इति यावत्। तद्य इत्थं विदुरित्येतद्व्याचष्टे—**तत्तत्रेत्यादिना**। सप्तम्यर्थमेव स्फोरयति—**लोकमिति**। निर्धारणार्था षष्ठी। वेदनप्रकारमनुवदति—**द्युलोकादीति**। तेऽर्चिषमभिसम्भवन्तीत्युत्तरत्र सम्बन्धः। साधारणोक्तेर्विशेषे सङ्कोचो हेतुं विना न सिध्यतीति शङ्कते—**कथमिति**। पारिशेष्यं सङ्कोचमिति परिहरति—**गृहस्थानामिति**। षष्ठी निर्धारणे। अतश्च केवलकर्मिणो गृहस्था न विदुरिति ग्रहणमर्हन्तीति शेषः। परिव्राजका वानप्रस्थाश्च गृह्यन्तामिति चेन्नेत्याह—**ये चेति**। केषां तर्हीह ग्रहणमत आह—**पारिशेष्यादिति**। गृहस्थ एव हेत्वन्तरमाह—**अग्निहोत्रेति**। तदाहुत्यपूर्वपरिणामात्मकं जगदत्र पञ्चधा प्रविभज्याग्नित्वेन दर्शनमुत्तरमार्गप्राप्तिसाधनं चोद्यते। अतो विद्यायास्तत्सम्बन्धाद्गृहस्थानामपि तत्सम्बन्धस्य प्राप्तत्वात्तेषामेवेह ग्रहणमुचितमित्यर्थः।

पारिशेष्यमाक्षिपति—**नन्विति**। ग्रामः सपत्नीको वासः। न च ब्रह्मचारिणां पत्नीसम्बन्धः। तन्न ग्रामश्रुत्या

पुराणस्मृतिप्रामाण्यादूर्ध्वरेतसां नैष्ठिकब्रह्मचारिणामुत्तरेणार्यम्णः पन्थाः प्रसिद्धः। अतस्तेऽप्यरण्यवासिभिः सह गमिष्यन्ति। उपकुर्वाणकास्तु स्वाध्यायग्रहणार्था इति न विशेषनिर्देशार्हाः।

ननूर्ध्वरेतस्त्वं चेदुत्तरमार्गप्रतिपत्तिकारणं पुराणस्मृतिप्रामाण्यादिष्यत इत्थंवित्त्वमनर्थकं प्राप्तम्। न। गृहस्थान्प्रत्यर्थवत्त्वात्। ये गृहस्था अनित्थंविदस्तेषां स्वभावतो दक्षिणो धूमादिः पन्थाः प्रसिद्धस्तेषां य इत्थं विदुः सगुणं वाऽन्यद्वब्रह्म विदुः। "अथ यदु चैवास्मिञ्शव्यं कुर्वन्ति यदि नार्चिषमेव" इति लिङ्गाद्युत्तरेण ते गच्छन्ति। ननूर्ध्वरेतसां गृहस्थानां च समान आश्रमित्वे ऊर्ध्वरेतसामेवोत्तरेण पथा गमनं न गृहस्थानामिति न युक्तमग्निहोत्रादिवैदिककर्मबाहुल्ये च सति। नैष दोषः। अपूता हि ते। शत्रुमित्रसंयोगनिमित्तौ हि तेषां रागद्वेषौ। तथा धर्माधर्मौ हिंसानुग्रहनिमित्तौ। हिंसानृतमायाऽब्रह्मचर्यादि च बह्वशुद्धिकारणमपरिहार्यं तेषाम्। अतोऽपूताः। अपूतत्वान्नोत्तरेण पथा गमनम्। हिंसानृतमायाऽब्रह्मचर्यादिपरिहाराच्च शुद्धात्मानो ह्येतरे शत्रुमित्ररागद्वेषादिपरिहाराच्च विरजसस्तेषां युक्त उत्तरः पन्थाः। तथाच पौराणिकाः—

"ये प्रजामीषिरेऽधीरास्ते श्मशानानि भेजिरे। ये प्रजां नेषिरे धीरास्तेऽमृतत्वं हि भेजिरे"॥ इत्याहुः।

इत्थंविदां गृहस्थानामरण्यवासिनां च समानमार्गत्वेऽमृतत्वफले च सत्यरण्यवासिनां विद्यानर्थक्यं प्राप्तम्।

नरेन्द्रपुरीयं टिप्पणम्

विरोधादित्यर्थः। आश्रमित्वाविशेषेऽपि धर्मविशेषाच्छुद्ध्युत्कर्षापकर्षौ न विरुध्येते इत्याह—नैष दोष इति। आश्रमधर्ममात्रादेवोर्ध्वरेतसाममृतत्वमाक्षिपति—इत्थंविदामिति। इष्यत एव विद्यानर्थक्यमूर्ध्वरेतसां को विरोधस्त-

आनन्दगिरिटीका

ब्रह्मचारिणो गृहीताः। गुरुकुलवासित्वाच्च नारण्यश्रुत्योपलक्षिताः। ततस्तेषामिह ग्रहणसम्भवान्न पारिशेष्यमित्यर्थः। किं नैष्ठिकब्रह्मचारिणोऽत्रेत्थं विदुरिति गृह्येरन्किं वोपकुर्वाणा इति विकल्प्याऽऽद्यं दूषयति—नैष दोष इति।

"अष्टाशीतिसहस्राणि यतीनामूर्ध्वरेतसाम्। स्मृतं स्थानं तु यत्तेषां तदेव गुरुवासिनाम्"॥

इत्यादिपुराणस्मृतेः श्रुतिमूलत्वेन प्रामाण्यान्नैष्ठिकब्रह्मचारिणामूर्ध्वरेतसामादित्यसम्बन्धेनोत्तरायणेनोपलक्षितो देवयानाख्यो मार्गो यावता प्रसिद्धस्तस्मात्तेषामरण्यवासिभिः सहाखण्डितब्रह्मचर्येणैवार्चिरादिगतिलाभान्न पञ्चाग्निवित्त्वेन प्रयोजनमिति पारिशेष्यसिद्धिरित्यर्थः। द्वितीयं प्रत्याह—उपकुर्वाणकास्त्विति। ते हि स्वाध्यायग्रहणार्थास्तस्मिन्गृहीते स्वेच्छावशादाश्रमान्तरं गृह्णन्तस्तत्फलेनैव फलवन्तो भवन्तीति न गृहस्थादिभ्यो विभज्येत्थंविदुरिति निर्देशमर्हन्तीत्यर्थः।

किं नैष्ठिकानां ब्रह्मचारिणामुत्तरमार्गप्राप्तिसम्भवादनर्थकमित्थंवित्त्वं प्राप्तमिति श्रुतिविरोधाद्द्वितीये तु पारिशेष्यासिद्धितादवस्थ्यमिति शङ्कार्थः। किमित्थंवित्त्वं नैष्ठिकान्प्रत्यनर्थकमित्युच्यते किं वा सर्वानेव प्रतीति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयति—न गृहस्थानिति। तान्प्रत्यर्थवत्त्वमेवेत्थंवित्त्वस्य विभज्य समर्थयते—ये गृहस्था इति। स्वभावतस्तदनुष्ठितेष्टापूर्तबलादित्यर्थः। तेषामेव गृहस्थानां मध्ये ये केचिदुक्तेन प्रकारेणेत्थं पञ्चाग्निदर्शनं विदुरग्निभ्योऽन्यद्वा सगुणं ब्रह्म विदुस्ते देवयानेनोत्तरेण पथा गच्छन्तीति सम्बन्धः। न केवलं गृहस्थानां पञ्चाग्निवित्त्वमेव किन्तु सगुणब्रह्मवित्त्वमपि तेषामस्तीति प्रमाणमाह—अथेति। अन्त्येष्टिकरणाकरणयोरविशेषेण ब्रह्मविदामर्चिरादिगतिश्रवणादस्ति गृहस्थानामपि ब्रह्मवित्त्वमिति गम्यते। परिव्राजकादिष्वन्त्येष्ट्यसम्भवेन विद्यास्तुतेरपि दुर्वचनत्वादित्यर्थः। विहितत्वाविशेषादाश्रमाणां तुल्यत्वमाश्रित्य शङ्कते—नन्विति। साम्यमुक्त्वा गृहस्थेषु विशेषं दर्शयति—अग्निहोत्रादीति। वैदिकानि कर्माणि भूयांसि सन्ति। तेषां च बाहुल्ये सत्यविदुषामूर्ध्वरेतसामेव देवयानेन पथा गमनं न गृहस्थानामित्ययुक्तं साधनभूयस्त्वे फलभूयस्त्वन्यायविरोधादित्यर्थः। आश्रमित्वाविशेषेऽपि धर्मविशेषाद्विशुद्धितारतम्यसम्भवान्नैकरूप्यमिति परिहरति—नैष दोष इति। कथं गृहस्थानामग्निहोत्रादिभूयोधर्मवतां विद्याहीनानामप्यपूतत्वं तत्राऽऽह—शत्रुमित्रेति। अब्रह्मचर्यादीत्यादिपदेन परिग्रहित्वादि गृह्यते। अशुद्धिबाहुल्यकारणमतःशब्दार्थः। तुल्यमूर्ध्वरेतसामप्यशुद्धिहेतुबाहुल्यादपूतत्वमित्याशङ्क्याऽऽह—हिंसेति। ऊर्ध्वरेतसां पूतत्वे सिद्धे फलितमाह—तेषामिति। ऊर्ध्वरेतसां देवयाने पथ्यनुप्रवेशे प्रमाणमाह—तथाचेति। पौराणिका आहुरिति सम्बन्धः। आश्रमधर्ममात्रमार्गद्वारेणामृतत्वमूर्ध्वरेतसामुक्तमाक्षिपति—इत्थंविदामिति। तेषां विद्यानर्थक्यमिष्टमेवेत्या-

पञ्चविंशतितमा पंक्तिः एवं शोधनीया श्रीदक्षिणामूर्तिमठस्थलिखितपुस्तकानुसारेण। पाठोऽयमानन्दाश्रमपाठान्तरेषु नास्ति। किं नैष्ठिकानां ब्रह्मचारिणामित्थंवित्त्वमुक्तमुपकुर्वाणानां वा? आद्ये तेषामूर्ध्वरेतस्त्वादेवोत्तरमार्गं… इत्यादि

तथाच श्रुतिविरोधः। "न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः" इति। "स एनमविदितो न भुनक्ति" इति च विरुद्धम्। न। आभूतसंप्लवस्थानस्यामृतत्वेन विवक्षितत्वात्। तत्रैवोक्तं पौराणिकैः—आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति। यच्चाऽऽत्यन्तिकममृतत्वं तदपेक्षया "न तत्र दक्षिणा यन्ति" "स एनमविदितो न भुनक्ती"-त्याद्याः श्रुतय इत्यतो न विरोधः। "न च पुनरावर्तन्त" इती"मं मानवमावर्तं नाऽऽवर्तन्त" इत्यादिश्रुतिविरोध इति चेत्। न। इमं मानवमिति विशेषणात्तेषामिह न पुनरावृत्तिरस्तीति च। यदि ह्येकान्तेनैव नाऽऽवर्तेरन्निमं मानवमिहेति च विशेषणमनर्थकं स्यात्। इममिहेत्याकृतिमात्रमुच्यत इति चेत्। न। अनावृत्तिशब्देनैव नित्यानावृत्त्यर्थस्य प्रतीतत्वादाकृतिकल्पनाऽनर्थिका। अत इममिहेति च विशेषणार्थवत्त्वायान्यत्राऽऽवृत्तिः कल्पनीया। न च सदेकमेवाद्वितीयमित्येवंप्रत्ययवतां मूर्धन्यया नाड्याऽर्चिरादिमार्गेण गमनम्। "ब्रह्मैव सन्ब्रह्माप्येति"। "तस्मात्तत्सर्वमभवत्"। "न तस्य प्राणा उत्क्रामन्ति। अत्रैव समवनीयन्ते" इत्यादिश्रुतिशतेभ्यः।

ननु तस्माज्जीवादुच्चिक्रमिषोः प्राणा नोत्क्रामन्ति सहैव गच्छन्तीत्ययमर्थः कल्प्यत इति चेत्। न। अत्रैव समवनीयन्त इति विशेषणानर्थक्यात्। सर्वे प्राणा अनूत्क्रामन्तीति च प्राणैर्गमनस्य प्राप्तत्वात्। तस्मादुत्क्रामन्तीत्यनाशङ्कैवैषा। यदाऽपि मोक्षस्य संसारगतिवैलक्षण्यात्प्राणानां जीवेन सहागमनमाशङ्क्य तस्मान्नोत्क्रामन्तीत्युच्यते तदाऽप्यत्रैव समवनीयन्त इति विशेषणमनर्थकं स्यात्।

न च प्राणैर्वियुक्तस्य गतिरुपपद्यते जीवत्वं वा। सर्वगतत्वात्सदात्मनो निरवयवत्वात्प्राणसम्बन्धमात्रमेव

### नरेन्द्रपुरीयं टिप्पणम्

त्राह—तथा चेति। ऊर्ध्वरेतसाममृतत्वस्यापेक्षिकत्वात्तत्र विद्यानर्थक्यं न दोषायेति परिहरति—नाऽऽभूतेति। आपेक्षिकामृतत्वे श्रुतिविरोधं शङ्कित्वा परिहरति—न चेत्यादिना। सर्वकल्पेषु श्रुतेरेतादृशत्वादिममिहेति पदद्वयं सामान्येन सर्वकल्पविषयम्। न तु यस्मिन्कल्पे ब्रह्मलोकप्राप्तिः तदेककल्पाभिधायकम् येनार्थात्कल्पान्तरे पुनरावृत्तिः स्यादित्याह—इममिति। अस्मिन्पक्षे विशेषणानर्थक्यं दुष्परिहरमित्याह—न, अनावृत्तेति। ऊर्ध्वरेतसामाश्रमधर्मनिष्ठामात्रादापेक्षिकममृतत्वमुक्तम्। साक्षात्कृतब्रह्मभावानां त्वात्यन्तिकामृतत्वं गमनादिवर्जितमित्याह—न च सदेकमेवेति। एकदेश्यभिप्रायमुद्भाव्य दूषयति—ननु तस्माज्जीवादित्यादिना। तदात्मनः सर्वगताद्भेदकरणं जीवस्य

### आनन्दगिरिटीका

शङ्क्याऽऽह—तथा चेति। स परमात्मा स्वयमज्ञातः सन्नेनमधिकारिणमपवर्गप्रदानेन न पालयतीति च वाक्यं विद्यामन्तरेणामृतत्वं ब्रुवतो विरुद्धमित्यर्थः। ऊर्ध्वरेतसाममृतत्वस्याऽऽपेक्षिकत्वात्तत्र विद्यानर्थक्यमेवेति परिहरति—नाऽऽभूतेति। आपेक्षिकममृतत्वमित्यत्र प्रमाणमाह—तत्रैवेति। यत्र प्रजाः कामयमाना मुक्तिभाजो न भवन्तीत्युक्तं तत्रैव तत्सन्निधाविति यावत्। कथं तर्हि यथोक्तश्रुतिविरोधसमाधिरित्याशङ्क्याऽऽह—यच्चेति। आदिशब्दस्तमेवं विद्वानमृत इह भवतीत्यादिश्रुतिसंग्रहार्थः। आपेक्षिकामृतत्वे श्रुतिविरोधो न शक्यते परिहर्तुमिति शङ्कते—न चेति। आदिशब्दस्तेषामिह न पुनरावृत्तिरित्यादिवाक्यसंग्रहार्थः। इममिहेति विशेषणावष्टम्भेन निराचष्टे—नेत्यादिना। तदेव व्यतिरेकमुखेन विशदयति—यदीति। सर्वकल्पेषु श्रुतेरेतादृशत्वादिममिहेतिपदद्वयसामान्येन सर्वकल्पविषये विशेषणानर्थक्यं दुर्वारमित्युत्तरमाह—नानावृत्तीति। विधान्तरेण विशेषणार्थसम्भवे फलितमाह—अत इति। यस्मिन्कल्पे ब्रह्मलोकप्राप्तिस्तस्मात्कल्पान्तरमन्यत्रेत्युक्तम्। ऊर्ध्वरेतसामाश्रमधर्ममात्रनिष्ठानाममृतत्वमापेक्षिकमुपक्षिप्तं संप्रति तेषामेव साक्षात्कृतब्रह्मतत्त्वानामात्यन्तिकममृतत्वं गतिनिरपेक्षं सिध्यतीत्याह—न चेति। तेषां गत्यादिनिरपेक्षमात्यन्तिकममृतत्वं भवतीत्यत्र प्रमाणमाह—ब्रह्मैवेति।

न तस्मात्प्राणा उत्क्रामन्तीति माध्यन्दिनश्रुतिमनुसृत्य न तस्येत्यादिकाण्वश्रुतिरपि नेतव्येति शङ्कते—ननु तस्मादिति। वाक्यशेषविरोधान्नैवमिति दूषयति—नात्रेति। श्रुत्यन्तरालोचनायामपि न स्वयूथ्यकल्पनेत्याह—सर्वे प्राणा इति। प्राणैः सह जीवस्येति शेषः। संसारदशायां प्राणैः सह विज्ञानात्मनो गमनेऽपि मोक्षे नास्ति प्राणानां जीवेन सह गमनमित्याशङ्कायां न तस्मादित्यादिवाक्यमित्याशङ्क्याऽऽह—यदाऽपीति।

भवतु प्राणानामत्रैव समवलयस्तथाऽपि जीवस्य गमनायत्तममृतत्वमित्याशङ्क्याऽऽह—न चेति। "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि। कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति। स प्राणमसृजते"ति श्रुतेरिति शेषः। किञ्च

**मासेभ्यः संवत्सरँ् संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥**

ह्यग्निविस्फुलिङ्गवज्जीवत्वभेदकारणमित्यतस्तद्वियोगे जीवत्वं गतिर्वा न शक्या परिकल्पयितुं श्रुतयश्चेत्प्रमाणम् । न सतोऽणुरवयवः स्फुटितो जीवाख्यः सद्रूपं छिद्रीकुर्वन्गच्छतीति शक्यं कल्पयितुम् । तस्मात् "तयोर्ध्वमायन्नमृतत्वमेति" इति सगुणब्रह्मोपासकस्य प्राणैः सह नाड्या गमनं सापेक्षमेव चामृतत्वं न साक्षान्मोक्ष इति गम्यते । "तदपराजिता पूस्तदैरं मदीयं सरः" इत्याद्युक्त्वा "तेषामेवैष ब्रह्मलोकः" इति विशेषणात् ।

अतः पञ्चाग्निविदो गृहस्था ये चेमेऽरण्ये वानप्रस्थाः परिव्राजकाश्च सह नैष्ठिकब्रह्मचारिभिः श्रद्धा तप इत्येवमाद्युपासते श्रद्दधानास्तपस्विनश्चेत्यर्थः । उपासनशब्दस्तात्पर्यार्थः । इष्टापूर्ते दत्तमित्युपासत इति यद्वत् । श्रुत्यन्तराद्ये च सत्यं ब्रह्म हिरण्यगर्भाख्यमुपासते ते सर्वेऽर्चिषमर्चिरभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्ते ।

### नरेन्द्रपुरीयं टिप्पणम्

भेदोपाधिकृतं न भवति । किन्तु स्वत एवांशो जीव इति न वाच्यं श्रुतिविरोधादित्याह—**न च सत इति** । पदार्थमुपसंहरति—**तस्मादित्यादिना** ।

यदत्र भास्कर आह—ब्रह्मशब्दस्य मूलकारणे मुख्यत्वान्न कार्यं ब्रह्म गमयत्यमानव इति । तदसत्, पञ्चाग्निविदोऽपि परब्रह्मप्राप्तिप्रसङ्गादेतच्छब्दस्य प्रकृतपरामर्शकत्वात्, अन्यथा तस्यानिर्दिष्टफलत्वप्रसङ्गात्। "तमेव विदित्वाऽतिमृत्युमेती"ति श्रुतेर्नैवमिति चेत्सत्यं, तत एव शास्त्रार्थपरिज्ञस्त्वं प्रद्वेषाविलचित्ततया यत्किञ्चित्प्रलपसि । यच्च सगुणं ब्रह्मोपकोसलादिविद्यया प्राप्यमित्यस्य दूषणमुक्तं किं सगुणं ब्रह्म ब्रह्म न भवतीति । तदप्यसत् । ब्रह्मत्वेऽपि सर्वस्य व्यवहारे विशेषोपगमादुपाधिभावाभावाभ्याम् । यच्च परमात्मातिरिक्तसंसार्यभावाद्व्यामोहादेव कार्यब्रह्मगमनं कल्प्यत इति । तच्चासत् । कार्यब्रह्मलोकस्य वेश्मादिभोग्यभेदसंभिन्नस्य श्रुतिस्मृत्योः प्रसिद्धत्वात् । यच्च निर्गुणं ब्रह्म नास्ति "विज्ञानमानन्दमि"ति सगुणस्यैव श्रवणादिति, तच्चासत्। "कृत्स्नः प्रज्ञानघन एव" "केवलो निर्गुणश्चे"त्यादिश्रुतित्यागप्रसङ्गादपर्यायानेकशब्दस्यैकार्थपरतायास्तेनाप्यभेदोऽप्यभिन्न इत्यादिवाक्ये अङ्गीकृतत्वादिति । यच्च निर्गुणविदो गतिर्नास्तीत्युद्भाव्य सत्यमगतिरेव निर्गुणब्रह्माभावादिति । तत्तस्य ब्रह्मघातकत्वमेव गमयति । "ब्रह्महा ब्राह्मणं हत्वा वेदं ब्रह्म च द्वेष्टि यः । अभूतब्रह्मवादी च यत्र ते ब्रह्मघातकाः ॥" इति स्मृतेः ।

### आनन्दगिरिटीका

प्राणैर्वियुक्तस्य चिदात्मनो जीवत्वं नोपपद्यते प्राणोपाधिकस्यैव तस्य जीवशब्दवाच्यत्वादित्याह—**जीवत्वं चेति** । उक्तमर्थं समर्थयते—**सर्वगतत्वादिति** । चिदात्मा हि कल्पनायामधिष्ठाने सति यतो निर्भागं सर्वस्याऽऽत्मा तस्मादग्नेर्विस्फुलिङ्गवज्जीवत्वाख्यभेदसम्पादनं तस्य प्राणसम्बन्धमात्रमेवेति वैदिकानां प्रसिद्धम् । तथा च प्राणवियोगे चिदात्मनो जीवत्वं गतिर्वा न शक्यते कल्पयितुम् । तस्मात्पूर्णत्वादिप्रतिपादकश्रुतीनां प्रमाणत्वादित्यर्थः । सदात्मनः सर्वगतस्य जीवाख्यभेदकरणं न प्राणोपाधिकृतं किं तु स्वत एव तस्यांशो जीवस्तथा चाग्निविस्फुलिङ्गवत्तस्य गत्युपपत्तिरित्याशङ्क्याऽऽह—**न चेति** । "निष्कलं निष्क्रियं शान्तमि"त्यादिश्रुतेरिति शेषः । प्रकरणार्थमुपसंहरति—**तस्मादिति** । निर्गुणब्रह्मविदामात्यन्तिकामृतत्वस्य गमनादिनिरपेक्षत्वादिति यावत् । सगुणब्रह्मोपासकस्य सापेक्षममृतत्वमित्यत्र विशेषणश्रुतिमनुकूलयति—**तदपराजितेति** । आदिपदेन तदश्वत्थः सोमसवन इत्यादि गृह्यते । तेषामेव ब्रह्मविदामेष पूर्वोक्तविशेषगुणो ब्रह्मणः सत्याख्यस्य लोको नान्येषामकृतात्मनामिति विशेषदर्शनादमृतत्वं तेषां तल्लोकनिवासिभिः समं सापेक्षमेवेति निर्धारितमित्यर्थः ।

ऊर्ध्वरेतसामाश्रममात्रनिष्ठानामपि ब्रह्मलोको लभ्यते गृहस्थानां पुनर्विदुषामेवेत्युपपाद्य प्रकृतश्रुतिव्याख्यानमनुवर्तयति—**अत इति** । पूर्वोक्तपारिशेष्यादिवशादिति यावत् । परिव्राजकाश्चेत्यमुख्यसंन्यासिनस्त्रिदण्डिनो गृह्यन्ते मुख्यसंन्यासिनां ब्रह्मसंस्थोऽमृतत्वमेतीति पृथक्श्रुतत्वात् । श्रद्धां सत्यमित्युपासत इति श्रुत्यन्तरम् । पञ्चाग्निविदो गृहस्थाः स्वाश्रममात्रप्रवणा ऊर्ध्वरेतसः सत्यब्रह्मोपासकाश्चोभये सर्वशब्देनोच्यन्ते । चतुर्थे यदुपकोसलविद्यायां

अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति धूमाद्रात्रिँ् रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासाँ्स्तान्नैते संवत्सरमभिप्राप्नुवन्ति ॥ ३ ॥

समानमन्यच्चतुर्थगतिव्याख्यानेन। एष देवयानः पन्था व्याख्यातः सत्यलोकावसानो नाण्डाद्बहिः। "यदन्तरा पितरं मातरं च" इति मन्त्रवर्णात् ॥ १-२ ॥

अथेत्यर्थान्तरप्रस्तावनार्थो य इमे गृहस्था ग्रामे। ग्राम इति गृहस्थानामसाधारणं विशेषणमरण्यवासिभ्यो व्यावृत्त्यर्थम्। यथा वानप्रस्थपरिव्राजकानामरण्यं विशेषणं गृहस्थेभ्यो व्यावृत्त्यर्थं तद्वत्। इष्टापूर्ते इष्टमग्निहोत्रादि वैदिकं कर्म पूर्तं वापीकूपतडागारामादिकरणम्। दत्तं बहिर्वेदि यथाशक्त्यर्हेभ्यो द्रव्यसंविभागो दत्तम्। इत्येवंविधं परिचरणपरित्राणाद्युपासते। इतिशब्दस्य प्रकारदर्शनार्थत्वात्। ते दर्शनवर्जितत्वाद्धूमं धूमाभिमानिनीं देवतामभिसम्भवन्ति प्रतिपद्यन्ते। तयाऽतिवाहिता धूमाद्रात्रिं रात्रिदेवतां रात्रेरपरपक्षदेवतामेव कृष्णपक्षाभिमानिनीमपरपक्षाद्यान्षण्मासान्दक्षिणा दक्षिणां दिशमेति सविता। तान्मासान्दक्षिणायनषण्मासाभिमानिनीर्देवताः प्रतिपद्यन्त इत्यर्थः। सङ्घचारिण्यो हि षण्मासदेवता इति मासानिति बहुवचनप्रयोगस्तासु। नैते कर्मिणः प्रकृताः संवत्सरं संवत्सराभिमानिनीं देवतामभिप्राप्नुवन्ति। कुतः पुनः संवत्सरप्राप्तिप्रसङ्गो यतः प्रतिषिध्यते ? अस्ति हि प्रसङ्गः संवत्सरस्य ह्येकस्यावयवभूते दक्षिणोत्तरायणे तत्रार्चिरादिमार्गप्रवृत्तानामुदगयनमासेभ्योऽवयविनः संवत्सरस्य प्राप्तिरुक्ता। अत इहापि तदवयवभूतानां दक्षिणायनमासानां प्राप्तिं श्रुत्वा तदवयविनः संवत्सरस्यापि पूर्ववत्प्राप्तिरापन्नेत्यतस्तत्प्राप्तिः प्रतिषिध्यते नैते संवत्सरमभिप्राप्नुवन्तीति ॥ ३ ॥

नरेन्द्रपुरीयं टिप्पणम्

प्रमाणप्रतिपन्नस्याभूतत्वाभिधानात्। निरस्तश्चायं विस्तरेण प्रकटार्थे इत्युपरम्यते। चतुर्थेऽध्याये गतिव्याख्यानेन। अण्डाद्बहिःस्थितं ब्रह्म गम्यत इत्येकदेशिव्याख्यां दूषयति—नाण्डाद्बहिरिति। पितरं द्युलोकं मातरं पृथिवीञ्चान्तरा मध्ये यदिति ॥ १-२ ॥

ये द्वे सृती अशृणवं ताभ्यामिदं विश्वं कर्मज्ञानाधिकृतं गच्छतीत्यर्थः। वेत्थ यदितोऽधिप्रजाः प्रयन्तीत्यस्य प्रश्नस्य प्रतिवचनं देवयानोपदेशेनाभिधाय पितृयाणोपदेशेनाभिधीयत इत्याह—अथेति ॥ ३ ॥

आनन्दगिरिटीका

गतिव्याख्यानमतिवृत्तं तेन समानमर्चिषोऽहरित्यादिवाक्यव्याख्यानं तथा च तत्र पृथक्कर्तव्यमित्याह—समानमिति। उत्तरमार्गव्याख्यानमुपसंहरति—एष इति। देवयानेन पथा बहिरण्डाद्व्यवस्थितं ब्रह्म गन्तव्यमित्येके तान्प्रत्याह—नाण्डादिति। तत्र हेतुमाह—यदन्तरेति। पितरं द्युलोकं मातरं च पृथिवीं मध्ये ये द्वे सृती अशृणवं ताभ्यामिदं विश्वं कर्मज्ञानाधिकृतं गच्छति न चाण्डाद्बहिरस्ति गतिद्वयमित्यर्थः ॥ १-२ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीत्यस्य प्रश्नस्य प्रतिवचनं देवयानोपदेशेन व्याख्यातं संप्रति पितृयाणोपदेशेनापि ग्रामनिवासित्वाविशेषादित्याशङ्क्याऽऽह—ग्राम इतीति। सपत्नीको हि वासो ग्राम इत्युच्यते। न च सपत्नीकत्वमूर्ध्वरेतसां युक्तं तथा च गृहस्थानामेव ग्रामविशेषणमसाधारणं; न च तदनर्थकमूर्ध्वरेतोभ्यस्तेषां व्यावृत्त्यर्थत्वादित्यर्थः। तदेव दृष्टान्तेन स्फुटयति—यथेति। वेद्यन्तर्भावव्यासेधाद्बहिर्वेदीति विशेषणमादौ दत्तमिति प्रतीकोपादानं पुनर्व्याख्यातस्यानुवाद इत्यपुनरुक्तिः। इतिशब्दार्थमाह—इत्येवंविधमिति। परिचरणं गुर्वादिशुश्रूषा। परित्राणं रक्षणम्। आदिपदं नित्यस्वाध्यायादिसंग्रहार्थम्। उपासते तात्पर्येणानुतिष्ठन्तीति यावत्। कथमितिशब्दस्य यथोक्तार्थत्वमिति ह स्मोपाध्यायः कथयतीतिवत्प्रकृतमात्रगामित्वादित्याशङ्क्याऽऽह—इतिशब्दस्येति। देवयानाधिकृतेभ्यः सकाशात्पितृयाणाधिकृतेषु विशेषान्तरमाह—नैत इति। अप्राप्तप्रतिषेधोऽयमिति शङ्कते—कुत इति। प्राप्तिं दर्शयन्नुत्तरमाह—अस्ति हीति। पूर्ववत्, यथा पूर्वं देवयानेन पथाऽवयवेभ्योऽवयविनः संवत्सरस्य प्राप्तिस्तथेति यावत् ॥ ३ ॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमस-मेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥

तस्मिन्यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाश-माकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति ॥ ५ ॥

मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसम् । कोऽसौ यस्तैः प्राप्यते चन्द्रमा य एष दृश्यतेऽन्तरिक्षे सोमो राजा ब्राह्मणानां, तदन्नं देवानां तं चन्द्रमसमन्नं देवा इन्द्रादयो भक्षयन्ति । अतस्ते धूमादिना गत्वा चन्द्रभूताः कर्मिणो देवैर्भक्ष्यन्ते । नन्वनर्थायेष्टादिकरणं यद्यन्नभूता देवैर्भक्ष्येरन् । नैष दोषः । अन्नमित्युपकरण-मात्रस्य विवक्षितत्वात् । न हि ते कवलोत्क्षेपेण देवैर्भक्ष्यन्ते । किं तर्ह्युपकरणमात्रं देवानां भवन्ति ते स्त्रीपशु-भृत्यादिवत् । दृष्टश्चान्नशब्द उपकरणेषु "स्त्रियोऽन्नं पशवोऽन्नं विशां विशोऽन्नं राज्ञामि"त्यादि । न च तेषां स्त्र्यादीनां पुरुषोपभोग्यत्वेऽप्युपभोगो नास्ति । तस्मात्कर्मिणो देवानामुपभोग्या अपि सन्तः सुखिनो देवैः क्रीडन्ति । शरीरं च तेषां सुखोपभोगयोग्यं चन्द्रमण्डल आप्यमारभ्यते । तदुक्तं पुरस्ताच्छ्रद्धाशब्दा आपो द्युलोकाग्नौ हुताः सोमो राजा सम्भवतीति । ता आपः कर्मसमवायिन्य इतरैश्च भूतैरनुगता द्युलोकं प्राप्य चन्द्रत्वमापन्नाः शरीराद्यारम्भिका इष्टाद्युपासकानां भवन्ति । अन्त्यायां च शरीराहुतावग्नौ हुतायामग्निना दह्यमाने शरीरे तदुत्था आपो धूमेन सहोर्ध्वं यजमानमावेष्ट्य चन्द्रमण्डलं प्राप्य कुशमृत्तिकास्थानीया बाह्यशरीरारम्भिका भवन्ति । तदारब्धेन च शरीरेणेष्टादि-फलमुपभुञ्जाना आसते ॥ ४ ॥

यावत्तदुपभोगनिमित्तस्य कर्मणः क्षयः सम्पतन्ति येनेति सम्पातः कर्मणः क्षयो यावत्सम्पातं यावत्कर्मणः क्षय इत्यर्थः । तावत्तस्मिंश्चन्द्रमण्डल उषित्वाऽथानन्तरमेतमेव वक्ष्यमाणमध्वानं मार्गं पुनर्निवर्तन्ते । पुनर्निवर्तन्त इति प्रयोगात्पूर्वमप्यसकृच्चन्द्रमण्डलं गता निवृत्ताश्चाऽऽसन्निति गम्यते । तस्मादिह लोक इष्टादिकर्मोपचित्य चन्द्रं गच्छन्ति । तत्क्षये चाऽऽवर्तन्ते । क्षणमात्रमपि तत्र स्थातुं न लभ्यते । स्थितिनिमित्तकर्मक्षयात् । स्नेहक्षयादिव प्रदीपस्य । तत्र किं येन कर्मणा चन्द्रमण्डलमारूढस्तस्य सर्वस्य क्षये तस्मादवरोहणं किं वा सावशेष इति । किं ततः ।

नरेन्द्रपुरीयं टिप्पणम्

अन्नशब्दस्योपचरितार्थत्वं चोद्यमुखेन दर्शयति—नन्वनर्थायेत्यादिना ॥ ४ ॥

तस्मिन्यावत्सम्पातमुषित्वेत्यत्र विचारमारभते—तत्र किं येनेत्यादिना । कर्मणेति शुभाशुभकर्मबृन्देन

आनन्दगिरिटीका

अन्नशब्दस्य यथाश्रुतमर्थं गृहीत्वा चोदयति—नन्विति । औपचारिकमर्थं गृहीत्वा परिहरति—नैष दोष इति । वृद्धप्रयोगमन्तरेण कथमुपकरणविषयोऽन्नशब्दो व्याख्यायते तत्राऽऽह—दृष्टश्चेति । भवतु कर्मिणां देवान्प्रत्युप-करणत्वं तथाऽपि स्वयमुपभोगाभावादनर्थकमिष्टादिकरणमित्याशङ्क्याऽऽह—न चेति । अन्योपभोग्यानामपि स्वयं भोगसत्त्वं तस्मादित्युच्यते । तथाऽपि तेषां मृतानामशरीरिणां कथं मुख्योपभोगः सम्भवतीत्याशङ्क्याऽऽह—शरीरं चेति । कथमपां चन्द्रलोके तद्देहारम्भकत्वं तदाह—यदुक्तमिति । अथापां सोमत्वमेवात्र प्रतीयते ननु कर्मिदेहारम्भ-कत्वमित्याशङ्क्याऽऽह—ता आप इति । कर्मसमवायिनीनामपां कर्मापूर्वद्वारा यजमानदेहप्रतिष्ठानां कथं द्युलोक-प्रवेशादि सम्भवतीत्याशङ्क्याऽऽह—अन्त्यायां चेति । अद्भिरारब्धस्य शरीरस्य भोगायतनत्वं दर्शयति—तदारब्धेनेति ॥ ४ ॥

तद्देवानामन्नमित्यादि व्याख्याय तस्मिन्नित्यादि व्याचष्टे—यावदिति । चन्द्रलोकस्तच्छब्दार्थः । यावत्संपात-मुषित्वेति श्रूयते कथमन्यथा व्याख्यायते तत्राऽऽह—सम्पतन्तीति । पुनःशब्दप्रयोगस्य तात्पर्यमाह—पुनरिति । अथेत्यादिवाक्यार्थमुपसंहरति—तस्मादिति । तच्छब्दपरामृष्टं हेतुं स्पष्टयति—स्थितीति । यथा दीपस्य स्नेहक्षये स्थितिनिमित्ताभावादस्थितिस्तथा चन्द्रलोके स्थितिनिमित्तस्येष्टादेर्भोगेन क्षयात्तत्र स्थित्यसम्भवादावृत्तिरेवेत्यर्थः ।

तस्मिन्यावत्सम्पातमुषित्वेत्यत्र विचारयति—तत्रेति । तस्य चन्द्रमण्डलप्रापकस्यातिरिक्तस्य च सर्वस्य कर्मणः क्षये सतीति यावत् । सावशेषो भुक्तात्कर्मणः सकाशादतिरिक्तेन केनचित्कर्मणा सहितः सन्नित्यर्थः । पक्षद्वयेऽपि

यदि सर्वस्यैव क्षयः कर्मणश्चन्द्रमण्डलस्थस्यैव मोक्षः प्राप्नोति। तिष्ठतु तावत्तत्रैव मोक्षः स्यान्न वेति। तत आगतस्येह शरीरोपभोगादि न सम्भवति। "ततः शेषेणे"त्यादिस्मृतिविरोधश्च स्यात्। नन्विष्टापूर्तदत्तव्यतिरेकेणापि मनुष्यलोके शरीरोपभोगनिमित्तानि कर्माण्यनेकानि सम्भवन्ति। न च तेषां चन्द्रमण्डल उपभोगः। अतोऽक्षीणानि तानि। यन्निमित्तं चन्द्रमण्डलमारूढस्तान्येव क्षीणानीत्यविरोधः। शेषशब्दश्च सर्वेषां कर्मत्वसामान्यादविरुद्धः। अत एव च तत्रैव मोक्षः स्यादिति दोषाभावः। विरुद्धानेकयोन्युपभोगफलानां च कर्मणामेकैकस्य जन्तोरारम्भकत्वसम्भवात्। न चैकस्मिञ्जन्मनि सर्वकर्मणां क्षय उपपद्यते। ब्रह्महत्यादेश्चैकैकस्य कर्मणोऽनेकजन्मारम्भकत्वस्मरणात्। स्थावरादिप्राप्तानां चात्यन्तमूढानामुत्कर्षहेतोः कर्मण आरम्भकत्वासम्भवात्। गर्भभूतानां च स्रंसमानानां कर्मासम्भवे संसारानुपपत्तिः। तस्मान्नैकस्मिञ्जन्मनि सर्वेषां कर्मणामुपभोगः।

यत्तु कैश्चिदुच्यते सर्वकर्माश्रयोपमर्देन प्रायणे कर्मणां जन्मारम्भकत्वम्। तत्र कानिचित्कर्माण्यनारम्भकत्वेनैव तिष्ठन्ति कानिचिज्जन्माऽऽरभन्त इति नोपपद्यते। मरणस्य सर्वकर्माभिव्यञ्जकत्वात्स्वगोचराभिव्यञ्जक-

## नरेन्द्रपुरीयं टिप्पणम्

सर्वकर्मक्षयेऽवरोह इति पक्षे पूर्वपक्षिणा निरस्ते सावशेषपक्षं सिद्धान्त्यवलम्बते—नन्विष्टेत्यादिना। "ततश्शेषेण जन्मप्रतिपद्यन्त" इति स्मृतिविरोधोऽपि नास्ति। उपभुक्तान्यस्य शेपशब्देनाभिधानादित्याह—शेषशब्दश्चेति। इतश्च स्वर्गार्थमात्रस्य कर्मणः क्षयेऽपि कर्मवृन्दस्यावशेषो वक्तव्य इत्याह—विरुद्धेति। विरुद्धास्वनेकासु योनिषु देवविड्वराहादिषूपभोगः फलं येषां कर्मणां तानि यथोक्तानि। तेषामेकैकस्यैव जन्तोरारम्भकत्वसम्भवान्न सर्वस्य कर्मण एकत्रैव क्षयः कल्पयितुं शक्यत इत्यर्थः। इतश्चावशेषो वक्तव्य इत्याह—न चैकस्मिन्निति। प्रसङ्गाच्चिरन्तनवृत्तिकारमतमुद्भाव्य दूषयति—यत्तु कैश्चिदित्यादिना। यावत्प्रवृत्तफलं कर्म न क्षीयते न तावत्प्रतिबन्धादन्यानि कर्माणि स्वफलान्यारभन्ते। मरणकाले तु प्रतिबन्धकाभावात्सर्वकर्माशयसङ्घातोपमर्देनोत्तरशरीरारम्भकत्वमित्युक्तम्। तत्र

## आनन्दगिरिटीका

फलं पृच्छति—किं तत इति। तत्राऽऽद्यं पक्षं पूर्वपक्षमुखेन प्रतिचिक्षिप्सुस्तत्फलमाह—यदीति। तत्रैव दूषणान्तरमाह—तिष्ठत्विति। चन्द्रमण्डलं सप्तम्यर्थः। ततश्चन्द्रमण्डलादित्येतत्। इहेत्येतल्लोकोक्तिः। आदिपदं शुभाशुभकर्मानुसारिसर्वव्यापारसंग्रहार्थम्। न केवलं सर्वकर्मक्षयपक्षे मुक्तिरेव विरुध्यते किन्तु स्मृतिश्चेत्याह—तत इति। चन्द्रलोके भोक्तव्यस्य कर्मणो भोगेन क्षयादूर्ध्वं शेषेणानुपभुक्तेन कर्मणा जन्म प्रतिपद्यन्त इत्याद्या स्मृतिः सर्वकर्मक्षयपक्षे विरुध्यत इत्यर्थः। सर्वकर्मक्षयपक्षे पूर्वपक्षिणाऽन्यथावादिना प्रतिक्षिप्ते सावशेषपक्षमुत्तरवादी प्रतिपद्यते—नन्विति। तान्यपि चन्द्रमण्डले भुक्तान्येवेति नावशेषोऽस्तीत्याशङ्क्याऽऽह—न चेति। न हि सर्वकर्मवशाच्चन्द्रमण्डलप्राप्तिरिति भावः। तर्हि चन्द्रमण्डले कर्मफलोपभोगाभावादलं तदारोहेणेत्याशङ्क्याऽऽह—यन्निमित्तमिति। अविरोधश्चन्द्रमण्डले भोगस्य शेषकर्मसद्भावस्य चेति शेषः। यत्तु ततः शेषेणेत्यादिस्मृतिविरोध इति तत्राऽऽह—शेषशब्दश्चेति। निःशेषेष्वपि भुक्तेषु कर्मस्वभुक्तकर्मसु शेषशब्दो [1]न विरुध्यतेऽभुक्तानां कर्मणां कर्मत्वस्य तुल्यत्वान्नात्र सावशेषपक्षे स्मृतिविरोधोऽस्तीत्यर्थः। यच्चन्द्रमण्डस्थलस्यैव मोक्षः स्यादिति तत्राऽऽह—अत एवेति। शेषकर्मसद्भावादेवेति यावत्। इतश्च कर्मशेषसिद्धिरित्याह—विरुद्धेति। आरम्भकत्वसम्भवादेकजात्युपभोग्यकर्मक्षयेऽपि कर्मशेषः सम्भवतीति शेषः। अथैकस्मिञ्जन्मनि सर्वाणि क्षीयन्ते कर्माशयस्यैकभविकत्वादित्याशङ्क्याऽऽह—न चेति। ऐकभविकन्यायस्योपरिष्टान्निराकरिष्यमाणत्वादित्यर्थः। इतश्च शेषकर्मसिद्धिरित्याह—ब्रह्महत्यादेश्चेति। "श्वसूकरखरोष्ट्राणामि"त्यादिस्मरणम्। घृतभाण्डस्नेहशेषवद्भुक्तस्यैव कर्मणः शेषात्पुनरावृत्तिर्भविष्यतीत्यत आह—स्थावरादीति। शेषकर्मसिद्धौ हेत्वन्तरमाह—गर्भभूतानामिति। कर्मशेषसद्भावमुपसंहरति—तस्मादिति। एकस्यापि कर्मणोऽनेकजन्महेतुत्वं तच्छब्दार्थः।

मतान्तरमुत्थापयति—यत्त्विति। यावत्प्रवृत्तफलं कर्म न क्षीयते तावत्प्रवृत्तिप्रतिबन्धादन्यानि कर्माणि स्वफलं नाऽऽरभन्ते। मरणकाले तु प्रतिबन्धकाभावात्सर्वकर्माश्रयसङ्घातोपमर्देन तेषामुत्तरशरीरारम्भकत्वमविरुद्धमित्यर्थः। तथाऽपि कथं शेषकर्मसद्भावासिद्धिरित्यत आह—तत्रेति। अनारब्धकर्मणां सर्वेषामुत्तरशरीरारम्भकत्वे सतीति यावत्। प्रायणकाले यानि कर्माण्यभिव्यक्तानि तान्येवोत्तरशरीरारम्भकाणीतरेषां तु न शरीरारम्भकत्वमिति

१. अत एव मीमांसकाः आज्येन शेषं संस्थापयन्ति इत्यत्र कर्मान्तरं शेषपदार्थः शेषवद्भानात् इत्याहुः।

प्रदीपवदिति। तदसत्। सर्वस्य सर्वात्मकत्वाभ्युपगमात्। न हि सर्वस्य सर्वात्मकत्वे देशकालनिमित्तावरुद्धत्वात्सर्वात्मनोपमर्दः कस्यचित्क्वचिदभिव्यक्तिर्वा सर्वात्मनोपपद्यते। तथा कर्मणामपि साश्रयाणां भवेत्। यथा च पूर्वानुभूतमनुष्यमयूरमर्कटादिजन्माभिसंस्कृता विरुद्धानेकवासना मर्कटत्वप्रापकेन कर्मणा मर्कटजन्माऽऽरभमाणेन नोपमृद्यन्ते तथा कर्माण्यप्यन्यजन्मप्राप्तिनिमित्तानि नोपमृद्यन्त इति युक्तम्। यदि हि सर्वाः पूर्वजन्मानुभववासना उपमृद्येरन्मर्कटजन्मनिमित्तेन कर्मणा मर्कटजन्मन्यारब्धे मर्कटस्य जातमात्रस्य मातुः शाखायाः शाखान्तरगमने मातुरुदरसंलग्नत्वादिकौशलं न प्राप्नोति। इह जन्मन्यनभ्यस्तत्वात्। न चातीतानन्तरजन्मनि मर्कटत्वमेवाऽऽसीत्तस्येति शक्यं वक्तुम्। "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति श्रुतेः। तस्माद्वासनावन्नाशेषकर्मोपमर्द इति शेषकर्मसम्भवः। यत एवं तस्माच्छेषेणोपभुक्तात्कर्मणः संसार उपपद्यत इति न कश्चिद्विरोधः।

कोऽसावध्वा यं प्रति निवर्तन्त इत्युच्यते। यथेतं यथागतं निवर्तन्ते। ननु मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमिति गमनक्रम उक्तो न तथा निवृत्तिः। किं तर्ह्याकाशाद्वायुमित्यादि, कथं यथेतमित्युच्यते। नैष दोषः। आकाशप्राप्तेस्तुल्यत्वात्पृथिवीप्राप्तेश्च न चात्र यथेतमेवेति नियमोऽनेवंविधमपि निवर्तन्ते पुनर्निवर्तन्ते इति तु नियमः। अत उपलक्षणार्थमेतद्यथेतमिति। अतो भौतिकमाकाशं तावत्प्रतिपद्यन्ते। यास्तेषां चन्द्रमण्डले शरीरारम्भिका आप आसंस्तास्तेषां तत्रोपभोगनिमित्तानां कर्मणां क्षये विलीयन्ते। घृतसंस्थानमिवाग्निसंयोगे। ता विलीना अन्तरिक्षस्था आकाशभूता इव सूक्ष्मा भवन्ति ता अन्तरिक्षाद्वायुर्भवन्ति। वायुप्रतिष्ठा

### नरेन्द्रपुरीयं टिप्पणम्

सर्वकर्मसमुदायोपमर्द एकदैव न सम्भवीत्याह—तदसदिति। सर्वप्रपञ्चाभिन्नब्रह्माभेदेन वृत्तिकारमते सर्वस्य सर्वात्मकत्वाभ्युपगमाद्विद्यमानाभिन्नत्वात्सर्वात्मनोपमर्दो न सम्भवतीत्यर्थः। कस्मिंश्चिद्देशे काले केनचिन्निमित्तेन कस्यचिदेवोपमर्दो नत्वात्यन्तिको भवति सद्वादित्वादित्यर्थः। वासनादृष्टान्तेनापि कर्मणामवशेषं सम्भावयति—यथा चेति। जन्मभिरभिसंस्कृता उपचिताः। दृष्टान्तं स्फुटयति—यदि हीति। पूर्वप्रज्ञेति पूर्वजन्मवासना जीवमनुगच्छतीत्यविशेषश्रवणादव्यवहितपूर्वजन्मवासनैवानुवर्तत इति न शक्यं कल्पयितुमित्यर्थः। कथं पूर्वसिद्धाकाश-

### आनन्दगिरिटीका

दूषयति—तदसदिति। मधुब्राह्मणोक्तेन न्यायेन सर्वस्य सर्वात्मकत्वाङ्गीकाराद्देहस्यापि तथात्वान्न सर्वात्मनोपमर्दोपपत्तिरित्यर्थः। उक्तमर्थमुपपादयितुं सामान्यन्यायमाह—न हीति। सर्वं सर्वस्य कारणं कार्यं चेति न्यायेन सर्वस्य सर्वात्मकत्वे स्थिते सति कस्यचित्क्वचित्सर्वात्मनोपमर्दस्तथाऽभिव्यक्तिर्वा नोपपद्यते। प्रतीयमानोपमर्दादेर्देशविशेषादिकृतत्वादित्यर्थः। उक्तन्यायं प्रकृते योजयति—तथेति। इतश्च कर्मशेषः सम्भवतीति क्रमवत्तायां दृष्टान्तमाह—यथा चेति। पूर्वं क्रमेणानुभूतानि यानि मनुष्यादिजन्मानि तैरभिसंस्कृताः सम्पादिता विरुद्धा या भूयस्यो वासनास्तज्जातिविशेषप्रापकेन कर्मणा तस्मिन्नारभ्यमाणे न निरुध्यन्त इत्यर्थः। दार्ष्टान्तिकमाह—तथेति। दृष्टान्तं विवृणोति—यदि हीति। व्यवहितवासनोच्छेदेऽपि नाव्यवहितवासनोच्छिद्यते तथा चानन्तरजन्मोत्थवासनासामर्थ्यात् मर्कटशिशोर्यथोक्तकौशलमविरुद्धमित्याशङ्क्याऽऽह—न चेति। किञ्च पूर्वप्रज्ञा चेत्यविशेषेण पूर्वजन्मार्जितवासना जीवमनुगच्छतीति श्रवणादव्यवहितपूर्वजन्मवासनैव तमन्वेतीति न शक्यं विशेषतो वक्तुमित्याह—तं विद्येति। दृष्टान्तमुपपाद्य दार्ष्टान्तिकं निगमयति—तस्मादिति। शेषकर्मसद्भावे फलितमाह—यत इति। उपभुक्तात्कर्मणः शेषेणेति सम्बन्धः—कश्चिदिति। श्रौतो वा स्मार्तो वा यौक्तिको वा लौकिको वेत्यर्थः।

एतमेवाध्वानमिति प्रकृतमध्वानं प्रश्नपूर्वकं विशदयति—कोऽसावित्यादिना। यथेतमित्युक्तमाक्षिपति—नन्विति। किं यथेतमित्येतदेव न सम्भवति किं वा यथेतमेवेति नियमो नोपपद्यते तत्राऽऽद्यं दूषयति—नैष दोष इति। द्वितीयं प्रत्याह—न चेति। अत्रेति निवृत्तिरुक्ता। अनेवंविधमपीति। यथा गतिक्रमो दर्शितो न तथा निवृत्तिर्नियता किं तु विधान्तरेणापि सम्भवतीत्यर्थः। निवृत्तेः क्रमनियमाभावे कीदृशो नियमो विवक्षित इत्याशङ्क्याऽऽह—पुनरिति। केनाभिप्रायेण तर्हि यथेतमित्युक्तमत आह—अत इति। गतिक्रमवन्निवृत्तिक्रमे नियमाभावोऽतःशब्दार्थः। उक्तं च "यथेतमनेवं चे"ति। निवृत्तिनियमे फलितमाह—अत इति। परमात्मानं व्यावर्तयितुं भौतिकमित्युक्तम्। कथं पूर्वसिद्धाकाशतादात्म्यापत्तिरवरोहतां सिध्यतीत्याशङ्क्य तत्साम्यगमनमेव तद्भावापत्तिरित्युपचर्यते स्वाभाव्या-

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥६॥

वायुभूता इतश्चामुतश्चोह्यमानास्ताभिः सह क्षीणकर्मा वायुभूतो भवति। वायुर्भूत्वा ताभिः सहैव धूमो भवति। धूमो भूत्वाऽभ्रमब्भरणमात्ररूपो भवति ॥ ५ ॥

अभ्रं भूत्वा ततः सेचनसमर्थो मेघो भवति मेघो भूत्वोन्नतेषु प्रदेशेष्वथ प्रवर्षति। वर्षधारारूपेण शेषकर्मा पततीत्यर्थः। त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इत्येवंप्रकारा जायन्ते। क्षीणकर्मणामनेकत्वाद्बहुवचननिर्देशः। मेघादिषु पूर्वेष्वेकरूपत्वादेकवचननिर्देशः। यस्माद्गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसन्निवेशासहस्राणि वर्षधाराभिः पतितानाम्। अतस्तस्माद्वैतोवै खलु दुर्निष्प्रपतरं दुर्निष्क्रमणं दुर्निःसरणम्। यतो गिरितटादुदकस्रोतसोह्यमाना नदीः प्राप्नुवन्ति ततः समुद्रं ततो मकरादिभिर्भक्ष्यन्ते। तेऽप्यन्येन। तत्रैव च सह मकरेण समुद्रे विलीनाः समुद्राम्भोभिर्जलधरैराकृष्टाः पुनर्वर्षधाराभिर्मरुदेशे शिलातटे वाऽगम्ये पतितास्तिष्ठन्ति कदाचिद्व्यालमृगादिपीता भक्षिताश्चान्यैः। तेऽप्यन्यैरित्येवंप्रकाराः परिवर्तेरन्। कदाचिदभक्ष्येषु स्थावरेषु जातास्तत्रैव शुष्येरन्। भक्ष्येष्वपि स्थावरेषु जातानां रेतःसिग्देहसम्बन्धो दुर्लभ एव बहुत्वात्स्थावराणामित्यतो दुर्निष्क्रमणत्वम्।

अथवाऽतोऽस्माद्व्रीहियवादिभावाद्दुर्निष्प्रपतरं दुर्निर्गमतरम्। दुर्निष्प्रपतरमिति तकार एको लुप्तो द्रष्टव्यः। व्रीहियवादिभावो दुर्निष्प्रपतस्तस्मादपि दुर्निष्प्रपताद्रेतःसिग्देहसम्बन्धो दुर्निष्प्रपततर इत्यर्थः। यस्मादूर्ध्वरेतोभिर्बालैः पुंस्त्वरहितैः स्थविरैर्वा भक्षिता अन्तराले शीर्यन्ते। अनेकत्वादन्नादानाम्। कदाचित्काकतालीय-

नरेन्द्रपुरीयं टिप्पणम्

तादात्म्यापत्तिरवरोहतामित्याशङ्क्य तत्साम्यगमनमेव तद्भावापत्तिरुपचर्यत इत्याह—यस्तेषामिति। घृतसंस्थानं घृतकाठिन्यम्। मेघादिषु वायुष्वेकवचननिर्देशो वाय्वादेरेकत्वापेक्षयेत्यर्थः ॥ ५ ॥

अतःशब्दः पूर्वप्रसिद्धकारणपरतया व्याख्यातः। इदानीं व्रीह्याद्यवधिवाचकतया व्याख्येय इत्याह—

आनन्दगिरिटीका

पत्तिरिति न्यायादित्याह—यास्तेषामिति। घृतस्य संस्थानं काठिन्यम्। तास्वाकाशभूतासु तत्परिवेष्टिताः कर्मिणोऽध्यवरोहन्तस्तद्भूता इव भवन्तीत्यर्थः। आकाशाद्वायुमित्यस्यार्थं साधयति—ता अन्तरिक्षादिति ॥ ५ ॥

उन्नतेषु समुद्रादिव्यतिरिक्तेषु प्रदेशेष्विति यावत्। त इत्यनुशयिनो निर्दिश्यन्ते। इहेति पृथिवी कथ्यते। कथमस्मिन्वाक्ये बहुवचनेनानुशयिनां बहूक्त्या निर्देशः कृतस्तत्राऽऽह—क्षीणकर्मणामिति। कथं तर्हि मेघो भूत्वा प्रवर्षतीत्यादावेकवचननिर्देशस्तत्राऽऽह—मेघादिष्विति। ये पूर्वे मेघादयो नभोन्तास्तेषु प्रत्येकमभिमानिदेवताना-मेकरूपत्वात्तदुपश्लिष्टानामनुशयिनामप्येकवचनेन निर्देशो युक्त इत्यर्थः। अतो वै खल्वित्यादिवाक्यं व्याचष्टे—यस्मादिति। अनुशयिनां दुःशकं निःसरणमित्युक्तं प्रपञ्चयति—यत इत्यादिना। मकरादिभिर्भक्षितानामनुशयिनां तेभ्यस्तत्समानजातीयत्वेन समुद्भवो भविष्यतीति चेन्नेत्याह—तेऽपीति। मकरादयोऽपि जलचारिभिरन्यैर्भक्ष्यन्ते तथा च समुद्रे पतितानामनुशयिनां तत्रैव लयः स्यादित्यर्थः। नन्वेवमनुशयिनः समुद्रे लीना न ततः पुनरुद्धर्तुं शक्यन्ते तथा च कृतविनाशः स्यादित्याशङ्क्याऽऽह—जलधरैरिति। समुद्राम्भोभिरिति तृतीया सहार्थे। तर्हि सर्पव्याघ्रोपभुक्तानामनुशयिनां तत्समानजातीयदेहभोगः स्यादिति चेन्नेत्याह—भक्षिताश्चेति। यैस्तर्हि सर्पादयो भक्ष्यन्ते तेभ्यस्तत्समानजातीयत्वेनानुशयिनामुद्भवः स्यादिति चेन्नेत्याह—तेऽपीति। तथाऽपि यथोक्तरीत्या परिवर्तनात्ते रेतःसिग्योगमपि यदा कदाचित्प्रपद्येरन्निति चेन्नेत्याह—कदाचिदिति। तथाऽपि भक्ष्येषु जातानां रेतःसिग्योग सुलभः स्यादिति चेन्नेत्याह—भक्ष्येष्वपीति। इतिशब्दो यच्छब्देन पूर्वेण सम्बध्यते।

पूर्वमतःशब्दो हेतुपरतया व्याख्यातः संप्रति व्रीह्याद्यवधिवाचकत्वेन तं व्याचष्टे—अथवेति। दुर्निष्प्रपततरमिति तकारसहिते पाठे सति विवक्षितमर्थमाह—व्रीहियवादीति। तत्र हेतुमाह—यस्मादिति। तर्हि तेषामन्तराले विशीर्णानां देहभागित्वाभावादनुशयवैयर्थ्यमित्याशङ्क्याऽऽह—कदाचिदिति। काकतालीयया वृत्त्या यादृच्छिकन्याये-

वृत्त्या रेतःसिग्भिर्भक्ष्यन्ते यदा तदा रेतःसिग्भावं गतानां कर्मणो वृत्तिलाभः। कथम्। यो यो ह्यन्नमत्त्यनुशयिभिः संश्लिष्टं रेतःसिग्यश्च रेतः सिञ्चत्यृतुकाले योषिति तद्भूय एव तदाकृतिरेव भवति। तदवयवाकृतिभूयस्त्वं भूय इत्युच्यते रेतोरूपेण योषितो गर्भाशयेऽन्तः प्रविष्टोऽनुशयी। रेतसो रेतःसिगाकृतिभावितत्वात्। "सर्वेभ्योऽङ्गेभ्यस्तेजः संभूतम्" इति हि श्रुत्यन्तरात्। अतो रेतःसिगाकृतिरेव भवतीत्यर्थः।

तथा हि। पुरुषात्पुरुषो जायते गोर्गवाकृतिरेव न जात्यन्तराकृतिस्तस्माद्युक्तं तद्भूय एव भवतीति। ये त्वन्येऽनुशयिभ्यश्चन्द्रमण्डलमनारुह्येहैव पापकर्मभिर्घोरैर्व्रीहियवादिभावं प्रतिपद्यन्ते पुनर्मनुष्यादिभावं तेषां नानुशयिनामिव दुर्निष्प्रपतरम्। कस्मात्। कर्मणा हि तैर्व्रीहियवादिदेह उपात्त इति तदुपभोगनिमित्तक्षये व्रीह्यादिस्तम्बदेहविनाशे यथाकर्मार्जितं देहान्तरं नवं नवं जलूकावत्संक्रमन्ते सविज्ञाना एव "सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति" इति श्रुत्यन्तरात्।

यद्यप्युपसंहृतकरणाः सन्तो देहान्तरं गच्छन्ति तथाऽपि स्वप्नवद्देहान्तरप्राप्तिनिमित्तकर्मोद्भावितवासनाज्ञानेन सविज्ञाना एव देहान्तरं गच्छन्ति। श्रुतिप्रामाण्यात्। तथाऽर्चिरादिना धूमादिना च गमनं स्वप्न इवोद्भूतविज्ञानेन। लब्धवृत्तिकर्मनिमित्तत्वाद्गमनस्य। न तथाऽनुशयिनां व्रीह्यादिभावेन जातानां सविज्ञानमेव रेतःसिग्योषिद्देहसम्बन्ध उपपद्यते। न हि व्रीह्यादिलवनकण्डनपेषणादौ च सविज्ञानानां स्थितिरस्ति।

### नरेन्द्रपुरीयं टिप्पणम्

अथवेति। रेतोभूयत्वे हेतुमाह—रेतस इति। रेतस्सिच आकृत्याऽङ्गसन्निवेशेन भावितत्वात् संस्कृतत्वात्तदङ्गसम्भूतत्वादित्यर्थः। चन्द्रमण्डलादवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभो भवतीत्युक्तम्। तर्हि व्रीह्यादिशरीराभिमानिनामपि तथैव दुर्निष्क्रमणं व्रीह्यादिशरीरसम्बन्धमात्राविशेषादिति नाशङ्कनीयमिति प्रसङ्गादाह—ये त्वन्येऽनुशयिभ्य इत्यादिना। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिशास्त्रात् कर्मनिमित्तं येषां स्थावरजन्म तेषां क्षय एवावधिः। अवरोहतां तु कर्मासङ्कीर्तनाद्वैषम्यमित्यर्थः। ननूपसंहृतकरणानां ज्ञाने कारणासम्भवात् कथं सविज्ञानत्वं तत्राह—यद्यपीति। दृष्टकारणाभावेऽपि अदृष्टमेवैकं वासनात्मकं ज्ञानोत्पत्तौ

### आनन्दगिरिटीका

नेति यावत्। अनुशयाख्यस्य कर्मणो भाविदेहारम्भार्थत्वान्मुख्यं प्रश्नपूर्वकं विवृणोति—कथमित्यादिना। अनुशयिनो रेतःसिगाकारभाक्त्वे हेतुमाह—रेतस इति। तस्य रेतःसिगाकृत्या तदंशेन भावितत्वात्संस्कृतत्वात्तदङ्गसम्भूतत्वात्तद्रूपेण गर्भाशयमनुप्रविष्टोऽनुशयी रेतःसिगाकृतिर्भवतीत्यर्थः। रेतसो रेतःसिगङ्गसमुत्थत्वे प्रमाणमैतरेयकश्रुतिरित्याह—सर्वेभ्य इति। रेतोरूपेण गर्भाशयं प्रविष्टस्य रेतःसिगाकारत्वमुक्तं निगमयति—अत इति।

अनुशयिनो रेतःसिगाकारत्वे लौकिकानुभवमनुकूलयति—तथा हीति। चन्द्रस्थलस्खलितानामवरोहतां व्रीह्यादिदेहसंश्लिष्टानां द्राघीयसा कालेन देहान्तरलाभश्चेत्तर्हि व्रीह्यादिदेहाभिमानिनामपि दुःशकं निष्क्रमणं व्रीह्यादिदेहसम्बन्धाविशेषादित्यत आह—ये त्विति। व्रीह्यादिदेहसम्बन्धाविशेषे कुतस्तद्देहभाजां ततो निःसरणमशक्यं न भवतीत्याशङ्क्य विशेषमाह—कस्मादित्यादिना। "शरीरजैः कर्मदोषैर्याति स्थावरतां नरः" इत्यादिश्रुतिस्मृत्योर्येषां कर्मनिमित्तं स्थावरं जन्म तेषां कर्मक्षयः एवावधिः। अवरोहतां तु कर्मासङ्कीर्तनाद्वैषम्यमित्यर्थः। यथा जलूका तृणात्तृणान्तरं दीर्घभूता संक्रमते न तथाऽनुशयिनो व्रीह्यादिदेहभाजोऽपि तत्त्यागेन देहान्तरं गच्छन्ति। तद्विषयविज्ञानवन्त एव गच्छन्तीत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति—सविज्ञान इति।

अथोपसंहृतकरणानां विज्ञाने कारणासम्भवात्कथं सविज्ञानत्वं तत्राऽऽह—यद्यपीति। दृष्टकारणाभावेऽप्यदृष्टमेवैकं वासनात्मकं ज्ञानोत्पत्तौ निमित्तमिति तेन सविज्ञाना एव गच्छन्ति देहान्तरमित्यत्र हेतुमाह—श्रुतिप्रामाण्यादिति। श्रुतिरत्र बृहदारण्यकश्रुतिः। यथा सविज्ञानानामेव व्रीह्यादिदेहान्तरगमनं तथा ज्ञानिनामर्चिरादिना कर्मिणां धूमादिना च गमनं स्वप्नवदुद्भूतवासनात्मकविज्ञानेन सविज्ञानानामेवेत्याह—तथेति। तेषां सविज्ञानत्वे हेतुमाह—लब्धवृत्तीति। अनुशयिनामपि तर्हि व्रीह्यादिषु संश्लिष्टानां रेतःसिगादिदेहसम्बन्धः सविज्ञानानामेवेति चेन्नेत्याह—न तथेति। अनुपपत्तौ हेतुमाह—न हीति। व्रीह्यादिसंश्लिष्टानामनुशयिनां सविज्ञानत्वे तल्लवनादौ तज्जीववत्तेषामपि प्रवासप्रसङ्गान्न रेतःसिग्देहसम्बन्धः सिध्येदित्यर्थः।

ननु चन्द्रमण्डलादप्यवरोहतां देहान्तरगमनस्य तुल्यत्वाज्जलूकावत्सविज्ञानतैव युक्ता। तथा सति घोरो नरकानुभव इष्टापूर्तादिकारिणां चन्द्रमण्डलादारभ्य प्राप्तो यावद्ब्राह्मणादिजन्म। तथा च सत्यनर्थायैवेष्टापूर्ताद्युपासनं विहितं स्यात्। श्रुतेश्चाप्रामाण्यं प्राप्तं वैदिकानां कर्मणामनर्थानुबन्धित्वात्।

न, वृक्षारोहणपतनवद्विशेषसम्भवात्। देहाद्देहान्तरं प्रतिपित्सोः कर्मणो लब्धवृत्तित्वात्कर्मणोद्भावितेन विज्ञानेन सविज्ञानत्वं युक्तम्। वृक्षाग्रमारोहत इव फलं जिघृक्षोः। तथार्चिरादिना गच्छतां सविज्ञानत्वं भवेत्। धूमादिना च चन्द्रमण्डलमारुरुक्षताम्। न तथा चन्द्रमण्डलादवरुरुक्षतां वृक्षाग्रादिव पततां सचेतनत्वम्। यथा च मुद्गराद्यभिहतानां तदभिघातवेदनानिमित्तसंमूर्छितप्रतिबद्धकरणानां स्वदेहेनैव देशाद्देशान्तरं नीयमानानां विज्ञानशून्यता दृष्टा तथा चन्द्रमण्डलान्मानुषादिदेहान्तरं प्रत्यवरुरुक्षतां स्वर्गभोगनिमित्तकर्मक्षयान्मृदिताब्देहानां प्रतिबद्धकरणानाम्। अतस्तेऽपरित्यक्तदेहबीजभूताभिरद्भिर्मूर्छिता इवाऽऽकाशादिक्रमेणेमामवरुह्य कर्मनिमित्तजातिस्थावरदेहैः संश्लिष्यन्ते प्रतिबद्धकरणतयाऽनुद्भूतविज्ञाना एव।

## नरेन्द्रपुरीयं टिप्पणम्

निमित्तमित्यर्थः। देहान्तरप्राप्तेरविशेषात् सविज्ञानत्वमाशङ्क्य विशेषमाह—ननु चन्द्रमण्डलादित्यादिना। अवरोहतां जीवानां चैतन्यस्य भावात् सर्वथा विज्ञानशून्यत्वमयुक्तं वृक्षाग्रात्पततोऽप्यस्त्येव पतनविज्ञानमित्याशङ्क्य दृष्टान्तमाह—यथा चेति। तदभिघातेन वेदनैव निमित्तं तेन संमूर्च्छितानि संहृतानि प्रतिबद्धानि च करणानि येषामुन्मृदितो विनष्टोऽब्देहो अम्मयः स्थूलदेहो येषां तत एव प्रतिबद्धकरणानां विज्ञानशून्यता युक्तेति सम्बन्धः। मूर्च्छितानां स्थूलदेहसद्भावाद्देशान्तरनयनं सम्भवत्यवरोहतां तु स्थूलदेहाभावे कथं व्रीह्यादिभावगमनमित्याशङ्क्याह—अपरित्यक्तेति। आरप्स्यमाणस्य देहस्य बीजं कर्मापूर्वमपरित्यक्तं याभिरद्भिस्ताभिः परिवेष्टिता कर्मापूर्वसंस्कृतभूतसूक्ष्मोपहिता जातिस्थावरैस्संश्लिष्यन्त इति सम्बन्धः। स्थावरदेहसम्बन्धित्वात्तद्गतजीववत्सविज्ञानत्वं तदा भवतीति न वाच्यमित्याह—प्रतिबद्धेति। कर्मणोऽनुद्भूतवृत्तित्वात् स्वकरणानां तत्र वृत्तिलाभाभावादनुद्भूतविज्ञानत्वं युक्तमित्यर्थः। न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं तथा व्रीह्यादेर्लवनादिकाले मूर्च्छितवदनुद्-

## आनन्दगिरिटीका

व्रीह्यादिषु देहान्तरं गच्छत्सु सविज्ञानत्वोपलम्भादनुशयिष्वपि देहान्तरप्राप्तेरविशेषाद्युक्तं सविज्ञानत्वमिति शङ्कते—नन्विति। तृणात्तृणान्तरं प्रति जलूकागमनवदवरोहतामपि देहाद्देहान्तरं प्रति गमनस्य तुल्यत्वाद्व्रीह्यादिवद्युक्ता सविज्ञानतेति योजना। अस्तु तेषां सविज्ञानत्वं का हानिरित्यत आह—तथा सतीति। इष्टापूर्तादिकारिणामन्तराले नरकानुभवे। तथा च सति तदनुष्ठानस्यानर्थार्थं विहितत्वे श्रेयःसाधनविषयककर्मकाण्डं विरुध्येतेत्याह—श्रुतेश्चेति।

यथा वुद्धिपूर्वं वृक्षमारोहतां सविज्ञानत्वेऽपि तस्मादबुद्धिपूर्वं पततां न सविज्ञानत्वं विज्ञायते तथा चन्द्रमण्डलमारोहतां सविज्ञानत्वेऽपि ततोऽवरोहतां नैव तदस्ति उद्भूतकर्माभावात् इत्यारोहावरोहयोर्ज्ञाने विशेषसम्भवान्नैवमिति परिहरति—न वृक्षेति। संग्रहवाक्यं विवृणोति—देहादित्यादिना। चकाराद्गच्छतां सविज्ञानत्वं भवेदिति सम्बन्धः। अवरोहतां जीवानां सर्वथा विज्ञानशून्यत्वमयुक्तं चैतन्यस्वाभाव्याद्वृक्षात्पततामपि विज्ञानमात्रमस्त्येवेत्याशङ्क्योदाहरणान्तरमाह—यथा चेति। तेन मुद्गरादिना योऽभिघातस्तेन हेतुना यद्वेदनाख्यं निमित्तं तेन संमूर्छितानि संहृतानि प्रतिबद्धानि वा करणानि येषां तेषामिति यावत्। मृदितो विनष्टो देहोऽम्मयः स्थूलो देहो येषां तेषां तत एव प्रतिबद्धकरणानां विज्ञानशून्यतेति सम्बन्धः। यथोक्तदृष्टान्तवशाच्चन्द्रमण्डलादवरोहन्तो विज्ञानशून्याः सिध्यन्तीति निगमयति—अत इति। तथाऽपि मूर्छितानां स्थूलदेहसद्भावाद्देशान्तरगमनं युक्तम्। अवरोहतां तु तदभावे कथं व्रीह्यादिभावः सम्भवतीत्यत आह—अपरित्यक्तेति। न परित्यक्तं देहभावस्य बीजं कर्मापूर्वं याभिस्ताभिरद्भिरुपहिता जीवा मूर्छितवद्विज्ञानशून्या गमनादिक्रमेण पृथिवीं प्राप्य कर्मफलभूतजातिस्थावरशरीरैः संश्लिष्यन्त इति सम्बन्धः। स्थावरदेहसम्बन्धित्वात्तद्गतजीववत्तदा सविज्ञानत्वं सम्भवतीत्याशङ्क्याऽऽह—प्रतिबद्धेति। व्रीह्यादिसंश्लेषावस्थायामनुशयिनां कर्मणोऽनुद्भूतवृत्तित्वात्करणानां तत्र वृत्तिलाभाभावादनुद्भूतविज्ञानत्वं युक्तमित्यर्थः।

**तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा ॥ ७ ॥**

तथा लवनकण्डनपेषणसंस्काररभक्षणरसादिपरिणामरेतःसेककालेषु मूर्छितवदेव। देहान्तरारम्भकस्य कर्मणोऽलब्धवृत्तित्वात्। देहबीजभूताप्सम्बन्धापरित्यागेनैव सर्वास्ववस्थासु वर्तन्त इति जलूकावच्चेतनावत्त्वं न विरुध्यते। अन्तराले त्वविज्ञानं मूर्छितवदेवेत्यदोषः।

न च वैदिकानां कर्मणां हिंसायुक्तत्वेनोभयहेतुत्वं शक्यमनुमातुम्। हिंसायाः शास्त्रचोदितत्वात्। "अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतेः शास्त्रचोदिताया हिंसाया नाधर्महेतुत्वमभ्युपगम्यते। अभ्युपगतेऽप्यधर्महेतुत्वे मन्त्रैर्विषादिवत्तदपनयोपपत्तेर्न दुःखकार्यारम्भकत्वोपपत्तिर्वैदिकानां कर्मणां मन्त्रेणेव विषभक्षणस्येति ॥६॥

तत्तत्र तेष्वनुशयिनां य इह लोके रमणीयं शोभनं चरणं शीलं येषां ते रमणीयचरणाः रमणीयचरणेनोप-

### नरेन्द्रपुरीयं टिप्पणम्

भूतविज्ञाना एवान्नेन संश्लिष्यन्ते। संस्कारः पाकः। रसादिपरिणामेति। "जग्धादन्नाद्रसोत्पत्तिश्शोणितं जायते रसात्। शोणिताज्जायते मांसं मांसान्मेदस्समुद्भवः। मेदसोऽस्थीनि जायन्ते मज्जाऽप्यस्थिसमुद्भवा॥ मज्जायाश्च रेतसस्सिद्धिरित्यर्थः।विज्ञानशून्यत्वे कथं सचेतना जलूका दृष्टान्तः स्यात्। "तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसंहरती"त्यादौ तत्राह—देहबीजभूतेति। सातत्यं जलूकादृष्टान्ते विवक्षितं न चेतनावत्त्वमित्यर्थः। आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्यमिति मतमुपपाद्यारोहतामपि सविज्ञानत्वं यावत् स्वस्थानेभ्यः करणान्युपसंहृत्य हृदयेऽवतिष्ठते तावदेव। न देहाद्बहिर्निर्गतस्य देहान्तरप्राप्तेः प्रागित्याह—अन्तराले त्विति। यच्चोच्यते सांख्यैः इष्टादिकर्मणां हिंसानुग्रहात्मकत्वात् स्थावरत्वमपि तत्फलमेवेति तत्राह—न चेति ॥६॥

तृतीयस्थानोपदेशात् पूर्वोक्तस्थानद्वयं संक्षेपेणानुवदति—ये तु रमणीयचरणा द्विजातय इत्यादिना ॥ ७ ॥

### आनन्दगिरिटीका

न केवलं व्रीह्यादिसंश्लेषकालेऽनुद्भूतविज्ञानत्वं किन्तु व्रीह्यादेर्लवनादिकालेऽपीत्याह—तथेति। पाकः-संस्कारः। रसादीत्यादिशब्देन शोणितमांसमेदोऽस्थिमज्जारेतांस्युच्यन्ते। तस्मिन्काले मूर्छितवदनुद्भूतविज्ञानत्वं देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्येवेति हेतुमाह—देहेति। अलब्धवृत्तित्वादिति च्छेदः। कथं पुनरनुशयिनां विज्ञानशून्यत्वे "तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्याऽऽत्मानमुपसंहरती"त्यादौ सचेतना जलूका दृष्टान्तत्वेनोपादीयते तत्राऽऽह—देहबीजभूतेति। सर्वास्ववस्थासु तासु व्रीह्यादिसंश्लेषतल्लवनादिदशास्विति यावत्। न चेतनावत्त्वं जलूकादृष्टान्ते विवक्षितं किन्तु सातत्यमात्रमिति भावः। जलूकावत्त्वं जलूकासादृश्यमनुशयिनामित्यर्थः। आरोहतां सविज्ञानत्वमवरोहतां विज्ञानराहित्यमित्युपपाद्याऽऽरोहतामपि यावत्स्वस्थानेभ्यः करणान्युपसंहृत्य हृदयेऽवस्थानं तावदेव सविज्ञानत्वं न देहाद्बहिर्निर्गतानां प्राग्देहान्तरप्राप्तेस्तदस्त्यनुशयिनां तु चन्द्रमण्डलादवरुरुक्षतामपि न भाविदेहपर्यन्ता वासना दीर्घा भवति प्रमाणाभावादित्याह—अन्तराले त्विति। चन्द्रमण्डलादवरोहतां देहान्तरगमनस्य तुल्यत्वेऽपि विज्ञानशून्यत्वमदुष्टमित्युपसंहरति—इत्यदोष इति।

यत्तु हिंसानुग्रहात्मकत्वाद्वैदिककर्मणां स्थावरत्वमपि तत्फलमेव तथा च वैदिकानां कर्मणामनर्थानुबन्धित्वादप्रामाण्यं श्रुतेरिति तत्राऽऽह—न चेति। उभयहेतुत्वमर्थानर्थहेतुत्वमिति यावत्। अहिंसन्नित्यादिश्रुतेः शास्त्रचोदितवैदिकेषु कर्मसु हिंसा नानर्थहेतुरित्याह—अभ्युपगतेऽपीति। यद्यपि स्वरूपेण हिंसाऽनर्थहेतुरभ्युपगम्यते तथाऽपि तद्युक्तानां वैदिककर्मणां नानर्थारम्भकत्वं यथा स्वरूपेण विषदध्यादेर्मरणज्वरादिहेतुत्वेऽपि मन्त्रशर्करादिभिः सहोपयुक्तं सन्न तत्कार्यारम्भकम् तथा हिंसायाः स्वतोऽधर्महेतुत्वेऽपि वैदिककर्मनिष्ठाया न तद्धेतुत्वं वैदिकैरेव कर्मभिस्तत्कृतदोषापनयनसिद्धेरित्यर्थः। पूर्वोक्तमेव दृष्टान्तं स्पष्टयति—मन्त्रेणेति। तेन सहोपभुक्तस्य विषस्यानर्थाहेतुत्वेन पुष्टिहेतुत्ववद्वैदिककर्मानुप्रविष्टाया हिंसायाः पुरुषार्थत्वमेव। अशुद्धमिति चेन्न शब्दादिति न्यायादित्यर्थः ॥६॥

तद्भूय एव भवतीत्येतत्प्रसङ्गागतं परिसमाप्य प्रकृतश्रुतिव्याख्यानमनुवर्तयति—तत्तत्रेति। अन्याधिष्ठिते

**अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयँ स्थानं तेनासौ लोको न सम्पूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥**

लक्षितः शोभनोऽनुशयः पुण्यं कर्म येषां ते रमणीयचरणा उच्यन्ते । क्रौर्यानृतमायावर्जितानां हि शक्य उपलक्षयितुं शुभानुशयसद्भावः । तेनानुशयेन पुण्येन कर्मणा चन्द्रमण्डले भुक्तशेषेणाभ्याशो ह क्षिप्रमेव । यदिति क्रियाविशेषणं ते रमणीयां क्रौर्यादिवर्जितां योनिमापद्येरन्प्राप्नुयुर्ब्राह्मणयोनिं वा क्षत्त्रिययोनिं वा वैश्ययोनिं वा स्वकर्मानुरूपेण । अथ पुनर्ये तद्विपरीताः कपूयचरणोपलक्षितकर्माणोऽशुभानुशया अभ्याशो ह यत्ते कपूयां यथाकर्म योनिमापद्येरन्कपूयामेव धर्मसम्बन्धवर्जितां जुगुप्सितां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा स्वकर्मानुरूपेणैव । ये तु रमणीयचरणा द्विजातयस्ते स्वकर्मस्थाश्चेदिष्टादिकारिणस्ते धूमादिगत्या गच्छन्त्यागच्छन्ति च पुनः पुनर्घटीयन्त्रवत् । विद्यां चेत्प्राप्नुयुस्तदार्चिरादिना गच्छन्ति ॥ ७ ॥

यदा तु न विद्यासेविनो नापीष्टादिकर्म सेवन्ते तदाऽथैतयोः पथोर्यथोक्तयोरर्चिर्धूमादिलक्षणयोर्न कतरेणान्यतरेणचनापि यन्ति तानीमानि भूतानि क्षुद्राणि दंशमशककीटादीन्यसकृदावर्तीनि भवन्ति । अत उभयमार्गपरिभ्रष्टा ह्यसकृज्जायन्ते म्रियन्ते चेत्यर्थः । तेषां जननमरणसन्ततेरनुकरणमिदमुच्यते । जायस्व म्रियस्वेतीश्वरनिमित्तचेष्टोच्यते । जननमरणलक्षणेनैव कालयापना भवति । न तु क्रियासु भोगेषु वा कालोऽस्तीत्यर्थः । एतत्क्षुद्रजन्तुलक्षणं तृतीयं पूर्वोक्तौ पन्थानावपेक्ष्य स्थानं संसरताम् । येनैवं दक्षिणमार्गगा अपि पुनरागच्छन्त्यनधिकृतानां ज्ञानकर्मणोर-

नरेन्द्रपुरीयं टिप्पणम्

पौनःपुन्ये लोण्मध्यमैकवचनान्ततायास्सर्वाख्यातेषु विधानात् पुनः पुनर्जायन्ते म्रियन्ते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह—तेषां च जननेति । अथवेश्वरः प्रेरयति त्वं जायस्व म्रियस्वेत्येतदुच्यत इत्याह—

आनन्दगिरिटीका

[1]पूर्ववदभिलापादिति न्यायेन तेषु व्रीह्यादिषु संश्लिष्टा येऽनुशयिनस्तेषां मध्ये ये केचिदस्मिँल्लोके चन्द्रमण्डलप्राप्तेः प्रागवस्थायामनुष्ठिताभुक्तरमणीयचरणास्ते रमणीयां योनिमापद्येरन्निति संबन्धः । उक्तमेव स्पष्टयति—शोभन इति । कथं रमणीयचरणानुरोधेन शोभनोऽनुशयो लक्ष्यते तत्राऽऽह—क्रौर्येति । ते खल्वनुशयिनो रेतःसिग्योगानन्तरं तेन कर्मणा रमणीयां योनिमापद्येरन्निति यत्तत् क्षिप्रमेवेति योजना । तत्रापि हेतुमाह—स्वकर्मेति । अथेति प्रतीकं गृहीत्वा व्याचष्टे—पुनरिति । तद्विपरीतास्तेभ्यो विलक्षणा इति यावत् । ते कपूयां योनिमशुभानुशयवशाद्रेतःसिग्योगानन्तरमापद्येरन्निति यत्तदपि क्षिप्रमेवेति योजना । तत्रापि विकल्पे कारणमाह—स्वकर्मेति । योनिविकल्पे तृतीयं पन्थानमवतारयितुं पूर्वोक्तौ पन्थानौ संक्षिप्यानुवदति—ये त्विति । शुभानुशयवशाद्ये केचित् ब्राह्मणादियोनिमापन्नास्ते स्ववर्णाश्रमविहितकर्मनिष्ठास्सन्तो यदीष्टादिकर्म कृतवन्तस्तदा दक्षिणेन पथा चन्द्रं गच्छन्ति । तत्र च भोक्तव्ये भोगेन क्षीणे पुनरवशिष्टेन कर्मणा पृथिवीमागच्छन्ति । एवं घटीयन्त्रवत्पुनः पुनरारोहन्तोऽवरोहन्तश्च केवलकर्मिणो दृश्यन्ते चेद्द्विजातयः स्वकर्मस्थाः सन्तो ध्यानं लभेरन्नुत्तरेण यानेनेतो ब्रह्मलोकं गच्छन्तीत्यर्थः ॥ ७ ॥

इदानीं तृतीयस्थानमुपदिशति—यदा त्विति । पौनःपुन्ये [2]लोण्मध्यमैकवचनात्तयोः सर्वाख्यातेषु विधानात्पुनः पुनर्जायन्ते म्रियन्ते चेत्यस्मिन्नर्थे जायस्व म्रियस्वेति प्रयोग इत्याह—तेषामिति । यद्वा सर्वेश्वरो मार्गद्वयभ्रष्टं दृष्ट्वा तं जायस्व म्रियस्वेति प्रेरयत्येतदिहोच्यत इति द्रष्टव्यम् । तेनासावित्यादिवाक्यं व्याचष्टे—

---

१. पूर्ववदिति ब्र० सू ३-१-२४ अन्याधिष्ठिते पूर्ववदभिलापात्—स्वर्गादवरोहतां त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते इत्यनेन व्रीह्यादिभाव उक्तः। स च अन्यैः जीवैः अधिष्ठितेषु व्रीह्यादिषु संसर्गमात्रं, न तद्भावः तद्रूपेण जन्म–पूर्ववत् कर्मव्यापारमन्तरेण अभिलापादित्यर्थः। तद्रूपेण जन्मचेत् तद्य इह रमणीयचरणा रमणीयां योनिमापद्येरन् इतिवत् कर्मव्यापारः कीर्त्येत इत्यर्थः।

२. क्रियासमभिहारे लोट्लोटो हिस्वौ वा च तद्ध्वमोः पा० सू० ३-४-२ पौनःपुन्ये भृशार्थे च द्योत्ये धातोः लोट् स्यात् तस्य च हिस्वौ वा स्तः तिङामपवादः।

स्तेनो हिरण्यस्य सुरां पिबँ्श्च गुरोस्तल्पमावसन्ब्रह्महा च। एते पतन्ति चत्वारः पञ्चमश्चाऽऽचरँ्स्तैरिति ॥९॥

अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन्पाप्मना
लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥१०॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य दशमः खण्डः

गमनमेव दक्षिणेन पथेति। तेनासौ लोको न संपूर्यते। पञ्चमस्तु प्रश्नः पञ्चाग्निविद्यया व्याख्यातः। प्रथमो दक्षिणोत्तरमार्गाभ्यामपाकृतो दक्षिणोत्तरयोः पथोर्व्यावर्तनाऽपि मृतानामग्नौ प्रक्षेपः समानस्ततो व्यावर्तनाऽन्येऽर्चिरादिना यन्त्यन्ये धूमादिना। पुनरुत्तरदक्षिणायने षण्मासान्प्राप्नुवन्तः संयुज्य पुनर्व्यावर्तन्ते। अन्ये संवत्सरमन्ये मासेभ्यः पितृलोकमिति व्याख्याता। पुनरावृत्तिरपि क्षीणानुशयानां चन्द्रमण्डलादाकाशादिक्रमेणोक्ता। अमुष्य लोकस्यापूरणं स्वशब्देनैवोक्तम्—तेनासौ लोको न संपूर्यत इति। यस्मादेवं कष्टा संसारगतिस्तस्माज्जुगुप्सेत। यस्माच्च जन्ममरणजनितवेदनानुभवकृतक्षणाः क्षुद्रजन्तवो ध्वान्ते च घोरे दुस्तरे प्रवेशिताः सागर इवागाधेऽप्लवे निराशाश्चोत्तरणं प्रति तस्माच्चैवंविधां संसारगतिं जुगुप्सेत बीभत्सेत घृणी भवेन्मा भूदेवंविधे संसारमहोदधौ घोरे पात इति। तदेतस्मिन्नर्थं एष श्लोकः पञ्चाग्निविद्यास्तुतये ॥ ८ ॥

स्तेनो हिरण्यस्य ब्राह्मणसुवर्णस्य हर्ता। सुरां पिबन्ब्राह्मणः सन्। गुरोश्च तल्पं दारानावसन्। ब्रह्महा ब्राह्मणस्य हन्ता चेत्येते पतन्ति चत्वारः। पञ्चमश्च तैः सहाऽऽचरन्निति ॥ ९ ॥

अथ ह पुनर्यो यथोक्तान्पञ्चाग्नीन्वेद स तैरप्याचरन्महापातकिभिः सह न पाप्मना लिप्यते शुद्ध एव। तेन पञ्चाग्निदर्शनेन पावितो यस्मात्पूतः पुण्यो लोकः प्राजापत्यादिर्यस्य सोऽयं पुण्यलोको भवति य एवं वेद यथोक्तं समस्तं पञ्चभिः प्रश्नैः पृष्टमर्थजातं वेद। द्विरुक्तिः समस्तप्रश्ननिर्णयप्रदर्शनार्था ॥ १० ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य दशमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

ईश्वरनिमित्तेति। उक्तप्रकारेण पञ्चापि प्रश्ना निर्णीताः। तान् विविच्य दर्शयति—पञ्चमस्त्वित्यादिना। संयुज्य एकस्य सम्वत्सरस्यावयविनोऽवयवप्राप्तिद्वारेणोभयेषामपि संयोगो गीयते पटप्रदेशद्वयस्पर्शिनोर्ब्राह्मणचाण्डालयोः स्पर्शनवदित्यर्थः ॥ ८–१० ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

येनैवमिति। उक्तया रीत्या निर्णीतान्प्रश्नान्विविच्य प्रतिपत्तिसौकर्यार्थं कथयति—पञ्चमस्त्विति। व्यावर्तनाऽपि व्याख्यातेत्युत्तरत्र सम्बन्धः। मृतानामविदुषां विदुषां चेत्यर्थः। अन्त्येष्ट्यनन्तरं विदुषां कर्मिणां च संवत्सरमिति ज्ञानिनो गृह्यन्ते। अन्ये पितृलोकमिति केवलकर्मिण इति विभागः। क्षीणानुशयानां चन्द्रलोके भोक्तव्यं कर्म भोगेन क्षपितवतामिति यावत्। स्वशब्दमेवानुवदति—तेनेति। किमर्थमेषां महायासवती तीव्रा संसारगतिरुक्तेत्याशङ्क्याऽऽह—यस्मादिति। तृतीयस्थानस्य कष्टत्वं स्पष्टयति—यस्माच्चेति। जन्मादिना जनिता या वेदना तदनुभवे कृतः क्षणोऽवसरो नान्यत्र येषां तथा। अप्लव इति च्छेदः। तृतीयस्थानवदितरयोरावृत्तिमत्त्वात्तुल्या कष्टतेत्यभिप्रेत्याऽऽह—तस्माच्चेति। संसारगत्युपवर्णनस्य तात्पर्यमुक्त्वा पञ्चाग्निविद्यायामनुष्ठानसिद्ध्यर्थं तस्याः स्तावकं श्लोकमुदाहृत्य व्याचष्टे—तदेतस्मिन्नित्यादिना। पञ्चाग्निविद्यामाहात्म्यं सप्तम्यर्थः ॥ ८-९ ॥

पञ्च महापातकिनः श्लोके निर्दिश्यन्ते न तु पञ्चाग्निविद्यास्तुतिरिह भातीत्याशङ्क्याऽऽह—अथेति। शुद्धत्वे हेतुमाह—तेनेति। कस्येदं फलमित्यपेक्षायां पूर्वोक्तविद्यावन्तमनुवदति—य एवमिति ॥ १० ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य दशमः खण्डः

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः [1]को न आत्मा किं ब्रह्मेति ॥ १ ॥**

**ते ह सम्पादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं [2]वैश्वानरमध्येति तँ हन्ताभ्यागच्छामेति तँ हाभ्याजग्मुः ॥ २ ॥**

दक्षिणेन पथा गच्छतामन्नभाव उक्तस्तद्देवानामन्नं तं देवा भक्षयन्तीति। क्षुद्रजन्तुलक्षणा च कष्टा संसारगतिरुक्ता। तदुभयदोषपरिजिहीर्षया वैश्वानरात्तृभावप्रतिपत्त्यर्थमुत्तरो ग्रन्थ आरभ्यते। अत्स्यन्नं पश्यसि प्रियमित्यादिलिङ्गात्। आख्यायिका तु सुखावबोधार्था विद्यासम्प्रदानन्यायप्रदर्शनार्था च—प्राचीनशाल इति नामत उपमन्योरपत्यमौपमन्यवः। सत्ययज्ञो नामतः पुलुषस्यापत्यं पौलुषिः। तथेन्द्रद्युम्नो नामतो भल्लवेरपत्यं भाल्लविस्तस्यापत्यं भाल्लवेयः। जन इति नामतः शर्कराक्षस्यापत्यं शार्कराक्ष्यः। बुडिलो नामतोऽश्वतराश्वस्यापत्यमाश्वतराश्विः। पञ्चापि ते हैते महाशाला महागृहस्था विस्तीर्णाभिः शालाभिर्युक्ताः सम्पन्ना इत्यर्थः। महाश्रोत्रियाः श्रुताध्ययनवृत्तसम्पन्ना इत्यर्थः। त एवंभूताः सन्तः समेत्य संभूय क्वचिन्मीमांसां विचारणां चक्रुः कृतवन्त इत्यर्थः। कथम्। को नोऽस्माकमात्मा किं ब्रह्मेत्यात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वम्। ब्रह्मेत्यध्यात्मपरिच्छिन्नमात्मानं निवर्तयत्यात्मेति चाऽऽत्मव्यतिरिक्तस्याऽऽदित्यादिब्रह्मण उपास्यत्वं निवर्तयति। अभेदेनाऽऽत्मैव ब्रह्म ब्रह्मैवाऽऽत्मेत्येवं सर्वात्मा वैश्वानरो ब्रह्म स आत्मेत्येतत्सिद्धं भवति। मूर्धा ते व्यपतिष्यदन्धोऽभविष्यदित्यादिलिङ्गात् ॥ १ ॥

ते ह मीमांसन्तोऽपि निश्चयमलभमानाः सम्पादयांचक्रुः सम्पादितवन्तः आत्मन उपदेष्टारम्। उद्दालको

नरेन्द्रपुरीयं टिप्पणम्

अत्तुर्वैश्वानरस्योपासनमुक्तानर्थनिवृत्त्यर्थमवतारयति—दक्षिणेन पथेत्यादिना। परिच्छन्नोपासनस्य निन्दितत्वादुपास्यस्य सर्वात्मत्वं गम्यते इत्याह—मूर्धा ते इति ॥ १-४ ॥

आनन्दगिरिटीका

पूर्वोत्तरसंदर्भयोः सम्बन्धं दर्शयन्नुत्तरसन्दर्भमवतारयति—दक्षिणेनेत्यादिना। उत्तरग्रन्थस्य वैश्वानरात्तृभावप्रतिपत्त्यर्थत्वे गमकमाह—अत्सीति। विद्यायाः सम्प्रदानं शिष्यस्तस्य न्यायो विनयादिसंपत्तिस्तत्प्रदर्शनार्था चाऽऽख्यायिका। दृश्यते चात्र प्राचीनशालप्रभृतीनां तत्संपत्तिरित्याह—विद्येति। कथमात्मब्रह्मशब्दयोरितरेतरविशेषणविशेष्यत्वं व्यावर्त्याभावादित्याशङ्क्याऽऽह—ब्रह्मेतीति। उक्तरीत्या मिथो विशेषणविशेष्यत्वे फलितमाह—अभेदेनेति। इतश्चोपास्यस्य सर्वात्मत्वं गम्यते परिच्छिन्नोपासनस्य निन्दितत्वाद्भूम्नः क्रतुवज्ज्यायस्त्वमिति न्यायादित्याह—मूर्धेति ॥ १ ॥

---

१. को न आत्मा किं ब्रह्मेत्यस्य—अस्माकमन्तर्यामितया आत्मभूतं ब्रह्मेत्यर्थं इति परे। तच्चिन्त्यम्—अन्तर्यामी नियामक इत्यर्थः। स च स्वस्माद्भिन्न एव भिन्नस्य नियामकस्य राजादेः कथमात्मत्वम्? लक्षणायां स एव दोषः। आत्मा नाम स्वरूपमिति।

२. वैश्वानरमिति—ब्रह्मसूत्रप्रथमाध्यायद्वितीयपादे वैश्वानरविद्यामधिकृत्य विचारः प्रवर्तितः—वैश्वानरः साधारणशब्दविशेषात् इत्यत्र। वैश्वानरशब्दः यद्यपि जाठराग्निभूताग्नितद्देवताजीवब्रह्मसाधारणः तथापि परमात्मैवात्र ग्राह्यः आत्मशब्दात् एतस्यात्मनो वैश्वानरस्येत्यत्र। द्युमूर्धत्वादीनामन्यत्रासंभवात् परमात्मनि तु सर्वसाधारणत्वात् कार्यधर्माणां तत्रारोपसंभवात् जाठराग्नौ परमेश्वरदृष्टिरत्र चोद्यते। अन्योऽपि वैश्वानरविद्यामधिकृत्य विचारः तृतीयाध्यायतृतीयपादे ३२ अधिकरणे प्रवर्तितः। स इत्थं—किं प्रत्यवयवं वैश्वानरोपासनं कर्तव्यं उत समुच्चित्यैकमुपासनमिति सन्देहे समुचित्यैव एकमुपासनं कार्यम्। भूम्नः क्रतुवज्ज्यायस्त्वम् कुतः प्रत्येकोपासनस्य निन्दितत्वात् अन्धोऽभविष्यो यन्मां नागमिष्य इति इत्यादौ।

स ह सम्पादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

तान्होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीममात्मानं वैश्वानरमध्येति तँ हन्ताभ्यागच्छामेति तँ हाभ्याजग्मुः ॥ ४ ॥

तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥

वै प्रसिद्धो नामतो भगवन्तः पूजावन्तोऽयमारुणिररुणस्यापत्यं सम्प्रति सम्यगिममात्मानं वैश्वानरमस्मदभिप्रेतमध्येति। तं हन्तेदानीमभ्यागच्छामेत्येवं निश्चित्य तं हाभ्याजग्मुर्गतवन्तस्तमारुणिम् ॥ २ ॥

स ह तान्दृष्ट्वैव तेषामागमनप्रयोजनं बुद्ध्वा सम्पादयाञ्चकार। कथम्। प्रक्ष्यन्ति मां वैश्वानरमिमे महाशाला महाश्रोत्रियास्तेभ्योऽहं न सर्वमिव पृष्टं प्रतिपत्स्ये वक्तुं नोत्सहे। अतो हन्ताहमिदानीमन्यमेषामभ्यनुशासानि वक्ष्याम्युपदेष्टारमिति ॥ ३ ॥

एवं सम्पाद्य तान्होवाच। अश्वपतिर्वै नामतो भगवन्तोऽयं केकयस्यापत्यं कैकेयः सम्प्रति सम्यगिममात्मानं वैश्वानरमध्येतीत्यादि समानम् ॥ ४ ॥

तेभ्यो ह राजा प्राप्तेभ्यः पृथक्पृथगर्हाण्यर्हणानि पुरोहितैर्भृत्यैश्च कारयाञ्चकार कारितवान्। स हान्येद्यू राजा प्रातः सञ्जिहान उवाच विनयेनोपगम्यैतद्धनं मत्त उपाददध्वमिति। तैः प्रत्याख्यातो मयि दोषं पश्यन्ति नूनं यतो न प्रतिगृह्णन्ति मत्तो धनमिति मन्वान आत्मनः सद्वृत्ततां प्रतिपिपादयिषन्नाह। न मे मम जनपदे स्तेनः

नरेन्द्रपुरीयं टिप्पणम्

राजधर्मप्रदर्शनार्थमाह—तेभ्यो ह राजेति। अश्वपतिवृत्तसंकीर्तनमात्मविदां कर्मानुष्ठानदाढर्यार्थमिति—भास्करोक्तमसारम्। अकर्तृब्रह्मात्मतासाक्षात्कारेण व्यावृत्तकर्तृत्वाध्यासानां कर्मदाढर्यानुपपत्तेः। अश्वपतिः द्युमूर्धत्वादिविशिष्टब्रह्मोपासकोऽव्यावृत्तकर्तृत्वप्रत्ययः करोत्येव कर्माणि। यच्चोक्तं यः पुनर्ज्ञानावलेपात्त्यक्तकर्मा तिष्ठति स दोषेण लिप्यत इति। तत्र को ज्ञानावलेपः, किमपरिपक्वे ज्ञाने ज्ञानत्वाभिमानः किं वा परिपक्वे ? नाद्यः, संन्यासविध्युच्छेदप्रसङ्गात्। इष्यते च परिपक्वज्ञानस्येच्छावशेन संन्यासः। "एतमेव लोकमिच्छन्तः प्रव्राजिनः

आनन्दगिरिटीका

भगवन्तः सन्तः सम्पादयांचक्रुरिति पूर्वेण संबन्धः ॥ २-३ ॥

अश्वपतिरित्यादौ भगवन्त इति प्राचीनशालप्रभृतयः सम्बोध्यन्ते ॥ ४ ॥

स हेत्यादि सोपस्कारं व्याचष्टे—स हान्येद्युरित्यादिना। यथोक्तं शास्त्रप्रसिद्धमिति यावत्। किं तर्हि भगवदागमनस्य प्रयोजनं तदाह—वयं चेति। तन्ममापि नास्तीति शङ्कां निरस्यति—आत्मानमिति। शिष्य-

---

अन्योऽपि विचारः तृतीयाध्यायतृतीयपादषड्विंशाधिकरणे आदरादलोपः उपस्थिते अतस्तद्वचनादिति सूत्राभ्यां प्रवर्तितः। तथाहि—छान्दोग्ये "तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् ताञ्जुहुयात् प्राणाय स्वाहे"ति इत्यादिना अग्निहोत्रशब्दिताः पञ्चप्राणाहुतयो विहिताः तत्र किं भोजनलोपे लोपः प्राणाग्निहोत्रस्य उत भोजनलोपेऽपि अद्भिर्वा अविरुद्धद्रव्यान्तरेण वा प्राणाग्निहोत्रं कर्तव्यमिति संशये अलोप इति पूर्वः पक्षः। "पूर्वोऽतिथिभ्योऽश्नीयात्" इति तस्मिन् आदरातिशयदर्शनात् इति पूर्वपक्षे प्राप्ते सिद्धान्तः। उपस्थितेऽतस्तद्वचनात् इति। भोजने उपस्थिते अतः भोजनार्थादन्नात् प्राणाग्निहोत्रं कर्तव्यम्। तद्वचनात्—तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयमिति।

ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तँ्‌ हैव वदेदात्मानमेवेमं वैश्वानरँ्‌ सम्प्रत्यध्येषि तमेव नो ब्रूहीति ॥६॥ तान्होवाच प्रातर्वः प्रतिवक्ताऽस्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच॥७॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकादशः खण्डः

औपमन्यव कं त्वमात्मानमुपास्स इति दिवमेव भगवो राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥

परस्वहर्ता विद्यते। न कदर्योऽदाता सति विभवे। न मद्यपो द्विजोत्तमः सन्। नानाहिताग्निः शतगुः। नाविद्वानधिकारानुरूपम्। न स्वैरी परदारेषु गन्ता। अत एव स्वैरिणी कुतो दुष्टचारिणी न सम्भवतीत्यर्थः। तैश्च न वयं धनेनार्थिन इत्युक्त आह-अल्पं मत्वैते धनं न गृह्णन्तीति। यक्ष्यमाणो वै कतिभिरहोभिरहं हे भगवन्तोऽस्मि। तदर्थं क्लृप्तं धनं मया यावदेकैकस्मै यथोक्तमृत्विजे धनं दास्यामि तावत्प्रत्येकं भगवद्भ्योऽपि दास्यामि। वसन्तु भगवन्तः पश्यन्तु च मम यागमित्युक्तास्ते होचुः। येन हैवार्थेन प्रयोजनेन यं प्रति चरेद्गच्छेत्पुरुषस्तं हैवार्थं वदेत्। इदमेव प्रयोजनमागमनस्येत्ययं न्यायः सताम्। वयं वैश्वानरज्ञानार्थिनः। आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि सम्यग्जानासि। अतस्तमेव नोऽस्मभ्यं ब्रूहीत्युक्तस्तान्होवाच। प्रातर्वो युष्मभ्यं प्रतिवक्तास्मि प्रतिवाक्यं दाताऽस्मीत्युक्तास्ते ह राज्ञोऽभिप्रायज्ञाः समित्पाणयः समिद्भारहस्ता अपरेद्युः पूर्वाह्णे राजानं प्रतिचक्रमिरे गतवन्तः। यत एवं महाशाला महाश्रोत्रिया ब्राह्मणाः सन्तो महाशालत्वाद्यभिमानं हित्वा समिद्भारहस्ता जातितो हीनं राजानं विद्यार्थिनो विनयेनोपजग्मुः। तथाऽन्यैर्विद्योपादित्सुभिर्भवितव्यम्। तेभ्यश्चादाद्विद्यामनुपनीयैवोपनयनमकृत्वैव तान्। यथा योग्येभ्यो विद्यामदात्तथाऽन्येनापि विद्या दातव्येत्याख्यायिकार्थः। एतद्वैश्वानरविज्ञानमुवाचेति वक्ष्यमाणेन सम्बन्धः ॥ ५-६-७ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्यैकादशः खण्डः

स कथमुवाचेत्याह—औपमन्यव हे कमात्मानं वैश्वानरं त्वमुपास्स इति पप्रच्छ। नन्वयमपत्यायः आचार्यः सञ्शिष्यं पृच्छतीति। नैष दोषः। "यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामी"ति न्यायदर्शनात्। अन्यत्राप्याचार्यस्य

नरेन्द्रपुरीयं टिप्पणम्

प्रव्रजन्ती"ति श्रुतेः, अभिमानश्च श्रद्धारूपश्चेतोवृत्तिभेदः। स नापराध्यते शुभविषयत्वात्। "नहि कल्याणकृत् "कश्चिद्दुर्गतिं तात गच्छति"। "स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्"॥ "तपस्तीर्थं जपो दानं पवित्राणीतराणि च। नालं कुर्वन्ति तां शुद्धिं या ज्ञानकलया कृता॥" इत्यादिस्मृतिभ्यः। अथानुत्पन्नज्ञाने ज्ञानित्वभ्रमोऽभिमानः सोप्यहमात्मेति ज्ञानवत्स्वगोचरश्चेदयुक्तोऽहमात्मेति ज्ञानस्यावर्जनीयत्वात्। न चार्दनादिप्रवृत्तिदर्शनात् भ्रमत्वसिद्धिः। जीवतो ज्ञानित्वाभावापत्त्याऽऽचार्याभावापत्तेः। न द्वितीयः, "किं प्रजया करिष्यामः" "किमर्था वयमध्येष्यामहे" "याज्ञवल्क्यः प्रवव्राजे"त्यादिश्रुतिषु ज्ञानावष्टम्भेनैव कर्मत्यागदर्शनात्। यच्च त्यागसंकल्पान्न लिप्यत इत्युद्भाव्यापहसितं—महदाश्चर्यं कृतवान् कर्माणि त्यक्त्वा सुखमास्त इत्यादि। तत्रैतद्वाच्यं तुभ्यं चेद्दुःखमासनं रोचते तर्हि तथैवास्तु। किमिति स्वयं दुःखी परस्य सुखासनमसहमानोऽसूयां सूचयसीति। उपनयनं पदयोः पातनम्। अहर्गणादिष्वित्यग्निष्टोमादिषु एकाहादावग्निष्टोमे सुतं लताद्रव्यं प्रसुतमहीने यागे, आसुतं सत्रे ॥ ५-६-७॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य एकादश-द्वादश-त्रयोदश-चतुर्दश-पञ्चदश-खण्डाः

आनन्दगिरिटीका

भावेनोपसन्नेभ्यो विद्या दातव्या न यथाकथञ्चिदिति राज्ञोऽभिप्रायः। ते हेत्यादिवाक्यस्य तात्पर्यं दर्शयति—यत इति। योगक्षेमार्थं राजानं प्रत्युपगमनमिष्टमेवेति मन्वानो विशिनष्टि—विद्यार्थिन इति। तथेत्यत्रातःशब्दो द्रष्टव्यः। उपनयनं पादयोर्निपातनम्। वक्ष्यमाणं वैश्वानरविज्ञानं तेनैतदित्यस्य संबन्ध इति यावत्। आख्यायिकातात्पर्यमुपसंहरति—यथेति ॥ ५-६-७ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्यैकादशः खण्डः

शिष्यो हि प्रष्टाऽऽचार्यस्तु प्रतिवक्तेति न्यायेन शङ्कते—नन्विति। वाक्यशेषावष्टम्भेन दूषयति—नैष दोष

अस्त्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यद्यन्मां नाऽऽगमिष्य इति ॥२॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य द्वादशः खण्डः

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥१॥

प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यो यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य त्रयोदशः खण्डः

अप्रतिभानवति शिष्ये प्रतिभोत्पादनार्थः प्रश्नो दृष्टोऽजातशत्रोः "क्वैष तदाभूत्कुत एतदागादि"ति। दिवमेव द्युलोकमेव वैश्वानरमुपासे भगवो राजन्निति होवाच। एष वै सुतेजाः शोभनं तेजो यस्य सोऽयं सुतेजा इति प्रसिद्धो वैश्वानर आत्माऽऽत्मनोऽवयवभूतत्वाद्यं त्वमात्मानमात्मैकदेशमुपास्से तस्मात्सुतेजसो वैश्वानरस्योपासनात्तव सुतमभिषुतं सोमरूपं कर्मणि प्रसुतं प्रकर्षेण च सुतमासुतं चाहर्गणादिषु तव कुले दृश्यतेऽतीव कर्मिणस्त्वत्कुलीना इत्यर्थः ॥ १ ॥

अत्स्यन्नं दीप्ताग्निः सन्पश्यसि च पुत्रपौत्रादि प्रियमिष्टम्। अन्योऽप्यत्स्यन्नं पश्यति च प्रियं भवत्यस्य सुतं प्रसुतमासुतमित्यादिकर्मित्वं; ब्रह्मवर्चसं कुले यः कश्चिदेतं यथोक्तमेवं वैश्वानरमुपास्ते। मूर्धा त्वात्मनो वैश्वानरस्यैष न समस्तो वैश्वानरः। अतः समस्तबुद्ध्या वैश्वानरस्योपासनान्मूर्धा शिरस्ते विपरीतग्राहिणो व्यपतिष्यद्विपतितमभविष्यत्। यद्यदि मां नाऽऽगमिष्यो नाऽऽगतोऽभविष्यः। साध्वकार्षीर्यन्मामागतोऽसीत्यभिप्रायः ॥ २॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य द्वादशः खण्डः

अथ होवाच सत्ययज्ञं पौलुषिं हे प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच। शुक्लनीलादिरूपत्वाद्विश्वरूपत्वमादित्यस्य सर्वरूपत्वाद्वा। सर्वाणि रूपाणि हि त्वाष्ट्राणि यतोऽतो वा विश्वरूप आदित्यस्तदुपासनात्तव बहु विश्वरूपमिहामुत्रार्थमुपकरणं दृश्यते कुले ॥ १ ॥

किञ्च त्वामनु प्रवृत्तोऽश्वतरीभ्यां युक्तो रथोऽश्वतरीरथो दासीनिष्को दासीभिर्युक्तो निष्को हारो दासीनिष्कः। अत्स्यन्नमित्यादि समानम्। चक्षुर्वैश्वानरस्य तु सविता। तस्य समस्तबुद्ध्योपासनादन्धोऽभविष्यश्चक्षुर्हीनोऽभविष्यो यन्मां नाऽऽगमिष्य इति पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य त्रयोदशः खण्डः

आनन्दगिरिटीका

इति। वृहदारण्यकश्रुत्यालोचनायामपि नैतदन्याय्यमियाह--अन्यत्रापीति। आचार्यस्याजातशत्रोरिति सम्बन्धः। तस्यांऽऽत्मत्वे हेतुमाह—आत्मन इति। एकाहादिरूपो ज्योतिष्टोमादिरहर्गणस्तत्र सुतं सोमरूपं लताद्रव्यमहीने प्रसुतं सत्रे त्वासुतमिति भेदः। तवेति पुनर्वचनमन्वयदर्शनार्थम् ॥ १ ॥

न केवलं प्राचीनशालनिष्ठमिदं फलं किन्त्वन्यस्यापि भवतीत्याह—अन्योऽपीति। तर्हि यथोक्तवैश्वानरज्ञानादेव कृतकृत्यतेत्याशङ्क्याऽऽह—मूर्धा त्विति। अक्षरार्थमुक्त्वा विवक्षितार्थमाह—साध्विति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य द्वादशः खण्डः

अथ प्राचीनशाले तूष्णींभूते जिज्ञासमाने सत्यनन्तरमित्यर्थः। आदित्यस्य शुक्लत्वादिरूपत्वमष्टमे स्पष्टीभविष्यति। तस्य सर्वरूपत्वेन विश्वरूपत्वमुक्तमुपपादयति—सर्वाणीति ॥ १ ॥

अत्स्यन्नमित्यादि चक्षुष्ट्वेतदित्यतः प्राक्तनमिति शेषः। चक्षुष्ट्वेतदित्यादिवाक्यं व्याचष्टे—चक्षुरित्यादिना। तत्रापि तात्पर्यं यथापूर्वं द्रष्टव्यमित्याह—पूर्ववादिति ॥ २ ॥

इति श्रीदानन्दगिरिटीकायां पञ्चमाध्यायस्य त्रयोदश. खण्डः

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्माऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्दशः खण्डः

अथ होवाच जनँ शार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च ॥ १ ॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्ते व्यशीर्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य पञ्चदशः खण्डः

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यादि समानम्। पृथग्वर्त्मा नाना वर्त्मानि यस्य वायोरावहोद्वहादिभिर्भेदैर्वर्तमानस्य सोऽयं पृथग्वर्त्मा वायुः। तस्मात्पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात्पृथङ् नानादिक्कास्त्वां बलयो वस्त्रान्नादिलक्षणा बलय आयन्त्यागच्छन्ति। पृथग्रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति॥१॥

अत्स्यन्नमित्यादि समानम्। प्राणस्त्वेष आत्मन इति होवाच प्राणस्ते तवोदक्रमिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य चतुर्दशः खण्डः

अथ होवाच जनमित्यादि समानम्। एष वै बहुल आत्मा वैश्वानरः। बहुलत्वमाकाशस्य सर्वगतत्वात्। बहुलगुणोपासनाच्च त्वं बहुलोऽसि प्रजया च पुत्रपौत्रादिलक्षणया धनेन च हिरण्यादिना ॥ १ ॥

सन्देहस्त्वेष सन्देहो मध्यमं शरीरं वैश्वानरस्य। दिहेरुपचयार्थत्वान्मांसरुधिरास्थ्यादिभिश्च बहुलं शरीरं तत्सन्देहस्ते तव शरीरं व्यशीर्यच्छीर्णमभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य पञ्चदशः खण्डः

आनन्दगिरिटीका

सत्ययज्ञोपरमानन्तरमित्यथशब्दार्थः। पृथगित्यतः प्राक्तनमादिपदेन गृहीतम्। पृथग्वर्त्मेति प्रतीकमादाय व्याचष्टे—नानेति। आभिमुख्येनाऽऽगच्छन्नावहः। ऊर्ध्वेन वहतीत्युद्वहः। तस्मात्त्वामित्यादि व्याचष्टे—तस्मादिति। नानादिक्का नानाविधासु दिक्षुभवा इत्येतत् ॥ १ ॥

अत्स्यन्नमित्यादि समानमित्यत्राऽऽदिपदमुपास्त इत्यन्तवाक्यसंग्रहार्थम्। उत्तरवाक्येऽप्यभिप्रायसाम्यं मत्वाऽऽह—प्राणस्त्विति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य चतुर्दशः खण्डः

इन्द्रद्युम्नोपरमानन्तर्यमथशब्दार्थः। अत्राऽऽदिपदमेष इत्यस्मात्प्राक्तनवाक्यसंग्रहार्थम्। कथमाकाशस्य बहुलत्वमत आह—बहुलत्वमिति ॥ १ ॥

कथं शरीरस्य मध्यमे भागे संशयवाची सन्देहशब्दो वर्तते तत्राह—दिहेरिति। आकाशस्य सर्वगतत्वेन बहुलत्वाद्देहस्य च परिच्छिन्नत्वेन तदभावात्कथमाकाशं वैश्वानरस्य शरीरं स्यादित्याशङ्क्याऽऽह—मांसेति। तच्छरीरमिति सम्बन्धः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य पञ्चदशः खण्डः

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि ॥१॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यद्यन्मां नाऽऽगमिष्य इति ॥२॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य षोडशः खण्डः

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निति होवाचैष वै प्रतिष्ठाऽऽत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥१॥

अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥२॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य सप्तदशः खण्डः

अथ होवाच बुडिलमाश्वतराश्विमित्यादि समानम्। एष वै रयिरात्मा वैश्वानरो धनरूपः। अद्भ्यो ह्यन्नं ततो धनमिति। तस्माद्रयिमान्धनवांस्त्वं पुष्टिमांश्च शरीरेण; पुष्टेश्चान्ननिमित्तत्वात् ॥ १ ॥

बस्तिस्त्वेष आत्मनो वैश्वानरस्य बस्तिर्मूत्रसंग्रहस्थानं बस्तिस्ते व्यभेत्स्यद्भिन्नोऽभविष्यद्यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये चतुर्थाध्यायस्य षोडशः खण्डः

अथ होवाचोद्दालकमित्यादि समानम्। पृथिवीमेव भगवो राजन्निति होवाच। एष वै प्रतिष्ठा पादौ वैश्वानरस्य। पादौ ते व्यम्लास्येतां विम्लानावभविष्यतां श्लथीभूतौ यन्मां नाऽऽगमिष्य इति ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य सप्तदशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

अभिमुखमागच्छन्नावहः ऊर्ध्वं नयन्नुद्वहः। नानादिक्षु भवा नानादिक्काः "आयुर्घृत" मितिवत् कार्यवाचकेन कारणं लक्ष्यत इत्यभिप्रेत्याह—अद्भ्यो ह्यन्नमिति ॥ १ ॥

नाभेरधस्तादलाबुसदृशमधोनालमनेकच्छिद्रं मूत्रभाजनं बस्तिरुच्यत इत्याह—मूत्रसंहारेति ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य षोडशसप्तदशौ खण्डौ

आनन्दगिरिटीका

जनस्योपरमानन्तर्यमथशब्दार्थः। कथमबात्मको वैश्वानरो रयिरिति धनेन निर्दिश्यते तत्राऽऽह—अद्भ्य इति। आयुर्वै घृतमितिवत्कार्यवाचकेन कारणं लक्ष्यत इत्यर्थः। तस्माद्यथोक्तवैश्वानरोपासनादित्येतत्। धनरूपवैश्वानरोपासनाद्धनवानित्येव वक्तव्ये कथं पुष्टिमानित्यधिकावापस्तत्राऽऽह—पुष्टेश्चेति ॥ १ ॥

मूत्राशयो धनुर्वक्रो बस्तिरित्यभिधीयत इत्याशयेनाऽऽह—बस्तिरिति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य षोडशः खण्डः

प्राचीनशालप्रभृतिषु पञ्चसु मौनमातिष्ठमानेष्वनन्तरमित्यथशब्दार्थः ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य सप्तदशः खण्डः

**तान्होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाँ सोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥**

तान्यथोक्तवैश्वानरदर्शनवतो होवाच। एते यूयं वै खल्वित्यनर्थकौ। यूयं पृथगिवापृथक्सन्तमिममेकं वैश्वानरमात्मानं विद्वांसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्येत्येतद्धस्तिदर्शन इव जात्यन्धाः। यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्धादिभिः पृथिवीपादान्तैर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम्। मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणाऽऽदिश्यन्त इति प्रादेशा द्युलोकादय एतावत्परिमाणः प्रादेशमात्रः। शाखान्तरे तु मूर्धादिः चिबुकप्रतिष्ठ इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथाऽभिप्रेतः। तस्य ह वा एतस्याऽऽत्मन इत्याद्युपसंहारात्। प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिं सर्वात्मैष ईश्वरो वैश्वानरो विश्वो नर एव वा सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरस्तमेवमुपास्ते यः सोऽदन्नन्नादी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति वैश्वानरवित्सर्वात्मा सन्नन्नमत्ति। न यथाऽज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

पृथगिवेत्यवधारणार्थं इवकारः। अत्थ भक्षयथ, नरे संज्ञायामिति स्मरणाद्दीर्घत्वम् ॥ १ ॥

वेदिरिति स्थण्डिलमात्रमग्निहोत्रानङ्गत्वाद्दर्शपूर्णमासाङ्गं हि सा। वेद्यामास्तीर्यन्ते ये दर्भास्ते बर्हिःशब्देनोच्यन्ते ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य अष्टादशः खण्डः

आनन्दगिरिटीका

उद्दालकान्तेषु विद्यार्थिषूपसन्नेषु सामस्त्येन वैश्वानरविद्यां वक्तुकामस्तेषां मिथ्याज्ञानमनुवदति—**तानित्यादिना**। अनर्थकाविवानर्थकौ निपातौ न त्वनर्थकावेव। तेषां मिथ्याज्ञानित्वप्रसिद्धिस्मारकत्वात्। यूयमित्यन्वयार्थं प्रागुक्तमपि पाठक्रमेण पुनरनूद्य पृथगिव विद्वांस इति सम्बन्धः। यथा जात्यन्धा हस्तिदर्शने भिन्नदृष्टयो भवन्ति तथा यूयं वैश्वानरमात्मानमेकमपि सर्वात्मकं सन्तं भिन्नमिव विद्वांसः परिच्छिन्नात्तृरूपेणाऽऽत्मानं बुद्धवन्तः। तथा च मिथ्यादर्शिनो यूयं प्रागेव प्रत्यवायान्मामागतवन्तः साधु कृतवन्त इत्यर्थः। प्रधानविद्यां वक्तुं पातनिकां कृत्वा तामिदानीमुपदिशति—**यस्त्वित्यादिना**। एतमेवंभूतं यस्तूपास्ते स सर्वेष्वन्नमत्तीति सम्बन्धः। एवंशब्दार्थमाह—**यथोक्तेति**। एकं समस्तं त्रैलोक्यात्मकमिति यावत्। प्रादेशमात्रमित्येतद्विभजते—**प्रादेशैरिति**। यथोक्तैराधिदैविकैरवयवैरध्यात्मं प्रत्यगात्मन्येवायं मीयत इति व्युत्पत्त्या प्रादेशमात्रस्तमिति यावत्। प्रकारान्तरेण व्याचष्टे—**मुखादिषु वेति**। तेषु हि प्रदेशेष्वयमत्तृत्वेन साक्षितया मीयत इति व्युत्पत्त्या तथोच्यत इत्यर्थः। विधान्तरेण व्याचष्टे—**द्युलोकादीति**। अर्थान्तरमाह—**प्रकर्षेणेति**। आमनन्ति चैनमस्मिन्निति न्यायेन पक्षान्तरमाह—**शाखान्तरे त्विति**। अस्तु तर्हि जाबालश्रुत्यनुसारेण मूर्धानमारभ्याधरफलकपर्यन्ते देहावयवे सम्पादितो वैश्वारः प्रादेशमात्र इति नेत्याह—**इह त्विति**। सर्वात्मत्वेन वैश्वानरस्योपसंहारदर्शनान्नात्र जाबालश्रुतिरनुसर्तव्येत्यर्थः। विशेषणान्तरं व्याचष्टे—**प्रत्यगात्मतयेति**। सर्वेश्वरत्वं सर्वात्मत्वं सर्वप्रत्यक्षत्वं वा हेतूकृत्य वैश्वानरशब्दमनेकधा व्याकरोति—**विश्वानित्यादिना**। ईश्वरो वैश्वानर इत्यत्र वैश्वानरपदमुभयत्र संबध्यते। स वैश्वानरविदन्नमदन्सर्वेषु लोकादिषु स्थित्वाऽन्नमत्तीति सम्बन्धः। कथमात्मशब्देन शरीरादयो गृह्यन्ते तत्राऽऽह—**तेषु हीति**। सर्वेषु लोकेष्वित्यादिवाक्यस्य तात्पर्यार्थं दर्शयति—**वैश्वानरविदिति** ॥ १ ॥

तस्य ह वा एतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्याष्टादशः खण्डः

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयँ स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥

कस्मादेवम्। यस्मात्तस्य ह वै प्रकृतस्यैवैतस्याऽऽत्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ। अथवा विध्यर्थमेतद्वचनमेवमुपास्य इति। अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रं संपिपादयिषन्नाह—एतस्य वैश्वानरस्य भोक्तुरुर एव वेदिराकारसामान्यात्। लोमानि बर्हिर्वेद्यामिवोरसि लोमान्यास्तीर्णानि(न) दृश्यन्ते। हृदयं गार्हपत्यो हृदयाद्धि मनः प्रणीतमिवानन्तरी भवत्यतोऽन्वाहार्यपचनोऽग्निर्मनः। आस्यं मुखमाहवनीय इवाऽऽहवनीयो हूयतेऽस्मिन्नन्नमिति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्याष्टादशः खण्डः

तत्तत्रैवं सति यद्भक्तं भोजनकाल आगच्छेद्भोजनार्थं तद्धोमीयं तद्धोतव्यम्। अग्निहोत्रसम्पन्मात्रस्य विवक्षितत्वान्नाग्निहोत्राङ्गेतिकर्तव्यताप्राप्तिरिह। स भोक्ता यां प्रथमामाहुतिं जुहुयात्तां कथं जुहुयादित्याह—प्राणाय स्वाहेत्यनेन मन्त्रेणाऽऽहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः। तेन प्राणस्तृप्यति ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

अग्निहोत्रत्वसाम्यात्तदङ्गान्यग्न्युद्धरणादीन्यत्र स्युरिति नाशङ्कनीयम्। तद्बुद्धिमात्रस्यात्र विवक्षितत्वादित्याह—अग्निहोत्रसम्पदिति। प्रकरणादिदं वैश्वानरविद्याङ्गम्, स्मार्तं तु सर्वसाधारणमिति द्रष्टव्यम्। इषीका या मुञ्जमध्यवर्तिनी नालस्य ॥ १—२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चमाध्यायस्य एकोनविंशः-विंशः-एकविंशः-द्वाविंशः-त्रयोविंशः खण्डः

आनन्दगिरिटीका

वैश्वनरोपासकः सर्वात्मा सन्नन्नमत्तीत्येवं कस्माद्धेतोर्निश्चितमित्याशङ्कामनूद्य हेतुप्रदर्शनपरत्वेनोत्तरत्वेनोत्तरं वाक्यमुपादत्ते—कस्मादित्यादिना। वैश्वानरस्य सर्वात्मत्वात्तदुपासकस्यापि तदात्मतया सर्वात्मत्वादसौ सर्वात्मा भूत्वा सर्वत्रान्नमत्तीति युक्तमित्यर्थः। तस्येत्यादिवाक्यस्य तात्पर्यान्तरमाह—अथ वेति। प्रधानविद्यामुक्त्वा तदङ्गप्राणाग्निहोत्रं दर्शयितुकामो भूमिकां करोति—अथेति। संपादयितुमिच्छन्नादौ तदङ्गान्यश्वपती राहेत्यर्थः। वेदिरिति स्थण्डिलमात्रं गृह्यते। अग्निहोत्रे तावन्मात्रस्योपयुक्तत्वादितरस्य दर्शपूर्णमासाद्यङ्गत्वात्। वेद्यामास्तीर्यन्ते ये दर्भा [स्ते] बर्हिःशब्देनोच्यन्ते। हृदयस्य गार्हपत्यत्वं मनःप्रणयनहेतुत्वात्, प्रणीतमुत्पन्नमिवेत्यर्थः। आहवनीयसादृश्यं च मुखस्य दर्शयति—आहवनीय इति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्याष्टादशः खण्डः

एवं सतीत्युक्तन्यायेनाग्निहोत्रे संपादिते सतीत्यर्थः। संपादितस्याग्निहोत्रत्वस्य सामान्यादग्न्युद्धरणादीनि तदङ्गान्यत्र भवेयुरित्याशङ्क्य तद्बुद्धिमात्रस्य विवक्षितत्वान्मैवमित्याह—अग्निहोत्रेति। इहेति वैश्वानरविदो भोजनमुच्यते। प्रकृतहोमगतावान्तरविभागमाह—स भोक्तेति। कथमिति मन्त्रो वा द्रव्यपरिमाणं वा फलं वा पृच्छ्यते तत्र प्रथमं प्रत्याह—प्राणायेति। यदि द्वितीयस्तत्राऽऽह—आहुतीति। अवदानस्य प्रमाणं परिमाणं कर्मिणां [1]प्रसिद्धं तेन परिमितमिति यावत्। तृतीयश्चेत्तत्राऽऽह—तेनेति ॥ १ ॥

---

1. प्रसिद्धमिति अङ्गुष्ठपर्वपरिमितमित्यर्थः।

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चाऽऽदित्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकोनविंशः खण्डः

अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥

व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य विंशः खण्डः

अथ यां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥

अपाने तृप्यति वाक्तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्यैकविंशः खण्डः

अथ यां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुरादित्यो द्यौश्चेत्यादि तृप्यति यच्चान्यद्द्यौश्चाऽऽदित्यश्च स्वामित्वेनाधितिष्ठतस्तच्च तृप्यति तस्य तृप्तिमनु स्वयं भुञ्जानस्तृप्यत्येवं प्रत्यक्षम्। किं च प्रजादिभिश्च। तेजः शरीरस्था दीप्तिरुज्ज्वलत्वं प्रागल्भ्यं वा, ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्यैकोनविंशः खण्डः

अथ यां द्वितीयां चतुर्थीं पञ्चमीमिति समानम् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य विंशः खण्डः

॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्यैकविंशः खण्डः

आनन्दगिरिटीका

भुञ्जानस्य तृप्तौ प्रत्यक्षं प्रमाणं प्राणादेस्तृप्तौ शास्त्रमिति विभागमभिप्रेत्याऽऽह—प्रत्यक्षमिति। प्रजादिभिश्च भोक्ता तृप्यतीति संबन्धः ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्यैकोनविंशः खण्डः

॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य विंशः खण्डः

॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्यैकविंशः खण्डः

समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य द्वाविंशः खण्डः

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥

उदाने तृप्यति त्वक्तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाऽऽकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य त्रयोविंशः खण्डः

स य इदमविद्वानग्निहोत्रं जुहोति यथाऽङ्गारानपोह्य भस्मनि जुहुयात्तादृक्तत्स्यात् ॥ १ ॥
अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य द्वाविंशः खण्डः

॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य त्रयोविंशः खण्डः

स यः कश्चिदिदं वैश्वानरदर्शनं यथोक्तमविद्वान्सन्नग्निहोत्रं प्रसिद्धं जुहोति यथाऽङ्गारानाहुतियोग्यानपोह्यानाहुतिस्थाने भस्मनि जुहुयात्तादृक्तत्तुल्यं तस्य तदग्निहोत्रहवनं स्याद्वैश्वानरविदोऽग्निहोत्रमपेक्ष्येति प्रसिद्धाग्निहोत्रनिन्दया वैश्वानरविदोऽग्निहोत्रं स्तूयते ॥ १ ॥

अतश्चैतद्विशिष्टमग्निहोत्रम्। कथम्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य यथोक्तवैश्वानरविज्ञानवतः सर्वेषु लोकेष्वित्याद्युक्तार्थम्। हुतमन्नमत्तीत्यनयोरेकार्थत्वात् ॥ २ ॥

आनन्दगिरिटीका

॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य द्वाविंशः खण्डः

॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य त्रयोविंशः खण्डः

प्रसिद्धाग्निहोत्रनिन्दाद्वारेण वैश्वानरविदो यथोक्तमग्निहोत्रमवश्यकर्तव्यतायै स्तौति—स यः कश्चिदित्यादिना ॥ १ ॥

प्राणाग्निहोत्रस्य वैशिष्ट्ये हेत्वन्तरमतःशब्दोपात्तं प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। नैयमिकाग्निहोत्रनिन्दाद्वारा प्राणाग्निहोत्रस्तुत्यनन्तरं विधान्तरेण तस्यैव निरवद्यता कीर्त्यत इत्यथशब्दार्थः। एतदिति वैश्वनरदर्शनमुक्तम्—एवमिति। वैश्वानरस्योक्तसर्वात्मत्वादिप्रकारेणेत्यर्थः। अग्निहोत्रमिति साम्पादिकमग्निहोत्रं गृह्यते। कथमिदमुक्तार्थं सर्वेषु लोकादिष्वन्नमत्तीति वाक्यं व्याख्यातं तस्य सर्वेषु लोकादिषु हुतं भवतीत्यन्यादृशमिदं वाक्यं तत्राऽऽह—हुतमिति ॥ २ ॥

तद्यथेपीकातूलमग्नौ प्रोतं प्रदूयेतैवँ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥३॥

तस्मादु हैवंविद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि
हैवास्य तद्वैश्वानरे हुतँ स्यादिति तदेप श्लोकः—॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासत एवँ सर्वाणि
भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि पञ्चमाध्यायस्य चतुर्विशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे पञ्चमोऽध्यायः समाप्तः

किञ्च तद्यथेषीकायास्तूलमग्रमग्नौ प्रोतं प्रक्षिप्तं प्रदूयेत प्रदह्येत क्षिप्रमेवं हास्य विदुषः सर्वात्मभूतस्य सर्वान्नानामत्तुः सर्वे निरवशिष्टाः पाप्मानो धर्माधर्माख्या अनेकजन्मसञ्चिता इह च प्राग्ज्ञानोत्पत्तेर्ज्ञानसहभाविनश्च प्रदूयन्ते प्रदह्येरन्वर्तमानशरीरारम्भकपाप्मवर्जं, लक्ष्यं प्रति मुक्तेषुवत्प्रवृत्तफलत्वात्तस्य न दाहः। य एतदेवं विद्वानग्निहोत्रं जुहोति भुङ्क्ते ॥ ३ ॥

स यद्यपि चण्डालायोच्छिष्टानर्हायोच्छिष्टं प्रयच्छेदुच्छिष्टं दद्यात्प्रतिषिद्धमुच्छिष्टदानं यद्यपि कुर्यादात्मनि हैवास्य चण्डालदेहस्थे वैश्वानरे तद्धुतं स्यान्नाधर्मनिमित्तमिति विद्यामेव स्तौति। तदेतस्मिन्स्तुत्यर्थे श्लोको मन्त्रोऽप्येष भवति ॥ ४ ॥

यथेह लोके क्षुधिता बुभुक्षिता बाला मातरं पर्युपासते कदा नो माताऽन्नं प्रयच्छतीत्येवं सर्वाणि भूतान्यन्नादान्येवंविदोऽग्निहोत्रं भोजनमुपासते कदा त्वसौ भोक्ष्यत इति, जगत्सर्वं विद्वद्भोजनेन तृप्तं भवतीत्यर्थः। द्विरुक्तिरध्यायपरिसमाप्त्यर्था ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये पञ्चमाध्यायस्य चतुर्विशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ
च्छान्दोग्योपनिषद्विवरणे पञ्चमोऽध्यायः

आनन्दगिरिटीका

इतश्च वैश्वानरविद्यावतोऽग्निहोत्रं विशिष्टमिति वक्तुं वैश्वानरविद्यां स्तौति—किं चेति। तत्र वैश्वानरविद्यामाहात्म्ये दृष्टान्त इति यावत्। इषीकाया मुञ्जामध्यवर्तितृणस्येत्येतत्। सर्वशब्दात्प्रारब्धकर्मणोऽपि दाहमाशङ्क्याऽऽह—वर्तमानेति। वैश्वानरविद्याया महाफलत्वे सिद्धे तद्वतोऽग्निहोत्रं विशिष्टमिति तत्कर्तुः सर्वदोषास्पर्शित्वमित्याशयेनाऽऽह—य एतदिति ॥ ३ ॥

विद्यामेव विद्यास्तुतिद्वाराऽग्निहोत्रमिति यावत्। स्तुत्यर्थेऽग्निहोत्रस्य स्तुतिरूपो योऽर्थस्तस्मिन्नित्येतत् ॥४॥ मन्त्रस्य तात्पर्यार्थं दर्शयति—जगदिति। विदुषो वैश्वानरात्मनः सर्वात्मत्वादित्यर्थः ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां पञ्चमाध्यायस्य चतुर्विशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां
च्छान्दोग्योपनिषद्भाष्यटीकायां पञ्चमोऽध्यायः समाप्तः

## अथ षष्ठोऽध्यायः

**ॐ श्वेतकेतुर्हाऽऽरुणेय आस तँ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं न वै सौम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥**

**श्वेतकेतुर्हाऽऽरुणेय आसेत्याद्यध्यायसम्बन्धः। सर्वं खल्विदं ब्रह्म तज्जलानित्युक्तं कथं तस्माज्जगदिदं जायते तस्मिन्नेव च लीयतेऽनिति च तेनैवेत्येतद्वक्तव्यम्। अनन्तरं चैकस्मिन्भुक्ते विदुषि सर्वं जगत्तृप्तं भवतीत्युक्तं तदेकत्वे सत्यात्मनः सर्वभूतस्थस्योपपद्यते नाऽऽत्मभेदे। कथं च तदेकत्वमिति तदर्थोऽयं षष्ठोऽध्याय आरभ्यते। पितापुत्राख्यायिका**

### नरेन्द्रपुरीयं टिप्पणम्

ॐ यस्मादुत्पद्यते विश्वं यस्मिन्ननिति लीयते।
तत्सत्यं सर्वजीवानां स्वरूपमिति कीर्त्यते ॥

### आनन्दगिरिटीका

वर्तिष्यमाणाध्यायस्यातीतेन सन्दर्भेण सम्बन्धं वक्तुं प्रतीकं गृहीत्वा तं प्रतिजानीते—**श्वेतकेतुरिति**। तमेव प्रकटयन्प्रथमं तृतीयेनाध्यायेनास्य सम्बन्धं कथयति—**सर्वमिति**। एतद्वक्तव्यं तदर्थोऽयं षष्ठोऽध्याय आरभ्यत इति सम्बन्धः। व्यवहितं सम्बन्धमुक्त्वाऽव्यवहितं तमादर्शयति—**अनन्तरं चेति**। अध्यायतात्पर्यमुक्त्वाऽऽख्यायिकातात्पर्यमाह—**पितेति**। पिता प्रतिवक्ता पुत्रश्च प्रष्टेत्येवंविधेयमाख्यायिका। सा च विद्यायाः सारिष्ठत्वद्योतनार्था। पिता हि पुत्राय सारतममेवोपदिशतीत्यर्थः। कुलस्यानुरूपमित्यादिवचनान्न कुलाधमस्य गुरुत्वमिति गम्यते। ब्रह्म-

### श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीप्रणीता टीका

यद्विज्ञानात्सर्वविज्ञानमाहुः यच्चाद्वैतं तेज आदीनि सृष्ट्वा।
तत्कार्येऽस्मिन् प्राविशज्जीवसंज्ञः सोऽहं सत्तामात्ररूपः परात्मा ॥

नत्वा श्रीदक्षिणामूर्तिं ज्ञानेन्द्रगुरुरूपिणम्।
छान्दोग्यषष्ठभाष्यस्य विवृतिः क्रियतेऽधुना ॥

पूर्वग्रन्थे उद्गीथादिवैश्वानरान्तान्युपासनान्युक्तानि। न च तैः परमपुरुषार्थब्रह्मत्वलाभः। तेषां सांसारिकफलत्वादिति तन्निवृत्त्युपलक्षितब्रह्मभावकामाय षष्ठाध्याय आरब्धः। तस्य पूर्वग्रन्थेन सङ्गतिरुच्यत इत्याह—**श्वेतकेतुरिति**। **इत्यध्यायेति**। इत्यादेरध्यायस्य सङ्गतिरुच्यत इति शेषः। तत्र तत्तेजोऽसृजत इत्यादिसृष्ट्यंशपर्यालोचनया तृतीयाध्यायेन सम्बन्धमाह—**सर्वमिति**। तत्र शाण्डिल्यविद्याङ्गत्वेन "शान्त उपासीते"ति शमं विधाय तदर्थं सर्वस्य ब्रह्मजत्वेन तन्मात्रत्वात् एकस्मिन् वस्तुनि रागाद्यसम्भवाच्छमः स्वत एव सिद्ध्यतीति वक्तुं सर्वमित्याद्युक्तमित्यर्थः। तस्माज्जायत इति तज्जं लीयत इति लं अनितीत्यन् तज्जं च लंच अन् च तज्जलान् इति विग्रहः। तच्छब्दस्य सप्तम्यन्ततया तृतीयान्ततया च परिणतस्य अर्थात् लयस्थित्योरप्यन्वय इति तस्मिन्नेवेत्याद्युक्तम्। "सदायतनाः सत्प्रतिष्ठाः" "तत्तेजोऽसृजत" इत्यादिभिः त्रिभिः त्रितयमप्यत्रोच्यत इति भावः। यद्यपि तत्रैव तद्वक्तुं युक्तं तथापि उपासनाप्रकरणत्वात्तस्य विच्छेदो मा भूदित्येतदर्थं निर्विशेषब्रह्मप्रतिपत्त्यर्था सृष्ट्युक्तिरिति तदर्थां सृष्टिमाश्रित्य उपासनाविधानमिति सूचयितुं च इदानीमुच्यत इति भावः।

ऐतदात्म्यमिदं सर्वं तत्त्वमसीत्यादिसार्वात्म्योक्त्यंशमादाय पञ्चमाध्यायेन सम्बन्धमाह—**अनन्तरं चेति**। पञ्चमाध्यायान्ते वैश्वानरविद्याङ्गत्वेन प्राणाग्निहोत्रं विहितं विदुषो भोजनमाश्रित्य 'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात् प्राणाय स्वाहा' इत्यादिना। तत्र प्राणस्तृप्यतीत्यादिना यत्किञ्च वायुश्चाकाशश्चाधि-

**स ह द्वादशवर्ष उपेत्य चतुर्विँ्शतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तँ्ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोऽस्युत [1]तमादेशमप्राक्ष्यः ॥२॥**

विद्यायाः सारिष्ठत्वप्रदर्शनार्था । श्वेतकेतुरिति नामतो हेत्यैतिह्यार्थः आरुणेयोऽरुणस्य पौत्र आस बभूव । तं पुत्रं हाऽऽरुणिः पिता योग्यं विद्याभाजनं मन्वानस्तस्योपनयनकालात्ययं च पश्यन्नुवाच हे श्वेतकेतोऽनुरूपं गुरुं कुलस्य नो गत्वा वस ब्रह्मचर्यम् । न चैतद्युक्तं यदस्मत्कुलीनो हे सोम्याननूच्यानधीत्य ब्रह्मबन्धुरिव भवतीति ब्राह्मणान्बन्धून्व्यपदिशति न स्वयं ब्राह्मणवृत्त इति ॥ १ ॥

तस्यातः प्रवासोऽनुमीयते पितुः । येन स्वयं गुणवान्सन्पुत्रं नोपनेष्यति । स पित्रोक्तः श्वेतकेतुर्ह द्वादशवर्षः

आनन्दगिरिटीका

चर्यमध्ययनार्थमिति शेषः । गत्वेत्यादिवचनान्माणवकाधीनमध्ययनमिति सूचितम् । मा भूदुपनयनमध्ययनं चेत्याशङ्क्याऽऽह—न चैतद्युक्तमिति ॥ १ ॥

किमिति पिता स्वयमेवोपनीय पुत्रं नाध्यापयति तत्राऽऽह—तस्येति । अतःशब्दः स्वगृहविषयः । अनुमानं कल्पनं तत्र कल्पकमाह—येनेति। अनूचानोऽनुवचनसमर्थः । कर्मव्युत्पत्त्या करणव्युत्पत्त्या चाऽऽदेशशब्दो व्याख्यातः ॥२॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तिष्ठतस्तत्तृप्यतीत्यन्तेन विदुषो भोजनेन सर्वजगत्तृप्तिरुक्तेत्यर्थः । सारिष्ठत्वेति । तदेकत्वे सतीत्यर्थः । यद्यपीदमस्माकं न प्रत्यक्षं तथापि परिच्छिन्नात्मदर्श्यस्मदृष्ट्या तृप्त्यदर्शनेऽपि आत्मदर्शिविद्वदृष्ट्या आत्मविज्ञानेन सर्वविज्ञानवदिदं प्रत्यक्षमिति भावः । साधिष्ठत्वेति । क्वचित्पाठः । ऐतिह्येति । पूर्ववृत्तत्वद्योतनार्थः । उपनयनेति । अन्यथा प्रवासानन्तरं पुनरागत्य स्वयमेवाध्यापयेदिति भावः । "प्रतिलोमं चैतत् यद्ब्राह्मणः क्षत्रियमुपेयात् ब्रह्म मे वक्ष्यतीति" ( बृ २-१ ) क्षत्रियोपलक्षितहीनाचार्योपसर्पणस्य प्रतिलोमत्वेन निन्दितत्वादाह—अनुरूपं कुलस्येति । अस्मात्कुलीनो ब्रह्मबन्धुर्न भवतीत्ययुक्तं, कस्यचित् जन्मान्तरकर्मवशात् तथाविधस्यापि सम्भवात् इत्याशङ्क्य युक्तपदाध्याहारेण तस्य युक्तत्वं निषिध्यत इत्याह—न चैतद्युक्तमिति । पितुरेव उपनेतृत्वस्य मुख्यत्वेन स्मरणात् आचार्यान्तरं प्रति प्रेषणमयुक्तमित्याशङ्क्याह—तस्येति । तस्य पितुरित्यन्वयः ।

१. उत तमादेशमप्राक्ष्यः इत्यत्र आदेशशब्दः घञन्तः आदिश्यते उपदिश्यते—इत्यादेशः उपदेशैकगम्य इत्यर्थः । अत एवोत्तरत्र आचार्यवान् पुरुषो वेद इति श्रुतिरेव ब्रह्मणः उपदेशैकगम्यत्वं स्वयं वदति ।

परैस्तु आदेश इति कर्तरि घञ् प्रशासिता परमात्मेत्यर्थः । तत्तु "अकर्तरि च कारके संज्ञायामि"ति सूत्रविरुद्धम् । परमात्मनः प्रशासनादिकं चात्राध्याये क्वचिदपि नोक्तम् । एकविज्ञानेन च सर्वविज्ञानं ब्रह्मणः प्रशासितृत्वं नापेक्षते । अतः उत्तरग्रन्थानुरोधेन उपदेशैकगम्यमित्यर्थे कर्मणि घञेव युक्तः । उपादानत्वं तु तादृशप्रतिज्ञामुपपादयितुमपेक्ष्यते इति भावः ।

अपि च मुण्डके "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति मैत्रेयीब्राह्मणे "आत्मनि खल्वरे दृष्टे श्रुते मत इदं सर्वं विदितं इति भवति" प्रतिज्ञा दृश्यते । उभयत्र तदुपपादनं पुरुष एवेदं विश्वमिति मुण्डके, "इदं सर्वं यदयमात्मा" इति मैत्रेयीब्राह्मणे सर्वात्मकत्वेनैव श्रूयते इति प्रकृतेऽपि आदेशपदनिर्दिष्टस्य ब्रह्मणः सर्वात्मकत्वेनैवोपपादनीयत्वात् आदेशपदार्थः प्रशासकपरो नेति स्पष्टम् ।

आदेशपदस्य प्रशासितृपरत्वे "येनाश्रुतं श्रुतं भवती"त्युत्तरवाक्यं न सङ्गच्छेत । प्रशासिता नियामक इत्यर्थः । नहि देशस्य ग्रामस्य नियामकश्रवणेन सर्वं श्रुतं भवति देशविषयकं ग्रामविषयकं वा । यद्युच्येत अत्र नियामको न केवलं निमित्तं अपि तूपादानमपि तेन तस्योपादानत्वरूपामवस्थामादाय येनाश्रुतमित्यस्योपपत्तिरुच्यते तदा उपदेशगम्यमित्यर्थाङ्गीकार एव युक्तः। तस्य सर्वज्ञानजनकज्ञानविषयत्वस्याप्युपदेशगम्यत्वसम्भवात् । अपि च तन्मते प्रकृतिविशिष्टं प्रकृतिशरीरकं ब्रह्म उपादानं तत्र विशेषणांशस्योपादानत्वेन विशिष्टस्योपादानत्वमित्युपचर्यते । एतावता च ब्रह्मणः गौणमेवोपादानत्वमित्यागतम् । न च गौणेनोपादानत्वेन एकविज्ञानेन सर्वविज्ञानोपपादनसम्भवः न हि गौणसिंहेन मुख्यसिंहकार्यं गर्जनादि सम्भवति ।

**येनाश्रुतँ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥**

सन्नुपेत्याऽऽचार्यं यावच्चतुर्विंशतिवर्षो बभूव तावत्सर्वान्वेदांश्चतुरोऽप्यधीत्य तदर्थं च बुद्ध्वा महामना महद्गम्भीरं मनो यस्यासममात्मानमन्यैर्मन्यमानं मनो यस्य सोऽयं महामनाः अनूचानमान्यनूचानमात्मानं मन्यत इत्येवंशीलो यः सोऽनूचानमानी स्तब्धोऽप्रणतस्वभाव एयाय गृहम्। तमेवंभूतं ह्याऽऽत्मनोऽननुरूपशीलं स्तब्धं मानिनं पुत्रं दृष्ट्वा पितोवाच सद्धर्मावतारचिकीर्षया। श्वेतकेतो यन्विदं महामना अनूचानमानी स्तब्धश्चासि कस्तेऽतिशयः प्राप्त उपाध्यायात्? उतापि तमादेशमादिश्यत इत्यादेशः केवलशास्त्राचार्योपदेशगम्यमित्येतद्येन वा परं ब्रह्माऽऽदिश्यते स आदेशस्तमप्राक्ष्यः पृष्टवानस्याचार्यम् ॥ २ ॥

तमादेशं विशिनष्टि—येनाऽऽदेशेन श्रुतेनाश्रुतमप्यन्यच्छ्रुतं भवत्यमतं मतमतर्कितं तर्कितं भवत्यविज्ञातं विज्ञातमनिश्चितं निश्चितं भवतीति। सर्वानपि वेदानधीत्य सर्वं चान्यद्वेद्यमधिगम्याप्यकृतार्थ एव भवति यावदात्मतत्त्वं न जानातीत्याख्यायिकातोऽवगम्यते। तदेतदद्भुतं श्रुत्वाऽऽह—कथं न्वेतदप्रसिद्धमन्यविज्ञानेनान्यद्विज्ञातं भवतीत्येवं मन्वानः पृच्छति कथं नु केन प्रकारेण हे भगवः स आदेशो भवतीति ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

आनूचानो अनुवचनसमर्थः ॥ २-३ ॥

### आनन्दगिरिटीका

किमित्यधीतसर्ववेदमधिगततदर्थं च पुत्रमात्मविद्यामधिकृत्य पिता पृच्छति तस्य सर्ववेदाध्ययनादिनैव कृतार्थत्वादित्याशङ्क्याऽऽह—सर्वानपीति। तदेतदद्भुतं श्रुत्वाऽऽहेत्युक्तं विवृणोति—कथं न्विति ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु वेदानिति बहुवचनेन सर्ववेदत्वलाभात् सर्वानिति विशेषणं व्यर्थमित्याशङ्क्य कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वपर्यवसाने अनूचानमानित्वानुपपत्तेः चतुर्णां वेदानां लाभार्थं तद्विशेषणमित्याह—चतुरोऽपीति। अध्ययनविधेरर्थावबोधपर्यन्तत्वमङ्गीकृत्याह—तदर्थं चेति। अननुरूपेति स्तम्भशीलतादौ अननुरूपता। 'विद्याविनयसम्पन्ने ब्राह्मणे' इत्यादिषु विनयस्य ब्राह्मणधर्मत्वोक्तेरिति। यन्विदमिति क्रियाविशेषणं परिहृश्यमानप्रकारेण स्तम्भयसीत्यर्थः। "उत तद्ब्रह्म अप्राक्ष्यः" इति प्रसिद्धब्रह्मशब्देन प्रश्नकरणं विहाय ब्रह्मण्यप्रसिद्धेन आदेशशब्देन प्रश्नकरणमयुक्तमित्याशङ्क्य तस्य प्रयोजनप्रदर्शनाय कर्मव्युत्पत्तिमाह—आदिश्यत इति। उपदेशैकगम्यत्वज्ञापनं तदुक्तेः प्रयोजनम्। ततश्च उपदेशैकगम्यत्वात् आचार्य एव प्रष्टव्यो न स्वबुध्या ऊहितुं शक्यत इति 'अप्राक्ष्य' इत्यत्र हेतुत्वेन तत्पदमर्थवदिति भावः।

'एष आदेशः' 'आदेश आत्मा' इत्यादिवैदिकप्रयोगेषु करणव्युत्पत्त्या ब्राह्मणाख्यग्रन्थवाचित्वदर्शनात् करणव्युत्पन्नो वा अयं शब्द इत्याह—येन वेति। अस्मिन्नपि व्याख्याने शास्त्रैकसमधिगम्यत्वमर्थात् सिद्ध्यत्येव। ब्रह्मादेशे शास्त्रं करणमित्युक्ते शास्त्रैकगम्यं ब्रह्मेत्यस्य लाभात्। नचादेशशब्दस्य ब्राह्मणवाचित्वे तज्ज्ञानात् सर्वज्ञानाभावेन येनाश्रुतमित्यादिविशेषणानुपपत्तिरिति वाच्यम्। येन ब्राह्मणेन श्रुतेन तदर्थब्रह्मश्रवणादिद्वारा सर्वश्रवणाद्युपपत्तेः येनेत्यादिविशेषणोपपत्तिरिति भावः। आदेशविशेषणोक्तेः प्रयोजनमाह—सर्वानिति। आदेशशब्दोक्तब्रह्मज्ञानेन सर्वज्ञानोक्त्या ज्ञातव्यान्तराभावेन कृतार्थत्वप्रतीतेः ततः पूर्वमकृतार्थत्वं सूच्यत इत्यर्थः। आख्यायिकात इति। तदन्तर्गतविशेषणेनेत्यर्थः। कृत्स्नाख्यायिकायां तदर्थप्रतीतेरिति। कथंन्विति प्रतीकतः कथं नु भगव इत्यादिप्रश्नवाक्यं गृहीत्वा प्रश्नस्य तात्पर्यमाह—एतदिति। अन्यविज्ञानेनान्यत् विज्ञातं भवतीत्येवंलक्षणं वस्तूपपद्यत इति तदप्रसिद्धं अप्रामाणिकमिति मन्वानः पृच्छतीत्यन्वयः।

इदानीं तस्य वाक्यस्याक्षरार्थमाह—कथं न्विति। मृत्पिण्डग्रहणेन कारणभूतं मृन्मात्रं गृह्यते न तु पिण्डः

**'यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातँ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥**

**यथा स आदेशो भवति तच्छृणु हे सोम्य । यथा लोक एकेन मृत्पिण्डेन घटशरावादिकारणभूतेन विज्ञातेन सर्वमन्यद्विकारजातं मृन्मयं मृद्विकारजातं विज्ञातं स्यात् । कथं मृत्पिण्डे कारणे विज्ञाते कार्यमन्यद्विज्ञातं स्यात् । नैष दोषः । कारणेनानन्यत्वात्कार्यस्य । यन्मन्यसेऽन्यस्मिन्विज्ञातेऽन्यन्न ज्ञायत इति । सत्यमेवं स्यात् ।**

**नरेन्द्रपुरीयं टिप्पणम्**

अनन्यत्वादित्यन्यत्वाभावादित्युक्तम् । एतत्स्फुटपति—**यन्मन्यस इत्यादिना । वाचेति** षष्ठ्यर्थे । वागिन्द्रियस्यालम्वनं विकारोऽभिधेयो नामधेयञ्चाभिधानमिति चकारप्रक्षेपेण पूर्वापरासंगतं **भास्करो** व्याचक्षे । तदसत् । वागिन्द्रियस्याभिधेयालम्बनत्वासम्भवादभिधानमात्रालम्वनत्वादभिधेयं विनापि शशविषाणादिशब्दोच्चारणदर्शनाच्च । यच्च विकारस्य नाममात्रत्वमिति शाङ्करव्याख्यानमनूद्य दूषितं प्रत्यक्षविरोधाच्छ्रुतिविरोधाच्चेति । तत्र केन

**आनन्दगिरिटीका**

मृन्मयमित्यस्य व्याख्या मृद्विकारजातमिति । तद्यथा मृत्पिण्डेन विज्ञातेन विज्ञातं स्यात्तथाऽन्यदपि सर्वं कारणेन विज्ञातेन तद्विकारजातं विज्ञातं भवतीति योजना । अन्यविज्ञानादन्यविज्ञानमदृष्टत्वादश्लिष्टमिति शङ्कते—

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

तस्य तद्रूपस्य कारणत्वाभावादित्याह—**घटशरावादीति** । प्रश्नाभिप्रायं विवृण्वन् आशङ्कते—**नन्विति** । विकारो मृत्तिकैवेत्युत्तरवाक्यस्थेन पदत्रयेण कार्यकारणाभेदं वदन् अन्यत्वासिद्धया परिहरति—**नैष इति** ।

१. यत्तु एकविज्ञानेन सर्वविज्ञानं मध्वाचार्येण मृद्विज्ञानेन मृत्सादृश्यात् मृन्मयं सर्वं विज्ञायत इत्युक्तम्, "तद्वाचारम्भणं विकारो नामधेयमि"त्यादिना तदुपपादनविरोधादुपेक्षितम् । अपि च "प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः" इत्यनेन उपादानाव्यतिरेकादेव सर्वविज्ञानप्रतिज्ञोपपादनपरब्रह्मसूत्रविरोधः ।

यदपि तेनैवोक्तं ब्रह्मणः प्राधान्यात् तज्ज्ञानेन सर्वज्ञानसिद्धिरिति । तन्न । तथा सति अस्मिन् ग्रामे अयं धनिको दृष्टश्चेत् सर्वे दृष्टा एव भवन्तीतिवत् सर्वज्ञानस्य गौणत्वापातात् । न च श्रौतं वाक्यं गौणमिति वक्तुं युक्तम् । कथं नु भगव इति प्रश्नस्य यथा सोम्यैकेन मृत्पिण्डेनेत्यनेन तदुपादानस्य च अकाण्डताण्डवत्वापत्तेः । तदनन्यत्वसूत्रस्य अव्यतिरेकाच्छब्देभ्यः इति सूत्रकारोक्तन्यायस्य च विरोधात् ।

इतिशब्दनामधेयशब्दयोः वैयर्थ्यं तु पूर्वमेव परिहृतम् । इतिः आद्यर्थः मृत्तिकादिकारणं सत्यं इत्यर्थः । अथवा मृत्तिकात्मनैव घटादिकं सत्यं न तु स्वरूपेणेत्यर्थः । इतिशब्दस्य प्रकारार्थत्वमत्रैव "दत्त मृत्युपासते तिलमाषा इति जायन्ते"—इत्यादौ प्रसिद्धम् । नामधेयपदं तु वाचारम्भणशब्दविवरणम् । सत्यमित्यस्य नित्यमिति विवरणं अशब्दार्थत्वादनुपादेयम् ।

यदपि अद्वितीयमित्यस्य समानाधिकवर्जितमित्यर्थः इति । तन्न । मुख्यार्थत्यागात् । न विद्यते द्वितीयं यत्रेति व्युत्पत्त्या द्वितीयसामान्याभावः शक्त्या उच्यते । तच्च "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या स्वहस्तितम् । यत्तु सृष्टिकथनं प्राधान्यार्थमिति । तन्न । स्वशब्देनैव ब्रह्मणः प्राधान्योक्तिसम्भवेन बहुभिर्वाक्यैः सृष्टिक्रमकथनायोगात् ।

यत्तु विजातीयाभावे येनाश्रुतं श्रुतमित्यादिविशेषणवैयर्थ्यमिति । तन्न । विजातीयमत्राचेतनं तच्च ब्रह्मण एवोत्पद्यते । तच्च नास्तीत्यस्य ब्रह्मविकारत्वात् ब्रह्माव्यतिरेकेण नास्तीत्यर्थः । तदनन्यत्वमारम्भणशब्दादिभ्य इति न्यायात् । विजातीयस्य जडत्वेन ब्रह्मविलक्षणस्य ब्रह्मण उत्पत्तिश्च "यथोर्णनाभिः सृजते गृह्णते चे"त्यादिना मुण्डकोपनिषदि निर्णीता । तथा च सजातीयं वा विजातीयं वा ब्रह्मण उत्पन्नं ब्रह्मोपादानकं ब्रह्माव्यतिरेकेण नास्ति ब्रह्मज्ञानेन तत्त्वतो ज्ञातं भवेदेव ।

**यद्यन्यत्कारणात्कार्यं स्यान्न त्वेवमन्यत्कारणात्कार्यम्। कथं तर्हीदं लोक इदं कारणमयस्य विकार इति। शृणु।**

**नरेन्द्रपुरीयं टिप्पणम्**

प्रत्यक्षेण विरोधः ? न तावच्छब्दार्थयोर्भेदगोचरेण। न हि श्रोत्रेण चक्षुरादिना च शब्दार्थावच्छिन्नो भेदो गोचरयितुं शक्यते। विशेषणविशेष्यानुल्लेखिविशिष्टज्ञानासंभवात्। नापि विकारस्य वस्तुत्वग्राहकेण, वर्तमानमात्रग्राहित्वात् प्रत्यक्षस्य अत्यन्तावाध्यतारूपवस्तुत्वगोचरत्वासम्भवात्। श्रुतिरपि का बाधिका ? न तावद्विकारित्वाभिधायिका, सत्यमिथ्यासाधारण्यात्। अथ रथान् रथयोगान् पथस्सृजत इति स्वप्नेऽपि प्रयोगात्, नापि याथातथ्यतोऽर्थान् व्यदधादिति, कर्मज्ञानानुसारेण फलविभागहेतुत्वमात्रप्रतीतेः। मायायाश्चार्थक्रियासामर्थ्याङ्गीकारेण तदुपपत्तेः। यच्च श्रोत्रग्राह्यशब्देन चक्षुरादिग्राह्यार्थस्याभेदः कस्सचेताः प्रतिपत्तुं समर्थ इत्युपालम्भनम्। तत्पररहस्याज्ञान-

**आनन्दगिरिटीका**

**कथमिति**। कार्यकारणयोरन्यत्वासिद्धेर्मैवमिति परिहरति—**नैष दोष इति**। तदेव स्फुटयति—**यन्मन्यस इत्यादिना**। अन्यत्वाभावे लोकप्रसिद्धिविरोधं शङ्कते—**कथं तर्हीति**। वाचाऽऽरम्भणमित्यत्र वाचेति तृतीया षष्ठ्यर्थे द्रष्टव्या।

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

सङ्ग्रहवाक्यं विवृणोति—**यन्मन्यसे इत्यादिना**। वाचारम्भणं इत्यादिपदत्रयनिरस्यां शङ्कामाह—**कथमिति**। विकार इत्यनन्तरं व्यवहार इति शेषः। वाचारम्भणमित्यादिपदत्रयेण परिहरति—**शृण्विति**। विकारस्य भेद-

---

एकविज्ञानेन सर्वविज्ञानं कथं भवेत् श्रीरामानुजीयसम्प्रदाये इति विवेचनीयम्—तत्र जडप्रपञ्चस्य ब्रह्मोपादानकत्वात् कथञ्चित् ब्रह्मज्ञानेन ज्ञानं भवेत् जीवानां तु तन्मतेऽपि नित्यत्वाङ्गीकारात् न लयः सम्भवति येन जीवोपादानकत्वमनुमीयेत, नापि सृष्टिप्रकरणे जीवसृष्टिरुक्ता। नापि ब्रह्मैक्यात् तज्ज्ञानेन ज्ञातता तयोर्भेदात्।

यत्तु जडोपादानत्वं जडभूतप्रकृतिशरीरकतयेति। तन्न। तथापि विशिष्टे उच्यमानमुपादानत्वं विशेषणे पर्यवस्यतीति प्राप्तम्। तथा च विशेष्यं अपरिणामीत्येव सिद्धयेत्। तथा चोपादानत्वानुपपत्तिः। चिद्रूपाः जीवास्तु नित्या तल्लयः उत्पत्तिर्वा धर्मभूतज्ञानस्य न जीवस्येति न तदुपादानत्वं ब्रह्मणः। इति ध्येयम्।

धर्मभूतज्ञानस्य धर्मिणा सह अभेदो भेदो वा ? भेदाभेदौ वा ? नाद्यः, स्वमपीत इत्यनेन जीवलयापातात्। न द्वितीयः, धर्मलये जीवस्य लयाभावेन सदुपादानकत्वाभावात् सतो ज्ञानेन सर्वज्ञत्वासम्भवात्। नापि भेदाभेदौ मिथो विरोधात्।

अत्र च विशिष्टाद्वैतभाष्यकृता तदनन्यत्वं व्याचक्षाणेन तत्सत्ताव्यतिरिक्तसत्ताकत्वाभावतदनन्यत्वमित्युक्तम्, पुनः एवं सति प्रपञ्चमिथ्यात्वोपगमापत्तिः। न। गुणे जात्यनङ्गीकारपक्षे द्रव्यगतसत्त्वैव तत्र भातीत्युपगमे गुणमिथ्यात्वं नापद्यते यथेति परिहृतम्। तन्न। दृष्टान्तवैषम्यात् गुणे सत्ताजात्यनभ्युपगमेऽपि अस्तित्वरूपं अमिथ्यात्वमङ्गीक्रियते। अत्र तु सत्ता नाम ब्रह्मनिष्ठमबाध्यत्वं "सदेव सोम्य" "सत्यं ज्ञानमि"त्यादिना प्रोक्तम्। तच्च एकमेव प्रपञ्चे ब्रह्मसत्ताव्यतिरिक्तसत्ताऽभावात्, अतोऽबाध्यत्वं नास्तीत्युक्ते बाध्यं मिथ्येत्येव प्राप्तम्। स यथा शकुनिः इति खण्डः विशिष्टाद्वैतिभिः मनः दिशं दिशं पतित्वा प्राणमेवोपश्रयत इति यथाश्रुतप्राणपरतया व्याख्यातम्। तन्न। अत्र हि मनः जीवः प्राणः ब्रह्म, स च जीवः जाग्रत्स्वप्नयोः विषयेषु चरित्वा सुषुप्ते ब्रह्मणि लीयते इत्यर्थः। कुत इति चेत् पूर्वखण्डे जीवः स्वमपीतो भवति सुषुप्तौ; तेन स्वपितीत्युच्यत इत्युक्तत्वात्। अत्र मनःप्राणयोर्ग्रहणे प्रकृतासम्बन्धमुक्तं स्यात्। अत एव स्वपितिनामनिर्वचनस्योपोद्बलनार्थं अशनापिपासाशब्दनिर्वचनं अनुपदमेव क्रियते। त्वन्मते मध्ये असम्बद्धस्य मनसः प्राणे लयस्य प्रवेशोक्तिः इति। तावतापि सुषुप्ते ज्ञानाभावानुपपादनाच्च मनसः अनुपादाने प्राणे लयासम्भवाच्च। अपि च

वाचाऽऽरम्भणं वागारम्भणं वागालम्बनमित्येतत्। कोऽसौ विकारो नामधेयं नामैव नामधेयं स्वार्थे धेयप्रत्ययः। वागालम्बनमात्रं नामैव केवलं न विकारो नाम वस्त्वस्ति परमार्थतो मृत्तिकेत्येव तु मृत्तिकैव सत्यं वस्त्वस्ति ॥ ४॥

नरेन्द्रपुरीयं टिप्पणम्

विलसितम्। न हि मायावादी शब्दाभेदं ब्रूते। किन्तु यथा कश्चिदर्थमिथ्यात्वविवक्षया ब्रूते वाङ्मात्रमेतदिति। तस्य तद्विकारस्यावस्तुत्वविवक्षया नाममात्रत्वाभिधानम्। तस्मात्तस्करादप्यपकृष्टोऽयं भास्करः। स हि चोरस्थानं रक्षति अयं तु शाङ्करमेवोच्छिष्टमश्नन् शाङ्करमेव शपते। यच्च नित्यत्वात्कारणे सत्यशब्दः कार्ये चानित्यत्वादनृतत्वाभिधानमिति। तदपि, स्वदर्शनपक्षपातमात्रं सत्यानृतशब्दयोरबाध्यबाध्यतागोचरत्वेन शुक्तिरजतादिषु प्रसिद्धत्वादनित्ये च घटादौ तेन द्वैतिभिश्चानृतत्वाव्यवहरणाद्विस्तृतं चैतत्प्रकटार्थे इत्युपरम्यते ॥ ४-५ ॥

आनन्दगिरिटीका

नामधेयमित्यस्यार्थं कथयति—नामैवेति। विकारस्य मिथ्यात्वे किं परमार्थतोऽस्तीत्याशङ्क्याऽऽह—मृत्तिकेत्येवेति ॥ ४॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

व्यवहारालम्बनत्वे पुनरप्यन्यत्वं प्राप्तमित्याह—नामधेयमिति। ननु नामव्यतिरेकेण विकाराभावे निर्विषयत्वं प्रसज्येतेत्याशङ्क्य परमार्थतो विकाराभावेऽपि अनिर्वचनीयस्य तस्य सत्त्वान्न दोष इत्याह—नामैव केवलमिति। ननु विकारस्यासत्त्वे तत्र सद्बुद्धिर्न स्यादित्याशङ्क्य मृत्तिकैव सत्यमित्यनेन परिहरति—मृत्तिकैवेति। ननु तस्या अपि विकारत्वादसत्वादसत्यत्वमित्याशङ्क्य इतिशब्देन परिहरति—इतीति। इत्यनेन प्रकारेण मूलकारणमेव सत्यं तत्सत्तैव सर्वविकारे प्रतीयत इति उन्नेयमिति शेषः। अक्षरार्थस्तु—इतिशब्दः प्रकारवचनः मृत्तिकेति मृत्तिकाप्रकारश्चदित्यर्थः तत्प्रकारश्चोपादानत्वं मृत्तिकाप्रकारवत् मूलकारणं सत्यमित्यर्थः। नन्वेवमपि कार्यस्य परमार्थतः कारणव्यतिरेकाभावेऽपि अनिर्वचनीयस्य भेदस्य सत्त्वात् कथं कारणज्ञानेन कार्यज्ञानमिति चेन्न, वस्तुतत्वज्ञानमेव हि वस्तुज्ञानं आरोपितरजतादिरूपेण ज्ञाते वस्तुनि शुक्तिकां जानातीति व्यवहारादर्शनात्। वस्तुनश्च तत्त्वमुपादानमेवेति तद्विज्ञाने सर्वविकारजातं ज्ञातमेवेति। एतदभिप्रेत्येव वाचारम्भणश्रुत्या कारणव्यतिरेकेण कार्यासत्वोक्तिपूर्वकं तस्य कारणमेव तत्त्वमित्युक्तम्—मृत्तिकेत्येव सत्यमिति।

---

प्राज्ञेनात्मना सम्परिष्वक्तो भवति जीवः सुषुप्तौ, अत एव आत्मानं परं च न जानातीति ज्योतिर्ब्राह्मणाभिप्रायविरोधश्च।

परैः वाचारम्भणश्रुतेरित्थं व्याख्या कृता—वाचा इति तृतीया फले हेतौ। तेन वाक्पूर्वको व्यवहारो लक्ष्यते। स च स्पर्शनक्रियां प्रति प्रयोजनरूपः। आरभ्यत इत्यारम्भणं रलयोरभेदात् आलम्भनं स्पर्शः, विकारो नामधेयमित्युभयोः विशेषणस्यारम्भणशब्दस्य नपुंसकमनपुंसकेनेति सूत्रेण नपुंसकत्वं एकवचनं च; मृत्पिण्डेनेत्यनुषङ्गः। तथा च वाक्पूर्वकहानादिव्यवहारार्थं मृत्पिण्डेन विकारः घटाद्यवस्था घट इत्यादिनामधेयं च दृश्यते। मृत्पिण्ड एव नामरूपभाक् भवतीति न मृदो द्रव्यान्तरं घटादिरिति प्रतिज्ञातेऽर्थे प्रमाणमुच्यते मृत्तिकेत्येव सत्यमिति। मृद्घट इति प्रत्यभिज्ञया मृद्द्रव्यत्वेनैव प्रामाणिकमित्यर्थः इति। तन्न। सत्यमित्यस्य प्रामाणिकमित्यर्थस्तु न सम्भवति प्रामाणिकत्वस्य सत्यविषयकज्ञानत्वरूपप्रमात्वघटितत्वेन अन्योन्याश्रयात्। अक्लेशेन भगवत्पदोक्तरीत्या व्याख्यानोपपत्तौ वाक्शब्दस्य व्यवहारलक्षकत्वं, तृतीयायाः प्रसिद्धार्थत्यागः, आरम्भणशब्दस्य प्रसिद्धार्थत्यागेन स्पर्शार्थत्वं स्पर्शस्य च मुख्यस्यासम्भवात् अर्थान्तरपर्यवसानं चकाराध्याहारः मृत्पिण्डेनेत्यनुषङ्गः, चतुर्थखण्डे त्रीणि रूपाणीत्येव सत्यमित्यत्र तृतीयान्तस्यानुषञ्जनीयस्याभावेन तदध्याहारः सत्यमित्यस्य मुख्यार्थत्यागः इत्यादिबहुदोषदुष्टमिदं व्याख्यानम्।

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातँ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥
यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातँ स्याद्वाचाऽऽरम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेवँ सोम्य स आदेशो भवतीति ॥ ६ ॥

यथा सौम्यैकेन लोहमणिना सुवर्णपिण्डेन सर्वमन्यद्विकारजातं कटकमुकुटकेयूरादि विज्ञातं स्यात् । वाचाऽऽरम्भणमित्यादि समानम् ॥ ५ ॥

यथा सौम्यैकेन नखनिकृन्तनेनोपलक्षितेन कृष्णायसपिण्डेनेत्यर्थः । सर्वं कार्ष्णायसं कृष्णायसविकारजातं विज्ञातं स्यात् । समानमन्यत् । अनेकदृष्टान्तोपादानं दार्ष्टान्तिकानेकभेदानुगमार्थं दृढप्रतीत्यर्थं च ।

नरेन्द्रपुरीयं टिप्पणम्

दार्ष्टान्तिकेऽनेकभेदानुगमार्थमिति। अयमर्थः। सदन्विताभावास्सत्प्रकृतिकाः, विज्ञानानुविद्धा विज्ञेया विज्ञानप्रकृतिकाः, प्रियत्वानुविद्धाः प्रिया आनन्दप्रकृतिकाः । तर्हि दुःखानुविद्धा मौढ्यानुविद्धाश्च रजस्तमः प्रकृतिका इति

आनन्दगिरिटीका

एकेनैव दृष्टान्तेन विवक्षितार्थसिद्धौ किमनेकदृष्टान्तोपादानेनेत्याशङ्क्याऽऽह—अनेकेति । न वा इत्यादि-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

विद्याप्रकाशे तु आधाराधेयात्मकं कारणकार्यरूपद्वयं मिलितं घट इत्युच्यते तत्राधारांशे ज्ञाते वस्तु ज्ञातमेव गोपुच्छस्पर्शे गोस्पर्शवदित्युक्तम् । तथाहुः—आकृत्याधारभागो यो घटस्यासौतुवुध्यते । आधारमात्रभागेऽपि ज्ञाते ज्ञातो घटो भवेत् ॥ गोपुच्छमात्रसंस्पर्शात् गोस्पर्शव्रतपूर्तिवत् । आकृतेर्यद्वदज्ञाने घटाज्ञानं त्वयोच्यते । तद्वदाधारबोधेन घटो बुद्धः कुतो नहि ॥ इति ।

प्रकारान्तरेणापि सर्वविज्ञानं तत्रैवोक्तम्—विकारेण योंऽशः आदरेण ज्ञातव्यः स सर्वोऽपि उपादानविज्ञानेन ज्ञायत इति ।

तदप्युक्तम्—सत्यायां मृदि तात्पर्यं नानृतेऽस्ति घटादिके । इक्षौ रसोस्त्यृजीषं च रसं गृह्णाति बुद्धिमान् । नर्जीषमेव कुम्भेऽपि मृद्भागे युक्त आदरः । ये घटादिषु मृद्भागा ज्ञातव्या आदरेण ते । सर्वेऽपि राशिविज्ञानादेव ज्ञाता भवन्ति हि । मृद ऐक्येपि सर्वत्वं आकारैस्तदुपाधिभिः । निरुपाधिकविज्ञानात् सर्वोपहितधीर्भवेत् । इति ।

सर्वस्य तत्त्वविद्विज्ञानं भवत्युपादानविज्ञानेनेति ग्रन्थोक्तः प्रकारः । विद्याप्रकाशोक्तस्तु कार्यगतैकांशविज्ञानात् अंशी विज्ञायत इति कारणांशविज्ञानात् सर्वविज्ञानमिति प्रथमः । द्वितीयस्तु सर्वत्रादरेण ज्ञातव्यस्य ज्ञानात् सर्वविज्ञानमिति विवेकः ।

लोहमणिशब्दस्य नखनिकृन्तनशब्दस्य च विकारवाचित्वात् तच्छब्देन तद्गतकारणांशो लक्ष्यत इत्याह—सुवर्णपिण्डेनेत्यादिना । दार्ष्टान्तिकेति । दार्ष्टान्तिके ये अनेके भेदाः विलक्षणानि तेजः प्रभृतीनि कार्याणि । तेषु अनुगमः सर्वत्र कारणविज्ञानेन विज्ञातत्वस्य सम्भावना तदर्थमित्यर्थः ।

---

अस्मन्मते तु "एवं स आदेशो भवती"त्यत्र विवक्षितविशेषस्योपसंहारपरे "ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा" इत्यत्र कथं सर्वस्य तदात्मत्वमित्याकाङ्क्षायां तत्सत्यं अनृतमितरदिति । स च तस्याधिष्ठानं आत्मा सर्पस्येव रज्जुः इति मृषात्वाभिप्रायः स्फुट एव—सद्विद्याविलासः । एतेन "वाचारम्भणमित्युक्तेर्मिथ्येत्यश्रुतकल्पनम् । पुनरुक्तिः नामधेयमित्यस्य निरर्थता" इति परोक्तिरपि प्रत्युक्ता । मृत्तिकेत्येव सत्यमिति सावधारणश्रुत्या कार्यस्य घटादेः असत्यत्वं श्रुतिसिद्धम् । इतिशब्दस्य प्रकारार्थत्वमित्युक्तमेव । नामधेयपदं विकारस्य नाममात्रत्वं, वाचारम्भणपदार्थविवरणमेवेत्युक्तत्वात् ।

**न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथं मे नावक्ष्यन्निति भगवाँ्स्त्वेव मे तद्ब्रवीत्विति तथा सोम्येति होवाच ॥ ७ ॥**

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य प्रथमः खण्डः

एवं सोम्य स आदेशो यो मयोक्तो भवतीत्युक्तवति पितर्यहितरो न वै नूनं भगवन्तः पूजावन्तो गुरवो मम ये त एतद्यद्भवदुक्तं वस्तु नावेदिषुर्न विज्ञातवन्तो नूनम्। यद्यदि ह्यवेदिष्यन् विदितवन्त एतद्वस्तु कथं मे गुणवते भक्तायानुगताय नावक्ष्यन्नोक्तवन्तस्तेनाहं मन्ये न विदितवन्त इति। अवाच्यमपि गुरोर्न्यग्भावमवादीत्पुनर्गुरुकुलं प्रति प्रेषणभयात्। अतो भगवांस्त्वेव मे मह्यं तद्वस्तु येन सर्वज्ञत्वं ज्ञातेन मे स्यात्तद्ब्रवीतु कथयत्वित्युक्तः पितोवाच तथाऽस्तु सौम्येति ॥ ७-८ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य प्रथमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

रजस्तमसोर्मूलकारणत्वप्रसङ्ग इति चेत्, न, तयोः सदनुविद्धत्वे सत्प्रकृतिकत्वान्मूलकारणत्वानुपपत्तेः। मायायाः सच्छब्दवाच्ये प्रविष्टत्वात् सदन्वयो असिद्धः सद्विज्ञानानन्दानाञ्च परस्पराव्यभिचारादैक्यादन्वय्यन्वितभावासिद्धेः कारणत्वोपलक्षितमनृतजडदुःखादिविरुद्धमेकरसं सिध्यतीति। न्यग्भावः निहीनत्वं विशिष्टज्ञानशून्यत्वमित्यर्थः। स्थौल्यादिधर्मकस्य बाध्यत्वेन सत्यत्वानुपपत्तेः सच्छब्दादेव निरुपपदात् सूक्ष्मत्वादि लभ्यत इत्यर्थः ॥ ६-७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य प्रथमः खण्डः

आनन्दगिरिटीका

प्रतीकमादाय व्याचष्टे—भगवन्त इति। तेषामज्ञाने हेतुमाह—यदित्यादिना। ननु श्वेतकेतुर्गुरूणामज्ञानमाचक्षाणो गुरुद्रोही प्रत्यवायी स्यादित्याशङ्क्याऽऽह—अवाच्यमपीति। गुरूणामज्ञानमतःशब्दार्थः ॥ ६-७ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य प्रथमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एतदुक्तं भवति—एकस्मिन् मृद्दृष्टान्ते उक्ते मृद्विकाराणां मृद्विज्ञानेन ज्ञातत्वेऽपि ततो विलक्षणानां तेज आदिभूतानां तद्विकाराणां च कथं सद्विज्ञानेन ज्ञातत्वमिति शङ्का स्यात्।

लोहमण्याद्यनेकदृष्टान्तेषूक्तेषु तु विलक्षणानामपि बहूनां कारणज्ञानेन ज्ञातत्वदर्शनात् प्रकृतेष्वपि तेज आदिषु ज्ञातत्वसम्भावना स्यात् इति। दृढप्रतिपत्त्यर्थमिति। यद्यत्कार्यं तत्तत् कारणज्ञानात् ज्ञातमिति व्याप्तेर्दृढप्रतिपत्तिर्भवति। बहुषु दृष्टान्तेषु भूयोदर्शनसम्भवादित्यर्थः ॥ ७ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य प्रथमः खण्डः

---

यथा सोम्येति—ननु मृदो ज्ञानेन सर्वस्य मृन्मयस्य ज्ञानं मृन्मयानां तत्त्वज्ञानमित्यभिप्रेतं, एवं चेत् तेषां तत्त्वं मृदेव तथा च मृद्ज्ञानेन मृद्ज्ञानं भवतीत्यर्थः, एवं सत्यभेदे कथं जन्यजनकभाव इति चेन्न। अत्र तृतीयार्थोऽभेदः अभेदस्य च विज्ञातमित्यत्र विज्ञाने अन्वयः। तथा च ब्रह्मज्ञानाभिन्नं यत्तत्त्वतो ज्ञानं तद्विषयं, स्वीयतत्त्वज्ञानाभिन्नज्ञानविषयब्रह्मकं सर्वमित्यर्थः। अतो नानुपपत्तिः।

यत्तु विवर्तवादे मृत्पिण्डमृन्मयदृष्टान्तानुपपत्तिरिति। तन्न। परिणामवादस्यासम्भवदुक्तिकत्वात् घटादीनामपि मृद्विवर्तत्वात्। तथा हि घटः न मृद्भिन्नः मृद्घट इत्यनुभवविरोधात्। नाप्यभिन्नः भिन्नभिन्नकार्यकरत्वात्। अत्यन्ताभेदे घटो घट इतिवत् सामानाधिकरण्यानुपपत्तेः। नापि भिन्नाभिन्नौ एकस्मिन् भेदाभेदयोर्विरोधात्। अतो घटः अनिर्वचनीयो मृद्विवर्त एवेति ( भा० १।४।१ )।

**[1]सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्। तद्धैक आहु-रसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत ॥ १ ॥**

सदेव सदित्यस्तितामात्रं वस्तु सूक्ष्मं निर्विशेषं सर्वगतमेकं निरञ्जनं निरवयवं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः। एवशब्दोऽवधारणार्थः। किं तदवध्रियत इत्याह। इदं जगन्नामरूपक्रियावद्विकृतमुपलभ्यते यत्तत्सदेवाऽऽसीदित्यासीच्छब्देन सम्बध्यते। कदा सदेवेदमासीदित्युच्यते। अग्रे जगतः प्रागुत्पत्तेः।

आनन्दगिरिटीका

यद्विज्ञानेन सर्वविज्ञानं लभ्यते तद्विज्ञानं प्रतिज्ञातं प्रकटीकर्तुं प्रथमं सर्वस्य सन्मात्रत्वं प्रतिजानीते—**सदेवेति**। सच्छब्दस्य सामान्यविषयत्वं व्युदस्यति—**सदितीति**। तस्य पृथिव्यादिभ्यो विशेषं दर्शयति—**सूक्ष्ममिति**। आकाशादिभ्यो विशेषमाह—**निर्विशेषमिति**। अन्त्यविशेषव्यावृत्त्यर्थं विशेषमाह—**सर्वगतमिति**। तस्य ताटस्थ्यं व्यावर्तयति—**एकमिति**। प्रत्यगभिन्नस्य तस्य संसारित्वं वारयति—**निरञ्जनमिति**। निष्क्रियत्वेन तत्कूटस्थत्वमाह—**निरवयवमिति**। यथोक्ते वस्तुनि प्रमाणमाह—**यदवगम्यत इति**।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

कारणविज्ञानात् कार्यविज्ञानसम्भवेऽपि सद्विज्ञानात् कथं सर्वविज्ञानमित्याशङ्क्य सतः सर्वकारणत्वं वक्तुं सदेवेत्यादिश्रुतिः प्रवृत्ता। तां व्याचष्टे—**सदेवेति**। सदित्युक्ते सत्ताजातिविशिष्टमुक्तमिति भ्रमं वारयति—**अस्तितामात्रमिति**। धर्मरूपत्वं वारयति—**वस्त्विति**। अस्तितामात्रत्वे हेतुः **सूक्ष्ममिति**॥ तस्य सत्तासामान्यभावे हेतुः **निर्विशेषमिति**। तत्रैव हेत्वन्तरमाह—**एकमिति**। सर्वत्र प्रतीयमानस्यैकत्वमुपपादयति—**सर्वगतमिति**। कार्यत्वे सर्वगतत्वानुपपत्तिरित्याशङ्क्याह—**नित्यमिति**। तत्र हेतुमाह—**निरवयवमिति**। कारणसम्बन्धाभावादपि न कार्यत्वमित्याह—**निरञ्जनमिति**। निरवयवत्वादौ प्रमाणमाह—**यदवगम्यत इति**। "निष्कलं निष्क्रियमि"त्यादिश्रुतयोऽत्र प्रमाणमित्यर्थः। जगतः सदात्मना निर्धारणं न युक्तं उत्पत्तेः पूर्वं कार्यस्यासत्त्वादिति शङ्कते—**किं तदिति**। इत्याहेति इति शङ्कायामाहेत्यर्थः। असतः शशविषाणादेरिव उत्पत्त्यसम्भवादनभिव्यक्तविशेषरूपस्य कारणात्मना सत एव नामरूपविशेषरूपेण उत्पत्तेरङ्गीकार्यत्वात् कार्यस्योत्पत्तेः पूर्वं सदात्मनाऽवधारणं युक्तमित्याह—**इदं जगदिति**। यत्सत् तदिदमासीदित्यन्वयभ्रमं निराकर्तुं सदेवेत्यत्र आसीच्छब्देन व्यवहितेन अन्वयमाह—**उपलभ्यते यत् तत् सदेवासीदिति**। जगदस्तीत्येवं प्रतीतेरिदानीं सदात्मत्वं सिद्धमिति नोपदेष्टव्यमिति शङ्कते—**कदेति**। तर्हि इदानीं सदात्मकत्वं न स्यात् अग्रे इति विशेषणात्। विशेषणस्य च स्वासम्बन्धिनः

---

१. सदेव सोम्येति—समन्वयाधिकरणे सदेवेत्याद्यध्यायः अद्वितीये ब्रह्मणि समन्वेति उपक्रमादिषड्विधतात्पर्यलिङ्गदर्शनात् इत्युक्तं तत्र (१) उपक्रमोपसंहारौ—विचार्यवाक्यस्य आद्यन्तयोरेकार्थपर्यवसानं, अत्र सदेवेत्युपक्रमः, स आत्मा तत्त्वमसीत्युपसंहारः। (२) अभ्यासः—अनन्यपरं पुनः श्रवणं अत्र च तत्त्वमसीति नवकृत्वोऽभ्यासः। (३) अपूर्वता—प्रतिपाद्यस्यार्थस्य मानान्तरागोचरत्वम्। अत्र च जीवब्रह्मैक्यं प्रतिपाद्यं न मानान्तरगोचरम्। (४) फलम्—प्रयोजनं, तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य इति मोक्षः। (५) अर्थवादः—प्राशस्त्यं अत्र च एकविज्ञानेन सर्वविज्ञानम्। (६) उपपत्तिः—युक्तिः अन्नेन शुङ्गेनापो मूलमन्विच्छ इत्यादिः। प्राशस्त्यं बलवदनिष्टाननुबन्धित्वं अभ्यासबाध्यं उत्कृष्टत्वं तु आदरविशेषात् प्रतिपाद्यस्य इतरापेक्षया उत्कृष्टरूपमिति भेदः।

अत्र च सच्छब्दार्थः प्रधानमिति सांख्यमतमेवोपनिषदाऽनूद्यते इति केचित्—तन्न। तदैक्षत इति सतः ईक्षणश्रवणात् प्रधाने जडे तदसम्भवात्। न च प्रधाने ईक्षणं गौणं तन्निष्ठस्य मोक्षोपदेशात् मोक्षजनकज्ञान(न)विषयत्वादित्यर्थः। "आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ सम्पत्स्ये" इत्युक्तेः "स्वमपीतो भवती"त्युक्तस्य सुषुप्तिकाले जीवलयाधारत्वस्य प्रधानेऽसम्भवात् इत्यादिना खण्डनं द्रष्टव्यम्। ब्रह्मणः उपादानकारणत्वं निर्णेतुं सूत्रं—प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इति। ब्रह्म

किं नेदानीमिदं सद्येनाग्र आसीदिति विशेष्यते। न, कथं तर्हि विशेषणम्। इदानीमपीदं सदेव किन्तु नामरूपविशेषणवदिदंशब्दबुद्धिविषयं चेतीदं च भवति। प्रागुत्पत्तेस्त्वग्रे केवलसच्छब्दबुद्धिमात्रगम्यमेवेति सदेवेदमग्र आसीदित्यवधार्यते। न हि प्रागुत्पत्तेर्नामवद्रूपवद्वेदमिति ग्रहीतुं शक्यं वस्तु सुषुप्तकाल इव। यथा सुषुप्तादुत्थितः सत्त्वमात्रमवगच्छति सुषुप्ते सन्मात्रमेव केवलं वस्त्विति तथा प्रागुत्पत्तेरित्यभिप्रायः।

यथेदमुच्यते लोके पूर्वाह्णे घटादि सिसृक्षुणा कुलालेन मृत्पिण्डं प्रसारितमुपलभ्य ग्रामान्तरं गत्वा

### आनन्दगिरिटीका

विशेषणानुसारेण शङ्कते—किं नेदानीमिति। वर्तमानदशायामसत्त्वं जगतो नास्तीत्याह—नेति। सदा सत्त्वाविशेषे विशेषणं न निर्वहतीति शङ्कते—कथमिति। किं विशेषणसामर्थ्यादिदानीमसत्त्वं जगतश्चोद्यते किं वा विशेषणस्यार्थवत्त्वं पृच्छ्यते तत्राऽऽद्यं दूषयति—इदानीमपीति। प्रत्यक्षविरोधान्न वर्तमानावस्थायां जगदसत्त्वसिद्धिरित्यर्थः। द्वितीयं प्रत्याह—किंत्विति। यच्चेदं वर्तमानं जगन्नामरूपविशेषणवदालक्ष्यते तदिदंशब्दस्य तद्बुद्धेश्च विषयभावेन स्थितं भवतीति कृत्वेदमिदानीमित्यपि व्यवह्रियते तदेव त्वग्रे प्रागुत्पत्तेः सच्छब्दस्तद्बुद्धिश्चेत्येतावन्मात्रगम्यमेव न त्विदंशब्दस्य तद्बुद्धेश्च विषयो भवतीत्यग्रे सदेवेदमासीदित्यवधार्यते तस्माद्विशेषणमिदंशब्दबुद्धिव्यावृत्त्यपेक्षं प्राक्कालीने जगत्यविरुद्धमित्यर्थः। अथावर्तमानावस्थायामपि जगतः सत्त्वे किमिति तत्रेदंशब्दबुद्धी न क्रमेते अत आह—न हीति। यथा सुषुप्ते काले सदपि वस्तु नेदंशब्दबुद्ध्योर्गोचरं तथा प्रागुत्पत्तेः सदपि जगन्नामवत्त्वेन रूपवत्त्वेन चेदमिति न व्यवहर्तुं शक्यं करणोपसंहारस्योभयत्र तुल्यत्वादित्यर्थः। सुषुप्तेऽपि वस्तुनो न सत्त्वं मानाभावादित्याशङ्क्याऽऽह—यथेति। नहि तत्र वस्तुनोऽसत्त्वमुत्थितस्य परामर्शादननुभूतस्यानुभवितुश्चाभावे तदयोगात्। न च तत्र विभक्तं वस्तु दृश्यते सुषुप्त्यभावप्रसङ्गादतस्तत्र केवलसन्मात्रं वस्त्विति यथाऽवगमस्तथा प्रागुत्पत्तेरपि सर्वं सन्मात्रमुक्तमेवेत्यर्थः।

उक्तमेवार्थं संप्रतिपन्नेनोदाहरणान्तरेण समर्थयते—यथेत्यादिना। किमिदं सदित्यपेक्षायां तल्लक्षणमाह—

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सकाशाद्व्यावर्तकत्वात् इति शङ्कते—किन्नेदानीमिति। कार्यस्याप्युपादानव्यतिरेकेण स्वातन्त्र्येण सत्त्वानुपपत्तेः कालत्रयेऽपि सदात्मनैव आत्मवत्त्वमिति परिहरति—नेति। तर्हि विशेषणस्य का गतिरित्याशङ्क्य तस्य अग्रे सदिति सच्छब्दे नान्वयः येन इदानीं सदात्मत्वं न स्यात्। किन्तु एवकारार्थेन इदंशब्दबुद्धिविषयत्वप्रतिषेधेनान्वयः। ततश्च अग्रे इदंशब्दबुद्धिविषयत्वं नास्ति। इदानीं तु इदंशब्दबुद्धिविषयत्वमप्यस्ति इति सिद्ध्यतीति परिहरति—कथं तर्हीत्यादिना। किन्तु इदंच भवतीत्यन्वयः। इदानीमपि सदात्मकत्वेऽपि इदन्त्वं च भवतीत्यर्थः। इदन्त्ववत्त्वे हेतुमाह—नामेति नामरूपविशेषवत्त्वादिदंशब्दबुद्धिविषयत्वम्। ततश्च इदन्त्वं च भवतीत्यर्थः। उभयत्र चशब्दः सदात्मत्वसमुच्चयार्थः। प्रागुत्पत्तेरिदन्त्वाभावं साधयति—न हीति। नामरूपयोः कारकव्यापाराधीनत्वदर्शनादित्यर्थः। कारणत्वं तु सदात्मत्वं स्वाभाविकं तत्तु सृष्टेः प्राक् ग्रहीतुरभावेऽपि सृष्ट्यनन्तरं तदनुमानेन ग्रहीतुं शक्यमिति सदृष्टान्तमाह—यथा सुषुप्तादीति। उत्थितस्य 'सुखं सुप्तोऽस्मि' इत्यस्मितानुसन्धानेन सुषुप्ते सन्मात्रमवगच्छतीत्यर्थः। 'किं नेदानीं' इत्यादि 'तथा प्रगुत्पत्तेः' इत्यन्तो ग्रन्थः केषुचित्पुस्तकेषु नास्ति तल्लेखकदोषात्। नन्वेवमपि कथं अग्र आसीदित्युच्यते सृष्टेः प्राक् कालाभावेन तत्सम्बन्धाभावात् इत्याशङ्क्य कालसम्बन्धाभावेपि लोकसिद्धप्रकारेण पुरुषं बोधयितुं कालसम्बन्धमारोप्य अग्र आसीदित्याहेत्याह—यथेदमिति। इदं सदेवेत्युक्त्या कार्यविवर्तवादः।

---

प्रकृतिः चात् निमित्तं च, येनाश्रुतं श्रुतं भवति इति प्रतिज्ञा। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् इति दृष्टान्तः। ताभ्यां ब्रह्मणः उपादानत्वं गम्यते। उपादानं हि कार्यस्य पारमार्थिकं रूपं कार्यस्य वाचारम्भणमात्रत्वात्।

प्रपञ्चमिथ्यात्वं च श्रुत्या "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इत्याद्यया प्रतिपाद्यते। तदनन्यत्वं तद्व्यतिरेकेणाभावः ब्रह्मव्यतिरेकेणाभावः। स च वाचारम्भणश्रुत्या बोध्यते। वागालम्बनं विकारः नाममात्रं मृत्तिकेत्येव सत्यम्। तथा च सूत्रं—तदनन्यत्वमारम्भणशब्दादिभ्य इति।

प्रत्यागतोऽपराह्णे तत्रैव घटशरावाद्यनेकभेदभिन्नं कार्यमुपलभ्य मृदेवेदं घटशरावादि केवलं पूर्वाह्णे आसीदिति तथेहाप्युच्यते [1]सदेवेदमग्र आसीदिति । एकमेवेति । स्वकार्यपतितमन्यन्नास्तीत्येकमेवेत्युच्यते । अद्वितीयमिति । मृद्व्यतिरेकेण मृदो यथाऽन्यद्घटाद्याकारेण परिणमयितृकुलालादिनिमित्तकारणं दृष्टं तथा सद्व्यतिरेकेण सतः सहकारिकारणं द्वितीयं वस्त्वन्तरं प्राप्तं प्रतिषिध्यतेऽद्वितीयमिति । नास्य द्वितीयं वस्त्वन्तरं विद्यत इत्यद्वियीयम् । ननु वैशेषिकपक्षेऽपि सत्सामानाधिकरण्यं सर्वस्योपपद्यते । द्रव्यगुणादिषु सच्छब्दबुद्ध्यनुवृत्तेः । सद्द्रव्यं सन्गुणः सत्कर्मेत्यादिदर्शनात् । सत्यमेवं स्यादिदानीं प्रागुत्पत्तेस्तु नैवेदं कार्यं सदेवाऽऽसीदित्यभ्युपगम्यते वैशेषिकैः प्रागुत्पत्तेः

नरेन्द्रपुरीयं टिप्पणम्

स्वकार्यपतितमिति । कार्यसम्बन्धिद्रव्यत्वादिसामान्यं दिक्कालादिकञ्च वैशेषिकादेर्नित्यत्वेनाभिमतं

आनन्दगिरिटीका

एकमिति । अवतारिते लक्षणवाक्ये प्रथमं विशेषणयोरर्थमाह—स्वकार्येति । सजातीयस्वगतभेदहीनमित्यर्थः । विशेषणान्तरमादाय व्याकरोति—अद्वितीयमितीति । विजातीयभेदशून्यमित्यर्थः । यदुक्तं सत्सामानाधिकरण्यात्सदेव सर्वमिति तत्राऽऽरम्भवादी शङ्कते—नन्विति । किं कार्यस्य सत्सामानाधिकरण्यं वर्तमानदशायां परपक्षेऽपि संभवतीत्युच्यते किं वा प्रागवस्थायामपीति विकल्प्याऽऽद्यमङ्गीकरोति—सत्यमिति । द्वितीयं दूषयति—

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सर्वस्य सदात्मकत्वेऽपि सत्कार्यवहिर्भूतं तन्तोस्तन्त्वन्तरमिव सतः सहकारिभूतं सदन्तरं स्यादित्याशङ्क्याह—एकमेवेति । स्वकार्यपतितमिति । स्वकार्यात् । पतितं च्युतं ततो निर्गतं बहिर्भूतमित्यर्थः । स्वकार्यापतितमिति पाठस्साधुः । आरम्भवादानङ्गीकारात् विवर्तवादे च एकस्य गगनस्य तलमलिनत्वाद्याकारेणेव एकस्यैव सतो जगदाकारेण विवर्तोपपत्तेः । वस्त्वन्तरसत्त्वे च सतः ततो विभक्तत्वेन यावद्विकारं तु विभागो लोकवत्' इति न्यायेन विकारत्वापत्त्या सत्यत्वानुपपत्तेश्च न सतोऽन्यद्वस्त्वन्तरं सम्भवतीत्यर्थः । न च मायायास्सकाशात् विभक्तत्वमस्तीति वाच्यम् । धर्मिसमानसत्ताकविभागाभावात् । न च मायायां तथाविधविभागसत्त्वेऽपि विकारत्वं नास्तीति वाच्यम् तस्य प्रतियोगिसमानसत्ताकत्वाभावात् । धर्मिप्रतियोगिसमानसत्ताकविभागस्य हेतुत्वादिति भावः ।

ननु सत एकत्वेऽपि यथा साङ्ख्यमते प्रधानमेकमपि सत्त्वादिभिर्गुणैरनेकात्मकं तद्वत् सच्चिदानन्दादिभिः अनेकात्मकमित्याशङ्कानिवारणाय एवकार इत्याह—एवेत्युच्यत इति । साङ्ख्यपरिभाषायाः प्रमाणरहितत्वात् । अनेकात्मकत्वे सावयवत्त्वादनित्यत्वापत्तेः यदेव सत् तदेव चित् तदेव सुखमिति अखण्डत्वाङ्गीकाराच्च न स्वगतभेद इत्यर्थः । इदं सदेवासीत् तच्च सदेकमेवेत्युक्ते कार्यं जगत् यदात्मकं तत्सदेकमिति प्रतीयते कार्यस्वरूपं चोपादानमेव तदैक्यसिद्धावपि निमित्तकारणं कर्त्रात्मकं भिन्नं स्यादित्याशङ्कानिरासार्थं अद्वितोयपदमित्याह—अद्वितीयमिति । न द्वितीयमद्वितीयमिति द्वितीयभिन्नमित्यर्थः स्यात् तां शङ्कां वारयति—नास्येति । तदैक्षत बहु स्यामितीक्षणेन बहुभवनेन च एकस्यैव उभयकारणत्वप्रतीतेः कुलालघटसंयोगादौ कुलालस्यैवोभयकारणत्वदर्शनात् मृदादेरचेतनत्वेन कर्तृत्वासंभवेऽपि सतश्चेतनस्य उभयकारणत्वोपपत्तेः न तद्व्यतिरिक्तं निमित्तमपेक्षणीयमिति भावः । अद्वितीयपदसमभिव्याहारबलादेव एकत्वादिधर्मवैशिष्ट्यमपि न बोधयति । किन्तु लक्षणया अखण्डं सन्मात्रं बोधयतीति द्रष्टव्यम् । ननु अनेन वाक्येन वैशेषिकाभिमतात्मविलक्षणं अखण्डसन्मात्रं न सिद्ध्यति इदं सदेवेति समानाधिकरणस्य इदंशब्दितस्य जगतः सत्तावैशिष्ट्यमात्रेणेत्युपपत्तेः इति शङ्कते—नन्विति । अग्रेशब्दविशेषणात् प्रागुत्पत्तेरपि सद्रूपत्वप्रतीतेः तैश्च तदा तथानङ्गीकारात् तद्विलक्षणात्मसिद्धिरित्याह—सत्यमिति । प्रागुत्पत्तेः कार्यस्य सत्त्वाभ्यु-

१—(१) अत्र च सत् प्रथमं तेजः असृजतेति श्रूयते । आकाशं वायुं च सृष्ट्वा तेजोऽसृजतेति योजनीयम् । तैत्तिरीयके प्रथमं आकाशस्य ततो वायोश्च तेजः सृष्टेः पूर्वं सृष्टिकथनात् । न च शाखाभेदेन विकल्पोऽस्तु सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् इति न्यायेन वेदान्तानामेकवाक्यत्वात् । आकाशवायुसृष्टिश्च "न च वियदश्रुतेः" "एतेन मातरिश्वाव्याख्यातं" इत्यधिकरणाभ्यां निर्णीता । न च तयोः नित्यत्वं "आकाशवत् सर्वगतश्च नित्यः" "वायुश्चान्तरिक्षं चैतदमृतं" इति श्रुतिभ्यामिति वाच्यम् । तयोर्नित्यत्वे एकविज्ञानेन

कार्यस्यासत्त्वाभ्युपगमात् । न चैकमेव सदद्वितीयं प्रागुत्पत्तेरिच्छन्ति । तस्माद्वैशेषिकपरिकल्पितात्सतोऽन्यत्कारणमिदं सदुच्यते मृदादिदृष्टान्तेभ्यः ।

तत्तत्र हैतस्मिन्प्रागुत्पत्तेर्वस्तुनिरूपण एके वैनाशिका आहुर्वस्तु निरूपयन्तोऽसत्सदभावमात्रं प्रागुत्पत्तेरिदं जगदेकमेवाग्रेऽद्वितीयमासीदिति । सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति बौद्धाः । न तु सत्प्रतिद्वन्द्वि वस्त्वन्तर-

### नरेन्द्रपुरीयं टीप्पणम्

व्यावर्तितमित्यर्थः । सतोऽन्यदसदुच्यते तयोरसद्वादिनां सदभ्युपगमः प्रसज्यत इत्याशङ्क्याह—सदभावमात्रमिति । सन्नीलपीतादिर्न भवतीति पीताद्यतादात्म्येन असदिति गृह्यमाणमपि वस्त्वेवेष्यते यथा नैयायिकैस्तथा नेष्यते

### आनन्दगिरिटीका

प्रागुत्पत्तेस्त्विति । लक्षणवाक्यं च परपक्षे दुर्योज्यमित्याह—न चेति । वाक्यद्वयपर्यालोचनया परपक्षासंभवमुपसंहरति—तस्मादिति । दृष्टान्तदार्ष्टान्तिकयोरैकरूप्याद्दृष्टान्तानां कार्यकारणाभेदनिष्ठत्वाच्च वैशेषिकपक्षासिद्धिरित्याह—मृदादीति । वैशेषिकपक्षासंभवेऽपि वैनाशिकपक्षो भविष्यतीति शङ्कते—तत्तत्रेति । असच्छब्दस्य तुच्छव्यावृत्तविषयत्वं वारयति—अभावमात्रमिति । सतोऽन्यदसदिति स्थितेरसद्वादिनाऽपि प्रतियोगिभूतं सदास्थितमित्याशङ्क्याऽऽह—

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पगमपक्षेऽपि एकत्वादिविशेषणानुपपत्तेः वैशेषिकमतव्यावृत्तिरित्याह—न चेति । किञ्च तत्तेजोऽसृजतेत्यादिना इदं सदेवेत्युक्तस्य सतः कारणत्वोक्तेः नेदंशब्दितस्य कार्यस्य सत्तावैशिष्ट्यबोधकमित्युपसंहरन्नाह—तस्मादिति । मृदादिदृष्टान्तैः कार्यस्य मृषात्वोक्तिपूर्वकं कारणस्यैव सत्यत्वनिर्धारणादपि नेदं कार्यस्य सत्त्वं बोधयतीत्याह—मृदादीति । तद्धेत्युत्तरवाक्यं व्याचष्टे—तत्र नेति । सदभावमात्रमिति । सन्निषेधमात्रं तुच्छं शून्यमित्यर्थः । एवं व्याख्याने हेतुमाह—सदभावमात्रं हीति । मात्रशब्देन अभावस्य वस्तुत्वं व्यावर्तयति । सत्प्रतिद्वन्द्वीति । भावप्रतिद्वन्द्वीत्यर्थः ।

---

सर्वविज्ञानप्रतिज्ञा हीयेत । सा च प्रकृत्यव्यतिरेकात्कार्यस्योक्ता—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् वाचारम्भणं विकार" इत्यनया श्रुत्या । ब्रह्माव्यतिरेकश्च तत्कार्यत्व एवोपपद्यते अत एव "बहु स्यां प्रजायेये"त्युक्तं उपादानोपादेययोरभेदात् । अपि च "यावद्विकारं तु विभागो लोकवत्" इतिसूत्रेण यत्र विभक्तत्वं तत्र सर्वत्र विकारत्वं इति व्याप्त्या आकाशादीनां विभक्तत्वात् विकारत्वमेव मन्तव्यमित्यभ्यधायि ।

(२) सतस्तु ब्रह्मणः उत्पत्तिरेव नास्ति इत्युक्तं "असम्भवस्तु सतोऽनुपपत्तेः" इति सूत्रेण सत्सामान्यात् सतः नोत्पत्तिः असत्यतिशये प्रकृतिविकारभावाभावात् । नापि सद्विशेषात् सन्मात्रोत्पत्तिः सामान्यादेव हि विशेषा उत्पद्यन्ते, न तु विशेषात् सामान्यमिति न्यायात् ।

(३) तेजः सत उत्पद्यते—इति यथाश्रुतार्थो न ग्राह्यः । तेजः वायोरुत्पन्न इत्यधिकावापः कर्तव्यः । तथा ह्याह श्रुतिः—"वायोरग्निः" इति ब्रह्मजत्वोक्तिस्तु पारम्पर्येण ब्रह्मजत्वं विवक्षित्वा । इदं च "तेजोऽतस्तथा ह्याह"—इतिसूत्रेणोक्तम् ।

(४) "ता अन्नमसृजन्त" इतिश्रुतौ अन्नशब्देन व्रीहियवादयो नोच्यन्ते, अपि तु पृथ्वी उच्यते । कुतः अधिकाररूपशब्दान्तरेभ्यः—अधिकारः प्रकरणं महाभूतविषयं "तत्तेजोऽसृजते"त्यारम्भात् । कृष्णा च पृथिवी प्रायेण । शब्दान्तरं च समानाधिकरंश्रुत्यन्तरं—"अद्भ्यः पृथिवी"ति । तस्मात् पृथिव्येवान्नशब्देनात्रोच्यते ।

(५) किमिमानि वियदादीनि स्वयमेव स्वविकारान् सृजन्ति उत ईश्वर एव तेन तेनात्मनाऽवतिष्ठमानः तं तं विकारं सृजतीति सन्देहे सिद्धान्तः—"तदभिध्यानादेव तु तल्लिङ्गात् सः"—इति । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यादिश्रुतिः साध्यक्षाणामेव पृथिव्यादीनां प्रवृत्तिं दर्शयति । अपि च "बहु स्यां" "तदात्मानं स्वयमकुरुते"त्यादौ तस्यैव च सर्वात्मभावं दर्शयति ।

(६) सदेव सोम्येत्यत्रान्यो विचारः । जगत् न ब्रह्मप्रकृतिकं तद्विलक्षणत्वात्, यथा घटः, न तन्तुप्रकृतिकः तद्विलक्षणत्वात् इति पूर्वपक्षे सिद्धान्तः—"दृश्यते तु" । दृश्यते हि गोमयाद्वृश्चिकोत्पत्तिः, चेतनात्

मिच्छन्ति। यथा सच्चासदिति गृह्यमाणं यथाभूतं तद्विपरीतं तत्त्वं भवतीति नैयायिकाः। ननु सदभावमात्रं प्रागुत्पत्तेश्चेदभिप्रेतं वैनाशिकैः कथं प्रागुत्पत्तेरिदमासीदसदेकमेवाद्वितीयं चेति कालसम्बन्धः संख्यासम्बन्धोऽद्वितीयत्वं

नरेन्द्रपुरीयं टिप्पणम्

बौद्धैस्सदत्यन्ताभावाभ्युपगमात्। अप्रमितप्रतियोगिकाभावस्यात्यन्ताभावतया शशविषाणं नास्तीत्यादिषु प्रसिद्धत्वादित्यर्थः। सदत्यन्ताभावमात्रं तत्त्वं बौद्धानामित्येतदेव चोद्यमुखेन विवृणोति। अथवा सिद्धान्त्येव शून्यवादस्य युक्तिबाध्यत्वमित्याह भ्रमसिद्धानुवादे श्रुतेस्तात्पर्यं दर्शयितुं—ननु सदभावमात्रमित्यादिना। असत्वमात्राभ्युपग-

आनन्दगिरिटीका

सदभावमात्रमिति। तदेव वैधर्म्यंदृष्टान्तेन स्फुटयति—यथेति। सदिति यथाभूतमसदिति च ततो विपरीतं गृह्यमाणं सच्चासच्चेति द्विविधं तत्त्वं भवतीति यथा नैयायिका वदन्ति द्वे तत्त्वे सदसती भावाभावाविति तैरप्यभ्युपगमान्न तथा बौद्धैर्द्विविधं तत्त्वमिष्टं सदत्यन्ताभावोऽसदित्यभ्युपगमादप्रतीतप्रतियोगिकाभावस्यात्यन्ताभावतया शशविषाणं नास्तीत्यादौ प्रसिद्धत्वादित्यर्थः। तमिमं वैनाशिकपक्षं शिष्यमुखेन दूषयति—नन्वित्यादिना। शिष्योक्तमङ्गी

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वस्त्वन्तरमिति अभावरूपमित्यर्थः। सच्च असदिति गृह्यमाणमिति। भावोऽभाव इति गृह्यमाणमित्यर्थः। यथाभूतं परमार्थभूतं, अविपरीतं असङ्कीर्णम्। विपरीतमिते पाठे परस्परविपरीतं परस्परविरुद्धमित्यर्थः। यथैवंभूतं अभावं वस्तुभूतं नैयायिका अभ्युपगच्छन्ति न तथा वैनाशिका इति पिण्डितार्थः। असत्पदस्य तुच्छार्थत्वे अग्रे इत्यादीतरपदान्वयो न सम्भवतीति शङ्कते—नन्विति। किमनेन कालसम्बन्धाद्ययोगोपन्यासेन तन्मतस्यानुपपन्नत्वमुच्यते?

---

पुरुषशरीरात् अचेतनानां केशलोमनखादीनां च—अतो विलक्षणोत्पत्तिर्न दोषाय। न च चेतनस्य जडरूपेण सृष्टेः प्राक् सत्त्वोपगमासम्भवात् असदेव जगत्कारणं स्यादिति वाच्यम्। कार्यस्य सर्वदा मिथ्यात्वात्। न चेदानीमपि कार्यं सत् वाचारम्भणमात्ररूपत्वात् इति समाहितं—"असदिति चेन्न प्रतिषेधमात्रत्वात्" इति सूत्रे।

(७) अपि च भोक्ता जीवः उपहितरूपेण कार्यः भोग्यः प्रपञ्चः स्वरूपेणापि कार्यः तयोः कारणीभूतब्रह्माभिन्नत्वात् परस्परमपि अभेदः स्यादिति चेन्न। लोकवदेतत् स्यात्। यथा लोके समुद्रादेकस्मादभिन्नानां फेनतरङ्गबुद्बुदादीनां परस्परं भेदः प्रातीतिकः, एवं प्रकृतेऽप्युपपद्यते भोक्तृभोग्यभेदः इत्युक्तं—"भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति।

(८) अपि च नायं विभागः पारमार्थिकः। कारणमात्रस्य सत्यत्वात्। इदं च "तदनन्यत्वमारम्भणशब्दादिभ्यः" इतिसूत्रेणोक्तम्।

(९) अपि च चेतनात् जगत्सृष्टयभ्युपगमे हिताकरणाहितकरणादयो दोषाः प्रसज्यन्ते तत्त्वमसीति ईशस्य जीवाभिन्नत्वश्रवणात्। न हि जीवः स्वयमीश एव सन् स्वप्रतिकूलं संसारं सृजेत् इति चेन्न। "अधिकं तु भेदनिर्देशात्"—सृष्टिर्हि मिथ्याभूता, तत्कर्ता चेश्वरः व्यवहारेण जीवादधिकः, जीवोपाध्यन्तःकरणापेक्षया महत्तरमायोपाधिकः न तु भिन्नः। अतो व्यवहारे हिताकरणादिकं युक्तम्।

(१०) अपि च चेतनं ब्रह्म अद्वितीयं असहायं श्रूयते। सृष्टणां कुलालादीनां सहकारिसम्पादनेन कर्तृत्वावगमात् ब्रह्मणः सहकार्यनुक्तेः न स्रष्टृत्वसम्भव इति चेन्न। ब्रह्मणः क्षीरदधिन्यायेन वा देवादिवत् सङ्कल्पमात्रस्रष्टृत्वाद्वा उपपत्तेः। इदमुक्तम्—"उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि" इति।

(११) कृत्स्नं ब्रह्म जगद्रूपेण परिणमते चेत् कृत्स्नस्य ब्रह्मणः जगद्रूपापन्नत्वात् इदानीं ब्रह्माभावप्रसङ्गः। एकदेशेन परिणमते चेत् सावयवत्वप्रसङ्गः। तच्च "निष्कलं ब्रह्मे"ति श्रुतिविरोधादयुक्तं इति चेन्न। ब्रह्म निर्विकारमेव ब्रह्मणः सकाशात् सृष्टिः ब्रह्मणः स्वरूपेणावस्थानं च श्रुतत्वादेवोपपन्नम्। प्रपञ्चस्य मिथ्यात्वात् ब्रह्मस्वरूपहानिं विना प्रपञ्चसर्गोपपत्तेः। अत एव स्वप्ने स्वप्नद्रष्टुः विकारमन्तरेण स्वाप्निकपदार्थसृष्टिः उपपद्यते। तदुक्तम्—"आत्मनि चैवं विचित्राश्च हि" इति।

चोच्यते तैः। बाढं न युक्तं तेषां भावाभावमात्रमभ्युपगच्छताम्। असत्त्वमात्राभ्युपगमोऽप्ययुक्त एवाभ्युपगन्तुरनभ्युपगमानुपपत्तेः। इदानीमभ्युपगन्ताऽभ्युपगम्यते न प्रागुत्पत्तेरिति चेत्। न। प्रागुत्पत्तेः सदभावस्य प्रमाणाभावात् प्रागुत्पत्तेरसदेवेतिकल्पनानुपपत्तिः।

ननु कथं [1]वस्त्वाकृतेः शब्दार्थत्वेऽसदेकमेवाद्वितीयमितिपदार्थवाक्यार्थोपपत्तिः? तदनुपपत्तौ चेदं वाक्यमप्रमाणं

नरेन्द्रपुरीयं टिप्पणम्

मस्तर्हि तेषां वास्तवः प्रसज्यत इति न वाच्यमित्याह—असत्वमात्रेति। असत्वमात्राभ्युपगमस्तर्ह्येव वास्तवस्सिद्धयेद्यद्यभ्युपगन्तापि नाभ्युपगम्येत तदनभ्युपगमश्चाशक्योऽनभ्युपगन्तुः स्वीकारापत्तेस्तदभ्युपगमे चानवस्थापात

आनन्दगिरिटीका

करोति—बाढमिति। भावस्य योऽभावस्तन्मात्रमसदित्यभ्युपगच्छतां तेषां पक्षे न युक्तं कालसंबन्धाद्यसत इति युक्तमेव त्वयोक्तमित्यर्थः। किं च तन्मते यस्य कस्यचिदसत्त्वमिष्टं सर्वस्य वेति विकल्प्याऽऽद्यमुपेत्य द्वितीयं दूषयति—असत्त्वेति। किमभ्युपगन्ता यदा कदाचिदभ्युपगन्तव्यः किं वा प्रागवस्थायामपीति विकल्प्याऽऽद्यमङ्गीकृत्य द्वितीयं दूषयन्नाशङ्कते—इदानीमिति। स किं तदानीमसत्त्वान्नाभ्युपगम्यते किं वा तदभ्युपगन्तुरभावान्? नाऽऽद्य इत्याह—न प्रागुत्पत्तेरिति। न द्वितीयः यथा प्रागुत्पत्तेर्जगदसदित्यस्याभ्युपगन्ता संप्रत्यभ्युपगम्यते तथा प्रागवस्थायामभ्युपगन्ता सन्नित्यस्याप्यभ्युपगन्तुरिदानीमभ्युपगमसम्भवात्। न हि प्रागुत्पत्तेस्तत्सत्त्वे मानाभावः। विमतः कालो ज्ञातृसत्तावान्कालत्वात्संमतवदित्यनुमानादित्याह—प्रागुत्पत्तेरिति।

परपक्षं दूषयित्वा वाक्यतात्पर्यं दर्शयितुं चोदयति—नन्विति। अन्यापोहस्य शब्दार्थत्वे सत्यपोह्यवस्तुनस्त-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

किं वा असदेवेत्यादिवाक्यस्याप्रामाण्यम्? नाद्यः इष्टापत्तेः बह्वनुपपत्तिग्रस्तत्वादित्याह—बाढमिति। भावाभावमात्रमिति। सदभावमात्रं तुच्छमात्रमभ्युपगच्छतां न केवलं कालसम्बन्धाद्ययोगः, किन्तु सर्वस्यासत्वाभ्युपगमोऽप्ययुक्तः। अभ्युपगमो नाम ज्ञानं। तच्च ज्ञातृधर्मः ज्ञातुरभावे न सम्भवतीत्यर्थः। प्रागुत्पत्तेरभ्युपगन्तुरभावेऽपि इदानीमभ्युपगन्तुः कल्पितस्य अभ्युपगमान्न दोष इति शङ्कते—इदानीमिति। एवमपि प्रागुत्पत्तेः सदभावज्ञातुरभावात् ईश्वरानङ्गीकारात् पूर्वमनुभवाभावेन इदानीं तत्स्मरणानुपपत्तेः प्रागसत्त्वं न सिद्ध्यतीत्याह—नेति। अस्मन्मते तु नित्यचैतन्येन प्राक्सतो ज्ञानं सम्भवतीति सुषुप्तादुत्थितस्येवेदानीं सतो ज्ञानमुत्पद्यत इत्युक्तमिति भावः।

असदेकमेवाद्वितीयमिति पदानामर्थाभावेन अन्वयाभावादसदेवेत्यादिवेदवाक्यमप्रमाणं स्यादिति द्वितीयं शङ्कते—नन्विति। वस्तुगता आकृतिः शब्दार्थ [ इत्यर्थः ] आकृत्यभावादसच्छब्दस्य अर्थो नास्ति। तथा तस्य

(१२) अशरीरस्य न माया, अतः मायाशक्तिरहितं ब्रह्म कथं जगत् सृजेत् इति पूर्वपक्षनिराकरणाय सूत्रं—"सर्वेपिता च तद्दर्शनात्" शरीररहितेऽपि माया सम्भवति "मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरं" इति श्रुतेरनतिशङ्कनीयत्वादित्युक्तम्।

(१३) अपि च चेतनस्य बुद्धिपूर्वकारिणः सर्वा प्रवृत्तिः प्रयोजनविशेषोद्देशेन भवति। ब्रह्मणस्तु प्रपञ्चसृष्टेः प्रयोजनं न पश्यामः तस्याप्तकामत्वात्। सकामत्वे अस्मदादिवत् अनीश्वरत्वप्रसङ्गात् इति पूर्वपक्षे प्राप्ते समाधानं—"लोकवत्तु लीलाकैवल्यम्" केवलं लीलैव भगवत्सृष्टिः यथा स्वतन्त्रस्य राज्ञः हासगानादिकम्। वस्तुतस्तु मिथ्याभूते प्रपञ्चे न प्रयोजनान्वेषणा इति।

(१४) ईशस्य स्वातन्त्र्येण जगज्जन्मादिहेतुत्वे वैषम्यनैर्घृण्ये प्रसज्येते, प्राणिषु सुखदुःखादिवैषम्यदर्शनात् सुखिषु तस्य पक्षपातः अनुमीयेत इति पूर्वपक्षे प्राप्ते सिद्धान्तः—वैषम्यनैर्घृण्ये न भवतः परमेश्वरस्य, यतः सः सृष्टौ प्राणिकृतकर्मपेक्ष्य सृजति पुण्यकर्मकर्तृं सुखं पापिनां दुःखमिति न दोषः। सृष्टेरनादित्वाच्च प्रथमसृष्टौ वैषम्ये किं कारणमिति प्रश्नानवतारः।

१. वस्त्वाकृतेः शब्दार्थत्व इति वस्तुसहिताकृतेरिति मध्यमपदलोपी समासः। तेन द्रव्यशक्तिवादितार्किकमतस्य आकृतिशक्तिवादिबौद्धमतस्य च संग्रहः।

प्रसज्येतेति चेति। नैष दोषः। सद्ग्रहणनिवृत्तिपरत्वाद्वाक्यस्य। सदित्ययं तावच्छब्दः सदाकृतिवाचकः। एकमेवाद्वितीयमित्येतौ च सच्छब्देन समानाधिकरणौ। तथेदमासीदिति च। तत्र नञ् सद्वाक्ये प्रयुक्तः सद्वाक्यमेवावलम्ब्य सद्वाक्यार्थविषयां बुद्धिं सदेकमेवाद्वितीयमिदमासीदित्येवंलक्षणां ततः सद्वाक्यार्थान्निवर्तयत्यश्वारूढ इवाश्वालम्बनोऽश्वं तदभिमुखविषयान्निवर्तयति तद्वत्। न तु पुनः सदभावमेवाभिधत्ते। अतः पुरुषस्य विपरीत-

### नरेन्द्रपुरीयं टिप्पणम्

इत्यर्थः। व्यवहारकाले संवृतिसिद्धोऽभ्युपगम्यते। न वास्तवः, सृष्टेः प्राक् पुनः सोऽपि नाभ्युपगम्यत इत्यसत्वमात्राभ्युपगमो घटत इत्यर्थः। प्रागुत्पत्तेरनभ्युपगमोऽपि संवृत्तिमात्र एव न वास्तव इत्याह शून्यवादी—न प्रागिति। असदेवेति कल्पनाया वास्तवानुपपत्तिरित्यर्थः। अत एवोक्तश्चतुष्कोटिविनिर्मुक्तं तत्त्वं माध्यमिका विदुरिति ॥ १ ॥

### आनन्दगिरिटीका

दर्थत्वे वा कथमसदिति शब्दस्यार्थसिद्धिराकृतेश्च मीमांसकप्रक्रियया शब्दार्थत्वे सत्येकमद्वितीयमितिपदयोराकृतिवाचकत्वायोगादर्थानुपपत्तिस्तदभावे च पदार्थसंसर्गाद्यात्मनो वाक्यार्थस्यानुपपत्तिर्वाक्यार्थस्यानुपपत्तौ च निर्विषयमिदं वाक्यमप्रमाणं स्यादित्यर्थः। सदभिनिवेशनिवृत्त्यर्थमिदं वाक्यं न तु शून्यमेव साक्षादभिधत्ते तन्न वाक्याप्रामाण्यमिति परिहरति—नैष दोष इति। तथाऽपि कथमसदादिशब्दानामगृहीतशक्तित्वे वाक्यार्थोपपत्तिरित्याशङ्क्याऽऽह—सदित्ययमिति। एकमद्वितीयमिति शब्दद्वयवदिदमासीदिति च शब्दौ सच्छब्देन समानाधिकरणावेवेत्याह—तथेति सदेवेत्यादिवाक्यस्योक्तविषयाऽर्थवत्त्वेऽपि कथमसदेवेत्यादिवाक्यमर्थवदित्याशङ्क्याऽऽह—तत्रेति। इवशब्दो यद्वदित्यस्मिन्नर्थे तद्वदिति पृथक्प्रयोगात्। किमिति वाक्यस्य सदभिनिवेशनिवृत्तिपरत्वं सदभावपरत्वमेव किं न स्यादित्याशङ्क्याऽऽह—न त्विति। सदभावस्यात्यन्ताभावलक्षणस्य तुच्छत्वाच्छब्दशक्तिगोचरत्वासम्भवादित्यर्थः। अन्यपरत्वासम्भवे सदभिनिवेशनिवृत्तिपरत्वं वाक्यस्य सिद्धमित्युपसंहरति—अत इति। प्राक्काले पुरुषस्य सदभिनिवेशनिवृत्तिरत्र

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एकत्वादिधर्मयोगाभावात् तस्मिन् प्रयुक्ता एकमित्यादिशब्दा अपि अर्थरहिता इति पदार्थाभाव इत्यर्थः। अत्रासदिति नञ् सत्पदेन न सम्बध्यते येन असत्पदस्य अर्थाभावःस्यात्। किन्तु सदादिपदानामन्वयानन्तरं नञो वाक्येन सम्बन्धः। सदादिपदानां च अर्थवत्त्वान्नोक्तदोष इति परिहरति—नैष दोष इति। सदेव कारणमिति ज्ञाननिवृत्तिपरत्वादित्यर्थः। यद्यपि सत्कारणत्वमेव वाक्येन निषिध्यते तथापि तन्निषेधे तद्ग्रहणमर्थान्निवर्तत इति भावः। ननु नञः सत्पदान्वयित्वेन प्रतीयमानस्य कथं वाक्यान्वयित्वमित्यत आह—अत्र नञ् सद्वाक्य इति। पदद्वयान्वयित्वेन प्रतीतावपि वाक्यान्वय्येव अन्यथा अप्रामाण्यापत्तेरित्यर्थः। ननु नेदं वाक्यं निषेध्यसमर्पकं निषेधकत्वात्। न च निषेध्यसमर्पकं प्रमाणान्तरमस्ति ततो निषेध्याभावे निषेधानुपपत्तिमाशङ्क्य इदमेव तत्समर्पकमित्याह—सद्वाक्यमेवेति। वाक्यार्थमेवेत्यर्थः।

ननु वाक्येन तदर्थं विधाय नञा पुनस्तन्निषेधे व्याघातः। विधिनिषेधयोरेकत्वासम्भवादित्याशङ्क्य सद्वादिप्रसिद्धवाक्यार्थानुवादेन तन्निषेधान्न व्याघात इति लौकिकदृष्टान्तेनाह—अश्वारूढ इवेति। इवशब्दो यथाशब्दसमानार्थः। अतस्तद्वदित्यस्य न पुनरुक्तिः। न तु पुनस्सदभावमिति। यद्यपि अक्षरार्थकथनावसरे असत् सदभावमात्रमिति व्याख्यातं तथापि तत्र वैनाशिकरीत्या आपाततस्तथा व्याख्यातं इह तु तथाव्याख्याने वाक्या-

---

१. अश्वारूढ इवेति—असदेवेत्यत्र अ इति पृथक् पदं "अमानोनाः प्रतिषेधे" इति वचनात्। अग्रे सृष्टेः पूर्वं इदं सच्च नासीत् किन्तु इदानीमेव इदम्बुद्धिविषयतया क्षणिकसत्पदार्थरूपतयाऽजायत। यत एवं तस्मात् असतः कारणात् कारणं विनैवेत्यर्थः जगदजायत इत्यर्थः बौद्धरीत्या।

तार्किकमतरीत्या तु—प्रलये सदात्मकमपि जगत्कारणं यदासीत् तन्नाद्वितीयं गुणादिरूपद्वितीयविशिष्टस्वभावत्वात्। तस्मात् अद्वितीयात् सतः जगत् नाजायत अपि तु सद्वितीयादेव सतः जगदजायतेत्यर्थः। कथमसतः सज्जायेत इत्यस्य सतः सन्न जायत इति कथमित्यर्थः। सद्रूपस्यैकस्य सर्वकर्मात्मकतया प्रत्ययेन ततस्तज्जायत एवेत्यर्थः (लघुचन्द्रिका १९१ पृष्ठे)।

**कुतस्तु खलु सोम्यैवँ स्यादिति होवाच कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

ग्रहणनिवृत्त्यर्थं रमिदमसदेवेत्यादि वाक्यं प्रयुज्यते । दर्शयित्वा हि विपरीतग्रहणं ततो निवर्तयितुं शक्यत इत्यर्थवत्त्वादसदादिवाक्यस्य श्रौतत्वं प्रामाण्यं च सिद्धमित्यदोषः । तस्मादसतः सर्वाभावरूपात्सद्विद्यमानमजायत समुत्पन्नम् । अडभावश्छान्दसः ॥ १ ॥

तदेतद्विपरीतग्रहणं महावैनाशिकपक्षं दर्शयित्वा प्रतिषेधति—कुतस्तु प्रमाणात्खलु हे सोम्यैवं स्यादसतः सज्जायतेत्येवं कुतो भवेन्न कुतश्चित्प्रमाणादेवं सम्भवतीत्यर्थः । यदपि बीजोपमर्देऽङ्कुरो जायमानो दृष्टोऽभावादेवेति तदप्यभ्युपगमविरुद्धं तेषाम् । कथम् । ये तावद्बीजावयवा [1]बीजसंस्थानविशिष्टास्तेऽङ्कुरेऽप्यनुवर्तन्त एव न तेषामुपमर्दोऽङ्कुरजन्मनि । यत्पुनर्बीजाकारसंस्थानं तद्बीजावयवव्यतिरेकेण वस्तुभूतं न वैनाशिकैरभ्युप-

नरेन्द्रपुरीयं टिप्पणम्

एवं सुगताभिप्रायमुक्त्वा वाक्ययोजनां तदभिप्रायेण चोद्यमुखेन दर्शयितुमुपक्रमते—कथमित्यादिना । सदभिनिवेशनिवृत्त्यर्थमिदं वाक्यं, नतु सदभावमेव शून्यमेव साक्षादभिधत्ते येनावस्तुत्वात् सच्छब्दगोचरत्वं न सम्भवतीति चोद्येतेत्यर्थः । विमतमभावपुरस्सरं कार्यत्वादङ्कुरवदिति प्रमाणं शङ्कते—यदपीति । अप्रसिद्ध-

आनन्दगिरिटीका

विवक्षिता चेत्तर्हि नञ्पदमेव प्रयोक्तव्यं किमित्यसदेवेदमग्र आसीदिति प्रयुक्तमित्याशङ्क्याऽऽह—दर्शयित्वा हीति । अथवा सदेवेत्यादिना स्वपक्षमुक्त्वा तद्दृढीकरणार्थत्वेनासदेवेत्यादिनाऽनुवादोऽयमिति तात्पर्यान्तरमाह—दर्शयित्वा हीति । प्रथमे पक्षे तस्मादित्यादिवाक्यस्यार्थाभावाद्द्वितीयः पक्षो गृहीतस्तत्र कारणस्यासत्त्वमुक्तमिदानीं कार्यस्यापि तद्दर्शयति—तस्मादिति । अजायतेति वक्तव्ये कथं श्रुत्या जायतेति प्रयुक्तमित्याशङ्क्याऽऽह—अडभाव इति ॥ १ ॥

कुतस्तु खल्वित्यादिवाक्यालोचनायामपि द्वितीयः पक्षो ग्राह्य इत्यभिप्रेत्याऽऽह—तदेतदिति । विमतमभावपुरःसरं कार्यत्वादङ्कुरवदिति प्रमाणं शङ्कते—यदपीति । अप्रसिद्धविशेषणत्वं मत्वा परिहरति—तदपीति । बीजोपमर्देनाङ्कुरोत्पत्तेरिष्टत्वात्कथमप्रसिद्धविशेषणतेति शङ्कते—कथमिति । किमङ्कुरोत्पत्तौ बीजावयवा उपमृद्यन्ते किं वा बीजाकारसंस्थानमिति विकल्प्याऽऽद्यं प्रत्याह—ये तावदिति । द्वितीयं दूषयति—यत्पुनरिति । तर्हि

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रामाण्यापत्त्या एवं व्याख्यातमिति न पूर्वोत्तरविरोध इति भावः । ननु नञः वाक्यार्थान्वयित्वे सत्पदेन समासो न स्यात् असामर्थ्यादिति चेन्न, अश्राद्धभोजीतिवत् असमर्थसमासोऽस्तु, निषेधार्थकः अकारो वा पृथक्पदमित्यभिप्रायः । अत्र च सत्कारणत्वप्रतिषेधेन अर्थात् शून्यस्य कारणत्वमुक्तमिति भावः । नन्वेवमपि असदेवेति वाक्यमप्रमाणं सत्कारणत्वस्य प्रामाणिकत्वेन तन्निषेधे अप्रामाण्यस्यापरिहार्यत्वादित्याशङ्क्य अस्य वाक्यस्य असत्कारणत्वभ्रमनिवृत्तिद्वारा सत्कारणत्व एव तात्पर्यात् तात्पर्यविषये न शब्दस्य अप्रामाण्योपपत्तिः वपोत्खननादिवाक्यवदित्याह—अतः पुरुषस्येति । तस्मादसत इत्युत्तरं वाक्यं व्याचष्टे—तस्मादिति । सदजायतेति वक्तव्ये सज्जायतेत्यकाराभावः छान्दस इत्याह—अडभाव इति । तत्रापि पूर्ववत् सतः सज्जनिप्रतिषेधो वाक्यार्थः । शून्याज्जनिश्चार्थादुक्तेति द्रष्टव्यम् ॥ १ ॥

अत्र प्रमाणादेवेति पाठे एवकारो नञा सम्बध्यते प्रमाणादेवमिति पाठस्तु प्रामाणिकः, असतः सदुत्पत्तौ तदुक्तं प्रत्यक्षं प्रमाणमनूद्य निराकरोति—यदपीति । बीजावमर्देन जायमानोऽङ्कुरोऽभावादेव जायमानो दृष्ट इत्यर्थः । अत्र किं बीजावयवाभावादङ्कुरोत्पत्तिर्दृष्टेत्युच्यते, बीजसंस्थानाभावाद्वा ? नाद्य इत्याह—ये तावदिति । बीजसंस्थाने प्रतीयमानानां तुषाद्यवयवानां अनुवृत्त्यदर्शनादाह—बीजसंस्थानविशिष्टा इति । तदवच्छिन्नास्तदन्तर्गता इत्यर्थः । न द्वितीय इत्याह—यत्पुनरिति । वैनाशिकमते अवयवसमुदायव्यतिरिक्तस्यावयविनोऽभावेन बीज-

१. बीजसंस्थानविशिष्टा इति । परमाणुसमूह एव संस्थानविशिष्टो घटादिरिति तन्मतम् ।

गम्यते यदङ्कुरजन्मन्युपमृद्येत। अथ तदस्त्यवयवव्यतिरिक्तं वस्तुभूतं तथा च सत्यभ्युपगमविरोधः। अथ संवृत्याऽभ्युपगतं बीजसंस्थानरूपमुपमृद्यत इति चेत्। केयं संवृतिर्नाम किमसावभाव उत भाव? इति। यद्यभावो दृष्टान्ताभावः। अथ भावस्तथाऽपि नाभावादङ्कुरोत्पत्तिर्बीजावयवेभ्यो ह्यङ्कुरोत्पत्तिः।

अवयवा अप्युपमृद्यन्त इति चेत्। न। तदवयवेषु तुल्यत्वात्। यथा वैनाशिकानां बीजसंस्थानरूपोऽवयवी नास्ति तथाऽवयवा अपीति तेषामप्युपमर्दानुपपत्तिः। बीजावयवानामपि सूक्ष्मावयवास्तदवयवानामप्यन्ये सूक्ष्मतरावयवा इत्येवं प्रसङ्गस्यानिवृत्तेः सर्वत्रोपमर्दानुपपत्तिः। सद्बुद्ध्यनुवृत्तेः सत्त्वानिवृत्तिश्चेति सद्वादिनां सत एव सदुत्पत्तिः सेत्स्यति। न त्वसद्वादिनां दृष्टान्तोऽस्त्यसतः सदुत्पत्तेः। मृत्पिण्डाद्घटोत्पत्तिर्दृश्यते सद्वादिनां तद्भावे भावात्तदभावे चाभावात्।

नरेन्द्रपुरीयं टिप्पणम्

विशेषणत्वं मन्वानः परिहरति—तदपीत्यादिना। दृष्टान्ताभाव इति। अभावात् भावोत्पत्तौ दृष्टान्तासिद्धिरेव संवृतेरवस्तुत्वेन बीजसत्वासाधकत्वादित्यर्थः। तत्त्वं संव्रियते प्रच्छाद्यते यया सा संवृतिः लौकिकबुद्धिस्तस्या भावत्वपक्षे दोषमाह—अथ भाव इत्यादिना। लौकिकबुद्धिश्चेदनुसृता तर्हि तया बीजावयवानामङ्कुराकारपरिणामसिद्धेर्न सिद्धान्तसिद्धिरित्यर्थः। लौकिकबुद्धिमनाश्रित्य तत्समयमेव शङ्कित्वा दूषयति—अवयवा अपीत्यादिना। असद्वा-

आनन्दगिरिटीका

परमार्थवस्तु किं वा संवृतिसिद्धं? नाऽऽद्योऽभ्युपगमविरोधादित्युक्तं द्वितीयमुत्थापयति—अथ संवृत्येति। संवृतिं विकल्पयति—केयमिति। आद्ये भावस्याभावादुत्पत्तौ दृष्टान्ताभावः संवृतेरवस्तुत्वेन च बीजसंस्थानसत्त्वासाधकत्वादित्याह—यदीति। द्वितीयमनूद्य दूषयति—अथेति। तत्त्वं यया संव्रियत आच्छाद्यते सा संवृतिर्लौकिकी बुद्धिः सा चेद्भावरूपेष्टा तर्हि तया बीजावयवानामङ्कुराकारपरिणामसिद्धेर्दृष्टान्तासिद्धिरित्यर्थः।

लौकिकबुद्धिमनाश्रित्य परमतमेवाऽऽदाय शङ्कते—अवयवा इति। असत्यवयविन्युपमर्दायोगवदवयवेष्वपि तदयोगस्य तुल्यत्वान्नेदं चोद्यमित्युत्तरमाह—न तदवयवेष्विति। तदेव स्फुटयति—यथेति। नन्वस्मत्पक्षे परमावयवी नास्त्यवयवास्तु सन्त्येवेति चेत्तत्राऽऽह—बीजावयवानामपीति। तर्हि तेषामङ्कुरजन्मन्युपमर्दः स्यादिति चेत्तत्राऽऽह—तदवयवानामपीति। न चाङ्कुरजन्मन्यवयवपरम्पराविश्रान्तिभूमिरुपपद्यते तस्याः शून्यत्वे तदुपमर्दे सत्कारणवादापातात्। अशून्यत्वेऽपि कार्यत्वे कादाचित्कद्रव्यस्य सावयवत्वे गोक्तदोषतादवस्थ्यादकार्यत्वे भावश्चेदुपमर्दासिद्धिरभावश्चेत्तदुपमर्दे सत्कारणवादापत्तिरेवेति भावः। असद्वादस्याप्रामाणिकत्वमुक्त्वा सद्वादस्य प्रामाणिकत्वमाह—सद्बुद्धीति। परमते दृष्टान्ताभावमुक्तमनूद्य स्वमते तत्सत्त्वं च समुच्चिनोति—न त्विति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

संस्थानस्यावयविनोऽभावेन तदभावस्यालीकत्वान्न तस्य कारणत्वमित्यर्थः। अवयवसमुदायातिरिक्तावयव्यङ्गीकारे अपसिद्धान्त इत्याह—अथेति। वस्तुभूतावयव्यनङ्गीकारेऽपि भ्रमसिद्धोऽङ्गीक्रियत इति शङ्कते—अथेति। संवृतिः भ्रमः वस्तुतत्त्वावारकत्वादिति तेषां व्यवहारः। संवृत्याऽभ्युपगम्यत इति कोऽर्थः? संवृतिरेव बीजसंस्थानमिति वा, संवृतिजन्यमिति वा, आद्ये न बाह्यबीजसंस्थानसिद्धिरित्यभिप्रेत्य द्वितीयं विकल्पयति—केयमिति। यद्यपि संवृतिर्भ्रम इति तैरङ्गीकारात् न विकल्पावकाशः अथापि सम्भवमात्राभिप्रायेण विकल्पितमिति द्रष्टव्यम्। दृष्टान्ताभाव इति। संवृतेरभावत्वे ततो बीजसंस्थानोत्पत्त्यसम्भवात् असतश्च तस्योपमर्दासम्भवे ततः अङ्कुरोत्पत्त्ययोगात् दृष्टान्ताभाव इत्यर्थः। नाभावादिति। बीजावयवानामङ्कुरेऽनुस्यूतत्वेन तेषामेवाङ्कुरोत्पादकत्वं न बीजसंस्थानाभावस्येत्यर्थः। बीजसंस्थानस्य असत्त्वेऽपि तदवयवानां सत्त्वात् तदुपमर्दसम्भवादेव स हेतुरिति आद्यपक्षाश्रयेण शङ्कते—तदवयवा अपीति। अवयवसंस्थानस्यापि बीजसंस्थानवदसत्त्वाविशेषात् तदुपमर्दोऽपि न सम्भवति। एवं मूलावयवपर्यन्तमवयविनोऽभावात् तदुपमर्दस्य न हेतुत्वम्। किन्तु मूलावयवानामेव सर्वत्र तत्तदाकारेण अवस्थानमिति नाभावाद्भावोत्पत्तिर्दृष्टेत्याह—न तदवयवेष्वित्यादिना। असतस्सदुत्पत्तेः प्रमाणाभावादसम्भवश्चेत्तर्हि सतोऽपि सदुत्पत्त्यनुपपत्तिः प्रमाणाभावादेवेत्याशङ्क्य सद्बुद्ध्यनुवृत्त्यवगतसत्त्वानुवृत्तिरेव तत्र प्रमाणमित्याह—सद्बुद्धीति। ननु अननुवृत्तस्याप्यसतः कारणत्वे को दोष इत्याशङ्क्य अनुवृत्तस्यैव मृदादेः कारणत्व-

**यद्यभावादेव घट उत्पद्येत घटार्थिना मृत्पिण्डो नोपादीयेत । अभावशब्दबुद्ध्यनुवृत्तिश्च घटादौ प्रसज्येत । न त्वेतदस्त्यतो नासतः सदुत्पत्तिः । यदप्याहुर्मृद्बुद्धिर्घटबुद्धेर्निमित्तमिति [1]मृद्बुद्धिर्घटबुद्धेः कारणमुच्यते न तु परमार्थत एव मृद्घटो वाऽस्तीति तदपि मृद्बुद्धिर्विद्यमाना विद्यमानाया एव घटबुद्धेः कारणमिति नासतः सदुत्पत्तिः । मृद्घटबुद्ध्योर्निमित्तनैमित्तिकतयाऽऽनन्तर्यमात्रं न तु कार्यकारणत्वमिति चेत् । न । बुद्धीनां नैरन्तर्ये गम्यमाने वैनाशिकानां बहिर्दृष्टान्ताभावात् । अतः कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथं केन प्रकारेणासतः सज्जायेतेति । असतः सदुत्पत्तौ न कश्चिदपि दृष्टान्तप्रकारोऽस्तीत्यभिप्रायः । एवमसद्वादिपक्षमुन्मथ्योपसंहरति सत्त्वेव सोम्येदमग्र आसीदिति स्वपक्षसिद्धिम् ।**

### नरेन्द्रपुरीयं टिप्पणम्

दस्याप्रामाणिकत्वमुक्त्वा सद्वादस्य प्रामाणिकतामाह—**सद्बुद्धीति** । असद्वादे तर्कविरोधश्चाह—**यद्यभावादेवेति** । अन्वयव्यतिरेकाभ्यां मृत्पिण्डस्य सतः कारणत्वमुक्तम् । तत्रान्यथासिद्धिं शङ्कित्वा न सत्पक्षक्षतिरित्याह—**यदप्याहुरित्यादिना** । यदुक्तं सद्रूपाया बुद्धेः कारणत्वं तदसिद्धमिति शङ्कते—**मृद्घटबुद्ध्योरिति** । नियतपूर्वोत्तर-

### आनन्दगिरिटीका

घटस्याप्यभावादेवोत्पत्तेरिष्टत्वाद्दृष्टान्तासंप्रतिपत्तिरित्याशङ्क्याऽऽह—**यदीति** । किंच यद्यस्योपादानं दृष्टं तच्छब्दप्रत्ययौ तत्रानुवर्तेते यथा तथाऽभावश्चेद्घटादेरुपादानं तच्छब्दधियौ तत्रानुवृत्ते स्यातां न चानुवर्तेते तस्मादसतः सदुत्पत्तिरयुक्तेत्याह—**अभावेति** । भावस्य सतो मृत्पिण्डस्य घटादिकारणत्वमन्वयव्यतिरेकाभ्यामुक्तं तत्रान्वयव्यतिरेकयोरन्यथासिद्धिमुद्भावयति—**यदपीति** । तस्मिन्नपि पक्षे न मत्पक्षक्षतिरित्युत्तरमाह—**तदपीति** । यदुक्तं सद्रूपाया बुद्धेः सद्रूपां बुद्धिं प्रति कारणत्वमिति तदसिद्धमिति शङ्कते—**मृद्घटबुद्ध्योरिति** । सत्त्वसिद्धौ हि पूर्वभावित्वं कारणत्वं कार्यत्वं चोत्तरभावित्वं युक्तं बुद्धीनां चासत्त्वादानन्तर्यमात्रेण व्यवह्रियते निमित्तनैमित्तिकत्वमित्यर्थः । असतीनामपि बुद्धीनामानन्तर्येण निमित्तनैमित्तिकत्वमित्येतन्न शक्यं सम्भावयितुं दृष्टान्ताभावादित्युत्तरमाह—**न बुद्धीनामिति** । कुतस्तु खल्वित्यादिवाक्यं व्याख्यातमुपसंहरति—**अत इति** । पूर्वमसतः सदुत्पत्तौ दृष्टान्ताभाव उक्त इदानीमन्यदुपसंहृतमिति शङ्कां वारयति—**असत इति** । स्वपक्षसिद्धिमुपसंहरतीति सवन्धः ।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दर्शनात् अननुवृत्तस्य तन्त्वादेः घटादिकारणत्वादर्शनान्नैवमित्याह—**न त्वसद्वादिनामिति** । असतः सदुत्पत्तिसम्भावनाहेतुभूतः अननुवृत्तस्य कारणत्वसाधको दृष्टान्तो नास्तीत्यर्थः । अनुवृत्तस्य कारणत्वे तु सोऽस्तीत्याह—**मृदिति** । स्यादेतदेवं यदि मृदः कारणत्वं तदेव तु कथमित्याशङ्क्य अन्वयव्यतिरेकौ दर्शयति—**तद्भाव इति** । न केवलमसतः सदुत्पत्तौ साधकाभावः किन्तु बाधकमपीत्याह—**यद्यभावादिति** । बाधकान्तरमप्याह—**अभावशब्देति** । घटादिकार्ये मृच्छब्दबुद्ध्योरनुवृत्तिदर्शनादिति भावः । असतः सत्कारणत्वनिराकरणमुपसंहरति—**अत इति** । अनुवृत्तस्य कारणत्वे मृद्घटो दृष्टान्त उक्तः स नोपपद्यत इति विज्ञानवादिशङ्कामनुवदति—**यदपीति** । निमित्तमिति पूर्ववर्तीत्यर्थः । यद्यपि प्रत्यक्षादिप्रमाणसिद्धस्य बाह्यपदार्थस्य नाभाव उपलब्धेरिति न्यायसिद्धत्वेन तन्निराकरणा ( नुपहतस्यैव । ) [ नुकूल एव ] मृदादिदृष्टान्तः अभ्युपगमेऽपि त्वत्पक्षे न दृष्टान्त इत्याह—**तदपीति** । उत्तरबुद्धिं प्रति पूर्वबुद्धेः सत्यपि पूर्ववृत्तित्वे न कारणत्वं क्षणमात्रप्रध्वंसित्वेन उत्तरबुद्धिकालेऽसत्त्वात् किन्तु असत एव उत्तरबुद्धिकारणत्वमिति शङ्कते—**मृद्घटेति** । बुद्धीनां नैरन्तर्ये गम्यमाने कार्यकारणभाव एव स्यात् । न च निरन्तरोत्पन्नघटादिषु न कार्यकारणभाव इति व्यभिचार इति वाच्यम् । विज्ञानवादिना बाह्यपदार्थानङ्गीकारेण तत्र व्यभिचारस्य वक्तुमशक्यत्वादित्यभिप्रेत्याह—**न बुद्धीनामिति** । अङ्कुरादेरभावादुत्पत्तौ मानाभावसिद्धौ दृष्टान्ताभावान्मूलकार्ये तदनुमानासिद्धिमाह—**कथमिति** । **दृष्टान्ताभावादिति** । कार्यकारणभावाभाव इति शेषः । अतः श्रुत्युक्तं साधु इत्युपसंहरति—**अत इति** । असत्त्वे वेत्यस्य पौनरुक्त्यमाशङ्क्य उपसंहारपरतया व्याचष्टे—**एवमिति** । स्वपक्षसिद्धिमुपसंहरतीत्यन्वयः । प्रथमान्तपाठे तु अतः स्वपक्षसिद्धिरित्यतश्शब्दाध्याहारेण योज्यम् ।

---

१. निमित्तमिति अन्वयव्यतिरेकवदित्यर्थः । तेन हेतुसाध्ययोर्नाभेदः ।

**ननु सद्वादिनोऽपि सतः सदुत्पद्यत इति नैव दृष्टान्तोऽस्ति। घटाद्घटान्तरोत्पत्त्यदर्शनात्। सत्यमेवं न सतः सदन्तरमुत्पद्यते किं तर्हि सदेव संस्थानान्तरेणावतिष्ठते। यथा सर्पः कुण्डली भवति। यथा च मृच्चूर्णपिण्डघटकपालादिप्रभेदैः। यद्येवं सदेव सर्वप्रकारावस्थं कथं प्रागुत्पत्तेरिदमासीदिति। उच्यते। ननु न श्रुतं त्वया सदेवेत्यवधारणमिदंशब्दवाच्यस्य कार्यस्य। प्राप्तं तर्हि प्रागुत्पत्तेरसदेवाऽऽसीन्नेदंशब्दवाच्यमिदानीमिदं जातमिति। न। सत एवेदंशब्दबुद्धिविषयतयाऽवस्थानाद्यथा मृदेव पिण्डघटादिशब्दबुद्धिविषयत्वेनावतिष्ठते तद्वत्।**

### नरेन्द्रपुरीयं टिप्पणम्

भावित्वं हि कारणकार्यत्वं सत्त्वसिद्धौ युक्तं बुद्धीनाञ्चासत्वादानन्तर्यमात्रेण निमित्तनैमित्तिकव्यवहार इत्यर्थः। असतीनामपि बुद्धीनामानन्तर्येण निमित्तनैमित्तिकभाव इति क्वचन दृष्टान्ताभावान्नैतत्संभावयितुं शक्यमित्याह—नेति। कार्यस्य कारणमात्रत्वञ्चेदवधृतं तर्हि कारणमेवासीन्न कार्यमिति वैशेषिकाद्यभिमतमुक्तं स्यादित्याह—प्राप्तं तर्हीति। परिहरति—न सत एवेति। कार्यमुपादानात् भिन्नं तद्विलक्षणबुद्धिविषयत्वात्। यद्यतो विलक्षणबुद्धिविषयः तत्ततो भिन्नं यथा अश्वान्महिषः। कथं सत एवेदं बुद्धिग्राह्यानिर्वाच्याङ्गीकारेणासत्कार्यापत्तिपरिहार इत्याह—

### आनन्दगिरिटीका

सिद्धान्तेऽपि दृष्टान्तासिद्धिस्तुल्येति शङ्कते—नन्विति। यद्यपि मृदो घटोत्पत्तिर्दृष्टा तथाऽपि न मृदो मृदन्तरं घटाद्घटान्तरमुत्पद्यमानमुपलभ्यते तस्मान्न सतः सदन्तरोत्पत्तिरित्यर्थः। किं सदन्तरस्य सतः सकाशादुत्पत्तिरेव वार्यते किं वा कारणत्वं सतो निराक्रियते तत्राऽऽद्यमङ्गीकरोति—सत्यमिति। द्वितीयं निराकरोति—किं तर्हीति। तत्रापि दृष्टान्ताभावमाशङ्क्याऽऽह—यथेति। कुण्डलीभावे कार्यत्वप्रसिद्धिर्नास्तीत्याशङ्क्योदाहरणान्तरमाह—यथा चेति। प्रभेदैरवतिष्ठत इति सम्बन्धः। सत एव सर्वप्रकारेणावस्थाने प्राक्कालिकं कार्यस्य सत्त्ववचनमयुक्तं तस्य सर्वदा सत्त्वाविशेषादिति शङ्कते—यद्येवमिति। प्रागवस्थं हि कारणं सन्मात्रत्वं च कार्यस्यावधार्यते तथाच कारणस्यैव सतस्तेन तेनाऽऽकारेणावस्थानमित्यङ्गीकारेऽपि कार्यस्य प्राक्कालिकं सत्त्वावधारणमविरुद्धमित्युत्तरमाह—नन्विति। कार्यस्य कारणमात्रत्वं चेदवधृतं तर्हि कारणमेवाऽऽसीन्न कार्यं तदसदेवेदानीं जातमित्यसत्कार्यवादिमतमायातमिति शङ्कते—प्राप्तमिति। कारणस्यैव कार्यरूपेणावस्थानान्नासत्कार्यवादापत्तिरिति दृष्टान्तेन परिहरति—नेत्यादिना।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु सद्वादिनोऽपीति। यद्यपि मृत्पिण्डात् घटोत्पत्तिर्दृश्यत इति दृष्टान्त उक्तः तथापि घटात् घटान्तरोत्पत्त्यदर्शनात् सतः सदुत्पत्त्यभावस्यापि साधयितुमशक्यत्वात् न तद्दृष्टान्तमात्रेण तवेष्टसिद्धिरिति शङ्कार्थः। कार्यं नामोपादानकारणस्य संस्थानान्तरमेव, न ततोऽत्यन्तभिन्नम्। वस्तुतश्च घटान्तरस्य घटान्तरसंस्थानत्वाभावात् तत्कार्यत्वाभाव इत्यदर्शनस्यान्यथासिद्धत्वात् न सतः सदुत्पत्त्यभावसाधकत्वमित्यभिप्रेत्य परिहरति—सत्यमित्यादिना। यद्वा सतः सदुत्पद्यत इति पक्षे कारणाद्भिन्नं कार्यं वक्तव्यं, एकस्मिन् कार्यकारणभावस्यासम्भवात् तथाविधे च कार्ये न दृष्टान्तोऽस्तीति चोदयति—ननु सद्वादिनोऽपीति। संस्थानभेदमात्रेण कार्यकारणभावोपपत्तेः दृष्टान्तस्योक्तत्वात् नोक्तदोष इति परिहरति—सत्यमित्यादिना। कारणस्य संस्थानान्तरं चेत्कार्यं तर्हि इदानीमपि सदात्मकमेवेति सत्पदान्वितं अग्र इति विशेषणमयुक्तमिति शङ्कते—यद्येवमिति। यद्यपि पूर्वमेव किं नेदानीमित्यादिना इयं शङ्का निराकृता तथापि तत्र अग्रेशब्दवलात् इदानीं सत्त्वं न स्यादित्याशङ्कितम्। इह तु इदानीं सदा सत्त्वं सिद्धवत्कृत्य अग्रेशब्दानुपपत्तिराशङ्कितेति न पौनरुक्त्यम्। कार्यस्य यदिदंशब्दबुद्धिगम्यत्वं तस्य यदवधारणं व्यावर्तनं तस्य अग्रेशब्दो विशेषणम्। ततश्च इदंशब्दवाच्यत्वस्य प्रागसत्त्वं न तु सदात्मत्वस्य कदाचिदपि व्यावृत्तिरिति परिहरति—ननु न श्रुतमिति। न श्रुतिमिति काकुः। नकाराभावपाठे तु पूर्वमेव परिहारस्त्वया श्रुत इत्यर्थः। इदंशब्दवाच्यस्येति भावप्रधाननिर्देशः कार्यस्य यदिदंशब्दवाच्यत्वं तस्येत्यर्थः। इदंशब्दवाच्यत्वस्य प्रागसतः, इदानीमुत्पत्तौ असदुत्पत्तिः स्यादिति चोदयति – प्राप्तं तर्हीति। इदंशब्दबुद्धिविषयत्वस्यापि सदात्मव्यतिरेकेण दुर्निरूपत्वात् सदात्मना च सर्वदा विद्यमानत्वात् नासत्कार्यापत्तिरिति परिहरति—न सत एवेति। कार्यकारणयोः भिन्नशब्दबुद्धिविषयत्वात्

ननु यथा मृद्वस्त्वेवं पिण्डघटाद्यपि तद्वत्सद्बुद्धेरन्यबुद्धिविषयत्वात्कार्यस्य सतोऽन्यद्वस्त्वन्तरं स्यात्कार्यजातं यथाऽश्वाद्गौः। न। पिण्डघटादीनामितरेतरव्यभिचारेऽपि मृत्त्वाव्यभिचारात्। यद्यपि घटः पिण्डं व्यभिचरति पिण्डश्च घटं तथाऽपि पिण्डघटौ मृत्त्वं न व्यभिचरतस्तस्मान्मृन्मात्रं पिण्डघटौ। (व्यभिचरति त्वश्वं गौरश्वो वा गाम्।) तस्मान्मृदादिसंस्थानमात्रं घटादयः। एवं सत्संस्थानमात्रमिदं सर्वमिति युक्तं प्रागुत्पत्तेः सदेवेति। वाचारम्भणमात्रत्वाद्विकारसंस्थानमात्रस्य।

ननु निरवयवं सत् "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनं" "दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यज" इत्यादिश्रुतिभ्यो निरवयवस्य सतः कथं विकारसंस्थानमुपपद्यते। नैष दोषः। रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानवद्बुद्धिपरिकल्पितेभ्यः सदवयवेभ्यो विकारसंस्थानोपपत्तेः। वाचाऽऽरम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमेवं सदेव सत्यमिति श्रुतेः। एकमेवाद्वितीयं परमार्थत इदंबुद्धिकालेऽपि ॥ २ ॥

### नरेन्द्रपुरीयं टिप्पणम्

नन्विति। विलक्षणबुद्धिविषयत्वस्य भेदमात्रसाधकत्वात् सिद्धसाधनत्वम्। तात्त्विकभेदसाधने च दृष्टान्तासिद्धिः। व्यभिचारित्वेन रज्जुसर्पादिवत् मिथ्यात्वानुमानादनिर्वाच्यसंस्थानादेव सतः कार्यबुद्ध्यालम्बनत्वमित्याह—न पिण्डघटादीनामिति। चोद्यमुखेन विकारापत्तेरनिर्वाच्यतां स्फुटीकर्तुमुपक्रमते—नन्वित्यादिना। अज्ञातेभ्यो

### आनन्दगिरिटीका

विमतमुपादानाद्भिद्यते तद्विलक्षणबुद्धिविषयत्वाद्यथाऽश्वबुद्धिविलक्षणबुद्धिविषयो महिषस्ततो भिद्यते। तथाच कथं सत एवेदंधीविषयानिर्वाच्यावस्थाङ्गीकारेणासत्कार्यवादापत्तिसमाविरिति चोदयति—नन्विति। विलक्षणबुद्धिविषयत्वस्य भेदमात्रसाधकत्वे सिद्धसाधनं तात्त्विकभेदसाधकत्वे दृष्टान्तासिद्धिरित्यभिप्रेत्याऽऽह—नेति। किंच कार्यस्य व्यभिचारित्वेन रज्जुसर्पादिवन्मिथ्यात्वानुमानादनिर्वाच्यसंस्थानादेव कार्यबुद्ध्यालम्बनत्वं सतोऽङ्गीकर्तव्यमित्याह—पिण्डेति। तदेव स्फुटयति—यद्यपीति। मृत्त्वमन्तरेण पिण्डघटयोः स्वरूपाभावादिति तच्छब्दार्थः। अव्यभिचारे मृत्त्वमित्यादिदृष्टान्तः। अव्यभिचारफलमाह—तस्मादिति। दृष्टान्तगतमर्थं दार्ष्टान्तिके समर्थयति—एवमिति। पृथगेव प्रथमानस्य कार्यस्य कथं सन्मात्रत्वमित्याशङ्क्याऽऽह—वाचारम्भणेति।

कार्यमिथ्यात्वं स्फुटीकर्तुं चोदयति—नन्विति। यथा खल्वज्ञातेभ्यो रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानमनिर्वाच्यमिष्टं तथा श्रुतिजनितजगत्कारणत्वबुद्ध्यनुपपत्त्या कल्पितेभ्यः सतो मायोपाधिकस्यावयवेभ्यो विकारसंस्थानमुपपद्यते तस्मादयं द्वैतप्रपञ्चो ब्रह्मविवर्तः सम्भवतीति परिहरति—नैष दोष इति। ब्रह्मविवर्तो जगदित्यत्र श्रुतिमनुकूलयति—वाचाऽऽरम्भणमिति। प्रपञ्चमिथ्यात्वे फलितमुपसंहरति—एकमेवेति ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

भिन्नप्रयोजनकारित्वाच्च तयोरत्यन्तभेद इति नैयायिकः शङ्कते—ननु यथेति। मृदो यथा पृथक् वस्तुत्वं एवं पिण्डादेरपीत्यर्थः। तद्वत्कार्यजातं सतोऽन्यद्वस्त्वन्तरं स्यादित्यन्वयः। तत्र हेतुः सद्बुद्धेरिति। कार्यं कारणाद्वस्त्वन्तरं ततो भिन्नबुद्धिविषयत्वात् यथा अश्वाद्भिन्नो गौरित्यर्थः। एवं न पिण्डेति नकारपाठे तु न किमिति काक्वर्थतया उक्तार्थ एव पर्यवसानं द्रष्टव्यम्। वस्त्वन्तरत्वे तद्व्यभिचारित्वं उपाधिः पिण्डघटादौ साध्यव्यापकत्वात् कार्यकारणयोश्च साधनाव्यापकत्वादिति परिहरति—न पिण्डघटादीनामिति। एतदेव विवृणोति—यद्यपीत्यादि। प्रकृतमुपसंहरति—इति युक्तमिति। ननु प्रागुत्पत्तेरपि कार्यस्य सदासत्त्वं नोपपद्यते। इदानीमेव प्रतीयमानत्वेन सतो भिन्नस्य विकारसंस्थानस्य प्रागपि सत्त्वानुपपत्तेरित्याशङ्क्य प्रागुक्तमन्यत्वाभावं स्मारयति—वाचारम्भणेति। ननु मृदादेः सावयवत्वात् रूपान्तरापत्तिरुपपद्यते। सतस्तु निरवयवत्वेन तन्नोपपद्यत इति चोदयति—नन्विति। निरवयवत्त्वे प्रमाणमाह—निष्कलमिति। अजस्य विकारसंस्थानरूपेण जन्मापि नोपपद्यत इत्याह—सबाह्याभ्यन्तर इति। वास्तवावयवाभावेपि अविद्याकल्पितावयवानां सदात्मन्यपि सम्भवान्न दोष इत्याह—नैष इति। बुद्धिपरिकल्पितेभ्य इत्यनेन कार्यरूपेण जननस्यापि मायिकत्वान्न पारमार्थिकाजत्वविरोध इति सूचितम्। सत्त्वेवेत्यनेन स्वपक्षसिद्धेरुपसंहृतत्वात् पुनरेकमेवाद्वितीयमिति वाक्यं पुनरुक्तमित्याशङ्क्य कार्यकालेऽप्यद्वितीयत्वं वक्तुं तदिति व्याचष्टे—

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत । तस्माद्यत्र क्वच शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ॥ ३ ॥**

तत्सदैक्षतेक्षां दर्शनं कृतवत् । अतश्च न प्रधानं सांख्यपरिकल्पितं जगत्कारणम् । प्रधानस्याचेतनत्वाभ्युपगमात् । इदं तु सच्चेतनमीक्षितृत्वात् । तत्कथमैक्षतेत्याह—बहु प्रभूतं स्यां भवेयं प्रजायेय प्रकर्षेणोत्पद्येय । यथा मृद्घटाद्याकारेण यथा वा रज्ज्वादि सर्पाद्याकारेण बुद्धिपरिकल्पितेन । असदेव तर्हि सर्वं यद्गृह्यते रज्जुरिव सर्पाद्याकारेण । न । सत एव द्वैतभेदेनान्यथागृह्यमाणत्वान्नासत्त्वं कस्यचित्क्वचिदिति ब्रूमः । यथा सतोऽन्यद्वस्त्वन्तरं परिकल्प्य पुनस्तस्यैव प्रागुत्पत्तेः प्रध्वंसाच्चोर्ध्वमसत्त्वं ब्रुवते तार्किका न तथाऽस्माभिः कदाचित्क्वचिदपि सतोऽन्य-

### नरेन्द्रपुरीयं टिप्पणम्

रज्ज्वाद्यवयवेभ्यः सर्पादिसंस्थानमनिर्वाच्यं यथा भवति तथा श्रौतजगत्कारणत्वबुद्ध्यन्यथानुपपत्त्या परिकल्पितेभ्यः सतो मायोपाधिकस्यावयवेभ्यो विकारसंस्थानमुत्पद्यते । अत औपाधिकोऽन्यथाभावो ब्रह्मणो विवर्तः प्रपञ्च इत्यर्थः ॥२॥

"बहु स्यां प्रजायेये"त्यनेनेक्षितुरेव कार्याकारापत्त्यभिधानेन श्रुत्या वैशेषिकादिमतं निरस्तमिति तात्पर्यद्योतनादिति निरस्तमपि चोद्यमुद्भाव्य निराचष्टे—असदेव तर्हीत्यादिना । अज्ञानान्वयव्यतिरेकाभ्यां रज्जु-

### आनन्दगिरिटीका

अद्वितीयत्वसमर्थनार्थमुत्तरवाक्यमुत्थाप्य व्याचष्टे—तत्सदिति । सच्छब्दवाच्यं जगत्कारणं प्रधानमिति केचित्तदप्येतेन निरस्तमित्याह—अतश्चेति । ईक्षापूर्वकारित्वादिति यावत् । अचेतनत्वाभ्युपगमान्न तस्येक्षापूर्वकं स्रष्टृत्वमिति शेषः । परिणामविवर्तवादावाश्रित्योदाहरणद्वयम् । बहु स्यामित्यादिश्रुतितात्पर्यं वक्तुं निरस्तमेव चोद्यमुद्भावयति—असदेवेति । बहु स्यां प्रजायेयेत्यनेनेक्षितुरेव कार्याकारापत्तिवचनेन वैशेषिकादिमतमेतन्निरस्तमिति श्रुतितात्पर्यं दर्शयन्नुत्तरमाह—नेत्यादिना । तदेव प्रपञ्चयति—यथेत्यादिना । प्रतिज्ञातमर्थं मतद्वयानुसारेण

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वाचारम्भण इति । वाचारम्भणश्रुतिः कार्यकालेऽपि कारणस्यैव सत्त्वं प्रतिपादयन्ती कारणस्य सदाप्यद्वितीयत्वं प्रतिपादयतीत्यर्थः । इदंबुद्धिकालेऽपीति । प्रागुत्पत्तेरद्वितीयत्वं प्रतिपादयितुं प्रथमवाक्यम् । इदं तु कार्यकालेप्यद्वितीयत्वं प्रतिपादयितुं शब्दाधिक्यादर्थाधिक्यमिति न्यायादिति भावः ॥ २ ॥

तदैक्षत बहु स्यां प्रजायेयेत्युत्तरं वाक्यं व्याचष्टे—तदिति । सृष्टिवाक्यस्य न सृष्टौ तात्पर्यं तत्प्रतिपादने प्रयोजनाभावात् । किन्तु मृदादिदृष्टान्तेन जगतः सत्कार्यत्वेन सदद्वितीयत्वप्रतिपादने तात्पर्यम् । 'आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं' इति अद्वितीयत्वज्ञानान्मोक्षप्रतिपादनात् । नैवमीक्षणप्रतिपादनस्य किञ्चित्प्रयोजनमित्याशङ्क्य कारणस्य अचेतनत्वव्यावृत्त्यर्थं तदित्याह—अतश्चेति । तदर्थं कारणस्य सतश्चेतनत्वं साधयति—इदं त्विति । एकस्याविकृतस्य कथं बहुभवनमित्याशङ्क्य विकारद्वारेणेति वक्तुं प्रजायेयेत्युक्तं श्रुतौ तद्व्याचष्टे—प्रजायेयेति । प्रकर्षेणेति । तथा च विद्यमानस्यैवाधिक्यं प्रकर्ष इति लोकप्रसिद्धिः । प्रकृते च मायाया एव अधिकत्वात् मायया एकस्यैव सतो बहुवचनमिति भावः । एतेन बहुभवनसङ्कल्पेन ईक्षणेन च अभिन्ननिमित्तोपादानत्वं प्रतीयमानमपि माययैवेति नाद्वितीयत्वक्षतिरित्यपि द्रष्टव्यम् । परिणामाङ्गीकारेण प्रथमदृष्टान्तः । विवर्तवादेन द्वितीयः । जगतो रज्जुसर्पतुल्यत्वे असत्त्वं शङ्कते—असदेवेदमिति । यत् यदीत्यर्थः । रज्जुसर्पादेरपि अधिष्ठानात्मकत्वेन सत्यत्वान्नासत्यत्वमित्याह—नेति । कस्यचिदिति । दृष्टान्तस्य दार्ष्टान्तिकस्य वेत्यर्थः । प्रत्युत कारणात् कार्यस्य भेदपक्ष एव असत्त्वं कार्यस्य स्यादित्यभिप्रायेणाह—यथेति । सतः कारणात् सतोऽन्यदित्यनेन कार्यस्य स्थितिकालेऽपि सद्भेदादसत्त्वं दर्शितम् । न च तत्काले सत्ताविशिष्टत्वेन सत्यत्वमिति वाच्यम् । सामान्यादेरसत्त्वप्रसङ्गात् । तेषां च स्वरूपसत्ताङ्गीकारे च सर्वत्र तथैव प्रसङ्गः । कारणसत्तयैव सर्वत्र सत्तोपपत्तौ अनेकस्वरूपाणां सत्त्वाङ्गीकारे गौरवं च स्यादिति भावः ।

दभिधानमभिधेयं वा वस्तु परिकल्प्यते। सदेव तु सर्वमभिधानमभिधीयते च यदन्यबुद्धचा। यथा रज्जुरेव सर्पबुद्धचा सर्प इत्यभिधीयते यथा वा पिण्डघटादि मृदोऽन्यबुद्धचा पिण्डघटादिशब्देनाभिधीयते लोके। रज्जुविवेकदर्शिनां तु सर्पाभिधानबुद्धी निवर्तेते यथा च मृद्विवेकदर्शिनां घटादिशब्दबुद्धी तद्वत्सद्विवेकदर्शिनामन्यविकारशब्दबुद्धी निवर्तेते। "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह" इति "अनिरुक्तेऽनिलयन" इत्यादिश्रुतिभ्यः।

एवमीक्षित्वा तत्तेजोऽसृजत तेजः सृष्टवत्। ननु तस्माद्वा एतस्मादात्मन आकाशः संभूत इति श्रुत्यन्तर आकाशाद्वायुस्ततस्तृतीयं तेजः श्रुतमिह तु कथ प्राथम्येन तस्मादेव तेजः सृज्यते तत एव चाऽऽकाशमिति विरुद्धम्। नैष दोषः। आकाशवायुसर्गानन्तरं तत्सत्तेजोऽसृजतेतिकल्पनोपपत्तेः। अथ वाऽविवक्षित इह सृष्टिक्रमः सत्कार्यमिदं

### नरेन्द्रपुरीयं टिप्पणम्

सर्पादिरज्ञानमयत्ववत् सन्मात्राविवेके सत्येव द्वैताभिनिवेशोत्पत्तेर्विचारेण सन्मात्रविवेके तदनुत्पत्तेर्द्वैतमप्यज्ञानमयमेवाधिष्ठानमेव तु तस्य तत्त्वमित्याह—यथा रज्जुरेवेत्यादिना। तदुक्तं "यदस्ति तद्भाति तदात्मरूपं नान्यत्ततो

### आनन्दगिरिटीका

दृष्टान्ताभ्यां स्पष्टयति—यथा रज्जुरिति। अज्ञानान्वयव्यतिरेकाभ्यां रज्जुसर्पादिरज्ञानमयत्वे च द्वैताभिनिवेशस्य सन्मात्राविवेके सत्येवोत्पत्तेर्विचारेण तद्विवेके चानुत्पत्तेर्द्वैतमप्यज्ञानमयमेव तस्य तु तत्त्वं सन्मात्रमधिष्ठानं वाङ्मनसातीतमित्यर्थः। तस्य वाङ्मनसातीतत्वे प्रमाणमाह—यत इति। अन्यदेव तद्विदितादित्यादिवाक्यमादिपदार्थः।

तैत्तिरीयकश्रुतिविरोधमाशङ्कते—नन्विति। तथापि कथं विरोधधीरित्याशङ्क्याऽऽह—इति विरुद्धमिति। अस्यां श्रुतौ सतः सकाशादेव प्राथम्येन तेजः सृज्यमानमुच्यते श्रुत्यन्तरे तु तस्मादेव सतः सकाशादाकाशं प्राथम्येन सृष्टमित्युपदिष्टं तथा च कथमिदं मिथो विरुद्धं सिध्यतीत्यर्थः। तैत्तिरीयकश्रुत्यनुसारेण च्छान्दोग्यश्रुतेर्व्याख्यानसम्भवान्न विरोधोऽस्तीति परिहरति—नैष दोष इति। सृष्टिक्रमस्य विवक्षितत्वमङ्गीकृत्योक्तं तदेव नास्त्यद्वितीयत्वं तु सतो विवक्षितमिति पक्षान्तरमाश्रित्याऽऽह—अथ वेति। तत्र गमकं दर्शयति—मृदादीति। मृदादिकार्यं घटादि तद्व्यतिरेकेण नास्ति मृदाद्येव तु सत्यमितिदृष्टान्ते अपादानाद्ब्रह्मणः सतस्तेजोबन्नादिकार्यं तदतिरेकेण नास्ति

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु अभिधानाभिधेययोरनङ्गीकारे घटपटादिव्यवहारविलोपः स्यादित्याशङ्क्य सत एव भ्रान्त्या अभिधानादिरूपेण प्रतीयमानस्य व्यवहारविषयत्वान्नायं दोष इत्याह—सदेव त्विति। घटादेः सदन्यबुद्धिविषयत्वे अन्यत्वे सति वस्तुत्वमेव स्यादित्याशङ्क्य सद्विवेकानन्तरं घटादिकार्यस्याभावादविवेकमात्रशरीरत्वेन भ्रमत्वमिति सदृष्टान्तमाह—रज्जुविवेकेति। यतो वाच इति। इयं श्रुतिः निरुपाधिके शुद्धे वाङ्मनसयोर्निवृत्तिं दर्शयति। तथाविधे सति विविक्ते ज्ञाते सन् घट इत्यादिशब्दबुद्धयोरपि निवृत्तिं दर्शयति। अन्यथा उक्तशब्दबुद्धयोरधिष्ठाने सद्रूपे ब्रह्मण्यपि प्रवृत्तेः अनिवार्यत्वादुक्तं न सिद्धयेत्। न चेयं श्रुतिः ब्रह्मादिशब्दानां मुख्यया वृत्त्या सति प्रवृत्त्यभावं दर्शयति न तु घटादिशब्दानामिति। वाचो निवर्तन्त इति निवृत्तिशब्दस्वारस्यात् प्रवृत्तानामेव निवृत्तिर्वाच्या ततश्च ब्रह्मादिशब्दानामपि उपाधिद्वारा प्रवृत्तानां उपाधिनिवृत्त्या शुद्धे निवृत्तिरेव तदर्थः। सा च सन् घट इत्यादिशब्दानामविशिष्टेति विवेकानन्तरमभिधानादिनिवृत्तौ उक्तश्रुतिः प्रमाणमिति भावः। अत्र श्रुतौ मनश्शब्देन अभिधेयमुच्यते मनोविकारत्वात्तस्येति। अनिरुक्ते इति। निर्वचनं शब्दः निलयनं नीडः आश्रयः तद्रहिते ब्रह्मणि यदा स्थितिं अभेदात्मिकां लभते तदा अभयं गतो भवति इति श्रुतेरर्थः। अनिरुक्तादिपदाभ्यां च अभिधानाभिधेययोरभाव उक्त इति भावः। प्रथमं तेजस्सृष्टिश्रुतेः तैत्तिरीयश्रुतिविरोधं शङ्कते—नन्विति। वायुरित्यस्य इति श्रुत्यन्तरं इति पूर्वेणान्वयः। ततश्च तत्राकाशवाय्वोः सृष्टिरुक्ता। इह तु नेत्येको विरोधः। तेजसः तृतीयत्वप्राथम्याभ्यां विरोधान्तरमाह—तत इति। वायोरित्यर्थः। वायोस्तेजः सम्भूतमिति श्रुतं ततस्तृतीयतया श्रुतम्। इह तु तत्तेजोऽसृजतेति प्राथम्येन श्रूयते तत्कथमित्यन्वयः। वायोस्तेजः श्रुतमित्युक्त्या एकत्र वायोः तेजःस्रष्टृत्वं अपरत्र सतः स्रष्टृत्वमिति स्रष्टृद्वारकोऽपि विरोध उक्तः। एवं तेजस एव प्राथम्यं तृतीयत्वं च विरुद्धमित्युक्त्वा आकाशप्राथम्येन तेजः प्राथम्यस्य विरोध इति विरोधान्तरमाह—तस्मादेवेति। आत्मन एवेत्यर्थः। आकाशमिति चेति चशब्दस्योत्तरान्वयः। विरोधचतुष्टयं परिहरति—नैष दोष इति। न तावत्प्रथमो विरोधः। आकाशवायुसृष्टेः वियदधिकरणन्यायेन इहोपसंहारोप-

**सर्वमतः सदेकमेवाद्वितीयमित्येतद्विवक्षितम्। मृदादिदृष्टान्तात्। अथवा त्रिवृत्करणस्य विवक्षितत्वात्तेजोबन्नानामेव सृष्टिमाचष्टे। तेज इति प्रसिद्धं लोके दग्धृ पक्तृ प्रकाशकं रोहितं चेति। तत्सत्सृष्टं तेज ऐक्षत तेजोरूपसंस्थितं सदैक्षतेत्यर्थः। बहु स्यां प्रजायेयेति पूर्ववत्। तदपोऽसृजत। आपो द्रवाः स्निग्धाः स्यन्दिन्यः शुक्लाश्चेति प्रसिद्धा लोके। यस्मात्तेजसः कार्यभूता आपस्तस्माद्यत्र क्वच देशे काले वा शोचति सन्तप्यते स्वेदते प्रस्विद्यते वा पुरुषस्तेजस एव तत्तदाऽऽपोऽधिजायन्ते॥ ३॥**

### नरेन्द्रपुरीयं टिप्पणम्

भाति न चान्यदस्ति। स्वभावसंवित्प्रतिभाति केवला ग्राह्यं ग्रहीतेति मृषैव कल्पना॥" इति। श्रुत्यन्तरसिद्धयोर्वाय्वाकाशयोस्तेजःप्रभृतिष्वेवान्तर्भावमभिप्रेत्य त्रिवृत्करणमिह विवक्षितम्। लघूपायेन सन्मात्रप्रतिपत्त्यर्थं ततस्तेजः प्रमुखा सृष्टिरुच्यत इति तात्पर्यान्तरमाह—**अथवा त्रिवृत्करणस्येति**॥ ३॥

### आनन्दगिरिटीका

सन्मात्रमेव सत्यमिति दार्ष्टान्तिकेऽपि विवक्षितं प्रतिभातीत्यर्थः। तत्तेजोऽसृजतेत्यादिश्रुतेस्तात्पर्यान्तरमाह—**अथवा त्रिवृत्करणस्येति**। तासां त्रिवृतं त्रिवृतमेकैकां करवाणीत्यादौ त्रिवृत्करणस्येष्टत्वात् त्रयाणामेव भूतानामिह सृष्टिरुच्यते। न चैवं पञ्चीकरणमविवक्षितमिति वाच्यं; भूतत्रयसृष्टिश्रुतौ श्रुत्यन्तरसिद्धाकाशादिसृष्टेरुपलक्षणवत् त्रिवृत्करणश्रुत्या पञ्चीकरणोपलक्षणात्। तथाच श्रुत्यन्तरसिद्धयोराकाशवाय्वोस्तेजःप्रभृतिष्वन्तर्भावमभिप्रेत्य लघूपायेन सर्वस्य सन्मात्रत्वं मन्तव्यमिति मन्वाना श्रुतिस्त्रिवृत्करणमेवाऽऽचक्षाणा तदनुरोधेन त्रयाणामेव सृष्टिमाहेत्यर्थः। तेजसोऽचेतनस्य कथमीक्षितृत्वमित्याशङ्क्य वाक्यार्थमाह—**तेजोरूपेति**। अपां तेजःकार्यत्वे लोकानुभवमनुकूलयति—**यस्मादिति**॥ ३॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पत्तेः। इह तयोः सृष्ट्यभावोक्तो हि विरोधःस्यात् न तु अनुक्तिमात्रेण, अन्यत्रोक्तस्योपसंहारसम्भवात्। द्वितीयोऽपि विरोधः आकाशवायुसर्गानन्तरमित्यनेन परिहृतः। इह तेजसः प्राथम्यं न श्रूयते। तद्वाचिपदाभावात्। किन्तु तेजसः पूर्वमन्यस्याश्रवणादर्थाद्गम्यते तत्तु वायोरग्निरिति श्रुतेन वाय्वानन्तर्येण बाध्यते इति। अत एवाकाशप्राथम्येन विरोधोऽपि नास्ति। आकाशप्राथम्यस्य बाधकाभावादङ्गीकारात्। तेजः प्राथम्यस्य तृतीयत्वेन बाधात्। नापि स्रष्टृद्वारको विरोधः "तदभिध्यानादेव तु तल्लिङ्गात्सः" इति न्यायेन वायुभावमापन्नस्य सत एव तेजस्स्रष्टृत्वस्य तैत्तिरीयेऽप्यङ्गीकारादिति।

एवं सर्वप्रकारं विरोधं परिहृत्य क्रमविरोधे परिहारान्तरमाह—**अथवेति**। **अविवक्षित इति**। अतः स विरोधो नादरणीयः। ततश्च वायुसर्गानन्तरमिति नोपसंहर्तव्यमिति भावः। आकाशवायुसृष्टिस्तु उपसंहर्तव्यैव अन्यथा सत्कार्यमिदं सर्वमित्यस्यासिद्धिप्रसङ्गादिति द्रष्टव्यम्। अत्राद्वितीयत्वस्य विवक्षितत्वे हेतुमाह—**अथवा त्रिवृत्करणस्य विवक्षितत्वादिति**। अयमभिप्रायः—कार्यविवेकद्वारा कारणस्य सत्यत्वं तद्विज्ञानेन कार्यविज्ञानं च प्रदर्शयितुं त्रिवृत्करणमुच्यते। अत एव वक्ष्यते "यदग्ने रोहितं रूप"मित्यादिना त्रिवृत्करणप्रदर्शनपूर्वकं अपागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं इति तद्विवेकप्रदर्शनेन कारणसत्यत्वमुक्त्वा एतद्धस्म वै तद्विद्वांस इत्यादिना.......... न नोद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति कारणविज्ञानेन सर्वविज्ञानं, कार्येषु च पञ्चभूतेषु अमूर्तस्य भाष्ये वक्ष्यमाणरीत्या मूर्तेऽन्तर्भावात् मूर्तं प्रत्याख्याय अमूर्तस्य पृथक् ग्रहणाभावाच्च तस्य पृथक् विवेको नापेक्षितः मूर्तस्य विवेककरणेनैव अमूर्तस्यापि विवेकादिसिद्धेः। अतः त्रिवृत्करणमेवात्र सर्वविज्ञानद्वारतया विवक्षितमिति। अस्मिन् पक्षे वाय्वादिसृष्टिरपि नोपसंहर्तव्या मूर्तसृष्ट्युक्त्यैव तदन्तर्गतामूर्तसृष्ट्युक्तिसिद्धेः। न चैतावता पञ्चीकरणमविवक्षितमेवेति मन्तव्यम्, आकाशवायुसर्गानन्तरमित्युपसंहारपक्षाभिप्रायेण त्रिवृत्करणं प्रदर्शनार्थमित्यादिना भाष्य एव वक्ष्यमाणत्वादिति। तटस्थस्वरूपलक्षणाभ्यां तेजश्शब्दार्थमाह—**तेज इतीति**। तेजोमात्रस्याचेतनत्वेन ईक्षणानुपपत्तेराह—**तेजोरूपसंस्थितमिति**। अपां तेजोजन्यत्वं इदानीमश्रुस्वेदरूपाणां अपां सन्तापरूपतेजोजन्यत्वदर्शनेन द्रढयति—**तस्माद्यत्रेति**। शोचति शोकेनाश्रूणि पातयतीत्यर्थः। भाष्ये

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं जायते ॥ ४ ॥**

**इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य द्वितीयः खण्डः**

ता आप ऐक्षन्त पूर्ववदेवाबाकारसंस्थितं[1] सदैक्षतेत्यर्थः। बह्व्यः प्रभूताः स्याम भवेम प्रजायेमहि उत्पद्येमहीति। ता अन्नमसृजन्त पृथिवीलक्षणम्। पार्थिवं ह्यन्नं यस्मादप्कार्यमन्नं तस्माद्यत्र क्व च वर्षति देशे तत्तत्रैव भूयिष्ठं प्रभूतमन्नं भवति। अतोऽद्भ्य एव तदन्नाद्यमधिजायते। ता अन्नमसृजन्तेति पृथिव्युक्ता पूर्वमिह तु दृष्टान्तेऽन्नं च तदाद्यं चेति विशेषणाद्व्रीहियवाद्या उच्यन्ते। अन्नं च गुरु स्थिरं धारणं कृष्णं च रूपतः प्रसिद्धम्। ननु तेजःप्रभृतिष्वीक्षणं न गम्यते हिंसादिप्रतिषेधाभावात्त्रासादिकार्यानुपलम्भाच्च तत्र कथं तत्तेज ऐक्षतेत्यादि।

**नरेन्द्रपुरीयं टिप्पणम्**

व्रीह्यादेः पार्थिवस्य अद्भ्य उत्पत्त्यभिधानद्वारेण पृथिव्या एवोत्पत्तिर्विवक्षितेत्यभिप्रेत्यान्नस्य रूपमाह—अन्नं चेति। तेजोरूपसंस्थं सदैक्षतेत्यादिमुख्यार्थत्यागेन व्याख्यातं तत्र चोद्यमुखेन मुख्यार्थत्यागे कारणमाह—

**आनन्दगिरिटीका**

पृथिव्यामन्नशब्दप्रयोगे हेतुमाह—पार्थिवं हीति। अपां कार्यमन्नमित्यत्रापि लोकप्रसिद्धिं दर्शयति—यस्मादिति। ता अन्नमसृजन्तेत्यत्राद्भ्योऽन्नसृष्टिरुपदिष्टा दृष्टान्तेऽपि ताभ्यस्तत्सृष्टिरुपदिश्यते तथा च पौनरुक्त्यमित्याशङ्क्यार्थविशेषं दर्शयति—अन्नमिति। तत्तेज ऐक्षतेत्यादौ यथाश्रुतमर्थं गृहीत्वा चोदयति—नन्विति। प्राणिषु

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

सन्तापशब्देनापि तत्पूर्वकाश्रुपातोऽभिधीयते। स्वेदते वेति शरीरसन्तापेनेति शेषः। शोको मानससन्ताप इति भेदः ॥ ३ ॥

महाभूतप्रस्तावादन्नशब्देन पृथिवी लक्ष्यत इत्याह—पृथिवीलक्षणमिति। लक्षणाबीजं कार्यकारणत्वं सम्बन्धमाह—पार्थिवं हीति। अभिन्नयोः कार्यकारणभावं पूर्ववत्साधयति—तस्मादिति। तस्माद्यत्रेति वाक्यगतान्नशब्दाभ्यां पूर्ववन्न पृथिवी गृह्यते। पृथिव्या अब्जन्यत्वादर्शनेन दृष्टान्तत्वानुपपत्तेः, किन्तु व्रीहियवाद्येव गृह्यत इति वक्तुं अन्नाद्यमिति श्रुतौ विशेषणं दत्तमित्याह—अन्नमसृजन्तेति पृथिव्युक्ता पूर्वमिति। यद्यपि व्रीह्याद्यन्नस्याब्जन्यत्वमिदानीं दृश्यमानं न पृथिव्याः साक्षादब्जन्यत्वं साधयितुमलं तयोर्भेदात् तथापि पृथिवीकार्यत्वाद्व्रीह्यादेः तस्मिन् दृश्यमानमब्जन्यत्वं कारणेपि तथात्वं सम्भावयति कार्यधर्मस्य कारणधर्मपूर्वकत्वस्यौचित्यादिति भावः। 'ता अन्नं' इति वाक्यगतान्नशब्दितां पृथिवीं लक्षणेन स्पष्टयति—अन्नं चेति। तत्तेज ऐक्षतेत्याक्षिपति—ननु तेजः प्रभृतिष्विति। बहुवचनं अप्तेजोव्यतिरिक्तेऽप्यचेतने ईक्षणं नास्तीति वक्तुं न युज्यते अचेतनत्वादित्यर्थः। अचेतनत्वं साधयति—हिंसादीति। चेतनत्वे तेज आदीनां तद्धिंसायां प्रतिषेधःस्यात्। न च तदस्ति। तद्धिंसायां प्रायश्चित्तानुपदेशात्। अतोऽचेतनत्वमित्यर्थः। आदिशब्दः आक्रोशनाद्यर्थः त्रासादीत्यादिशब्देन शोकादिकं गृह्यते। यद्यपि तेजोरूपसंस्थितं सदैक्षतेत्युक्त्वा अचेतनत्वं परिहृतम्, तथापि तेजश्शब्दस्य सति लक्षणा न युक्ता मुख्यार्थत्यागस्यायुक्तत्वादिति गूढाभिसन्धेः साङ्ख्यस्येयमाशङ्केति द्रष्टव्यम्। तेज आदिषु ईक्षणस्यौपचारिकत्वे सिद्धान्तिनोक्ते सत्कर्तृकमपि ईक्षणमौपचारिकं साधयामीति गूढोऽभिसन्धिः। यद्यपि ऐक्षतेत्यस्य औपचारिकत्वं तेनाप्यङ्गीकार्यं तथापि प्रथमश्रुतस्य तेजश्शब्दस्य असञ्जातविरोधिनो लक्षणा न युक्ता। किन्तु चरमश्रुतस्यैव सा युक्ता, वेदोपक्रमाधि-

1. अबाकारसंस्थितं इति। तदभिध्यानादेव तल्लिङ्गात् सः इति न्यायात्। तथा हि ब्रह्मसूत्रद्वितीयाध्यायतृतीयपादे तदभिध्यानादित्यादिसूत्रम्। तदर्थस्तु वियदादिभूतानि स्वयमेव स्वविकारान् सृजन्ति। भूतानामपि क्वचिच्चेतनत्वश्रवणात् इति प्राप्ते; न, स्वयमेव परमेश्वरः तेन तेनात्मना अवतिष्ठमानोऽभिध्यायन् तं तं विकारं सृजति।

नैष दोषः । ईक्षितृकारणपरिणामत्वात्तेजःप्रभृतीनां सत इवेक्षितुर्नियतक्रमविशिष्टकार्योत्पादकत्वात् तेजःप्रभृतीक्षत इवेक्षत इत्युच्यते भूतम् ।

ननु सतोऽप्युपचरितमेवेक्षितृत्वम् । न । सदीक्षणस्य केवलशब्दगम्यत्वान्न शक्यमुपचरितं कल्पयितुम् । तेजःप्रभृतीनां त्वनुमीयते मुख्येक्षणाभाव इति युक्तमुपचरितं कल्पयितुम् । ननु सतोऽपि मृद्वत्कारणत्वादचेतनत्वं शक्यमनुमातुम् । अतः प्रधानस्यैवाचेतनस्य सतश्चेतनार्थत्वान्नियतकालक्रमविशिष्टकार्योत्पादकत्वाच्चेक्षतेवेक्षतेति शक्यमनुमातुमुपचरितमेवेक्षणम् । दृष्टश्च लोकेऽचेतने चेतनवदुपचारः । यथा कूलं पिपतिषतीति तद्वत्सतोऽपि स्यात् । न । तत्सत्यं स आत्मेति तस्मिन्नात्मोपदेशात् । आत्मोपदेशोऽप्युपचरित इति चेद्यथा ममाऽऽत्मा भद्रसेन

### नरेन्द्रपुरीयं टिप्पणम्

नन्वित्यादिना । उपचारप्राये पाठात् सतोऽपीक्षणं गौणमिति साङ्ख्यशङ्कामुद्भाव्य निराचष्टे—ननु सतोऽपीत्यादिना । अनात्मदर्शनात् सांख्येनापि मोक्षानङ्गीकरणात् सत्साक्षात्कारवतस्तु मोक्षश्रवणात् सच्छब्दवाच्यं प्रधानं न भवतीत्युक्तम् । तत्र मोक्षोपदेशोऽप्युपचरित इति शङ्कते—सोऽपीति । प्रधानाद्विविक्तपुरुषदर्शनवतो मोक्षो भवतीति

### आनन्दगिरिटीका

हिंसाप्रतिषेधवदनुग्रहविधानवच्च तेजःप्रभृतिषु तदभावात्तेष्वीक्षणकार्यदृष्टिवदेतेषु तद्दृष्ट्यभावाच्च नैतेष्वीक्षणं प्रामाणिकं तथा च प्रकृतं प्रमत्तगीतमित्यर्थः । तेषां गौणमीक्षितृत्वमुपेत्य परिहरति—नैष दोष इति ।

सतोऽपि गौणमीक्षणमुपचारप्राये पाठादिति शङ्कते—नन्विति । सन्निधेः शब्दस्य बलीयस्त्वमुपेत्य परिहरति—न सदीक्षणस्येति । तुल्यं तेजःप्रभृतिष्वपि शब्दगम्यत्वमीक्षणस्येति चेन्नेत्याह—तेजःप्रभृतीनां त्विति । विमतमीक्षितृ न भवत्यचेतनत्वात्कुम्भवदित्यनुमानात्तेजोमुखे जगतीक्षणासम्भवात्तत्र श्रुतं तदौपचारिकमुचितमित्यर्थः । सांख्योऽनुमानावष्टम्भेन शङ्कते—नन्विति । अचेतनस्य कथमीक्षणमित्याशङ्क्याऽऽह—अत इति । अनुमातुं कल्पयितुमिति यावत् । कथमचेतने चेतनवदुपचारस्तत्राऽऽह—दृष्टश्चेति । आत्मशब्दावष्टम्भेन परिहरति—नेत्यादिना । आत्मोप-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

करणन्यायादिति शङ्कितुर्हृदयम् । यथाश्रुतमादाय परिहरति सिद्धान्ती—नैष इति । कारणगतमीक्षणं कार्ये उपचर्यते कार्यकारणयोरभेदादित्याह—ईक्षित्रिति । मुख्येक्षितृगतगुणयोगाद्वा सिंहादिशब्दवद्गौणत्वमित्याह—सत इवेति । अभूतमिति । तेज आदिषु अभूतं अविद्यमानं ईक्षणं कल्पयितुं आरोपयितुं ईक्षितृ इवेक्षितृ इत्युच्यते इत्यन्वयः । तदारोपस्य च प्रयोजनं नियतक्रमविशिष्टकार्योत्पादकत्वज्ञानमिति भावः । भूतमिति वा च्छेदः । भूतं भूतान्तरं अबादिकं कल्पयितुं उत्पादयितुमित्यर्थः ।

इदानीं साङ्ख्यस्याशयं प्रकटयति—ननु सतोऽपीति । तेज आदीनां ग्रासाद्यभावेन अचेतनत्वनिश्चयात् तत्रेक्षणं गौणमिति युक्तम् । सतस्तु प्रमाणान्तरेणाचेतनत्वानिश्चयात् बाधकाभावेन मुख्यमेव ग्राह्यमीक्षणमित्याह—न सदीक्षणस्येति । सत् अचेतनं उपादानकारणत्वात् मृद्वदिति अचेतनत्वनिश्चयात् सदीक्षणमपि गौणमित्याशङ्कते—ननु सतोऽपि इति । सतोऽचेतनत्वे किं तदित्याशङ्क्य प्रधानमेव तदित्याह साङ्ख्यः--अत इति । प्रधानपक्षे ईक्षणं न सम्भवतीत्याशङ्क्य तस्यापि चेतनार्थत्वेन चेतनत्वारोपात् पूर्वोक्तगुणयोगाद्वा तेज आदीनामिवौपचारिकं तदित्याह—चेतनार्थत्वादिति । अचेतने चेतनधर्मोपचारस्य लोके दृष्टत्वादपि स एव युक्त इत्याह—दृष्टश्चेति । तद्वत्सतोऽपीति अचेतनत्वेऽपीति शेषः । स आत्मेति । प्रकृतं सत् ईक्षतेत्यत्र तच्छब्देन परामृश्य तस्मिन् आत्मशब्दप्रयोगात् अचेतनत्वे सतः श्वेतकेतोश्चेतनस्य आत्मत्वेनोपदेशायोगात् नाचेतनं प्रधानं सच्छब्दवाच्यमित्याह—न तत्सत्यमिति । इदमुपलक्षणम् । "अनेन जीवेनात्मनाऽनुप्रविश्य", "ऐतदात्म्यमिदं सर्वं" इत्ययमपि आत्मोपदेशो द्रष्टव्यः । सर्वोऽप्ययमात्मोपदेश उपचरित एव । न चोपचरितेनात्मशब्देन मुख्यं चेतनत्वं सिद्ध्येदिति शङ्कते—सोऽपीति । शङ्कामेव विवृणोति—यथेति । भद्रसेनो नाम कश्चिद्राजामात्यः तस्मिन् स्वात्मभिन्ने राजा आत्मत्वमुपचरतीत्यर्थः । 'आत्मा तत्त्वमसि' इति श्वेतकेतोः सदात्मत्वमुपदिश्य तस्य सदात्मनिष्ठस्य 'तावदेव चिरं' इति मोक्षोपदेशात् मोक्षस्य च सम्यग्ज्ञानसाध्यत्वात् सदात्मत्वं नोप-

इति आत्मनः सर्वार्थकारिण्यनात्मन्यात्मोपचारस्तद्वत्। न। सदस्मीति सत्सत्याभिसंधस्य "तस्य तावदेव चिरमि"ति मोक्षोपदेशात्।

सोऽप्युपचार इति चेत्। प्रधानात्माभिसन्धस्य मोक्षसामीप्यं वर्तत इति मोक्षोपदेशोऽप्युपचरित एव। यथा लोके ग्रामं गन्तुं प्रस्थितः प्राप्तवानहं ग्राममिति ब्रूयात् त्वरापेक्षया तद्वत्। न। येन विज्ञातेनाविज्ञातं विज्ञातं भवतीत्युपक्रमात्। सत्येकस्मिन्विज्ञाते सर्वं विज्ञातं भवति तदनन्यत्वात्सर्वस्याद्वितीयवचनाच्च। न चान्यद्विज्ञातव्यमवशिष्टं श्रावितं श्रुत्याऽनुमेयं वा लिङ्गतोऽस्ति येन मोक्षोपदेश उपचरितः स्यात्। सर्वस्य च प्रपाठकार्थस्योप-

### नरेन्द्रपुरीयं टिप्पणम्

प्रधानदर्शनान्मोक्ष उपचर्यते इत्यर्थः। प्रधानस्य भोग्यमात्रकारणत्वात्तद्विज्ञाने सर्वविज्ञानानुपपत्तेरिह चैकविज्ञानेन सर्वविज्ञानप्रक्रमात् सर्वस्यात्मभूतं ब्रह्मैव सद्वस्तु ग्राह्यं तद्विज्ञानाच्च मोक्षस्तदा गौणो भवेद्यद्यन्यज्ज्ञानादन्यो[ज्ञेयो]-मुख्यः स्यान्न चास्ति ततो न गौण इत्याह—न येनेति। ईक्षणशब्दः आत्मशब्दो मोक्षोपदेश एकविज्ञानेन सर्वविज्ञानोपदेशश्च गौण इति च कल्पयतः सांख्यस्य श्रुतिप्रामाण्यत्याग एव लघीयानित्याह—सर्वस्य चेति ॥ २-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां पञ्चाध्यायस्य द्वितीयः खण्डः

### आनन्दगिरिटीका

देशोऽपि प्रधाने गौणो भविष्यतीति शङ्कते—आत्मोपदेशोऽपीति। तामेव शङ्कां दृष्टान्तद्वारा विवृणोति—यथेति। इदं परिहरन्नस्मिन्नात्मोपदेशो गौणो न भवति तन्निष्ठस्य मोक्षोपदेशादित्युत्तरमाह—नेत्यादिना।

मोक्षोपदेशोऽप्युपचरितो भविष्यतीति शङ्कते—सोऽपीति। शङ्कामेव विवृणोति—प्रधानात्मेति। एकविज्ञानेन सर्वविज्ञानोपदेशमाश्रित्य परिहरति—न येनेति। उक्तमेव विवृणोति—सत्येकस्मिन्निति। सतोऽन्यस्य ज्ञातव्यस्याप्रामाणिकत्वाच्च सतो ज्ञाने सर्वज्ञानोपदेशो युक्तिमानित्याह—न चेति। सम्प्रति[साङ्ख्यै.] हि प्रधानज्ञाने तद्विकारस्य तदभिन्नस्य ज्ञानं तस्य च पुरुषार्थत्वात्तज्ज्ञाने पुरुषाणामपि ज्ञानमुपचर्यते। तस्मादेकविज्ञानेन सर्वविज्ञानोपदेशान्न मोक्षोपदेशमुख्यत्वसिद्धिरित्याशङ्कयाऽऽह—सर्वस्य चेति। कथमुपनिषदारम्भो वृथेत्युच्यते पुमर्थसाधनज्ञानार्थत्वा-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

चरितमित्याह—न सदस्मीति। तस्य सदात्मत्वज्ञानिनः यावद्देहपातो न भवति तावदेव चिरं विलम्बः तदनन्तरं सता सम्पद्यत इति श्रुतेरर्थः। तदा परशुदृष्टान्तेन सत्याभिसन्धस्य मोक्षोपदेशादपि सदात्मत्वं नोपचरितमिति दर्शयितुं सत्सत्याभिसन्धस्येति विशेषणम्। मुख्ये मोक्षे सम्यग्ज्ञानं हेतुरिति तप्तपरशुग्रहदृष्टान्तेन उच्यते। सत्सम्पत्तिरूपमोक्षस्तु प्रधानसम्पत्तिरूपत्वादुपचरितः। तत्र उपचरितज्ञानमेव हेतुरिति चोदयति—सोऽपीति। तदेव विवृणोति—प्रधानेति। प्रधानपरिणामस्य बुद्धिसत्त्वस्यात्मोपाधित्वेन आत्मसामीप्यात् तत्सम्पन्नः अनन्तरमेव आत्मानं सम्पद्यत इति मोक्षसामीप्यं तत्सम्पत्तेरित्यर्थः। प्रधानस्य सच्छब्दार्थत्वे प्रधानज्ञानेन सर्वविज्ञानं वक्तव्यम् सद्विज्ञानेन सर्वविज्ञानोपक्रमात्। न च तथा सम्भवति प्रधानज्ञानेन तत्कार्यज्ञानेपि ततोऽत्यन्तविलक्षणपुरुषज्ञानासिद्धेः। अतः न प्रधानं सच्छब्दार्थ इत्याह—न, येनेति। ब्रह्मणः सच्छब्दार्थत्वे तु तस्य जगदुपादानत्वात् प्रत्यगात्माभिन्नत्वाच्च सद्विज्ञानेन सर्वविज्ञानं सिद्ध्यतीत्याह—सत्येवैकस्मिन्निति। सतीति ब्रह्मणीत्यर्थः। एवकारः प्रधानपक्षव्यावृत्त्यर्थः। किञ्च एकमेवाद्वितीयमिति सतः अद्वितीयत्वमुक्तम्। तदपि प्रधानपक्षे न सम्भवति तस्य पुरुषैः सद्वितीयत्वादित्याह—अद्वितीयवचनाच्चेति। यच्च सत्सम्पत्तेः मोक्षत्वमुपचरितमिति। तदप्ययुक्तम्। तथा सति ततोऽतिरिक्तं सम्पत्तव्यं ज्ञेयत्वेनोपदिश्येत न चोपदिश्यते। अतः सत्सम्पत्तिरेव मुख्यो मोक्ष इत्याह—न चान्यदिति। ननु श्रुत्याऽनुपदिष्टमपि मोक्षसाधनत्वेन विज्ञेयं पुरुषस्वरूपमनुमीयते। अत एवाहुः "सङ्घातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्च॥ इतीत्याशङ्क्याह—अनुमेयं वेति। वेदैकसमधिगम्ये पुरुषतत्त्वे अनुमानाप्रवृत्तेरित्यर्थः। मोक्षसाधनपुरुषज्ञानस्य अनुमानजन्यत्वे वेदजन्यस्य सदात्मविज्ञानस्य असत्कार्यसत्सम्पत्तेश्चौपचारिकत्वे वेदस्य मुख्यप्रयोजनपर्यवसानाभावादप्रामाण्यं प्रसज्येतेत्याह—सर्वस्य चेति। श्रमः परिकल्पितः स्यादिति। षष्ठप्रपाठात्मकस्य वेदस्येति शेषः। कल्पयितुरिति पाठे कल्पयितुस्सकाशाद्वेदस्य वृथाश्रमः स्यादिति योज्यम्।

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्याण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

**चरितत्वपरिकल्पनायां वृथा श्रमः परिकल्पयितुः स्यात्पुरुषार्थसाधनविज्ञानस्य तर्केणैवाधिगतत्वात्तस्य। तस्माद्वेदप्रामाण्यान्न श्रुतार्थपरित्यागः। अतश्चेतनावत्कारणं जगत इति सिद्धम् ॥ ४ ॥**

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य द्वितीयः खण्डः

**तेषां जीवाविष्टानां खल्वेषां पक्ष्यादीनां भूतानामेषामिति प्रत्यक्षनिर्देशान्न तु तेजःप्रभृतीनां तेषां**

नरेन्द्रपुरीयं टीप्पणम्

महाभूतानामचेतनानां ब्रह्मकार्यत्वमुक्त्वा जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्यत्वमेवेति दर्शयितुं तान्यनुवदति—तेषां जीवाविष्टानामित्यादिना। पूर्वाध्याये येषां गत्यागती दर्शिते तृतीयं च स्थानं

आनन्दगिरिटीका

दित्याशङ्क्याऽऽह—पुरुषार्थेति। तस्यानुमानवादिनः सांख्यस्य मते मुक्तिहेतोर्ज्ञानस्य जडाजडयोरैक्यानुपपत्तिरित्यादिना तर्केणैव सिद्धत्वादुपरिषदारम्भो वृथैवेत्यर्थः। श्रुतेर्मुख्यार्थत्वे बाधकाभावात्तत्परित्यागायोगादीक्षत्यधिकरणन्यायेन प्रधानवादासिद्धिरिति परमतनिरसनमुपसंहरति—तस्मादिति। प्रधानवादासम्भवे परिशेषायातं स्वमतं निगमयति—अत इति ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य द्वितीयः खण्डः

महाभूतानामचेतनानां ब्रह्मकार्यतोक्ता सम्प्रति जीवाविष्टानां भौतिकानामपि परम्परया ब्रह्मकार्यतैवेति वक्तुं तान्यनुवदति—तेषामिति। पूर्वाध्याये येषां गत्यागती दर्शिते तृतीयं च स्थानमुक्तं तानि तच्छब्देन परामृश्यन्ते। तेषां प्रसिद्धत्वद्योतनार्थं खल्वित्युक्तम्। भूतानां त्रीण्येव बीजानि भवन्तीत्युत्तरत्र सम्बन्धः। भूतशब्दस्य तेजःप्रभृतिषु रूढत्वात्तेषामिह ग्रहणं किं न स्यादित्याशङ्क्याऽऽह—एषामितीति। भूतानां प्रत्यक्षत्वमेषामिति निर्दिश्यते। सम्भवति च पक्ष्यादीनां प्रत्यक्षतेति तान्येवात्र भूतानि विवक्षितानि न तु तेजःप्रभृतीनि तेषां प्रत्यक्षत्वायोगादित्यर्थः। तेजःप्रभृतीनां प्रत्यक्षत्वायोगादेषामिति निर्देशानुपपत्तिं समर्थयते—तेषामिति। तेषां प्रत्यक्षतया निर्देशासम्भवे हेत्वन्तर-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यद्वा वेदप्रामाण्यालाभात् वृथाश्रमः तस्य स्यादिति वा कथञ्चिद्योज्यम्। 'ननु भेदानां परिणामात्' इत्यादिना साङ्ख्योक्तैः परिमितत्वादिभिर्हेतुभिः प्रधानस्य जगदुपादानत्वे सिद्धे तद्विरुद्धस्य पूर्वोक्तस्य एकविज्ञानादेरौपचारिकत्वं युक्तमित्याशङ्क्य नित्यनिर्दोषत्वेन वेदस्य प्रामाण्यात् तद्विरुद्धानां साङ्ख्योक्तानुमानानामेव पुरुषबुद्धिजन्यत्वेनाप्रामाण्यात् यथाश्रुत एवार्थो ग्राह्य इत्याह—तस्मादिति। परमप्रकृतमुपसंहरति—अत इति ॥ ४ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य द्वितीयः खण्डः

नन्वेवमपि एकविज्ञानेन सर्वविज्ञानं न सिद्धयति सत्कार्याणां तेजोऽबन्नानां सज्ज्ञानेन ज्ञानेपि मृत्पाषाणदीनां शरीराणां च परिदृश्यमानकारणान्तरजन्यानां सद्ज्ञानेन ज्ञानासम्भवात् तेषां तदकार्यत्वात्। न च तेषां सज्जन्यभूतत्रयजन्यत्वेन परम्परया सज्जन्यत्वमस्तीति वाच्यम्, अचेतनानां पाषाणादीनां अचेतनभूतत्रयजन्यत्वेपि चेतनानां पश्वादिशरीराणां तज्जन्यत्वानुपपत्तेः पूर्वपूर्वसजातीयशरीरजन्यत्वदर्शनाच्चेत्याशङ्क्य तेषामपि त्रिवृत्कृतभूतत्रयजन्यत्वमेव। चेतनत्व तु तेषां सतो जीवरूपेण प्रवेशात्। अतस्सर्वं सत्कार्यमिति सर्वविज्ञानं सम्भवतीति वक्तुं तेषामित्यादि खण्डान्तरम्। तद्व्याचष्टे—तेषामित्यादिना। यद्यपीदं त्रिवृत्करणोक्त्यनन्तरं शरीरसृष्टिमुक्त्वा वक्तुमुचितं तथापि जीवरूपेण प्रवेशस्य शरीरविषयत्वादनागतावेक्षणन्यायेन भूतेभ्यः शरीरसृष्टेरपि सिद्धवत्कृत्य इहेदानीन्तनशरीरस्य सृष्टिरुक्तेति द्रष्टव्यम्। तेषामिति तच्छब्देन मृत्पाषाणादीनामपि ग्रहणे त्रीण्येवेति विशेषणानुपपत्तिः तेषामण्डजाद्यजन्यत्वादित्याशङ्क्याह—जीवाविष्टानामिति। ननु तच्छब्दस्य प्रकृतभूतत्रयपरामर्शित्वं युक्तमित्याशङ्क्य तेषां त्रिवृत्करणात्पूर्वं अप्रत्यक्षत्वात् देवताशब्दनिर्देशेन अतीन्द्रियत्वावगमाच्च एषामिति प्रत्यक्षनिर्देशानुपपत्तेः नैवमित्याह—एषामिति। इदमुपलक्षणम्—तेषामण्डादिकारणत्वेन अण्डजादिजन्यत्वानुपपत्तेश्चेत्यपि

त्रिवृत्करणस्य वक्ष्यमाणत्वादसति त्रिवृत्करणे प्रत्यक्षनिर्देशानुपपत्तिः। देवताशब्दप्रयोगाच्च तेजःप्रभृतिष्विमास्तिस्रो देवता इति। तस्मात्तेषां भूतानां पक्षिपशुस्थावरादीनां त्रीण्येव नातिरिक्तानि बीजानि कारणानि भवन्ति। कानि तानीत्युच्यन्ते। आण्डजमण्डाज्जातमण्डजमण्डजमेवाऽऽण्डजं पक्ष्यादि। पक्षिसर्पादिभ्यो हि पक्षिसर्पादयो जायमाना दृश्यन्ते। तेन पक्षी पक्षिणां बीजं सर्पः सर्पाणां तथाऽन्यदप्यण्डाज्जातं तज्जातीयानां बीजमित्यर्थः।

नन्वण्डाज्जातमण्डजमुच्यतेऽतोऽण्डमेव बीजमिति युक्तं कथमण्डजं बीजमुच्यते। सत्यमेवं स्याद्यदि त्वदिच्छातन्त्रा श्रुतिः स्यात्स्वतन्त्रा तु श्रुतिर्यत आहाऽऽण्डजाद्येव बीजं नाण्डादीति। दृश्यते चाण्डजाद्यभावे तज्जातीयसन्तत्यभावो नाण्डाद्यभावे। अतोऽण्डजादीन्येव बीजान्यण्डजादीनाम्। तथा जीवाज्जातं जीवजं जरायुजमित्येतत्पुरुषपश्वादि। उद्भिज्जमुद्भिनत्तीत्युद्भित्स्थावरं ततो जातमुद्भिज्जं धाना वोद्भित्ततो जायत

### नरेन्द्रपुरीयं टिप्पणम्

तानि तच्छब्देन परामृश्यन्ते। देवतायाः परोक्षत्वप्रसिद्धेस्तेजः प्रभृतिषु च देवताशब्दप्रयोगात् प्रत्यक्षत्वं न सम्भवीत्यर्थः। बीजानि धानाः स्वेदमुद्भिद्य जननात् स्वेदजस्य मशकादेरुद्भिज्जेऽन्तर्भावः। सत्प्रकरणाज्जीवाविष्टानां सत्कार्यत्वमुक्तम्। तत्र जीवानां विशिष्टरूपेण ब्रह्मकार्यत्वेऽपि न स्वरूपेण कार्यत्वं, किन्तु ब्रह्मैवोपाधिप्रविष्टजीवव्यवहारास्पदं ततो ब्रह्मणि विज्ञाते जीवविज्ञानं सेत्स्यति ॥ १ ॥

### आनन्दगिरिटीका

माह—देवताशब्देति। देवतानां परोक्षत्वप्रसिद्धेरेतेषु च देवतापदप्रयोगान्नैतेषां प्रत्यक्षत्वोपपत्तिरित्यर्थः। तस्मान्महाभूतानामत्र भूतशब्देनोपादानायोगादित्यर्थः। आण्डजं पक्ष्यादीत्येतत्प्रत्यक्षेणोपपादयति—पक्षिसर्पादिभ्यो हीति। अन्यदपीति गोधाद्युच्यते।

अण्डाज्जातमितिव्युत्पत्त्यनुसारेणाण्डमेव बीजं न त्वण्डजमिति शङ्कते—नन्विति। पौरुषेयी व्युत्पत्तिः श्रुत्या बाध्येति परिहरति—सत्यमित्यादिना। न केवलं श्रुतेरेषा व्यवस्था किन्तूपपत्तेश्चेत्याह—दृश्यते चेति। सत्येवाण्डजादौ तज्जातीयमण्डजादि सन्तत्या जायते तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यामण्डजाद्येवाण्डजजातिकारणम्। यद्यप्यण्डाद्यभावे नाण्डजादि जायते तथाऽप्यण्डादिभावेऽण्डजाद्यभावेऽपि तद्भवतीति नान्वयः। तस्मादण्डजादीनामण्डजान्येव बीजानि नाण्डादीनीत्यर्थः। धानाशब्दो बीजविषयः। ननु स्वेदजं संशोकजमिति बीजद्वयमवशिष्यते तत्किमिति न व्युत्पाद्यते तत्राऽऽह—स्वेदजेति। स्वेदमुद्भिद्य जायमानं दंशमशकादि तदुद्भिज्जेऽन्तर्भवति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

द्रष्टव्यम्। एतेष्वपि यस्य कस्यचित् भूतत्रयाजन्यबीजजन्यत्वशङ्कायां सर्वविज्ञानं न सिद्ध्येदित्याशङ्क्य भूतत्रयजन्याण्डादिजन्यत्वमेव सर्वस्येत्यवधारयितुमेवकार इति व्याचष्टे—नातिरिक्तानीति। ननु तेजोबन्नलक्षणभूतत्रयस्यैव इदानीन्तनपक्ष्यादिबीजत्वे सम्भवति न तज्जन्याण्डजादेः बीजत्वमित्याशङ्क्य जायमानस्य पक्ष्याद्याकारदर्शनात् पक्ष्यादेरेव अण्डजादिशब्दितस्य बीजत्वं न साक्षाद्भूतत्रयस्येत्याह—पक्षिसर्पादिभ्यो हीति। अन्यथा पक्ष्याद्याकारस्य आकस्मिकत्वं स्यादिति भावः। अण्डजस्य पक्ष्यादेरण्डाद्येव बीजमिति युक्तं नाण्डजमिति शङ्कते—नन्विति। अण्डादेरपि बीजत्वसम्भवेऽपि श्रुतिप्रामाण्यादेव अण्डजाद्येव बीजमित्याह—सत्यमेवमिति। युक्तिरप्यस्तीत्याह—दृश्यते चेति नाण्डाद्यभावे इति। यद्यपि अण्डाभावे पक्ष्याद्यभावो दृश्यते तेन विना तदुत्पत्त्यदर्शनात्, तथापि अण्डसंस्थानस्य भेदनेन नाशानन्तरं पक्ष्याद्युत्पत्तिदर्शनात् नाण्डसंस्थानस्य तद्धेतुत्वमिति भावः। अन्यथा अन्वयव्यतिरेकाभ्यां कारणत्वं ग्राह्यम्। तत्राण्डजपक्ष्यादौ सर्पादिविलक्षणाकृतेर्दर्शनात् तथाकृत्यवच्छेदेन तौ सुग्रहौ। पक्ष्याद्यण्डे तु सर्पाद्यण्डविलक्षणाकृतेः स्फुटमदर्शनात् न तौ सुग्रहाविति नाण्डत्वाकारेण कारणत्वमिति भावः।

वस्तुतस्तु अण्डजपक्ष्याद्याकृतेः कार्येऽनुस्यूतत्वेन तस्यैव कारणत्वं युक्तम् नाण्डादेः, तथाकृतेः कार्येऽनुस्यूत्यभावादित्यत्र तात्पर्यं बोध्यम्। जीवाज्जातमिति। जीवन्त्यामेव मातरि जायते जरायुजस्, अण्डजादि तु मातरि नष्टायामपि अण्डादिसत्तामात्रेण इति वैलक्षण्याज्जीवजमुक्तमित्यर्थः। उद्भिनत्तीति। भूमिमिति शेषः। धाना वेति।

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन[1] जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥२॥**

इत्युद्भिज्जं स्थावरबीजं स्थावराणां बीजमित्यर्थः। स्वेदजसंशोकजयोरण्डजोद्भिज्जयोरेव यथासम्भवमन्तर्भावः। एवं ह्यवधारणं त्रीण्येव बीजानीत्युपपन्नं भवति ॥ १ ॥

सेयं प्रकृता सदाख्या तेजोवन्नयोनिर्देवतोक्तैक्षतेक्षितवती यथापूर्वं बहु स्यामिति। तदेव बहुभवनं प्रयोजनं

### नरेन्द्रपुरीयं टिप्पणम्

जीवानां भोगायतनानि च भौतिकानि तेषां नामरूपनिर्माणं वक्तव्यमित्येवमर्थं उत्तरो ग्रन्थः। सेयं प्रकृते-त्यादि। मायोपाधिकस्य ब्रह्मणः कारणत्वान्मायायाश्चानावरणशक्तिमत्वान्मायापरिणामस्य तद्बुद्धित्वात् संस्कार-

### आनन्दगिरिटीका

संशोकादौष्ण्याज्जायमानं यूकादि तदण्डजेऽन्तर्भवति। यद्वा स्वेदजं यूकादि तदण्डजेऽन्तर्भूतं संशोकादौष्ण्याद्भूमिमुद्भिद्य जातं मशकादि तस्योद्भिज्जेऽन्तर्भावः। तथा च न तयोरस्ति पृथग्व्युत्पादनापेक्षेत्यर्थः। स्वेदजादेरण्डजादावन्तर्भावस्य प्रापकमाह—**एवमिति** ॥ १ ॥

जीवाविष्टानां भूतानां सत्कार्यत्वं प्रकरणप्रामाण्यादुक्तमिदानीं जीवानां विशिष्टरूपेण ब्रह्मकार्यत्वेऽपि न स्वरूपेण तत्कार्यत्वं ब्रह्मैवोपाधिप्रविष्टं जीवव्यवहारास्पदमित्यङ्गीकारात्तथा च ब्रह्मणि विज्ञाते जीवविज्ञानं सेत्स्यति जीवानां च भोगायतनानि भौतिकानि कार्याणि तेषां नामरूपनिर्माणं वक्तव्यमित्यभिप्रेत्योत्तरग्रन्थमादाय व्याकरोति—**सेयमित्यादिना**। यथा बहु स्यामिति पूर्वमीक्षितवती तथा किमिति पुनरैक्षत प्रयोजनाभावादित्याशङ्क्याऽऽह—

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

धाना बीजं तदङ्कुरोत्पत्तिकाले स्वयमुद्भिद्यमानत्वात् उद्भिदित्यर्थः। पक्षद्वयेऽपि नार्थभेद इत्याह—**स्थावरमिति**। ननु यूकादयः स्वेदजा दृश्यन्ते। तथा मशकादयः भूम्यादेः संशोकेन सन्तापेन जायमाना दृश्यन्ते। तथा च त्रीण्येवेत्यवधारणानुपपत्तिरित्याशङ्क्याह—**स्वेदजेति**। तेषु ये अण्डप्रणाळ्या जायन्ते तेषामण्डजेऽन्तर्भावः। ये तु साक्षादेव जायन्ते तेषां स्वेदोद्भेदेन जननादुद्भिज्ज इति विवेकः। स्वेदजकोशजयोरिति क्वचित्पाठः। तत्र कोशजाः क्रिमिविशेषाः। एवं तावत् सज्जन्यत्वाद्भूतत्रयस्य तज्जन्यत्वादण्डजादेः तज्जन्यत्वाच्चतुर्विधस्य भूतग्रामस्येति सर्वस्य साक्षात् परम्परया वा सत्कार्यत्वात् सति ज्ञाते सर्वं ज्ञातं भवतीति समाहितम् ॥ १ ॥

तत्रेदमाशङ्क्यते—एवमपि जीवस्य सदकार्यस्य नित्यस्य सद्व्यतिरेके सज्ज्ञानेन तज्ज्ञानाभावः अव्यतिरेके च व्यवहर्तुः संसारिणोऽभावात् नामरूपविपर्ययव्यवहारानापत्तिः। किञ्च अण्डजादेः सूक्ष्मभूतजन्यत्वे तज्जन्येन्द्रियादिवदप्रत्यक्षत्वं तद्वदेव इष्टकादिषु प्रतीघाताद्यनुपपत्तिश्चेत्याशङ्क्य सत एव नामरूपव्याकरणाय जीवरूपेण प्रवेशात् सर्वविज्ञानं व्यवहारश्चोपपद्यते। त्रिवृत्कृतभूतकार्यत्वाच्च अत्रिवृत्कृतभूतकार्येन्द्रियादिवैलक्षण्यात् प्रत्यक्षत्वं प्रतिघातश्चोपपद्यत इति वक्तुं सेयं देवतेत्यादिवाक्यम्। तद्व्याचष्टे—**सेयं प्रकृतेत्यादिना**। प्रकृतत्वमाह—**तेज इति**।

---

१. अनेन जीवेनात्मनेति—अत्र भाष्ये अनेन पूर्वसर्गानुभूतेन आत्मना चैतन्यस्वरूपतया स्वाभिन्नेन जीवेनानुप्रविश्येति व्याख्यातम्।

(१) रामानुजीयैः—जीवेन जीवशरीरकब्रह्मणा। आत्मना स्वरूपेणेत्यर्थः जीवशरीरकब्रह्मस्वरूपेणेत्यर्थः। कर्तुरभिहितत्वेऽपि आत्मनेति तृतीया कर्तुः सकाशाद्भेदकल्पनयेति।

(२) यद्वा जीवशब्दः जीवपर एव न तु जीवशरीरकपरः तथा च जीवेन; आत्मना शरीरेण। तथा च शरीरभूतेन जीवेनानुप्रविश्य व्याकरवाणीत्यर्थः।

(३) यद्वा जीवेनेत्यस्य यथाश्रुत एवार्थः। अनेनेत्यस्य मच्छरीरभूतेनेत्यर्थः। न च प्रविश्य व्याकरवाणीति समानकर्तृकत्वानुपपत्तिः विशिष्टक्रियाप्रयोजककर्त्रा परमात्मना व्याप्रियमाणस्य जीवात्मनः कारणतया तृतीयासम्भवात्।

नाद्यापि निर्वृत्तमित्यत ईक्षां पुनः कृतवती बहुभवनमेव प्रयोजनमुररीकृत्य । कथम् । हन्तेदानीमहमिमा यथोक्तास्तेज आद्यास्तिस्रो देवता, अनेन जीवेनेति, स्वबुद्धिस्थं पूर्वसृष्टचनुभूतप्राणधारणमात्मानमेव स्मरन्त्याहानेन जीवेनाऽऽत्मनेति । प्राणधारणकर्त्राऽऽत्मनेति वचनात्स्वात्मनोऽव्यतिरिक्तेन चैतन्यस्वरूपतयाऽविशिष्टेनेत्येतद्दर्शयति । अनुप्रविश्य, तेजोबन्नभूतमात्रासंसर्गेण लब्धविशेषविज्ञाना सती, नाम च रूपं च नामरूपे व्याकरवाणि विस्पष्टमाकरवा"ण्यसौ नामाऽयमिदंरूप" इति व्याकुर्यामित्यर्थः ।

ननु न युक्तमिदमसंसारिण्याः सर्वज्ञाया देवताया बुद्धिपूर्वकमनेकशतसहस्रानर्थाश्रयं देहमनुप्रविश्य दुःख-

### नरेन्द्रपुरीयं टिप्पणम्

जस्मृतिसम्भवात् स्मरतीति न विरुध्यते । सिसृक्षितेऽप्येक्षणं सृज्यमानस्य प्रत्यक्षता सृष्टस्यानुस्मरणमिति ब्रह्मणि व्यवहारशास्त्रप्रामाण्यादौपाधिक इष्यत एव । अतो न स्वाभाविकनिर्विकारताकोपः जीवेनेत्यस्य प्रविश्येत्यनेन

### आनन्दगिरिटीका

तदेवेति । इदानीं महाभूतसृष्टेरनन्तरमिति यावत् । ब्रह्मणो मायोपाधिकस्य कारणत्वान्मायोपाधिवशात्पूर्वसृष्टावनुभूतत्वं तत्संस्कारस्य बुद्धिस्थत्वं स्मरणं चेत्यादि न विरुद्धमिति द्रष्टव्यम् । आत्मनेतिविशेषणस्य तात्पर्यमाह—प्राणेति । निर्विकल्पकचिन्मात्ररूपा देवता मायावशान्महाभूतानि सृष्ट्वा तेषु यदा प्रविष्टा तदा तदारब्धेषु सूत्रविराट्प्रभृतिषु समष्टिव्यष्ट्यात्मसु देहेषु प्रविश्य तत्तद्देहाभिमानवतो देवदत्तादिनाम्ना रूपेण च शौक्ल्यादिना संयोज्य पिण्डं व्याकरोतीत्याह—अनुप्रविश्येति ।

देवतायाः सर्वज्ञत्वादसंसारित्वात्स्वातन्त्र्याच्च सङ्कल्पप्रवेशावयुक्ताविति शङ्कते—नन्विति । किं साक्षादनु-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यथा बहु स्यामिति पूर्वमीक्षितवती तथा वक्ष्यमाणप्रकारेणैक्षतेति पूर्वेणान्वयः । पुनरीक्षणे तात्पर्यमाह—तदेवेति । सूक्ष्मेभ्यः तेजोबन्नेभ्यः स्थूलकार्योत्पत्त्यसम्भवात् बहुभवनासिद्धिरित्यर्थः । ईक्षणं च मायावृत्त्यवच्छिन्नं चैतन्यमिति भावः । प्रवेशात्पूर्वं जीवरूपाभावेन अनेनेति बुद्धिस्थवाचीदंशब्दायोगमाशङ्क्याह—स्वेति । बुद्धिस्थतामाह—पूर्वेति । जीवशब्दार्थमाह—प्राणेति । जीव प्राणधारणे इत्यभियुक्तोक्तेरित्यर्थः । अनेन जीवयतीति व्युत्पत्त्या अन्तर्याम्यभिधीयत इति निरस्तम्, रूढेर्योगापहारित्वादिति । तस्मिन्नात्मशब्दप्रयोगस्य तात्पर्यमाह—अनेनेत्यादिना । गृहीतपदद्वयार्थमनुवदति—प्राणेति । अव्यतिरिक्तेनेत्येतद्दर्शयतीत्यन्वयः । अव्यतिरिक्तत्वे हेतुमाह—चैतन्येति । अविशिष्टेन अविलक्षणेन । सर्वगतस्यात्मनः सर्पादीनां बिलादिष्विव मुख्यः प्रवेशो न सम्भवतीत्याशङ्क्याह—तेज इति । भूतत्रयकार्ये विशेषविज्ञानलाभः प्रवेश इति भावः । व्याकरणप्रकारप्रतिपादिकां काण्वश्रुतिं पठति—असौ नामायं इदंरूप इति पाठः साधुः श्रुतौ तथापाठदर्शनादिति । जीवपदेन निरस्याशङ्कामाह—नन्विति । भ्रान्त्या

---

एतत्सर्वं शब्दार्थस्य यथाश्रुतस्य स्वमताननुसारित्वात् कथञ्चिद्योजनपाटवप्रदर्शनमेव लोकव्युत्पत्तिविरुद्धं द्वितीयपक्षे स्वाभ्युपगतव्युत्पत्तिविरुद्धं, तृतीयपक्षे यथाश्रुतस्याद्वैतपक्षे उपपादनसम्भवात् क्लिष्टकल्पनमित्यादिबह्वसमञ्जसम् ।

यत्तु—अनुप्रविश्य व्याकरवाणीत्ययुक्तं तत्सृष्ट्वा तदेवानुप्राविशत् इति सृष्ट्यनन्तरं प्रवेशश्रुतेः । अतः समकालिकत्वमेवाभिप्रेतमिति । तन्न । सृष्टवस्त्वभावे कुत्र प्रविष्ट इति प्रश्नसमाधानाभावात् । अतोऽत्रापि पूर्वं सूक्ष्मलिङ्गशरीरं सृष्ट्वा तदनुप्रविश्य पश्चाल्लोकान् स्रक्ष्यामीत्यर्थं उचितः । त्रिवृत्करणं तु उपनिषदि पश्चाच्छ्रूयमाणमपि अर्थक्रियानुसारात् पूर्वमेवेति ध्येयम् । अनेन जीवेनानुप्रविश्य नामरूपे व्याकरवाणीति वाक्ये विचारः । इदं नामरूपव्याकरणं जीवकर्तृकं उत परमात्मकर्तृकमिति जीवकर्तृकमिति प्राप्तं—यथा चारेणाहं परसैन्यमनुप्रविश्य सङ्कलयानीति वाक्ये चारस्यैव परसैन्ये प्रवेशः सङ्कलनं च तद्वत् इति प्राप्ते सूत्रं संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् । त्रिवृत्करणं परमेश्वरस्येति स्थितं नामरूपव्याकरणमपि तस्यैव—व्याकरवाणीत्युत्तमपुरुषश्रुतेः जीवेनेत्येतत् प्रविश्येत्यनेन सम्बध्यते न तु व्याकरवाणीत्यनेन । तस्य तत्राशक्तेः । अत्र जीवेनात्मना इति सामानाधिकरण्यात् जीवेशयोरभेदः सूचितः । ( ब्र० सू० २-४-२० )

मनुभविष्यामीति सङ्कल्पनमनुप्रवेशश्च स्वातन्त्र्ये सति। सत्यमेवं न युक्तं स्याद्यदि स्वेनैवाविकृतेन रूपेणानुप्रविशेयं दुःखमनुभवेयमिति च सङ्कल्पितवती न त्वेवम्। कथं तर्हि। अनेन जीवेनाऽऽत्मनाऽनुप्रविश्येति वचनात्। जीवो हि नाम देवताया आभासमात्रम्। बुद्ध्यादिभूतमात्रासंसर्गजनित आदर्शे इव प्रविष्टः पुरुषप्रतिबिम्बो जलादिष्विव च सूर्यादीनाम्। अचिन्त्यानन्तशक्तिमत्या देवताया बुद्ध्यादिसम्बन्धश्चैतन्याभासो देवतास्वरूपविवेकाग्रहणनिमित्तः

### नरेन्द्रपुरीयं टिप्पणम्

सम्बन्धान्न साक्षाद्देवतायाः प्रवेशसंकल्पोऽस्तीत्युक्तम्। कस्तर्हि जीवो नामेत्यत आह—जीवो हि नामेति। आभासशब्दो न मिथ्यापर्यायः "तत्त्वमसी"त्युपदेशभङ्गप्रसङ्गात्; किन्त्वाभिमुख्येनाहमित्यापरोक्ष्येणाभासत इत्याभासः। स्वतोऽपरोक्षचित्प्रतिबिम्ब इत्यर्थः। बुद्ध्यादिभिर्भूतमात्राभिश्च संसर्ग आधाराधेयभावः शरीरे जीव इत्यनुभवमात्रसिद्धः, तेन जनितस्तत्तन्त्र इत्यर्थः। यावदेव हि बुद्ध्यादिसम्बन्धस्तावदेव जीवत्वं, बुद्ध्यादेश्च व्यक्तरूपेण कार्यत्वमव्यक्तरूपेणानाद्यनिर्वाच्योपादानाविद्यालक्षणेन त्वनादित्वमिति। तत्तन्त्रो जीवोऽप्यनादिः। व्यक्तरूपबुद्ध्याद्यपेक्षया सादित्वमिति द्रष्टव्यम्। परस्या देवतायाः प्रतिबिम्बश्चेज्जीवस्तर्हि जीवेनेत्येकवचननिर्देशादेको जीवस्ततो बद्धमुक्तादिव्यवस्था न स्यादित्याशङ्क्याह—अचिन्त्येति। भेदादिना अशक्यचिन्तनीया अनन्ता अविद्यारूपाश्शक्तयः य्स्या असौ अचिन्त्यानन्तशक्तिमती। तस्या बुद्ध्यादिसम्बन्धः। एतदुक्तं भवति। चित्तन्त्रास्वनन्तास्वविद्यासु प्रतिबिम्बिता सैव चिद्देवता पृथक् पृथगेव स्वाविद्याकार्यैः बुध्यादिभिस्सम्बन्धमनुभवति। ततो निरपेक्षोपाधिभेदाज्जीवभेदः एकवचनन्तु "ब्राह्मणो न हन्तव्य" इतिवत् भविष्यतीति। सम्बन्धाभ्युपगमात्तर्ह्यसङ्गत्वव्याघात इति न वाच्यं। चैतन्येनावभासोऽस्येति तथोक्तः प्रमाणसिद्धस्तात्विको भवति। किन्त्वनुभवमात्रसिद्धोऽध्यस्त

### आनन्दगिरिटीका

प्रवेशादि विरुध्यते किं वा जीवद्वाराऽपीति विकल्प्याऽऽद्यमङ्गीकरोति—सत्यमिति। साक्षादनुप्रवेशादि नास्ति चेत्तर्हि कथं तदित्याकाङ्क्षापूर्वकं द्वितीयं दूषयति—कथमिति। देवताया जीवद्वारेणानुप्रवेशाद्यविरुद्धमिति शेषः। अविरोधमेव साधयितुं जीवस्वरूपमाह—जीवो हीति। आभिमुख्येनाहमित्यापरोक्ष्येण भासत इत्याभासः स्वतोऽपरोक्षश्चित्प्रतिबिम्बस्तन्मात्रं जीवो नामेत्यर्थः। तस्य स्वरूपेणानादित्वेऽपि विशिष्टरूपेण सादित्वं दर्शयति—बुद्ध्यादीति। बुद्ध्यादिभिर्भूतमात्रादिभिश्च चिदात्मनः संसर्गस्तेन जनितस्तत्तन्त्र इति यावत्। ननु चिदात्मा कूटस्थोऽसङ्गोऽद्वितीयश्चेष्यते स कथं बुद्ध्यादिभिर्भूतमात्रादिभिश्च चिदात्मनः संसृज्यते तत्राऽऽह—अचिन्त्येति। सत्त्वादिप्रकारैरशक्यचिन्तनीयाऽनादिरनिर्वाच्या सम्यग्ज्ञानमन्तरेण नाशशून्या दण्डायमाना या मायाशक्तिस्तस्या विषयत्वेनाऽऽश्रयत्वेन च परा देवताऽवतिष्ठते। तस्याश्च स्वनिष्ठमायाशक्तिवशाद्बुद्ध्यादिभिरात्मनः सम्बन्धः सिध्यतीत्यर्थः। बुद्ध्यादिसम्बन्धफलमाह—चैतन्येति। तदाभासो जीवशब्दवाच्यः सिध्यतीति शेषः। बुद्ध्यादिभि-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सङ्कल्पप्रवेशौ घटेते इत्याशङ्क्याह—सर्वज्ञाया इति। स्वातन्त्र्ये सति सङ्कल्पनं अनुप्रवेशश्चायुक्तमिति पूर्वेणान्वयः। जीवरूपेण सङ्कल्पानुप्रवेशयोः वस्तुस्वरूपास्पर्शित्वान्न सर्वज्ञत्वादिविरोध इति श्रौतेन जीवपदेन परिहरति—सत्यमेवमिति। वचनादित्यनन्तरं जैवेन रूपेण सङ्कल्पितवतीति अध्याहृत्य वाक्यं पूरणीयम्। ननु जीवस्यापि सदभिन्नत्वे जैवमपि रूपं सद्वस्तुसंस्पर्शीति स दोषस्तदवस्थ इत्याशङ्क्य तस्य प्रतिबिम्बात्मकत्वात् प्रतिबिम्बगतस्य वक्रतादेः बिम्बस्वरूपसंस्पर्शित्वाभावान्न दोष इत्याह—जीवो हि नामेति। बुद्ध्यादिरूपं यत् भूतमात्राभूतकार्यं तत्संसर्गजनितमाभासमात्रं प्रतिबिम्ब इत्यर्थः। असम्बन्धिन्या देवतायाः कथं बुद्ध्यादिसंसर्ग इत्याशङ्क्य अतिव्यवहितानां असम्बन्धानां सूर्यादीनां जलादिसम्बन्धवत् प्रतिफलनहेतुभूतः कश्चन सम्बन्धोऽस्तीत्याह—जलादिष्विवेति। सूर्यादीनां रूपादिमत्त्वात् परिच्छिन्नत्वाच्च प्रतिबिम्बनं घटते न तु तद्विपरीताया देवताया, इत्याशङ्क्य मायाशक्तेरचिन्त्यत्वात् तद्वशादघटितमपि घटत इत्यभिप्रेत्य अचिन्त्यशक्तिमत्या इत्युक्तम्। सम्बन्धः घटत इत्यध्याहारः। नन्वेवमपि सच्चिदानन्दरूपाया देवतायाः आभासोऽपि तादृश इति तद्रूपेणैव प्रतीयेतेति न दुःख्यादिरूपेण प्रतीतिः स्यादित्याशङ्क्य देवतास्वरूपस्य विशेषेणाग्रहणात् सर्वमिदमुपपद्यत इत्याह—चैतन्याभास इति।

सुखी दुःखी मूढ इत्याद्यनेकविकल्पप्रत्ययहेतुः। छायामात्रेण जीवरूपेणानुप्रविष्टत्वाद्देवता न दैहिकैः स्वतः सुखदुःखादिभिः सम्बध्यते। यथा पुरुषादित्यादय आदर्शोदकादिषु च्छायामात्रेणानुप्रविष्टा आदर्शोदकादिदोषैर्न सम्बध्यन्ते तद्वद्देवताऽपि[1]। "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥ 'आकाशवत्सर्वगतश्च नित्यः' इति हि काठके। "ध्यायतीव लेलायतीव" इति च वाजसनेयके।

### नरेन्द्रपुरीयं टिप्पणम्

इत्यर्थः। नन्वध्यासो विशेषाग्रहनिबन्धनस्स्वप्रकाशत्वेन च विशेषत एव प्रकाशमाने कथं सम्बन्धाध्यासस्तत्राह—देवतेति। आवरणविक्षेपशक्तिसम्पन्ना ह्यविद्या ततोऽविद्यातन्त्रं देशकालाद्यनवच्छिन्नदेवतास्वरूपोऽहमिति विशेषाग्रहणमावरणं सम्बन्धाध्यासे निमित्तमित्यर्थः। नन्वविद्या स्वसम्बन्धिनं चित्प्रतिबिम्बमावृणोति। आवरणाधीनश्च संबन्धाध्यास इतीतरेतराश्रयम्। न, अविद्यासम्बन्धस्य तत्तन्त्रावरणस्य चानादित्वान्नेतरेतराश्रयः। तत्सिद्धत्वस्योपचारमात्रत्वात्। इतरेतराश्रयत्वं ह्यसिद्धौ पर्यवस्यत् दूषणं भवति। नेह तथा, अनिर्वाच्यानाद्यविद्यातन्त्रस्यावरणस्य स्वपरनिर्वाहकस्य बुद्ध्यादिसम्बन्धे निमित्तत्वसंभवात् कार्यदर्शनादपि बुध्यादिसम्बन्धोऽवश्याभ्युपगन्तव्यो न तत्र दोषदर्शनेऽभिनिवेष्टव्यमित्याह—सुखीति। ननु देवताप्रतिबिम्बस्य जीवस्य बुद्धिसुखाद्याश्रयत्वे देवताया एव संसारित्वप्रसङ्गस्तत्राह—च्छायामात्रेणेति। संसारिण्यैक्ये परमात्मा संसारी स्यादित्यतिप्रसङ्गः प्रशिथिलमूलः

### आनन्दगिरिटीका

रात्मनः सम्बन्धे मायाशक्तिरुपादानमित्युक्तं तत्रैव निमित्तकारणमाह—देवतेति। आवरणविक्षेपशक्तिसम्पन्ना हि मायाशक्तिस्ततोऽविद्योत्थदेशकालाद्यनवच्छिन्नदेवतास्वरूपोऽहमितिविशेषाग्रहणमावरणं निमित्तं कृत्वा बुद्ध्याद्यध्यासः सिध्यतीत्यर्थः। बुद्ध्याद्यध्यासस्य कार्यान्तरं दर्शयति—सुखीति। परैव तर्हि देवता संसारिणी स्यादिति चेत्सत्यमज्ञानद्वारा बुद्ध्यादिसम्बन्धमनुभूय जीवत्वं प्राप्य सैव संसरतीत्याह—छायामात्रेणेति। परस्या देवतायाः स्वतः संसाराभावं दृष्टान्तेन स्पष्टयति—यथेत्यादिना। तस्याः स्वतो दुःखाद्यसम्बन्धे श्रुतिं प्रमाणयति—सूर्य इति। उपाधिद्वारा तस्याः संसारित्वे च श्रुतिरस्तीत्याह—ध्यायतीति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नन्वाभासत्वे जीवस्य देवताया अभेदात् जीवसंसारस्य देवतायामपि प्रसङ्ग इत्याशङ्क्य उपाधिधर्माणां प्रतिबिम्बमात्रनिष्ठत्वात् न बिम्बरूपदेवतासंस्पर्श इति सदृष्टान्तमाह—छायामात्रेणेति। देवतापीत्यनन्तरं न सम्बध्यत इत्यनुषङ्गः। अत्र श्रुतिमाह—सूर्य इति। यथा सूर्यः चक्षुरधिष्ठातृत्वेन तत्र स्थितोऽपि चाक्षुषैः काणत्वादिभिः विषयप्रकाशं कुर्वन् विषयदोषैरशुद्ध्यादिभिः बाह्यैश्च न लिप्यते तथा सर्वभूतानामन्तरात्मापि सन् लोकशब्दितभूतधर्मैर्न लिप्यते। यतः तत्र विद्यमानोऽपि बाह्यः असङ्गीति श्रुत्यर्थः। आकाशवदिति। यथा आकाशः सर्वगतोऽपि न सर्वदोषैर्लिप्यते तथाऽयमात्मा सर्वगतोऽपि अलिप्त इत्यर्थः। बुद्धिधर्माणामात्मनि प्रतीतेः इवकारेण मिथ्यात्वोक्तेरपि तद्दोषासम्बन्ध इत्याह—ध्यायतीवेति। जीवस्य प्रतिबिम्बत्वे तस्य मृषात्वात् तदीयव्यवहारस्सर्वोऽपि मृषा स्यात्।

---

१. अत्र भाष्ये जीवः परमात्मनः प्रतिबिम्बः इति सिद्धान्तितम्।

प्रतिबिम्बवादे पूर्वपक्षः अम्बुवदग्रहणात्तु न तथात्वं ( ३-२-१९ ) प्रतिबिम्बदृष्टान्तोऽयुक्तः, सूर्यस्य विप्रकृष्टदेशस्थजलादेः प्रतिबिम्बयोग्यस्योपलम्भात् आत्मनः विप्रकृष्टवस्त्वभावात् तथाविधमूर्ताभावाच्चेति। तन्न। न सर्वांशे दृष्टान्तसाम्यं अपि तु विवक्षितांश एव। स च यथा जलसूर्यप्रतिबिम्बः जलचलने चलति जलवृद्धौ वर्धते तथा अतःकरणाद्युपाधौ प्रविष्टं ब्रह्म जीवरूपेणान्तःकरणोपाधिमनुवर्तते अत एव ध्यायतीव लेलायतीवेत्युक्तम् न तु सर्वांशे साम्यमित्युक्तम्। ( ब्र० सू० ३-२-२० )

अत्र परमात्मनः भूतभौतिकेषु प्रवेशः कथं ? सर्वगत्वात् अमूर्तत्वाच्चेति पूर्वपक्षे आचार्यैः समाहितं प्रतिबिम्बरूपेण तत्रोपलभ्यमानत्वं प्रवेशपदार्थः। तथा हि बृहदारण्यकप्रथमे स एष इह प्रविष्ट इत्यस्य जलसूर्यादिवत् व्याकृते कार्ये उपलभ्यत्वं इति, स एवेहाप्यर्थः। विशिष्टाद्वैतिनस्तु अनेन जीवस्य

**ननु च्छायामात्रश्चेज्जीवो मृषैव प्राप्तस्तथा परलोकेहलोकादि च तस्य। नैष दोषः। सदात्मना सत्यत्वाभ्युपगमात्। सर्वं च नामरूपादि सदात्मनैव सत्यं विकारजातं स्वतस्त्वनृतमेव। वाचाऽऽरम्भणं विकारो नामधेय-**

### नरेन्द्रपुरीयं टिप्पणम्

श्रुतिबाधितश्चेत्यर्थः। प्रतिबिम्बे छायापदप्रयोगान्मिथ्यात्वमभिमतमिति मत्वा शङ्कते—**ननु च्छायेति**। विशिष्टरूपेण मिथ्यात्वेऽपि स्वरूपेण सत्यत्वात् ब्रह्मास्मीति ज्ञानं मुक्तिश्च सम्भाव्यत इत्याह—**नैष दोष इति**। न केवलं जीवस्य सदात्मना सत्यत्वं सर्वं खल्विदं ब्रह्मेति सामानाधिकरण्याद्विकारस्यापि ब्रह्मरूपेण सत्यत्वं समानमित्याह—**सर्वं चेति**। तथा जीवोऽपि विभक्तरूपेण मिथ्येति। कस्मात्सत्यस्य भोक्तुर्भोग्यप्रपञ्च एव मिथ्येति किं नेष्यते।

### आनन्दगिरिटीका

प्रतिबिम्बे छायाशब्दप्रयोगान्मिथ्यात्वमिष्टमिति मन्वानः शङ्कते—**नन्विति**। तन्मृषात्वमिष्टमेवेत्याशङ्क्याऽऽह—**तथेति**। जीवस्य मृषात्वे स्वीकृते सति तस्येहलोकपरलोकौ तद्धेतुर्मोक्षस्तद्धेतुश्चेति सर्वं मृषा स्यादित्यर्थः। विशिष्टरूपेण मिथ्यात्वेऽपि स्वरूपेण सत्यत्वाज्जीवस्य ब्रह्मास्मीतिज्ञानान्मुक्तिः। सम्भवतीति समाधत्ते—**नैष दोष इति**। यत्तु परलोकेहलोकादि मृषा स्यादिति तत्राऽऽह—**सर्वं चेति**। कथं तर्हि तस्य मिथ्यात्वोक्तिरित्याशङ्क्याऽऽह—**स्वत इति**। यथा प्रपञ्चो ब्रह्मात्मना सत्योऽपि स्वरूपेण मिथ्येत्युक्तं तथा जीव-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ततश्च तस्य मोक्षो न स्यात् मोक्षिणोऽभावात्। ततश्च मोक्षशास्त्राप्रामाण्यमिति शङ्कते—**नन्विति**। **परलोकादि च तस्येति**। मृषा प्राप्त इत्यनुषङ्गः। परलोकादि न तस्येति पाठे आश्रयाभावे परलोकादिव्यवहारो न स्यादित्यर्थः। आदिशब्देन मोक्षग्रहणम्। किं प्रतिबिम्बस्य विशिष्टरूपेण मृषात्वं ? उत स्वरूपेणापि ? आद्ये इष्टापत्तिः। तदीयव्यवहाराणामपि तथात्वात्। द्वितीयस्तु नेष्यते बिम्बाभेदेन तस्य सदात्मना सत्यत्वाङ्गीकारात्। स्वरूपानुबन्धित्वाच्च मोक्षस्य न तच्छास्त्राप्रामाण्यमिति परिहरति—**नैष दोष इति**। **सदात्मनेति** प्रतिबिम्बत्वमेव तस्मिन् कल्पितं स्वरूपं तु बिम्बाभिन्नत्वात् सत्यमित्यर्थः। स्वरूपेण कल्पितस्यापि नामरूपप्रपञ्चस्य अधिष्ठानसत्तया सत्यत्वे स्वरूपेणाकल्पितस्य प्रतिबिम्बस्य सत्यत्वं किमु वक्तव्यमित्यभिप्रेत्याह—**सर्वं चेति**। विशिष्टरूपेण मृषात्वे तद्रूप-

---

परमात्मभिन्नत्वात् जीवशरीरकेण मयेत्यर्थः जीवशरीरविशिष्टस्य प्रवेशोक्तिः विशेषणीभूतजीवप्रवेशे पर्यवस्यति परमात्मनः अमूर्तस्य प्रवेशाभावात्। न च जीवेनेत्यत्र प्रथमापत्तिः कर्तुरभिहितत्वेन तृतीयाऽयोगात् इति वाच्यम्। मयेति स्वरूपेणेत्यर्थे अङ्गीकारात् स्वरूपस्य च कल्पितभेदात् करणत्वात् तृतीयेति। यद्वा जीवेन—सदात्मकेनेत्यर्थः। आत्मना आत्मशब्दस्य शरीरपरत्वात् सदात्मकजीवेनेत्यर्थः मच्छरीरभूतजीवेनेत्यर्थः। एवं यथाश्रुतार्थस्य स्वमते योजयितुमशक्यत्वेन विकल्पयन्ति क्लिष्टकल्पना तु सुस्पष्टा स्वारसिकार्थत्यागश्च सर्वपक्षेषु।

प्रवेशविषये तैत्तिरीयश्रुतिः—तत्सृष्ट्वा तदेवानुप्राविशत् इति बृहदारण्यकश्रुतिः तन्नामरूपाभ्यामेव व्याक्रियत इत्युक्त्वा स एष इह प्रविष्ट इत्याह। ऐतरेयकश्रुतिश्च शरीरसृष्ट्यनन्तरमेव "एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति प्रवेशं प्रतिपादयति। अत्र च जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरोत् इति प्रवेशानन्तरं नामरूपव्याकरणमाह—सोऽयं श्रुतिषु परस्परविरोध इति नाशङ्कनीयम्। भाष्ये "जीवेनात्मना अत्रिवृत्कृतं भूतत्रयं प्रविश्य तत्कार्यभूतं वैराजपिण्डं देवादिपिण्डांश्चानुप्रविश्य नामरूपे व्याकरोदि"त्युक्तम्। तेन प्रथमं भूतत्रये प्रवेशः ततः त्रिवृत्करणं ततो वैराजादिपिण्डसृष्टिः तेषु तदनन्तरं प्रवेश इति गम्यते। जडेषु अस्मदादिदेहेष्वपि प्रवेशमाह ऐतरेयकश्रुतिः तेन प्रतिशरीरोत्पत्ति ब्रह्मानुप्रवेश इत्यभिप्रायः प्रवेशश्च प्रतिबिम्बरूपेण। अपि च सृष्टेः पूर्वं विषयाभावात् कुत्र प्रविष्ट इति प्रश्नो भवति। अतः सृष्ट्यनन्तरमेव प्रवेशः। तेन छान्दोग्ये सूक्ष्मभूतेषु प्रथमं प्रविश्य स्थूलसृष्टिः ततः सृष्टेषु प्रवेश उक्त इति न विरोधः।

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेमास्तिस्रो**
**देवता अनेनैव जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥**

मित्युक्तत्वात् । तथा जीवोऽपीति । यक्षानुरूपो हि बलिरिति न्यायप्रसिद्धिः । अतः सदात्मना सर्वव्यवहाराणां सर्वविकाराणां च सत्यत्वं सतोऽन्यत्वेनानृतत्वमिति न कश्चिद्दोषस्तार्किकैरिहानुवक्तुं शक्यः । यथेतरेतरविरुद्ध-द्वैतवादाः स्वबुद्धिविकल्पमात्रा अतत्त्वनिष्ठा इति शक्यं वक्तुम् ॥ २ ॥

सैवं तिस्रो देवता अनुप्रविश्य स्वात्मावस्थे बीजभूते अव्याकृते नामरूपे व्याकरवाणीतीक्षित्वा तासां च तिसृणां देवतानामेकैकां त्रिवृतं त्रिवृतं करवाणि । एकैकस्यास्त्रिवृत्करण एकैकस्याः प्राधान्यं द्वयोर्द्वयोर्गुण-

नरेन्द्रपुरीयं टिप्पणम्

तत्राह—यक्षानुरूप इति । मिथ्याभूतस्य भोग्यस्य मिथ्याभूतभोक्ता अनुरूपः, योग्यताख्यसम्बन्धसम्भवात् सत्ये कर्तृद्वारेण अध्यस्यत इत्यर्थः । तदत्र भाष्यकृता जीवस्य प्रपञ्चसाम्यमुक्तम् तद्वाच्यजीवाभिप्रायम् । लक्ष्यस्य वैषम्य-सम्भवात् । प्रपञ्चस्य सृष्टिश्रवणाज्जीवस्य तदश्रवणाद्ब्रह्मण एव जीवभावेन प्रवेशश्रवणात्, जीवस्य स्वप्रकाश-नित्यत्वश्रुतेश्च । तस्मादुपाधिरूपधीस्थः । उपाधिस्थत्वमुपाधिस्थता विनिर्मुक्तं चेत्येतेषूपाधेस्तत्स्थत्वस्य च मिथ्या-त्वेऽपि उपाधिस्थस्य जीवपदलक्ष्यस्य विम्बभूतब्रह्मैक्यं शास्त्रार्थ इति रहस्यम् । यच्चोच्यते तार्किकैः प्रपञ्चस्य मिथ्यात्वे सौगतवादापत्तिस्सत्यत्वे चाद्वैतव्याघात इति तदप्युक्तन्यायेन परिहृतमित्याह—अतस्सदात्मनेति । त्रिवृतं त्रिवृतं करवाणीत्यैक्षत त्रिवृत्कृतानां नामरूपव्याकरणस्य प्रागेव सिद्धत्वात् स्थूलानां नामरूपे व्याकर्तुं त्रिवृत्करणमारब्धमित्यर्थः । एकैकां देवतां द्विधा विभज्य पुनरेकैकं भागं द्विधा कृत्वा तदितरयोर्निक्षिप्य त्रिवृत्करणं न समानपरिमाणत्रयनिर्मितरज्जुवदित्याह—एकैकस्या इति ॥ २-३ ॥

आनन्दगिरिटीका

शब्दवाच्योऽपि ब्रह्मात्मना सत्यः स्वरूपेण मिथ्येति स्वीकर्तव्यमित्याह—तथेति । अथ भोक्ता स्वरूपेणापि सत्योऽस्तु भोग्यप्रपञ्चस्यैव मिथ्यात्वमिष्यतामित्याशङ्क्याऽऽह—यक्षानुरूपो हीति । लौकिकन्यायानुसारेण भोग्यप्रपञ्चस्य मिथ्यात्वे भोक्तुरपि विभक्तस्वरूपेण तत्वसिद्धिरतो जीवशब्दवाच्यस्य मिथ्यात्वेऽपि तल्लक्ष्यस्य सन्मात्रस्य सत्यत्व-मिति व्यवस्थेत्यर्थः । यच्च तार्किकैरुच्यते प्रपञ्चस्य मिथ्यात्वे सौगतमतानुमतिः सत्यत्वे चाद्वैतव्याहतिरित्युक्तं तदप्युक्तन्यायेन निरस्तमित्याह—अत इति । अद्वैतवादे दोषाभावं वैधर्म्यदृष्टान्तेन स्पष्टयति—यथेति ॥ २ ॥

व्याकरवाणीत्येतदन्तं वाक्यं व्याख्याय तदनूद्य तासामित्यादि व्याचष्टे—सैवमित्यादिना । व्याकर-वाणीत्यैक्षतेति सम्बन्धः । कथं पुनरिदं त्रिवृत्करणमित्याशङ्क्य प्रथममेकैकां देवतां द्विधा द्विधा विभज्य पुनरेकैकं भागं द्विधा द्विधा कृत्वा तदितरभागयोर्निक्षिप्य त्रिवृत्करणं विवक्षितमित्याह—एकैकस्या इति । गुणप्रधानभावा-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

निष्पाद्यस्य कथं सिद्धिरित्याशङ्क्य व्यवहारस्यापि तादृशत्वान्न दोष इत्याह—यक्षानुरूप इति । यथा द्वैतवादा अतत्त्वनिष्ठा इति शक्यते वक्तुं दोषवत्त्वात् नैवमिह अनुवक्तुं शक्यः कश्चिदपि दोष इत्यन्वयः ॥ २ ॥

व्याकरवाणीत्यनेन नामरूपयोः पूर्वमपि विद्यमानता प्रतीयते व्यक्तीकरणस्य विद्यमानविषयत्वादित्यभि-प्रेत्याह—स्वात्मावस्थे इति । स्वस्य नामरूपस्यात्मा मायाशक्तिमच्चैतन्यं तस्मिन्नवस्था ययोस्ते तथोक्ते । तत्र प्रमाणमाह—बीजभूते इति । असतः शशविषाणादेरुत्पत्त्यदर्शनात् बीजरूपेण सतोरेवोत्पत्तिरिति तत्सत्तासिद्धिरिति भावः । अनेनासत्कार्यवादः श्रुत्या निरस्तो वेदितव्यः । तयोस्सत्वे इदानीमेव तत्प्रतीयेतेत्याशङ्क्याह—अव्याकृते इति । व्याकरवाणीत्यस्य इत्यैक्षतेति पूर्वेणान्वयः । करवाणीत्यनन्तरं इत्यैक्षतेत्यनुषङ्गः । वीप्सायास्तात्पर्यमाह—एकैकस्या इति । एकैकां देवतां द्विधा द्विधा कृत्वा एकैकमर्धं पुनर्द्विधाकृत्वा तयोरंशयोः इतरयोर्देवतार्धयोः प्रक्षेपे स्वकीयो भागोऽर्धमिति इतरयोः पादमात्रं पादमात्रमिति एकस्याः प्राधान्यं इतरयोस्तु स्वल्पत्वाद्गुणभाव इत्यर्थः । इदं त्रिवृत्करणं प्रदर्शनार्थं पञ्चीकरणस्य । तेज आदिभूतानां तत्कार्यप्रपञ्चस्य च तत्कार्यलिङ्गशरीरवदप्रत्यक्षत्वापत्तेः

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥**

**इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य तृतीयः खण्डः**

भावोऽन्यथा हि रज्ज्वा इवैकमेव त्रिवृत्करणं स्यात् न तु तिसृणां पृथक्पृथक्त्रिवृत्करणमिति। एवं हि तेजोबन्नानां पृथङ्नामप्रत्ययलाभः स्यात्तेज इदमिमा आपोऽन्नमिदमिति च। सति च पृथङ्नामप्रत्ययलाभे देवतानां सम्यग्व्यवहारस्य प्रसिद्धिः प्रयोजनं स्यात्। एवमीक्षित्वा सेयं देवतेमास्तिस्रो देवता अनेनैव यथोक्तेनैव जीवेन सूर्यबिम्बवदन्तः प्रविश्य वैराजं पिण्डं प्रथमं देवादीनां च पिण्डाननुप्रविश्य यथासङ्कल्पमेव नामरूपे व्याकरोदसौनामाऽयमिदंरूप इति ॥ ३ ॥

तासां च देवतानां गुणप्रधानभावेन त्रिवृतं त्रिवृतमेकैकामकरोत्कृतवती देवता। तिष्ठतु तावद्देवतादि-

**नरेन्द्रपुरीयं टिप्पणम्**

संक्षेपेण त्रिवृत्करणं प्रतिज्ञायोदाहरणेन तत्स्फुटीकर्तुमुपक्रमते—तत्रापि देहे त्रिवृत्कृतत्वमन्यथेति वक्ष्यति। देहव्यतिरिक्तेषु प्रथमं त्रिवृत्करणमुदाह्रियत इत्याह—तिष्ठतु तावदित्यादिना। यौक्तिकबुध्या रूपत्रयातिरेकेण

**आनन्दगिरिटीका**

नङ्गीकारे समानपरिमाणसूत्रत्रयनिर्मितरज्जुवत्त्रिवृत्करणमेकमेव स्यादित्याह--अन्यथेति। एवकारार्थं दर्शयति—न त्विति। गुणप्रधानभावेन त्रिवृत्करणमुपसंहर्तुमितिशब्दः। इतश्च गुणप्रधानभावेन त्रिवृत्करणमेष्टव्यमित्याह—एवं हीति। पृथङ्नामप्रत्ययलाभेनापि किं स्यादित्याशङ्क्याऽऽह—पृथगिति। सेयमित्यादि व्याचष्टे—एवमित्यादिना ॥३॥

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

प्रतिघाताद्यभावप्रसङ्गात् स्थूलव्यवहारानुपपत्तेश्च त्रिवृत्करणमिष्यते। तत्तु वाय्वाकाशयोरपि तुल्यम्। तयोरपि प्रत्यक्षत्वात् प्रतिवातदर्शनात् स्थूलव्यवहारजनकत्वाच्चेति। पञ्चीकरणञ्चैवम्—एकैकं भूतं द्विधा कृत्वा तत्रैकमर्धं चतुर्धा कृत्वा चतुर्णामंशानां भूतचतुष्टयार्धेषु प्रक्षेपः इति। तत्राप्येकैकस्य प्राधान्यं इतरेषां चतुर्णां गुणभाव इति। वीप्साप्रयोजनं व्यतिरेकमुखेनाह--अन्यथा हीति। त्रिवृतमेकैकां करवाणीत्युक्ते भूतत्रयं मिलित्वा त्रिवृद्रज्जुवदेका त्रिवृत्स्यादित्यर्थः।

अस्त्वेवमिति वदन्तं प्रत्याह--एवं हीति। पृथङ्नामप्रत्ययलाभःस्यादिति। अन्यथा तन्न स्यादिति शेषः। एवं च सति प्रकाशादिकार्यमसङ्करेण तेज आदिना स्यात्। इतरथा हि पृथिव्यापि प्रकाशादिकार्यं स्यादित्याह—सति चेति। तदुक्तं सूत्रकृता—वैशेष्यात्तु तद्वादस्तद्वाद इति। वैराजं पिण्डमिति। समष्टिदेहमित्यर्थः। देवादीनां च पिण्डानिति। व्यष्टिदेहानित्यर्थः। पिण्डेषु प्रवेशोक्त्या पाठव्यत्यासाश्रयेण त्रिवृत्करणं प्रथमं पश्चात् त्रिवृत्कृतभूतकार्यपिण्डेषु प्रविश्य नामरूपव्याकरणमिति व्याख्यातम्। ननु तथा व्याख्यानमेव न युक्तं, देवताशब्दस्य तत्कार्यपिण्डेषु लक्षणापत्तेः पिण्डोत्पत्त्यास्तेजोबन्ननामरूपव्याकरणानन्तरभावित्वेन तत्पूर्वकालीनप्रवेशस्य पिण्डाधिकरणत्वानुपपत्तेश्चेति चेन्न, "विराजं देवताः कोशाश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते मायया" इति आथर्वणे "स एष इह प्रविष्ट आनखाग्रेभ्य." इति काण्वश्रुतौ "स एतमेव सीमानं विदार्येतया द्वारा प्रापद्यत" इत्यैतरेये च, एवमन्यत्रापि प्रवेशस्य पिण्डाधिकरणकत्वश्रवणेन इहापि जीवरूपेण प्रवेशस्य तदधिकरणत्वावश्यंभावात्। नामरूपव्याकरणस्य तदधिकरणत्वावश्यंभावात्। नामरूपव्याकरणस्य च एतदनन्तरभाविनः प्रविष्टवैराजादिपुरुषकर्तृकव्याकरणविषयत्वोपपत्तेः। प्रवेशस्य देवतात्रिकरणत्वपक्षेऽपि नामरूपव्याकरणस्य एकदेशविषयत्वस्य वक्तव्यत्वात्। तेजोबन्नविषयनामरूपव्याकरणस्य पूर्वमेव जातत्वात् अन्यथा तत्र प्रवेशानुपपत्तेः। न चैवं "संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात्" (ब्र. सू. २-४-२०) इति सूत्रे नामरूपक्लृप्तेरीश्वरकर्तृत्वोक्तिविरोध इति वाच्यम्। जीवद्वारा तत्कर्तृकत्वोपपत्तेः। वाय्वादिषु आत्मसृष्टत्वस्य आकाशद्वारेव तदुपपत्तेः। अथवा नामरूपव्याकरणानन्तरमेव त्रिवृत्करणपिण्डोत्पादनद्वारा प्रवेशोऽस्तु। प्रविश्येति क्त्वाप्रत्ययस्य च मुखं व्यादाय स्वपितीतिवत् समानकर्तृकत्वमात्रेणोपपत्तेरिति भाव. ॥ ३ ॥

**यदग्ने रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा- दग्नेरग्नित्वं[1] वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥**

**पिण्डानां नामरूपाभ्यां व्याकृतानां तेजोबन्नमयत्वेन त्रिधात्वं, यथा तु खलु बहिरिमाः पिण्डेभ्यस्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे मम निगदतो विजानीहि विस्पष्टमवधारयोदाहरणतः ॥ ४ ॥**

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य तृतीयः खण्डः

**यत्तद्देवतानां त्रिवृत्करणमुक्तं तस्यैवोदाहरणमुच्यते। उदाहरणं नामैकदेशप्रसिद्धयाऽशेषप्रसिद्ध्यर्थमुदाह्रियते**

नरेन्द्रपुरीयं टिप्पणम्

अग्नेरनुपलम्भात् प्राक्तत्वबुद्ध्योपलभ्यमानस्यानिर्वाच्यत्वं मन्यते श्रुतिः। इदमेव ह्यनिर्वचनीयत्वं तत्प्रतीतिविषयस्य विचारासहत्वम्।

[2]त्रिदण्डी तु पण्डितंमन्यो धार्ष्ट्यात् मृत्पिण्डे कारणे प्रविष्टमनित्यदृष्टिपथादवगतं भवति न तन्मिथ्या कार्यकरत्वादिति। तत्र कारणे प्रवेशः प्रलयो विवक्षितः कारणादभिन्नत्वं वा? नाद्यः, प्रकरणविरोधात्। न हीदं प्रलयप्रकरणं, किन्तु त्रिवृत्करणमिह प्रक्रान्तम्। तत्र च त्रिवृत्कृतानां पृथक् सत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा बाधिता स्यादिति मन्वाना श्रुतिर्विवेकतः सत्वनिषेधेन मिथ्यात्वं सूचयन्ती सृष्टेः प्रागिव स्थित्यवस्थायामपि कारणमात्रसत्वे पर्यवस्यति न अनेकत्वात्। यच्च बाधकरणदोषयोरनुपलम्भात् सत्यत्वमुक्तं, तदसत्। श्रुत्यैव विवेकतोऽनुपलम्भेन यौक्तिकबाधस्योक्तत्वात्, न च प्रत्यक्षबाधेनैव मिथ्यात्वं वर्णदैर्घ्यादिस्तदभावेऽपि मिथ्यात्वोपगमात्। न हि तत्र कस्यचिद्बुद्धिर्निवर्ततेऽपि तु प्रमात्वनिवृत्तिः। करणदोषस्यापि कल्पनात्। **तस्मात् शोच्योऽयं व्याख्यायोषिच्चोरः सर्वत्र भाष्यकारीयं व्याख्यानमेव लिखित्वा कानिचिदक्षराण्यन्यत आख्याय तद्भाष्यकारमेव निन्दतीति ॥ ४ ॥**

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य तृतीयः खण्डः

आनन्दगिरिटीका

संक्षेपेण त्रिवृत्करणं प्रतिज्ञायोदाहरणतः स्फुटीकर्तुमारभमाणो देहे त्रिवृत्करणस्याग्रे स्फुटीकर्तव्यत्वाद्देहातिरिक्तेषु प्रथमं तदुदाहर्तुमुपक्रमते--तिष्ठतु तावदिति ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य तृतीयः खण्डः

कथमुदाहरणतोऽवधारणमित्याशङ्क्यानन्तरवाक्यमवतारयति—यत्तदिति। उदाहरणशब्दं व्युत्पादयति—

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अत्र देवतानां त्रिवृत्करणोक्त्या पिण्डशब्दोदितानां देहानां बाह्यानां च पदार्थानां त्रिवृत्कृतभूतकार्यत्वं अर्थादेव सिद्ध्यति। तत्र बाह्यानां पदार्थानां त्रिवृत्कृतभूतकार्यत्वमुदाहरणोक्त्यापि स्पष्टीक्रियत इति "यथा नु खलु" इति वाक्यं व्याचष्टे—तिष्ठतु तावदिति। पिण्डानां त्रिवृत्कृतभूतकार्यत्वं "अन्नमशितं" इत्यादिना स्पष्टीकरिष्यत इति भावः। नामरूपाभ्यां व्याकृतानामिति पाठे तु उपलक्षणे तृतीया। नामरूपाभ्यामुपलक्षितानामित्यर्थः ॥ ४ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य तृतीयः खण्डः

**यत्तद्देवतानामिति।** यद्यप्यग्न्यादिषु भौतिकेषु त्रिवृत्करणं प्रदर्श्यते न तु देवताशब्दितेषु भूतेषु तथापि

---

१. अपागादग्नेरग्नित्वम्—अनेन भूतत्रयारब्धः अग्निरूपो विकारः अनृतं भूतत्रयमेव सत्यमित्युक्तं भवति। अत एवात्रापि वाचारम्भणत्वमग्नेः रूपत्रयस्य सत्यत्वं चोक्तम्। इदानीन्तनवैज्ञानिकैः जलं आक्सिजन ( Oxigen ) हायड्रोजन ( Hydrogen ) इति समाख्यवायुद्वयसंयोगात् जायते। तयोः पृथक्करणे जलमेव न दृश्यते इत्युदाहरणमप्यत्र दृष्टान्तो भवति।

२. भट्टभास्कराचार्यः।

**यदादित्यस्य रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ २ ॥**

इति। तदेतदाह—यदग्नेस्त्रिवृत्कृतस्य रोहितं रूपं प्रसिद्धं लोके तदत्रिवृत्कृतस्य तेजसो रूपमिति विद्धि। तथा यच्छुक्लं रूपमग्नेरेव तदपामत्रिवृत्कृतानां, यत्कृष्णं तस्यैवाग्ने रूपं तदन्नस्य पृथिव्या अत्रिवृत्कृताया इति विद्धि। तत्रैवं सति रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे त्वं तस्याग्नेरग्नित्वमिदानीमपागादपगतम्। प्राग्रूपत्रयविवेकविज्ञानाद्याऽग्निबुद्धिरासीत्ते साऽग्निबुद्धिरपगताऽग्निशब्दश्चेत्यर्थः। यथा दृश्यमानरक्तोपधानसंयुक्तः स्फटिको गृह्यमाणः पद्मरागोऽयमितिशब्दबुद्धयोः प्रयोजको भवति प्रागुपधानस्फटिकयोर्विवेकविज्ञानात्तद्विवेकविज्ञाने तु पद्मरागशब्दबुद्धी निवर्तेते तद्विवेकविज्ञातुस्तद्वत्। ननु किमत्र बुद्धिशब्दकल्पनया क्रियते प्राग्रूपत्रयविवेककरणादग्निरेवाऽऽसीत्तदग्नेरग्नित्वं रोहितादिरूपविवेककरणादपागादिति युक्तं यथा तन्त्वपकर्षणे पटाभावः। नैवं, बुद्धिशब्दमात्रमेव ह्यग्निर्यत आह वाचाऽऽरम्भणमग्निर्नाम विकारो नामधेय नाममात्रमित्यर्थः। अतोऽग्निबुद्धिरपि मृषैव। किं तर्हि तत्र सत्यं त्रीणि रूपाणीत्येव सत्यं नाणुमात्रमपि रूपत्रयव्यतिरेकेण सत्यमस्तीत्यवधारणार्थः॥ १॥

तथा यदादित्यस्य यच्चन्द्रमसो यद्विद्युत इत्यादि समानम्। ननु यथा नु खलु सोम्येमास्तिस्रो देवतास्त्रि-

### नरेन्द्रपुरीयं टिप्पणम्

अवन्नयोरपि त्रिवृत्करणमुपलक्षितं चेत्तर्हि तत्र रसगन्धयोरपि साधारण्यात्तयोस्त्रिवृत्करणं किन्नोदाहृत-

### आनन्दगिरिटीका

उदाहरणं नामेति। तत्रैव श्रुतिमवतार्य व्याचष्टे—तदेतदित्यादिना। अत्रिवृत्कृतानां रूपमिति विद्धीति सम्बन्धः। तत्राग्नौ रूपत्रये पूर्वोक्तरीत्या पृथक्कृते सतीति यावत्। इदानीं विवेकदशायामित्यर्थः। अक्षरार्थमुक्त्वा वाक्यतात्पर्यार्थमाह—प्रागिति। रूपत्रयविवेकात्प्रागवस्थायामग्निशब्दबुद्धी तद्विवेकादूर्ध्वं तन्निवृत्तिरित्येतमर्थं दृष्टान्तेन समर्थयते—यथेत्यादिना। अग्निविषये श्रुतं हित्वाऽधिककल्पनायां नास्ति निबन्धनमिति शङ्कते—नन्विति। रोहितादिरूपत्रयविवेके सत्यग्नेरग्नित्वमपगच्छतीत्यत्र दृष्टान्तमाह—यथेति। शब्दबुद्धिप्रक्षेपेऽपि न श्रुतत्योगोऽस्तीति परिहरति—नैवमिति। तत्र प्रमाणत्वेनानन्तरवाक्यमादाय व्याचष्टे—यत इति। अग्नेर्नाममात्रत्वमतःशब्दार्थः॥१॥

प्रक्रमपर्यालोचनायामुदाहरणे न्यूनत्वमस्तीति शङ्कते—नन्विति। यद्वापीकूपादे रोहितं रूपं तेजसस्तद्रूपं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

भौतिकं विहाय भूतेषु पृथग्व्यवहारादर्शनात् तेषु तत्प्रदर्शनं भूतानामेव प्रदर्शनमिति भावः। उभयवादिसम्मतमुदाहरणमिति तन्नात्राभिमतम् अग्न्यादिष्वपि त्रिवृत्करणस्येदानीमेवोपपादनीयत्वादित्यभिप्रेत्य प्रकृतोदाहरणशब्दार्थमाह—उदाहरणमिति। उदाह्रियते प्रदर्श्यते इत्युदाहरणं नामेत्यन्वयः तस्य प्रयोजनमाह—एकदेशेति। अत्रिवृत्कृतस्य तेजस इति पाठः स्पष्टः त्रिवृत्कृतस्येति पाठे तु कार्यभूताग्निरूपेण त्रिवृत्कृतस्य स्वरूपतोऽत्रिवृत्कृतस्येति व्याख्येयम्। त्रिवृत्कृतभूतत्रयकार्यत्वाभावादग्नेः त्रिवृत्कृततेजोमात्रकार्यत्वात्। अत एव कथं तेजस एव उदाहरणैः त्रिवृत्करणं प्रदर्श्यते नावन्नयोरित्याक्षेपः करिष्यमाणः सङ्गच्छते। इतरथा त्रयाणामपि तदेवोदाहरणं स्यादित्याक्षेपानुपपत्तेः। न चात्रिवृत्कृतस्य तेजसो रूपं न प्रत्यक्षमिति तस्य प्रसिद्धमित्यनुवादानुपपत्तिरिति वाच्यम्। तस्यैव त्रिवृत्कृतस्य प्रत्यक्षत्वोपपत्तेः अनुवादसम्भवादिति। एवं त्रिवृत्करणप्रदर्शनेनैव कारणव्यतिरेकेण कार्याभावोऽपि प्रदर्शित इत्याह—तत्रैवमिति। अपागादग्नित्वमित्यनेन पूर्वमग्नित्वमासीदिदानीं नष्टमिति प्रतीतेः कार्यस्य सत्त्वं प्राप्नोतीत्याशङ्क्याह—प्रागिति। अग्नित्वं नाम अग्निशब्दबुद्धिरेव। न त्वग्नित्वं नाम कश्चित् पदार्थोऽस्तीति न कार्यसत्त्वमिति भावः। अदृश्यमानेति पाठे अदृश्यमानत्वं अविविक्तत्वम्। तद्विवेकज्ञातुरिति। विवेकज्ञानिन इत्यर्थः। अपागादग्नेरग्नित्वमिति श्रुतिस्वारस्यात् सत एवाग्नेरग्नित्वस्य च निवृत्तिरस्त्विति शङ्कते—नन्विति। उत्तरवाक्यविरोधान्नैवमित्याह—नैवमिति। उक्तेऽर्थे उत्तरवाक्यं पातयति—यत इति। विकारस्य नाममात्रत्वे अग्नेरपि विकारत्वान्मृषात्वमित्याह—अतोऽग्निरपीति॥ १॥

**यच्चन्द्रमसो रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥**

वृत्त्रिवृदेकैका भवति तन्मे विजानीहीत्युक्त्वा तेजस एव चतुर्भिरप्युदाहरणैरग्न्यादिभिस्त्रिवृत्करणं दर्शितं नावन्नयोरुदाहरणं दर्शितं त्रिवृत्करणे। नैष दोषः। अबन्नविषयाण्यप्युदाहरणान्येवमेव च द्रष्टव्यानीति मन्यते श्रुतिः। तेजस उदाहरणमुपलक्षणार्थम्। रूपवत्त्वात्स्पष्टार्थत्वोपपत्तेश्च। गन्धरसयोरनुदाहरणं त्रयाणामसम्भवात्। न हि गन्धरसौ तेजसि स्तः। स्पर्शशब्दयोरनुदाहरणं विभागेन दर्शयितुमशक्यत्वात्।

यदि सर्वं जगत्त्रिवृत्कृतमित्यग्न्यादिवत्त्रीणि रूपाणीत्येव सत्यमग्नेरग्नित्ववदपागाज्जगतो जगत्त्वम्।

### नरेन्द्रपुरीयं टिप्पणम्

मित्याशङ्क्याह—गन्धरसयोरिति। यथा अबन्नयोर्लोहितं भास्वरं वा यद्रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति ज्ञातुं शक्यन्ते, तथा अमुको रसो गन्धो वा तेजस्यऽप्स्वन्ने चास्तीति न शक्यते ज्ञातुमित्यर्थः। स्पर्शशब्दयोस्तर्हि त्रयाणां सम्भवात् त्रिवृत्करणं किन्नोदाहृतं तत्राह—स्पर्शशब्दयोरिति। यथा लोहितादित्रयं त्रयाणां विभागेन

### आनन्दगिरिटीका

यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येत्युदाहरणसम्भवान्न न्यूनतेति परिहरति—नैष दोष इति। तर्हि तेजोविषयमप्युदाहरणमूहनीयं किमित्युदाहृतमित्याशङ्क्याऽऽह—तेजस इति। यदि क्वचिदपि नोदाहरणमुच्यते नोपलक्षणमेव सिध्येदग्नेस्त्रयाणां रूपवत्त्वेन यथोक्तरूपविभागस्य तेषु स्फुटत्वसम्भवात्तेजसो दृष्टान्तप्रदर्शनमन्नादिविषयोदाहरणोपलक्षणार्थं, तेन नोपेक्षितमित्यर्थः। अबन्नयोरपि त्रिवृत्करणमुपलक्षितं चेत्तर्हि तत्र रसगन्धयोरसाधारण्यात्तयोस्त्रिवृत्करणमुदाहर्तव्यमित्याशङ्क्याऽऽह—गन्धरसयोरिति। यथा यदबन्नयोर्भास्वरं लोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति शक्यते रूपं विवेक्तुं न तथाऽमुको रसो गन्धो वा तेजसोऽपामग्नेश्चास्तीति ज्ञातुं शक्यमित्यनुदाहरणं तयोरित्यर्थः। ननु त्रिवृत्करणे त्रिष्वपि रूपवद्गन्धरसौ सम्भावितौ तत्कथं तयोस्त्रयाणामसम्भवोक्तिस्तत्राऽऽह—न हीति। सम्भावितावपि तौ त्रिषु विवेक्तुमशक्यावित्यनुदाहरणीयावित्यर्थः। तर्हि सर्वेषु भूतेषु सम्भावितयोः स्पर्शशब्दयोरुदाहरणं किं न स्यादित्याशङ्क्याऽऽह—स्पर्शशब्दयोरिति। यथा लोहितादिरूपत्रयं त्रयाणां विभागेन दर्शयितुं शक्यं न तथा शब्दत्रयं स्पर्शत्रयं च त्रयाणां विभागेन दर्शयितुं शक्यं, नो खल्वेकत्रोष्णशीतानुष्णाशीतस्पर्शत्रयं दृश्यते नापि खरमधुरमध्यमशब्दत्रयमेकत्रोपलब्धमित्यर्थः।

सर्वस्य त्रिवृत्कृतत्वे फलितमाह—यदीति। यथाऽन्यादि त्रिवृत्कृतं तथा सर्वमेव जगद्यदि त्रिवृत्कृत-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इमास्तिस्रो देवता इति तिसृणामुदाहरणप्रदर्शनं प्रतिज्ञाय तेजस एव उदाहरणप्रदर्शनमयुक्तमिति शङ्कते—नन्विति। तेजस उपलक्षणत्वेन तद्रीत्या तिसृणामुदाहृतप्रायत्वान्न दोष इत्याह—नैष इति। तेजस एव प्राथम्यादुपलक्षकत्वमित्याह—तेजस इति। तेजस एवोपलक्षकत्वे हेत्वन्तरमाह—रूपवत्त्वादिति। यद्यपि अबन्नयोरपि रूपवत्त्वमस्ति तथापि तत्र तेजसीव स्पष्टं रूपं नास्तीति न तयोरुपलक्षकत्वमित्याह—स्पष्टेति। ननु रूपद्वारैव किमिति त्रिवृत्करणमुदाहृतं गन्धरसद्वारा तु किमिति नोदाहृतमिति तत्राह—गन्धरसयोरिति। नहि तेजसि स्त इति। अत्रिवृत्कृते तेजसीत्यर्थः। त्रिवृत्कृते अभिन्नांशद्वारा तयोरपि सम्भवात् अभावोक्त्यनुपपत्तेः। अन्यथा अग्न्यादावपि शुक्लादिरूपाभावप्रसङ्गात् "यच्छुक्लं तदपाम्" इत्याद्यनुपपन्नं स्यादिति। एतदुक्तं भवति—योऽग्नौ कश्चिद्रसः गन्धो वा सोऽत्रिवृत्कृतस्य तेजसः यो मधुरो रसः गन्धो वा सोऽत्रिवृत्कृतानामपां यो लवणादिः सोऽत्रिवृत्कृतस्यान्नस्येत्येव हि त्रिवृत्करणं प्रदर्शनीयम्। न च तथा प्रदर्शयितुं शक्यते अत्रिवृत्कृते तेजसि तयोरभावादिति।

ननु तर्हि अत्रिवृत्कृते तेजसि आकाशवायुरूपकारणगुणद्वारा शब्दस्पर्शयोस्सम्भवात् तद्द्वारा त्रिवृत्करणं प्रदर्श्यतामित्याशङ्क्याह—शब्दस्पर्शयोरनुदाहरणमिति। शब्दस्पर्शद्वारा अनुदाहरणमित्यर्थः। रूपस्य रोहितत्वादिनेव शब्दस्य तत्तद्भूतगतविशेषेण विभागाप्रतीतेः त्रिवृत्करणस्य तद्द्वारा प्रदर्शनमशक्यमित्यर्थः। अग्न्याद्युदाहरणेन सर्वस्य जगतः त्रिवृत्कृतत्वं ज्ञातव्यमित्याह—एवमिति। यच्च "अपागादग्नेरग्नित्वम्" इत्यादिना

**यद्विद्युतो रोहितँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागा-
द्विद्युतो विद्युत्त्वं वाचाऽऽरम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥**

तथाऽन्नस्याप्यप्शुङ्गत्वादाप इत्येव सत्यं वाचारम्भणमात्रमन्नम्। तथाऽपामपि तेजःशुङ्गत्वाद्वाचारम्भणत्वं तेज इत्येव सत्यम्। तेजसोऽपि सच्छुङ्गत्वाद्वाचारम्भणत्वं सदित्येव सत्यमित्येषोऽर्थो विवक्षितः। ननु वाय्वन्तरिक्षे त्वत्रिवृत्कृते तेजःप्रभृतिष्वनन्तर्भूतत्वादवशिष्येते। एवं गन्धरसशब्दस्पर्शाश्चावशिष्टा इति कथं सता विज्ञातेन सर्वमन्यदविज्ञातं भवेत्तद्विज्ञाने वा प्रकारान्तरं वाच्यम्। नैष दोषः। रूपवद्द्रव्ये सर्वस्य दर्शनात्। कथम्। तेजसि तावद्रूपवति शब्दस्पर्शयोरप्युपलम्भाद्वाय्वन्तरिक्षयोस्तत्र स्पर्शशब्दगुणवतोः सद्भावोऽनुमीयते। तथाबन्नयो रूपवतो रसगन्धान्तभाव इति। रूपवतां त्रयाणां तेजोबन्नानां त्रिवृत्करणप्रदर्शनेन सर्वं तदन्तर्भूतं सद्विकारत्वात् रूपत्रयवत् विज्ञातं

नरेन्द्रपुरीयं टिप्पणम्

दर्शयितुं शक्यम् न तथा शब्दत्रयं स्पर्शत्रयं च त्रयाणां विभागेन दर्शयितुं शक्यम्। न ह्येकत्रोष्णशीतानुष्णाशीतस्पर्शत्रयमुपलभ्यते। नापि खरमधुरमध्यमशब्दत्रयं चोपलभ्यते। सर्वस्य त्रिवृत्कृतत्वे फलितमाह—**यदीत्यादिना**। त्रिवृत्करणपक्षे नैकविज्ञानेन सर्वविज्ञानं सिध्यति परिशिष्टविज्ञेयसद्भावादित्याह—**नन्विति**। श्रुत्यन्तरप्रसिद्धयोर्वियत्पवनयोस्त्रिष्वेवान्तर्भावान्न परिशिष्टविज्ञेयसम्भव इत्याह—**नैष दोष इति**। शब्दस्पर्शौ हि वियत्पवनयोर्लिङ्गत्वेनाभिमतौ। तौ च रूपवद्द्रव्यं विनाऽनुपलभ्यमानौ नातिरिक्तद्रव्यानुमापकौ साश्रयत्वसाधने सिद्धसाधनत्वाद्रूप

आनन्दगिरिटीका

मित्यङ्गीकृतं तदाऽग्नेरग्नित्ववज्जगतो जगत्त्वमपगतं त्रीणि रूपाणीत्येव सत्यमिति योजना। तथाऽपि कथं सन्मात्रपरिशेषः स्यादित्याशङ्क्याऽऽह—**तथेति**। रूपत्रयव्यतिरेकेण जगतोऽभाववत्कृष्णस्यापि रूपस्य पृथिवीशब्दितस्य शुक्लरूपमात्रजलकार्यत्वात्तदतिरेकेणासत्त्वं पृथिवीवदपामपि शुक्लरूपमात्राणां लोहितरूपमात्रतेजोविकारत्वात्तद्व्यतिरेकेणाभावस्तस्यापि सत्कार्यत्वात्ततो भेदेनासत्त्वं सन्मात्रमेव परिशिष्टमित्येतत्त्रिवृत्करणप्रकरणे विवक्षितमित्यर्थः। त्रिवृत्करणपक्षे नैकविज्ञानेन सर्वविज्ञानं सिध्यति परिशिष्टविज्ञेयसद्भावादिति शङ्कते—**नन्विति**। इतिपदं कथमित्यादिना सम्बध्यते। गन्धादयश्च शब्दान्ता गुणा गुणिष्वनन्तर्भूताः सन्तीति न सद्विज्ञानेन तद्विज्ञानोपपत्तिरित्याह—**गन्धेति**। तद्विज्ञाने = सद्विज्ञानेन वाय्वादिविज्ञाने, तत्र प्रकारान्तरं तत्कार्यत्वादतिरिक्तमिति यावत्। आकाशादेस्त्रिष्वेवान्तर्भावसम्भवान्न परिशिष्टविज्ञेयमस्तीति परिहरति—**नैष दोष इति**। कथं तेजोबन्नेषु सर्वस्य आकाशादेर्दर्शनमित्याह—**कथमिति**। तत्र शब्दस्पर्शयोराकाशवाय्वोश्च भूतत्रये प्रत्यक्षानुमानाभ्यामुपलब्धिं दर्शयति—**तेजसीति**। तेजोग्रहणमबन्नयोरुपलक्षणं तत्रापि स्पर्शाद्युपलब्धेरविशेषाद्यत्तु गन्धादि ज्ञेयान्तरमिति तत्राऽऽह—**तथेति**। भूतत्रये स्पर्शाद्यन्तर्भाववदिति यावत्। त्रिष्वेवान्तर्भावे फलितमाह—**रूपवतामिति**। भूतत्रये रूपवत्या-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

रूपत्रयव्यतिरेकेण अग्न्यादेरभावः त्रीणि रूपणीत्येव सत्यमिति चोक्तं तेन सर्वस्य जगतोऽसत्त्वं रूपत्रयस्यैव सत्यत्वमित्युक्तं इत्याह—**इत्यग्न्यादिवदिति**। रूपत्रयस्यापि कार्यत्वेन सत्यत्वानुपपत्तेः तद्द्वारा मूलकारणमेव सत्यमित्यवगन्तव्यमित्याह—**तथाऽन्नस्यापीति**। शुङ्गत्वं कार्यत्वम्। ननु यदग्ने रोहितं रूपं अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यं इत्यादिवाक्यपर्यालोचनया त्रिवृत्कृतस्यैव कार्यस्य कारणव्यतिरेकेणाभावः कारणज्ञानेन ज्ञानं चेति प्रतीयते। ततश्च वाय्वादेः त्रिवृत्कृतानन्तर्भावात् सद्विज्ञानान्न ज्ञानं स्यादिति शङ्कते—**नन्विति**। ननु जीवस्य यथा त्रिवृत्कृतकार्यानन्तर्भावेऽपि सदभेदेन सद्विज्ञानात् ज्ञातत्वं तथा वाय्वादेरस्त्वित्याशङ्क्य तस्य सदभेदात् सज्ज्ञानेन ज्ञातत्वेपि वाय्वादेस्तदभावात् तज्ज्ञाने उपायान्तरं वाच्यं न च तदस्तीत्याह—**तद्विज्ञाने वेति**। प्रकारान्तरं वाच्यमित्यनन्तरं तन्नास्तीति शेषः। सत्कार्यतेजः प्रभृतिषु वाय्वादेरुपलम्भात् तदन्तर्भावः प्रतीयते स च सत्कार्यत्वं विना नोपपद्यते सत्कार्यभिन्नस्य नियमेन सत्कार्यान्तर्भावानुपपत्तेः। ततश्च त्रिवृत्कृतत्वाभावेऽपि सत्कार्यत्वात् सद्विज्ञानेन ज्ञानं सिद्ध्यतीत्याह—**नैष इति**। नियमेन तदन्तर्भावं दर्शयति—**नहीति**। यद्वा छान्दोग्ये तैत्तिरीयानुरोधेन आकाशवायुसर्गानन्तरमित्यध्याहारात् त्रिवृत्करणं पञ्चीकरणोपलक्षणार्थमित्यङ्गीकार्यम्। त्रीणि

**एतद्ध स्म वै तद्विद्वाँ्स आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यतीति ह्येभ्यो विदाञ्चक्रुः ॥ ५ ॥**

मन्यते श्रुतिः। न हि मूर्तं रूपवद्द्रव्यं प्रत्याख्याय वाय्वाकाशयोस्तद्गुणयोर्गन्धरसयोर्वा ग्रहणमस्ति। अथवा रूपवतामपि त्रिवृत्करणं प्रदर्शनार्थमेव मन्यते श्रुतिः। यथा तु त्रिवृत्कृते त्रीणि रूपाणीत्येव सत्यं तथा पञ्चीकरणेऽपि समानो न्याय इत्यतः सर्वस्य सद्विकारत्वात्सता विज्ञातेन सर्वमिदं विज्ञातं स्यात्सदेकमेवाद्वितीयं सत्यमिति सिद्धमेव भवति। तदेकस्मिन्सति विज्ञाते सर्वमिदं विज्ञातं भवतीति सूक्तम् ॥ २-३-४ ॥

एतद्विद्वांसो विदितवन्तः पूर्वेऽतिक्रान्ता महाशाला महाश्रोत्रिया आहुर्ह स्म वै किल। किमुक्तवन्त इत्याह—न नोऽस्माकं कुलेऽद्येदानीं यथोक्तविज्ञानवतां कश्चन कश्चिदप्यश्रुतममतमविज्ञातमुदाहरिष्यति नोदाहरिष्यति सर्वं विज्ञातमेवास्मत्कुलीनानां सद्विज्ञानवत्त्वादित्यभिप्रायः। ते पुनः कथं सर्वं विज्ञातवन्त इत्याह—एभ्यस्त्रिभ्यो रोहितादिरूपेभ्यस्त्रिवृत्कृतेभ्यो विज्ञातेभ्यः सर्वमप्यन्यच्छिष्टमेवमेवेति विदाञ्चक्रुर्विज्ञातवन्तो यस्मात्तस्मात्सर्वज्ञा एव सद्विज्ञानात्त आसुरित्यर्थः। अथवैभ्यो विदाञ्चक्रुरित्यग्न्यादिभ्यो दृष्टान्तेभ्यो विज्ञातेभ्यः सर्वमन्यद्विदाञ्चक्रुरित्येतत् ॥ ५ ॥

### नरेन्द्रपुरीयं टिप्पणम्

वद्द्रव्याश्रयत्वसाधने च व्यभिचारादिप्रसङ्गादित्याह—न हि मूर्तमिति। अन्तर्भावोक्तिप्रयासपरिहाराय मतान्तरमाह—अथवेति। मेचकमिश्रं यत्कपोतादिपक्षिविशेषरूपं तस्मिन् ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य चतुर्थः खण्डः

### आनन्दगिरिटीका

काशादेरन्तर्भावं व्यतिरेकद्वारा समर्थयते—न हीति। अन्तर्भावोक्तिप्रयासं परिहर्तुं पक्षान्तरमाह—अथवेति। प्रदर्शनार्थं पञ्चीकरणस्येति शेषः। कथं पञ्चीकरणे सन्मात्रपरिशेषः सिध्यतीत्याशङ्क्याऽऽह—यथेति। यदा पञ्चापि भूतानि प्रत्येकं द्वेधा विभज्य पुनरेकैकं भागं चतुर्धा कृत्वा स्वभागातिरिक्तेषु पूर्वेषु भागेष्वेकैकशो निक्षिप्यते तदा पञ्चीकरणं श्रुत्युपलक्षितं लभ्यते तत्रापि पञ्चानां भागानां पृथक्करणे पञ्चैव तन्मात्राण्यवशिष्यन्ते तान्यपि पृथिव्यादीन्यवादिकार्यत्वात्तत्तत्कारणव्यतिरेकेण न सिध्यन्तीति त्रिवृत्करणवत्पञ्चीकरणेऽपि न्यायसाम्यात्सर्वस्य सद्विकारत्वात्तद्व्यतिरेकेणाभावात्तेन विज्ञातेन तदपि विज्ञातमेव स्यात्सन्मात्रं तु परमार्थसत्यं परिशिष्टं भवतीत्यर्थः। उक्तन्यायेनैकविज्ञानेन सर्वविज्ञानश्रुतिरविरुद्धेत्युपसंहरति—तदेकस्मिन्निति ॥ २-३-४ ॥

त्रिवृत्करणपक्षेऽप्येकविज्ञानेन सर्वविज्ञानश्रुतिविरुद्धेत्युपपाद्य त्रिवृत्करणमुदाहरणान्तरेण दर्शयितुमारभते—एतदिति। त्रिवृत्करणमिति यावत्। ते पुनरिति त्रिवृत्करणविज्ञानवन्तो निर्दिश्यन्ते ॥ ५ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

रूपाणीत्येव सत्यमित्यपि पञ्चभूतानीत्येव सत्यमित्येवम्परम्। ततश्च कारणपरम्परया मूलकारणसत्यत्वपरत्वाद्वाक्यस्य सद्विज्ञानेन सर्वविज्ञानं सिद्ध्यतीत्याह—अथवेति। वाय्वादेस्सत्कार्यत्वाभावे अद्वितीयत्वासिद्धेः तदनुरोधेनापि सत्कार्यत्वं तस्येत्याह—सदेकमिति। एकमेवाद्वितीयमिति श्रुतेः सदेव सत्यमिति सिद्धं भवतीत्यन्वयः। तत्सिद्धेः फलमाह—तदेकस्मिन्निति। तत्तस्मादित्यर्थः। वस्तूक्तमिति पाठे तु एवं योजना-सद्विज्ञानेन सर्वविज्ञानमित्यत्र पूर्वाचार्यसम्वादं वक्तुं एतद्धे तद्विद्वांस इत्यादिवाक्यम्; तत्र तच्छब्दार्थोक्तिपूर्वकं व्याचष्टे—तदेकस्मिन्निति। अत्र तदिति श्रुतिगततत्पदग्रहणम्। गृहीतं तत्पदं व्याचष्टे—एकस्मिन्निति ॥ २-४ ॥

एकस्मिन् विज्ञाते सर्वं विज्ञातं भवतीति यद्वस्तूक्तं तदेतत् विद्वांस इत्यन्वयः। एतच्छब्देन च तेज आदिसृष्ट्यनुरूपं परामृश्यते। ततश्च यद्वस्तु ज्ञातं सत् सर्वविज्ञानसम्पादकमुक्तं यच्च तेजआदिस्रष्टृत्वेनोक्तं तदेतद्विद्वांस इति वाक्यं योजितमित्यर्थः। महाशाला इति। अन्नदानाद्यर्थं महत्यः शाला येषां ते इत्यर्थः। महत्त्वेन शालन्ते प्रथन्ते इति वा। त्रिवृत्कृतेभ्य इति। त्रिवृत्कृताग्न्यादिगतेभ्य इत्यर्थः। हिशब्दं व्याचष्टे—यस्मादिति। त आसुरिति

यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदाञ्चक्रुर्यदु शुक्लमिवाभूदित्यपाँ रूपमिति तद्विदाञ्चक्रुर्यदुकृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदाञ्चक्रुः ॥ ६ ॥ यद्वविज्ञातमिवाभूदित्येतासामेव देवतानाँ समास इति तद्विदाञ्चक्रुर्यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ७ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य चतुर्थः खण्डः

**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्माँ सं योऽणिष्ठस्तन्मनः ॥**

कथम् । यदन्यद्रूपेण सन्दिह्यमाने कपोतादिरूपे रोहितमिव यद्गृह्यमाणमभूत्तेषां पूर्वेषां ब्रह्मविदां तत्तेजसो रूपमिति विदाञ्चक्रुः तथा यच्छुक्लमिवाभूद्गृह्यमाणं तदपां रूपं यत्कृष्णमिव गृह्यमाणं तदन्नस्येति विदाञ्चक्रुरेवमेवात्यन्तदुर्लक्ष्यं यदु अप्यविज्ञातमिव विशेषतोऽगृह्यमाणमभूत्तदप्येतासामेव तिसृणां देवतानां समासः समुदाय इति विदाञ्चक्रुः । एवं तावद्बाह्यं वस्त्वग्न्यादिवविज्ञातं तथेदानीं यथा नु खलु हे सोम्येमा यथोक्तास्तिस्रो देवताः पुरुषं शिरःपाण्यादिलक्षणं कार्यकारणसङ्घातं प्राप्य पुरुषेणोपयुज्यमानास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहि निगदत इत्युक्त्वाऽऽह ॥ ६-७ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य चतुर्थः खण्डः

अन्नमशितं भुक्तं त्रेधा विधीयते जाठरेणाग्निना पच्यमानं त्रिधा विभज्यते । कथं, तस्यान्नस्य त्रिधा

आनन्दगिरिटीका

वेदनप्रकारमेवाऽऽकाङ्क्षापूर्वकं प्रकटयति—कथमित्यादिना । अन्यदग्न्यादिभ्यः सकाशादिति शेषः । यदनेकरूपत्वात्कपोतादिरूपेण सन्दिह्यमानमेतद्दृश्यते तस्मिन्कपोतादिस्वरूपे यत्किञ्चिद्रोहितमिव रूपं गृह्यमाणं पूर्वेषामासीत्तत्तेजसो रूपमिति ते विदितवन्त इति योजना । अत्यन्तदुर्लक्ष्यं नामरूपाभ्यां दुर्ज्ञानं द्वीपान्तरागतं पक्ष्यादीत्यर्थः । अगृह्यमाणमिति च्छेदः यथा नु खल्वित्यादिवाक्यं वृत्तानुवादपूर्वकमवतारयति—एवं तावदिति । यथाख ल्वेकैका देवता पुरुषं प्राप्य त्रिवृत्त्रिवृद्भवति तथेदानीं तदाध्यात्मिकं त्रिवृत्करणमेवमेवेति जानीहीति सम्बन्धः । आध्यात्मिकं त्रिवृत्करणमिति शेषः ॥ ६-७ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य चतुर्थः खण्डः

कथं त्रिधा विभज्यमानत्वं कथं वा तस्य विनियोग इति प्रश्नपूर्वकं विवृणोति—कथमित्यादिना ।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पाठे आसुरिति अस्तिधातुसमानार्थकं धात्वन्तरं; अन्यथा आसन्निति स्यात् । आहुरिति पाठे [इति] शब्दाध्याहारेण सद्विज्ञानात् सर्वज्ञा एव त इति न नोद्येत्यादिवाक्यमाहुरिति कथञ्चिद्योज्यम् । पूर्वं एभ्य इति पदं रोहितादिपरामर्शीत्युक्तम् । इदानीमग्न्यादिदृष्टान्तपरामर्शीत्याह—अथवेति ॥ ५ ॥

तदेव प्रश्नपूर्वकं विशदयति—कथमित्यादिना । ब्रह्मविदां गृह्यमाणमभूदित्यन्वयः ब्रह्मविदां मध्ये विदाञ्चक्रुरिति वा । एवमुक्तप्रकारेण पिण्डाद्बाह्ये त्रिवृत्करणं स्पष्टीकृत्य पिण्डेष्वपि तत्स्पष्टीकर्तुमुत्तरवाक्यमिति व्याचष्टे—एवं तावदिति । पुरुषेणोपभुज्यमानाः भुज्यमानाः पुरुषं प्राप्य एकैकं यथा त्रिवृद्भवति पिण्डात्मना विद्यमाना यथा त्रिवृद्भवति पिण्डस्य यथा स्वात्मकत्वमित्यर्थः । यद्वा यथा एकैका त्रिवृद्भवति त्र्यात्मकं शरीरं भवति तन्मे विजानीहीत्यन्वयः ॥ ६-७ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य चतुर्थः खण्डः

यथाश्रुते अन्नादीनां पुरुषादिरूपेण कथनं परं स्यात् । तच्चाप्रस्तुतं स्यादिति । अस्मिन् पिण्डे यन्मांसं यच्च मनः तदन्नम्, यल्लोहितं यश्च प्राणः ता आपः, यदस्थि मज्जा वाक् च तत्तेज इति । पिण्डस्य त्र्यात्मकत्वात्

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः॥ तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्॥**

विधीयमानस्य यः स्थविष्ठः स्थूलतमो धातुः स्थूलतमं वस्तु विभक्तस्य स्थूलोंऽशस्तत्पुरीषं भवति। यो मध्यमोंऽशो धातुरन्नस्य तद्रसादिक्रमेण परिणम्य मांसं भवति योऽणिष्ठोऽणुतमो धातुः स ऊर्ध्वं हृदयं प्राप्य सूक्ष्मासु हिताख्यासु नाडीष्वनुप्रविश्य वागादिकरणसङ्घातस्य स्थितिमुत्पादयन्मनो भवति मनोरूपेण विपरिणमन्मनस उपचयं करोति। ततश्चान्नोपचितत्वान्मनसो भौतिकत्वमेव न वैशेषिकतन्त्रोक्तलक्षणं नित्यं निरवयं चेति गृह्यते। यदपि मनोऽस्य दैवं चक्षुरिति वक्ष्यति तदपि न नित्यत्वापेक्षया किं तर्हि सूक्ष्मव्यवहितविप्रकृष्टादिसर्वेन्द्रियविषयव्यापकत्वापेक्षया। यच्चान्येन्द्रियविषयापेक्षया नित्यत्वं तदप्यापेक्षिकमेवेति वक्ष्यामः। सदेकमेवाद्वितीयमिति श्रुतेः॥ १॥

तथाऽऽपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति। यो मध्यमस्तल्लोहितं भवति। योऽणिष्ठः स प्राणो भवति। वक्ष्यति ह्यापोमयः प्राणो न पिबतो विच्छेत्स्यत इति॥ २॥

तथा तेजोऽशितं तैलघृतादि भक्षितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति। यो मध्यमः स मज्जाऽस्थ्यन्तर्गतः स्नेहः। योऽणिष्ठः सा वाक्। तैलघृतादिभक्षणाद्धि वाग्विशदा भाषणे समर्था भवतीति प्रसिद्धं लोके॥ ३॥

नरेन्द्रपुरीयं टिप्पणम्

तस्य कर्मफलस्य नाडीद्वारा भोक्तुः हिताख्या नाड्यः। मनसो दैवत्वविशेषणश्रवणान्नित्यत्वं नाशङ्कनीयमित्याह—**यदपीति**॥ १-३॥

आनन्दगिरिटीका

रसादीत्यादिशब्देन रुधिरादि गृह्यते। तस्य कर्मफलस्य नाडीचरो भोक्तेति हिताख्या नाड्यस्तास्विति यावत्। कथमन्नोपयोगात्प्रागेव मनसः सिद्धत्वात्तन्मनो भवतीत्युच्यते तत्राऽऽह—**मनोरूपेणेति**। मनसोऽन्नोपचितत्ववचनाद्वैशेपिकपरिभाषाऽपि दूषिता वेदितव्येत्याह—**ततश्चेति**। मनसो दैवत्वविशेषणान्नित्यत्वसिद्धिरित्याशङ्क्याऽऽह—**यदपीति**। केनाभिप्रायेण तर्हि विशेषणमित्याशङ्क्याऽऽह—**किं तर्हीति**। तर्हि चक्षुरादिभ्यो वैलक्षण्यादस्ति तदपेक्षया नित्यत्वमित्याशङ्क्याऽऽह—**यच्चेति**। यद्वा चक्षुरादिष्वसत्स्वपि मनसः सत्त्वोपलम्भात्तदपेक्षया तस्य नित्यत्वमेष्टव्यमित्याशङ्क्याऽऽह—**यच्चेति**। आत्मवन्मनसो नित्यत्वं किं न स्यादित्याशङ्क्याऽऽह—**सदिति**॥ १॥

भुक्तस्यान्नस्य त्रैविध्यमुक्त्वा पीतानामपामपि त्रैविध्यमाह—**तथेति**॥ २॥

कथं तेजसोऽन्यादित्यादेरशनमित्याशङ्क्य विशिनष्टि—**तैलेति**। मज्जाशब्दार्थमाह—**अस्थीति**। योऽणिष्ठः सा वागित्युक्तं व्यक्तीकरोति—**तैलघृतादीति**॥ ३॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

त्रयव्यतिरेकेणाभावः त्रयमेव सत्यम्। अनेन प्रकारेण मूलकारणमेव सत्यमिति तद्विज्ञानेन सर्वविज्ञानं तस्याद्वितीयत्वं च ज्ञातव्यमिति। अथवा मनोवाक्प्राणानाम् "सर्वे अनन्ता" इति श्रुत्यन्तरे अनन्तत्वोक्तेः वादिभिश्च कैश्चित् नित्यत्वाङ्गीकारात् सत्कार्यत्वाभावात् सर्वविज्ञानं न सिद्ध्यतीत्याशङ्क्य तेषां भौतिकत्वेन सद्विकारत्वं वक्तुं "अन्नमशितमि"त्यादिखण्डत्रयम्। धातुशब्दार्थमाह—**वस्त्विति**। तदेव स्पष्टयति—**विभक्तस्येति**। अन्नोपचितत्वं नराणां सर्वेषां तुल्यं तदन्वयव्यतिरेकवत्त्वादित्याह—**रसादीति**। तस्य रसस्य नाडीरक्षणसम्बन्धमाह—**ऊर्ध्वमित्यादिना**। ततश्च मनोवाक्प्राणानां प्राधान्येनान्नादिमयत्वं इतरेषां तु नान्तरीयकतया अन्नादिमयत्वमिति भावः। अन्नरसो मनो भवतीत्ययुक्तं पूर्वमेव मनसो विद्यमानत्वादित्याशङ्क्याह—**मनोरूपेणेति**। ननु वैशेषिकैः मनसो नित्यत्वाङ्गीकारात् कथं मनोरूपेण परिणाम इत्याशङ्क्य श्रुतिविरोधात् तन्मतमयुक्तमित्याह—**ततश्चेति**। "मनोऽस्य दैवं चक्षुः" इति श्रुत्यैव मनसो नित्यत्वमुक्तं नित्यत्वं विना दिव्यत्वानुपपत्तेरित्याशङ्क्याह—**यदपीति**। यद्यपि दिव्यशब्दो न नित्यशब्दपर्यायः तथापि दिव्यत्वमन्यत् न वक्तुं शक्यमिति शङ्कितुरभिप्रायः। ननु स्वप्ने इतरेन्द्रियनाशेपि मनसो विद्यमानत्वात् नित्यत्वमित्याशङ्क्याह—**यच्चेति**। सुषुप्ते मनसो विनाशं "स्वमपीतो भवति", इत्यत्र वक्ष्याम इत्याह—**तदपीति**। अद्वितीयत्वश्रुतिबलादपि न मनसो, नित्यत्वमित्याह—**सदेकमिति**॥१॥

प्राणस्यापोमयत्वे उत्तरश्रुतिं सम्वादयति—**वक्ष्यति हीति**॥ २॥

**अन्नमयँ् हि सोम्य मन अपोमयः प्राणस्तेजोमयी वागिति भूय एव •मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥**

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य पञ्चमः खण्डः

यत एवमन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक्। ननु केवलान्नभक्षिण आखुप्रभृतयो वाग्मिनः प्राणवन्तश्च तथाऽम्मात्रभक्ष्याः सामुद्रा मोनमकरप्रभृतयो मनस्विनो वाग्ग्मिनश्च तथा स्नेहपानामपि प्राणवत्त्वं चानुमेयं यदि सन्ति तत्र कथमन्नमयं हि सोम्य मन इत्याद्युच्यते। नैष दोषः। सर्वस्य त्रिवृत्कृतत्वात्सर्वत्र सर्वोपपत्तेः। न ह्यत्रिवृत्कृतमन्नमश्नाति कश्चिदापो वाऽत्रिवृत्कृताः पीयन्ते तेजो वाऽत्रिवृत्कृतमश्नाति कश्चिदित्यन्नादानामाखुप्रभृतीनां वाग्ग्मित्वं प्राणवत्त्वं चेत्याद्यविरुद्धम्। इत्येवं प्रत्यायितः श्वेकेतुराह—भूय एव पुनरेव मा मां भगवानन्नमयं हि सोम्य मन इत्यादि विज्ञापयतु दृष्टान्तेनावगमयतु नाद्यापि ममास्मिन्नर्थे सम्यङ्निश्चयो जातः। यस्मात्तेजोबन्नमयत्वेनाविशिष्टे देह एकस्मिन्नुपयुज्यमानान्यन्नाप्स्नेहजातान्यणिष्ठधातुरूपेण मनःप्राणवाच उपचिन्वन्ति स्वजात्यनतिक्रमेणेति दुर्विज्ञेयमित्यभिप्रायोऽतो भूय एवेत्याद्याह। तमेवमुक्तवन्तं तथाऽस्तु सोम्येति होवाच पिता शृण्वत्र दृष्टान्तं यथैतदुपपद्यते यत्पृच्छसि ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य पञ्चमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

व्यतिरेकासिध्याऽन्नादिमयत्वमाक्षिपति—ननु केवलेति। स्फुटान्नभक्षणाद्यनुपलम्भेऽपि जलचरादीनां यदेव भक्ष्यं तत्रैवान्नाद्यन्तर्भावान्मनस्वित्वाद्युपपत्तिरित्याह—नैष दोष इति। सर्वेषां सन्निधानाविशेषेऽन्नस्य सूक्ष्मांशो मन एवोपचिनोति न प्राणमिति कथं निश्चयः। पार्थिवमुपचिनोति स्वजातिसम्बन्धादिति न वाच्यम्, एकस्मिन् कुक्षिभाजने प्रविष्टानामन्नादीनां मिश्रीभूतत्वान्मनसश्च सर्वभूतगुणव्यञ्जकत्वेन सर्वभूतारब्धत्वात् पार्थिवत्वासिद्धेरित्याह—यस्मादिति ॥ ४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य पञ्चमः खण्डः

आनन्दगिरिटीका

भुक्तस्यान्नस्य पीतानामप्यपामशितस्य तैलादेश्च येऽणिष्ठा धातवस्ते मनोवाक्प्राणा इत्येवं यतः सिद्धमतस्तेषामन्नादिमयत्वं युक्तिमित्याह—यत इति। तेषामन्नादिमयत्वं व्यतिरेकासिद्धिमाश्रित्याऽऽक्षिपति—नन्विति। आखुप्रमुखानां(णां) स्फुटोदपादानाद्यनुपलम्भेऽपि यत्तेषां भक्ष्यं तत्रैवोदकान्तर्भावसम्भवात्प्राणादेरम्मयत्वाद्युपपन्नमित्युत्तरमाह—नैष दोष इति। सर्वस्यान्नादेस्त्रिवृत्कृतत्वस्योक्तत्वात्तस्य सर्वस्यैव भक्ष्यस्य भूतत्रयात्मत्वसम्भवादेकैकं भक्षयतोऽपि सर्वभक्षकत्वोपपत्तेर्मनआदेरन्नादिमयत्वमविरुद्धमित्यर्थः। उक्तमेव व्यक्तीकरोति—न हीत्यादिना। उक्तरीत्या मनआदेरन्नादिमयत्वप्रत्यायनद्वारा प्रनाड्या सन्मात्रपरिशेषे प्रत्यायिते सति श्वेतकेतुश्चोदयतीत्याह—इत्येवमिति। सर्वेषां सन्निधानाविशेषेऽन्नस्य सूक्ष्मांशो मन एवोपचिनोति न प्राणमिति निश्चयासिद्धिरित्याह—नाद्यापीति। पार्थिवमेवोपचिनोतीति विशेपमाशङ्क्याऽऽह—यस्मादिति। एकस्मिन्नुदरे प्रविष्टानामन्नादीनां मिश्रीभूतत्वान्मनसश्च सर्वभूतगुणव्यञ्जकत्वेन सर्वभूतारब्धत्वात्पार्थिवत्वासिद्धेर्नोक्तो विशेषः सम्भवतीत्यर्थः। यस्मादेवमभिप्रायः श्वेतकेतोरत इति योजना। मनआदेरन्नादिमयत्वमुपपादयितुमुत्तरग्रन्थमवतारयति—तमेवमिति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अग्न्यादेस्तेजसोऽशनानुपपत्तेः तेजश्शब्दार्थमाह—तैलेति। तस्य चक्षुरादितेजोवर्धकत्वात् तैजसत्वमिति भावः। मज्जाशब्दार्थमाह—अस्थ्यन्तर्गत इति। वाचस्तेजोमयत्वे लौकिकप्रसिद्धिं प्रमाणयति—तैलघृतादीति ॥ ३ ॥

वागादीनां तेजोमयत्वादिकं न सम्भवति व्यतिरेकव्यभिचारादिति शङ्कते—नन्विति। अन्नादिषु भूतान्तरांशानां विद्यमानत्वादाखुप्रभृतीनां वागादिमत्त्वं युक्तमिति परिहरति—नैष इति। स्वजात्यनतिक्रमेणेति। स्थूलस्य पुरीषादेः मध्यमस्य मांसादेश्च अन्नादिकार्यत्वमसाङ्कर्येण ज्ञातुं शक्यम्। तेषु अन्नाद्यनुगतेर्विद्यमानत्वात्।

दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥
एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥
अपाँ् सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥
तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥
अन्नमयँ् हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति
भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य षष्ठः खण्डः

दध्नः सोम्य मथ्यमानस्य योऽणिमाऽणुभावः स ऊर्ध्वः समुदीषति सम्भूयोर्ध्वं नवनीतभावेन गच्छति तत्सर्पिर्भवति ॥ १ ॥

यथाऽयं दृष्टान्त एवमेव खलु सोम्यान्नस्यौदनादेरश्यमानस्य भुज्यमानस्योदर्येणाग्निना वायुसहितेत खजेनेव मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति मनोऽवयवैः सह सम्भूय मन उपचिनोतीत्येतत् ॥ २ ॥

तथाऽपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवतीति ॥ ३ ॥

एवमेव खलु सोम्य तेजसोऽश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥

अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति युक्तमेव मयोक्तमित्यभिप्रायः। अतोऽन्नेजसो-

नरेन्द्रपुरीयं टिप्पणम

मिश्रीभावेऽपि सूक्ष्मभागस्योर्ध्वचलनं तावद्दृष्टमित्याह—दध्न इति ॥ १ ॥

सर्वभूतमयत्वेऽप्यन्नादिमयत्वाभिधानमन्नाद्यवयवबहुत्वाभिप्रायम्। खजो मन्थाः ॥ २-४ ॥

हृदयदेशे प्राणादिसन्निधानाविशेषे कथं मनस एवान्नरसेनोपचय इत्येतन्नाद्यापि परिहृतमित्यभिप्रेत्याह—मनस्त्वन्नमयमिति ॥ ५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य षष्ठः खण्डः

आनन्दगिरिटीका

यत्त्वं मनआदेरन्नादिमयत्वं कथमिति पृच्छसि तदिदं यथोपपद्यत्ते तथाऽत्रान्नादिमयत्वे तस्य दृष्टान्तमुच्यमानं शृण्विति योजना ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य पञ्चमः खण्डः

मिश्रीभावेऽपि सूक्ष्मभागस्य पृथगेव कार्यकारणत्वे दृष्टान्तमाह—दध्न इति ॥ १ ॥

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति। खजो मन्थास्तेन मथ्यमानस्य दध्नो यथाऽणिमा तथा यथोक्तस्यान्नस्य योऽणिमेति योज्यम्। कथं तन्मनो भवतीत्युच्यते प्रागपि मनसः सिद्धत्वादित्याशङ्क्याऽऽह—मनोऽवयवैरिति ॥ २-४ ॥

मनआदेरन्नादिमयत्वमुपसंहरति—अन्नमयं हीति। अतो भवदभिप्रायादिति यावत्। एतत्सर्वमिति

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मन आदिषु तु अन्नाद्यणिष्ठधातुकार्यत्वमसाङ्कर्येण दुर्ग्रहं तेषु स्पष्टमन्नादिकारणानुवृत्त्यभावादित्यर्थः। शृण्विति। यदन्नादिकार्यत्वं मन आदेः पृच्छसि तद्यथा उपपद्यते तथाऽत्र दृष्टान्तं शृण्वित्यन्वयः ॥ ४ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य पञ्चमः खण्डः

घृते विलीने दध्यंशानुगतिः स्फुटं न प्रतीयते अतिसूक्ष्मत्वेन अथापि दधिकार्यं घृतमित्यभ्युपगम्यते यथा, तथा मन आदिषु अन्नादिकारणानुगतेः स्फुटं प्रतीत्यभावेपि अन्नादिकार्यत्वमभ्युपगन्तव्यम्। कारणानुगतेर्विद्यमानाया अपि अतीन्द्रियत्वेन स्फुटप्रतीत्यभावोपपत्तेरित्याह—खजेनेति। खजः मन्थाः ॥ १-४ ॥

**षोडशकलः सोम्य पुरुषः पञ्चदशाहानि माऽशीः काममपः पिबाऽऽपोमयः प्राणो नपिबतो विच्छेत्स्यत इति ॥ १ ॥**

रस्त्वेतत्सर्वमेवम् । मनस्त्वन्नमयमित्यत्र नैकान्तेन मम निश्चयो जातोऽतो भूय एव मा भगवान्मनसोऽन्नमयत्वं दृष्टान्तेन विज्ञापयत्विति । तथा सोम्येति होवाच पिता ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य षष्ठः खण्डः

अन्नस्य भुक्तस्य योऽणिष्ठो धातुः स मनसि शक्तिमधात् साऽन्नोपचिता मनसः शक्तिः षोडशधा प्रविभज्य पुरुषस्य कलात्वेन निर्दिदिक्षिता । तया मनस्यन्नोपचितया शक्त्या षोडशधा प्रविभक्तया संयुक्तस्तद्वान्कार्यकरणसङ्घातलक्षणो जीवविशिष्टः पिण्डः पुरुषः षोडशकल उच्यते यस्यां सत्यां द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञाता सर्वक्रियासमर्थः पुरुषो भवति हीयमानायां च यस्यां सामर्थ्यहानिः । वक्ष्यति "चाथान्नस्याऽऽयी द्रष्टे"त्यादि । सर्वस्य कार्यकरणस्य सामर्थ्यं मनःकृतमेव । मानसेन हि बलेन सम्पन्ना बलिनो दृश्यन्ते लोके, ध्यानाहाराश्च केचिदन्नस्य

नरेन्द्रपुरीयं टिप्पणम्

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसेनोपचितत्वं दर्शयितुं अन्नरसकार्यां शक्तिं कलात्वेन कल्पयति—अन्नस्य भुक्तस्येत्यादिना । षोडशदिनावच्छेदेन षोडशधा कल्पनम् । आयो लाभोऽस्यास्तीत्यायी यावदन्नस्यात्ता तावदेव द्रष्टा भवतीत्यर्थः । मानस्या शक्त्या पुरुषष्षोडशकल इत्युक्तम् । तत्र लोकानुभवमाह—सर्वस्येति । मानसेनैव बलेन

आनन्दगिरिटीका

प्राणस्याम्मयत्वं वाचस्तेजोमयत्वं चोच्यते । हृदयप्रदेशे प्राणादिसंनिधानाविशेषे कथं मनस एवान्नरसेनोपचय इत्येतन्नाद्यापि समाहितमिति मत्वाऽऽह—मनस्त्विति । मनसो विशेषतोऽन्नमयत्वमुपपादयितुमुत्तरग्रन्थमुत्थापयति—तथेति ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य षष्ठः खण्डः

अन्वयव्यतिरेकाभ्यां मनसोऽन्नरसोपचितत्वं दर्शयितुमन्नरसजनितां शक्तिं कलात्वेन कल्पयति—अन्नस्येत्यादिना । षोडशदिनावच्छेदेन षोडशधा कल्पनं द्रष्टव्यम् । तथाऽपि पुरुषस्य कथं षोडशकलत्वमत आह—तयेति । तामेव प्रकृतामन्नरसकृतां शक्तिं विशिनष्टि—यस्यामिति । तया संयुक्तः पुरुषः षोडशकल इति पूर्वेण संबन्धः । अन्नरसजनितं मानसशक्तिप्रयुक्तं संघातस्य सामर्थ्यमित्यत्र वाक्यं प्रमाणयति—वक्ष्यति चेति । आयो लाभोऽस्यास्तीत्यायी यावदन्नं प्राप्यात्ता भवति तावदेवास्य द्रष्टेत्यादिव्यवहारः संभवतीत्यर्थः । उक्तेऽर्थे लोकानुभवमनुकूलयति—सर्वस्येति । तदेव स्पष्टयति—मानसेनेति । किंच केचिन्मानसेनैव बलेन ध्यानाहारा दृश्यन्ते तच्च ध्यानमन्नपरम्परापरिनिष्पन्नमन्नस्यैव देहादिरूपेण परिणतत्वादित्याह—ध्यानेति । एवं पातनिकां

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नैकान्तेन मम निश्चय इति । वैशेषिकाद्युक्तनित्यत्वादिसाधकयुक्तिबलादित्यर्थः । अनन्यथासिद्धान्वयव्यतिरेकबलात् वैशेषिकयुक्तिबाधमभिप्रेत्याह—तथा सोम्येति । षोडशकलस्सोम्येति पुरुषस्य षोडशकलत्वमुक्तमुपपादयति—अन्नस्येत्यादिना ॥ ५ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य षष्ठः खण्डः

अधादिति स्थापितवानित्यर्थः । न केवलं तत्संयोगमात्रं किन्तु द्रष्टृत्वादिसर्वव्यवहाराणां तन्मूलत्वात् तत्प्रधानश्चेत्याह—तद्वानिति । सर्वव्यवहाराणां तन्मूलत्वं अन्वयव्यतिरेकाभ्यामुपपादयति—यस्यामित्यादिना । अस्मिन्नर्थे श्रुतिमप्याह—वक्ष्यति चेति । अयनं आयः सोऽस्यास्तीत्यायी अन्नं भुक्तवानित्यर्थः । ननु चक्षुरादिसामर्थ्यमेव द्रष्टृत्वादौ हेतुः न मनस्सामर्थ्यमित्याशङ्क्य चक्षुरादिसामर्थ्यमपि मनःकृतमेवेत्याह—सर्वस्येति । कार्यं शरीरं करणमिन्द्रियाणि । कार्यादिसामर्थ्यं मानसमित्यत्रानुभवं प्रमाणमाह—मानसेन हीति । उत्साहिनो हि शरीरादिबलस्याल्पत्वेपि मानसेन बलेन बलवन्तो दृश्यन्त इत्यर्थः । ध्यानिनामपि मानसेन बलेन बलवत्त्वं दृश्यत इत्याह—ध्यानाहाराश्चेति । ध्यानमेवाहार इत्यनेन शरीरादिबलसाधनीभूतमाहारान्तरं नास्तीति

स ह पञ्चदशाहानि नाऽऽशाथ हैनमुपससाद किं ब्रवीमि भो इत्यृचः
सोम्य यजूँ्षि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति ॥ २ ॥
तँ् होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः
स्यात्तेन ततोऽपि न बहु दहेदेवँ् सोम्य ते षोडशानां कलानामेका
कलाऽतिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवस्यशानाथ मे विज्ञास्यसीति ॥ ३ ॥

सर्वात्मकत्वात् । अतोऽन्नकृतं मानसं वीर्यं षोडश कला यस्य पुरुषस्य सोऽयं षोडशकलः पुरुषः एतच्चेत्प्रत्यक्षीकर्तुमिच्छसि पञ्चदशसंख्याकान्यहानि माऽशीरशनं मा कार्षीः । काममिच्छातोऽपः पिब यस्मान्नपिबतोऽपस्ते प्राणो विच्छेत्स्यते विच्छेदमापत्स्यते यस्मादापोमयोऽब्विकारः प्राण इत्यवोचाम । न हि कार्यं स्वकारणोपष्टम्भमन्तरेणाविभ्रंशमानं स्थातुमुत्सहते ॥ १ ॥

स हैवं श्रुत्वा मनसोऽन्नमयत्वं प्रत्यक्षीकर्तुमिच्छन्पञ्चदशाहानि नाऽऽशाशनं न कृतवान् । अथ षोडशेऽहनि हैनं पितरमुपससादोपगतवानुपगम्य चोवाच किं ब्रवीमि भो इति । इतर आह ऋचः सोम्य यजूंषि सामान्यधीष्वेति । एवमुक्तः पित्राऽऽह—न वै मा मामृगादीनि प्रतिभान्ति मम मनसि न दृश्यन्त इत्यर्थो हे भो भगवन्निति ॥ २ ॥

एवमुक्तवन्तं पिताऽऽह—शृणु तत्र कारणं येन ते तान्यृगादीनि न प्रतिभान्तीति ( तं होवाच ) यथा लोके हे सोम्य महतो महत्परिमाणस्याभ्याहितस्योपचितस्येन्धनैरग्नेरेकोऽङ्गारः खद्योतपरिमाणः शान्तस्य परिशिष्टोऽवशिष्टः स्याद्भूतेनाङ्गारेण ततोऽपि तत्परिमाणादीषदपि न बहु दहेदेवमेव खलु सोम्य ते तवान्नोपचितानां षोडशानां कलानामेका कलाऽन्नयवोऽतिशिष्टाऽवशिष्टा स्यात्तया त्वं खद्योतमात्राङ्गारतुल्ययैतर्हीदानीं वेदान्नानुभवसि न प्रतिपद्यसे, श्रुत्वा च मे मम वाचमथाशेषं विज्ञास्यस्यशान भुङ्क्ष्व तावत् ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

ध्यानाहाराश्च केचिद्दृश्यन्ते तच्च ध्यानमन्नपरिणामपरम्परया निष्पन्नमित्याह—अन्नस्येति । मनोगतसर्वशक्तिरूपेणावस्थितत्वादित्यर्थः ॥ १ ॥

व्यतिरेकमुक्त्वा अन्वयप्रदर्शनायोपक्रमते—अशानेत्यादिना । त्वं तावदशान, अथ मया पृष्टः विज्ञास्यसि इति योजना ॥ २-४ ॥

### आनन्दगिरिटीका

कृत्वा षोडशकलशब्दार्थमाह—अत इति । यतोऽन्नकृतं मानसं वीर्यमतस्तदेव षोडशधा विभज्य कला यस्येति योजना । एतच्छब्देनान्नकृतं मानसं वीर्यं परामृश्यते । विच्छेत्स्यते विच्छेदमापत्स्यते यस्मात्तस्मादपः पिबेति पूर्वेण संबन्धः । अपां पानपरित्यागे प्राणविच्छेदे कारणमाह—यस्मादिति । प्राणस्याम्मयत्वेऽपि किमित्यपां परित्यागे तस्योच्छेदस्तत्राऽऽह—न हीति ॥ १-३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दर्शयति । केचिदित्यस्य मानसेन बलेन बलिन इति पूर्वानुषङ्गेणान्वयः । ननु अन्नकृतं मानसं बलमुक्तं तेज आदिसाध्यं च वागादिबलमुक्तं तत्कथं वागादिकरणस्य सर्वस्यापि मनोबलेन बलवत्त्वमित्यत आह—अन्नस्येति । त्रिवृत्कृतस्यान्नस्य तेज आदिभूतात्मकत्वात् मनोबलद्वारा वागादिबलाधायकत्वमिति मनोबलाधीनं वागादिबलमिति भावः । प्रकृतमुपसंहरन्नक्षराणि व्याचष्टे—अत इति । पञ्चदशाहानीत्याद्युत्तरवाक्यमवतारयति—एतच्चेति । मनसोऽन्नमयत्वमित्यर्थः । अनशने प्राणविच्छेदमाशङ्क्याह—काममिति । कारणे सति कार्यस्यापि भावं व्यतिरेकमुखेनाह—न हीति । भ्रश्यमानं विनाशि कार्यं कारणोपष्टम्भमन्तरेणापि स्थातुमुत्सहत इति न हि । अपि तु कारणोपष्टम्भे सत्येव स्थातुमुत्सहत इति व्यतिरेकपर्यवसानं द्रष्टव्यम् । यद्वा अपःपिबेत्युक्ते विपक्षे बाधकमुच्यते आपोमयः प्राण इत्यनेन । तत्र नपिबत इति नसमासः अपिबतः प्राणो विच्छेत्स्यत इति । तस्मिन् पक्षे हेतुपरं भाष्यं यथाश्रुतमेव द्रष्टव्यम् ॥१-३॥

स हाऽऽशाथ हैनमुपससाद तँ् ह यत्किञ्च पप्रच्छ सर्वँ् ह प्रतिपेदे ॥ ४ ॥
तँ् होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं
परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोऽपि बहु दहेत् ॥ ५ ॥
एवँ् सोम्य ते षोडशानां कलानामेका कलाऽतिशिष्टाऽभूत्साऽन्नेनोप-
समाहिता प्राज्वाली तयैतर्हि वेदाननुभवस्यन्नमयँ् हि सोम्य मन
आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य सप्तमः खण्डः

स ह तथैवाऽऽश भुक्तवानथानन्तरं हैनं पितरं शुश्रूषुरुपससाद तं होपगतं पुत्रं यत्किञ्चर्गादिषु पप्रच्छ ग्रन्थरूपमर्थजातं वा पिता स श्वेतकेतुः सर्वं ह तत्प्रतिपेदे ऋगाद्यर्थतो ग्रन्थतश्च ॥ ४ ॥

तं होवाच पुनः पिता यथा सोम्य महतोऽभ्याहितस्येत्यादि समानमेकमङ्गारं शान्तस्याग्नेः खद्योतमात्रं परिशिष्टं तं तृणैश्चूर्णैश्चोपसमाधाय प्राज्वलयेद्वर्धयेत् । तेनेद्धेनाङ्गारेण ततोऽपि पूर्वपरिमाणाद्बहु दहेत् ॥ ५ ॥

एवं सोम्य ते षोडशानामन्नकलानां सामर्थ्यरूपाणामेका कलाऽतिशिष्टाऽभूदतिशिष्टाऽऽसीत्पञ्चदशाहान्यभुक्तवत एकैकेनाह्नैकैका कला चन्द्रमस इवापरपक्षे क्षीणा साऽतिशिष्टा कला तवान्नेन भुक्तेनोपसमाहिता वर्धितोपचिता प्राज्वालि । दैर्घ्यं छान्दसं प्रज्वलिता वर्धितेत्यर्थः । प्राज्वालीदिति पाठान्तरं तदा तेनोपसमाहिता स्वयं प्रज्वलितवतीत्यर्थः । तया वर्धितयैतर्हीदानीं वेदाननुभवस्युपलभसे । एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरत्यन्नमयं हि सोम्य मन इत्यादि । यथैतन्मनसोऽन्नमयत्वं तव सिद्धं तथाऽऽपोमयः प्राणस्तेजोमयी वागित्येतदपि सिद्धमेवेत्यभिप्रायः । तदेतद्धास्य पितुरुक्तं मनआदीनामन्नादिमयत्वं विजज्ञौ विज्ञातवाञ्श्वेतकेतुः । द्विरभ्यासस्त्रिवृत्करणप्रकरणसमाप्त्यर्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य सप्तमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

उपसमाधाय, उपरि प्रक्षिप्योपचयं नीत्वेत्यर्थः ॥ ५-६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य सप्तमः खण्डः

आनन्दगिरिटीका

ऋगाद्यप्रतिभानं तत्रेत्युच्यते । ईषदपि न दहेत्कुतो बहु दहेदिति योजना ॥ ३-५ ॥

व्यावृत्तिर्व्यतिरेकोऽन्नोपयोगाभावे मनसः सामर्थ्याभावः । अनुवृत्तिरन्वयोऽन्नोपयोगे मनसः सामर्थ्यमिति भेदः । मनसोऽन्नमयत्वमुपपादयितुमुपक्रान्तमापोमयः प्राण इत्यादि कथमिहोच्यते तत्राऽऽह—यथैतदिति । विद्यासमाप्तिमन्तरेण कथं द्विर्वचनमित्याशङ्क्याऽऽह—द्विरभ्यास इति ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य सप्तमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अथशब्दस्य स्ववाक्यश्रवणानन्तर्यमर्थमाह—श्रुत्वेति ॥४॥

तृणशब्दोऽग्निप्रज्वलनहेतुमात्रोपलक्षणार्थं इत्याह—चूर्णैरिति । अत्यल्पैः शकलैरित्यर्थः ॥५॥

प्राज्वालीति दीर्घपाठे चिणन्तस्य ह्रस्वत्वात् दैर्घ्यं छान्दसमित्याह—दैर्घ्यमिति । तकारान्तपाठमाह—प्राज्वालीदिति वेति । अस्मिन् पक्षे णिजर्थाभावाद्व्याचष्टे—स्वयमिति । नन्वेवमन्वयव्यतिरेकाभ्यां मनसोऽन्नमयत्वस्य साधितत्वात् तदेवोपसंहर्तव्यं न प्राणादेरापोमयत्वादिकमित्याशङ्क्य न्यायस्य तुल्यत्वात् तदपि अनेनैव साधितप्रायमिति तदुपसंहारोऽपि युज्यत इति व्याचष्टे—यथैतदिति । अन्नमयत्वमिति । इदमुपलक्षणं—पिण्डादेर्बाह्यस्य चाग्न्यादेरेवं भौतिकत्वे स्थिते भूतव्यतिरेकेण तस्याभावात् भूतानां च मूलकारणव्यतिरेकेणाभावात् सदद्वैतं विजज्ञावित्यपि द्रष्टव्यम् ॥६॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य सप्तमः खण्डः

**'उद्दालको हाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानी-**
**हीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति**
**स्वमपीतो भवति तस्मादेनँ स्वपितीत्याचक्षते स्वँ ह्यपीतो भवति ॥ १ ॥**

यस्मिन्मनसि जीवेनाऽऽत्मनाऽनुप्रविष्टा परा देवताऽऽदर्शे इव पुरुषः प्रतिबिम्बेन जलादिष्विव च सूर्यादयः प्रतिबिम्बैः। तन्मनोऽन्नमयं तेजोऽम्मयाभ्यां वाक्प्राणाभ्यां संगतमधिगतम्। यन्मयो यत्स्थश्च जीवो मननदर्शन-

नरेन्द्रपुरीयं टिप्पणम्

त्रिवृत्करणमवान्तरप्रकरणं परिसमाप्य महाप्रकरणं सद्विषयं प्रस्तूयते। तत्रापि मनसो लये सुषुप्तौ जीवस्य सत्सम्पत्ति वक्तुं मन उपाधिकत्वमुक्तमनुवदति—यस्मिन्मनसीत्यादिना। स्वमपीतो भवतीति सुषुप्तग्रहणमुक्तम्।

आनन्दगिरिटीका

त्रिवृत्करणनिर्णयविषयमवान्तरप्रकरणं परिसमाप्य महाप्रकरणं सद्विषयमेवानुवर्तयन्मनसो लये सुषुप्तौ जीवस्य सत्संपत्ति वक्तुं मनउपाधिकत्वमुक्तमनुवदति—यस्मिन्निति। उपाधेः स्वरूपमुक्तं संचारयति—तन्मन इति। उपाध्युपहिते कार्यंकरत्वं दर्शयति—यन्मय इति। मनसो भावे जाग्रत्स्वप्नव्यवहारसिद्धिरित्युक्त्वा

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु सर्वस्य जडवर्गस्य ब्रह्मकार्यत्वेन ब्रह्मव्यतिरेकेणाभावात् तज्ज्ञानात् तन्मात्रज्ञानेऽपि जीववर्गस्य ब्रह्मा-कार्यत्वेन ब्रह्मव्यतिरेकात् तद्विज्ञानेन सर्वविज्ञानं सदद्वैतं च न सिद्ध्यति। न च सत एव जीवरूपेण प्रवेशेन तस्य सदभेदात् सर्वविज्ञानमिति वाच्यम्। उपपत्तिभिर्विना प्रत्यक्षादिसिद्धभेदस्य जीवस्य उपदेशमात्रेणाभेदप्रतीत्ययोगात् इत्याशङ्क्य प्रवेशवाक्यार्थमभेदमुपपत्तिभिः स्थिरीकर्तुमुद्दालको ह्यारुणिरित्यादि ब्राह्मणम्। तत्रादौ स्वप्नवाक्यस्य वृत्तेन ग्रन्थेन सङ्गतिं वक्तुं वृत्तं कीर्तयति—यस्मिन्मनसीति। यद्यपि तत्र देवतास्वेवानुप्रवेश उक्तः तथापि प्रवेश-कार्यस्य व्यवहारस्य सर्वस्यापि मनःप्रविष्ट एव दर्शनात् देवताशब्देन तत्कार्यं मनोऽपि गृह्यत इत्यभिप्रेत्य मनसि प्रविष्टेत्युक्तम्। मनस्येव विशेषेण प्रवेशस्यानुवादे हेतुं वदन् वर्तिष्यमाणं दर्शयति—यन्मय इति। यच्छब्दस्य

१. त्रिवृत्करणप्रकरणं परिसमाप्तम्। तेन विकारः सर्वोऽपि मिथ्या-वाचारम्भणमात्रः, ब्रह्मैव सत्यमिति निर्णीतम् तेन यद्विज्ञानात् सर्वं विज्ञातं भवति तदेव ब्रह्म। प्रपञ्चस्य सर्वस्य ब्रह्मविकारत्वात् तज्ज्ञानेन तत्त्वतो ज्ञातमित्यप्युक्तं भवति। परं तु अहमेव तद्ब्रह्मेति ज्ञानमेव मुक्तिसाधनम्। तत्पदार्थशोधनमपि पूर्वग्रन्थेन गतम्—सृष्ट्याद्युक्त्या तत्पदस्य मुख्यार्थः परमेश्वर उक्तः प्रपञ्चस्य वाचारम्भणमात्रत्वात् सत्पदार्थः स्वयंशुद्ध इति निर्णयात् तत्पदलक्ष्यार्थोऽपि स्मारितः।

इदानीं त्वंपदार्थमुक्त्वा तं परिशोध्य तस्य तत्पदार्थाभेदं तत्त्वमसीतिमहावाक्योपदेशेन प्रतिपाद-यिष्यामीति प्रवर्तते। तदर्थं जीवस्य सुषुप्तं तस्य ब्रह्माणि लयं च वदति। दिशं दिशं पतित्वेत्यनेन जाग्रत्स्वप्नरूपावस्थाद्वयमुक्तं स्वपितीति सुषुप्तं तेनावस्थात्रयविशिष्टो जीवः त्वंपदवाच्यार्थः सूचितः। तस्य सुषुप्ते ब्रह्माणि लयात् ब्रह्मणः स्वस्वरूपत्वोक्त्या, इतरावस्थयोः औपाधिकत्वसूचनात् त्वंपद-लक्ष्यार्थः शुद्धजीवोऽपि सूचितः। जीवस्य प्रतिबिम्बरूपत्वात् सुषुप्ते अन्तःकरणरूपोपाधिलयादेव च स्वस्वरूपप्राप्त्युक्त्वा शुद्धो जीव इत्युक्तं भवति। ततः तस्मै श्वेतकेतवे तत्त्वमसीत्युपदेशोऽपि पूर्णो भवति।

अत्र स्वमपीत इत्यादेः विशिष्टाद्वैतिनः तात्पर्यं—पूर्वं जडप्रपञ्चोपादानत्वमुक्तं, इदानीं चेतनस्यापि ब्रह्मोपादेयतां वक्तुं प्रस्तौति—उद्दालक इति। अत्र जीवस्य परमात्मनि लय उच्यते। तयोः भिन्नत्वात् कथमिदमिति चेत्; देवमनुष्याद्यभिमानरागादिविशिष्टजीवविशिष्टं ब्रह्म कालुष्यरहितजीवविशिष्टं सुषुप्तौ सम्पद्यते इत्यर्थः न तु लयः इत्याहुः अत्र स्वपितिनामनिर्वचनेन मुखतो लयः उक्तः। न चानुपादाने लयः सम्भवतीति जीवस्योपादानं ब्रह्म सर्वोपादानमिति ब्रह्मलक्षणमुक्तमित्याहुः।

श्रवणादिव्यवहाराय कल्पते तदुपरमे च स्वं देवतारूपमेव प्रतिपद्यते। तदुक्तं श्रुत्यन्तरे 'ध्यायतीव लेलायतीव सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमय" इत्यादि, "स्वप्नेन शारीरमि"त्यादि, "प्राणन्नेव प्राणो नाम भवती"त्यादि च। तस्यास्य मनस्स्थस्य मनआख्यां गतस्य मनउपशमद्वारेणेन्द्रियविषयेभ्यो निवृत्तस्य यस्यां परस्यां देवतायां स्वात्मभूतायां यदवस्थानं तत्पुत्रायाऽऽचिख्यासुरुद्दालको ह किलाऽऽरुणिः श्वेतकेतुं पुत्रमुवाचोक्तवान्।

स्वप्नान्तं स्वप्नमध्यं स्वप्न इति दर्शनवृत्तेः स्वप्नस्याऽऽख्या तस्य मध्यं स्वप्नान्तं सुषुप्तमित्येतत्। अथवा स्वप्नान्तं स्वप्नसतत्त्वमित्यर्थः तत्राप्यर्थात्सुषुप्तमेव भवति। स्वमपीतो भवतीति वचनात्। न ह्यन्यत्र

### आनन्दगिरिटीका

तदभावे सुषुप्तिमवतारयति—तदुपरमे चेति। आत्मनि मनोवशादेव दर्शनादिव्यवहारो न स्वारस्येनेत्यत्र बृहदारण्यकश्रुतिं प्रमाणयति—तदुक्तमिति। द्वितीये वाक्ये सधीरित्येतदुपयुज्यते। तृतीये तु विज्ञानमयो मनोमय इति च पदद्वयमुपजीव्यते। एवं भूमिकां कृत्वा समनन्तरवाक्यमादत्ते—तस्येति। तत्पुत्रायेत्यत्र तस्यां देवतायां तदवस्थानमिति तच्छब्दार्थः।

तत्रेति द्वितीयपक्षोक्तिः। अर्थादिति। स्वप्नस्य हि कार्यस्य सतत्त्वं कारणं तच्च सुषुप्तमेव। "सुषुप्ताख्यं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तस्यास्येति तच्छब्देनान्वयः। मननादिव्यवहारस्य मन उपाधिकत्वे श्रुतिमाह—तदुक्तमिति। बुद्धौ ध्यायन्त्यां स्वयं ध्यायतीव लेलायन्त्यां चेष्टमानायां स्वयं चेष्टत इवेत्यर्थः। स्वप्नो भूत्वा स्वप्नाभिमानी भूत्वा इमं जाग्रल्लोकमतिक्रामतीत्यर्थः। [ दर्शननिवृत्तेरिति पाठे स्वप्नशब्देनैव सुषुप्तमुक्त्वा तस्य मध्यं अन्तरालं स्वप्नान्तमिति व्याख्यातम्। तत्रैव पाठे व्याख्यानान्ते स्वप्नशब्देन दर्शनवृत्तिरुच्यत इति द्रष्टव्यम्। ] मनोमय इति मन उपाधिकमुपक्रम्य इदम्मयोऽदोमय इत्यन्तेन सर्वव्यवहारोक्तेश्च मन उपाधिकाधीनत्वं सर्वव्यवहाराणामित्याह—स वा अयमात्मेति। मन आख्यां गतस्येति। अनेन तन्मनो दिशं दिशं पतित्वेत्यत्र मनश्शब्देन जीवोऽभिधीयत इति दर्शयति। तत्पुत्रायेति। तां परां देवतां तदवस्थानं चेत्यर्थः। अनेन च अन्वयव्यतिरेकाभ्यां जीवत्वस्य मन उपाधिकत्वात् औपाधिक एव भेदः प्रत्यक्षादिसिद्धः। अभेदस्तु स्वाभाविक इत्युपपत्तिरुच्यते स्वप्नवाक्येनेत्युक्तम्। दर्शनवृत्तेरिति जाग्रत्स्वप्नसाधारणविशेषज्ञानमात्रमुच्यते; तस्य मध्यमिव मध्यं छिद्रं तद्रहितमिति यावत्। अनेन च विशेषविज्ञानरहितं सुषुप्तमुक्तं भवतीत्यर्थः। अन्तशब्दस्य नाशार्थकत्वमाश्रित्य व्याख्यानान्तरमाह—अथवेति। गजतुरगादिदर्शन-

---

तदिदं मुखत एव न शोभते। लयप्रतिपादकस्य कारणत्वे तात्पर्यस्यार्थिकार्थत्वात् अप्रकृतार्थत्वेन प्रकरणविरोधात्। जीवस्य लयोऽपि नास्त्येव नित्यत्वात् "न जीवो म्रियते" इति श्रुतेः नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्य इति सूत्राच्च। अस्मन्मते अग्निविस्फुलिङ्गवत् जीवोत्पत्तिश्रुतिः उपाध्युत्पत्तिपरा इति आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः इति श्रुतिसिद्धम्। भोक्तृत्वस्योत्पत्त्याद्युपलक्षणत्वात्। धर्मभूतज्ञानलयोक्तौ लक्षणापत्तिः। किञ्च यत्रैतत्पुरुषः स्वपिति नामेत्यत्र पुरुषः स्वशब्देन स्वमपीत इति वाक्यस्थेन परामृष्टव्यः तथा च जीवस्यैव लयो "न विदुरि"ति च तत्रैवान्वेति न पुरुषशरीरकपरमात्मनि। अज्ञानं च जीवद्वारा ब्रह्मणि सङ्गच्छते। प्राज्ञेनात्मना सम्परिष्वक्तः न बाह्यं किञ्चन वेदेति तु न लयपरं इत्यादिकं तु स्वमतस्य कथञ्चित् प्रदर्शनं न तु शब्दार्थः। यदपि सन्मूलाः सोम्येमाः सर्वाः प्रजाः इत्यत्र प्रजाशब्दस्य चिदचिन्मात्रपरत्वे ब्रह्मणः तदुपादानत्वासम्भवः अभेदाभावात् अतः ब्रह्मपर्यन्तत्वमिति। तदापि चिदचिच्छरीरकस्य ब्रह्मणः ब्रह्मोपादानमित्यापतति। अपि च "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यत्र प्रजाशब्दः चिदचिच्छरीरकब्रह्मपरः। तादृशं ब्रह्म सदुपादानकम्। सत् सूक्ष्मचिदचिच्छरीरकं ब्रह्म। सदायतना इत्यत्र प्रजाशब्देन शरीरभूतचेतनाचेतनमात्रमुच्यते तस्यैव सदन्तर्यामिकत्वात् विशिष्टब्रह्मणस्तदभावात्। केवलस्यैवान्तर्यामित्वात्। सत्प्रतिष्ठा इत्यत्र विशिष्टस्यैवान्तर्यामित्वात्। विशिष्टस्यैवोपादानत्वाच्च सच्छब्दः चिदचिद्विशिष्टपरः इत्यादिकं न प्रामाणिकम्। न हि एकप्रकरणगतसत्पदप्रजापदयोरर्थभेदो युक्तः।

सुषुप्तात्स्वमपीति जीवस्येच्छन्ति ब्रह्मविदः। तत्र ह्यादर्शापनयने पुरुषप्रतिबिम्ब आदर्शगतो यथा स्वमेव पुरुषमपीतो भवत्येवं मनआद्युपरमे चैतन्यप्रतिबिम्बरूपेण जीवेनाऽऽत्मना मनसि प्रविष्टा नामरूपव्याकरणाय परा देवता सा स्वमेवाऽऽत्मानं प्रतिपद्यते जीवरूपतां मनआख्यां हित्वा। अतः सुषुप्त एव स्वप्नान्तशब्दवाच्य इत्यवगम्यते। यत्र तु सुप्तः स्वप्नान्पश्यति तत्स्वाप्नं दर्शनं सुखदुःखसंयुक्तमिति पुण्यापुण्यकार्यम्। पुण्यापुण्ययोर्हि सुखदुःखारम्भकत्वं प्रसिद्धम्। पुण्यापुण्ययोश्चाविद्याकामोपष्टम्भेनैव सुखदुःखतद्दर्शनकार्यारम्भकत्वमुपपद्यते नान्यथेत्यविद्याकामकर्मभिः संसारहेतुभिः संयुक्त एव स्वप्न इति न स्वमपीतो भवति। "अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति" "तद्वा अस्यैतदतिच्छन्दा" "एष परम आनन्द" इत्यादिश्रुतिभ्यः। सुषुप्त एव स्वं देवतारूपं जीवत्वविनिर्मुक्तं दर्शयिष्यामीत्याह। स्वप्नान्तं मे मम निगदतो हे सोम्य विजानीहि विस्पष्टमवधारयेत्यर्थः।

कदा स्वप्नान्तो भवतीत्युच्यते। यत्र यस्मिन्काल एतन्नाम भवति पुरुषस्य स्वप्स्यतः। प्रसिद्धं हि लोके

नरेन्द्रपुरीयं टिप्पणम्

स्वप्नपक्षे तु स्वमपीतत्ववचनं न घटत इत्याह—यत्र तु सुप्त इत्यादिना। अविद्याकर्मणी तिरोहितार्थे असत्समे भवतस्सुपुप्ते। अतः स्वमपीतवचनं तत्र सम्भवति। स्वप्ने त्वविद्यादेरुद्भूतवृत्तित्वादनात्मतादात्म्यव्यवहारात् स्वमपीतत्ववचनं न सम्भवतीत्यर्थः। अविद्यादेः सुपुप्ते वीर्यतिरोधाने श्रुत्यन्तरं प्रमाणयति—अनन्वागतमिति।

आनन्दगिरिटीका

तमोऽज्ञानं बीजं स्वप्नप्रबोधयोरित्युभयापगमनात्। द्वितीयव्याख्याने सुषुप्तमेवार्थवशात्फलतीत्यर्थः। इतश्च स्वप्नान्तशब्देन साक्षादर्थाद्वा सुषुप्तमेवोक्तमित्याह—स्वमिति। नन्ववस्थान्तरेऽपि स्वमपीतो भवतीतिवचनमविरुद्धमिति चेन्नेत्याह—नहीति। तत्रापि कथं स्वापः स्यादित्याशङ्क्याऽऽह—तत्रेति। स्वपितिनामनिर्वचनसामर्थ्यसिद्धमर्थं निगमयति—अत इति। ननु स्वप्नान्तशब्दो बुद्धान्तशब्दवद्यदा स्वप्नमेवान्वचष्टे तदाऽपि स्वमपीतो भवतीत्यविरुद्धं सर्वदा जीवस्य सद्रूपब्रह्मप्राप्तेस्तुल्यत्वादत आह—यत्र त्विति। स्वप्नदर्शनस्य पुण्यापुण्यकार्यत्वं प्रकटयति—पुण्यापुण्ययोर्हीति। न केवलं पुण्यापुण्याभ्यामेव स्वप्ने संयुज्यते किन्त्वविद्यादिभिश्चेति न तत्र स्वाप्ययः संभवतीत्याह—पुण्यापुण्ययोश्चेति। तर्हि स्वप्नवन्न सुषुप्तेऽपि स्वाप्ययः स्यात्तत्रापि कामकर्मादिसंबन्धसंभवादित्याशङ्क्याऽऽह—अनन्वागतमिति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

लक्षणस्य स्वप्नस्याभावो जाग्रत्यपीति न सुषुप्तिलाभ इत्यत आह—तत्राप्यर्थादिति। वाक्यशेषसामर्थ्यादित्यर्थः। स्वपितीति वचनादिति पाठेऽपि स्वपितीत्यनेन स्वमपीतत्ववचनादित्येवार्थः। तदेव व्यतिरेकमुखेन स्पष्टयति—न ह्यन्यत्रेति। सुषुप्ते तु स्वमपीतत्वमस्तीत्याह—तत्र हीति। दर्शनवृत्तिरूपस्वप्ने तु स्वमपीतत्वं नास्तीत्येतदुपपादयति—यत्र तु सुप्त इति। तुशब्दः स्वप्नदर्शनमित्यनन्तरं सम्बध्यते। न केवलं पुण्यापुण्ययुक्तत्वादेव संसाररूपत्वं किन्तु अविद्याकामयुक्तत्वादपीत्याह—पुण्यापुण्ययोश्चेति। सुषुप्ते तु अविद्याकामकर्मरहितत्वेन स्वरूपप्राप्तेः श्रुतिसिद्धत्वात् स्वमपीतत्वं सुषुप्त एवेत्याह—अनन्वागतमित्यादिना। सुषुप्ते जीवस्वरूपं पुण्यपापाभ्यामनन्वागतं अननुगतं असंस्पृष्टमिति यावत्। अतस्तदा सुषुप्ते हृदयसम्बन्धिनः शोकान् सुखदुःखकामादीन् तीर्णः अतिक्रान्तो भवतीत्यर्थः। अस्य तदेतत्सौषुप्तं रूपं अतिच्छन्दं कामरहितमित्यर्थः।

एवं पुण्यापुण्यादिसर्वधर्मरहितस्य परमानन्दब्रह्मस्वरूपेणावस्थानं दर्शयति अनन्तरश्रुतिरित्याह—एष परम इति। आदिशब्देन "अथैष ए परम आनन्द एष ब्रह्मलोक" इत्यादीनां ग्रहणम्। जीवत्वविनिर्मुक्तमित्यनन्तरं अतस्सुषुप्तमेव स्वप्नान्तशब्देनोच्यत इति शेषः। अतश्शब्दाध्याहारेण अतस्सुषुप्त एवेत्यादिवाक्यमेव आवृत्या 'दर्शनीयं' इत्यनेनापि संबन्धनीयम्। पुरुषस्य स्वत इति। अनेन नामेति पदस्य नपुंसकस्य पुरुषपदेन सामानाधिकरण्येनान्वयानुपपत्तेः छान्दस्या प्रक्रियया प्रथमान्तं षष्ठ्यन्ततया व्याख्यातम्। किं तन्नामित्याकाङ्क्षायामाह—प्रसिद्धं हीति। हि लोके स्वपितीति इतिपदाध्याहारेण स्वपितीत्येतन्नाम भवतीत्यन्वयो दर्शितः। नामेतिपदं प्रसिद्धयर्थकं वा अस्तु इत्यभिप्रायेण प्रसिद्धं हीत्युक्तम्।

स्वपितीति। गौणं चेदं नामेत्याह। यदा स्वपितीत्युच्यते पुरुषस्तदा तस्मिन्काले सता सच्छब्दवाच्यया प्रकृतया देवतया संपन्नो भवति संगत एकीभूतो भवति। मनसि प्रविष्टं मनआदिसंसर्गकृतं जीवरूपं परित्यज्य स्वं सद्रूपं यत्परमार्थसत्यमपीतोऽपिगतो भवति। अतस्तस्मात्स्वपितीत्येनमाचक्षते लौकिकाः। स्वमात्मानं हि यस्मादपीतो भवति। गुणनामप्रसिद्धितोऽपि स्वात्मप्राप्तिर्गम्यत इत्यभिप्रायः। कथं पुनर्लौकिकानां प्रसिद्धा स्वात्मसंपत्तिः? जाग्रच्छ्रमनिमित्तोद्भूतत्वात्स्वापस्येत्याहुः। जागरिते हि पुण्यापुण्यनिमित्तसुखदुःखाद्यनेकायासानुभवाच्छ्रान्तो भवति। ततश्चाऽऽयस्तानां करणानामनेकव्यापारनिमित्तग्लानानां स्वव्यापारेभ्य उपरमो भवति। श्रुतेश्च "श्राम्यत्येव वाक्श्राम्यति चक्षुरि"त्येवमादि। तथा च 'गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मन" इत्येवमादीनि करणानि

नरेन्द्रपुरीयं टीप्पणम्

तदेतदस्यात्मनो रूपं सुषुप्ते अतिच्छन्दा दैर्घ्यं च्छान्दसं च्छन्दः कामः अतिच्छन्दमतिक्रान्तकाममित्यर्थः। गौणमिति। न रूढं किन्तु शब्दावयववललभ्यमित्यर्थः। सुषुप्ते स्वरूपावस्थानस्य मुख्यस्यासम्भवात् मुक्तत्वेऽनुत्थानप्रसङ्गात्स्वरूपावस्थानप्रसिद्धेर्निमित्तं वाच्यमित्याह—कथं पुनरिति। ज्वरादिरोगग्रस्तस्य स्वभावस्थितौ श्रमाभावः प्रसिद्धः सुषुप्तं च श्रमापनोदस्थानं ततः स्वरूपस्थितिप्रसिद्धिरित्याह—जाग्रच्छ्रमेति ॥ १ ॥

आनन्दगिरिटीका

सति जीवरूपे कथं देवताभावः संभवतीत्याशङ्क्याऽऽह—मनसीति। तस्मादित्यस्यातःशब्दो व्याख्यानं तेन परामृष्टं हेतुमेव स्पष्टयति—स्वमात्मानमिति। स्वपितिनामनिर्वचनफलं दर्शयति—गुणेति। सुषुप्ते स्वरूपावस्थानस्य मुख्यस्यासंभवान्मुक्तत्वेनानुत्थानप्रसङ्गात्स्वरूपावस्थानप्रसिद्धेर्निमित्तं वक्तव्यमिति पृच्छति—कथं पुनरिति। ज्वरादिरोगग्रस्तस्य स्वभावस्थितौ प्रसिद्धः श्रमाभावः सुषुप्तं च श्रमापनोदावस्थानं तथा च तत्र स्वरूपस्थितिप्रसिद्धिरविरुद्धेत्याह—जाग्रदिति। संगृहीतं समाधानं विवृणोति—जागरिते हीति। करणानामनेकव्यापारनिमित्ता ग्लानिर्भवतीत्यत्र मानमाह—श्रुतेश्चेति। अनुभवसमुच्चयार्थश्चकारः सुषुप्त्यवस्थायां करणानामुपरतौ प्रमाणमाह—तथा चेति। सुषुप्तौ प्राणस्यापि वागादिवदुपसंहृतत्वमाशङ्क्याऽऽह—करणानीति। अन्यथा मृतिभ्रान्तिः स्यादिति भावः जीवस्यापि वहिर्व्यापारः स्यादिति चेन्नैवं करणा-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अस्मिन् पक्षे एतत्पदमेव तन्नामेति तन्नामधेयवाचीति भावः। तिङन्तस्यापि स्वपितीत्यस्य नामत्वं विद्याप्रकाशे उपपादितम्।

तिङन्तपदमज्ञानां सुबन्तं तु विवेकिनाम्।
स्यान्निद्राणस्य नामेदं वस्तुतत्त्वावभासकम् ॥

इति। स्वपितिनाम्नोऽर्थपर्यालोचनया जीवस्य ब्रह्मप्राप्तिः सुप्तौ गम्यत इति वक्तुं सता सोम्येत्यादिवाक्यम्। तस्य यदेत्यतः प्राक्तनस्याभिप्रायमाह—गौणं चेदं नामेति। अन्वर्थमित्यर्थः। आहेत्यनन्तरं सता सोम्येत्यादिनेति शेषः। तत्र सता सोम्येत्यादिवाक्यं नामावयवार्थस्य सुप्ते जीवे सत्त्वप्रदर्शनार्थं तद्व्याचष्टे—यदेति। उक्तस्य सत्सम्पत्तिरूपस्यार्थस्य नामावयववाच्यत्वं दर्शयितुं स्वमपीत इति वाक्यं तदुपपादयन् व्याचष्टे—मनसीति। नामावयवार्थसद्भावात् जीवस्य तस्मिन् गौणं नामेत्युपसंहृतुं तस्मादिति वाक्यम्। तद्व्याचष्टे—अतः तस्मादिति। अत इति तस्मादित्यस्यार्थकथनम्। सिद्धवदुक्तसत्सम्पत्तौ लोकप्रसिद्धिं प्रमाणयितुं स्वं ह्यपीत इति वाक्यं तद्व्याचष्टे—स्वमिति। नाम्नोऽन्वर्थतोपपादनस्य प्रयोजनं स्पष्टयति—गुणनामेति। प्रसिद्धेर्मूलाभावात् प्रसिद्धिरसिद्धेत्याक्षिपति—कथं पुनरिति। जाग्रच्छ्रमापनुत्त्यर्थत्वात्स्वापस्य श्रमापनयनस्य च ज्वरितादिषु स्वरूपावस्थानेनैव दृष्टत्वात् तेन विनानुपपत्तेः स्वरूपावस्थानलक्षणसत्संम्पत्तिसिद्धिरित्यर्थापत्तिरनुमानं वा प्रसिद्धेर्मूलमिति परिहरति—जाग्रत इत्यादिना। जाग्रच्छ्रमान्निमित्तात् तन्निवृत्त्यर्थमुत्पन्नत्वादित्यर्थः। एतदेव श्रमप्रदर्शनपूर्वकं विशदयति—जागरिते हीति। आयस्तानामिति आ समन्तात् विक्षिप्तानामित्यर्थः। स्वापावस्थानामितिपाठे अस्य पदस्य स्वव्यापारेभ्य उपरम इत्यनेन सम्बन्धः। तत्र श्रमे व्यापारोपरमे च यथाक्रमं श्रुतिमाह—श्रुतेश्चेति। करणव्यापाराभावे शरीरनाशः स्यादित्याशङ्क्य प्राणव्यापारसद्भावात् नायं दोष

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वाऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनँ हि सोम्य मन इति ॥ २ ॥**

प्राणप्रस्तानि । प्राण एकोऽश्रान्तो देहे कुलाये यो जागर्ति तदा जीवः श्रमापनुत्तये स्वं देवतारूपमात्मानं प्रतिपद्यते । नान्यत्र स्वरूपावस्थानाच्छ्रमापनोदः स्यादिति युक्ता प्रसिद्धिर्लौकिकानां स्वं ह्यपीतो भवतीति । दृश्यते हि लोके ज्वरादिरोगग्रस्तानां तद्विनिर्मोके स्वात्मस्थानां विश्रमणं तद्वदिहापि स्यादिति युक्तम् । "तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्त" इत्यादिश्रुतेश्च ॥ १ ॥

तत्रायं दृष्टान्तो यथोक्तेऽर्थे—स यथा शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः पाशितो दिशं दिशं बन्धनमोक्षार्थी सन्प्रतिदिशं पतित्वाऽन्यत्र बन्धनादायतनमाश्रयं विश्रमणायालब्ध्वाऽप्राप्य बन्धनमेवोपश्रयते । एवमेव यथाऽयं दृष्टान्तः खलु हे सोम्य तन्मनस्तत्प्रकृतं षोडशकलमन्नोपचितं मनो निर्धारितं तत्प्रविष्टस्तत्स्थस्तदुपलक्षितो जीवस्तन्मन इति निर्दिश्यते मञ्चाक्रोशनवत् । स मनआख्योपाधिर्जीवोऽविद्याकामकर्मोपदिष्टां दिशं दिशं सुखदुःखादिलक्षणां जाग्रत्स्वप्नयोः पतित्वा गत्वाऽनुभूयेत्यर्थः । अन्यत्र सदाख्यात्स्वात्मन आयतनं विश्रमणस्थानमलब्ध्वा प्राणमेव प्राणेन सर्वकार्यकरणाश्रयेणोपलक्षिता प्राण इत्युच्यते सदाख्या परा देवता । "प्राणस्य प्राणं"

### नरेन्द्रपुरीयं टिप्पणम्

न केवलं प्रकरणात् परा देवता प्राणशब्देन लक्ष्यते अन्यत्र प्रयोगदर्शनाच्चेत्याह—प्राणस्य प्राण इति ॥२॥

### आनन्दगिरिटीका

भावादित्याह—तदेति । ननु सुषुप्ते श्रमापनोदार्थं न स्वरूपावस्थानं तत्कृतो लौकिकी प्रसिद्धिरित्याशङ्क्याऽऽह—नान्यत्रेति । उक्तमर्थं लौकिकदृष्टान्तेन स्पष्टयति—दृश्यते हीति । बृहदारण्यकश्रुत्यालोचनायामपि सुषुप्त्यवस्थायामवस्थाद्वयजनितश्रमापोहार्थं ब्रह्मनीडप्राप्तिर्गम्यत इत्याह—तद्यथेति ॥ १ ॥

तत्रेति सुषुप्त्यवस्थोच्यते । यथोक्तोऽर्थो हि जीवस्य ब्रह्मण्यवस्थानं तस्मिन्निति यावत् । सशब्दो दृष्टान्तविषयः शकुनिविषयो वा । अप्राप्येति च्छेदः । यथा मञ्चाक्रोशनेन मञ्चस्थो देवदत्तो लक्ष्यते तथा तन्मन इति मनसि स्थितो जीवो लक्ष्यो भवतीत्याह—मञ्चाक्रोशनवदिति । न केवलं प्रकरणात्प्राणशब्देन परा देवता

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इत्याह—करणानीति । एवमपि जीवस्य सत्सम्पत्तौ किमायातं तत्राह—तदेति । करणव्यापारोपरमदशायामित्यर्थः । उपसंहरति—इति युक्तमिति । श्रमापनयः स्वरूपावस्थानेनैवेति कुत इत्याशङ्क्य दृष्टत्वादित्याह—दृश्यते हीति । आयस्तानामिति । आयासं प्राप्तानामित्यर्थः । न केवलं दर्शनमेवात्र, श्रुतिश्चेममर्थमाहेत्याह—तद्यथेति । सुपर्णः क्षिप्रश्येनः स यथा आहारार्थं विविधं पतित्वा श्रान्तःपक्षी सङ्कोच्य स्वनीडायैव गच्छति, एवं जीवः जाग्रच्छ्रमापनुत्तये सुषुप्तिं प्रति गच्छतीत्यर्थः ॥ १ ॥

उक्तमेवार्थं दृष्टान्तेन प्रदर्शयितुं स यथा शकुनिरिति वाक्यमिति व्याचष्टे—तत्रायमिति । पाशित इति पाशेन ग्रन्थिविशेषेण बद्ध इत्यर्थः । बन्धनादिति । बध्यतेऽस्मिन्निति बन्धनं तत्स्थानमुच्यते । मनश्शब्देन जीवोपलक्षणे सम्बन्धमाह—तत्प्रविष्ट इति । न केवलं प्रवेशमात्रं मनस्तादात्म्यं प्राप्त इत्याह—तत्स्थ इति । मञ्चेति । मञ्चाः क्रोशन्तीत्यत्र यथा मञ्चशब्देन तत्स्था बाला लक्ष्यन्ते तद्वदित्यर्थः । सनसा [ सो ] बाह्यदिक्पतने शरीरनाशापत्त्या बहिर्गमनासम्भवादाह—सुखदुःखादिलक्षणामिति । प्राणशब्देन परदेवतालक्षणायां सम्बन्धमाह—प्राणेनेति । करणाश्रयेण प्राणिन आत्मा तत्प्रेरकत्वेन तत्प्रकाशकत्वेन च लक्ष्यते ज्ञायत इत्यर्थः । प्राणेनात्मा लक्ष्यत इत्यत्र श्रुतिमाह—प्राणस्येति । प्राणस्यापि प्राणनसामर्थ्यरूपं आत्मानं ये विदुः ते ब्रह्मनिश्चिक्युरित्युदाहृतश्रुत्यर्थः । प्राणशरीर इति प्राणःशरीरवदुपाधिस्तस्येत्यर्थः । प्राणशब्देन परदेवताभिधानं युक्तमित्युपसंहरन्

**अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाऽऽप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितँ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ३ ॥**

"प्राणशरीरो भारूप" इत्यादिश्रुतेः। अतस्तां देवतां प्राणं प्राणाख्यामेवोपश्रयते। प्राणो बन्धनं यस्य मनसस्तत्प्राणबन्धनं हि यस्मात्सोम्य मनः प्राणोपलक्षितदेवताश्रयं मन इति तदुपलक्षितो जीव इति ॥ २ ॥

एवं स्वपितिनामप्रसिद्धिद्वारेण यज्जीवस्य सत्यस्वरूपं जगतो मूलं तत्पुत्रस्य दर्शयित्वाऽऽहान्नादिकार्यकारणपरम्परयाऽपि जगतो मूलं सद्दिदर्शयिषुः। अशनापिपासे अशितुमिच्छाऽशना यालोपेन। पातुमिच्छा पिपासा ते अशनापिपासे अशनापिपासयोः सतत्त्वं विजानीहीत्येतत्। यत्र यस्मिन्काल एतन्नाम पुरुषो भवति। किं तत् ?

नरेन्द्रपुरीयं टिप्पणम्

पुरुषः अशिशिषतीत्येतन्नाम पुरुषस्य भवतीति योजना ॥ ३-५ ॥

आनन्दगिरिटीका

लक्ष्यतेऽन्यत्र प्रयोगदर्शनाच्चेत्याह—प्राणस्येति। प्राणशब्देन परदेवतालक्षणायां फलितमाह—अत इति। प्राणमेवोपश्रयते विज्ञानात्मेत्यत्र हेतुमाह—प्राणबन्धनमिति ॥ २ ॥

वृत्तमनूद्यानन्तरवाक्यमुत्थापयति—एवमिति। आहाशनापिपासे सोम्येत्यादीति शेषः। किमभिप्रायः सन्पिता पुत्रं प्रत्येवमाहेत्याकाङ्क्षायामाह—अन्नादीति। अन्नादीनि कार्याणि कारणान्यबादीनि तेषां या परम्परा तयाऽपि जगतो यत्सल्लक्षणं मूलं तद्दर्शयितुमिच्छन्पिता पुत्रं प्रत्यशनेत्यादिकं वाक्यमाहेत्यर्थः। अशनेत्यस्य सन्नन्तत्वाभावेऽपि कथं तदर्थो व्याख्यायते तत्राऽऽह—अशनेति। यकारस्य लोपेनास्मिन्प्रयोगे सन्प्रत्ययः प्रयुक्तस्तथाच तदर्थोक्तिरविरुद्धेत्यर्थः। तत्राशनायापिपासयोः सतत्त्वं विज्ञापयति—यत्रेति। सामान्येनोक्तं नाम विशेषतो ज्ञातुं पृच्छति—किं तदिति। यत्कठिनमन्नं पुरुषेणाशितं तत्पीता आपो नयन्त इति संबन्धः। तदेति

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वाक्यार्थमाह—अतस्तामिति। प्राणबन्धनवाक्यस्य पदार्थमुक्त्वा वाक्यार्थमाह—प्राणोपलक्षितेति। मनश्शब्देनापि पूर्ववत् जीव एव लक्ष्यत इत्याह—मन इति। तदुपलक्षित इति ॥ २ ॥

ननु सच्छब्दितायां परस्यां देवतायां मानसिद्धायां सैव जीवस्वरूपमिति सुषुप्ति [ गते ] न स्वपितिनाम्ना निर्धारयितुं शक्यते सैव नास्तीत्याशङ्क्य सद्वस्तुप्रसाधनपूर्वकं तत्स्वरूपत्वं जीवस्य प्रसाधयितुं सद्वस्तु साध्यत इत्याह—एवमिति। दर्शयित्वेति। अनेन पूर्ववाक्यमपि श्रुतौ जीवोपसम्पत्तिपरं न सद्वस्तुन्यपि प्रमाणमिति दर्शयति। आहेत्यस्य दिदर्शयिषुरिति व्यवहितेत सम्बन्धः। अन्नादीत्यादिशब्देन अप्तेजसोर्ग्रहणम्। अन्नादिकार्यस्य शरीरस्य या कारणपरम्परा तयेत्यर्थः।

अशनायेति वक्तव्ये यलोपश्छान्दस इत्याह—अशना यालोपेनेति। अशनायापिपासयोर्न ज्ञेयत्वं स्फुटत्वादित्याशङ्क्याह—अशनापिपासयोस्तत्त्वमिति। तत्त्वं उत्पत्तिप्रकारमित्यर्थः। तत्प्रकारे विचार्यमाणे एतत् सिद्धयति अशितान्नस्य पीताभिरद्भिः रसादिभावेन परिणामेन नयनात् क्षुज्जायते, ततोऽशनाया जायते तथा पीतानामपां भुक्तेन तेजसा लोहितादिरूपेण परिणामेन शोषणात् पिपासा जायते ततश्चाशनायापिपासाभ्यां अन्नन्नयोः रसादिभावेन परिणामो गम्यते। एवं च रसाद्यात्मकं शरीरमवन्नकार्यं सत् कारणपरम्परया मूलकारणमनुमापयतीति। तत्र कदा अशनाया भवतीत्यत आह—यत्रेति। यस्मिन् काले अशिशिषति इति नाम पुरुषस्य भवति तदा अशनाया भवतीत्यध्याहारः एतन्नामा पुरुषो भवतीति सिद्धार्थकथनमात्रं श्रुतौ। अन्वयस्तु पूर्ववदेव पुरुषपदं प्रथमान्तं पष्ठ्यन्ततया स्पष्टीकृत्य पुरुषस्यैतन्नाम भवतीत्येवं द्रष्टव्यम्। एतन्नाम पुरुषो भवतीति भाष्ये ह्रस्वपाठे नामशब्दः प्रसिद्धयर्थो द्रष्टव्यः। एतत्पुरुषो भवतीति नाम प्रसिद्धमिति।

**तस्य क्व मूलँ स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापो मूलमन्विच्छाऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥**

अशिशिषत्यशितुमिच्छतीति। तदा तस्य पुरुषस्य किंनिमित्तं नाम भवतीत्याह। यत्तत्पुरुषेणाशितमन्नं कठिनं पीता आपो नयन्ते द्रवीकृत्य रसादिभावेन विपरिणमयन्ते तदा भुक्तमन्नं जीर्यति। अथ च भवत्यस्य नामाशिशिषतीति गौणम्। जीर्णे ह्यन्नेऽशितुमिच्छति सर्वो हि जन्तुः।

तत् तत्र अपामशितनेतृत्वादशनाया इति नाम प्रसिद्धमित्येतस्मिन्नर्थे। यथा गोनायो गां नयतीति गोनाय इत्युच्यते गोपालः। तथाऽश्वान्नयतीत्यश्वनायोऽश्वपाल इत्युच्यते। पुरुषनायः पुरुषान्नयतीति राजा सेनापतिर्वा। एवं तत्तदाऽप आचक्षते लौकिका अशनायेति विसर्जनीयलोपेन। तत्रैवं सत्यद्भी रसादिभावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं वटकणिकायामिव शुङ्गोऽङ्कुर उत्पतित उद्गतस्तमिमं शुङ्गं कार्यं शरीराख्यं वटादिशुङ्गवदुत्पतितं हे सोम्य विजानीहि। किं तत्र विज्ञेयमित्युच्यते। शृण्विदं शुङ्गवत्कार्यत्वाच्छरीरं नामूलं मूलरहितं भविष्यतीत्युक्त आह श्वेतकेतुः॥ ३ ॥

यद्येवं समूलमिदं शरीरं वटादिशुङ्गवत्तस्यास्य शरीरस्य क्व मूलं स्याद्भवेदित्येवं पृष्ट आह पिता। तस्य क्व मूलं स्यादन्यत्रान्नादन्नं मूलमित्यभिप्रायः। कथम्। अशितं ह्यन्नमद्भिर्द्रवीकृतं जाठरेणाग्निना पच्यमानं रसभावेन परिणमते। रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रम्। तथा

### आनन्दगिरिटीका

परिणामावस्थोक्तिः। अथेत्यन्नस्य भुक्तस्य जीर्णत्वानन्तर्यमुच्यते। कथं तदा नाम्नो गौणत्वं तदाह—जीर्णे हीति।

तद्यथेत्यत्र तच्छब्दार्थमाह—तत्तत्रेति। एतस्मिन्नर्थे दृष्टान्त उच्यत इति शेषः। अशनायेति कथमपामाख्यानमशनाया इति हि वक्तव्यं तत्राऽऽह—विसर्जनीयेति। तत्रेत्यस्य व्याख्यानमेवं सतीत्यपामशितनेतृत्वे सतीत्यर्थः। अद्भिः पीताभिरिति शेषः। तत्रेति शरीरनिर्देशः॥ ३ ॥

अन्नस्य देहमूलत्वमाकाङ्क्षापूर्वकं व्युत्पादयति—कथमित्यादिना। तथा पुरुषभुक्तान्नवदिति यावत्।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अद्भिरशितस्य रसादिभावेन परिणामं वक्तुं पृच्छति—तदेति। किन्निमित्तं नामेति। नामार्थस्य अशितुमिच्छायाः किं निमित्तमित्यर्थः। आप एवेति वाक्येन उत्तरमाह—यत्तदिति। तथापि कथमशितुमिच्छा भवतीत्याशङ्क्य प्राणस्थितिहेतोरन्नस्याभावे जाठराग्निना तापे क्षुद्भवति ततोऽशितुमिच्छा जायते इत्याह—तदा भुक्तमिति। एवमशनेच्छायां सत्यां अन्वर्थं अशिशिषतीति नाम भवतीत्याह—अथेति। उक्तेन क्रमेण अशनेच्छा जायत इत्यत्र न स्फुटं प्रमाणमस्तीत्याशङ्क्य अन्वयव्यतिरेकाभ्यामुक्तमर्थं स्थिरीकरोति—जीर्णे हीति। पूर्ववाक्ये अशनायाशब्दस्य बुभुक्षार्थत्वं लोकप्रसिद्ध्या स्वीकृत्य अशितुमिच्छा अशनायेति व्याख्यातम्। इह योगप्रसिद्ध्या अन्नामत्वं स्वीकृत्य अपामन्नपरिणमयितृत्वं नामप्रसिद्ध्यापि साधयति—तत्रेति। योगप्रसिद्धिं दृढीकर्तुं दृष्टान्तमाह—इत्येतस्मिन्निति। अप्शब्दविशेषणत्वात् अशनाया इति बहुवचनेन भवितव्यमित्याशङ्क्याह—विसर्जनीयेति। तत्रैतच्छुङ्गमित्यत्र तत्रशब्दार्थमुक्त्वा एतच्छब्दार्थमाह—अद्भिरित्यादिना। शरीरमित्यनन्तरं निष्पादितमिति पदान्वयेन वाक्यं पूरणीयम्। तत्र दृष्टान्तमाह—वटेति। पदार्थमुक्त्वा वाक्यार्थमाह—तमिममिति। शरीरस्य कार्यत्वं स्पष्टमिति तस्य न यत्नतोऽपि विज्ञेयत्वमित्यत आह—किं तत्रेति। तस्य कार्यत्वं विज्ञेयमिति नोच्यते किन्तु तस्य मूलमित्याह—शृण्विति॥ ३ ॥

तस्य क्व मूलं स्यादिति वाक्यमनुषङ्गेण उत्तरेऽपि योजयति—इत्येवमिति। शरीरस्य शुक्रशोणितमूलत्वात् कथमन्नमूलत्वमिति पृच्छति—कथमिति। तयोरन्नपरिणामत्वात् तद्द्वारा अन्नमूलत्वमित्याह—अन्नमित्यादिना। रसादिभावेनेत्यादिशब्दपाठे तदेव विवृणोति—रसादीति। रसभावेनेति पाठस्तु स्पष्टः।

**अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा
गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति
तत्रैतदेव शुङ्गमुत्पतितँ् सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

योषिद्भुक्तं चान्नं रसादिक्रमेणैवं परिणतं लोहितं भवति। ताभ्यां शुक्रशोणिताभ्यामन्नकार्याभ्यां संयुक्ताभ्यामन्नेनैव प्रत्यहं भुज्यमानेनाऽऽपूर्यमाणाभ्यां कुड्यमिव मृत्पिण्डैः प्रत्यहमुपचीयमानोऽन्नमूलो देहशुङ्गः परिनिष्पन्न इत्यर्थः। यत्तु देहशुङ्गस्य मूलमन्नं निर्दिष्टं तदपि देहवद्विनाशोत्पत्तिमत्त्वात्कस्माच्चिन्मूलादुत्पतितं शुङ्ग एवेति कृत्वाऽऽह। यथा देहशुङ्गोऽन्नमूल एवमेव खलु सोम्यान्नेन शुङ्गेन कार्यभूतेनापो मूलमन्नस्य शुङ्गस्यान्विच्छ प्रतिपद्यस्व। अपामपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमेवेति अद्भिः सोम्य शुङ्गेन कार्येण कारणं तेजो मूलमन्विच्छ। तेजसोऽपि विनाशोत्पत्तिमत्त्वाच्छुङ्गत्वमिति तेजसा सोम्य शुङ्गेन सन्मूलमेकमेवाद्वितीयं परमार्थसत्यम्। यस्मिन्सर्वमिदं वाचाऽऽरम्भणं विकारो नामधेयमनृतं रज्ज्वामिव सर्पादिविकल्पजातमध्यस्तमविद्यया तदस्य जगतो मूलमतः सन्मूलाः सत्कारणा हे सोम्येमाः स्थावरजङ्गमलक्षणाः सर्वाः प्रजा न केवलं सन्मूला एवेदानीमपि स्थितिकाले सदायतनाः सदाश्रया एव। नहि मृदमनाश्रित्य घटादेः सत्त्वं स्थितिर्वाऽस्ति। अतो मृद्वत्सन्मूलत्वात्प्रजानां सदायतनं यासां ताः सदायतनाः प्रजाः। अन्ते च सत्प्रतिष्ठाः सदेव प्रतिष्ठा लयः समाप्तिरवसानं परिशेषो यासां ताः सत्प्रतिष्ठाः॥ ४॥

अथेदानीमप्शुङ्गद्वारेण सतो मूलस्यानुगमः कार्य इत्याह। यत्र यस्मिन्काल एतन्नाम पिपासति पातु-

### आनन्दगिरिटीका

तथाऽपि कथं सतो मूलस्य सिद्धिरत आह—यत्त्विति। सतो मूलस्य वास्तवं रूपं दर्शयति—एकमिति। तस्य सर्वकल्पनाधिष्ठानत्वेन परिणामवादं व्युदस्यति—यस्मिन्निति। अध्यासे मूलकारणमाह—अविद्ययेति। प्रजाः सर्वाः सन्मूलाः सदायतनाश्चेत्युक्तमर्थं दृष्टान्तेन समर्थयते—न हीति। सत्प्रतिष्ठाः सदायतनाश्चेत्यनयोरर्थभेदाभावमाशङ्क्याऽऽह—अन्ते चेति। प्रतिष्ठाशब्दस्य लयवाचित्वादायतनशब्दस्य चाऽऽश्रयविषयत्वान्न पौनरुक्त्यमित्यर्थः। लयशब्दस्य सुषुप्त्यादिविषयत्वं वारयति—समाप्तिरिति। सम्यगाप्तिः समाप्तिरिति प्राप्तिरत्र विवक्षितेति शङ्कां वारयति—अवसानमिति। तस्याभावत्वेन तुच्छरूपत्वं निरस्यति—परिशेष इति॥ ४॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

संयुक्ताभ्यां परिनिष्पन्नो देहशुङ्गोऽन्नमूल इत्यन्वयः। न केवलमन्नकार्याभ्यां शुक्रशोणिताभ्यां निष्पन्नत्वादन्नजन्यः किन्तु अन्नेनोपचीयमानत्वादपीत्याह—अन्नेनैव चेति। चकारः उपचीयमानश्चेत्यत्रान्वयी। यदेतत् तेजसो मूलं सत् तत् प्रधानमिमि साङ्ख्याः। तान्वारयति—एकमेवाद्वितीयमिति। प्रधानं तु पुरुषेण सद्वितीयत्वात् स आत्मेति वाक्यशेषविरोधान्न सच्छब्दवाच्यमित्यर्थः। कार्येण सद्वितीयत्वात् ब्रह्मणोऽपि नाद्वितीयत्वमित्याशङ्क्याह—यस्मिन्निति। सदायतनत्वे सन्मूलत्वं हेतुत्वेन योजयति—अतो मृद्वदिति। आयतनशब्देन प्रतिष्ठाशब्दस्य पौनरुक्त्यं वारयति—लय इति। लयशब्देनाभावाभिधाने असत्त्वाशङ्कायामाह—समाप्तिरिति। संयोग एवाप्तिरिति शङ्कित्वा आह—अवसानमिति। तेन अभावत्वमुक्तमित्याशङ्क्याह—परिशेष इति। तास्सद्रूपेण परिशिष्यन्त इत्यर्थः। एवं तावदशनायया भुक्तस्यान्नस्य रसादिरूपेण परिणामं ज्ञात्वा रसाद्यात्मकस्य शरीरस्यान्नकार्यत्वं निश्चित्य अन्नकार्येण देहेन मूलकारणानुमानप्रकार उक्तः॥ ४॥

इदानीं पिपासया पीतस्य जलस्य लोहितादिरूपेण परिणामं ज्ञात्वा लोहिताद्यात्मकस्य शरीरस्य अप्कार्यत्वं निश्चित्य तेनापि रूपेण मूलकारणानुमानप्रकारः कथ्यते उत्तरवाक्येनेत्याह—अथेदानीमिति। अथेत्यस्य इदानीमित्यर्थमुक्त्वा अध्याहृतैः पदैः वाक्यं पूरयति—अप्शुङ्गेति। आहेत्यत्र श्रुतिरुद्दालको वा कर्तृत्वेन सम्बध्यते। यया पिपासया लोहितादिपरिणामो गम्यते, अन्यथा पीतस्य जलस्य विद्यमानत्वात् पिपासैव न स्यात्। सा पिपासा कदा भवतीत्यत आह—यत्रेति। पुरुषः पिपासतीत्येतन्नाम भवति

**तस्य क्व मूलँ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य[1] सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥६॥**

मिच्छतीति पुरुषो भवति। अशिशिषतीतिवदिदमपि गौणमेव नाम भवति। द्रवीकृतस्याशितस्यान्नस्य नेत्र्य आपोऽन्नशुङ्गं देहं क्लेदयन्त्यः शिथिली कुर्युरब्बाहुल्याद्यदि तेजसा न शोष्यन्ते। नितरां च तेजसा शोष्यमाणास्वप्सु देहभावेन परिणममानासु पातुमिच्छा पुरुषस्य जायते तदा पुरुषः पिपासति नाम तदेतदाह। तेज एव तत्तदा पीतमवादि शोषयद्देहगतलोहितप्राणभावेन नयते परिणमयति। तद्यथा गोनाय इत्यादि समानमेवं तत्तेज आचष्टे लोक उदन्येत्युदकं नयतीत्युदन्यम्। उदन्येतीति च्छान्दसं तत्रापि पूर्ववत्। अपामप्येतदेव शरीराख्यं शुङ्गं नान्यदित्येवमादि समानमन्यत् ॥ ५ ॥

सामर्थ्यात्तेजसोऽप्येतदेव शरीराख्यं शुङ्गम्। अतोऽप्शुङ्गेन देहेनाऽऽपो मूलं गम्यते। अद्भिः शुङ्गेन तेजो

### आनन्दगिरिटीका

अन्नाख्यशुङ्गद्वारा सतो मूलस्याधिगतेरनन्तरमित्यथशब्दार्थः। पिपासतीत्येतन्नाम पुरुषो यस्मिन्काले भवतीति योजना। कथं पिपासतीत्येतन्नाम पुरुषस्य गौणमित्याशङ्क्याऽऽह—द्रवीकृतस्येति। भवत्वपां तेजसा शोष्यमाणत्वं किं तावतेत्याशङ्क्याऽऽह—नितरां चेति। तदा पानेच्छावस्थायामित्यर्थः। तेजसो यदुदकनेतृत्वमुक्तं तत्र श्रुतिमवतार्य व्याचष्टे—तदेतदाहेति। उदन्यमिति वक्तव्ये कथमुदन्येत्युक्तं तत्राऽऽह—उदन्येतीति। तत्रापि तेजस्यपीत्येतत्। यथाऽशनायेति च्छान्दसं तथा तेजस्युदन्येत्यपि च्छान्दसमेवेत्याह—पूर्ववदिति। अन्नद्वारा सतो मूलस्याधिगमवदम्बुद्वाराऽपि तस्याधिगतिरस्तीत्याह—अपामपीति ॥ ५ ॥

तेजःशुङ्गद्वाराऽपि सतो मूलस्य प्रतिपत्तिरस्तीत्याह—सामर्थ्यादिति। त्रिवृत्करणवशादिति यावत्।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तदा पिपासा भवतीत्यर्थः। तत्र निमित्तमाह—द्रवीकृतस्येत्यादिना। अतितरां तेजसा शोष्यमाणास्वप्सु पातुमिच्छा जायत इत्यन्वयः। तेजसा अपां शोषणे प्रमाणमाह—द्रवीकृतस्येति। तेजसा अपां लोहितादिरूपेण नयने पिपासाशब्दपर्यायमुदन्याशब्दं प्रमाणयितुं अशनायाशब्दस्य अप्स्विव तस्य तेजसि यौगिकत्वं दृष्टान्तैः साधयति—तद्यथेति। लोकप्रसिद्ध्यपेक्षया यौगिकप्रसिद्धेरादर्तव्यतायां पूर्ववत् दृष्टान्तबाहुल्यमिति ज्ञेयम्। तेजसो नपुंसकत्वात् उदन्यमिति वक्तव्ये उदन्येति च्छान्दसमित्याह—उदन्येतीति। एवमप्शुङ्गत्वं शरीरस्य ज्ञात्वा तेनापि प्रकारेण मूलकारणानुमानं पूर्ववद्योज्यमित्याह—तत्रापीति ॥ ५ ॥

ननु यथा देहस्य अन्नशुङ्गत्वेन अप्शुङ्गत्वेन च मूलकारणानुमापकत्वं एवं तेजश्शुङ्गत्वेनापि तदनुमापकत्वं किमिति श्रुत्या नोक्तं तस्य भूतत्रयकार्यत्वाविशेषादित्याशङ्क्य तदप्यर्थादुक्तमित्याह—सामर्थ्यादिति। भूतत्रयकार्यत्वसामर्थ्यादित्यर्थः। अत इत्यनन्तरं यथाशब्दमध्याहृत्य सन्मूलं गम्यत इत्यनन्तरं तथा तेजश्शुङ्गेन देहेन तेजोमूलं गम्यते तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववदित्यध्याहृत्य वाक्यं योज्यम्। अतः अप्शुङ्गेनेत्यस्य स्थाने अतस्तेजश्शुङ्गेन देहेन तेजसो मूलं गम्यते, तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववत् इत्येतावन्मात्रमेव पाठो यद्यस्ति तदा सुगमम्। सामर्थ्यात् तेजश्शुङ्गत्वेनापि मूलानुमापकत्वं विवक्षितं इत्यत्र हेतुं वदन् उक्तानुवादपूर्वकं उत्तर-

---

१. अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते, मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् इति वाक्यान्यधिकृत्य ब्रह्मसूत्रे विचाराः—

(१) वाङ्मनसि दर्शनाच्छब्दाच्च (ब्र० सू० ४-२-१) अत्र किं वृत्तिमत्या वाचः मनसि लयः अभिप्रेतः उत वाग्वृत्तेः लय इति सन्देहे मनसि वागेव लीयत इति पूर्वपक्षे वाग्वृत्तेरेव मनोवृत्तावस्थितायां लयः इति अवगन्तव्यम्। दर्शनात् मुमूर्षोः मनसाविषयावगमः वाग्वृत्तेरभावश्च दृश्यते—शब्दाच्च वृत्तिवृत्तिमतोरभेदोपचारात् शब्दोऽपि सङ्गच्छते।

मूलं गम्यते। तेजसा शुङ्गेन सन्मूलं गम्यते पूर्ववत्। एवं हि तेजोबन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रस्यान्नादिपरम्परया परमार्थसत्यं सन्मूलमभयमसंत्रासं निरायासं सन्मूलमन्विच्छेति पुत्रं गमयित्वाऽशिशिषति पिपासतीति नामप्रसिद्धिद्वारेण यदन्यदिहास्मिन्प्रकरणे तेजोबन्नानां पुरुषेणोपभुज्यमानानां कार्यकरणसंघातस्य देहशुङ्गस्य स्वजात्यसांकर्येणोपचयकरत्वं वक्तव्यं प्राप्तं तदिहोक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशति। यथा नु खलु येन प्रकारेणेमास्तेजोबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यन्नमशितं त्रेधा विधीयत इत्यादि। तत्रैवोक्तमन्नादीनामशितानां ये मध्यमा धातवस्ते साप्तधातुकं शरीरमुपचिन्वन्तीत्युक्तम्।

नरेन्द्रपुरीयं टिप्पणम्

सामर्थ्यादिति। त्रिवृत्कृतत्वबलादित्यर्थः। वक्तव्यं प्राप्तमिति। अयमर्थः। पृथिव्यन्तरिक्षस्वर्गब्रह्मलोकेषु पार्थिवाप्यतैजसवायवीयानि व्यवस्थया शरीराणीत्याह वैशेषिकः। कथमस्मदादिशरीरस्यैवान्नादिशुङ्गत्वमिति

आनन्दगिरिटीका

शरीरस्य भूतत्रयकार्यत्वमतःशब्दार्थः। यथा पूर्वमन्नशुङ्गेन देहेनान्नाख्यं मूलं गम्यत इत्यादि व्याख्यातं तथा तेजःशुङ्गेन देहेन तेजो मूलं गम्यत इत्यादि व्याख्येयमित्याह—**पूर्ववदिति**। वृत्तानुवादपूर्वकं यथेत्यादिवाक्यमादत्ते—**एवं हीति**। उक्तया रीत्या नामद्वयप्रसिद्धिद्वारेण यथोक्तदेहाख्यशुङ्गस्यान्नादिकारणपरम्परया सदाख्यं मूलमुक्तविशेषणं सन्मूलमन्विच्छेत्युपदेशेन श्वेतकेतुं ज्ञापयित्वा व्यवस्थया शरीरमेकैकभूतारब्धमित्याक्षेपे प्राप्ते यदस्मिन्प्रकरणे तेजःप्रभृतीनामुपयुज्यमानानां स्वस्वभावानुसारेण संघातस्योपचयकरत्वं वक्तव्यं प्राप्तं तदिह सर्वशरीरेषु सर्वभूतकार्योपलम्भाद्व्यवस्थायां प्रमाणाभावाद्दृश्यमाने संघाते कस्य भूतस्य कियत्कार्यमित्यपेक्षायामन्नमशितमित्यादावुक्तमेव द्रष्टव्यमिति पूर्वोक्तं व्यपदिशतीति योजना। सतो मूलस्य व्यवहारसत्यत्वं वारयति—**परमार्थेति**। वस्तुतो नाविद्यासंबन्धस्तस्यास्तीत्याह—**अभयमिति**। अविद्याकार्यसंबन्धोऽपि परमार्थतो न तस्यास्तीत्याह—**असंत्रासमिति**। उभयसंबन्धाभावे समुत्खातनिखिलदुःखत्वेन परमानन्दत्वं तस्य सिध्यतीत्याह—**निरायासमिति**। पूर्वोक्तमेव व्यक्तीकरोति—**तत्रैवेति**। किं तदन्नमशितमित्यादावुक्तं तत्राऽऽह—**अन्नादीनामिति**। साप्तधातुकं त्वगसृङ्मांसमेदोमज्जास्थिशुक्राख्याः सप्त धातवस्तेषां संहतिरूपमित्यर्थः।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वाक्यमवतारयति—**एवं हीति**। देहशुङ्गस्य तेजोबन्नमयत्वं तेजश्शुङ्गत्वेनापि मूलानुमाने हेतुरत्रोक्तः निरायासमित्यनन्तरं गमितं भवतीति शेषः।

एवंशब्दानुषङ्गेण एवं सन्मूलमित्युत्तरवाक्यमपि योज्यम्। नामप्रसिद्धिद्वारेणेत्यस्य पुत्रं गमयित्वेति पूर्वेणान्वयः। तदिहेति पूर्वोक्तमेवेह द्रष्टव्यमित्यन्वयः। मध्यमा धातवः इत्युपलक्षणं तेजः स्थूलधातोरपि अस्थ्नः शरीरोपचयकरत्वात्। अत एव अस्थि भवति मज्जा भवतीत्युक्तम्। एवं स्वपितिनामनिर्वचनेन मनोद्वारा अशिशिषतिपिपासतिनामनिर्वचनेन देहद्वारा च सदात्मानमवबोध्य वागादिकरणद्वारा तल्लयाधारत्वेन तदुद्भवस्थानत्वेन

(२) **अत एव सर्वाण्यनु**—(ब्र० सू० ४-२-२) मनः प्राणे इत्यत्रापि आगृहीतसर्वेन्द्रियवृत्तिमनः प्राणवृत्तावस्थितायां वृत्तिद्वारेणैव लीयते न स्वरूपतः अतत्प्रकृतित्वात्।

(३) **सोऽध्यक्षे तदुपगमादिभ्यः**—(ब्र० सू० ४-२-४) सः प्राणः अध्यक्षे अविद्याकर्मपूर्वप्रज्ञोपहिते जीवे लीयते तदुपगमादिभ्यः, "एवमेवेममन्तकाले सर्वे प्राणा अभिसमायन्ति तमुत्क्रामन्तं प्राणोऽनूत्क्रामति" इत्यादिश्रुतिभ्यः। प्राणस्तेजसीत्यत्र तु मध्ये जीवः उपसंख्यातव्यः जीवसहितः प्राणः तेजसि तेजः उपलक्षितेषु पञ्चभूतसूक्ष्मांशेषु लीयत इत्यर्थः।

अत्र तेजश्शब्दः पञ्चभूतपरः इत्यत्र सूत्रम्—**भूतेषु तच्छ्रुतेः** इति (ब्र० सू० ४-२-५)।

**नैकस्मिन् दर्शयतो हि**—(ब्र० सू० ४-२-६) इत्यनेन तेजश्शब्दः पञ्चभूतसूक्ष्मांशपरः पृथिवीमयः आपोमयः इतिश्रुतेः 'अण्व्यो मात्राऽविनाशिन्यो दशार्धानां च याः स्मृता' इति स्मृतेश्च।

"मांसं भवति लोहितं भवति मज्जा भवत्यस्थि भवति ये त्वणिष्ठा धातवो मनः प्राणं वाचं देहस्यान्तःकरणसंघातमुपचिन्वन्ती"ति चोक्तं "तन्मनो भवति स प्राणो भवति सा वाग्भवती"ति।

सोऽयं प्राणकरणसंघातो देहे विशीर्णे देहान्तरं जीवाधिष्ठितो येन क्रमेण पूर्वदेहात्प्रच्युतो गच्छति तदाह-अस्य हे सोम्य पुरुषस्य प्रयतो म्रियमाणस्य वाङ्मनसि संपद्यते मनस्युपसंह्रियते। अथ तदाऽऽहुर्ज्ञातयो न वदतीति। मनःपूर्वको हि वाग्व्यापारः। "यद्वै मनसा ध्यायति तद्वाचा वदति" इति श्रुतेः। वाच्युपसंहृतायां मनसि मनो मननव्यापारेण केवलेन वर्तते। मनोऽपि यदोपसंह्रियते तदा मनः प्राणे संपन्नं भवति सुषुप्तकाल इव तदा पार्श्वस्था ज्ञातयो न विजानातीत्याहुः। प्राणश्च तदोर्ध्वोच्छ्वासी स्वात्मन्युपसंहृतबाह्यकरणः संवर्गविद्यायां दर्शनाद्धस्तपादादीन्विक्षिपन्मर्मस्थानानि निकृन्तन्नन इवोत्सृजन् क्रमेणोपसंहृतस्तेजसि सम्पद्यते। तदाऽऽहुर्ज्ञातयो न चलतीति मृतो नेति वा विचिकित्सन्तो देहमालभमाना उष्णं चोपलभमाना देह उष्णो जीवतीति यदा तदप्यौष्ण्यलिङ्गं तेज उपसंह्रियते तदा तत्तेजः परस्यां देवतायां प्रशाम्यति।

### नरेन्द्रपुरीयं टिप्पणम्

शङ्कायां सर्वशरीरेषु सर्वभूतकार्योपलम्भात् व्यवस्थायां प्रमाणाभावादस्मिन् सङ्घाते कस्य भूतस्य कियत्कार्यमेतावदत्र वक्तव्यं प्राप्तमिति। साप्तधातुकमिति रसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः। एतेषां संहतिरित्यर्थः। मरणावस्थाद्वारेणापि सत्तत्त्वं निरूपयितुं प्रक्रमते—सोऽयं प्राणकरणसंघात इत्यादिना। अन इवोत्सृजन्निति। सम्भृतशकटवच्छब्दं कुर्वन्नित्यर्थः। तेज इति भूतसूक्ष्मं लक्ष्यते॥ ६॥

### आनन्दगिरिटीका

तेजोबन्नकार्यभूतदेहशुङ्गद्वारा सत्तत्त्वं निरूपितमिदानीं मरणद्वारेणापि तन्निरूपयितुमारभते—सोऽयमिति। तदाहेत्यत्र क्रमवद्गमनं तदित्युक्तम्। वाग्व्यापारस्य मनसि लये हेतुमाह—मनःपूर्वको हीति। प्राणसंपत्तिर्मनसस्तदधीनत्वम्। मनोव्यापारनिवृत्त्यवस्था तदेत्युच्यते। प्राणश्च तदेत्यविज्ञानावस्था कथ्यते। कथं प्राणस्य स्वात्मन्युपसंहृतबाह्यकरणत्वं तदाह—संवर्गविद्यायामिति। तत्र हि प्राणः संवृङ्क्ते वागादीनिति

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

च सदात्मानं बोधयितुं मरणक्रम उच्यते इत्याह—सोऽयमिति। अत एव सुषुप्तौ सत्सम्पत्तिरुक्ता मरणेऽपि पुनस्सैवोच्यत इति पुनरुक्तिशङ्का न कार्या उक्तप्रकारेण भेदात्। किञ्च तत्र प्राणस्य विद्यमानत्वात् सत्सम्पत्तिर्न स्फुटा इह तु तस्याप्यभावात् सत्सम्पत्तिं स्पष्टं वक्तुं पुनरुक्तिरर्थवतीति न स दोषः। वाचो मनःप्रकृतिकत्वाभावात् तत्र लयो न युक्तः कार्यस्य स्वोपादाने लयनियमादित्याशङ्क्य वाचो न स्वरूपेण मनसि लयः किन्तु स्वव्यापारोपरमेण तस्या मनोनुवृत्तितामात्रं तत्सम्पत्तिरित्याह—मनसीति। उपसंह्रियत इति। वाग्वृत्तिरित्यर्थः। वाग्व्यापारोपरम एव लोकप्रसिद्धिरस्तीत्याह—अथेति। वाग्व्यापारस्यैव मनःपूर्वकत्वश्रवणात् तस्यैव तत्रोपसंहार इत्याह—मनःपूर्वको हीति। वदतीति वाग्व्यापार एवोक्त इति भावः। ननु मनसोऽपि करणत्वाल्लये सति कथं तत्र वाक्सम्पत्तिरित्याशङ्क्य उत्तरकाले लयेऽपि कञ्चित्कालं तस्य स्थितिरस्तीत्याह—वाचीति। सुषुप्तिकाल इवेति। अत एव तदा करणानि प्राणग्रस्तानि इत्युक्तमिति भावः। एवं मनसोऽपि प्राणे वृत्तिलय एवेत्याह—तदेति। न विजानातीत्यनेन वृत्तिलय एवोक्त इतिभावः। प्राणश्च तेजसि सम्पद्यत इति व्यवहितान्वयः। वाङ्मनसीत्यत्र वाचो ग्रहणं सर्वकरणोपलक्षणं ततश्च मनोद्वारा सर्वकरणानां प्राणे उपसंहार इत्याह—स्वात्मनीति। "प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मन" इति संवर्गविद्यावाक्ये वाचा कर्मेन्द्रियोपलक्षणात् चक्षुःश्रोत्राभ्यां च ज्ञानेन्द्रियोपलक्षणात् सर्वकरणोपसंहारसिद्धिरित्याह—संवर्गेति। प्राणस्योपसंहारे लिङ्गं दर्शयन् तत्कालस्थितिमाह—हस्तेति। मर्मस्थाननिकृन्तनं नाम तेषु बन्धनरूपेण विद्यमानस्य प्राणस्य ततो विश्लेषः। तस्मात् हस्तादिविक्षेपो भवति। अनः शकटम्। उत्सर्जनं हिक्कादिशब्दकरणम् प्राणस्य अनसस्तु प्रसिद्धः शब्दः। ततो लिङ्गात् प्राणोपसंहारोऽनुमीयत इत्यर्थः। प्राणवृत्तेश्चाननस्याभावः प्रसिद्ध इत्याह—तदाहुरिति तेजस्सम्पत्तौ लिङ्गमाह—मृतो [नेति वेति]। जीवतीत्यनन्तरं इत्याहुरिति पदद्वयानुषङ्गेण वाक्यं पूरणीयम्। अत्र प्राणस्याध्यक्षशब्दितजीवसम्पत्त्यनन्तरं तेजश्शब्दोपलक्षितपञ्चभूतसम्पत्तिरिति योज्यम्। "सोध्यक्षे तदुपगमादिभ्यः" "भूतेषु तच्छ्रुतेः" इति सूत्रे तथोक्त-

**स य एषोऽणिमैतदात्म्यमिदꣳ सर्वं[1] तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥**

**इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्याष्टमः खण्डः**

**तदेवंक्रमेणोपसंहृते स्वमूलं प्राप्ते च मनसि तत्स्थो जीवोऽपि सुषुप्तकालवन्निमित्तोपसंहारादुपसंह्रियमाणः सन्सत्याभिसंधिपूर्वकं चेदुपसंह्रियते सदेव संपद्यते न पुनर्देहान्तराय सुषुप्तादिवोत्तिष्ठति। यथा लोके सभये देशे वर्तमानः कथंचिदिवाभयं देशं प्राप्तस्तद्वत्। इतरस्त्वनात्मज्ञस्तस्मादेव मूलात्सुषुप्तादिवोत्थाय मृत्वा पुनर्देहजालमाविशति ॥ ६ ॥**

**यस्मान्मूलादुत्थाय देहमाविशति जीवः स यः सदाख्य एष उक्तोऽणिमाऽणुभावो जगतो मूलमैतदात्म्यमेतत्सदात्मा यस्य सर्वस्य तदेतदात्म तस्य भाव ऐतदात्म्यम्। एतेन सदाख्येनाऽऽत्मनाऽऽत्मवत्सर्वमिदं जगत्।**

**नरेन्द्रपुरीयं टिप्पणम्**

अणिमेति भावभवित्रोरभेदेन निरतिशयसूक्ष्म इत्यर्थः भास्करेण व्याख्यायि। तदसत्, ऐतदात्म्यपदवैयर्थ्यात् भेदाभेदस्याप्रामाणिकत्वात्। यच्च तत्त्वमसीति सामानाधिकरण्यं भेदाभेदविषयमित्युक्तं तदप्यसत्

**आनन्दगिरिटीका**

दृष्टमतो युक्तं तस्य स्वात्मन्युपसंहृतकरणत्वमित्यर्थः। तेजसीति भौतिकमाध्यात्मिकं तेजो गृह्यते। जीवतीत्याहुरिति संबन्धः। सकरणस्य सप्राणस्य च भूतवर्गस्य परस्यां देवतायामुक्तक्रमेणोपसंहारेऽपि जीवस्य किमायातमित्याशङ्क्याऽऽह—**तदेवमिति**। तस्यां परस्यां देवतायामुक्तेन क्रमेण तेजस्युपसंहृते सतीति यावत्। स्वमूलं मनसो मूलं भूतपञ्चकम्। निमित्तोपसंहारादित्यत्र निमित्तं मनो विवक्षितम्। सत्सम्पन्नस्य सत्याभिसंधेर्न पुनरुत्थानमित्येतद्दृष्टान्तेन स्पष्टयति—**यथेति**। अभयं देशं प्राप्तो न पुनः सभयं देशं गन्तुमिच्छतीति शेषः। यस्त्वनृताभिसंधो यथोक्तया रीत्या न तत्संपन्नस्तं प्रत्याह—**इतरस्त्विति** ॥ ६ ॥

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

त्वादिति। नन्विदं मरणक्रमाभिधानं विद्वदविद्वत्साधारणं "अस्य सोम्य पुरुषस्ये"ति सामान्याभिधानात् ततश्च प्राणिमात्रस्य मरणकाले सत्सम्पत्तिश्चेत् पुनर्देहग्रहणाभावेन कृतहानादिदोषः ज्ञानवैयर्थ्यं च स्यात् मरणमात्रेण मुक्तिसिद्धेरित्याशङ्क्याह—**तदेवमिति**। सत्याभिसन्धीति। सदात्मा अहं इत्यभिसन्धिः सत्याभिसन्धिः तस्यैव परमार्थसत्यत्वात्। मनुष्योऽहमित्याद्यभिसन्धिस्तु आरोपितविषयत्वादसत्येति भावः। अभयमिति च्छेदः ॥ ६ ॥

एवं सदात्मानं जगन्मूलं प्रसाध्य तदेव जीवस्य स्वरूपमिति दर्शयति—**यस्मादिति**। भावभवित्रोरभेदात् भवितुरेव भावत्वविवक्षया भावप्रत्यय इत्यभिप्रेत्य अणुभाव इत्युक्तम्। कार्यस्य सूक्ष्मं रूपमित्यर्थः। ऐतदात्म्यमित्यत्रापि

---

१. ऐतदात्म्यमिदं सर्वमिति। एष आत्मा यस्य तत् एतदात्म तस्य भाव ऐतदात्म्यं। अत्र आत्मा इत्यस्य स्वरूपं सतत्त्वं याथात्म्यमित्यर्थः। तेन सदेवेत्युक्तं सद्ब्रह्मेत्युक्तं भवति। तत्सत्यं, पूर्वं "एवं स आदेशो भवति" इत्युक्त्वा "सदेवे"त्युक्तः सत्पदार्थः अत्र सत्यमित्युच्यते। अपि च एवमित्यनेन मृत्तिकेत्येव सत्यमिति दृष्टान्तोपपादनात् दार्ष्टान्तिकेऽपि सतः सत्यत्वमुक्तं भवति तच्च जगत्कारणं ब्रह्मेत्यर्थः। तदात्मेति वक्तव्ये स आत्मेति विधेयप्राधान्यात् पुंल्लिङ्गनिर्देशः। आत्मा कस्येत्यनुक्तेः सर्वजगतः इत्युक्तं भवति। जडस्य सर्वस्य चेतनस्य च स्वरूपमित्यर्थः। त्वं श्वेतकेतो तदसि सत्यं ब्रह्मासि इति पुत्राय शिष्याय प्रियाय पितुरुपदेशः। तस्य च तस्य तावदेव चिरमिति फलवचनात् तात्पर्यविषयत्वलिङ्गात् यथाश्रुतार्थं जीवब्रह्माभेद एव ग्राह्यः न तु जीवशरीरकं लक्षणया। न चेयं शक्तिरेव यस्यात्माशरीरं इत्युक्तेः शरीरवाचकानां शरीरिबोधकत्वं शक्त्येति वाच्यम्। पारिभाषिकशक्त्यङ्गीकारस्य वेदार्थनिरुक्तौ अनुपयोगात्। तैरेव इमाः प्रजा अहरहर्गच्छन्त्यः एतं ब्रह्मलोकं विन्दन्ति इत्यादौ प्रजाशब्दस्य जीवमात्रपरत्वाङ्गीकारात्। न च स्थलभेदान्न दोषः इति वाच्यम्, विनिगमकाभावात्। वेदे लौकिकपरिभाषाया अनुपयोगात्।

नान्योऽस्त्यस्याऽऽत्मा संसारी। "नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽति श्रोतृ" इत्यादिश्रुत्यन्तरात्। येन चाऽऽत्मनाऽऽत्मवत्सर्वमिदं जगत्तदेव सदाख्यं कारणं सत्यं परमार्थसत्। अतः स एवाऽऽत्मा जगतः प्रत्यक्स्वरूपं सतत्त्वं याथात्म्यम्। आत्मशब्दस्य निरुपपदस्य प्रत्यगात्मनि गवादिशब्दवन्निरूढत्वात्। अतस्तत्सत्त्वमसीति हे श्वेतकेतो इत्येवं

### नरेन्द्रपुरीयं टिप्पणम्

भेदस्य वाक्यार्थत्वे मोक्षेऽप्यनिवृत्तिप्रसङ्गात्। न तर्हि मोक्षेऽप्यनिवृत्तिरेव भेदस्य। "ब्रह्म वेद ब्रह्मैव भवती"ति भेदनिवृत्त्यर्थश्रुतिविरोधात्। संसारादविशेषप्रसङ्गाच्च। न हि चैतन्यरूपेण जीवो भिद्यते ब्रह्मणः, किन्तु कर्तृत्वादिविशिष्टरूपेण। तस्मात् सोऽयं देवदत्त इतिवत् कल्पितभेदपरामर्शनलक्षणयैकद्रव्यपर्यवसाय्येव सामानाधिकरण्यमिति।

### आनन्दगिरिटीका

अस्येति षष्ठ्या सर्वं जगदुक्तम्। असंसारी संसारी वेति च्छेदः। मूलादेर्विशेषं दर्शयति—परमार्थेति। कल्पितस्य जगतः स्वरूपं प्रत्यग्भूतमतात्त्विकमिति शङ्कां वारयति—सतत्त्वमिति। तत्त्वेन सहितमपि सतत्त्वमित्याशङ्क्याऽऽह—याथात्म्यमिति। कथमेवमर्थत्वमात्मशब्दस्य लभ्यते तत्राऽऽह—आत्मशब्दस्येति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एवमेव भावप्रत्ययः। सर्वेषु शरीरेषु विद्यमानः चेतनः प्रत्यगात्मा एष एवेत्येवमर्थकत्वेन ऐतदात्म्यपदं व्याचष्टे—ऐतदात्म्यमिति। सर्वस्य प्राणिजातस्येत्यर्थः। प्रतीचो ब्रह्माभेदे काण्वश्रुतिमाह—नान्यदिति। द्रष्ट्रादिरूपेण भासमानं जीवस्वरूपं प्रकृतादक्षरादन्यन्नेति तदर्थः। स आत्मेति पदेन अचेतनस्य वास्तवं रूपं सदित्युच्यते अतो न पूर्वेण पौनरुक्त्यमित्याशयेनाह—अतस्स एवेति। यतस्तदेव सत्यं अतस्तदेव कार्यस्य तत्त्वं स्वरूपमित्यर्थः।

आत्मशब्दस्य जीववाचिनः कथं स्वरूपवाचित्वमित्याशङ्क्याऽऽह—आत्मशब्दस्येति। सर्वप्रत्यक्स्वरूपत्वात्सतः श्वेतकेतोरप्यात्मा स एवेति सामान्येन विशेषं साधयति—अतस्तत् सत् त्वमसीति। असीतिपदस्य वर्तमानार्थत्वात् ज्ञानकालेपि सदात्मत्वमेव जीवस्य न तु ज्ञानानन्तरभावीति वक्तुं असीति पदमित्याह—भवसीति। यद्यपि ऐतदात्म्य-

---

ऐतदात्म्यशब्दस्य रामानुजीयैः—एतत् आत्म्यं व्याप्यं यस्य तत् एतदात्म्यं तदेव ऐतदात्म्यं स्वार्थे ष्यञ्। अत्र एषः आत्मा यस्य तद्भाव इति व्युत्पत्तौ प्रसिद्धायामियं कल्पना कुकल्पनैव। आत्म्यमित्यस्य अदृश्येऽनात्म्ये इत्यादौ श्रुतौ आत्मसम्बन्धिशरीराद्यर्थतया अयमर्थः प्रसिद्धः। स आत्मा प्रत्यगात्मा सर्वस्येत्येवार्थः। आत्मा नियन्ता इत्यप्यशब्दार्थकथनमेव। य एव लौकिकाः शब्दास्त एव वैदिकाः त एव तेषामर्थाः इति नियमात्।

यत्तु मध्वाचार्यैः—चोरदृष्टान्ते यः परमार्थतया चौर्यं कृतवान् स दण्ड्यते, यस्तु चोरत्वेन आरोपितः सः तप्तायःपरशुना दाहाभावात् अचोरत्वेन निर्णीय मुच्यते इति दृष्टान्तं अद्वैतिषु योज्यते "न च स्वकीयस्य ब्रह्मभावस्याज्ञोऽपहर्ता भवति किन्तु अविद्यमानब्रह्मभावाभिमन्तैवापहर्ता भवति। अदुःखित्वपूर्णानन्दत्वादिकं ब्रह्मनिष्ठं स्वगतं मन्यमानः ब्रह्मापहर्ता अद्वैती-इति"। तन्न। ब्रह्मभावः स्वस्यानादिसिद्धः वर्तमान एवाज्ञानेन तिरोहितः तं आचार्योपदेशेन जानाति विद्वान् न तु अविद्यमानः तस्मिन् ब्रह्मभावः। ततश्च स्वगतमेव पूर्णानन्दत्वादिकं स्वनिष्ठं मन्यते न त्वन्यगतं। अतो नाद्वैतिनः ब्रह्मचौर्यप्रसक्तिः। अन्यगतस्य स्वगतत्वेनाभिमाने हि त्वदुक्तचौर्यप्रसक्तिः "ब्रह्मैव सन् ब्रह्माप्येति" इत्यादिश्रुतिप्रामाण्यात् स्वगतमेव ब्रह्मत्वमिदानीमपि इति। अतश्चाविद्यमानेत्यादिकमद्वैताज्ञानविजृम्भितम्।

अस्मिन्नेव सन्दर्भे समुद्रात्सूर्यरश्मिभिः आकृष्टं जलं मेघीभूय पुनः पर्वतादौ वृष्टं, ततो नदीद्वारा समुद्रं गच्छति। समुद्र एव समुद्रो भवति न नदी समुद्रो भवति, नदीद्वारा आगत्य समुद्र एव समुद्रो भवति। तत्र च ता नद्यः समुद्रेण एकीभूताः अहं गंगा, अहं यमुना इति न स्मरन्ति, एवं प्रजाः सुषुप्ते ब्रह्म प्राप्य सुषुप्तात् पुनः उत्थाय सुषुप्तिस्थानभूतब्रह्मणो वयमागता इति न स्मरन्ति, इति दृष्टान्तदार्ष्टान्तिकभावे स्पष्टे यदुक्तं मध्वाचार्येण समुद्र एव समुद्रो भवति न नद्य इति भेदपरत्वं शास्त्रस्येत्युक्तम्। तन्न। शास्त्रस्य उक्तभाष्यार्थे तात्पर्यात् भेदांशस्यानुवादत्वात्।

[१]यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाँ रसान्समवहारमेकताँ रसं गमयन्ति॥१॥

प्रत्यायितः पुत्र आह—भूय एव मा भगवान्विज्ञापयतु यद्भूवदुक्तं तत्सन्दिग्धं ममाहन्यहनि सर्वाः प्रजाः सुषुप्ते सत्संपद्यन्त इत्येतद्येन तत्संपद्य न विदुः सत्सम्पन्ना वयमिति। अतो दृष्टान्तेन मां प्रत्याययत्वित्यर्थः। एवमुक्तस्तथाऽस्तु सोम्येति होवाच पिता ॥ ७ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्याष्टमः खण्डः

यत्पृच्छस्यहन्यहनि सत्संपद्य न विदुः सत्संपन्नाः स्म इति तत्कस्मादित्यत्र शृणु दृष्टान्तम्। यथा लोके हे

### नरेन्द्रपुरीयं टिप्पणम्

ननु रसानामचेतनत्वाद्विवेकानर्हत्वं कथं चेतनानामयं दृष्टान्तः स्यात् ? न, विवेकानर्हावस्थापत्तिमात्रेण दृष्टान्ताभिधानात् चेतनानामपि च तस्यामवस्थायां जाड्येनास्कन्दितत्वात्—रसमित्यादिना ॥ ७ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य अष्टम-नवमौ खण्डौ

### आनन्दगिरिटीका

सतो भवत्वात्मत्वं मम तु किं स्यादित्याशङ्क्याऽऽह—अत इति। संदेहास्पदमेव विशिनष्टि—अहन्यहनीति। संदेहे हेतुमाह—येनेति। तेन संदिग्धमेतदिति पूर्वेण संबन्धः। संदेहव्यावृत्तिस्तर्हि कथमित्यत आह—अत इति। पुत्रस्य प्राप्तसंदेहापोहार्थमुत्तरग्रन्थमुत्थापयति—एवमिति ॥ ७ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्याष्टमः खण्डः

यथेत्यादिदृष्टान्तमवतारयति—यत्पृच्छसीति। प्रत्यहं सुषुप्ते सर्वाः प्रजाः सत्सम्पद्य सत्सम्पन्नाः स्मो

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मिति चेतनस्वरूपत्वोक्त्या अद्वितीयत्वसिद्धेः एकविज्ञानप्रतिज्ञासिद्धेश्च 'तत्त्वमसी' त्येतदधिकं तथापि श्वेतकेतोरनूचानमानित्वनिरासार्थं साभासाहङ्कारस्यैव अनूचानमानित्वं, तव तु तत्साक्षिणः सदात्मत्वमेवेति तत्त्वमसीत्यनेनोच्यत इति। तदुक्तं विद्याप्रकाशे—

चिच्छायावानहङ्कारोऽधीते वेदचतुष्टयम्। त्वं तु साक्ष्येव तस्यातः सदसि त्वं न चेतरः ॥
भिन्नोऽभूद्धृदयग्रन्थिः श्वेतकेतोर्विवेकतः ॥ इति।

अणिमेत्यादिपदचतुष्टयस्य अर्थविशेषश्च तत्रैवोक्तः—

स्थूलमिन्द्रियरूप्यत्वान्नामरूपात्मकं जगत्। सदद्वैतं भवेत्सूक्ष्मं इन्द्रियाविषयत्वतः।
एतदात्मकतैवास्य स्थूलस्येति हि युज्यते। अणुत्वं वस्तुतः प्रोक्तं यत्तत्सत्यमबाधनात्।
स्थूलत्वं माययाऽणुत्वज्ञानेनैतस्य बाधनात्। अबाध्यो यस्स एवात्मा सर्वस्य नतु कल्पितः।
श्वेतकेतो यदद्वैतं तदसि त्वं न मानवः ॥ इति।

भूयः प्रश्नाभिप्रायं दर्शयति—यद्भूवदिति। येन सत्सम्पन्ना इति न विदुः तेन सुषुप्ते सत्सम्पद्यन्ते इत्येतत् सन्दिग्धमित्यर्थः। अनेन स्वमपीतो भवतीत्यत्र पृच्छतीत्युक्तं भवति ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्याष्टमः खण्डः

---

यत्तु रामानुजीयाः—तत्त्वमसीतिवाक्ये चिन्मात्रलक्षणादोषमस्मन्मते उद्भावयन्ति। तन्न। घटोऽनित्य इत्यादौ विधेयस्य विशेष्यमात्रान्वयस्थले यथा न लक्षणा तथाऽत्रापीति न दोषः। तदुक्तमद्वैतसिद्धौ सोऽयं देवदत्त इत्यादिवत् शक्यैकदेशान्वयोपगमात्। विशेषणबाधेन विशेष्यमात्रान्वयस्य लक्षणाशब्देन व्यपदेशात्"। उक्तं च शाबरभाष्ये "न विधौ परः शब्दार्थः" इति। तट्टीकायां च "विशिष्टशक्तिज्ञानाकार्यशाब्दबोधजनकोपस्थितित्वरूपलक्षणासाम्यात् शक्योपस्थितेरपि लक्षणात्वव्यपदेश इति।

१. यत्तु देहे जीवादन्यः परमात्माऽस्ति चेत् कुतो न गृह्यते इति शङ्कायामाह—यथा मधुमक्षिकाभिः नानावृक्षाणां रसान् समादाय मधु क्रियते न च तत्रास्य वृक्षस्य अयं रसः इति विवेकः तद्वत् जीवस्य

**ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मीत्येमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति ॥ २ ॥**

सोम्य मधुकृतो मधु कुर्वन्तीति मधुकृतो मधुकरमक्षिका मधु निस्तिष्ठन्ति मधु निष्पादयन्ति तत्पराः सन्तः। कथम् ? नानात्ययानां नानागतीनां नानादिक्कानां वृक्षाणां रसान्समवहारं समाहृत्यैकतामेकभावं मधुत्वेन रसान्गमयन्ति मधुत्वमापादयन्ति ॥ १ ॥

ते रसा यथा मधुत्वेनैकतां गतास्तत्र मधुनि विवेकं न लभन्ते। कथम्, अमुष्याहमाम्रस्य पनसस्य वा वृक्षस्य रसोऽस्मीति। यथा हि लोके बहूनां चेतनावतां समेतानां प्राणिनां विवेकलाभो भवत्यमुष्याहं पुत्रोऽमुष्याहं नप्ताऽस्मीति। ते च लब्धविवेकाः सन्तो न संकीर्यन्ते न तथेहानेकप्रकारवृक्षरसानामपि मधुराम्लतिक्तकटुकादीनां मधुत्वेनैकतां गतानां मधुरादिभावेन विवेको गृह्यत इत्यभिप्रायः। यथाऽयं दृष्टान्त इत्येवमेव खलु सोम्येमाः सर्वाः प्रजा अहन्यहनि सति संपद्य सुषुप्तकाले मरणप्रलययोश्च न विदुर्न विजानीयुः सति संपद्यामह इति संपन्ना इति वा ॥ २ ॥

### आनन्दगिरिटीका

वयमिति यन्न विदुस्तदज्ञानं कस्मात्कारणादिति यन्मां पृच्छसि तत्र सुषुप्तादावज्ञाने कारणभूतं दृष्टान्तमुच्यमानं शृणु त्वमिति योजना। यथा स दृष्टान्तः स्पष्टो भवति तथोच्यत इत्याह—यथेति। पुनर्मधुपदं क्रियापदेन सम्बन्धप्रदर्शनार्थम्। मधुकृतां मधुनिष्पादकत्वमाकाङ्क्षापूर्वकं दर्शयति—कथमित्यादिना। नानागतीनां नानाफलानामित्येतत्। बहूनां रसानां कथमेकतेत्याशङ्क्याऽऽह—मधुत्वेनेति। तदेव स्पष्टयति—मधुत्वमिति ॥ १ ॥

ते यथेत्यादि व्याचष्टे—ते रसा इति। उक्तमर्थं वैधर्म्यदृष्टान्तेन स्पष्टयति—यथा हीत्यादिना। इहेति प्रकृतदृष्टान्तोक्तिः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अहन्यहनि सत्सम्पद्य चेद्वर्तन्ते तर्हि कस्मात् सत्सम्पन्नाऽस्म इति न विदुरिति यत्पृच्छसि इत्यन्वयः। निष्पूर्वस्य तिष्ठतेः निष्ठेत्यादौ तात्पर्यवाचित्वदर्शनात् इहापि तत्पदेन तात्पर्यपूर्वकं निष्पादनं लक्षणीयमित्यभिप्रेत्य व्याचष्टे—निष्पादयन्ति तत्परास्सन्त इति। नानागतीनामिति। नानात्वेन गतिर्ज्ञानं येषां तेषां नानाजातीयानामित्यर्थः। नानादिक्कानामित्यस्मिन् पक्षे गतिः प्राप्तिः नानादिशं प्राप्तानामिति ॥ १ ॥

ननु अमुष्याहं वृक्षस्य रसोऽस्मि इति विवेकं न लभन्ते इत्ययुक्तमुक्तं रसानामचेतनत्वेन विवेकाप्रसक्तेः निषेधायोगादित्याशङ्क्य विवेकशब्देन विवेकपूर्वकत्वात् असङ्करो लक्ष्यत इति वक्तुं तस्य विवेकपूर्वकत्वमाह—यथा हीति। असङ्करस्य विवेकपूर्वकत्वमुक्त्वा असङ्करलक्षणया वाक्यार्थमाह—न तथेति। विवेको गृह्यत इति। अत्र विवेकशब्देनासङ्कर उच्यते। यथा रसानां सङ्कीर्णत्वेनासङ्करो विवेको न गृह्यते अन्यैः एवं जीवानां चेतनानामपि सति सम्पद्य सङ्कीर्णानां स्वकीयो विवेको न गृह्यते स्वैरिति दार्ष्टान्तिकमाह—यथाऽयमिति। ननु सत्सम्पत्स्यामह इतिः भविष्यदर्थस्य भूतार्थत्वेन सम्पन्ना इति व्याख्यानमनुपपन्नं; न च सम्पद्येति ल्यपा भूतत्वेनोक्तत्वात् तस्य च भविष्यत्त्वानुपपत्तेः एवं व्याख्यातमिति वाच्यम्। तथा सत्सम्पन्ना इति विकल्पार्थकवाशब्दानुपपत्तेरिति चेत् न,

---

स्वभिन्नपरमात्मभेदज्ञानं न जायत इति—तन्न। दृष्टान्ते नानावृक्षाणां रसान् समवहारं एकतां गमयन्ति इति श्रुत्या प्रतिपादितं। जीवः प्रत्येकं न नाना, नापि सः परमात्मना एकतां गतः एकशरीरस्थत्वेऽपि नियम्यनियामकभावेन भेदोपलम्भात् अणुत्वमहत्त्वगुणभेदेन भेदानुमानाच्च।

अस्मन्मते तु एकं ब्रह्म सर्वशरीरेषु, तत्र सुषुप्तौ सर्वे एकतां गताः ते च जडाज्ञानास्कन्दिततया वयं सत्सम्पन्ना इति न विदुः। यथा रसाः स्वयमेव जडत्वान्न विदुः। किञ्चावतारिकैव न युक्ता परमात्माऽस्ति चेत् कुतो न गृह्यते इति प्रश्नः जाग्रदवस्थायामपि तुल्यः—अतः सति सम्पद्य न विदुः सति सम्पद्यामह इति सुषुप्त्यवस्थायां भेदाज्ञानकथनं न सङ्गच्छते तेषाम्।

त इह व्याघ्रो वा सिँ्हो वा वृको वा वराहो वा कीटो वा
पतङ्गो वा दँ्शो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥ ३ ॥

स य एषोऽणिमैतदात्म्यमिदँ् सर्वं तत्सत्यँ् स आत्मा तत्त्वमसि श्वेतकेतो
इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ४ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य नवमः खण्डः

यस्माच्चैवमात्मनः सद्रूपतामज्ञात्वैव सत्संपद्यन्ते। अतस्त इह लोके यत्कर्मनिमित्तां यां यां जातिं प्रतिपन्ना आसुर्व्याघ्रादीनां व्याघ्रोऽहं सिंहोऽहमित्येवं ते तत्कर्मज्ञानवासनाङ्किताः सन्तः सत्प्रविष्टा अपि तद्भावेनैव पुनराभवन्ति पुनः सत आगत्य व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यत्पूर्वमिह लोके भवन्ति बभूवुरित्यर्थः। तदेव पुनरागत्य भवन्ति युगसहस्रकोटयन्तरिताऽपि संसारिणो जन्तोर्या पुरा भाविता वासना सा न नश्यतीत्यर्थः। "यथाप्रज्ञं हि संभवाः" इति श्रुत्यन्तरात् ॥ ३ ॥

ताः प्रजा यस्मिन्प्रविश्य पुनराविर्भवन्ति। ये त्वितोऽन्ये सत्सत्यात्माभिसंधा यमणुभावं सदात्मानं प्रविश्य नाऽऽवर्तन्ते स य एषोऽणिमेत्यादि व्याख्यातम्। यथा लोके स्वकीये गृहे सुप्त उत्थाय ग्रामान्तरं गतो जानाति स्व-

### आनन्दगिरिटीका

रसानामचेतनत्वेन विवेकानर्हत्वात्कथं चेतनावतामेवं दृष्टान्तः स्यादित्याशङ्क्याऽऽह—यस्माच्चेति। एवं यथोक्तरसदृष्टान्तवशेनेति यावत्। चेतनानामपि सुषुप्त्यादौ जाड्यास्कन्दिततया रसतुल्यत्वात्तेषां विवेकानर्हावस्थापत्तिमात्रे प्रकृतमुदाहरणमविरुद्धमिति भावः। सता सम्पन्नानामपि तत्स्यादित्याशङ्क्याऽऽह—संसारिण इति ॥ ३ ॥

स य एषोऽणिमेत्याद्यवतारयति—ताः प्रजा इति। इतः सद्विज्ञानरहितेभ्यः सकाशादिति यावत्।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सति सम्पद्य न विदुः सति सम्पद्यामह इति भूतत्वेनोक्तस्य भविष्यत्त्वानुपपत्तेः। अतः श्रुतौ पदान्तरं विवक्षितमिति मत्वा व्याचष्टे—तथाहि सति सम्पद्येत्यत्र सत् सम्पद्यमाना इति पदान्तरं विवक्षितम्। सति सम्पत्स्यामह इत्यत्रापि सत्सम्पन्ना इति वेति। ततश्च सत्सम्पत्स्यमाना न विदुः सति सम्पत्स्यामह इति; सति सम्पद्यमाना न विदुः सति सम्पन्ना इति वेति व्याख्यातं द्रष्टव्यम् ॥ २ ॥

ननु जीवानां चेतनत्वेन सत्सम्पत्तिकाले सदात्मानो वयमिति ज्ञानं स्यात् विदुषामिवेत्याशङ्क्य तेषां श्रवणादिरूपज्ञानसामग्र्यभावात् ज्ञानं नास्ति; अन्यथा पुनःशरीराभिमानो न स्यात्। वर्तते च शरीराभिमान इति वक्तुं त इहेति वाक्यमिति व्याचष्टे—यस्माच्चेति। व्याघ्रादीनां मध्ये व्याघ्रोऽहमित्यादिप्रकारेण यां यां जातिं प्रतिपन्ना इत्यन्वयः। तद्भावेनेति। व्याघ्रादिभावेनेत्यर्थः। सत आगत्य पुनराभवन्तीति पूर्वेणान्वयः। अर्थमुपवर्ण्य तत्र वाक्यं योजयति—व्याघ्रो वेति। ननु अज्ञानवशात् पुनश्शरीराभिमानेऽपि तस्मिन्नेव कुतोऽभिमानः शरीरान्तरेऽपि तथात्वापत्तेः। न च तच्छरीरवासनावशात्तथेति वाच्यम्। एवमपि मरणप्रलययोः बहुकालव्यवधानेन वासनानां नाशात् वासनाहेतुकः पुनश्शरीराभिमानो न स्यादित्याशङ्क्याह—युगेति। अर्थ इति। एतच्छ्रुतिबलादेवं कल्प्यत इत्यर्थः। मधुरसदृष्टान्तेन त्वदीयशङ्कामात्रं निवर्तितम्। तत्त्वं तु तदेव नान्यदिति वक्तुं स य इत्यादि वाक्यम् तद्व्याचष्टे—ताः प्रजा इति। तस्मिन् प्रविश्य पुनराभवन्ति। ये त्वितोऽन्ये सदात्मानं प्रविश्य नावर्तन्ते स य एषोऽहमित्यन्वयः। पुनरागमने श्रुत्यन्तरमाह—यथाप्रज्ञं हीति। प्रज्ञां वासनां अनतिक्रम्य सम्भवन्तीति श्रुत्यन्तरार्थः ॥ ३ ॥

ननु सत्सम्पन्नानामपि पुनरागमने मुक्तानामपि तथात्वं स्यादित्याशङ्क्याह—ये त्विति। सत्यात्माभिसन्धानेन तेषामज्ञानादिनाशान्न पुनरावृत्तिरिति वैषम्यमसकृदुक्तमित्यर्थः।

**[1]इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

गृहादागतोऽस्मीत्येवं सत आगतोऽस्मीति च जन्तूनां कस्माद्विज्ञानं न भवतीति भूय एव मा भगवान्विज्ञापयत्विति-त्युक्तस्तथा सोम्येति होवाच पिता ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य नवमः खण्डः

शृणु तत्र दृष्टान्तं यथा सोम्येमा नद्यो गङ्गाद्याः पुरस्तात्पूर्वां दिशं प्रति प्राच्यः प्रागञ्चनाः स्यन्दन्ते स्रवन्ति। पश्चात्प्रतीचीं दिशं प्रति सिन्ध्वाद्याः प्रतीचीमञ्चन्ति गच्छन्तीति प्रतीच्यस्ताः समुद्रादम्भोनिधेर्जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिता गङ्गादिनदीरूपिण्यः पुनः समुद्रमम्भोनिधिमेवापियन्ति स समुद्र एव भवति ता नद्यो यथा तत्र समुद्रे समुद्रात्मनैकतां गता न विदुर्न जानन्तीयं गङ्गाऽहमस्मीयं यमुनाऽहमस्मीतीयं मह्यहमस्मीति च ॥ १ ॥

### नरेन्द्रपुरीयं टिप्पणम्

आगन्तॄणामागमनावधिस्मरणं प्रसिद्धमित्येतन्न नियतम् । यथा नदीनां स्वाभाविकजाड्यास्कन्दितानामवध्यपरिज्ञानं तथा चेतनानामप्यज्ञानावृतत्वादवधिपरिज्ञानं माभूदित्यस्मरणोपपत्तिरिति ॥ १ ॥

### आनन्दगिरिटीका

यमणुभावमिति यच्छब्दोऽध्याहर्तव्यः । प्रश्नान्तरं दृष्टान्तबलादुत्थापयति—यथेति । सतोऽहमागतोऽस्मीत्युक्तिर्गतस्य ज्ञानाभावं दृष्टान्तेनोपपादयितुमुत्तरग्रन्थमुत्थापयति—इत्युक्त इति ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य नवमः खण्डः

आगमनावध्यपरिज्ञानं तत्रेत्युक्तम् ॥ १ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु सुषुप्तिदशायां प्रमाणव्यापाराभावेन सत्सम्पत्त्यज्ञानेऽपि उत्थितस्य तज्ज्ञानं स्यात् इति शङ्कां पुनः प्रश्नाभिप्रायमाह—यथेति । जन्तूनामिति । सति सुप्त्वा प्रबुद्धानामित्यर्थः ॥ ४ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य नवमः खण्डः

पुरस्तादित्यनेन पूर्वदिगुद्देश उक्तः । प्राच्य इत्यनेन प्रागगमनमुच्यत इत्यर्थभेदमाह—पुरस्तादिति । समुद्रात् समुद्रमेवापियन्ति इत्यस्य समुद्रादागत्य समुद्रमपियन्तीत्यर्थः । तत्र गङ्गादीनां समुद्रादागमनं अप्रसिद्धमित्याशङ्क्य तदुपपादयति—जलधरेति । अत्र सत आगतानां कुत आगता वयं इति कुतो ज्ञानं नास्तीत्याशङ्कानिराकरणार्थः समुद्रनदीदृष्टान्तः प्रारब्धः। तत्र यथाश्रुतभाष्यपर्यालोचनायां समुद्रात्मना एकतां गता गङ्गाद्या न विदुः इयं गङ्गेत्यादिना यथा, तथा सत आगत्य न विदुरित्यर्थः प्रतीयते । तथा सति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं स्यात् । समुद्रात्मना एकतां गता न विदुरिति दृष्टान्ते; दार्ष्टान्तिके तु सत आगता इति यद्यपि, तथापि समुद्रादिति श्रुतिपदेन

---

१. अत्र मध्वाचार्याः—प्रलयकाले लीनानां चेतनानां कुतो वयं लीनाः इति ज्ञानं न जायत इति प्रश्नस्योत्तरं—यथा गङ्गायाः नद्यः समुद्रे लीनाः स्वं प्राचीनं रूपं न जानन्ति तथा चेतनाश्च मत्स्यादयः समुद्रं गताः स्वं न जानन्ति तथेति समाधानमित्युक्तम् ।

तदुक्तं—"तं प्रत्याह यथा नद्यः चेतनाश्च समुद्रगाः स्वं वारि नैव जानन्ति प्रजास्तद्वत्प्रजालये" इति । तदपि न समीचीनम्—अत्र हि यथा नद्यः समुद्रात्सूर्यरश्मिभिराकृष्टजलादेव वृष्टिद्वारा गङ्गादिरूपेण प्रवहन्ति पुनः समुद्रं प्राप्य वयं समुद्रादेवागता इति न स्मरन्ति तथा सुषुप्तौ ब्रह्मप्रविष्टाः ततः एव सिंहव्याघ्रादिरूपेणागताः ब्रह्मण एव वयमागता इति न जानन्ति इति खण्डार्थः ।

प्रलयस्यात्र प्रसक्तिर्नास्ति न वा ब्रह्मणः सकाशात् जागरे जीवागमनं मध्वाचार्येणोक्तमिति दृष्टान्तानानुगुण्यम् ।

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः [1]सतः आगम्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिँ्हो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दँ्शो वा मशको वा यद्यद्भवन्ति तदाभवन्ति ॥२॥**

एवमेव खलु सोम्येमाः सर्वाः प्रजा यस्मात्सति सम्पद्य न विदुस्तस्मात्सत आगम्य न विदुः सत आगच्छामह आगता इति वा। त इह व्याघ्र इत्यादि समानमन्यत्। दृष्टं लोके जले वीचीतरङ्गफेनबुद्बुदादय उत्थिताः

नरेन्द्रपुरीयं टिप्पणम्

महीसंज्ञा नदी। जीवानां सद्विकारत्वविभ्रमात् विनाशं शङ्कमानस्य प्रबोधनायोत्तरं वाक्यमित्याह—दृष्टं लोक इत्यादिना। जीवस्य विकारत्वाभावाच्छब्दादिनाशकारणासम्बन्धादविनाशित्वमित्यभिप्रायः॥ २–३॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

प्रश्नान्तरं व्याचष्टे—दृष्टमिति। विनष्टा इति लोके दृष्टमिति सम्बन्धः। जीवास्तु प्रत्यहं सुषुप्त्यवस्थायां

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

समुद्रादागता इत्यर्थः प्रतीयते। तस्य ता यथा तत्र न विदुरित्यनेन सम्बन्धः। ततश्च यथा पूर्वं समुद्रे स्थित्वा समुद्रादागताः ततः आगमनानन्तरं समुद्रादागता गङ्गाद्या वयमिति न विदुरित्यर्थः। तावदेव च दृष्टान्तत्वेन विवक्षितं समुद्रमेवापियन्ति स समुद्र एव भवतीति वाक्यं तु शङ्कान्तरनिराकरणार्थम्–तथाहि–मेघैरानीतं समुद्रजलं गङ्गादिजलमित्यत्राप्रमाणमित्याशङ्क्य इदानीं गङ्गादेः समुद्रप्रवेशदर्शनात् मेघैरानीतं पूर्वकालिकसमुद्रजलमपि ततःपूर्वं प्रविष्टं गङ्गाजलमिति निश्चीयते इति वक्तुं समुद्रमेवापियन्ति स समुद्र एव भवतीत्यन्तमुक्तम्। एवकारश्च स एवेति सम्बध्यते। तदेव गङ्गाजलं समुद्र इति विधेयापेक्षया स इति निर्देशः। "ते यथा तत्र" इत्यत्रापि तेऽपि पूर्वं स्थित्वा आगमनानन्तरमिति पुंलिङ्गं योज्यम्॥

भाष्येऽपि एकतां गता इत्यनन्तरं पश्चात् सद्वृष्ट्यादिरूपेण समुद्रादागता इत्यध्याहार्यम्। इयं गङ्गा अहमस्मीत्यनन्तरं च समुद्रादागतेति। एवं सति दृष्टान्तदार्ष्टान्तिकयोः साम्यं स्यात् समुद्रादिति श्रुतिपदस्यापि प्रयोजनं स्यादिति। इयं मह्यस्मीति पाठे महीनाम काचिन्नदी॥ १॥

सर्वाः प्रजा इत्यस्य सत आगम्येत्यनेनान्वयः पूर्वखण्डोक्तं सत्सम्पत्तिकालिकाज्ञानं अत्र हेतुत्वेन योजयति—यस्मादिति। सत्सम्पत्तिकाले तदज्ञाने सति पूर्वं सत्सम्पन्ना इदानीं सत आगता इति ज्ञानं भवेत् अन्यथा तन्न सम्भवतीत्यर्थः। आगच्छामह इत्यनन्तरं आगता इति वेति केषुचित् कोशेषु पाठः।

तत्रैव योजना—सत आगम्य न विदुः सत आगच्छामह इत्ययुक्तम्। आगम्येत्यनेन आगमनस्य पूर्वकालत्वप्रतीतेः आगच्छामह इत्यत्र वर्तमानत्वप्रतीतेः पूर्वकालिकस्य वर्तमानत्वेन प्रतीत्ययोगात् इत्याशङ्क्य आगम्येत्यत्र आगच्छन्त इति पदान्तरं विवक्षितं आगच्छामह इत्यत्रापि आगता इति। ततश्च आगम्य न विदुरागता इति। आगच्छन्तो न विदुरागच्छामह इति यथाक्रममन्वयं स्वीकृत्य आगता वेत्युक्तमिति। आगच्छामह इत्येतावन्मात्रपाठे तु आगमनस्य भूतत्वेन उक्तस्यापि वर्तमानसामीप्याद्वर्तमानत्वेन प्रयोग इति द्रष्टव्यम्। त इहेत्यादेः पूर्वमेव प्रयोजनमुक्तमित्याह—त इहेति। स य एष इत्यादेरपि पूर्वमेव प्रयोजनमुक्तम्। शङ्कानिवृत्तिमात्रं भिद्यते। तत्त्वं तु तदेवेति। एवं सर्वपर्यायेष्वपि द्रष्टव्यम्। जीवस्य विनाशित्वादविनाशिब्रह्माभेदो न सम्भवतीति शङ्कां पुनः प्रश्ने हेतुमाह—दृष्टमिति। सुषुप्त्यादिषु जीवस्य सर्वात्मना व्यवहाराभावात् तत्सद्भावे लिङ्गाभावात् मरणादौ देवदत्तो

---

१. सत आगम्य न विदुः सत आगच्छामह इति। अत्र सूत्रं स एव तु कर्मानुस्मृतिशब्दविधिभ्यः इति। सत्सम्पत्तेः प्रबुध्यमानः किं य एव सत्सम्पन्नः स एव प्रतिबुध्यते उत स वा अन्यो वेति विचारे अनियमः जलराशौ प्रक्षिप्तजलबिन्दुवत् इति प्राप्ते ब्रूमः—स एव पुनरुत्तिष्ठति कर्मशेषानुष्ठानदर्शनात्। य एवाहं पूर्वेद्युरनुभूतवान् स एवेदानीं स्मरामि–इत्यनुस्मृतेः। शब्दश्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति। कर्मविधिभ्यश्च सुप्तमात्रस्य मोक्षे कर्मविधीनां वैयर्थ्यापत्तेश्च।

स य एषोऽणिमैतदात्म्यमिद ँ सर्वं ँ तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य दशमः खण्डः

[1]अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन्स्रवेद्यो मध्येऽभ्याहन्याज्जीवन्स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष जीवेनाऽऽत्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥

पुनस्तद्भावं गता विनष्टा इति । जीवास्तु तत्कारणमणुभावं प्रत्यहं गच्छन्तोऽपि सुषुप्ते मरणप्रलययोश्च न विनश्यन्तीत्येतत् भूय एव मा भगवान्विज्ञापयतु दृष्टान्तेन । तथा सोम्येति होवाच पिता ॥ २-३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य दशमः खण्डः

शृणु दृष्टान्तमस्य—हे सोम्य महतोऽनेकशाखादियुक्तस्य वृक्षस्यास्येत्यग्रतः स्थितं वृक्षं दर्शयन्नाह । यदि यः कश्चिदस्य मूलेऽभ्याहन्यात्परश्वादिना सकृद्घातमात्रेण न शुष्यतीति जीवन्नेव भवति तदा तस्य रसः स्रवेत् । तथा यो मध्येऽभ्याहन्याज्जीवन्स्रवेत्तथा योऽग्रेऽभ्याहन्याज्जीवन्स्रवेत्स एष वृक्ष इदानीं जीवेनाऽऽत्मनाऽनुप्रभूतोऽनुव्याप्तः पेपीयमानोऽत्यर्थं पिबन्नुदकं भौमांश्च रसान्मूलैर्गृह्णन्मोदमानो हर्षं प्राप्नुवंस्तिष्ठति ॥ १ ॥

आनन्दगिरिटीका

मरणप्रलययोश्च कारणभावं गच्छन्तोऽपि न विनश्यन्तीति यदेतत्तदिति योजना । जीवविनाशं शङ्कमानस्य प्रतिबोधनार्थमुत्तरं वाक्यमुत्थापयति—तथेति ॥ २-३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य दशमः खण्डः

जीवस्य नाशाभावं वक्तुमादौ दृष्टान्तमाह—शृण्विति ॥ १ ॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नष्ट इति व्यवहाराच्च जीवनाशाशङ्का । वीचीतरङ्गादिदृष्टान्तेन शङ्का तु स्थूलदृष्ट्या सम्भवमात्रेण कृता । न तु प्राधान्येन, जीवानां वीच्यादिवत् सत्कार्यत्वाभावात् ।

न च बुद्ध्यादीनां जीवोपाधीनां तत्कार्यत्वेन नाशात् जीवनाशाशङ्केति वाच्यम् । त इह व्याघ्रो वेत्यत्र अज्ञानस्य तदुपाधेः सद्भावोक्तेः तच्छङ्कानुदयात् । अत एव "जीवापेतं वाव किलेदं म्रियते" इति शरीरनाशप्रयुक्तमरणशङ्कामेव वृक्षदृष्टान्तेन शरीरव्यतिरेकसाधनपूर्वकं निराकरिष्यतीति । यद्यपि प्रवेशवाक्यादविनाशिसदभेदेनाविनाशित्वं गम्यते । तथापि मृतो देवदत्त इत्यादिव्यवहारात् तस्याक्षेपो देहात्मवादिना क्रियत इति भावः ॥२-३॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य दशमः खण्डः

वृक्षस्यैकरूपेण विद्यमानत्वेऽपि जीवस्य सत्त्वे असत्त्वे च रसस्रावरसशोषाभ्यां वृक्षव्यतिरिक्तं जीवं साधयितुं जीवसद्भावे रससद्भावे दर्शयति—अस्येत्यादिना । जीवंश्चेद्रसस्स्रवेदित्येवमन्वये वक्तव्ये रसस्य बहिः स्फुटं प्रतीत्यभावात् तत्सद्भावप्रतिपत्त्यर्थं अभ्याहननेन बहिःस्राव उक्तः अत्यन्ताभ्याहनने जीवविश्लेषापत्तेः जीवे सति रस इत्यन्वयो न सिद्ध्येत् तदर्थमाह—सकृदिति । अस्यार्थस्य दार्ढ्यार्थं यो मध्य इत्याद्युक्तम् । मूलैः पिबन्नित्यन्वयः ॥१॥

---

१. स्वयं स्वस्य देहान्तरमस्तीति कथं मम ज्ञानमिति प्रश्नस्योत्तरं—अस्य सोम्य वृक्षस्येति वृक्षादिषु स्वयं शाखाछेदनेऽपि जीवो न म्रियते सर्वच्छेदने शुष्यति तथा रसादियुक्तस्य सद्भावे जीवो न म्रियते, एवं जीवोऽपि न म्रियत इत्युक्तं द्वैतिभिः—इदमपि स्वस्य देहान्तरसद्भावे लिङ्गं न भवति । सर्वच्छेदने वृक्षनाशवत् जीवनाशोपपत्तेः अस्य देहान्तरसद्भावेऽमानत्वात् । अस्माकं तु जीवनाशो नास्ति इत्यत्रांशतो दृष्टान्तः । एकैकशाखाछेदने वृक्षजीवो न म्रियते । सुषुप्तौ ब्रह्मभावोऽपि एकदेशछेदनसदृशः न सर्ववृक्षछेदनसदृशः शरीरादेः सद्भावात्, अतो न सुषुप्ते जीवनाशः ।

**अस्य यदेकाँ शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति ॥ २ ॥**

**तस्यास्य यदेकां शाखां रोगग्रस्तामाहतां वा जीवो जहात्युपसंहरति शाखायां विप्रसृतमात्मांशम्। अथ सा शुष्यति। वाङ्मनःप्राणकरणग्रामानुप्रविष्टो हि जीव इति तदुपसंहार उपसंह्रियते। जीवेन च प्राणयुक्तेनाशितं पीतं च रसतां गतं जीवच्छरीरं वृक्षं वर्धयद्रसरूपेण जीवस्य सद्भावे लिङ्गं भवति। अशितपीताभ्यां हि देहे जीवस्तिष्ठति ते चाशितपीते जीवकर्मानुसारिणी इति। तस्यैकाङ्गवैकल्यनिमित्तं कर्म यदोपस्थितं भवति तदा जीव एकां शाखां जहाति शाखाया आत्मानमुपसंहरति। अथ तदा सा शाखा शुष्यति। जीवस्थितिनिमित्तो रसो जीवकर्माक्षिप्तो जीवोपसंहारे न तिष्ठति। रसापगमे च शाखा शोषमुपैति। तथा सर्वं वृक्षमेव यदाऽयं जहाति तदा**

**नरेन्द्रपुरीयं टिप्पणम्**

रुजा रोगेण ग्रस्ताः रुग्ग्रस्ताः। स्थावराणां निर्जीवतां वाञ्छन्ति बौद्धादयः, प्रसङ्गात्तं निरस्यति—**जीवेन चेति**। स्थावराणां रसनिमित्ता वृद्धिः जीवाशितपीतपूर्विका रसनिमित्तवृद्धित्वात् जंगमवृद्धिवदित्यर्थः। यदि जीवापीतपरिणामाद्रसाच्छरीरस्थितिस्तर्हि सा सदैव किं न स्यादित्यत आह—**ते चाशितपीते इति** ॥ १-२ ॥

**आनन्दगिरिटीका**

ननु रोगग्रस्तायां वातोपहतायां वा शाखायां प्राणोपसंहारेऽपि कुतो जीवोपसंहारः सम्भवति तत्राऽऽह—**वागिति**। ननु वृक्षे जीवस्य सद्भावे तत्रोपसंहारानुपसंहारौ वक्तव्यौ तत्र तस्य सत्त्वं तु कुतस्त्यमत आह—**जीवेन चेति**। रसरूपेण वर्धयदिति सम्बन्धः। वृक्षशरीरे जीवस्य सत्त्वेऽपि किमित्यसौ कदाचित्तदीयामेकां शाखां जहातीत्याशङ्क्याऽऽह—**अशितेति**। जीवोपसंहारेऽपि किमिति शाखा शुष्यति तत्राऽऽह—**जीवस्थितीति**। जीवस्य

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

जीवे सति रस इत्यन्वयमुक्त्वा व्यतिरेकमाह—**तस्यास्येति**। जीवस्य स्वतो व्यापिनः उपसंहारासम्भवात् उपाधिद्वारा तमाह—**वागिति**। ननु रसस्रावरसशोषाभ्यां अन्वयव्यतिरेकाभ्यां अतिरिक्तजीवो न सिद्ध्यति तेन विनापि अशितपीतभावाभावाभ्यामेव तयोः सम्भवात् इत्याशङ्क्याह—**जीवेनेति**। मृतशरीरे अशितपीताभ्यां रसापरिणामात् जीवे सत्येव रसपरिणाम इति तत्सिद्धिरित्यर्थः। "तदपानेनाजिघृक्षत् तदावयत् सैषोऽन्नस्य ग्रह" इति श्रुतेरपानवृत्तिमत्प्राणयुक्तस्याशितृत्वं इत्यभिप्रेत्य प्राणयुक्तेनेत्युक्तम्। **रसरूपेणेति**। तद्रूपेण विद्यमानमित्यर्थः। रसद्वारा अशितपीतयोः जीवलिङ्गत्वमुक्त्वा साक्षादप्याह—**अशिते तिष्ठतीति**। अनुमीयत इति शेषः। तत्र हेतुमाह—**ते चेति**। तयोर्जीवकर्मानुसारित्वात् जीवाभावे तयोरनुपपत्तेः तल्लिङ्गत्वमित्यर्थः। जीवद्देहे अन्नादि-सन्निधानेऽपि कदाचिदशनपानयोरभावात् तयोस्तत्कर्माधीनत्वसिद्धिरित्यर्थः। एवं रसादिलिङ्गेन जीवं प्रसाध्य 'जीवेनात्मनाऽनुप्रभूत' इत्येतदुपपाद्य 'तस्य यदेकां' इत्यादिवाक्यार्थमुक्तमुपपादयति—**तस्येत्यादिना**।

यद्वा अशितपीताभ्यां हीत्यादि सर्वं शाखाया जीवसंहारोपपादकम्। तथाहि—अशितपीताभ्यां रसरूपेण परिणताभ्यां हि देहे जीवस्तिष्ठति ते च जीवकर्मानुसारिणी। ततश्च तस्य यदा एकाङ्गवैकल्यनिमित्तं कर्म भवति तदा तेन कर्मणा प्रतिबद्धं सत् रसपरिणामहेतुभूतं कर्म तदङ्गे रसादिपरिणामं न जनयति। ततश्च जीवस्थितिहेतोः रसस्याभावात् जीव उपसंहरति स्वात्मानं तस्मादङ्गादिति। एवं जीवोपसंहारमुपपाद्य शाखाशोषं तन्निमित्तक-मुपपादयति—**जीवस्थितीति**। जीवस्थित्या रसपरिणामो जायत इति जीवोऽन्नस्य रसादिरूपेण परिणामे हेतुः। अन्नरसे च सति देहे जीवस्तिष्ठति इतरथा नेति जीवस्थितिरसपरिणामयोरन्योन्यं हेतुत्वमिति भावः। जीवस्थिति-निमित्तत्वे हेतुमाह—**जीवकर्माक्षिप्त इति**। **न तिष्ठतीति**। पूर्वं विद्यमानोऽपि रसः अपगच्छतीत्यर्थः।

वृक्षोदाहरणं विहाय शाखोदाहरणस्य तु प्रयोजनं व्यतिरिक्तस्यापि जीवस्य नाशशङ्कानिराकरणम्। तत्राद्यं शाखान्तरे स न स्यात् तस्यैकस्मिन् वृक्षे एकत्वात् इति। वृक्षः चेतनावान् रसस्रावेण शोषणच्छिन्नप्ररोहणादि-मत्त्वात् मनुष्यदेहवत् इत्यनुमानात् जीवेनात्मनानुप्रभूत इति जीव[स]त्वप्रतिपादकप्रकृतदृष्टान्तश्रुतेश्च वृक्षादेः

**एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्यैकादशः खण्डः**

**सर्वोऽपि वृक्षः शुष्यति । वृक्षस्य रसस्रवणशोषणादिलिङ्गाज्जीववत्त्वं दृष्टान्तश्रुतेश्च चेतनावन्तः स्थावरा इति बौद्धकाणादमतमचेतनाः स्थावरा इत्येतदसारमिति दर्शितं भवति ॥ २ ॥**

**यथाऽस्मिन्वृक्षदृष्टान्ते दर्शितं जीवेन युक्तो वृक्षोऽशुष्को रसपानादियुक्तो जीवतीत्युच्यते तदपेतश्च म्रियत इत्युच्यते । एवमेव खलु सोम्य विद्धीति होवाच—जीवापेतं जीववियुक्तं वाव किलेदं शरीरं म्रियते न जीवो म्रियत इति कार्यशेषे च सुप्तोत्थितस्य ममेदं कार्यशेषमपरिसमाप्तमिति स्मृत्वा समापनदर्शनात् । जातमात्राणां च जन्तूनां स्तन्याभिलाषभयादिदर्शनाच्चातीतजन्मान्तरानुभूतस्तन(न्य)पानदुःखानुभवस्मृतिर्गम्यते । अग्निहोत्रादीनां च वैदिकानां कर्मणामर्थवत्त्वान्न जीवो म्रियत इति । स य एषोऽणिमेत्यादि समानम् । कथं पुनरिदमत्यन्तस्थूलं**

**नरेन्द्रपुरीयं टिप्पणम्**

जीवस्य सुषुप्तादावविनाशे लिङ्गान्तराण्याह—कार्यशेषे चेत्यादिना । शुक्लेभ्यस्तन्तुभ्यः शुक्लपटोत्पत्ति-दर्शनात् कार्योपादानयोः सालक्षण्यं वाच्यम् । ब्रह्म तु जगद्वैलक्षण्यान्न कारणमिति शङ्कमानस्य प्रतिषेधनायोत्तरमव-तारयति—कथं पुनरित्यादिना ॥ ३ ॥

**इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य एकादशः खण्डः**

**आनन्दगिरिटीका**

स्थितिर्निमित्तं यस्येति विग्रहः । तथा शाखायामुक्तप्रकारेणेति यावत् । यत्तु वैशेषिकवैनाशिकाभ्यां स्थावराणां निर्जीवत्वेनाचेतनत्वमुक्तं तदेतन्निरस्तमित्याह—वृक्षस्येति । आदिशब्दो वृद्धिमोदादिसंग्रहार्थः । स एष वृक्षो जीवेनाऽऽत्मनाऽनुप्रभूत इति दृष्टान्तश्रुतिः ॥ २ ॥

श्रुतिदृष्टान्ते विवक्षितमंशमनूद्य दार्ष्टान्तिकमाह—यथेत्यादिना । जीवस्य सुषुप्ते नाशाभावे हेत्वन्तरमाह—कार्यशेषे चेति । तस्मिन्सति सुषुप्तो भूत्वा पुनरुत्थितस्य कार्यस्य शेषोऽस्ति यस्मिन्कर्मणि तदिदं ममासमाप्तमिति स्मृत्वा तस्य समापनदर्शनान्न स्वापे जीवो नश्यतीत्यर्थः । मरणकाले तन्नाशाभावे हेत्वन्तरमाह—जातमात्राणा-मिति । आद्यश्चकारः समुच्चये द्वितीयोऽवधारणे । जीवस्य प्रलयादावविनाशे कारणान्तरमाह—अग्निहोत्रा-

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

चेतनावत्त्वसिद्धेः अचेतनाः स्थावरा इति यत् बौद्धमतं काणादैकदेशिमतं च तदयुक्तमिति प्रसङ्गादाह—**वृक्षस्येति ।** बौद्धं प्रति इतिप्रदर्शनं तत्प्रामाण्यस्य साधितत्वाद्युज्यते । काणादमात्रं प्रति वा तत्प्रदर्शनं योज्यम् । **चेतनावन्तः स्थावरा इति ।** तदनन्तरं सिद्धेरिति शेषः ॥ २ ॥

दृष्टान्तानुवादपूर्वकं दार्ष्टान्तिकं व्याचष्टे—**यथाऽस्मिन्निति ।** पानादीत्यादिशब्देन ओदनमुच्यते । **म्रियत** इत्यादिशब्दपाठे मरणशब्देन रसपानाभाव उच्यते, आदिशब्देन शुष्कत्वमिति विवेकः । जीवयोगाच्छरीरस्य मरणं शाखादेरिव न जीवस्येत्यत्र किलशब्दसूचितान् न्यायानाह—**कार्यशेषे चेति ।** सतीति शेषः । इदं सुप्तौ जीवलयाभावे लिङ्गम् । तत्रापि लयस्य आपाततश्शङ्काऽवसरे शङ्कितत्वात् स्तन्यपानाभिलाषदर्शनात् स्तन्यपानानुभवजन्यस्मृतिः भयादिदर्शनात् दुःखानुभवजन्यस्मृतिश्च गम्यत इति योजना । आदिशब्देन रोदनादिसङ्ग्रहः । **अर्थवत्त्वादिति ।** इतरथा हि पारलौकिकस्वर्गादिफलकाग्निहोत्रादीनां वैयर्थ्यं स्यात् परलोकभाजो जीवस्याभावादित्यर्थः । **कथं पुनरिति ।** यद्यप्यणुभ्यो जगदुत्पत्तेर्न्यायशास्त्रेऽङ्गीकारान्नेयं शङ्का सम्भवति, तथापि वेदान्तसिद्धान्ते असदुत्पत्त्य-

[1]न्यग्रोधफलमत आहरेतीदं भगव इति भिन्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्धीति भिन्ना भगव इति किमत्र पश्यसीति न किंचन भगव इति ॥१॥

तँ होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ॥ २ ॥

पृथिव्यादि नामरूपवज्जगदत्यन्तसूक्ष्मात्सद्रूपान्नामरूपरहितात्सतो जायत इत्येतद्दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति । तथा सोम्येति होवाच पिता ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्यैकादशः खण्डः

यद्येतत्प्रत्यक्षीकर्तुमिच्छसि, अतोऽस्मान्महतो न्यग्रोधात्फलमेकमाहरेत्युक्तस्तथा चकार, स इदं भगव उपहृतं फलमिति दर्शितवन्तं प्रत्याह फलं भिन्धीति । भिन्नमित्याहेतरः । तमाह पिता किमत्र पश्यसीत्युक्त आहाण्व्योऽणुतरा इवेमा धाना बीजानि पश्यामि भगव इति । आसां धानानामेकां धानामङ्ग हे वत्स भिन्धीत्युक्त आह भिन्ना भगव इति । यदि भिन्ना धाना तस्यां भिन्नायां किं पश्यसीत्युक्त आह न किञ्चन पश्यामि भगव इति ॥ १ ॥

तं पुत्रं होवाच वटधानायां भिन्नायां यं वटबीजाणिमानं हे सौम्यैतं न निभालयसे न पश्यसि। तथाऽप्येतस्य वै किल सोम्यैष महान्न्यग्रोधो बीजस्याणिम्नः सूक्ष्मस्यादृश्यमानस्य कार्यभूतः स्थूलशाखास्कन्धफलपलाशवांस्तिष्ठत्युत्पन्नः सन्नुत्तिष्ठतीति वोच्छब्दोऽध्याहार्योऽतः श्रद्धत्स्व सोम्य सत एवाणिम्नः स्थूलं नामरूपादिमत्कार्यं जगदुत्पन्नमिति ।

आनन्दगिरिटीका

दीनामिति । इतिशब्दो जीवस्य नित्यत्वोपसंहारार्थः । यदुक्तं सन्मूलाः सोम्येत्यादि तत्र चोदयति—कथं पुनरिति । विलक्षणयोर्न कार्यकारणत्वमिति शङ्कमानं प्रतिबोधयितुमुत्तरं वाक्यमुपादत्ते—तथेति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्यैकादशः खण्डः

स्थूलस्य कार्यस्य सूक्ष्ममुख्यकारणत्वमेतदित्युच्यते। अस्य सोम्य महतो वृक्षस्येति प्रकृतं वृक्षं परामृशति—अत इति ॥ १ ॥

यमेतमणिमानं न पश्यस्येतस्याणिम्नो वीजस्येति सम्बन्धः । तथाऽपीत्यत्यन्ताणुत्वाददर्शनेऽपीत्यर्थः । अत्यन्तसूक्ष्माद्वीजादत्यन्तस्थूलस्य वृक्षस्योत्पत्त्युपलम्भोऽतःशब्दार्थः । सन्मूलाः सोम्येत्यादिश्रुत्या दृश्यते त्विति

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नभ्युपगमात् कारणे विद्यमानमेवोत्पद्यत इत्यङ्गीकर्तव्यम् । ततश्च स्थूलस्य जगतो नामरूपवतः कथं तद्विपरीतादुत्पत्तिः तस्य कारणे सूक्ष्मे विद्यमानत्वासम्भवात् अविद्यमानस्योत्पत्त्यसम्भवादिति शङ्कार्थः । तथाच सतो जगन्मूलत्वेन अनुमानासिद्धेः जीवस्य सदभेदो दूरापास्त इति भावः । स्थूलत्वमाह—नामरूपवदिति ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्यैकादश खण्डः

परमाणुपरिमाणत्वे पश्यामीत्यनुपपत्तेः इवकारः अणुतरा इवेति । किं पश्यसीति दर्शनप्रश्ने धाना इति वस्तुसद्भावमात्रेण उत्तरमयुक्तमित्याशङ्क्य पश्यामीति पुरुषविपरिणामेन अनुषङ्गमाह—पश्यामीति ॥ १ ॥

वटबीजाणिमानमिति वटस्य बीजभूतं अणिमानं वटस्य सूक्ष्मं रूपं धानायां विद्यमानमित्यर्थः । एतस्य बीजस्याणिम्न इत्यन्वयः । धानावस्थायां एवंशब्दितस्य महतः स्थूलरूपस्य तस्यां स्थित्यसम्भवादाह—उत्पन्न इति ।

---

१. स्वस्मिन्नणुरूपे जीवे स्थितो हरिः कुतो न ज्ञायते स्वस्येति शङ्का निराक्रियतेऽस्मिन् खण्डे । यथा वटबीजस्थो वृक्षो बीजावस्थायां न प्रत्यक्षः एवं जीवे स्थितो हरिरपीति । इदमपि न सुन्दरम्, बीजावस्थायां वृक्षो नोत्पन्न एव । तस्य जलपृथिव्याद्यवयवसहकारेणैवोत्पत्स्यमानत्वात् न च हरिस्तथा। अत एव महान् न्यग्रोधस्तिष्ठति इत्यत्रोत्पन्नः सन् इति वा उत्तिष्ठतीत्यर्थेन वोपपादनं भाष्ये।

**स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

**इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य द्वादशः खण्डः**

यद्यपि न्यायागमाभ्यां निर्धारितोऽर्थस्तथैवेत्यवगम्यते तथाऽप्यत्यन्तसूक्ष्मेष्वर्थेषु बाह्यविषयासक्तमनसः स्वभावप्रवृत्तस्यासत्यां गुरुतरायां श्रद्धायां दुरवगमत्वं स्यादित्याह श्रद्धत्स्वेति । श्रद्धायां तु सत्यां मनसः समाधानं बुभुत्सितेऽर्थे भवेत्ततश्च तदर्थावगतिः । "अन्यत्रमना अभूवम्" इत्यादिश्रुतेः ॥ २ ॥

स य इत्याद्युक्तार्थम् । यदि तत्सज्जगतो मूलं कस्मान्नोपलभ्यत इत्येतद्दृष्टान्तेन मा भगवान्भूय एव विज्ञापयत्विति । तथा सोम्येति होवाच पिता ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य द्वादशः खण्डः

नरेन्द्रपुरीयं टीप्पणम्

प्रत्यक्षतोऽनुपलभ्यमानत्वान्नास्तित्वाशङ्कायां तदपाकरणायोत्तरमवतारयति—यदि तत्सज्जगतो मूलमित्यादिना ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य द्वादशः खण्डः

आनन्दगिरिटीका

न्यायेन च जगतः सत्कार्यत्वे सिद्धे श्रद्धामन्तरेणापि तन्निर्णयसम्भवात्किमिति श्वेतकेतुः श्रद्धत्स्वेति पित्रा नियुज्यते तत्राऽऽह—यद्यपीति । सत्यामपि श्रद्धायां कथं बाह्यविषयासक्तमनसोऽत्यन्तसूक्ष्मेष्वर्थेष्ववगमः स्यादित्याशङ्क्याऽऽह—श्रद्धायां त्विति । मनःसमाधानवशाद्बुभुत्सितस्यार्थस्यावगतिरित्यत्र बृहदारण्यकश्रुतिं सम्वादयति—अन्यत्रेति ॥२॥

प्रत्यक्षतोऽनुपलभ्यमानत्वान्नास्तीति मन्वानः शङ्कते—यदीति । अनुपलभ्यमानस्यापि सत्त्वमाशङ्क्याऽऽह—इत्येतदिति । अप्रत्यक्षस्यापि जगन्मूलस्यास्तित्वं प्रतिपादयितुमुत्तरग्रन्थमवतारयति—तथेति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य द्वादशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

भूतार्थकं लटं स्वीकृत्य उच्छब्दं चाध्याहृत्य व्याख्यानान्तरमाह—उदतिष्ठदिति वेति । यद्यपि श्वेतकेतुना प्रदर्शिताणिम्नः सकाशात् पुरःस्थितो वृक्षो नोत्पन्नः तद्वृक्षजन्यत्वात् प्रदर्शितधानानां, तथापि एतद्वृक्षजनकाणिम्नः एतद्धानाणिम्नश्च वटधानाणिमत्वसामान्येनैकत्वमङ्गीकृत्य एतस्याणिम्न एतन्न्यग्रोधस्तिष्ठतीत्युक्तम् । यथा वटधानायां सूक्ष्मत्वादप्रतीयमानोऽपि विद्यमान एव वट उत्पन्नः तथा जगतोऽपि सति विद्यमानस्यैव अप्रतीतस्यापि सतः उत्पत्तिरुक्तेत्याह—अतः श्रद्धत्स्वेति ।

ननु न्यायेन सम्भाविते वस्तुनि आगमेन निश्चयसम्भवात् श्रद्धा व्यर्थेत्याशङ्कते—यद्यपीति। केवलवैदिकार्थनिश्चये श्रद्धापि कारणं तदभावे बहिर्मुखस्य तत्र एकाग्रताया असिद्धेः । अत्र श्रद्धायाः कारणत्वप्रतिपत्त्यर्थं श्रद्धत्स्वेत्युक्तमिति परिहरति—तथापीति । श्रद्धया मनससमाधाने सति वस्त्ववगतिर्भवतीत्याह—ततस्तदर्थेति । समाधानादित्यर्थः । मनस्समाधानाभावे यथावज्ज्ञानं न भवतीति व्यतिरेकप्रदर्शनार्थं काण्वश्रुतिमाह—अन्यत्रेति । अन्यत्र मनो यस्य सोऽहं तथा अतो न दृष्टवानस्मीति लोकव्यवहारमनुवदति श्रुतिरित्यर्थः ॥ २ ॥

यदि जगतो मूलं वटधानागतवटबीजवत् सत् तर्हि तद्वदेव सर्वैरुपलभ्येत । यदि दुरवगमत्वान्नोपलभ्यते तर्हि मुमुक्षोः सद्ज्ञानाभावात् मोक्षानुपपत्तिरिति शङ्कान्तरमाह—यदीति । यदि दुरवगमस्याप्युपायान्तरेण ज्ञानं सम्भवतीत्युच्यते तर्हि एतद्दृष्टान्तेन बोधयेत्याशङ्कान्तरमध्याहृत्य शङ्कावाक्यं योजनीयम् । अन्यथा दृष्टान्तेन उपायान्तरेण तज्ज्ञानसाधनस्यानुपयोगप्रसङ्गात् इति । उत्तरमाह—तथेति ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य द्वादशः खण्डः

[1]लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स तथा चकार तँ होवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥

यथा विलीनमेवाङ्गास्यान्तादाचामेति कथमिति लवणमिति मध्यादाचामेति कथमिति लवणमित्यन्तादाचामेति कथमिति लवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्संवर्तते तँ होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥ २ ॥

विद्यमानमपि वस्तु नोपलभ्यते प्रकारान्तरेण तूपलभ्यत इति शृण्वत्र दृष्टान्तम् यदि चेममर्थं प्रत्यक्षीकर्तुमिच्छसि । पिण्डरूपं लवणमेतद्घटादावुदकेऽवधाय प्रक्षिप्याथ मा मां श्वः प्रातरुपसीदथा उपगच्छेथा इति । स ह पित्रोक्तमर्थं प्रत्यक्षीकर्तुमिच्छंस्तथा चकार । तं होवाच परेद्युः प्रातर्यल्लवणं दोषा रात्रावुदकेऽवाधा निक्षिप्तवानस्यङ्ग हे वत्स तदाहरेत्युक्तस्तल्लवणमाजिहीर्षुर्ह किलावमृश्योदके न विवेद न विज्ञातवान्यथा तल्लवणं, विद्यमानमेव सदप्सु लीनं संश्लिष्टमभूत् ॥ १ ॥

यथा विलीनं लवणं न वेत्थ तथाऽपि तच्चक्षुषा स्पर्शनेन च पिण्डरूपं लवणमगृह्यमाणं विद्यत एवाप्सूपलभ्यते चोपायान्तरेणेत्येतत्पुत्रं प्रत्याययितुमिच्छन्नाह—अङ्गास्योदकस्यान्तादुपरि गृहीत्वाऽऽचामेत्युक्त्वा पुत्रं तथाकृतवन्तमुवाच कथमितीतर आह लवणं स्वादुतः इति । तथा मध्यादुदकस्य गृहीत्वाऽऽचामेति कथमिति लवणमिति । तथाऽन्तादधोदेशाद्गृहीत्वाऽऽचामेति कथमिति लवणमिति । यद्येवमभिप्रास्य परित्यज्यैतदुदकमाचम्याथ मोपसीदथा इति तद्ध तथा चकार लवणं परित्यज्य पितृसमीपमाजगामेत्यर्थः। इदं वचनं ब्रुवंस्तल्लवणं तस्मिन्नेवोदके यन्मया रात्रौ क्षिप्तं शश्वन्नित्यं संवर्तते विद्यमानमेव सत्सम्यग्वर्तते । इत्येवमुक्तवन्तं तं होवाच पिता । यथेदं लवणं

आनन्दगिरिटीका

नोपलभ्यते स्वेन प्रकारेणेति शेषः । इतीममर्थं प्रत्यक्षीकर्तुं यदीच्छसि तर्हि दृष्टान्तमत्र शृण्विति योजना । रात्रेरत्ययानन्तर्यमथशब्दार्थः । जगन्मूलं स्वतोऽप्रत्यक्षमपि प्रत्यक्षमुपायान्तरेणेति पित्रोक्तोऽर्थस्तं प्रत्यक्षीचिकीर्षुर्घटादावुदके पिण्डरूपं लवणं रात्रौ प्रक्षिप्य तदत्ययानन्तरं प्रातःकाले पितृसमीपं श्वेतकेतुर्गतवानित्याह—स हेति । यथा तत्पिण्डरूपं लवणं प्रक्षेपात्प्रागभूत्तथा न विज्ञातवानिति सम्बन्धः । उदके प्रक्षिप्तं लवणं विमृश्यापि न विज्ञायते चेदसदेव तर्हि तदित्याशङ्क्याऽऽह—विद्यमानमेवेति । किमिति तर्हि चक्षुषा स्पर्शेन वा नोपलभ्यते तत्राऽऽह—अप्स्विति ॥ १ ॥

कथं तर्हि तस्य विद्यमानत्वमवगतं तत्राऽऽह—यथेति । यद्यपि पिण्डरूपं लवणमुदके क्षिप्तमवमृश्यापि चक्षुस्स्पर्शनाभ्यां न त्वं वेत्थ तथाऽपि तत्तत्र विद्यत एव यतस्ताभ्यामगृह्यमाणमपि तत्रोपायान्तरेणोपलभ्यत इत्येतमर्थं प्रत्याययितुमुत्तरं वाक्यमित्यर्थः । यथाशब्दो यद्यपीत्यर्थे । तद्धेत्यादि व्याचष्टे—लवणमिति । संवर्तत इतीदं वचनं ब्रुवन्नाजगामेति सम्बन्धः। दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—इत्येवमुक्तवन्तमित्यादिना। सतो जगन्मूलस्यास्मिन्देहे

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

उपलभ्यत इत्यत्र दृष्टान्तं शृण्वित्यन्वयः । **यथा तल्लवणमिति** । यथा विद्यमानमेव तल्लवणं विलीनमभूत् तदा न विवेदेति पूर्वेणान्वयः । विलयो नाश इत्याशङ्कां वारयति—**संश्लिष्टमिति** । यद्वा यथार्थतो विद्यमानमेव न विवेदेति वा । उक्तानुवादपूर्वकं उत्तरवाक्यापेक्षितं सदन्तमवतारयति—**यथेति** । यद्यपीत्यर्थः । यद्यपि न वेत्थ तथापि विद्यत एव; यद्यपि च तच्चक्षुषा स्पर्शेन चागृह्यमाणं तथापि उपलभ्यते चोपायान्तरेणेति योजना ॥ १ ॥

ननु उदकस्य लवणद्रव्यत्वाभावात् कथं लवणमित्युक्तमित्यत आह—**स्वादुत इति**। आस्वादने लवणरसवत् प्रतीयत इत्यर्थः । **आचम्येति** । अन्यथा तस्याशुद्धत्वे वक्ष्यमाणोपदेशानर्हत्वादिति भावः । **लवणं परित्यज्येति** ।

---

१. जीवे स्थितः पृथक् न दृश्यते तादृशशक्तिवशात् इति वक्तुं रात्रौ जले लवणं प्रक्षिप्तं प्रातः तत्र सदेव लवणं न दृश्यते । तद्वत् हरिः इत्युक्तम् । तद्दर्शनं च यथा रसनया लवणदर्शनं तथा गुरूपदेशेन हरिदर्शनमिति उत्तरखण्डार्थः समानः ।

स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य त्रयोदशः खण्डः

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥ १ ॥

दर्शनस्पर्शनाभ्यां पूर्वं गृहीतं पुनरुदके विलीनं ताभ्यामगृह्यमाणमपि विद्यत एवोपायान्तरेण जिह्वयोपलभ्यमानत्वात्। एवमेवात्रैवास्मिन्नेव तेजोवन्नादिकार्ये शुङ्गे देहे। वाव किलेत्याचार्योपदेशस्मरणप्रदर्शनार्थौ। सत्तेजोवन्नादिशुङ्ग-कारणं वटबीजाणिमवद्विद्यमानमेवेन्द्रियैर्नोपलभसे न निभालयसे। यथाऽत्रैवोदके दर्शनस्पर्शनाभ्यामनुपलभ्यमानं लवणं विद्यमानमेव जिह्वयोपलब्धवानसि। एवमेवात्रैव किल विद्यमानं सज्जगन्मूलमुपायान्तरेण लवणाणिमव-दुपलप्स्यस इति वाक्यशेषः ॥ २ ॥

स य इत्यादि समानम्। यद्येवं लवणाणिमवदिन्द्रियैरनुपलभ्यमानमपि जगन्मूलं सदुपायान्तरेणोपलब्धुं शक्यते यदुपलम्भात्कृतार्थः स्यामनुपलम्भाच्चाकृतार्थः स्यामहं तस्यैवोपलब्धौ क उपाय इत्येतद्भूय एव मा भगवान्विज्ञापयतु दृष्टान्तेन तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य त्रयोदशः खण्डः

यथा लोके हे सोम्य पुरुषं यं कश्चिद्गन्धारेभ्यो जनपदेभ्योऽभिनद्धाक्षं बद्धचक्षुषमानीय द्रव्यहर्ता तस्करस्तमभिनद्धाक्षमेव बद्धहस्तमरण्ये ततोऽप्यतिजनेऽतिगतजनेऽत्यन्तविगतजने देशे विसृजेत्स तत्र दिग्भ्रमोपेतो

नरेन्द्रपुरीयं टिप्पणम्

उपायोपदेशार्थमुत्तरं वाक्यमवतारयति—यद्येवं लवणाणिमवदित्यादिना ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य त्रयोदशः खण्डः

आनन्दगिरिटीका

सत्त्वं त्वया कथमवगतमत आह—वावेति। अत्र वावेत्यादिनाऽत्रैव किलेत्यस्य पौनरुक्त्यमाशङ्क्यार्थविशेषं दर्शयति—यथाऽत्रेत्यादिना ॥ २ ॥

उपायान्तरजिज्ञासया पृच्छति—यद्येवमिति। तर्हि तदेत्यध्याहृतस्य तस्येत्यादिना सम्बन्धः। सतो मूलस्योपलम्भेऽनुपलम्भे वा किं स्यादित्याशङ्क्याऽऽह—यदुपलम्भादिति। बुभुत्सितमुपायमुपदर्शयितुमुत्तरग्रन्थ-मुपादत्ते—तथेति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य त्रयोदशः खण्डः

यथाऽयमुपायः शक्यो ज्ञातुं तथा लोके प्रदृश्यते दृष्टान्त इत्याह—यथेति। तमेव दृष्टान्तं व्याचष्टे—हे सोम्येति। यथा दिग्भ्रमोपेतो यत्किञ्चिद्दिगभिमुखो विक्रोशति तथा स तत्र विजने देशे शब्दं कुर्यादिति सम्बन्धः।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

लवणोदकं परित्यज्येत्यर्थः। इदं वचनं तच्छश्वत् संवर्तत इति वचनं ब्रुवन्नाजगामेति पूर्वेणान्वयः। तदेव वचनं व्याचष्टे—तल्लवणमिति। अत्रैव किलेति वाक्यं उपायान्तरेणोपलभस्वेति पदद्वयाध्याहारेण दृष्टान्तपूर्वकं व्याचष्टे—यथा चेति ॥ २ ॥

उपायान्तरेणोपलब्धुं शक्यत्वेऽपि निष्फलत्वे तदुपायान्वेषणं न कर्तव्यमित्याशङ्क्याऽऽह—यदुपलम्भादिति॥३॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य त्रयोदशः खण्डः

ततश्शब्दार्थं वक्तुं तदवधित्वेन अरण्यपदाध्याहारेण प्रथमं अरण्ये विसृज्येति व्याचष्टे—अरण्य इति।

---

१. चतुर्दशखण्डे जीवस्यास्वातन्त्र्यमीरितम्, इति मध्वाचार्यः। इदं तु प्रकृतानुपयुक्तम्। पूर्वं उततमा-देशमप्राक्ष्य इति उपदेशैकगम्यं ब्रह्मेत्युक्तेः उपदेशैकगम्यत्वं ब्रह्मणः सूचितम्। तदेवात्र विस्तरेण वक्तुं स दृष्टान्तेनोपदेशगम्यत्वं ब्रूते इति विशेषः।

**तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्य-[1] वान्पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति ॥ २ ॥**

यथा प्राङ्वा प्रागञ्चनः प्राङ्मुखो, वेत्यर्थः। तथोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीत शब्दं कुर्याद्विक्रोशेत्। अभिनद्धाक्षोऽहं गन्धारेभ्यस्तस्करेणाऽऽनीतोऽभिनद्धाक्ष एव विसृष्ट इति ॥ १ ॥

एवं विक्रोशतस्तस्य यथाभिनहनं यथाबन्धनं प्रमुच्य मुक्त्वा कारुणिकः कश्चिदेतां दिशमुत्तरतो गन्धारा एतां दिशं व्रजेति प्रब्रूयात्स एवं कारुणिकेन बन्धनान्मोक्षितो ग्रामाद्ग्रामान्तरं पृच्छन्पण्डित उपदेशवान्मेधावी परोपदिष्टग्रामप्रवेशमार्गावधारणसमर्थः सन्गन्धारानेवोपसम्पद्येत नेतरो मूढमतिर्देशान्तरदर्शनतृड्वा। यथाऽयं

नरेन्द्रपुरीयं टिप्पणम्

यद्यपि वाक्यार्थज्ञाने वाक्यमेवोपायस्तथाप्याचार्योपदेशकृतातिशयदर्शनादत्राचार्योपदेशोऽवगत्यन्तवाक्यार्थ-ज्ञाने प्रथम उपाय उक्तः। उपदेशमात्रात्तु यस्य नावगत्यन्तता तस्य प्रामाण्याद्यसम्भावनानिराससमर्थो विचारोऽभि-

आनन्दगिरिटीका

प्राङित्यस्यार्थमाह—प्रागञ्चन इति। तस्यैव विवक्षितमर्थं कथयति—प्राङ्मुख इति। वक्ष्यमाणप्रकारैर्विकल्पार्थो वाशब्दः ॥ १ ॥

यथाबन्धनं बन्धनमनुसृत्येति यावत्। पण्डितो मेधावीतिविशेषणद्वयस्य व्यवच्छेद्यं दर्शयति—नेतर इति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रागगमनं प्रागभिमुखत्वं वा प्राक्शब्दार्थ इत्याह—प्राङिति। एवमुत्तरेष्वपि द्रष्टव्यमित्याह—तथेति अधराङ् दक्षिणाभिमुख इत्यर्थः। प्रत्यङ्वेत्यध्याहृतं पदं न तु अधराङित्यस्य व्याख्यानमिति भ्रमितव्यम्। प्रागपागुदगधराक्' 'पश्चात् पुरस्तादधरादुदक्तात्' इत्यादिषु तस्य शब्दस्य दक्षिणादिगर्थत्वदर्शनेन प्रत्यगर्थत्वाभावात् ॥ १ ॥

यथाभिहननमिति। येन क्रमेण ग्रन्थ्याः करणं तेन क्रमेणेत्यर्थः। सहसा प्रमोचने व्यत्ययापत्त्या मूलतो नाशो न स्यात् इति दार्ष्टान्तिके बन्धागमनक्रमेणैव तन्निवृत्तौ मूलनाशःस्यात्। अन्यथा कोरकमात्रनाशे उत्कलि-कोपशममात्रं स्यादिति दृष्टान्ते स्थित्वा एवमुक्तमिति भावः। त्रस्यन्निति। बिभ्यन्नोपसम्पद्यत इत्यन्वयः। वर्णित-

1. आचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये—इत्यत्र वेदनमुपासनं न तु ज्ञानं, यदुक्तमापस्तम्बेन "बुद्धे क्षेमप्रापणं तच्च शास्त्रविरुद्धमि"ति-रामानुजीयाः-तन्न। "यो वेद निहितं गुहायां" "ब्रह्म वेद ब्रह्मैव भवति" "इह चेदवेदीदथ सत्यमस्ति" इति, विदिसमानार्थक "तमात्मस्थं येऽनुपश्यन्ति धीराः" "तस्मिन् दृष्टे परावरे" "आत्मैवाभूत् विजानतः" "एकत्वमनुपश्यतः" "एव-मेवास्य परिद्रष्टुः" इत्यादिबहुश्रुत्यनुसारेण विदिधातोः ज्ञानार्थत्वात्। उपासनार्थपरिग्रहे लक्षणापत्तेश्च। आपस्तम्बोक्तिस्तु ज्ञानानन्तरमेव विदेहमुक्तिस्वीकारः शास्त्रविरुद्ध इत्यभिप्रायेण। वयं तु तत्त्वज्ञाना-नन्तरं तस्य तावदेव चिरमिति चिरेण जीवन्मुक्तिं स्वीकुर्मः। क्षेमप्राप्तिः=विदेहकैवल्यमिति स्मृत्यर्थः। तत्त्वज्ञानानन्तरं जीवन्मुक्तस्यापि सुखाद्यनुभवः प्रारब्धायत्तः। तदुक्तं—"प्रारब्धाय समर्पितं स्ववपुः" इति। विद्युपास्त्योः अव्यतिरेकेण प्रयोगः उपासनाप्रकरणे पठितः मनो ब्रह्मेत्युपासीत–इत्यारम्भात्–न तत्त्वज्ञानप्रकरणे। अतः विदिः ज्ञानार्थ एव।

अत्र जीवन्मुक्तिविषये सूत्रम्—अनारब्धकार्ये एव तु पूर्वे तदवधेः ( ब्र० सू० ४-१-१५ ) क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे—उभे उ हैवैष एते तरति–इत्यादौ ज्ञानात् कर्मक्षयः श्रूयमाणः प्रारब्धसञ्चितोभयकर्मपरः उत सञ्चितमात्रपर इति सन्देहे—विशेषाश्रवणादुभयपर इति पूर्वपक्षः। सिद्धान्तस्तु "यावन्न विमोक्ष्येऽथ सम्पत्स्ये" इत्युक्तत्वात् ज्ञानानन्तरं शरीरपातावधि प्रारब्धं कर्म भोक्तव्यमेव ततः परं विदेहकैवल्यम्। तदुक्तं–भोगेन त्वितरे क्षपयित्वा सम्पत्स्यते इति।

दृष्टान्तो वर्णितः स्वविषयेभ्यो गन्धारेभ्यः पुरुषस्तस्करैरभिनद्धाक्षोऽविवेको दिङ्मूढोऽशनायापिपासादिमान्व्याघ्रतस्कराद्यनेकभयानर्थव्रातयुतमरण्यं प्रवेशितो दुःखार्तो विक्रोशन्बन्धनेभ्यो मुमुक्षुस्तिष्ठति स कथञ्चिदेव कारुणिकेन केनचिन्मोक्षितः स्वदेशान्गन्धारानेवाऽऽपन्नो निर्वृतः सुख्यभूत्। एवमेव सतो जगदात्मनः स्वरूपात्तेजोवन्नादिमयं देहारण्यं वातपित्तकफरुधिरमेदोमांसास्थिमज्जाशुक्रकृमिमूत्रपुरीषवच्छीतोष्णाद्यनेकद्वन्द्वसुखदुःखवच्चेदं मोहपटाभिनद्धाक्षो भार्यापुत्रमित्रपशुबन्ध्वादिदृष्टादृष्टानेकविषयतृष्णापाशितः पुण्यापुण्यादितस्करैः प्रवेशितो "ऽहममुष्य पुत्रो ममैते बान्धवाः सुख्यहं दुःखी मूढः पण्डितो धार्मिको बन्धुमाञ्जातो मृतो जीर्णः पापी पुत्रो मे मृतो धनं मे नष्टं हा हतोऽस्मि कथं जीविष्यामि का मे गतिः किं मे त्राणमि" त्येवमनेकशतसहस्रानर्थजालवान्विक्रोशन्कथञ्चिदेव पुण्यातिशयात्परमकारुणिकं कञ्चित्सद्ब्रह्मात्मविदं विमुक्तबन्धनं ब्रह्मिष्ठं यदाऽऽसादयति तेन च ब्रह्मविदा कारुण्याद्दर्शितसंसारविषयदोषदर्शनमार्गो विरक्तः संसारविषयेभ्यो नासि त्वं संसार्यमुष्य पुत्रत्वादिधर्मवान्कि तर्हि सद्यत्तत्त्वमसीत्यविद्यामोहपटाभिनहनान्मोक्षितो गन्धारपुरुषवच्च स्वं सदात्मानमुपसम्पद्य सुखी निर्वृतः स्यादित्येतमेवार्थमाहाऽऽचार्यवान्पुरुषो

आनन्दगिरिटीका

व्याख्यातं दृष्टान्तं सोपस्करमनुवदति—यथेत्यादिना। दार्ष्टान्तिकं व्याचष्टे—एवमिति। आदिशब्देन वाय्वाकाशौ गृह्येते। मयड्विकारार्थः। देहारण्यस्यानेकानर्थसङ्कटत्वं कथयति—वातेति। शीतोष्णादीत्यादिपदेन रागद्वेषादि द्वन्द्वं गृहीतं तेनानेकेन द्वन्द्वेन जातं सुखं दुःखं च तदुपेतमिदं देहारण्यमित्येतत्। बन्ध्वादीत्यादिशब्दो मित्रक्षेत्रादिविषयः। पुण्यापुण्यादीत्यादिपदमविद्याकामवासनासंग्रहार्थम्। देहारण्यं प्रविष्टस्य जन्तोर्विक्रोशनप्रकारं सकारणं सूचयति—अहमित्यादिना। तस्य सदा दुःखित्वशङ्कां वारयति—कथञ्चिदेवेति। आपाततो ब्रह्मवित्त्वमात्रेण मुक्तबन्धनत्वासिद्धेर्विशिनष्टि—ब्रह्मिष्ठमिति। यदाऽऽसादयति तदा सुखी स्यादित्युत्तरत्र सम्बन्धः। संसारविषयं दोषदर्शनं तस्य क्षयिष्णुत्वादिज्ञानं तस्य मार्गो विवेकः स यस्याऽऽचार्येण दर्शितो विद्यातः स दर्शितसंसारविषयदोषदर्शनमार्गः। आचार्येण साधनचतुष्टयसम्पन्नस्याधिकारिणः संसारान्मोक्षितत्वप्रकारं दर्शयति—नासीति। यद्यपि वाक्यार्थज्ञाने वाक्यमेवोपायस्तथाऽप्याचार्योपदेशजनितातिशयदर्शनात्तदुपदेशोऽन्तरगत्यन्तवाक्यार्थज्ञाने प्रथमो हेतुरुप-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दृष्टान्तमेव बुद्धिसौकर्यार्थं पुनस्सङ्गृह्य दर्शयति—स्वविषयेभ्य इत्यादिना। जगदात्मन इति। जगत आत्मा स्वरूपं वास्तवमित्यर्थः। न केवलं जगत एव स्वरूपं, किन्तु स्वात्मनोऽपीत्याह—स्वरूपादिति। अवकृष्येति शेषः। देहारण्यमिमं प्रवेशित इत्यन्वयः। देहारण्यमेव विशिनष्टि—वातेत्यादिना। शीतोष्णेत्यादिना च पुण्यापुण्यादीत्यादिशब्देन च मिश्रं कर्म गृह्यते। देहे प्रवेशानन्तरं तेन सह तादात्म्याध्यासमाह—अहमिति। पित्रादिषु ममताध्यासमाह—ममेति। अतःकरणतादात्म्याध्यासकृतं तद्धर्माध्यासमाह—सुख्यहमिति। देहाध्यासहेतुकं पुत्रादिषु ममताध्यासमाह—बन्धुमानिति। देहधर्माध्यासकृतमनर्थमाह—जात इति। ममताध्यासकृतमनर्थमाह—पुत्र इति। ब्रह्मवित्त्वमात्रेण नाचार्यत्वमित्यभिप्रेत्य विशिनष्टि—विमुक्तबन्धनमित्यादिना। अनन्यप्रोक्तेऽगतिरत्र नास्तीति श्रुत्यन्तरादित्यर्थः। दर्शितास्संसारे ये विषयाः तेषु दोषदर्शनमेव स्वात्मप्राप्तौ मार्गो यस्य; अत एव संसारविषयेभ्यो विरक्त इत्यर्थः। यद्यपि ब्रह्मविदुपसम्पत्तेः पूर्वमेव वैराग्यमपेक्षितं 'ब्राह्मणो निर्वेदमायात्' 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्' इति श्रुतेः। तथापि पूर्वोत्पन्नमेव वैराग्यमाचार्येणापि दृढीक्रियत इति तथोक्तम्। यद्वा कथञ्चित्पुण्यातिशयवशात्

---

अत्र चरमखण्डे अनृताभिसन्धस्य बन्धः सत्याभिसन्धस्य मोक्ष इत्युक्तम्। अयं तु प्रकृतमोक्षस्य दृष्टान्ततया। तथा हि—मृत्तिकेत्यैव सत्यमित्यनेन जगत्कारणं सत्यं वाचारम्भणं विकार इत्युक्तविकाररूपप्रपञ्चः मिथ्यात्वादसत्यः। तथा च प्रपञ्चाभिसन्धः बध्यते सत्यब्रह्माभिसन्धो मुच्यत इति सूचितम्। अत्र सत्यस्य अनृतप्रतियोगित्वेनोक्तत्वात् मृत्तिकेत्येव सत्यं इत्यत्रापि सत्यपदस्यानृतभिन्नमित्यर्थः। तथा वाचारम्भणशब्देन सत्यप्रतियोगिनः अनृतस्योक्तत्वात् प्रपञ्चानृतत्वं च स्पष्टमुक्तं भवति।

इदं च सत्यमिति प्रामाणिकमित्यर्थं इति वदतां रामानुजीयानां न सङ्गच्छते दृष्टान्ते सत्यवादी मुच्यते इत्यत्र तदर्थासम्भवात् प्रमाणाबाध्यार्थस्यैव सत्यत्वात्। मध्वाभिमतं मृत्तिकाशब्दसत्यत्वं च नात्राभिमतं, यतः सर्वेषां शब्दानां तन्मते सत्यत्वात् अनृतवाक्यमपि सत्यमेव। ततश्च तस्य बन्धो न स्यात् दृष्टान्ते। अतः श्रीभगवत्पादोक्तमेव साधु।

वेदेति तस्यास्यैवमाचार्यवतो मुक्ताविद्याभिनहनस्य तावदेव तावानेव कालश्चिरं क्षेपः सदात्मस्वरूपसम्पत्तेरिति वाक्यशेषः। कियान्कालश्चिरमित्युच्यते यावन्न विमोक्ष्ये न विमोक्ष्यत इत्येतत्पुरुषव्यत्ययेन। सामर्थ्यात्। येन कर्मणा शरीरमारब्धं तस्योपभोगेन क्षयाद्देहपातो यावदित्यर्थः। अथ तदैव सत्सम्पत्स्ये सम्पत्स्यत इति पूर्ववत्। न हि देहमोक्षस्य तत्सम्पत्तेश्च कालभेदोऽस्ति येनाथशब्द आनन्तर्यार्थः स्यात्।

ननु यथा सद्विज्ञानानन्तरमेव देहपातः सत्सम्पत्तिश्च न भवति कर्मशेषवशात्तथाऽप्रवृत्तफलानि प्राग्ज्ञानोत्पत्तेर्जन्मान्तरसञ्चितान्यपि कर्माणि सन्तीति तत्फलोपभोगार्थं पतितेऽस्मिञ्शरीरान्तरमारब्धव्यम्। उत्पन्ने च ज्ञाने यावज्जीवं विहितानि प्रतिषिद्धानि वा कर्माणि करोत्येवेति तत्फलोपभोगार्थं चावश्यं शरीरान्तरमारब्धव्यं ततश्च कर्माणि ततः शरीरान्तरमिति ज्ञानानर्थक्यं कर्मणां फलवत्त्वात्। अथ ज्ञानवतः क्षीयन्ते कर्माणि तदा ज्ञान-

नरेन्द्रपुरीयं टिप्पणम्

हितः। मेधाविशब्दस्य प्रज्ञातिशयशालिनि प्रयोगदर्शनादिति। सामर्थ्यादिति। अस्मदाद्युपपदेऽसत्युत्तमपुरुषप्रयोगानुपपत्तेर्देहादिस्थित्यनुपपत्तेश्चेत्यर्थः। अथ सम्पत्स्य इति विदेहमुक्तिरुक्ता। तामाक्षिपति—ननु यथेत्यादिना। अप्रवृत्तफलानि कर्माणि न ब्रह्मज्ञानेन क्षीयन्ते कर्मत्वात्। प्रवृत्तफलकर्मवदित्युक्तम्। तत्र "ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथे"ति स्मृतिविरोधात् कालात्ययापदिष्टत्वमाशङ्क्य परिहरति—अथ ज्ञानवत इत्यादिना। प्रसङ्ग-

आनन्दगिरिटीका

देशमात्राद्यस्य नात्रगत्यन्तवाक्यार्थधीस्तस्य प्रमाणाद्यसम्भावनानिरसनसमर्थो विचारो मेधाविशब्देन विहितस्तस्य प्रज्ञातिशयवति प्रयोगादिति भावः। पुरुषव्यत्यये हेतुमाह—सामर्थ्यादिति। अस्मद्युपपदेऽसत्युत्तमपुरुषप्रयोगानुपपत्तेर्देहादिस्थित्यनुपपत्तेर्वेत्यर्थः। यावदित्यादिवाक्यार्थं स्पष्टयति—येनेति। पूर्ववदिति सामर्थ्यात्पुरुषव्यत्ययं लक्षयति। अथशब्दस्य सत्सम्पत्तेर्देहमोक्षादानन्तर्यमर्थो भविष्यतीत्याशङ्क्याऽऽह—न हीति।

अथ सम्पत्स्य इति विदेहमुक्तिमुक्तामाक्षिपति—नन्विति। अप्रवृत्तफलानीति च्छेदः। उत्पन्ने चेति चकारोऽप्यर्थः। विमतानि कर्माणि ब्रह्मज्ञानेन न क्षीयन्ते कर्मत्वात्प्रवृत्तफलकर्मवदित्यर्थः। क्षीयन्ते चास्य कर्माणि, ज्ञानाग्निः सर्वकर्माणीत्यादिश्रुतिस्मृतिविरोधात्कालात्ययापदिष्टतेति शङ्कते—अथेति। अतिप्रसङ्गान्न श्रुतिस्मृत्योर्यथा-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दर्शितसंसारविषयदोषदर्शनमार्गो विषयेभ्यो विरक्तः सद्ब्रह्मविदमासादयति। तेन च ब्रह्मविदा कारुण्यात् 'नासि त्वं' इत्यादिप्रकारेण अविद्यामोहपट्टाभिहननात् मोक्षित इति वा योजना।

नन्वाचार्यवान् वेदेत्ययुक्तम् तस्य ब्रह्मवित्त्वे सति ज्ञानोत्पत्त्यनन्तरमेव देहादिनिवृत्तेरुपदेष्टृत्वासम्भवादित्याशङ्क्य विदुषोऽपि प्रारब्धक्षयपर्यन्तं देहादेः सत्त्वात् उपदेष्टृत्वमुपपद्यत इति वक्तुं तस्य तावदेव चिरमित्यादिवाक्यं, तद्व्याचष्टे—तस्यास्येति। न विमोक्ष्य इत्यत्र उत्तमपुरुषः प्रथमपुरुषतया व्याख्येय इत्याह—पुरुषव्यत्ययेनेति। यावन्न विमोक्ष्य इत्यत्र आरब्धकर्मक्षयाद्देहपातो यावदिति कथं गम्यते तस्यार्थस्याप्रस्तुतत्वादित्याशङ्क्याह—सामर्थ्यादिति। पूर्ववदिति। न शरीरमनाश्रित्य ज्ञानोत्पत्तिः सम्भवति। शरीरं च न कर्मणा विनेति कर्मणां प्रवृत्तफलत्वात् वेगक्षयात्पूर्वं न निवृत्तिरित्यर्थात् सोऽर्थो गम्यत इत्यर्थः।

यद्वा 'प्रारब्धं भोगता नश्येत्' इति स्मृतेः 'भोगेन त्वितरे क्षपयित्वा सम्पद्यत' इति न्यायाच्च तस्यैव मोक्षप्रतिबन्धनत्वात् तन्निवृत्तिप्रतीक्षा सामर्थ्यात् गम्यत इति भावः। अथ सम्पत्स्य इत्यत्रापि पूर्ववत् पुरुषव्यत्यय इत्याह—पूर्ववदिति। अथशब्दस्य आनन्तर्यार्थत्वं विहाय तत्कालार्थतया व्याख्याने हेतुमाह—न हीति। नित्यसिद्धाया एव सत्सम्पत्तेः प्रतिबन्धनिवृत्तिमात्रं क्रियते नापूर्वा सत्सम्पत्तिः क्रियत इति न तयोः पूर्वोत्तरभाव इत्यर्थः।

यदि प्रारब्धेन कर्मणा ज्ञानं प्रतिबध्य कार्यं क्रियते तर्हि सञ्चितमपि कर्म तथा स्यात् कर्मत्वाविशेषादिति शङ्कते—नन्विति। प्राक् ज्ञानोत्पत्तेरिति। एतज्जन्मनि सञ्चितानीति शेषः। न केवलं ज्ञानात्पूर्वं सञ्चितान्येव अपि तु ज्ञानानन्तरमपि अवर्जनीयतया कृतान्यपि सन्ति 'नहि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति न्यायादित्याह—उत्पन्ने चेति। ननु ज्ञानात्प्रागूर्ध्वकालीनकर्मोपभोगार्थं एकं शरीरमारभ्यतां तदनन्तरं सत्सम्पत्तिः स्यादित्याशङ्क्याह—ततश्चेति। तस्मिन्नपि शरीरे कर्मणोऽवर्जनीयत्वादित्यर्थः। फलवत्त्वादिति। शरीररूपफलजन-

प्राप्तिसमकालमेव ज्ञानस्य सत्सम्पत्तिहेतुत्वान्मोक्षः स्यादिति शरीरपातः स्यात् । तथाचाऽऽचार्याभाव "इत्याचार्यवान्पुरुषो वेदे"त्याचार्यवत्त्वानुपपत्तिर्ज्ञानान्मोक्षाभावप्रसङ्गश्च । देशान्तरप्राप्त्युपायज्ञानवदनैकान्तिकफलत्वं वा ज्ञानस्य । न । कर्मणां प्रवृत्ताप्रवृत्तफलवत्त्वविशेषोपपत्तेः । यदुक्तमप्रवृत्तफलानां कर्मणां ध्रुवफलवत्त्वाद्ब्रह्मविदः शरीरे पतिते शरीरान्तरमारब्धव्यमप्रवृत्तकर्मफलोपभोगार्थमित्येतदसत् । विदुष 'स्तस्य तावदेव चिरमि"ति श्रुतेः प्रामाण्यात् । ननु "पुण्यो वै पुण्येन कर्मणा भवति" इत्यादिश्रुतेरपि प्रामाण्यमेव । सत्यमेवम् । तथाऽपि प्रवृत्तफलानामप्रवृत्तफलानां च कर्मणां विशेषोऽस्ति । कथम् । यानि प्रवृत्तफलानि कर्माणि यैर्विद्वच्छरीरमारब्धं तेषामुपभोगेनैव

### नरेन्द्रपुरीयं टिप्पणम्

नामकतर्कविरोधान्न स्मृतेर्यथाश्रुतार्थे प्रामाण्यमित्यर्थः । पूर्वं ज्ञानस्यानर्थक्यमुक्तं, पक्षान्तरमाह—देशान्तरेति । अश्वो रथो वा ग्रामप्राप्त्युपाय इति ज्ञाने सत्यसत्यन्तराये यथा कस्यचिद्ग्रामान्तरप्राप्तिर्भवति । न त्वन्तरायवतः, तथा भोगेन सर्वकर्मक्षये सत्युत्पन्नज्ञानस्य कस्यचिदेव मोक्षो भवति न ज्ञानमात्रादित्यनियतफलत्वमित्यर्थः । कर्मत्वादिति हेतोरप्रयोजकत्वाभिधानेन दूषयति—न कर्मणां प्रवृत्तेरिति । एतद्वक्तुं संग्रहवाक्यं विवृणोति—यदुक्तमित्यादिना । लक्ष्यस्य वेधो भेदनं तत्समकालैवेष्वादेःस्थितिर्न भवत्यूर्ध्वं गमनप्रयोजनं नास्तीति तद्वद्विद्यार्थे शरीरे

### आनन्दगिरिटीका

श्रुतार्थेतेति परिहरति—तदेति । ज्ञानस्याऽऽनर्थक्यमुक्त्वा पक्षान्तरमाह—देशान्तरेति । यथा ग्रामप्राप्त्युपायोऽश्वो रथो वेति ज्ञाने सत्यसत्यन्तराये कस्यचिदेव ग्रामप्राप्तिर्भवति न त्वन्तरायवतस्तज्ज्ञानेऽपि तत्प्राप्तिर्यथा तथा समुत्पन्नज्ञानस्यापि कस्यचिदेव भोगेन क्षीणकर्माशयस्य मोक्षो न ज्ञानमात्रादित्यनियतफलत्वमित्यर्थः । कर्मत्वहेतोरप्रयोजकत्वं वदन्नुत्तरमाह—न कर्मणामिति । संग्रहवाक्यमेव प्रपञ्चयन्वादी नञर्थं स्फुटयति—यदुक्तमिति । तत्र हेतुमाह—विदुष इति । प्रामाण्याद्देहान्तरारम्भे तद्विरोधप्रसङ्गादिति शेषः ।

श्रुत्यन्तरमाश्रित्य शङ्कते—नन्विति । तथा चानारब्धकर्मवशाद्विदुषोऽपि देहान्तरमारब्धव्यमिति शेषः । तत्प्रामाण्यमङ्गीकरोति—सत्यमेवमिति । तर्हि विदुषोऽपि देहान्तरमनारब्धकर्मवशादारब्धव्यं नेत्याह—तथाऽपीति । विशेषमेवाऽऽकाङ्क्षाद्वारा विशदयति—कथमित्यादिना । प्रवृत्तफलत्वमेव स्फुटयति—यैरिति । उक्तमर्थं दृष्टान्तेन

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

कत्वस्यावश्यकत्वादित्यर्थः । "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इतिश्रुतेः ज्ञानेन कर्मक्षये न शरीरान्तरमिति शङ्कते—अथेति । क्षीयन्त इत्युपलक्षणं ज्ञानानन्तरं कृतानि न श्लिष्यन्त इत्यपि द्रष्टव्यम् । "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत इति" श्रुतेः । तर्हि आरब्धफलस्यापि तदानीमेव निवृत्तेः विदुषः शरीराभावेन उपदेष्टृत्वासम्भवात् मुमुक्षोर्ज्ञानं न स्यात् इति पूर्ववाद्याह—तथेति । एवमेव पूर्वमप्याचार्यभावात् ज्ञानानुत्पत्तौ ज्ञानान्मोक्ष इति शास्त्रं अप्रमाणं स्यादित्याह—ज्ञानादिति । ननु कस्यचिदेव ज्ञानान्मोक्षो न सर्वस्येति यस्य न मोक्षस्तस्योपदेष्टृत्वं उपपद्यत इत्यत आह—देशान्तरेति । तच्चायुक्तं ज्ञानस्य नियतफलत्वात् अन्यथा अनाश्वासान्न कोऽपि प्रवर्तेतेति भावः । यद्वा ननु यथा देशान्तरप्राप्त्युपायभूतमार्गज्ञानेऽपि गच्छत एव देशान्तरप्राप्तिर्नान्यस्य एवमेव कर्मादिसहकारिमत एव मोक्षो नान्यस्येति सहकारिकर्मरहितस्य विदुष उपदेष्टृत्वं स्यादित्याशङ्क्य तमेव विदित्वेति श्रुतिविरोधान्नैवमित्याह—देशान्तरेति । एवं जीवन्मुक्त्यनङ्गीकर्तुश्चोद्यं कर्मवैषम्यप्रदर्शनेन परिहरति—नेत्यादिना । सङ्ग्रहवाक्यस्थं नञ्पदं व्याख्यातुं निषेध्यमनुवदति—यदुक्तमिति । तस्य तावदेव चिरमिति श्रुत्या शरीरपातपर्यन्तं विलम्बोक्त्या तच्छरीरारम्भकाणां आरब्धफलानामनिवृत्तिः तावदेवेत्येवकारेण च अनन्तरं विलम्बाभावोक्त्या शरीरान्तराभावेन इतरकर्मणां निवृत्तिश्च गम्यते । अन्यथा विलम्बाविलम्बयोरयोगादिति वदन् विशेषं विवृणोति—विदुष इति । इदं च तस्य तावदिति श्रुतिस्थतच्छब्दव्याख्यानम् पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेतिश्रुत्या प्रथमान्तपुण्यपापशब्दाभ्यां नियमेन तत्फलसुखदुःखवत्त्वस्योक्तेः सञ्चितस्यापि न निवृत्तिरिति शङ्कते—नन्विति । श्रुत्योः परस्परविरोधे विशेषविषयया न्यायोपेतया च तस्य तावदिति श्रुत्या पुण्या वा इति श्रुतिः सामान्यविषयिणी अविद्वद्विषया व्याख्येयेत्याह—सत्यमिति । प्रवृत्तफलत्वमेवाह—यैरेति । यानि बलवन्त्यभिव्यक्तानि बहूनि कर्माणि क्रमेण स्वफलदानार्थं भोगायतनमेकं शरीरमारभन्ते तानि प्रवृत्तफलानीत्यर्थः ।

## 'स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो

क्षयः। यथाऽऽरब्धवेगस्य लक्ष्यमुक्तेष्वादेर्वेगक्षयादेव स्थितिर्न तु लक्ष्यवेधसमकालमेव प्रयोजनं नास्तीति तद्वत्। अन्यानि त्वप्रवृत्तफलानीह प्राग्ज्ञानोत्पत्तेरूर्ध्वं च कृतानि वा क्रियमाणानि वाऽतीतजन्मान्तरकृतानि वाऽप्रवृत्तफलानि ज्ञानेन दह्यन्ते प्रायश्चित्तेनेव। "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति स्मृतेश्च। "क्षीयन्ते चास्य कर्माणि" इति चाऽऽथर्वणे। अतो ब्रह्मविदो जीवनादिप्रयोजनाभावेऽपि प्रवृत्तफलानां कर्मणामवश्यमेव फलोपभोगः स्यादिति मुक्तेषुवत्तस्य तावदेव चिरमिति युक्तमेवोक्तमिति यथोक्तदोषचोदनानुपपत्तिः। ज्ञानोत्पत्तेरूर्ध्वं च ब्रह्मविदः कर्माभावमवोचाम "ब्रह्मसंस्थोऽमृतत्वमेती"त्यत्र। तच्च स्मर्तुमर्हसि ॥ २ ॥

स य इत्याद्युक्तार्थम्। आचार्यवान्विद्वान्येन क्रमेण सत्सम्पद्यते तं क्रमं दृष्टान्तेन भूय एव मा भगवान्वि-

### नरेन्द्रपुरीयं टिप्पणम्

विद्यालाभानन्तरं प्रयोजनं नास्तीति न कर्माणि निवर्तन्ते किन्तु भोगक्षयादेव, भोगस्य लब्धवृत्तित्वादेवेत्यर्थः। प्रवृत्तफलेभ्योऽप्रवृत्तफलानां विशेषमाह—अन्यानीति। यच्चोक्तमुत्पन्ने विज्ञाने यावज्जीवं विहितानि करोतीति तत्राह—ज्ञानोत्पत्तेरिति। अत एवान्तरायाभावादैकान्तिकफलत्वं ज्ञानस्य सिद्धमिति ॥ २ ॥

### आनन्दगिरिटीका

स्पष्टयति—यथेति। लक्ष्यस्य वेधो भेदनं तत्समकालमेवेष्वादेरूर्ध्वं गतिप्रयोजनं नास्तीति न स्थितिर्लक्ष्यमुद्दिश्य मुक्तस्य तस्याऽऽरब्धवेगस्याप्रतिबन्धेन तदासादितस्य वेगक्षयादेव स्थितिदृष्टान्तवद्विद्यार्थे देहे विद्यालाभानन्तरं फलं नास्तीति न कर्माणि निवर्तन्ते किन्तु भोगक्षयादेव तस्य लब्धवृत्तित्वादित्यर्थः। प्रवृत्तफलेभ्योऽप्रवृत्तफलानां कर्मणां विशेषमाह—अन्यानि त्विति। न चाप्रवृत्तफलानां कर्मणां क्षयोऽप्रसिद्धस्तथाविधस्यैव पापस्य प्रायश्चित्तेन प्रक्षयोपगमादित्याह—प्रायश्चित्तेनेवेति। आरब्धफलातिरिक्तानां कर्मणां ज्ञानान्निवृत्तौ श्रुतिस्मृती दर्शयति—ज्ञानाग्निरित्यादिना। प्रवृत्ताप्रवृत्तफलेषु कर्मसु सिद्धे विशेषे फलितमाह—अत इति। जीवनादीत्यादिशब्देन पुत्रकलत्रादि गृह्यते। मुक्तस्याप्रतिबद्धेष्वादेर्यावद्वेगक्षयं गतिध्रौव्यव्यवहारवदारब्धकर्मणां फलभोगोऽवश्यमेव स्यादिति सम्बन्धः। यतश्चाऽऽरब्धकर्मणां भोगादेव क्षयस्ततस्तस्येत्यादिना यच्चिरत्वं सत्सम्पत्तेरुक्तं तद्युक्तमेवेति कृत्वा यथोक्तस्य दोषस्य सद्यःशरीरपातादिलक्षणस्याऽऽशङ्कानुपपत्तिरित्युपसंहरति—इतीति। आद्यस्येतिशब्दस्य तस्येत्यनेन सम्बन्धः। यत्तूत्पन्नेऽपि ज्ञाने यावज्जीवं विहितानि करोत्येवेति तत्राऽऽह—ज्ञानोत्पत्तेरिति ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु न ज्ञानिनः भोगापेक्षा येन तं प्रति तस्य प्रयोजनत्वानुपपत्ति। तेषां प्रयोजनाभावेन क्षयोऽस्त्वित्याशङ्क्य दृष्टान्तेन परिहरति—यथेति। आदिशब्देन कुलालचक्रादिसङ्ग्रहः मुक्तेष्वादेः लक्ष्यवेधकुम्भनिर्वृत्त्यादिप्रयोजनानन्तरं प्रयोजनान्तराभावेऽपि पुनर्देशान्तरगमनचक्रभ्रमणादिकार्यं दृश्यते। तद्वत् कर्माण्यपि भोक्तुर्विदुषः प्रयोजनाभावेऽपि स्ववेगक्षयपर्यन्तं तिष्ठन्तीत्यर्थः। इतरेषां तु श्रुतिबलान्निवृत्तिरित्याह—यानि त्विति। यथा प्रायश्चित्तशास्त्रेण पापः पापेनेत्यादिश्रुतेः तदन्यविषये शङ्कोचः तथा तस्य तावदित्यादिश्रुत्या सङ्कोचस्सुलभः इति वक्तुं प्रायश्चित्तेन वेत्युक्तम्। स्मृतिवशादपि सङ्कोच इत्याह—ज्ञानाग्निरिति। सर्वशब्दः सङ्कुचितविषयः। अन्यथा तस्य तावदिति विलम्बानुपपत्तिरिति भावः।

उत्पन्ने च ज्ञाने इति यदुक्तं तद्दूषयति—ज्ञानोत्पत्तेरूर्ध्वमिति। तस्य कर्तृत्वाभिमानाभिभवादित्यर्थः। आभासेनापि कर्तृत्वेन न कर्मानुष्ठानं, ब्रह्मनिष्ठतयैव तस्य परिसमाप्तत्वेन अवकाशाभावादित्याह—ब्रह्मसंस्थ इति। भिक्षाटनादिवैषम्यं च तत्र तत्रोक्तमिति भावः ॥ २ ॥

---

१. स य एषोऽणिमा ऐतदात्म्यमिदं सर्वमित्यादेः मध्वाचार्यकृतभाष्ये—सः सारभूतः यः नियमनकर्ता विष्णुः अणिमा सूक्ष्मत्वादगम्यः। ऐतदात्म्यं जगत् तद्वशे वर्तत इत्यर्थः। सत्यं परानन्दत्वात् आत्मा पूर्णगुणत्वात्। त्वं हे श्वेतकेतो अतत्त्वमसि–तद्भिन्नोऽसि–अतस्तव स्तब्धता माभूत् एतदुपष्टम्भकतया च भगवद्गीतामुदाहरति—"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्। ईश्वरोऽहं अहं भोगी—

इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य चतुर्दशः खण्डः

पुरुषँ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥

ज्ञापयत्विति । तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य चतुर्दशः खण्डः

पुरुषं हे सोम्योतोपतापिनं ज्वराद्युपतापवन्तं ज्ञातयो बान्धवाः परिवार्योपासते मुमूर्षुं जानासि मां तव पितरं पुत्रं भ्रातरं वेति पृच्छन्तस्तस्य मुमूर्षोर्यावन्न वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामित्येतदुक्तार्थम् ॥ १ ॥

### नरेन्द्रपुरीयं टिप्पणम्

सत्सम्पत्तिः किमर्चिरादिमार्गप्राप्त्या किं वेहैवाविद्यानिवृत्तिमात्रेणेति संशयानस्य प्रबोधार्थमुत्तरं वाक्यमवतारयति—आचार्यवान् विद्वानित्यादिना ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य चतुर्दशः खण्डः

### आनन्दगिरिटीका

ज्ञानस्य नाऽऽनर्थक्यमविद्यातत्कार्यनिवर्तनेन सत्सम्पत्तिहेतुत्वान्नाप्यनैकान्तिकफलत्वमन्तरायाभावादित्युक्तमिदानीमर्चिरादिमार्गप्राप्त्या वाऽत्रैवाविद्यानिवृत्तिमात्रेण वा सत्सम्पत्तिरिति सन्दिहानः शङ्कते—आचार्यवानिति। संशयानस्य सम्बोधनार्थमुत्तरं वाक्यमवतारयति—तथेति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य चतुर्दशः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

येन क्रमेणेति । इहैव सत्सम्पत्तिः उतार्चिरादिक्रमेणेति प्रष्टुरभिप्रायः। परदेवतासम्पत्तिपर्यन्तं विद्वदविदुषोः समानः अविद्वांस्तु पुनरावर्तते। विद्वांस्तु आत्यन्तिकमेव सम्पद्यते न पुनरावर्तते। अर्चिरादिमार्गस्तु न विदुषः, किन्तु सगुणोपासकस्येत्यभिप्रेत्योत्तरमाह—तथा सौम्येति ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य चतुर्दश। खण्ड।

---

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्"–इत्यादिकम् । तथा अनीश्वरं जगदाहुः चेतनैकत्वविषयान् वेदानाहुः–इति च। सर्वमिदं विष्णुभक्तिश्रद्धया ऐतदात्म्यं इत्यादेः अर्थः स्वकपोलकल्पितः वेदव्याख्याने प्रतिषिद्धः। अतत्त्वमसि इति पदच्छेदः निरर्थकः। न हि लोके कश्चिदहं स्रष्टा परमेश्वर इति मन्यते। "अनीशया शौचति मुह्यमानः" इति चानीश्वरत्वप्रयुक्तशोकसागरे मग्नः सर्वोऽपि। असत्यं=सत्यवचनवर्जितं, यद्वा अबाधितार्थवेदाख्यप्रमाणवर्जितमित्यर्थः। अप्रतिष्ठं लोकव्यवस्थापकधर्मशास्त्रनीतिशास्त्रादिवर्जितम्। अनीश्वरं धर्माधर्मादिफलदातृवर्जितमित्यर्थः। अत्र च नाद्वैतमतनिरासः। असत्यमित्यस्य मृत्तिकेत्येव सत्यमित्यत्र त्वदुक्तरीत्या अनित्यमित्यर्थस्त्वया वाच्यः जगच्चानित्यमेवेति कुतस्तन्निन्दा। अतः आसुरस्वभावोपक्रमात् सत्यवचनरहितमित्येवार्थः। अद्वैतवादे जगतः व्यावहारिकसत्यत्वाभ्युपगमाच्च, अप्रतिष्ठमिति च नाद्वैतानुकूलं, अद्वैते ब्रह्मणि जगत्प्रतिष्ठितत्वोपगमात्। अनीश्वरमित्यपि नाद्वैतपरं। यावत्पर्यन्तं जगदस्ति तावत् ईश्वरः अस्त्येव मुक्तौ तु ब्रह्मभिन्नवस्त्वभावात् ईशितव्यं नास्ति। अतो नेश्वरकृत्यम्।

"किमन्यत् कामहैतुकं" "नष्टात्मनोऽल्पबुद्धयः" इत्यादिवचनसाहचर्याच्च नायमद्वैतानुवादः। नहि अद्वैतिनः प्रपञ्चहेतुं धर्माधर्मादिकं निराकुर्वन्ति नापि ते नष्टात्मनः ब्रह्मात्मप्राप्तेः। नापि एकात्मवादः

**अथ यदाऽस्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥**

संसारिणो यो मरणक्रमः स एवायं विदुषोऽपि सत्सम्पत्तिक्रम इत्येतदाह परस्यां देवतायां तेजसि सम्पन्नेऽथ न जानाति। अविद्वांस्तु सत उत्थाय प्राग्भावितं व्याघ्रादिभावं देवमनुष्यादिभावं वा विशति। विद्वांस्तु शास्त्राचार्योपदेशजनितज्ञानदीपप्रकाशितं सद्ब्रह्मात्मानं प्रविश्य नाऽऽवर्तत इत्येष सत्सम्पत्तिक्रमः। अन्ये तु मूर्धन्यया

नरेन्द्रपुरीयं टिप्पणम्

करणोपरमे तेजस्सहचरितभूतसूक्ष्मोपसंहारे च विशेषविज्ञानाभावः समान एव विद्वदविदुषोः। किन्त्वेकस्य विशेषविज्ञानानां लयस्तमस्सद्भावादपरस्य तु निवृत्तिः बीजोच्छेदादित्यभिप्रेत्याह–अविद्वांस्तु सत उत्थायेत्यादिना॥२॥

आनन्दगिरिटीका

नन्वेष संसारिणो मरणक्रमो नतु विदुषः सत्सम्पत्तिक्रमस्तयोर्विशेषस्य वक्तव्यत्वादत आह—संसारिण इति। करणोपरमे तेजःसहचरितभूतसूक्ष्मोपसंहारे च विशेषविज्ञानाभावः समान एव विद्वदविदुषोरित्यर्थः। कस्तर्हि तयोर्विशेषस्तत्राऽऽह—अविद्वानिति। सतस्तस्मादज्ञातात्सदात्मनः सकाशादिति यावत्। एकदेशिमतमुत्थाप्य

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पूर्वं स्वप्नखण्डिकायां मरणकाले यस्मिन्सति सम्पद्यते विद्वानविद्वांश्च तथाविधं सदात्मतत्त्वमस्ति जीवस्य स्वरूपभूतमिति वक्तुं मरणक्रम उक्तः। इदानीन्तु विदुष इहैव सत्सम्पत्तिर्नार्चिरादिक्रमेणेति वक्तुमिति न पुनरुक्तिदोषायेति भावः। अयं चार्थविशेषः अस्यामेव खण्डिकायां "अथ न जानाती"ति विशेषविज्ञानाभावोक्तिद्वारा सर्वव्यवहाराभावोक्तेः लभ्यत इति द्रष्टव्यम्। ननु विदुषो मरणक्रमे पृष्टे संसारिमरणक्रम एव उच्यते तदयुक्तम्। मरणक्रमविशेषाभावे मुक्तिलक्षणफलविशेषो न स्यादित्याशङ्क्य विद्याविशेषकृत एव फलविशेषः न मरणक्रमविशेषकृत इत्याह—यस्संसारिण इति। इत्येतदाहेति। तेजः परस्यां देवतायामित्यन्तेन ग्रन्थेनेति शेषः।

यद्यपि इयं कण्डिका विदुष एव सत्सम्पत्तिक्रमप्रतिपादनार्था आचार्यवान्वेदेति तस्यैव प्रकृतत्वात् तथापि "तेजः परस्यां देवतायामथ न जानाती"त्यनया श्रुत्या तेजश्शब्दिते जीवे परदेवताशब्दितसदात्मसम्पन्ने सति अनन्तरं न जानातीति सत्सम्पत्त्यनन्तरमेव विदुषो विशेषविज्ञानाभावोक्त्या सर्वव्यवहाराभावलक्षणविशेषं ब्रुवाणया ततः पूर्वं अर्थादुभयोस्तुल्यतोक्तेति भावः। एतदेव अविदुषः पुनर्विशेषविज्ञानादिप्रतिपादनपूर्वकं विदुषः तदभावोक्त्या द्रढयति—अविद्वांस्त्विति। उत्थायेति। अहमेवंभूतः इत्येवं विशेषविज्ञानं लब्ध्वेत्यर्थः। विशेषविज्ञानलाभ एव ह्युत्थानमिति "एतेभ्यो भूतेभ्यस्समुत्थाये"त्यादौ व्याख्यातमिति। व्याघ्रादीति। तामसकर्मोद्भवे व्याघ्रादिभावं सात्विकोद्भवे देवभावं राजसे तु मनुष्यादिभावं वा तस्मिन्नेव शरीरे उत्क्रान्तेः प्रागेव वासनामात्रेणोद्भूतं विशति "हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेन एष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नोवे"ति श्रुतेः। "सविज्ञानो भवति सविज्ञानमेव अन्ववक्रामति" इति श्रुतेश्च। सविज्ञानं वासनामात्रविज्ञानरूपेण उद्भूतमित्यर्थः। "तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकये"ति सूत्राच्चेति भावः।

तर्हि विदुषोऽपि विशेषविज्ञानपूर्वकं मूर्धन्यया नाड्या उत्क्रान्तिस्स्यात् उक्तश्रुतिसूत्रबलादेवेत्याशङ्क्य, सदात्मविदः प्रकृतस्य "अथ न जानातो"ति उक्तविज्ञानप्रतिषेधमुखेन तत्पूर्वकोत्क्रान्तिप्रतिषेधात् उक्तश्रुतिसूत्रयोः साम्यस्य अज्ञसगुणब्रह्मविद्विषयत्वात् "तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीत" इति सौत्रलिङ्गाच्च सदात्मज्ञव्यतिरिक्तविषयत्वोपगमान्नैवमित्याह—विद्वांस्त्विति। नच जानासि मामित्युक्तब्राह्यपित्रादिज्ञानाभाव एवोक्तः अथ न जानातीत्यनेनेति भ्रमितव्यं, तथा सति अस्य खण्डस्य व्यर्थतैव स्यादिति भावः। नावर्तत इति। ज्ञानेनाज्ञाननाशादित्यर्थः। प्रकृतश्रुतिनिरस्यं पूर्वपक्षमाह—अन्ये त्विति। अर्चिरादिमार्गेण ब्रह्मलोकं प्राप्य सदात्मानं

---

श्रुत्यसम्मतः "एको देवः सर्वभूतेषु गूढ" इति श्रुतेः। तथा "त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी" इति ब्रह्मप्रक्रियायामेकस्यैवात्मनः बहुशरीरेषु जीवभावेन स्थितत्वदर्शनम्। तथा ब्रह्म दासा ब्रह्म दाशा ब्रह्मैवेमे कितवाः–इति च। नान्योऽतोऽस्ति द्रष्टा श्रोता–इत्यादिना ब्रह्मव्यतिरेकेण जीवनिषेधवचनं चेतनभेदं व्यासेधति। तन्निष्ठत्वं तन्मूलत्वं चासत्यस्यापि तदधिष्ठानकत्वादुपपन्नम्।

**स य एषोऽणिमैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य पञ्चदशः खण्डः

नाड्योत्क्रम्याऽऽदित्यादिद्वारेण सद्गच्छन्तीत्याहुस्तदसत्। देशकालनिमित्तफलाभिसन्धानेन गमनदर्शनात्। न हि सदात्मैकत्वदर्शिनः सत्याभिसन्धस्य देशकालनिमित्तफलाद्यनृताभिसन्धिरुपपद्यते। विरोधात्। अविद्याकामकर्मणां च गमननिमित्तानां सद्विज्ञानहुताशनविप्लुष्टत्वाद्गमनानुपपत्तिरेव। 'पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः" इत्याद्याथर्वणे। नदीसमुद्रदृष्टान्तश्रुतेश्च ॥ २ ॥

स य इत्यादि समानम्। यदि मरिष्यतो मुमुक्षतश्च तुल्या सत्सम्पत्तिस्तत्र विद्वान्सत्सम्पन्नो नाऽऽवर्तत आवर्तते त्वविद्वानित्यत्र कारणं दृष्टान्तेन भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य पञ्चदशः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

विमतः सत्सम्पन्नः पुनरावृत्त्यर्हः सत्सम्पन्नत्वान्मरणकाले सत्सम्पन्नवद्विमतो वा विशेषविज्ञानाभावो नात्यन्तिको विशेषविज्ञानाभावत्वात् मरणकालीनविशेषविज्ञानाभाववदित्यविशेषं वाग्जालेन शङ्कमानस्य प्रबोधनायोत्तरमवतारयति। यदि मरिष्यत इत्यादिना ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य पञ्चदशः खण्डः

### आनन्दगिरिटीका

प्रत्याचष्टे—अन्ये त्विति। भवतु विदुषोऽपि तदभिसन्धिपूर्वकं गमनमित्याशङ्क्याऽऽह—न हीति। आदिशब्देन गत्यागती गृह्येते। सद्विज्ञानवतो गमनायोगे हेत्वन्तरमाह—अविद्येति। विदुषोऽविद्याकामकर्मणामभावे प्रमाणमाह—पर्याप्तकामस्येति। ननु कामप्रविलय एवात्र श्रूयते नाविद्याकामकर्मनिर्मोकस्तत्राऽऽह—नदीति। यथा नद्यो गङ्गाद्या नामरूपे विहाय समुद्रं प्रविशन्ति तथा विद्वान्नामरूपे हित्वा परं पुरुषमुपैतीतिदृष्टान्तपूर्विकायाः श्रुतेर्नामरूपबीजावस्थाविद्याया लयो गम्यते न चाविद्याकामयोरभावे कर्मोपपत्तिस्तस्मान्न विदुषो गतिपूर्विका सत्सम्पत्तिरित्यर्थः ॥ २ ॥

विमतः सत्सम्पन्नः पुनरावृत्तिमर्हति सत्सम्पन्नत्वान्मरणकाले सत्सम्पन्नवद्विमतो वा विशेषविज्ञानाभावो नाऽऽत्यन्तिको विशेषविज्ञानाभावत्वान्मरणकालीनविशेषविज्ञानाभाववदित्यनुमानाद्विद्वदविदुषोरविशेषं मन्वानः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्राप्नुवन्तीत्यर्थः। अथ न जानातीति प्रकृतश्रुतिविरोधान्नैवमित्याह—तदसदिति। गन्तृगन्तव्यतत्फलादिभेददर्शनस्य गमनव्याप्तत्वात् तेषां च ज्ञानेन बाधितत्वाद्गत्यभाव इति हेत्वन्तरमाह—देशेति। फलाभिसन्धानेति, तत्सत्त्वबुद्ध्येत्यर्थः। किञ्च गतिहेतूनां अविद्यादीनां विद्यया नाशात्, स्वरूपतोऽप्यभावाद्गत्यनुपपत्तिरित्याह—अविद्येति। परितः सर्वतः आप्तस्य कामस्य इहैव सर्वे कामा विलीयन्ते तत्र हेतुः कृतात्मानो निश्चयेन अभिव्यक्तात्मान इति श्रुत्यर्थः। ततश्च कामाभावे गमनानुपपत्तिरिति। "स यथा इमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्य अस्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते, एवमेवास्य परिद्रष्टुः इमाष्षोडश कलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति भिद्यते चासां नामरूपे पुरुष इत्येवं प्रोच्यत" इति श्रुतिः समुद्रदृष्टान्तेन पुरुषशब्दितपरदेवतासम्पत्तिमात्रेण कलाशब्दितप्राणादिलयं वदन्ती गतिं वारयति। "कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजते"ति श्रुत्यः उत्क्रान्त्यादेः प्राणाद्यधीनत्वोक्तेरित्यर्थः।

"न तस्य प्राणा उत्क्रामन्ति," "अत्र ब्रह्म समश्नुते।"

नोत्क्रामन्ति मुनेः प्राणाः व्यापी सर्वगतो हि सः। तेन व्याप्तमिदं सर्वं कुत उत्क्रम्य यास्यति ॥

इत्यादिस्मृतिशतेभ्यश्चैषोऽर्थस्सिद्ध इत्यर्थः ॥ २ ॥

विद्वदविदुषोः सम्पत्तौ तुल्यायामपि अविद्यासदसद्भावाभ्यां पुनरावृत्त्यनावृत्ती इत्युक्तम्। इममेवार्थं

पुरुषँ सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः
सत्येनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥ २ ॥

शृणु यथा सोम्य पुरुषं चौर्यकर्मणि सन्दिह्यमानं निग्रहाय परीक्षणाय वोतापि हस्तगृहीतं बद्धहस्तमानयन्ति राजपुरुषाः। किं कृतवानयमिति पृष्टाश्चाऽऽहुरपहार्षीद्धनमस्यायम्। ते चाऽऽहुः किमपहरणमात्रेण बन्धनमर्हति। अन्यथा दत्तेऽपि धने बन्धनप्रसङ्गादित्युक्ताः पुनराहुः स्तेयमकार्षीच्चौर्येण धनमपहार्षीदिति। तेष्वेवं वदत्स्वितरोऽपह्नुते नाहं तत्कर्तेति। (ते चाऽऽहुः सन्दिह्यमानं स्तेयमकार्षीस्त्वमस्य धनस्येति।) तस्मिंश्चापह्नवाने आहुः परशुमस्मै तपतेति शोधयत्वात्मानमिति। स यदि तस्य स्तैन्यस्य कर्ता भवति बहिश्चापह्नुते स एवंभूतस्तत एवानृतमन्यथाभूतं सन्तमन्यथाऽऽत्मानं कुरुते स तथाऽनृताभिसन्धोऽनृतेनाऽऽत्मानमन्तर्धाय व्यवहितं कृत्वा परशुं तप्तं मोहात्प्रतिगृह्णाति स दह्यतेऽथ हन्यते राजपुरुषैः स्वकृतेनानृताभिसन्धिदोषेण ॥ १ ॥

अथ यदि तस्य कर्मणोऽकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्येन तया स्तैन्याकर्तृतयाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स सत्याभिसन्धः सन्न दह्यते सत्यव्यवधानादथ मुच्यते च मृषाभियोक्तृभ्यः। तप्तपरशुहस्ततलसंयोगस्य तुल्यत्वेऽपि स्तेयकर्त्रकर्त्रोरनृताभिसन्धो दह्यते न तु सत्याभिसन्धः ॥ २ ॥

### आनन्दगिरिटीका

शङ्कते—यदीति। तत्रानृताभिसन्धत्वं तादृगभिसन्धिमन्निष्ठत्वं वोपाधिरित्यनुमानद्वयं दूषयितुमुत्तरं ग्रन्थमुत्थापयति—तथेति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य पञ्चदशः खण्डः

परीक्षणाय परीक्षाद्वारेण रक्षणार्थमिति यावत्। परस्वग्रहणमात्रेण बन्धने प्रतिग्रहीतुरपि बन्धप्रसङ्गान्न तन्मात्रं बन्धनकारणमित्याह—अन्यथेति। तत एवानृताभिसन्धत्वादेवेत्यर्थः ॥ १ ॥

तत एवेति। स्तैन्यस्य कर्मणोऽकर्तृत्वादेवेत्यर्थः। दृष्टान्ते विवक्षितमंशमनुवदति—तप्तेति ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दृष्टान्तेन स्पष्टीकर्तुं शङ्कते—यदिति। यद्यपि कारणं विद्याविद्ये इत्युक्तं तथापि तदेव दृष्टान्तेन स्पष्टीकर्तव्यमित्याह—दृष्टान्तेनेति। अनृताभिसन्धेरविद्यात्मकत्वात् तस्करस्येव बन्धो युज्यत इत्याह—तथा सोम्येति ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य पञ्चदशः खण्डः

उतापीति। अपिशब्देन निश्चितचौर्यस्संगृह्यते ततश्च सन्दिह्यमानचौर्यं परीक्षणायानयन्ति निश्चितमपि निग्रहायेत्यन्वयः। यद्वा हस्तगृहीतमपीत्यन्वयः। अस्मिन्पक्षे तर्जनादिरपिशब्देन समुच्चीयत इति।

नच निश्चितचौर्ये सन्देहाभावेन निर्णयार्थं तप्तपरशुग्रहणानुपपत्तिः। राजपुरुषाणां सन्देहाभावेऽपि प्रष्टॄणां सन्देहात्तप्तग्रहणोपपत्तेः। अपहरणमात्रेणेति—स्वीकरणमात्रेणेत्यर्थः। किमर्हतीति—नार्हतीत्यर्थः। ग्रहणसम्भवादिति तत्रापि बन्धनापत्तेरिति शेषः। सन्देहाभावे निर्णयार्थं तप्तपरशुग्रहणानुपपत्तेः विरुद्धवचनद्वयं दर्शयन् सन्देहमाह—तेष्वेवमिति। सन्दिह्यमानमिति पाठः। सन्दिहाना इति वा, सन्दिह्यमाना इति तु लेखकदोषागतः। एवं राजपुरुषचोरवाक्यद्वयेन सन्देहे सति मध्यस्थवाक्यमवतारयति—तस्मिंश्चापह्नुवान इति। परशुसन्तापमात्रेण निर्णयासिद्धेरध्याहारेण श्रुतिवाक्यं पूरयति—शोधयत्विति। तप्तपरशुग्रहणेनेति शेषः ॥ १ ॥

सत्याभिसन्धेरदाहहेतुत्वद्योतनाय व्यवहितेनान्वयमाह—सत्याभिसन्धस्सन्न दह्यत इति। हस्ततलदाहाभावेन सत्याभिसन्धित्वनिश्चयात् बन्धनायोग्यत्वेन राजपुरुषेभ्यो मुच्यते इत्याह—सत्येति। अथशब्दोऽनृताभिसन्धेस्सकाशात् वैषम्यमाह। उक्तदृष्टान्तवाक्यार्थं संक्षिप्य कथयन् दार्ष्टान्तिकमाह—तप्तेति ॥ २ ॥

**स यथा तत्र नादाह्येतैतदात्म्यमिदँ सर्वं तत्सत्यँ स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ३ ॥**

इति च्छान्दोग्योपनिषदि षष्ठाध्यायस्य षोडशः खण्डः[1]

इति च्छान्दोग्योपनिषद्ब्राह्मणे षष्ठोऽध्यायः समाप्तः

**स यथा** सत्याभिसन्धस्तप्तपरशुग्रहणकर्मणि सत्यव्यवहितहस्ततलत्वान्नादाह्येत न दह्येतेत्येतदेवं सद्ब्रह्मसत्याभिसन्धीतरयोः शरीरपातकाले च तुल्यायां सत्सम्पत्तौ विद्वान्सत्सम्पद्य न पुनर्व्याघ्रदेवादिदेहग्रहणायाऽऽवर्तते । अविद्वांस्तु विकारानृताभिसन्धः पुनर्व्याघ्रादिभावं देवतादिभावं वा यथाकर्म यथाश्रुतं प्रतिपद्यते । यदात्माभिसन्ध्यनभिसन्धिकृते मोक्षबन्धने यच्च मूलं जगतो यदायतना यत्प्रतिष्ठाश्च सर्वाः प्रजा यदात्मकं च सर्वं यच्चाजममृतमभयं शिवमद्वितीयं तत्सत्यं स आत्मा तवातस्तत्त्वमसि हे श्वेतकेतो इत्युक्तार्थमसकृद्वाक्यम् । कः पुनरसौ श्वेतकेतुस्त्वंशब्दार्थः । योऽहं श्वेतकेतुरुद्दालकस्य पुत्र इति वेदाऽऽत्मानमादेशं श्रुत्वा मत्वा विज्ञाय

### नरेन्द्रपुरीयं टिप्पणम्

त्वमर्थोद्देशेन तदर्थभावो विधेयस्त्वन्तदसीति । तत्रोद्देश्यस्य शरीरद्वयविशिष्टस्य विरोधादशरीरब्रह्मभावो विधातुं न शक्यत इत्यभिप्रेत्याह—कः पुनरिति । त्वंपदवाच्यस्य ब्रह्मत्वासम्भवेऽपि शरीरद्वयवैशिष्ट्योपलक्षितस्य श्रोतृत्वादध्यासास्पदस्य चित्प्रतिबिम्बस्य बिम्बभूतब्रह्मात्मभावो विधातुं शक्यते लक्ष्ये विरोधास्फूरणादित्यभिप्रेत्याह—योऽहं श्वेतकेतुरित्यादिना । अज्ञातवस्तुप्रकाशः प्रमाणफलं, तस्य स्वप्रकाशे ब्रह्मण्यसम्भवं मन्वानश्शङ्कते ।

### आनन्दगिरिटीका

तदनुवादपूर्वकं दार्ष्टान्तिकमाह—**स यथेति** । स य एषोऽणिमेत्यादि व्याचष्टे—**यदात्मेति** । त्वं तदसीति त्वमर्थोद्देशेन तदर्थभावो विधीयते तत्रोद्देश्यस्य शरीरद्वयविशिष्टस्य विरोधादशरीरब्रह्मात्मत्वं विधातुमशक्यमिति मन्वानश्चोदयति—**कः पुनरिति** । त्वंपदेन वाच्यस्य लक्ष्यस्य वा ब्रह्मत्वायोगस्त्वयोच्यते ? नाऽऽद्योऽङ्गीकारान्न द्वितीयः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नादाह्येतेत्यत्र दैर्घ्यं छान्दसमित्याह—**न दह्येतेति** । यथाशब्दसूचितं एवंशब्दयुक्तं दार्ष्टान्तिकमाह—**एवं सद्ब्रह्मेति, अनृताभिसन्ध इति** । यद्यपि सत्सम्पत्तिकाले ज्ञानरूपोऽभिसन्धिर्नास्ति सर्वविशेषविज्ञानोपरमात्तथापि तद्वासनावासिता अविद्या वर्तत इति भावः । कृत्स्नाध्यायोक्तमर्थं पिण्डीकृत्य दर्शयन् ऐतदात्म्यमिदं सर्वमित्यादिवाक्यं व्याचष्टे—**यदात्माभिसन्धीत्यादिना** । स आत्मा तवेति षष्ठ्या आत्मपदेन च भेदाभेदशङ्कां वारयति । **अतस्तत्त्वमसीति** । श्वेतकेतुशब्दवाच्यस्य कार्यकारणविशिष्टस्य सदभेदो न सम्भवति विरोधादिति चोदयति—**कःपुनरिति** ।

---

१. षोडशखण्डे अनृतवादिनः चोरस्य बन्धः, सत्यवादिनो मोक्ष इत्युक्तं, तेन वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्युक्तत्वात् सत्यब्रह्माभिसन्धो मुच्यते मिथ्याप्रपञ्चाभिसन्धो बध्यत इत्यर्थः स्फुटः ।

मध्वाचार्यस्तु पूर्वखण्डेषु अतत्त्वमसि इत्युक्तेः ब्रह्मभिन्नो जीवः ऐक्यवादी तु ब्रह्मचोरः तस्य संसारबन्धः इति व्याचष्टे । तन्न । तत्सृष्ट्वा तदेवानुप्राविशत् नान्योऽतोऽस्ति द्रष्टा, "अहं ब्रह्मास्मि" "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यादिश्रुतिसिद्धत्वात् नाद्वैतिनश्चोराः अपि तु द्वैतवादिन एव स्वरूपभूतब्रह्मणः देशान्तरे निवेशनात् । इति संक्षेपः । अपि च त्वया अद्वैतवादिनः कथमनृताभिसन्धा इति निरूपणीयम्, तेषां सद्ब्रह्मण्येवाभिसन्धेः सदा ब्रह्ममात्रध्यानपरत्वात् । त्वया तु सगुणस्य हरेरनुसन्धानात् गुणानां मिथ्यात्वेन तद्विशिष्टहरेरपि मिथ्यात्वात् अनृताभिसन्धत्वं बन्धनं च भवतां ध्रुवमेव । भवदभिमतवैकुण्ठोऽपि मिथ्या । तथा च बन्ध एव तत्र द्वैतसद्भावात् भयानिवृत्तेः "द्वितीयाद्वै भयं" इति श्रुतेः ।

अपि च हरिः न स्वरूपेण मिथ्या, तस्य सत्त्वगुणयुक्तमायोपाधिकब्रह्मरूपत्वात् तदपलापः अद्वैतिना कर्तुमशक्य इति संक्षेपः ।

चाश्रुतममतमविज्ञातं विज्ञातुं पितरं पप्रच्छ कथं नु भगवः स आदेशो भवतीति स एवोऽधिकृतः श्रोता मन्ता विज्ञाता तेजोबन्नमयं कार्यकारणसङ्घातं प्रविष्टा परैव देवता नामरूपव्याकरणायाऽऽदर्शं इव पुरुषः सूर्यादिरिव जलादौ प्रतिबिम्बरूपेण, स आत्मानं कार्यकरणेभ्यः प्रविभक्तं सद्रूपं सर्वात्मानं प्राक् पितुः श्रवणान्न विजज्ञौ। अथेदानीं पित्रा प्रतिबोधितस्तत्त्वमसीतिदृष्टान्तैर्हेतुभिश्च तत्पितुरस्य ह किलोक्तं सदेवाहमस्मीति विजज्ञौ विज्ञातवान्। द्विर्वचनमध्यायपरिसमाप्त्यर्थम्।

किं पुनरत्र षष्ठे वाक्यप्रमाणेन जनितं फलम्? आत्मनि कर्तृत्वभोक्तृत्वयोरधिकृतत्वविज्ञाननिवृत्तिस्तस्य

### नरेन्द्रपुरीयं टिप्पणम्

किं पुनरत्रेति। स्वयं प्रकाशमाने प्रकाशातिशयस्य प्रमाणफलस्यासम्भवेऽप्यध्यस्तव्यावृत्तिः प्रमाणफलं भविष्यतीत्याह—कर्तृत्वभोक्तृत्वयोरिति। न केवलमविज्ञातब्रह्मात्मैकत्वविज्ञानाश्रयस्य श्रवणादावधिकृतत्वं कर्मण्यपि बन्ध-

### आनन्दगिरिटीका

शरीरद्वयवैशिष्ट्योपलक्षितस्य श्रोतृत्वाद्यध्यासास्पदस्य त्वंपदलक्ष्यस्य ब्रह्मत्वविधाने विरोधास्फुरणादिति परिहरति—योऽहमिति। विज्ञाय च वेदेति पूर्वेण सह सम्बन्धः। तस्य सतः सकाशादौपाधिको भेदो वस्तुतस्त्वैक्यमिति मत्वाऽऽह—तेजोबन्नमयमिति। त्वंपदार्थं श्वेतकेतुं निर्धार्य तद्धास्येत्यादि व्याचष्टे—आत्मानमिति।

अज्ञातार्थप्रकाशनं मानफलं तस्य स्वप्रकाशे ब्रह्मणि नोपपत्तिरिति मन्वानश्चोदयति—किं पुनरिति। अत्राऽऽत्मनीति सम्बन्धः। स्वप्रकाशे प्रकाशातिशयस्य मानफलस्यासम्भवेऽप्यध्यस्तव्यावृत्तिस्तत्फलं भविष्यतीत्युत्तरमाह—कर्तृत्वेति। अश्रुतस्य श्रवणायामतस्य मननायाविज्ञातस्य विज्ञानफलसिद्धये चाधिकृतं यमर्थं त्वंपदवाच्यमवोचाम

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

श्वेतकेतुशब्दार्थस्य त्वंपदवाच्यस्य सदभेदासम्भवेऽपि तल्लक्ष्यस्य सदभेदं वक्तुं वाक्यार्थं तावदाह—योऽहमिति। प्रतिबिम्बरूपेणेति। प्रविष्टेतिपदेन पुल्लिङ्गविपरिणामेनानुषक्तेनान्वयः। त्वंपदवाच्यार्थमुक्त्वा लक्ष्यार्थमाह—स चेति। तस्य सदभेदयोग्यतामाह—सद्रूपमिति। एवंभूतस्यार्थस्य ज्ञानं वाक्यश्रवणानन्तरमेव जायते। न ततः पूर्वं प्रमाणान्तरेण। "नावेदविन्मनुते तं बृहन्तं", "तन्त्वौपनिषदं" इत्यादिश्रुतेरित्येतस्मिन्नर्थे तद्धास्य विजज्ञाविति वाक्यं व्याचष्टे—प्राक् पितुरिति। तत्त्वमसीति वाक्येन स्वपितिनामनिर्वचनादिहेतुभिः, यथा सोम्य मधु मधुकृत इत्यादिदृष्टान्तैश्च प्रतिबोधित इत्यन्वयः। एवं यथाव्याख्यातरीत्या तत्त्वमसीति वाक्यमद्वितीयाखण्डात्मनिष्ठमित्युक्तम्। तत्केचिन्नियोगनिष्ठमित्याहुः, तन्निराकरणाय विचारमारभते—किं पुनरिति। तत्र तावत्सिद्धान्तपक्षमाह—आत्मनीति। कर्तृत्वभोक्तृत्वयोस्सतोर्यदधिकृतत्वज्ञानं कर्तृत्वाद्यारोपपूर्वकं अधिकृतत्वारोपस्तन्निवृत्तिरित्यर्थः।

---

यदत्र मध्वानुयायिभिरुच्यते, तत्राद्वैतसिद्धिकारा आहुः—यत्तु तत्त्वमसीति वाक्ये पदद्वयलक्षणापेक्षया तत्पदस्य तत्सहचरिते तज्जन्ये वा तदधीने वा तत्सदृशे वा लक्षणाऽङ्गीक्रियतामित्याद्युक्तम्, तन्न। तत्त्वंपदयोः विशेष्यभूतशुद्धचैतन्यपरत्वेन लक्षणाऽभावात् शुद्धे तात्पर्ये षड्विधलिङ्गैर्ज्ञायमाने उक्तार्थेषु लक्षणाऽयोगात्। अत एव लुप्ततृतीयादिविभक्तिकत्वं तत्पदस्येति प्रत्युक्तम् गौरवात्। यदपि तत्पदस्य पूर्ववाक्यस्थैतदात्म्यपरत्वं एतदात्मनः इदं ऐतदात्म्यं इत्यर्थात् ब्रह्मसम्बन्धित्वं इत्यर्थः इति। तन्न। तस्येदमित्यर्थे ष्यञोऽनभिधानात् प्रयोगाभावाच्च। एतदात्मव्यापकत्वेनैतदात्म्यं—इत्युक्तिः एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधाद्धेया।

यत्तु रामानुजाचार्यैरुक्तं "शरीरवाचिपदानां शरीरिपर्यन्तत्वेन त्वं इत्यस्य जीवशरीरकब्रह्मवाचित्वात् तत्त्वमोः सामानाधिकरण्यमिति। तन्न। शरीरिपर्यन्तत्वमित्यस्य कोऽर्थः? तल्लक्षकत्वं चेत् मुख्यवृत्तित्यागात्। तत्रापि शक्तत्वं चेत् शरीरवाचिनामित्यसाधारण्येन निर्देशायोगात्। प्रवृत्तिनिमित्तमनुष्यत्वादिजातेः शरीरिण्यसत्त्वाच्च। न च मनुष्यादिपदस्यात्मवृत्तित्वं अचाक्षुषत्वापत्तेः। नापि शरीरविषयवृत्त्यैव शरीरिबोधकत्वं अन्यविषयवृत्त्याऽन्यबोधानुपपत्तेः शरीरशरीरिणोरनादिभ्रमसिद्धाभेदेनैव तद्बोधकत्वोपपत्तेः। तथा च तात्त्विकाभेदनिबन्धन एवात्र तत् त्वं इति प्रयोगः।

फलं यं वयमवोचाम त्वंशब्दवाच्यमर्थं श्रोतुं मन्तुं चाधिकृतमविज्ञातविज्ञानफलार्थम् । प्राक्चैतस्माद्विज्ञानादहमेवं करिष्याम्यग्निहोत्रादीनि कर्माण्यहमत्राधिकृतः । एषां च कर्मणां फलमिहामुत्र च भोक्ष्ये, कृतेषु वा कर्मसु कृतकर्तव्यः स्यामित्येवं कर्तृत्वभोक्तृत्वयोरधिकृतोऽस्मीत्यात्मनि यद्विज्ञानमभूत्तत्तस्य यत्सज्जगतो मूलमेकमेवाद्वितीयं तत्त्वमसीत्यनेन वाक्येन प्रतिबुद्धस्य निवर्तते । विरोधात् । न ह्येकस्मिन्नद्वितीय आत्मन्ययमहमस्मीति विज्ञाते ममेदमन्यदनेन कर्तव्यमिदं कृत्वाऽस्य फलं भोक्ष्य इति वा भेदविज्ञानमुपपद्यते। तस्मात्सत्सत्याद्वितीयात्मविज्ञाने विकारानृतजीवात्मविज्ञानं निवर्तत इति युक्तम् । ननु तत्त्वमसीत्यत्र त्वंशब्दवाच्येऽर्थे सद्बुद्धिराधित्स्यते यथाऽऽदित्यमनआदिषु ब्रह्मादिबुद्धिः । यथा च लोके प्रतिमादिषु विष्ण्वादिबुद्धिस्तद्वत्तु सदेव त्वमिति, यदि सदेव श्वेतकेतुः स्यात्कथमात्मानं न विजानीयाद्येन तस्मै तत्त्वमसीत्युपदिश्यते । न । आदित्यादिवाक्यवैलक्षण्यात् । आदित्यो

### नरेन्द्रपुरीयं टिप्पणम्

कारणे अधिकृतत्वमध्यस्तमस्तीत्याह—प्राक् चैतस्मादिति । एवं स्वाभिप्रायेण मुख्यैकत्वपरं वाक्यं व्याख्याय गौणैकत्वविषयत्वं शङ्कते—ननु तत्त्वमसीति । किं मुख्यैकत्वे बाधकसम्भवादाध्यासिकं गौणमेकत्वमालम्बनमुच्यते । किं वा अध्यासवाक्यसामान्यात् ? नान्त्य इत्याह—न, आदित्यादीति । इति शब्दःपरो यस्य सामानाधिकरण्यस्य

### आनन्दगिरिटीका

तस्य स्वात्मनि क्रियाकर्तृत्वे फलभोक्तृत्वे च यन्मिथ्यैवाधिकृतत्वविज्ञानं तन्निवृत्तिर्मानफलमिति योजना । यथोक्तं मानफलमेव प्रपञ्चयति—प्राक्चेति । अहमेवात्राधिकृतश्चेति चकारस्य सम्बन्धः । तस्येत्यज्ञस्येत्यर्थः । विरोधमेव स्फोरयति—न हीति । प्रमाणफलमुपसंहरति—तस्मादिति । तत्त्वमसीति वाक्यं मुख्यैकत्वपरमिति स्वपक्षमुक्त्वा परपक्षं शङ्कते—नन्विति । आध्यासिकमेकत्वं सामानाधिकरण्यालम्बनमिति स्वपक्षं दृष्टान्तेनोक्त्वा सिद्धान्तं दूषयति—नन्विति । श्वेतकेतोः सन्मात्रत्वे तदज्ञानायोगादसकृदुपदेशासिद्धिरित्यर्थः । किमध्यासवाक्यसामान्यादाध्यासिकमेकत्वं सामानाधिकरण्यालम्बनं किं वा मुख्यैकत्वे बाधकसद्भावादिति विकल्प्याऽऽद्यं दूषयति—नेत्यादिना।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यद्वा कर्तृत्वमिति कर्मोच्यते भोक्तृत्वमिति भोगः तयोरधिकृतत्वज्ञानमित्यर्थः । अविज्ञातज्ञानलक्षणफलार्थं श्रोतुं मन्तुञ्च अधिकृतं यं त्वंशब्दवाच्यमर्थमवोचाम योऽहं श्वेतकेतुरित्यादिना, तस्य आत्मनि कर्तृत्वादिज्ञाननिवृत्तिः फलमिति पूर्वेणान्वयः । कर्तृत्वाद्यारोपं प्रदर्शयन् तस्य वाक्यजन्यज्ञानेन निवृत्तिमुपपादयति—प्रागित्यादिना । मीमांसकमते नित्यकर्मसु फलाभावात् तत्र भोक्तृत्वाध्यासमाह—कृतेषु वेति । प्राभाकरमते वैदिकस्य नियोगस्यैव नित्यकर्मसु फलत्वाङ्गीकारात्तस्यैव कर्तव्यशब्देनाभिधानात्तत्सिद्धिरेव भोग इति भावः । ममेदमिति, मम कर्तुरनेन करणेन इदं कर्म कर्तव्यमित्यर्थः । इदानीं पूर्वपक्षमाशङ्कते—नन्विति । त्वंशब्दवाच्ये प्रतीके सद्बुद्धिराधित्स्यते । आधातुमिष्यते श्रुत्या ततस्तद्वाक्यं उपासनानियोगनिष्ठं नाद्वितीयात्मनिष्ठं प्रत्यक्षादिसिद्धभेदविरोधात् वेदवाक्यस्य कार्यनिष्ठत्वेनैव प्रामाण्याच्चेत्यर्थः । यथेति । आदित्यो ब्रह्मेत्युपासीतेत्यादिषु यथा आदित्यादेः ब्रह्मसामानाधिकरण्येऽपि विनियोगनिष्ठत्वं न त्वभेदपरत्वमित्यर्थः । यदि त्वमर्थस्य सदात्मत्वं नित्यसिद्धं स्यात् तदा तस्य सदात्मत्वस्य सदा प्रतीत्यापत्तेः, उपदेशो व्यर्थस्स्यादित्याह—यदीति । प्रत्यक्षादिना वाच्यार्थे भेदप्रतीतावपि लक्ष्यार्थे तदभावादभूतार्थेऽपि प्रामाण्यस्य' पुत्रस्ते जातः 'स हरिस्सर्वं देवदेव' इत्यादिषु दर्शनात् आदित्यादिवाक्येषु च उपपदश्रवणान्नोपासनानिष्ठं वाक्यमित्याह—नेति । वैलक्षण्यान्तरमाह—आदित्य इति । तत्र आदित्योद्देशेन ब्रह्मत्वविधाने आदित्यो ब्रह्मेत्येवालं इतिपदश्रवणे तु तस्य विशेष्यत्वाद्ब्रह्मशब्दस्य तद्विशेषणत्वान्नादित्यसमानाधिकरण्यं तस्य, किन्तु इतिशब्दस्यैव आदित्यशब्दसामानाधिकरण्यं तदर्थस्यैव विधेयत्वं च प्रतीयते । तदर्थश्च प्रकारः ततश्च ब्रह्मप्रकारवानादित्य इति । ब्रह्मप्रकारश्चादित्ये नान्यस्सम्भवतीति ब्रह्मबुद्धिविषयत्वमेव ब्रह्मणि विद्यमानो ब्रह्मप्रकारो ग्राह्य इति ब्रह्मबुद्धिविषयत्वमेव विधीयते, आदित्यं ब्रह्मबुद्धिविषयं सदा कुर्यादिति, नादित्ये ब्रह्मत्वं विधीयते, तस्य इतिशब्दार्थविशेषणत्वेन स्वतोऽन्यान्वयानुपपत्तेः । न च आदित्यब्रह्मणोः सामानाधिकरण्येनान्वयानन्तरं आदित्यब्रह्मैक्यरूपे वाक्यार्थे इतिशब्दार्थान्वयः, ततश्च आदित्यब्रह्मैक्यमुपासीतेति वाक्यार्थ इति वाच्यम्, तर्हि आदित्यं ब्रह्मोपसीतेत्येतावतैव तदर्थलाभे इतिशब्दो व्यर्थस्स्यात्। न च इतिशब्दः तस्यैव वाक्यार्थस्य प्रतिनिर्देशार्थः,

ब्रह्मेत्यादावितिशब्दव्यवधानान्न साक्षाद्ब्रह्मत्वं गम्यते। रूपादिमत्त्वाच्चाऽऽदित्यादीनामाकाशमनसोश्चेतिशब्दव्यवधानादेवाब्रह्मत्वमिह तु सत एवेह प्रवेशं दर्शयित्वा तत्त्वमसीति निरङ्कुशं सदात्मभावमुपदिशति।

ननु पराक्रमादिगुणः सिंहोऽसि त्वमितिवत्तत्त्वमसीति स्यात्। न। मृदादिवत्सदेकमेवाद्वितीयं सत्यमित्युप-

### नरेन्द्रपुरीयं टिप्पणम्

तस्य वस्तुनिष्ठत्वं न दृष्टं लोके यथा शुक्तिकां रजतमिति प्रत्येतीत्यादौ तथाध्यासवाक्यानामपि। न तथा तत्त्वमसि वाक्यस्य स्वरूप एव तस्य पर्यवसानमित्यर्थः। जीवब्रह्मणोर्भेदग्राहकप्रमाणविरोधान्न मुख्यमेकत्वं किन्तु चैतन्यगुणयोगात् गौणमित्याद्यविकल्पं शङ्कित्वा परिहरति—नन्वित्यादिना। गौणं चैकत्वं वदता स्तुत्यर्थत्वं वाक्यस्येष्टम्।

### आनन्दगिरिटीका

यथा लोके शुक्तिकां रजतमिति प्रत्येतीत्यादावितिशब्दपरं सामानाधिकरण्यं न वस्तुनिष्ठं दृष्टं तथाऽध्यासवाक्यानामप्यादित्यो ब्रह्मेत्यादेश इत्यादीनामितिशब्दपरसामानाधिकरण्यवशादवस्तुनिष्ठत्वं गम्यते न तथा तत्त्वमसिवाक्यस्यावस्तुनिष्ठत्वमितिशब्दपरत्वाभावेन सामानाधिकरण्यस्य स्वरूपपर्यवसायित्वनिश्चयादित्यर्थः। इह त्विति प्रकरणोक्तिः। इह प्रवेशं दर्शयित्वेत्यत्र तेजोबन्नमयं सङ्घातमिहेति व्यपदिशति।

जीवब्रह्मणोर्भेदग्राहिप्रमाणविरोधान्न मुख्यमेकत्वं किं तु चैतन्यगुणयोगाद्गौणमिति द्वितीयं शङ्कते—नन्विति। यथा मृदादि कारणमेव घटादि कार्यं न पृथगस्ति तथा सर्वमिदमाकाशादिकार्यं सन्मात्रं तत्र सर्वप्रकार-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

गौरित्याहेत्यादावितीति वाच्यम्, प्रतिनिर्देशं विनापि तदैक्यमुपासीतेत्येवं वाक्यार्थसम्भवे तस्यैवानुपयोगात्। किञ्च प्रतिनिर्दिष्टस्य वाक्यार्थस्यैव इतिशब्दोक्तस्य उपास्तिक्रियाकर्मत्वेन "स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्त"इत्यत्र आदित्यमिति द्वितीयानुपपत्तेः। आदित्यब्रह्मैक्यस्य मानान्तरासिद्धत्वेन अनेनैव तस्यापि विधाने तच्चोपासनं च विधेयमिति वाक्यभेदापत्तेश्च। न च उक्तिमात्रेण देवताधिकरणन्यायेनैक्यस्य सिद्धिरिति वाच्यम्। तदैक्यस्य मानान्तरविरुद्धत्वेन तत्र तदधिकरणन्यायानवतारात् मानान्तराविरुद्धे देवताविग्रहादावेव तन्न्यायस्योक्तत्वात् तस्मादादित्योद्देशेन तस्य ब्रह्मबुद्धिविषयत्वेन प्रकारेण उपासनमेव विधीयते, नतु ब्रह्मत्वम्। न च ब्रह्मबुद्धिविषयत्वस्यापि विधाने वाक्यभेद इति वाच्यं, अन्यस्याप्यन्यबुद्धिविषयत्वदर्शनेन, तस्मिन् ब्रह्मबुद्धिविषयत्वस्य मानान्तराविरुद्धत्वेन देवताधिकरणन्यायेन तत्सिद्धिसम्भवात्। तत्त्वमसीत्यत्र तु नेतिशब्दव्यवधानलक्षणं बाधकमस्तीति त्वमर्थोद्देशेन तदर्थत्वं विधीयत इति मुख्यैक्यपरत्वमित्यर्थः। आदित्यवाक्ये मुख्यैक्याभावे बाधकान्तरमाह—रूपादीति। आदित्यादे रूपादिमत्त्वेन तद्रहितब्रह्मैक्यं नोपपद्यत इति गौणमेव मदङ्गीकृतमित्यर्थः। न च तत्त्वमसीत्यत्रेव लक्षणया विरोधांशत्यागेन मुख्यमेव सामानाधिकरण्यमस्त्विति वाच्यम्। मुख्यसामानाधिकरण्ये तात्पर्यग्राहकप्रमाणाभावेन उपासीतेत्युपास्तिदर्शनाच्च तदनुपपत्तिरिति भावः। तत्त्वमसीत्यत्र न केवलमितिशब्दव्यवधानलक्षणबाधकाभावः। साधकं च ऐक्यतात्पर्यग्राहकं बह्वस्तीत्याह—इह त्विति। द्वितीय इहशब्दः शरीरपरः। सत एव प्रवेशं दर्शयित्वेति। इदमुपलक्षणम्—एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात् तस्य च'यथा सौम्यैकेन मृत्पिण्डेने'त्यादिदृष्टान्तैः 'वाचारम्भणं विकार'इत्याद्युपपत्तिभिश्चोपपादनेन मुख्यत्वावगमात्। 'एकमेवाद्वितीयमि'त्यद्वितीयत्वमुपक्रम्य तस्यापि 'तदैक्षते'त्यादिना सर्वोपादानत्वेन जडप्रपञ्चाभेदस्य, 'अनेन जीवेनात्मनानुप्रविश्ये'ति प्रवेशद्वारा चेतनाभेदस्योक्त्या चोपपादनेन मुख्यत्वप्रतिपादनात् 'अपागादग्नेरग्नित्वं,वाचारम्भणं विकार'इत्यादिना कार्यस्य मृषात्वप्रतिपादनेन कर्तृत्वादेर्विरुद्धधर्मस्य मृषात्वोक्तेः 'स्वमपीतो भवती'ति स्वापे सत्सम्पत्त्या अभेदमुक्त्वा तत्र भेदप्रतीतिविरोधमाशङ्क्य 'स यथा शकुनि'रिति दृष्टान्तपूर्वकं 'एवमेव तन्मनः प्राणमेवोपश्रयत' इत्यादिना मनसि सति भेदव्यवहारः तदभावे स नास्तीति औपाधिकत्वेन विरोधं परिहृत्य अभेदस्थिरीकरणात्। 'प्राणस्तेजसि तेजः परस्यां देवतायामि'ति मरणकाले प्राणस्याप्यभावेन अतिस्फुटं सत्सम्पत्त्युक्तेश्च, तत्तदाशङ्कानिरासपूर्वकं तत्त्वमसीति नवकृत्वोऽभ्यासात्, 'आचार्यवान्पुरुषो वेद, तस्य तावदेव चिरमि'ति उपदेशजनितज्ञानस्यैव सत्सम्पत्तिफलत्वोक्तेः, तप्तपरशुदृष्टान्तेन सत्याभिसन्धस्य मोक्षप्रतिपादनेन तद्बास्य उद्दालकस्य वचनाद्विजज्ञाविति वाक्यजन्यज्ञानमात्रेणोपरमाच्च, उपासनायोगनिष्ठत्वायोगान्निरङ्कुशमनुपचरितं सदात्मत्वमुपदिशतीत्यपि द्रष्टव्यम्।

देशात्। न चोपचारविज्ञानात्तस्य तावदेव चिरमिति सत्सम्पत्तिरुपदिश्येत। मृषात्वादुपचारविज्ञानस्य। त्वमिन्द्रोऽसि यम इतिवत्। नापि स्तुतिरनुपास्यत्वाच्छ्वेतकेतोः। नापि सच्छ्वेतकेतुत्वोपदेशेन स्तूयेत। न हि राजा दासस्त्वमिति स्तुत्यः स्यात्। नापि सतः सर्वात्मन एकदेशनिरोधो युक्तस्तत्त्वमसीति देशाधिपतेरिव ग्रामाध्यक्षस्त्वमिति। न चान्या गतिरिह सदात्मत्वोपदेशादर्थान्तरभूता सम्भवति। ननु सदस्मीति बुद्धिमात्रमिह कर्तव्यतया चोद्यते न त्वज्ञातं सदसीति ज्ञाप्यत इति चेत्। नन्वस्मिन्पक्षेऽप्यश्रुतं श्रुतं भवतीत्याद्यनुपपन्नम्। न, सदस्मीतिबुद्धिविधेः स्तुत्यर्थत्वात्। न, आचार्यवान्पुरुषो वेद तस्य तावदेव चिरमित्युपदेशात्। यदि हि सदस्मीति बुद्धिमात्रं कर्तव्यतया

### नरेन्द्रपुरीयं टिप्पणम्

दृष्टिविधिपरत्वं वा ? नाद्य इत्याह—त्वमिन्द्र इति। सतस्तद्युपास्यत्वात् स्तुतिरस्त्वित्याशङ्क्याह—नापि सदिति। श्वेतकेतोःसतो वा स्तुतिर्माभूत्, कर्मकर्तृस्तावकत्वं भविष्यतीत्यपि न वाच्यम्। कर्मविध्यसन्निधानात्सदात्मकत्वमात्रप्रतीतेश्चेत्याह—न चान्या गतिः। द्वितीयमुद्भाव्य दूषयति—सदस्मीत्यादिना। एकविज्ञानेन सर्वविज्ञानं न स्तुतिः कार्यकारणानन्यत्वादियुक्तिभिरुपपादितत्वाद्विधिपक्षे चासम्भावनादिनिराससमर्थाचार्यवत्त्वोपदेशानर्थक्यापातादीपदेशिकज्ञानमात्रेण विद्यानुष्ठानसम्भवाद्विध्यपेक्षितोपदेशकस्य च विधिनैवाक्षिप्तत्वादित्याह—नाचार्य-

### आनन्दगिरिटीका

भेदरहितमेकरसमबाधितमित्युपदेशदर्शनान्न गौणमेकत्वमित्युत्तरमाह—नेत्यादिना। इतश्च नोपचरितमेकत्वमित्याह—न चेति। औपचारिकविज्ञानस्य मृषात्वे दृष्टान्तमाह—त्वमिति। किञ्च गौणमेकत्वं वदता स्तुत्यर्थत्वं विधिपरत्वं वा वाक्यस्य वक्तव्यं ? आद्येऽपि श्वेतकेतोः सतो वा वस्तुनः स्तुतिरिति विकल्प्याऽऽद्यं दूषयति—नापीति। उपास्यत्वात्सतः स्तुतिरिति द्वितीयमाशङ्क्य दूषयति—नापि सदिति। इतश्च श्वेतकेतुत्वोपदेशेन सतो न स्तुतिरित्याह—नापि सत इति। श्वेतकेतोरनुपास्यत्वेन स्तुत्यसम्भवेऽपि कर्तृत्वात्कर्मसु तत्स्तावकत्वं वाक्यस्य युक्तमित्याशङ्क्य कर्मविध्यसन्निधानात्सदात्मत्वमात्रप्रतीतेश्च नैवमित्याह—न चेति। विकल्पान्तरमुद्भावयति—ननु सदस्मीतीति। एकविज्ञानेन सर्वविज्ञानवचनविरोधान्न दृष्टिविधिपरत्वमित्युत्तरमाह—नन्विति। गौणपक्षेऽपि तुल्याऽनुपपत्तिरित्यपेरर्थः। एकविज्ञानेन सर्वविज्ञानश्रुतेर्न विरोधोऽस्तीति पूर्ववाद्याह—नेति। नेदमेकविज्ञानेन सर्वविज्ञानं दृष्टिविधिस्तुतिः कार्यकारणानन्यत्वादियुक्तिभिरुपपादितत्वाद्विधिपक्षे चासम्भावनादिनिराससमर्थाचार्यवत्त्वोपदेशा-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एवं तत्त्वमसीति वाक्यस्य अत्यन्ताभेदपरत्वमुक्त्वा मन्दमत्यनुग्रहार्थं सम्भावितान्पक्षान्निराकुर्वन्नादौ तत्पदस्य त्वमर्थे गौणः प्रयोग इति पक्षं शङ्कते—नन्विति। गौणत्वस्य वाच्यगौणार्थयोर्भेदेन व्याप्तत्वादिह तद्विरुद्धाभेदप्रतिपादनान्न गौणत्वमित्याह—न मृदादीति। गौणत्वे अभेदप्रतिपादनं व्यर्थं प्रत्युत विरोधि चेत्यर्थः। न केवलमद्वितीयत्वप्रतिपादनविरोधः किन्तु सत्सम्पत्तिलक्षणफलोक्तिश्च विरुध्यत इत्याह—नचोपचारेति। अथवा तर्हि न गौणशब्दः आरोपेण त्वमर्थे तदर्थस्य तत्र तच्छब्दप्रयोग इत्याशङ्क्य किमारोपस्य तत्त्वेन उपासनं प्रयोजनं, उत सत्सम्पत्तिः आहो स्तुतिरिति विकल्प्य नाद्यः, उपासनावाक्यवैलक्षण्येन तदभावस्योक्तत्वादित्यभिप्रेत्य द्वितीयं निराकरोति—नचोपचारेति। तृतीयं निराकरोति—त्वमिन्द्रो यम इतिवदिति। अस्मिन् पक्षे सदात्मत्वारोपेण श्वेतकेतोः स्तुतिराहो श्वेतकेतुत्वारोपेण सतःस्तुतिरिति विकल्प्य आद्यं निराकरोति—अनुपास्यत्वादिति। उपासनानुष्ठानस्य क्लेशात्मकत्वात् तत्र उत्साहार्थं स्तुत्यपेक्षितत्वात्तत्सम्बन्धिन एव स्तुतिर्युक्तेत्यर्थः। द्वितीयं निराकरोति—नापीति। ब्रह्मदृष्टिरुत्कर्षादिति न्यायेन निकृष्टे उत्कृष्टबुद्ध्या स्तुतिःस्यात्। इतरथा निन्दैव स्यादित्यर्थः। तर्हि व्यापकस्य तदर्थस्य त्वमसीति जीवपरिच्छिन्नशरीरत्वोक्त्या परिच्छेदः प्रतिपाद्यत इति पक्षान्तरमाशङ्क्य अत्रापि प्रयोजनाभावात्परिच्छेदेन निन्दाप्रतीतेरनर्थापत्तेश्च अयमपि पक्षो न युक्त इत्याह—नापि सत इति। अर्थान्तराभावादस्मदुक्तार्थ एव ग्राह्य इति उपसंहरति—न चान्येति। गत्यन्तराभावोऽसिद्ध इति चोदयति—नन्विति। आत्मा द्रष्टव्य इत्यादिज्ञानविधिदर्शनादिहापि स्वप्नान्तं मे सोम्य विजानीहीति ज्ञानविधिदर्शनात् ज्ञाननियोगनिष्ठं शास्त्रमित्यर्थः। नन्विति। न वस्तुतत्वनिष्ठमित्यर्थः। नियोगनिष्ठत्वे शास्त्रस्य नियोगपरत्वेन वस्तुनि तात्पर्याभावाद्वस्तुनः अद्वितीयत्वं न सिध्यतीति शङ्कावाद्येव सिद्धान्त्याशङ्कामाशङ्कते—नन्विति। वस्तु-

**विधीयते न तु त्वंशब्दवाच्यस्य सद्रूपत्वमेव तदा नाऽऽचार्यवान्वेदेति ज्ञानोपायोपदेशो वाच्यः स्यात्। यथाऽग्निहोत्रं जुहुयादित्येवमादिष्वर्थप्राप्तमेवाऽऽचार्यवत्त्वमिति तद्वत्। तस्य तावदेव चिरमिति च क्षेपकरणं न युक्तं स्यात्। सदाऽऽत्मतत्त्वेऽविज्ञातेऽपि सकृद्बुद्धिमात्रकरणे मोक्षप्रसङ्गात्। न च तत्त्वमसीत्युक्ते नाहं सदितिप्रमाणवाक्यजनिता**

### नरेन्द्रपुरीयं टिप्पणम्

वानित्यादिना। इतश्च दृष्टिविधिपरत्वं न वाच्यमित्याह—**तस्य तावदेव चिरमिति।** सदात्मकत्वसाक्षात्करणमन्तरेणापि सकृदनुष्ठितात्परोक्षबुद्धिमात्रात् कदाचिन्मोक्षसम्भवात्। विलम्बाभिधानं व्यर्थं प्रसज्येत यथा सकृदनुष्ठिताद्यागात् कदाचित्स्वर्गो भवतीति चिरत्वाभिधानमनर्थकमित्यर्थः। किञ्च विधिकल्पनावादिना सिद्धेऽर्थे विपर्यासलक्षणमनुत्पत्तिलक्षणं वा वाच्यम्। तच्च दुर्वचं बलवद्बाधकादर्शनात् भेदप्रत्ययस्य सर्वस्वाप्नभेदप्रत्ययवत् मिथ्यात्वानुमानादद्वैततात्पर्याभिज्ञस्य प्रमित्युत्पाददर्शनाच्चेत्याह—**न च तत्त्वमसीति।** चार्वाकव्यतिरिक्तानां यथा

### आनन्दगिरिटीका

नर्थक्यादौपदेशिकज्ञानमात्रेण विध्यनुष्ठानसिद्धेर्विध्यपेक्षितस्य च तेनैवाऽऽक्षेपादित्युत्तरमाह—**नाऽऽचार्यवानिति।** तदेव विवृणोति—**यदि हीति।** आचार्यवत्त्वमिति नोपदिश्यत इति शेषः। इतश्च नेदं वाक्यं दृष्टिविधिपरमेष्टव्यमित्याह—**तस्येति।** सदात्मत्वसाक्षात्कारादृतेऽपि सकृदनुष्ठितपरोक्षबुद्धिमात्रान्मोक्षसम्भवाद्विलम्बाभिधानमनर्थकमापद्येत यथा सकृदनुष्ठितादपि यागाद्भवति स्वर्गस्तद्वदिह च चिरमिति क्षेपकरणं मोक्षस्येति तस्मान्नेदं दृष्टिविधिपरमित्यर्थः। किञ्च विधिवादिना प्रतीयमानेऽर्थे वाक्यस्याप्रामाण्यं विपर्यासलक्षणमनुत्पत्तिलक्षणं वा वाच्यं तदुभयं दुर्वचमित्याह—**न चेति।** तत्त्वमसीत्यधिकारिणं प्रत्युक्ते सति प्रमाणभूतेन तेन वाक्येन जनिता सद्ब्रह्माहमिति या

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

माहात्म्यप्रतिपादनं ज्ञानविधिपक्षे अनुपयोगीत्यर्थः। न वस्तुमाहात्म्यपरं तद्वाक्यं, किन्तु तद्वाक्यं स्तुतिपरमिति परिहरति—**न सदस्मीति।** सिद्धान्ती दूषयति—**न आचार्येति।** "आचार्यवान्पुरुषो वेदेति, आचार्यो ज्ञानसाधनमिति विशेषणेनोच्यते। तद्वस्तुपरत्वे तस्य दुर्ज्ञेयत्वात्प्रत्यक्षादिविरोधपरिहारेण अद्वितीयवस्तुप्रतिपादनतात्पर्यलिङ्गादिनिरूपणस्य अपेक्षितत्वेन तदर्थमाचार्यापेक्षणाद्युज्यते।

विधिपरत्वे तु अग्निहोत्रादिवाक्यतुल्यत्वे अध्ययनविध्याक्षिप्ताचार्यव्यतिरेकेण पृथगाचार्यानपेक्षणादयुक्तं स्यादित्यर्थः। तदेव विवृणोति—**यदि हीति।** बाध्यः स्यादिति पाठे न स्यादित्यर्थः। अर्थप्राप्तमिति अध्ययनविध्याक्षेपप्राप्तमित्यर्थः। आचार्यवत्त्वमितीत्यनन्तरं पृथगाचार्यवत्त्वोपदेशो नास्तीति शेषः।

किञ्च तस्य तावदेव चिरमिति शरीरपातपर्यन्तं विलम्बकरणं वाक्यस्य वस्तुनिष्ठत्वे युज्यते। तथाहि—वस्तुतत्त्वज्ञानं मोक्षसाधनं, तच्च दृष्टद्वारा मोक्षसाधनमिति, मुक्तेष्वादिषु वेगक्षयप्रतीक्षादर्शनेन प्रतिबिम्बादिविभ्रमेषु ग्रीवास्थमेवेदं मुखमिति वस्तुतत्त्वज्ञानस्य उपाधिप्रतिबद्धस्य प्रतिबिम्बभ्रमनिवर्तने प्रतिबन्धकनिवृत्त्यपेक्षादर्शनेन च तन्न्यायेनेहापि प्रतिबन्धकप्रारब्धकर्मनिवृत्तिपर्यन्तं प्रतीक्षोपपत्तेः।

ज्ञानविधिपक्षे तु ज्ञाननियोगस्य मोक्षसाधनत्वेन तस्य च यथाशास्त्रमेव साधनत्वेन विलम्बकरणानुपपत्तेः। नियोगस्य कालान्तरभाविफलजनकत्वेऽपि अग्निहोत्रादिनियोगेष्विव विलम्बोक्तिर्न स्यात्। अन्यथा तत्रापि स्यादित्यभिप्रेत्याऽऽह—**तस्य तावदेवेति।**

ननु अपरोक्षज्ञानोत्पत्त्यर्थमेवायं विलम्बो न तु मोक्षफले इत्याशङ्क्य नियोगवादिनो नियोगस्यैव मोक्षसाधनत्वेन अपरोक्षज्ञानानपेक्षणान्नियोगस्य च सकृद्धात्वर्थानुष्ठानमात्रेणैव सर्वौषधावघातन्यायेन सिद्धेः विलम्बानुपपत्तिरित्याह—**सदात्मतत्त्व इति।** अविज्ञात इतिच्छेदः। अपरोक्षतोऽविज्ञात इत्यर्थः। न च द्रष्टव्य इत्यपरोक्षज्ञानमेव विधीयत इति अपरोक्षज्ञानाभावे नियोग एव नोत्पद्यत इति वाच्यम्। आचार्यवान्वेदेति आचार्योपदिष्टवाक्यजन्यज्ञानस्यैव विधेयत्वस्य विधिवादिना वक्तव्यत्वात् वाक्यस्यैव प्रथममेवापरोक्षज्ञानजनकत्वाच्चेति भावः।

नन्वेवमपि न वस्तुमात्रनिष्ठत्वं आस्थातुं शक्यं सर्वस्यापि वाक्यस्य कार्ये व्युत्पन्नत्वेन वस्तुमात्रे बुद्ध्यनुत्पत्तेः। उत्पत्तौ वा तस्या मिथ्यात्वमेव, कार्य एव प्रामाण्यादित्याशङ्क्य कार्यवाक्यादिव सिद्धवाक्यादपि प्रतीतिदर्शनाद्बाधकाभावेन याथार्थ्याच्च कार्य इव सिद्धेऽपि व्युत्पत्तेः तत्र तत्र साधितत्वाच्च नैवमित्याह—**न चेति।**

बुद्धिर्निवर्तयितुं शक्या नोत्पन्नेति वा शक्यं वक्तुम्। सर्वोपनिषद्वाक्यानां तत्परतयैवोपक्षयात्। यथाऽग्निहोत्रादिविधिजनिताग्निहोत्रादिकर्तव्यताबुद्धीनामतथार्थत्वमनुत्पन्नत्वं वा न शक्यते वक्तुं तद्वत्॥

यत्तूक्तं सदात्मा सन्नात्मानं कथं न जानीयादिति। नासौ दोषः। कार्यकरणसङ्घातव्यतिरिक्तोऽहं जीवः

### नरेन्द्रपुरीयं टिप्पणम्

देहाद्यतिरेको जीवस्य स्वाभाविको [ नोपदेशं ] विनाऽवभासते तथा ब्रह्मभावोऽपि अचिन्त्याज्ञानमहिम्नैव नावभासिष्यते। अतो जीवे भासमानेऽप्यनवभासमानत्वात् ब्रह्म न स्वभाव इति यदुक्तं तदयुक्तं व्याप्त्यभावादित्याह—यत्तूक्तमित्यादिना। यस्मादर्थान्तरपरत्वं न सम्भाव्यते तस्माद्धिकारे अनृतेऽधिकृतोऽहं जीव इत्येवंरूपविज्ञानस्य

### आनन्दगिरिटीका

तस्य बुद्धिस्तां निवर्तयितुं नाहं सदिति बलवती बुद्धिरुत्पन्नेति न शक्यते वक्तुं विवेकवतः श्रुतवाक्यस्य तथाविधबुद्ध्यनुत्पादात्। न चाधिकारिणः श्रुतवाक्यस्य सद्ब्रह्माहमिति बुद्धिर्नोत्पन्नेति वक्तुं शक्यमधिकारिणः प्रमितिजनको वेद इति न्यायात्। न च भेदप्रत्ययो यथोक्ताया बुद्धेर्बाधकस्तस्य स्वाप्नभेदप्रत्ययवन्मिथ्यात्वानुमानादित्यर्थः। इतश्च तत्त्वमसिवाक्यं वस्तुपरमेवेत्याह—सर्वोपनिषदिति। तत्त्वमसिवाक्यान्नायथार्था बुद्धिर्नापि न भवेत्येव बुद्धिरित्येतमर्थं दृष्टान्तेनाऽऽह—यथेति।

जीवे भासमानेऽप्यनवभासमानत्वान्न स्वभावो ब्रह्मेत्युक्तमनूद्य दूषयति—यत्तूक्तमिति। लोकायतातिरिक्तानां देहादतिरेको जीवस्य स्वाभाविकोऽपि नावभासते तथा ब्रह्मभावोऽपि तस्यानाद्यनिर्वाच्याज्ञानसामर्थ्यादिव नावभासिष्यते। तथा च तस्मिन्भासमानेऽप्यनवभासमानत्वान्न स्वभावो ब्रह्मेत्ययुक्तं व्याप्त्यभावादित्याह—कार्येति। ननु देहव्यतिरिक्तात्मवादिनामात्मनि भाति देहव्यतिरिक्तोऽपि भात्येवेति व्याप्तिसिद्धिरित्याशङ्क्याऽऽह—कथमिति। देहादिसङ्घातादतिरिक्तोऽहमित्येवं व्यतिरिक्तविज्ञाने सति कथं तेषां कर्तृत्वादिविज्ञानं सम्भवति। न हि सङ्घाताभि-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अहं सदिति प्रमाणवाक्यजनिता बुद्धिः नाहं सदित्येवं प्रकारेण निवर्तयितुं च न शक्येत्यन्वयः। न च सिद्धे वेदान्ताप्रामाण्यं, षड्विधैर्लिङ्गैः गतिसामान्येन च तत्रैव तात्पर्यनिश्चयादित्याह—सर्वेति। उपक्षयाविति। तद्धास्य विजज्ञाविति ज्ञानमात्रे पर्यवसानात्। उपासीत जानीयादित्याद्युपासनाः। द्रष्टव्यः विजानीहीत्यादेः ज्ञानत्वेनापुरुषतन्त्रस्याविधित्वस्य बहुधोक्तत्वादिति भावः। प्रतिबन्द्यभिप्रायेणाऽऽह—यथाग्निहोत्रेति। पूर्वपक्षबीजमनुभाषते—यत्तूक्तमिति। आत्मनः कार्यकरणव्यतिरिक्तत्वे सत्यपि यथा तन्न प्रतीयते तथा सदात्मत्वमपि शास्त्रोपदेशमन्तरा न प्रतीयत इति कैमुतिकन्यायेन दूषयति—नासाविति। स्वभावत इति—शास्त्रोपदेशमन्तरेणेत्यर्थः। किम्विति। न दृश्यत इति किम् वक्तव्यमित्यध्याहारेण वाक्यान्वयः।

कार्यकरणसङ्घातव्यतिरिक्तज्ञानं नास्तीत्यत्र किं प्रमाणमित्याशङ्क्य व्यतिरिक्तज्ञाने सति गच्छामि तिष्ठामि स्थूलोऽहमित्यादिदेहधर्मसामानाधिकरण्येन ज्ञानं न स्यादित्याह—कथमेवमिति। कर्तृत्वादीति। गच्छामीति गमनकर्तृत्वादिज्ञानमित्यर्थः, आदिशब्दात्स्थूलोऽहमित्यादिसङ्ग्रहः। तस्य देहादिषु आत्मबुद्धिमत्त्वाद्व्यतिरिक्तज्ञानं नास्तीत्याशङ्क्य सदात्मविज्ञानमपि तत एव नास्तीत्याह—तस्यापीति, आत्मबुद्धित्वादिति। आत्मेति बुद्धिः यस्य सः तस्य भावः तत्त्वं तस्मादित्यर्थः। प्राणिनां विज्ञानदर्शनादिति पाठे तु एवं योजना। आरोपज्ञानदशायां शुक्त्यादौ तत्त्वज्ञानादर्शनादिहापि कर्ता भोक्तेति देहधर्मसामानाधिकरण्येन आरोपदर्शनान्न सदात्मत्वज्ञानमित्याह—नासौ दोष इति। तत्र हेतुमाह—कर्तेति। इह कर्तृत्वं देहनिष्ठं गमनादिकर्तृत्वं भोक्तृत्वमपि अन्नादेः चर्वणनिगरणादिरूपं देहनिष्ठमेव विवक्षितम्, ततश्च स्वभावतः कर्तृत्वादिविज्ञानदर्शनात्सदात्मज्ञानं किमु स्यात् न स्यादित्यर्थः। तर्हि कार्यकरणसङ्घातव्यतिरिक्तज्ञानवतां कर्मानुष्ठायिनां देहधर्मकर्तृत्वादिज्ञानाभावात् सदात्मज्ञानं न स्यादित्याशङ्क्य तेषामपि ब्राह्मणो यजेतेत्यादिना देहतादात्म्येन तद्गतकर्तृत्वाद्यारोपदर्शनान्नैवमित्याह—कार्यकरणेति। कार्यकरणव्यतिरिक्तोऽहं जीव इति ज्ञानेऽपि स्वभावतः–कर्तृत्वादिज्ञानस्यापि दर्शनादित्यन्वयः।

कर्ता भोक्तेत्यपि स्वभावतः प्राणिनां विज्ञानादर्शनात्किमु तस्य सदात्मविज्ञानम्। कथमेवं व्यतिरिक्तविज्ञाने सति तेषां कर्तृत्वादिविज्ञानं सम्भवति दृश्यते च। तद्वत्तस्यापि देहादिष्वात्मबुद्धित्वान्न स्यात्सदात्मविज्ञानम्। तस्माद्विकारानृताधिकृतजीवात्मविज्ञाननिवर्तकमेवेदं वाक्यं तत्त्वमसीति सिद्धमिति ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये षष्ठाध्यायस्य षोडशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ च्छान्दोग्योपनिषद्विवरणे षष्ठोऽध्यायः

### नरेन्द्रपुरीयं टिप्पणम्

सनिदानस्य निवर्तकमेवेदं महावाक्यं, नत्वभूतप्रादुर्भावफलं शबरविवर्द्धितराजकुमारस्य निजजन्मविद्वाक्यवदित्यर्थः ॥ ३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां षष्ठाध्यायस्य षोडशः खण्डः

इति शाङ्करच्छान्दोग्यभाष्यटिप्पणे षष्ठोऽध्यायः

### आनन्दगिरिटीका

मानविगमे तद्युज्यते। न च तन्नास्त्येव दृश्यमानत्वादित्यर्थः। सिद्धे दृष्टान्ते दार्ष्टान्तिकमाह—तद्वदिति। देहाद्व्यतिरिक्तस्य सतोऽप्यप्रतिभानवत्सदात्मकस्यापि श्वेतकेतोर्देहादिष्वात्माभिमानित्वात्सदात्मनि ब्रह्मणि विज्ञानं न स्यादतस्तत्स्वभावस्यापि ब्रह्मभावस्याप्रतिभानमज्ञानकृतमित्यर्थः। वाक्यस्यार्थान्तरपरत्वासम्भवे फलितमुपसंहरति—तस्मादिति। महावाक्यस्योक्त्या विषयार्थान्तरपरत्वासम्भवाद्विकारेऽनृताभिसन्धिकृतोऽयं जीवात्मेत्येवंरूपं यन्मिथ्याज्ञानं तस्य सनिदानस्य निवर्तकमेवेदं तत्त्वमसिवाक्यं न त्वभूतप्रादुर्भावफलमित्येवं जीवब्रह्मणोरैक्यं सर्वोपनिषत्सारभूतं स्थितमित्यर्थः॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां षष्ठाध्यायस्य षोडशः खण्डः

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां श्रीशङ्करभगवत्कृतच्छान्दोग्यभाष्यटीकायां षष्ठोऽध्यायः समाप्तः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

कथमेकत्र ज्ञानद्वयं स्यात् विरोधादिति शङ्कते—कथमिति। तेषां-प्राणिनामित्यर्थः। परोक्षव्यतिरेकज्ञानस्यापरोक्षभ्रमानिवर्तकत्वान्न विरोध इति परिहरति—दृश्यत इति। तथा च देहादिव्यतिरिक्तात्मवादिनो यथा देहादिषु आत्मबुद्धिरेव जायते, कर्ता भोक्तेति न देहव्यतिरिक्तज्ञानं स्वभावतो जायते तद्वत्सदात्मवादिनोऽपि देहादिषु आत्मबुद्धिरेव स्यात् न सदात्मज्ञानमित्याह तद्वत्तस्यापि देहादिषु आत्मबुद्धिर्न स्यात्सदात्मविज्ञानमिति बुद्धिरित्यनन्तरं स्यादित्यन्वयः। परमप्रकृतमुपसंहरति—तस्मादिति। विकारोऽनृतं च यत्कर्तृत्वं भोक्तृत्वं च तयोरधिकृतो यो जीवात्मा तस्य अधिकृतत्वज्ञानं तस्य निवर्तकमेवेत्यर्थः ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां षष्ठाध्यायस्य षोडशः खण्डः

श्रीशङ्करभगवत्कृतच्छान्दोग्यभाष्यटीकायां षष्ठोऽध्यायः समाप्तः

# अथ सप्तमोऽध्यायः

ॐ अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तँ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति स होवाच ॥ १ ॥

परमार्थतत्त्वोपदेशप्रधानपरः षष्ठोऽध्यायः सदात्मैकत्वनिर्णयपरतयैवोपयुक्तः। न सतोऽर्वाग्विकारलक्षणानि तत्त्वानि निर्दिष्टानीत्यतस्तानि नामादीनि प्राणान्तानि क्रमेण निर्दिश्य तद्द्वारेणापि भूमाख्यं निरतिशयं तत्त्वं

नरेन्द्रपुरीयं टिप्पणम्

नामादिभ्यः परो भूमा सर्वात्माऽकारकोऽद्वयः।
स्वात्मस्थः प्रत्यगानन्दोऽनक्षग्राह्यो ग्रहक्षमः॥

उत्तमाधिकारिणं प्रति साक्षादात्मतत्वं षष्ठे निर्दिष्टं मध्याधिकारिणं प्रति परम्परया ब्रह्मात्मत्वमुपदेष्टुं सप्तमारम्भ इत्याह—**परमार्थेति**। अद्वितीयब्रह्मविषयत्वाविशेषात् षष्ठसप्तमयोः पौनरुक्त्यमाशङ्क्य साक्षात्पारम्पर्याभ्यां परिहृतमित्येकः प्रकारः। अथवा यदेकविज्ञानेन सर्वविज्ञानमुक्तं तदसत् नामादीनामुत्तरोत्तरभूयस्त्वविशिष्टानां सन्मात्रज्ञानेऽनवगमादित्याशङ्क्य—**ब्रह्मविदस्सर्वज्ञत्वं** स्फुटीकर्तुमारम्भ इत्याह—**अनिर्दिष्टेष्विति**। अधमाधिकारो नामादीनि ब्रह्मत्वेनोपास्य तत्फलं च भुक्त्वा क्रमेण साक्षाद्ब्रह्मात्मभावं प्रतिपद्यत इति प्रदर्शनार्थो वा आरम्भ

आनन्दगिरिटीका

षष्ठसप्तमयोरध्याययोः संबन्धं वक्तुकामः षष्ठे वृत्तं कीर्तयति—**परमार्थेति**। उत्तमाधिकारिणं प्रत्यबाधिततत्त्वबोधनं प्रधानं तत्परोऽतीतोऽध्यायः स सतो ब्रह्मणः प्रत्यङ्निश्चयपरत्वेनैव व्याख्यात इत्यर्थः। अध्यायान्तरभूमिकामारचयति—**न सत इति**। मध्यममधिकारिणं प्रति परम्परया ब्रह्मात्मत्वमुपदेष्टुं सप्तमप्रपाठकप्रवृत्तिरित्यर्थः। नन्वत्रापि ब्रह्मात्मत्वमेवोपदेष्टुमिष्टं चेत्किमिति तर्हि नामादीनि तत्त्वानि निर्दिश्यन्ते तत्राऽऽह—**अनिर्दिष्टेष्विति**। वाशब्दः शङ्कानिरासार्थः। यद्वा द्वयोरध्याययोरद्वितीयब्रह्मात्मविषयत्वाविशेषेऽपि साक्षात्पारम्पर्याभ्यामपौनरुक्त्यमुक्तं संप्रति नामादीनामुत्तरोत्तरभूयस्त्वविशिष्टानां सन्मात्रविज्ञानेनाविज्ञानादेकविज्ञानेन सर्वविज्ञानमयुक्तमित्या-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पूर्वत्र षष्ठाध्याये आचार्यवान्वेद, अथ संपत्स्ये इति आचार्योपदिष्टवाक्यजन्यज्ञानात्सत्संपत्तिरुक्ता। न च सदात्मनः सुखरूपत्वं विना तस्याः पुरुषार्थत्वमिति, तदर्थं सदात्मनः सुखरूपत्वं वक्तुं सप्तमाध्यायः आरब्धः। तच्च वक्ष्यति "सुखं त्वेव विजिज्ञासितव्यम्" "यो वै भूमा तत्सुखं"इति। किंच आत्मनः सुखरूपत्वेऽपि अज्ञानप्रतिबन्धे न तस्य पुरुषार्थत्वमिति,तन्निवृत्तिरपि वक्तव्या,तदर्थं च,तदपि वक्ष्यति"तरति शोकमात्मवित्" "तमसः पारं दर्शयति" इति, किञ्च आचार्यवत्त्वं च आचार्योपसदनानन्तरमिति, तदुपसदनप्रकारोऽपि वक्तव्यः, तदप्यत्र दृश्यते "अधीहि भगव इति होपससादे"ति। ततो ज्ञानप्राप्तौ श्रवणादिसाधनान्यपि वक्तव्यानि, तान्यपि अत्र दृश्यन्ते "सत्यन्त्वेव विजिज्ञासितव्यमि"त्यारभ्य "मतिस्त्वेव विजिज्ञासितव्येत्यादि" तदेतत्सर्वं वक्तुं सप्तमाध्यायारम्भः कृतः।

तत्र नामादिप्राणान्ततत्त्वोपदेशस्य प्रयोजनमाह—**परमात्मेति**। अयमर्थः-षष्ठे प्रपाठके तत्पदार्थशोधनपूर्वकं तस्य प्रत्यग्रूपत्वमुक्तम् 'स आत्मा तत्त्वमसी'ति। न च त्वंपदार्थशोधनाभावे तस्य सतः "प्रत्यग्रूपत्वं ज्ञातुं शक्यम्" कर्तृत्वादिमतस्तस्य तद्विपरीतसदात्मत्वानुपपत्तेः अतो नामादिभ्यः प्राणान्तेभ्यः उत्तरोत्तरभूयस्त्वेन विद्यमानेभ्यः प्रत्यगात्मा विविक्तः प्रदर्शनीय इति तदर्थं तेषां निर्देश इति। परमात्मतत्वोपदेशप्रधान इति, नतु प्रत्यगात्मतत्वोपदेशपर इत्यर्थः। एवकारव्यावर्त्यमाह—**न सत इति**। चितः प्रत्यगात्मनो विकारः कर्तृत्वादिः यैस्तानि चिद्विकाराणि प्रत्यगात्मोपाधयः अत एव तल्लक्षकाणीत्यर्थः तानि न निर्दिष्टानीति, तद्द्वारा तद्विवेकेन आत्मा न निर्दिष्ट इत्यर्थः। **तद्द्वारेणापीति** पूर्वं ब्रह्मोपाधिभूततेजोबन्नादिद्वारा सदद्वितीयं निर्दिष्टं; इदानीन्तु प्रत्यगुपाधिभूतनामादिद्वारा

निर्देक्ष्यामीति शाखाचन्द्रदर्शनवदितीमं सप्तमं प्रपाठकमारभते । अनिर्दिष्टेषु हि सतोऽव्यक्तत्वेषु सन्मात्रे च निर्दिष्टेऽन्यदप्यविज्ञातं स्यादित्याशङ्का कस्यचित्स्यात्सा मा भूदिति वा तानि निर्दिदिक्षति । अथवा सोपानारोहण-वत्स्थूलादारभ्य सूक्ष्मं सूक्ष्मतरं च बुद्धिविषयं ज्ञापयित्वा तदतिरिक्ते स्वाराज्येऽभिषेक्ष्यामीति नामादीनि निर्दिदिक्षति । अथवा नामाद्युत्तरोत्तरविशिष्टानि तत्त्वान्यतितरां च तेषामुत्कृष्टतमं भूमाख्यं तत्त्वमिति तत्स्तुत्यर्थं नामादीनां क्रमेणोपन्यासः । आख्यायिका तु परविद्यास्तुत्यर्था । कथम् । नारदो देवर्षिः कृतकर्तव्यः सर्वविद्योऽपि सन्ननात्मज्ञत्वाच्छुशोचैव किमु वक्तव्यमन्योऽल्पविज्जन्तुरकृतपुण्यातिशयोऽकृतार्थ इति । अथवा नान्यदात्म-

नरेन्द्रपुरीयं टिप्पणम्

इत्याह—अथवा सोपानेति । शाखाचन्द्रनिदर्शनवत् बुद्धिस्थिरीकारार्थं उपासनविध्यर्थो वा, न नामाद्युपदेशः किन्तु स्तुत्यर्थं इत्युक्तमाधिकारिविषयत्वं पुनराह—अथवा नामादीति । षष्ठाध्यायोपदिष्टसदात्मकत्वविज्ञानादन्यस्य देवतोपास्त्यादेर्मोक्षसाधनत्वनिषेधाय वा सदात्मत्वविज्ञानस्य मोक्षसाधनत्वविधानाय चारम्भ इत्याह—अथवा नारद इत्यादिना। सर्वथापि न ब्रह्मज्ञानान्तरमिह विधित्सितं प्रतिपादनप्रकारभेदादधिकारिभेदाद्वाऽध्यायभेद इति द्रष्टव्यम्।

आनन्दगिरिटीका

शङ्क्य ब्रह्मविदः सर्वज्ञत्वं स्पष्टीकर्तुमुत्तरग्रन्थारम्भ इत्याह—अनिर्दिष्टेष्विति । नामादिसंकीर्तनस्य तात्पर्यान्तर-माह—अथवेति । अधमोऽधिकारी नामादीनि ब्रह्मत्वेनोपास्य तत्फलं च भुक्त्वा क्रमेण साक्षाद्ब्रह्मभावं प्राप्नोतीति प्रदर्शयितुमुत्तरो ग्रन्थ इत्यर्थः । शाखाचन्द्रनिदर्शनन्यायेन मध्यमस्याधिकारिणो ब्रह्मसिद्धिस्वीकारार्थं मध्यमस्याधि-कारिणो ध्यानार्थं वा नामादिसंकीर्तनमित्युक्तम् । इदानीमुत्तममेवाधिकारिणमधिकृत्य भूमस्तुत्यर्थं नामादिवचनमिति मतान्तरमाह—अथवा नामादीति । अध्यायसंबन्धमुक्त्वाऽऽख्यायिकासंबन्धमाह—आख्यायिका त्विति। स्तुत्यर्थत्वमेव प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना । तथा च परविद्यया कृतार्थत्वात्तस्याः स्तुतिरत्र विवक्षितेति शेषः । अतीताध्यायादिष्टसदात्मविज्ञानादन्यदेव देवतोपासनं मोक्षसाधनमित्याशङ्क्य तन्निषेधेन सदात्मविज्ञानस्यैव मोक्ष-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

आत्मा निर्दिश्यते, ततश्च तत्र तत्पदार्थः त्वंपदार्थपर्यन्तं शोधितः, इहतु त्वंपदार्थः तत्पदार्थपर्यन्तं शोध्यत इति भावः । शाखाचन्द्रदर्शनवन्निर्देक्ष्यामीत्यन्वयः । अनिर्दिष्टेषु हीति ।

यद्यपि सर्वस्यापि ब्रह्मविकारत्वं प्रतीचो ब्रह्माभेदश्च उक्त इति यस्य कस्यचिदप्यविज्ञातत्वशङ्का न भवत्येव तथापि नामादिभ्यः प्रत्यगात्मनि पृथक्कृत्याशोधिते तस्य तदुपाधिकस्य कर्तृत्वादिविरुद्धधर्मवत्त्वेन प्रतीयमानस्य ब्रह्माभेदासंभवादकार्यत्वाच्च ब्रह्मविज्ञानेनाविज्ञातत्वशङ्का स्यादिति भावः । अन्यदिति । प्रत्यगात्मस्वरूपमित्यर्थः । अथवा मन्दानां शीघ्रं निर्विशेषब्रह्मणि बुद्धयनारोहात् नामाद्युपासनया बुद्धेरेकाग्रतायां पश्चान्निर्विशेषबुद्धयारोहार्थं [1]नामाद्युपासना आश्रित्यविधानन्यायेन उच्यन्त इत्याह—अथवेति । वाशब्दः चार्थे । अथचेति । इदं च प्रयोजन-मित्यर्थः । न त्विदं स्वतन्त्रप्रयोजनं प्रत्यगात्मशोधनस्यैव मुख्यप्रयोजनत्वादिति । बुद्धिविषयमिति—उपासनविषय-मित्यर्थः । आनुषङ्गिकमेव प्रयोजनान्तरमाह—अथवेति । नाम्नो वाव भूयोऽस्तीत्यादिना उत्तरोत्तरं भूयस्त्वमुक्त्वा यत्र नान्यत्पश्यतीत्यादिना भूयस्त्वोत्कर्षस्य तत्रैव पर्यवसानोक्तेः तस्यैव निरतिशयं भूयस्त्वमिति तदेव स्तुतमित्यर्थः। परविद्यास्तुत्यर्थेति, सनत्कुमारेण ब्रह्मपुत्रेणोपदिष्टा सर्वज्ञेन ब्रह्मपुत्रेणैव नारदेन गृहीतेति स्तुतिर्भातीत्यर्थः । आत्मज्ञानमेव श्रेयः प्राप्तिसाधनं न कर्म अपरविद्या वेत्युक्ते तत्परित्यागेनात्मविद्यायामेव प्रवृत्तिस्सिद्धयेदित्येतदर्थं तस्याः श्रेयः प्राप्तिसाधत्वज्ञापनार्थं आख्यायिका । तत्र सोऽहं भगवा मन्त्रविदेवास्मि नात्मवित्, ततःशोचामि तरति शोकमात्मविदित्युक्त्या तत्प्रतीतेरित्याह—अथवा नारदो देवर्षिरित्यादिना । सर्वा विद्या यस्येति समासः अकृतार्थ इत्यतो नान्यदात्मज्ञानादित्यपपाठः । येन सर्वविज्ञानसाधनशक्तिसंपन्नस्यापि अकृतार्थतैव अकृतार्थत्वे हेतुरन्तरेणेति । येन-अकृतार्थतैव, येन श्रेयो न बभूव, येन उत्तमाभिजनादिसंपन्निमित्ताभिमानं हित्वा सनत्कुमार-

१. दध्नेन्द्रियकामस्य जुहुयात् इत्यत्र यथा प्रकृतान्नि होत्रमाश्रित्यादधीन्द्रियोद्देशेन विधीयते तद्वत् । (पू० मी० २.२.११)

ऋग्वेदं भगवोऽध्येमि यजुर्वेद ँ् सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य ँ् राशिं दैवं निधिं वाकोवाक्यमेकायनं[1] देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या ँ् सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥ २ ॥

ज्ञानान्निरतिशयश्रेयःसाधनमस्तीत्येतत्प्रदर्शनार्थं सनत्कुमारनारदाख्यायिकाऽऽरभ्यते। येन सर्वविज्ञानसाधनशक्तिसम्पन्नस्यापि नारदस्य देवर्षेः श्रेयो न बभूव येनोत्तमाभिजनविद्यावृत्तसाधनशक्तिसम्पत्तिनिमित्ताभिमानं हित्वा प्राकृतपुरुषवत्सनत्कुमारमुपससाद श्रेयःसाधनप्राप्तयेऽतः प्रख्यापितं भवति निरतिशयप्राप्तिसाधनत्वमात्मविद्याया इति। अधीह्यधीष्व भगवा भ (वन्निति किलोपससाद। अधीहि भगव इति मन्त्रः। सनत्कुमारं योगीश्वरं ब्रह्मिष्ठं नारद उपसन्नवान्। तं न्यायत उपसन्नं होवाच यदात्मविषये किञ्चिद्वेत्थ तेन तत्प्रख्यापनेन मामुपसीदेदमहं जान इति ततोऽहं भवतो विज्ञानात्ते तुभ्यमूर्ध्वं वक्ष्यामीत्युक्तवति स होवाच नारदः ॥ १ ॥

ऋग्वेदं भगवोऽध्येमि स्मरामि यद्वेत्थेति विज्ञानस्य पृष्टत्वात्। तथा यजुर्वेदं सामवेदमाथर्वणं चतुर्थं वेदं

### नरेन्द्रपुरीयं टिप्पणम्

उत्तमाभिजन उत्तमजन्मभूर्ब्रह्मणो मानसपुत्रत्वात्, विद्या ऋग्वेदादिलक्षणा। वृत्तं सदाचारः श्रवणाध्यानादिसाधनशक्तीनां सम्पत्,धर्मसाधनस्य वा शरीरस्य शक्तिसंपत्, अव्याहतेष्टगतित्वात्। ते अभिजनादयो निमित्तं यस्याभिमानस्य तं त्यक्त्वेत्यर्थः अध्ययनेन ज्ञानं लक्ष्यते ज्ञापयेत्यर्थः ॥ १ ॥

### आनन्दगिरिटीका

साधनत्वं दृढीकर्तुमाख्यायिका प्रवृत्तेति पक्षान्तरमाह—अथवेति। द्वितीयमाख्यायिकातात्पर्यं प्रपञ्चयति—येनेत्यादिना। सर्वस्यापि ज्ञेयस्य यद्विज्ञानं तस्य साधनमुत्पादनं तत्र शक्त्या संपन्नो वेदवेदाङ्गाभिज्ञत्वेन तस्यापीति यावत्। अस्ति हि नारदस्योत्तमाभिजने जन्म। ब्रह्मणो मानसपुत्रत्वादस्ति चोत्तमकर्म विद्याऽस्ति च वृत्तं सदाचरणमस्ति च श्रवणध्यानादि साधनशक्तीनां धर्माधर्मसाधनस्य वा शरीरस्य शक्तेः संपत्तिश्च जन्मादयो निमित्तमस्याभिमानस्य तं त्यक्त्वेति यावत्। इतिशब्दोऽध्यायाख्यायिकयोः संबन्धोक्तिसमाप्त्यर्थः। अध्ययनेन ज्ञानं लक्ष्यते। तथा चाधीष्व ज्ञापयेत्यर्थः। मन्त्रः उपसदनस्येति शेषः। न्यायतः समित्पाणिरित्यादिशास्त्रोक्तविधिवशादिति यावत् ॥ १ ॥

अध्ययनवाचि पदं स्मरणपरतया कथं व्याख्यातमित्याशङ्क्याऽऽह—यद्वेत्थेति। गन्धयुक्तिः कुङ्कुमादिसंपादनम् ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मुपससाद, अतः श्रेयः प्राप्तिसाधनत्वं ख्यापितं भवतीत्यन्वयः। संपन्ननिमित्तेति पाठे संपन्नत्वनिमित्तेत्यर्थः। क्वचित्तु कोशे पाठभेदो दृश्यते, तत्र परविद्यास्तुत्यर्थेत्यनन्तरं कथमिति पृष्ट्वा नारदो देवर्षिरित्यादिना अकृतार्थ इत्यन्तेन स्तुतिप्रकारप्रदर्शनं कृत्वा, अथवा नान्यदित्यादिना आख्यायिकायाः श्रेयः प्राप्तिसाधनत्वज्ञापनार्थत्वं प्रयोजनान्तरं प्रदर्शितम्। अस्मिन्पाठे अनात्मज्ञत्वाच्छुशोच किमु वक्तव्यं अन्योऽकृतार्थ इत्युक्तचैव आत्मज्ञानस्य शोकनिवर्तकत्वात्कृतार्थताहेतुत्वाच्च स्तुतिरुक्तेति द्रष्टव्यम्।

अधीहीति परस्मैपददर्शनात् अधिपूर्वक इक्स्मरण इति धातुरुक्त इति शङ्का स्यात्तस्य च प्रकृतासङ्गतिरिति मत्वा इङ् अध्ययने इति धातुरुक्त इत्याह—अधीष्वेति। श्रुतौ अधीहीति परस्मैपदं छान्दसमित्यर्थः। तदर्थमेव मन्त्र इत्युक्तं, ततश्च अन्तर्गभितं णिजर्थं स्वीकृत्य, हे भगवन् अध्यापय ब्रह्मेति मन्त्रस्यार्थो दर्शित इति ज्ञेयम्। यद्यप्यन्यत्र अधीहि भगवो ब्रह्मेति मन्त्रे अधीहि स्मरस्मृत्वा च उपदिश इति व्याख्यातं तथापि तद्वह्वध्याहारापत्त्या क्लिष्टमिति तत्परिहाराय इहैवं व्याख्यातम्। यद्वेत्थेति प्रष्टुः कोऽभिप्राय इति चेदुच्यते तद्बुद्धिविषये ज्ञाते तस्मिन्नेव विषये ब्रह्मोपदेशे तस्य बुद्ध्यारोहो भवेत्। अन्यत्र उपदेशे तु बुद्ध्यनारोहःस्यात् ब्रह्मण इति ॥ १ ॥

अध्येमीत्यस्य पूर्ववदध्ययनार्थत्वं विहाय स्मरामीति व्याख्याने हेतुमाह—यद्वेत्थेति। चतुर्थं वेदमिति

---

१. एकायनं इत्यस्य भाष्ये नीतिशास्त्रमित्यर्थः कृतः।

**सोऽहं भगवो मन्त्रविदेवास्मि[1] नाऽऽत्मविच्छ्रुतँ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तँ होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् ॥३॥**

वेदशब्दस्य प्रकृतत्वादितिहासपुराणं पञ्चमं वेदं वेदानां भारतपञ्चमानां वेदं व्याकरणमित्यर्थः। व्याकरणेन हि पदादिविभागश ऋग्वेदादयो ज्ञायन्ते। पित्र्यं श्राद्धकल्पम्। राशिं गणितम्। दैवमुत्पातज्ञानम्। निधिं महाकालादिनिधिशास्त्रम्। वाकोवाक्यं तर्कशास्त्रम्। एकायनं नीतिशास्त्रम्। देवविद्यां निरुक्तम्। ब्रह्मण ऋग्यजुःसामाख्यस्य विद्यां ब्रह्मविद्यां शिक्षाकल्पच्छन्दोविचितयः। भूतविद्यां भूततन्त्रम्। क्षत्रविद्यां धनुर्वेदम्। नक्षत्रविद्यां ज्यौतिषम्। सर्पदेवजनविद्यां सर्पविद्यां गारुडं देवजनविद्यां गन्धयुक्तिनृत्यगीतवाद्यशिल्पादिविज्ञानानि। एतत्सर्वं हे भगवोऽध्येमि ॥ २ ॥

सोऽहं भगव एतत्सर्वं जानन्नपि मन्त्रविदेवास्मि शब्दार्थमात्रविज्ञानवानेवास्मीत्यर्थः। सर्वो हि शब्दोऽभि-

नरेन्द्रपुरीयं टिप्पणम्

अध्ययनवाचिपदं स्मरणपरतया व्याख्यातं ज्ञानस्य पृष्टत्वात् इक्स्मरण इति धातुदर्शनाच्चेत्यर्थः। कल्प इति सूत्रग्रन्थ उच्यते। अनुष्ठानक्रमकल्पनात्। च्छन्दश्चितिर्गायत्र्यादिच्छन्दोनिश्चायकशास्त्रम्। गन्धयुक्तीति। कुकुमादिसम्पादनादिज्ञानम् ॥ २ ॥

मन्त्रइति वर्णमात्रमभिधेयस्य सप्रतियोगिकस्य विकारत्वाज्ज्ञानं नात्मज्ञानमित्युक्तम्। तत्रात्मशब्दाभि-

आनन्दगिरिटीका

तर्हि सर्वज्ञः स्वतन्त्रस्त्वं कृतकृत्योऽसीत्याशङ्क्याऽऽह—सोऽहमिति। कथं मन्त्रविदित्यस्य कर्मविदिति

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अथर्वणा प्रणीतस्य विद्यान्तरस्यापि सत्त्वाद्वेदशब्दस्यैव विशेष्यत्वेन अनुषङ्गे हेतुमाह—वेदशब्दस्येति। वेदाङ्गे व्याकरणे कथं वेदशब्द इत्याशङ्क्य रूढार्थस्यासंभवात्पदादिविभागेन वेदान् वेदयतीति व्युत्पत्त्या यौगिको व्याकरणे वेदशब्द इत्याह—व्याकरणेन हीति। शिक्षेति। यद्यपि व्याकरणाद्यपि ब्रह्मविद्यैव तदङ्गत्वात् तथापि व्याकरणनिरुक्तज्योतिषाणां पृथगुक्तत्वात्, शिक्षादित्रयमेव ब्रह्मविद्येत्युक्तम्। च्छन्दोविचितिः गायत्र्यादिच्छन्दः स्वरूपप्रकाशकं शास्त्रं, नक्षत्रविद्येति गणितस्यापि ज्योतिरन्तर्गतत्वेऽपि अवान्तरभेदेन पृथक्कीर्तनम्। एतत्सर्वं भगवोऽध्येमि इति। यद्यपि यदात्मविषये वेत्थेति पृष्टत्वादिदमात्मविषये जानामीति वक्तव्यम्, नतु ऋग्वेदादिकं तथाप्यात्मविषये ज्ञानाभावात्तस्य तदन्यदपि स्वेन यावन्मात्रं ज्ञातं तत्सर्वमुक्तवानिति द्रष्टव्यम् ॥ २ ॥

ननु ऋग्वेदाद्यर्थत्वादात्मनः तज्ज्ञाने आत्मापि ज्ञात एवेति तदर्थं गुरूपसदनानुपपत्तिरित्याशङ्क्याह—सोऽहं भगव इति। ऋगादिज्ञानेऽपि तदर्थात्मज्ञानाभावाद्गुरूपसर्पणं युक्तमिति भावः। ननु व्याकरणादिवेदाङ्गज्ञानवत्त्वस्य पूर्वमुक्तत्वाद्व्युत्पन्नस्य तदर्थज्ञानं च भवत्येव, किञ्च मन्त्रव्यतिरिक्तब्राह्मणादिज्ञानवत्त्वस्याप्युक्तत्वान्मन्त्रविदेवेत्येवकारानुपपत्तिरित्याशङ्क्याह—शब्दार्थेति। सर्वाण्यङ्गानि शब्दस्य वाच्यार्थज्ञानोपायाः नतु तल्लक्ष्यात्मज्ञाने तस्य न्यायान्तरापेक्षत्वादिति। तत्र हेतुमाह—सर्वो हीति। अभिधानमात्रं वाचकमात्रमित्यर्थः। ब्राह्मणमपि मन्त्र-

१. मन्त्रविदेवास्मि नात्मवित् अत्र आत्मपदेन जीवस्य पारमार्थिकं रूपं विवक्षितम्। शरीरेन्द्रियादितादात्म्यापन्नस्य नारदेन ज्ञातत्वात्। न तु परमात्मपरं आत्मशब्दस्य प्रत्यगात्मनि रूढत्वात्। अत्रात्मविविदिषोः भूमाख्यपरब्रह्मोपदेशादेव जीवब्रह्मैक्यं सूचितं भवति।

विशिष्टाद्वैतिनस्तु—आत्मपदस्य परमात्मनि रूढिरित्याहुः। वस्तुतस्तु यच्चाप्नोतीत्यादेः जीवे समन्वयात् जीवपरत्वं युक्तं भाष्यकारैश्च बहुवारमुक्तम्। "तस्माद्वा एतस्मादात्मन आकाशः सम्भूत"। इत्यत्र तच्छब्देन ब्रह्म परामृश्य तदभेदबोधनात् जीवे। आत्मनि चैवंविचित्राश्च हि इति च सूत्रम्। "आत्मा वा इदमेक एवाग्र आसीदि"त्यत्र तु प्राधान्येन परमात्मपरं जीवाभेदात्। सृष्टिश्रुतेश्च।

धानमात्रमभिधानं च सर्वं मन्त्रेष्वन्तर्भवति। मन्त्रविदेवास्मि मन्त्रवित्कर्मविदित्यर्थः। 'मन्त्रेषु कर्माणी'ति हि वक्ष्यति नाऽऽत्मविन्नाऽऽत्मानं वेद्मि। नन्वात्माऽपि मन्त्रैः प्रकाश्यत एवेति कथं मन्त्रविच्चेन्नाऽऽत्मवित्। न। अभिधानाभिधेयभेदस्य विकारत्वात्। न च विकार आत्मेष्यते। नन्वात्माऽप्यात्मशब्देनाभिधीयते। न "यतो वाचो निवर्तन्ते"। 'यत्र नान्यत्पश्यति" इत्यादिश्रुतेः। कथं तर्ह्यात्मैवाधस्तात्"स आत्मे'त्यादिशब्दा आत्मानं प्रत्याययन्ति। नैष दोषः। देहवति प्रत्यगात्मनि भेदविषये प्रयुज्यमानः शब्दो देहादीनामात्मत्वे प्रत्याख्यायमाने यत्परिशिष्टं सदवाच्यमपि प्रत्याययति। यथा सराजिकायां दृश्यमानायां सेनायां छत्रध्वजपताकादिव्यवहितेऽदृश्यमानेऽपि राजन्येष राजा दृश्यत इति भवति शब्दप्रयोगस्तत्र कोऽसौ राजेति राजविशेषनिरूपणायां दृश्यमानेतरप्रत्याख्यानेऽन्यस्मिन्नदृश्यमानेऽपि राजनि राजप्रतीतिर्भवेत्तद्वत्। तस्मात्सोहं मन्त्रवित्कर्मविदेवास्मि कर्मकार्यं च सर्वं विकार इति

नरेन्द्रपुरीयं टिप्पणम्

धेयत्वं शङ्कित्वा परिहरति—नन्वात्मापीत्यादिना। अनात्मशबले चेतने गृहीतशक्तिकश्शब्दो लक्षणया निरुपाधिके ज्ञानहेतुरिति श्रौतनिर्देशस्य तात्पर्यमाह—नैष दोष इत्यादिना। शब्दार्थज्ञानमात्रेणात्मवित्त्वं न भवतीत्यनेनाचार्यो-

आनन्दगिरिटीका

व्याख्यानमित्याशङ्क्याऽऽह—मन्त्रेष्विति। मन्त्रविदेव नाऽऽत्मविदित्यत्र विरोधं चोदयति—नन्विति। मन्त्रवित्त्वे तत्प्रकाश्यात्मवित्त्वमपि स्यात्तदभावे मन्त्रवित्त्वमपि न युक्तमित्यर्थः। अभिधानमभिधेयमित्येवं रूपस्य भेदस्य विकारत्वेन मिथ्यात्वादात्मनश्च विकारत्वानङ्गीकारान्मन्त्रप्रकाश्यत्वाभावान्न विरोध इति परिहरति—नाभिधानेति। आत्मनो विकारत्वाभावेऽप्यभिधेयत्वमेष्टव्यमिति शङ्कते—नन्विति। श्रुत्यन्तरावष्टम्भेन निराचष्टे—नेत्यादिना। आत्मशब्देनाऽऽत्मनोऽभिधेयत्वाभावे वाक्यशेषादिविरोधः स्यादित्याशङ्कते—कथं तर्हीति। आत्मशब्देनावाच्यस्याऽऽत्मनस्तेन लक्षणया प्रतिपत्तिसंभवान्नोपक्रमोपसंहारविरोधोऽस्तीत्युत्तरमाह—नैष दोष इति। विशिष्टे गृहीतशब्दो विशेषणे प्रत्युक्ते यत्सन्मात्रं परिशिष्टं तदवाच्यमपि लक्षणया बोधयतीत्यर्थः। केवलात्मविषयस्याऽऽत्मशब्दस्य तद्दर्शनमन्तरेण विशिष्टात्मदृष्टिमात्रेण कथं प्रयोगः कथं वा तत्प्रयोगेऽपि ततो विवक्षितात्मधीरित्याशङ्क्य दृष्टान्तेन परिहरति—यथेत्यादिना। आत्मनो मुख्यवृत्त्या मन्त्रप्रकाश्यत्वाभावे फलितमाह—तस्मादिति। शब्दार्थज्ञान-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पदेन गृहीतमिति भावः। मन्त्रशब्देन शब्दमात्रलक्षणायां सर्वशब्दानां मन्त्रान्तर्गतत्वं सम्बन्धमाह—अभिधानं चेति। ऋगादिभिस्सर्वैः कर्ममात्रमेव प्रतिपाद्यमिति मया ज्ञातं नात्मेत्यर्थान्तरमाह—मन्त्रविदिति। केषुचित्कोशेषु शब्दार्थमात्रविज्ञानवानित्यादि वाक्यं नास्ति, मन्त्रैः प्राधान्येन कर्मणः प्रतिपाद्यत्वस्य वक्ष्यमाणत्वान्मन्त्रशब्देन कर्मग्रहणमित्याह—मन्त्रेष्विति। दिव्यो ह्यमूर्तः पुरुष इत्यादिमन्त्रैरात्मनोऽपि प्रकाश्यत्वान्मन्त्रविद आत्मवित्त्वाभावो व्याहत इति चोदयति—नन्विति। शब्दार्थमात्रविज्ञानवानित्यादिवाक्यपाठे तमेवार्थमाक्षेपसमाधानाभ्यां स्पष्टीकर्तुं शङ्कते—नन्विति। मन्त्रैरभिधेयत्वेन आत्मनो ज्ञानादभिधेयत्वस्य विकारत्वात्सोपाधिकात्मविज्ञानेऽपि मुख्यात्मज्ञानाभावान्न व्याहतिरित्याह—नेति। ननु आत्मशब्देन मुख्यात्मैव अभिधीयत इत्यङ्गीकर्तव्यं, अन्यथा आत्मप्रतीतिरेव न स्यात्, तद्बोधकाभावात्। तथा च अभिधेयत्वविशिष्टस्य अनात्मत्वमयुक्तमिति शङ्कते—नन्वात्मेति। अभिधेयत्वधर्मविशिष्टस्य आत्मत्वाभिधानं श्रुतिविरुद्धमिति। तदाह—न, यतो वाच इति। अत्र वाच्ये प्राप्तिर्वाच्यत्वेन संबन्धः। तदभावाद्वाचो निवर्तन्त इत्युक्त्या तस्य अभिधेयत्वं निषिद्धमित्यर्थः। यत्र नान्यदिति श्रुत्युदाहरणपाठे श्रुत्या द्वितीयमात्रप्रतिषेधादभिधेयत्वमपि प्रतिषिद्धमिति भावः। तर्हि मुख्य आत्मनि बोधकाभावात्तत्सिद्धिर्न स्यादित्युक्तं शङ्कते—कथं तर्हीति। सोपाधिके आत्मनि गृहीतसङ्केतैरात्मादिपदैर्लक्षणया मुख्यात्मबोधसम्भवात् आत्मैवाधस्तादित्यादेरात्मप्रत्यायकत्वं भवतीत्याह—नैष इति। देहवति देहोपाधिके। अत एव भेदविषये भिद्यमाने अभिधेयत्वधर्मवति विषये आत्मनीत्यर्थः। आत्मत्वे प्रत्याख्यायमान इति। आत्मैवाधस्तादित्यादिना आत्मशब्दार्थस्य व्यापकत्वं ब्रुवाणा श्रुतिः देहस्य परिच्छिन्नस्य तत्त्वानुपपत्त्या आत्मत्वं प्रत्याख्यान्ती परिशिष्टस्य सदात्मनः आत्मत्वं लक्षणया बोधयतीत्यर्थः। अत्र अनुरूपं दृष्टान्तमाह—यथा सराजिकायामिति। दृश्यमाना ये राज्ञ इतरे तत्प्रत्याख्यान इत्यर्थः। अदृश्यमान इति। पूर्वं विशेषतोऽदृश्यमान इत्यर्थः। तद्वदिति। तत्र नैष राजेति मुखतः

विकारज्ञ एवास्मि नाऽऽत्मविन्नाऽऽत्मप्रकृतिस्वरूपज्ञ इत्यर्थः। अत एवोक्त'माचार्यवान्पुरुषो वेदे'ति। "यतो वाचो निवर्तन्ते" इत्यादिश्रुतिभ्यश्च। श्रुतमागमज्ञानमस्त्येव हि यस्मान्मे मम भगवद्दृशेभ्यो युष्मत्सदृशेभ्यस्तरत्यतिक्रामति शोकं मनस्तापमकृतार्थबुद्धितामात्मविदित्यतः। सोऽहमनात्मवित्त्वाद्धे भगवः शोचाम्यकृतार्थबुद्ध्या सन्तप्ये सर्वदा तं मा मां शोकस्य शोकसागरस्य पारमन्तं भगवांस्तारयत्वात्मज्ञानोडुपेन कृतार्थबुद्धिमापादयत्वभयं गमयत्वित्यर्थः। तमेवमुक्तवन्तं होवाच यद्वै किञ्चैतदध्यगीष्ठा अधीतवानसि। अध्ययनेन तदर्थज्ञानमुपलक्ष्यते ज्ञातवानसीत्येतन्नामैवैतत्। "वाचाऽऽरम्भणं विकारो नामधेयम्" इति श्रुतेः॥ ३॥

नरेन्द्रपुरीयं टिप्पणम्

पदेशजनितातिशयवत एवात्मवित्त्वं सूचितम्। तत्र श्रुतिसम्वादमाह—अत एवोक्तमिति। उडुपेन प्लवेन॥ ३-५॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य प्रथमः खण्डः

आनन्दगिरिटीका

मात्रेणाऽऽत्मवित्त्वं न भवतीत्यनेनाऽऽचार्योपदेशजनितज्ञानवत एवाऽऽत्मवित्त्वमित्युक्तं तत्र प्रमाणमाह—अत एवेति। औपदेशिकज्ञानविषयत्वं तर्हि स्वीकृतमित्याशङ्क्याऽऽह—यत इति। मा तर्हि तवाऽऽत्मविद्या भूदित्याशङ्क्य शोकनिवृत्त्युपायत्वेन तदपेक्षां सूचयति—श्रुतमिति। आत्मज्ञानोडुपेनाऽऽत्मज्ञानाख्येन प्लवेनेति यावत्। कथं मदीयमर्थज्ञानं सर्वं नाममात्रमित्याशङ्क्याऽऽह—वाचाऽऽरम्भणमिति॥ ३॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रत्याख्यानं, इदन्तु व्यापकतोक्त्या अर्थादिति विशेषः। उपसंहरति—तस्मादिति। ननु कर्मभ्यो मोक्षसंभवात्तत एव शोकनिवृत्तिस्स्यादिति, अनात्मविच्छोचामीत्ययुक्तमित्याशङ्क्याह—कर्मकार्यं चेति। कर्मणां कार्यं, साध्यं फलं विकार इति मया ज्ञातं सर्वं विकार एव। अविकार आत्मा तु तत्त्वतो न ज्ञातः, विकारस्य च विनाशित्वेन तस्य शोकहेतुत्वेन न तन्निवर्तकत्वमित्यर्थः। आचार्योपदर्शितन्यायैर्लक्षणयैव तत्त्वत आत्मज्ञानं न मुख्यवृत्त्येति पूर्वोक्तार्थे मानमाह—अत एवेति। यद्वा आक्षेपसमाधानाभ्यामुक्तमात्मनोऽभिधानाविषयत्वं मन्त्रविदितिपदेन आह—तस्मात्सोऽहंमन्त्रविदिति। नन्वात्मा "दिव्यो ह्यमूर्तः पुरुष" इत्यादिमन्त्रैः प्रकाश्यत इत्याशङ्क्य सत्यं प्रकाश्यते किन्तु कर्मत्वेन अभिधेयत्वेन प्रकाश्यत इत्याह—कर्मविदिति। मन्त्रैः कर्मत्वेन वेत्तीत्यर्थः। तथाप्यात्मा ज्ञात इत्याशङ्क्याह—कर्मकार्यं चेति। कर्मत्वेन कार्यं प्रकाश्यमित्यर्थः। नात्मविदिति। मुख्यात्मविन्नेत्यर्थः। तदेवाह—नात्मप्रकृतीति। प्रकृतिः स्वभावः वास्तवं रूपमित्यर्थः।

कथं तर्हि वास्तवस्वरूपं जानातीत्याशङ्क्य आचार्योपदर्शितन्यायैर्लक्षणयेति श्रुत्याऽऽह—आचार्यवानिति। मुख्यवृत्त्या तत्प्रतिपादनं नेत्यत्र श्रुतिमाह—यत इति। वाचो यतो निवर्तन्ते, स न आत्मेति अन्यनिवृत्तिमुखेन लक्षणया ज्ञेय इत्यर्थः। यद्वाचानभ्युदितमित्यादि श्रुतिरादिशब्दार्थः।

आश्चर्यवत्पश्यति कश्चिदेनं आश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्॥ इत्यादिस्मृतिश्चशब्दार्थः।

ननु आत्मवित्त्वाभावेऽपि उपायान्तरेण शोकनिवृत्तिर्भविष्यतीत्याशङ्क्योक्तं-श्रुतमिति। श्रुतौ तद्व्याचष्टे—श्रुतमिति। भगवद्दृशेभ्यस्तरति शोकमात्मविदिति आगमज्ञानं सम्प्रदायपरम्परया ज्ञानं यस्मादस्ति तस्मान्नोपायान्तरं शोकनिवृत्तौ सम्पाद्यत इति शेषः। यस्मादेवं अतः अनात्मवित्त्वाच्छोचामीति योजना। अध्यगीष्ठा नामैवैतदित्यत्र एकं नामपदं, नाम वा ऋग्वेद इत्यपरं, सर्पदेवजनविद्या नामैवैतदिति तृतीयं नामपदं वर्तत इति त्रयाणामपुनरुक्तत्वार्थमाह—अध्ययनेनेति। ततश्च प्रथमेन नामपदेन ऋग्वेदाद्यर्थस्य नामव्यतिरेकेण वस्तुतोऽभावान्मिथ्यात्वं प्रतिपाद्यते वैराग्यार्थम्। यद्वा प्रथमेन नामपदेन तदर्थस्य तद्व्यतिरेकेण अभावमात्रमुच्यते अर्थं हित्वा तस्यैवोपास्यत्वाय नामव्यतिरेकेण अर्थो नाम नास्ति, अर्थस्सर्वोऽपि नामैव, अतस्तस्मिन्नुपासीत (सोऽप्युपासीत इति) नामैवोपास्यमिति। द्वितीयेन ऋगादीनां प्रसिद्ध्या नामात्मकत्वं शब्दात्मकत्वं साध्यते, न तु मिथ्यात्वं, तथात्वे वक्ष्यमाणब्रह्मप्रतीकत्वानुपपत्तेः, मिथ्यात्वेन तत्स्वरूपस्यैव प्रविलयात्। तृतीयेन ऋगादीनां नामत्वमुक्तमुपसंह्रियते उपासनाविधानार्थमिति न पुनरुक्तिरित्यर्थः॥ ३-४॥

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति ॥ ४ ॥

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य प्रथमः खण्डः

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याँ सर्प-

नाम वा ऋग्वेदो यजुर्वेद इत्यादि नामैवैतत्। नामोपास्स्व ब्रह्मेति ब्रह्मबुद्धया। यथा प्रतिमां विष्णुबुद्धयोपास्ते तद्वत् ॥ ४ ॥

स यस्तु नाम ब्रह्मेत्युपास्ते तस्य यत्फलं भवति तच्छृणु यावन्नाम्नो गतं नाम्नो गोचरं तत्र तस्मिन्नामविषयेऽस्य यथाकामचारः कामचरणं राज्ञ इव स्वविषये भवति। यो नाम ब्रह्मेत्युपास्त इत्युपसंहारः। किमस्ति भगवो नाम्नो भूयोऽधिकतरं यद्ब्रह्मदृष्टयर्हंमन्यदित्यभिप्रायः। सनत्कुमार आह नाम्नो वाव भूयोऽस्त्येवेत्युक्त आह यद्यस्ति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य प्रथमः खण्डः

वाग्वाव। वागितीन्द्रियं जिह्वामूलादिष्वष्टसु स्थानेषु स्थितं वर्णानामभिव्यञ्जकम्। वर्णाश्च नामेति नाम्नो

नरेन्द्रपुरीयं टिप्पणम्

अष्टसु स्थानेष्विति "अष्टौ स्थानानि वर्णानामुरःकण्ठश्शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च

आनन्दगिरिटीका

उक्तमुपपादयति—नाम वा इति। तदुपसंहरति—नामैवेति। केन रूपेणेदं नामाऽऽदर्तव्यमित्याशङ्कयाऽऽह—नामेति। उपास्तिप्रकारं दृष्टान्तेन स्फुटयति—यथेति। ॥ ४ ॥

नाम्नि ब्रह्मदृष्टयोपास्यमाने किं स्यादित्याह—स यस्त्विति। यो नामेत्यादिवाक्यस्य पौनरुक्त्यमित्याशङ्कयाऽऽह—यो नामेति ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य प्रथमः खण्डः

वाग्वाव नाम्नो भूयसीत्युक्तं वाङ्नाम्नोरेकत्वाद्व्याप्यव्यापकत्वानुपपत्तिरित्याशङ्कय व्याचष्टे—वागितीन्द्रियमिति। जिह्वामूलादिष्वित्यादिशब्देनोरःकण्ठशिरोदन्तौष्ठनासिकाताल्वूनि गृह्यन्ते। वागिन्द्रियस्य वर्णेभ्योऽभि-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ब्रह्मदृष्टया नाममात्रध्यानान्न शोकनिवृत्तिः। नाम्नो विकारत्वेन तज्ज्ञानस्य आत्मज्ञानत्वाभावादतोऽन्य एवात्मा वक्तव्यः इत्यभिप्रायेण पृच्छति—किमस्तीति। ब्रह्मदृष्टयर्हमिति—ब्रह्मत्वेन ज्ञातुमर्हतीत्यर्थः। यद्यपि नारदेन आत्मैव पृष्टः तरति शोकमात्मविदिति तथापि सर्वान्तरस्य आत्मनः सहसा प्रतीतिः शिष्यस्य उत्पादयितुमशक्येति प्रथमं स्थूलं नाम बोधितवान्, तस्मिन्ननात्मत्वज्ञानेन किं भूयोऽस्तीति पृष्टे नारदेन ततोऽभ्यन्तरां वाचं आत्मत्वेन बोधयति, क्रमेण मुख्यमात्मानं बोधयामीत्यभिप्रायेणेत्याह—सनत्कुमार आहेति, नामादिभ्यः पृथग्भूतं प्रत्यगात्मानं बोधयितुमेव नामाद्युपन्यासः, उपासनाविधानन्तु मन्दानां चित्तैकाग्र्याय आश्रित्यविधानन्यायेनोच्यत इति पूर्वमेवोक्तं द्रष्टव्यम् ॥ ५ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य प्रथमः खण्डः

वाक्शब्दस्य शब्दपरत्वभ्रमं वारयति—वागिन्द्रियमिति। गोलकानामेव इन्द्रियत्वमिति मतं निराकर्तुम्

देवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाँश्च मनुष्याँश्च पशुँश्च वयाँसि च तृणवनस्पतीञ्श्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्नाभविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य द्वितीयः खण्डः

वाग्भूयसीत्युच्यते। कार्याद्धि कारणं भूयो दृष्टं लोके यथा पुत्रात्पिता तद्वत्। कथं च वाङ्नाम्नो भूयसीत्याह— वाग्वा ऋग्वेदं विज्ञापयत्ययमृग्वेद इति। तथा यजुर्वेदमित्यादि समानम्। हृदयज्ञं हृदयप्रियम्। तद्विपरीतमहृदयज्ञम्। यद्यदि वाङ्नाभविष्यद्धर्मादि न व्यज्ञापयिष्यद्वागभावेऽध्ययनाभावे तदर्थश्रवणाभावस्तच्छ्रवणाभावे धर्मादि न व्यज्ञापयिष्यन्न विज्ञातमभविष्यदित्यर्थः। तस्माद्वागेवैतच्छब्दोच्चारणेन सर्वं विज्ञापयत्यतो भूयसी वाङ्नाम्नस्तस्माद्वाचं ब्रह्मेत्युपास्स्व ॥ १ ॥

समानमन्यत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य द्वितीयः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

तालु च" इति। अन्वयव्यतिरेकाभ्यां वाचो भूयस्त्वं दिदर्शयिषुरन्वयमभिधाय व्यतिरेकमभिदधाति—यद्यदि वागित्यादिना ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य द्वितीयः खण्डः

आनन्दगिरिटीका

व्यञ्जकेभ्यो भूयस्त्वेऽपि नाम्नस्तु भूयस्त्वं कुतस्त्यमित्याशङ्क्याऽऽह—वर्णाश्चेति। तयोर्व्यङ्ग्यव्यञ्जकभावेऽपि कथं व्याप्यव्यापकत्वमित्याशङ्क्याऽऽह—कार्याद्धीति। वाचो नाम्नो भूयस्त्वं प्रश्नपूर्वकं प्रपञ्चयति—कथं चेत्यादिना। इतश्च वाचो भूयस्त्वमेष्टव्यमित्याह—यद्वदीति। अन्वयव्यतिरेकाभ्यां तस्या भूयस्त्वे सिद्धे फलितमाह—तस्मादिति। ॥ १ ॥

स यो वाचमित्याद्यन्यदित्युच्यते ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य प्रथमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तस्य स्थानमाह—जिह्वेति। तथा च जिह्वामूलादिलक्षणगोलकानां स्थानत्वमेव नेन्द्रियत्वम् मूकानां जिह्वादिसद्भावेऽपि वागिन्द्रियाभावदर्शनान्न गोलकमेवेन्द्रियमिति भावः। अष्टेति। तदुक्तम्—

अष्टौ स्थानानि वर्णानामुरः कण्ठः शिरस्तथा। जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च ॥

तत्सद्भावे प्रमाणं वदन् तस्या नाम्नोऽपि भूयस्त्वमाह—वर्णानामिति। "वागेवास्या एकमङ्गमदूदुहत्तस्यै वाचि परस्तात्प्रतिविहिता भूतामात्रानामेति कौषीतकिशाखायां वागिन्द्रियस्यैव नामरूपेणाभिव्यक्तिश्रवणाद्वागिन्द्रियं नाम्नः" सूक्ष्मं कारणमित्यर्थः। वागिन्द्रियात्तत्वान्तरत्वपक्षेऽपि वाचो भूयस्त्वं वक्तुं पृच्छति—कथं चेति। इति प्रश्ने उत्तरं श्रुतिराहेत्यर्थः। वाचः कर्मेन्द्रियत्वेन साक्षादर्थज्ञापकत्वं न संभवतीति मत्वाऽऽह—अयमृग्वेदः इति। एतच्छब्दोच्चारणद्वारा ऋगादिरूपेण विज्ञापयतीत्यर्थः। न केवलं नामाभिव्यञ्जकत्वेन तथा भूयस्त्वं किन्तु तदर्थज्ञापकत्वेनापीत्युक्तं—हृदयज्ञमिति। हृदयेन आदरेण ज्ञायत इति व्युत्पत्तेरित्यर्थः। वागिन्द्रियस्य ज्ञानेन्द्रियत्वाभावात्तदभावे कथं धर्मादिज्ञानाभाव इत्याशङ्क्याह—वागभाव इत्यादिना। वाचः कर्मेन्द्रियत्वात् कथं ज्ञानहेतुत्वमित्यत आह—शब्दोच्चारणेनेति। उपसंहरति—अत इति ॥ १-२ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य द्वितीयः खण्डः

**मनो वाव वाचो भूयो यथा वै द्वे वाऽऽमलके द्वे वा कोले द्वौ वाऽक्षौ मुष्टिरनुभवत्येवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीयेत्यथ कुरुते पुत्राँश्च पशूँश्चेच्छेयेत्यथेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति ॥ १ ॥**

मनो मनस्यनविशिष्टमन्तःकरणं वाचो भूयः। तद्धि मनस्यनव्यापारवद्वाचं वक्तव्ये प्रेरयति। तेन वाङ्मनस्यन्तर्भवति। यच्च यस्मिन्नन्तर्भवति तत्तस्य व्यापकत्वात्ततो भूयो भवति। यथा वै लोके द्वे वाऽऽमलके फले द्वे वा कोले बदरफले द्वौ वाऽक्षौ विभीतकफले मुष्टिरनुभवति मुष्टिस्ते फले व्याप्नोति मुष्टौ हि ते अन्तर्भवतः। एवं वाचं च नाम चाऽऽमलकादिवन्मनोऽनुभवति। स यदा पुरुषो यस्मिन्काले मनसाऽन्तःकरणेन मनस्यति मनस्यनं विवक्षाबुद्धिः कथं? मन्त्रानधीयीयोच्चारयेयमित्येवं विवक्षां कृत्वाऽथाधीते तथा कर्माणि कुर्वीयेति चिकीर्षाबुद्धिं कृत्वाऽथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेति प्राप्तीच्छां कृत्वा तत्प्राप्त्युपायानुष्ठानेनाथेच्छते पुत्रादीन्प्राप्नोतीत्यर्थः। तथेमं च लोकममुं चोपायेनेच्छेयेति तत्प्राप्त्युपायानुष्ठानेनाथेच्छते प्राप्नोति। मनो ह्यात्माऽऽत्मनः कर्तृत्वं भोक्तृत्वं च सति मनसि नान्यथेति मनो ह्यात्मेत्युच्यते। मनो हि लोकः सत्येव हि मनसि लोको भवति तत्प्राप्त्युपायानुष्ठानं चेति मनो हि लोको यस्मात्तस्मान्मनो हि ब्रह्म। यत एवं तस्मान्मन उपास्स्वेति ॥ १ ॥

### नरेन्द्रपुरीयं टिप्पणम्

वाचकत्वादिवदन्तःकरणस्य मनस्यनशब्दाभिधेयविवक्षाबुद्धिविशिष्टं रूपं मन इष्यते न व्यक्तिरित्याह— **मनो मनस्यनेति** ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य तृतीयः खण्डः

### आनन्दगिरिटीका

मनःशब्दस्य वृत्तिमात्रविषयत्वं व्यावर्तयति—**मन इति**। कथं तस्य वाचो भूयस्त्वं तदाह—**तद्धीति**। वाचो मनस्यन्तर्भावेऽपि कुतो मनसस्तस्या भूयस्त्वं तत्राऽऽह—**यच्चेति**। मनसो वागादेर्व्याप्तिं दृष्टान्तेन स्पष्टयति—**यथेत्यादिना**। इतश्च मनसोऽस्ति भूयस्त्वमित्याह—**यदेति**। विवक्षाबुद्धिस्तां करोतीति शेषः। इच्छेयेतीच्छां कृत्वेति शेषः। तस्याऽऽत्मत्वमुपपादयति—**आत्मन इति**। तस्य लोकत्वं साधयति—**सत्येवेति** ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य तृतीयः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

"वागेवास्या एकमङ्गमदूदुहत्" इति श्रुतौ अस्या प्रज्ञायाः अन्तःकरणस्य एकमङ्गं अंशं वाग्रूपमदूदुहत् इत्युक्त्या वाचोऽन्तःकरणकार्यत्वावगमात् कथं मनः कार्यतरमित्यत आह—**मनो मनस्यनविशिष्टमन्तःकरणमिति**। मनाविशिष्टमिति पाठस्तु आगन्तुकः मनस्यतीति श्रुतौ दर्शनात्। मनसो वाक्प्रेरकत्वादपि, ततो भूयस्त्वमित्याह—**तद्धीति**। मनस्यनं विवक्षेति वक्ष्यति। एतावतापि कथं भूयस्त्वमित्यत आह—**तेनेति**। अन्तर्भूतत्वमात्रेणापि कथं भूयस्त्वमत आह—**यच्चेति**। मनसो वाक्प्रेरकत्वं उदाहृत्य दर्शयति—**यथेति**। **विवक्षेति**। विवक्षात्मिका बुद्धिरित्यर्थः। मनस्यनशब्दस्य इच्छार्थतृजन्तान्निष्पत्तेः। इच्छाविशेषरूपा विवक्षा योग्यत्वात्तेन शब्देन गृहीतेत्यर्थः। **तथा कर्माणि कुर्वीयेति**।

यद्यपि वागपेक्षया भूयस्त्वार्थं वाग्व्यापाररूपाध्ययनहेतुत्वमात्रमिह वक्तव्यं, न तु कृत्यादिहेतुत्वमपि तथापि मनस उपास्यत्वाय सर्वव्यवहारहेतुत्वेन तत्स्तुतिः क्रियत इति द्रष्टव्यम्। पुत्रादिप्राप्तेच्छायास्तत्साधनानुष्ठानेच्छाद्वारा तल्लाभहेतुत्वं इच्छेयेत्यनेन विवक्षितमित्याह—**प्राप्तुमिच्छामीति**। अनुष्ठानेच्छा फलपर्यन्ता विवक्षितेति दर्शयितुं पुत्रादीनित्युक्तम्। एवमुत्तरत्रापि व्याख्यानं द्रष्टव्यम्। **उपायत इच्छेयेति**। उपायतः प्राप्नुयां इति प्राप्तीच्छां कृत्वेत्यर्थः। मनसः सर्वव्यापारहेतुत्वं मनस्यनरूपत्वादुक्त्वा सर्वात्मकत्वं चाह स्तुत्यर्थमेव—**मनो ह्यात्मेति**। कथं तस्य हृदयस्यात्मत्वमित्याशङ्क्य आत्मोपाधित्वादात्मत्वमुपचर्यते स्तुत्यर्थमित्याह—**आत्मन इति**। **सत्येव**। मनो-

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्तेऽस्ति भगवो मनसो भूय इति मनसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य तृतीयः खण्डः

सङ्कल्पो वाव मनसो भूयान्यदा वै सङ्कल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

स यो मन इत्यादि समानम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य तृतीयः खण्डः

संकल्पो वाव मनसो भूयान् । संकल्पोऽपि मनस्यनवदन्तःकरणवृत्तिः कर्तव्याकर्तव्यविषयविभागेन समर्थनम् । विभागेन हि समर्थिते विषये चिकीर्षाबुद्धिर्मनस्यनानन्तरं भवति । कथम् । यदा वै संकल्पयते कर्तव्यादिविषयान्विभजत इदं कर्तुं युक्तमिति, अथ मनस्यति मन्त्रानधीयीयेत्यादि। अथानन्तरं वाचमीरयति मन्त्राद्युच्चारणे। तां च वाचमु नाम्नि नामोच्चारणनिमित्तं विवक्षां कृत्वेरयति नाम्नि नामसामान्ये मन्त्राः शब्दविशेषाः सन्त एकं भवन्त्यन्तर्भवन्तीत्यर्थः। सामान्ये हि विशेषोऽन्तर्भवति । मन्त्रेषु कर्माण्येकं भवन्ति । मन्त्रप्रकाशितानि कर्माणि

नरेन्द्रपुरीयं टिप्पणम्

नामन्त्रकमस्ति कर्मेत्ययुक्तम् । ब्राह्मणविहितस्यापि कर्मण उपलम्भादित्याशङ्क्याह—यद्धि मन्त्र इति ।

आनन्दगिरिटीका

संकल्पशब्दार्थमाह—संकल्पोऽपीति । का साऽन्तःकरणवृत्तिर्या संकल्पशब्दितेत्याशङ्क्याऽऽह—कर्तव्येति । द्विविधे विषये विभागेन समर्थितेऽपि कथं यथोक्तस्य संकल्पस्य मनसो भूयस्त्वमित्याशङ्क्याऽऽह—विभागेन होति । संकल्पस्य कारणत्वान्मनसश्च कार्यत्वादतो भूयस्त्वमित्यर्थः । कार्यकारणभावं तयोराकाङ्क्षापूर्वकं व्यक्तीकरोति—कथमित्यादिना । मनसः सकाशाद्वाचोऽनन्तरभावित्वे विशेषं दर्शयति—तां चेति । नाम्नि मन्त्राणामन्तर्भावं समर्थयति—सामान्ये होति । कथं मन्त्रेष्वनुपलब्धकर्मणामन्तर्भावस्तत्राऽऽह—मन्त्रेति । कथं कर्म नामन्त्रकमस्ती-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

विकारत्वान्मनोज्ञेयत्वाद्वा लोकस्य मनोधीनत्वं, लोकप्राप्त्युपायज्ञानकर्मानुष्ठानस्य तदधीनत्वाद्वा तत्त्वमित्याह—तत्प्राप्नोति । उक्तरीत्या तस्य सर्वात्मकत्वात्सर्वात्मकब्रह्मत्वं युक्तमित्याह—मनो हि लोको यस्मादिति ॥ १-२ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य तृतीयः खण्डः

करिष्यामीत्येवमात्मकेच्छाविशेषस्य लोके सङ्कल्पत्वस्य प्रसिद्धेस्तस्य च मनस्यनाविशिष्टत्वात् तं प्रति भूयस्त्वानुपपत्तेः, प्रकृतोपयोगिसंकल्पशब्दार्थमाह—सङ्कल्पोऽपीति। अन्तःकरणवृत्तित्वाविशेषेऽपि मनस्यनादवान्तरभेदमाह—कर्तव्येति । कर्तव्याकर्तव्यरूपी यौ विषयौ तयोर्यो विभागः, तस्य समर्थनं, तद्रूपेण निश्चयस्तद्रूपा वृत्तिरित्यर्थः। विभागेन समर्थनमिति पाठे कर्तव्यादिरूपस्य विषयस्य तेनैव कर्तव्यादिरूपेण त्रिभागेन समर्थनमिति कथञ्चिद्योज्या । सम्यग्विभागेन कल्पनं निश्चयस्सङ्कल्प इति यौगिकोऽयं सङ्कल्पशब्दो न रूढ इति भावः । अस्यैवार्थस्य मनस्यनहेतुत्वादयमेवार्थो ग्राह्य इत्याह—विभागेनेति । मनस्यनं भवतीति पाठः साधुः । मनस्यनन्तरं भवतीति पाठे अनन्तरं मनसि चिकीर्षाबुद्धिर्भवतीत्यन्वयः । उक्तमनस्यनहेतुत्वेन ततो भूयस्त्वं श्रुत्या दर्शयितुं पृच्छति—कथमिति । कथं संकल्पस्य मनस्यनसकाशाद्भूयस्त्वमित्यर्थः । उत्तरमाह—यदेति । मनस्यनानन्तरं वाचस्सामान्येन प्रेरणं भवतीत्याह—अथानन्तरमिति । सामान्यप्रेरणानन्तरं इदं नाम उच्चारयितव्यमित्येवं विवक्षापूर्वकं विशेषप्रेरणं भवतीत्याह—तामिति । उशब्दः प्रसिद्ध्यर्थको निपातः । मन्त्राणामपि नामत्वान्नाम्नि मन्त्रा इत्याधाराधेयभावानुपपत्तिरित्याशङ्क्याह—नामसामान्य इति । सामान्ये मन्त्राणामन्तर्भावे मन्त्राणां विशेषात्मकत्वं हेतुमाह—शब्दविशेषास्सन्त इति। हेतुर्गर्भितमिदं विशेषणम्। ननु मन्त्रकर्मणोस्सामान्यविशेषात्मकत्वाभावात्कथं मन्त्रेषु कर्मणामन्तर्भाव इत्याशङ्क्य मन्त्रप्रकाशितानामेव कर्मणामनुष्ठानात्तदन्तर्भावोक्तिरित्याह—मन्त्रेति । मन्त्रेण

**क्रियन्ते नामन्त्रकमस्ति कर्म । यद्धि मन्त्रप्रकाशनेन लब्धसत्ताकं सत्कर्म ब्राह्मणेनेदं कर्तव्यमस्मै फलायेति विधीयते । याऽप्युत्पत्तिर्ब्राह्मणेषु कर्मणां दृश्यते साऽपि मन्त्रेषु लब्धसत्ताकानामेव कर्मणां स्पष्टीकरणम् । न हि मन्त्राप्रकाशितं**

आनन्दगिरिटीका

त्युच्यते ब्राह्मणविहितस्यापि कर्मणो दर्शनादित्याशङ्क्याऽऽह—**यद्धीति** । ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वादतिस्पष्टमन्त्रानुपलम्भेऽपि कल्प्यते मन्त्रोक्तत्वमित्यर्थः । एतदेव प्रपञ्चयति—**याऽपीत्यादिना** । एकस्यां शाखायां यत्कर्म

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रकाशितस्य कर्मणः स्वरूपलाभादपि तस्य तत्रान्तर्भाव इत्याह—**नामन्त्रकमिति** । ननु ब्राह्मणेषु कर्मविधानं दृश्यते—अग्निहोत्रं जुहुयात् स्वर्गकाम इत्यादिषु, तत्कथं मन्त्रप्रकाशितं कर्म, अन्यथा ब्राह्मणवैयर्थ्यादित्याशङ्क्याऽऽह—**यद्धीति** । सत्यं ब्राह्मणेषु कर्मविधानं दृश्यते तथापि तद्विनियोगाधिकारविधानमेव; उत्पत्तिविधिस्तु मन्त्रेष्वेव । अनेन साधनेन अनेन कर्त्रा अस्मै फलाय इदं कर्तव्यमिति विनियोगादेरेव तत्र प्रतीतेः । उत्पत्तेः मन्त्रतो लाभसम्भवे तत्रापि तस्य तात्पर्यकल्पने गौरवापत्तेः, मन्त्रेषु च कर्मस्वरूपस्य अग्नये जुष्टं निर्वपामि प्रोक्षामीत्यादिषु प्रतीतेश्च तेषां तत्प्रकाशकत्वस्य अवश्यं वक्तव्यत्वात् । अन्यथा तेषां प्रामाण्यमेव न स्यात् । प्रमेयाभावात् । न च प्रयाजादोतिकर्तव्यताकेन मन्त्रप्रकाशितेन कर्मणा इदं फलं भावयेदित्येवंरूपेण प्रयोगविध्युन्नयनात् तत्र च मन्त्राणां पदार्थत्वात् "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते" इत्यादिषु मन्त्रविधिषु च मन्त्राणां पदार्थत्वात्, पदस्मारितानामेव पदार्थानां वाक्यार्थप्रमाजनकत्वेन प्रामाण्याङ्गीकारात् मन्त्राणामपि प्रामाण्यं युज्यत इति वाच्यम् । तर्हि ब्राह्मणवाक्यस्यापि प्रामाण्यं न स्यात् । तस्य पदार्थत्वाभावात् । न च तस्यापि प्रमाणभूतपदार्थप्रतिपादकत्वेन तद्द्वारा प्रामाण्यमिति वाच्यम् । मन्त्रस्य स्वयमेव प्रयोगवाक्यस्य पदार्थप्रतिपादकत्वाभावेन प्रामाण्याभावप्रसङ्गात् । न च ब्राह्मणस्य वाक्यपदार्थप्रतिपादकत्वेन प्रामाण्यं मन्त्रस्य पदार्थत्वेनेति वाच्यम् । वेदस्य सर्वस्य एकरूपेण प्रामाण्यं न स्यात् । एवमपि प्रयोगविधिवाक्यार्थे विनियोगविधिवाक्यार्थे च मन्त्राणां पदार्थत्वेन प्रामाण्येऽपि मन्त्रार्थे तस्य प्रामाण्यं न स्यात् । न च मन्त्रार्थविषयस्मृतिजनकत्वेन प्रामाण्यमिति शङ्क्यम्, स्मृतेरधिगतविषयत्वेन अनधिगतार्थत्वलक्षणप्रामाण्यायोगात् । न च दैवाधिगतविषयत्वेऽपि पूर्वाधिगत्यपेक्षा नास्तीति न पूर्वानुभवापेक्षिस्मृतिवदप्रामाण्यमिति वाच्यं; कार्यैकवाक्यत्वेन प्रतीतिजनकत्वेन कार्यवाक्यार्थप्रतीत्यपेक्षित्वेन दैवादधिगतार्थत्वाभावात् । अतो मन्त्राणां कर्मस्वरूपप्रकाशकत्वेन कर्मोत्पत्तिविधिरूपत्वेनैव प्रामाण्यं वक्तव्यमिति तेषां प्रामाण्यार्थं कर्मस्वरूपप्रकाशकत्वमेष्टव्यम् । न च भावनाप्रतिपादकविधिप्रत्ययाभावेन कथं तेषां कर्मोत्पत्तिपरत्वं; यागादिस्वरूपस्यैव कर्मत्वेन भावनायास्तत्त्वाभावात् "देवांश्च याभिर्यजते ददाति च"त्यादौ लेट्परिग्रहेण विधिप्रत्ययस्य सद्भावाच्च; यत्र तदपि नास्ति तत्र तत्कल्पनोपपत्तेश्च; आग्नेयोऽष्टाकपाल इत्यादाविवेति न किञ्चिदनुपपन्नम् । ननु अग्निहोत्रं जुहोतीत्यादौ विनियोगाद्यप्रतीतेः उत्पत्तिविधित्वमङ्गीकर्तव्यं ब्राह्मणस्येत्यत आह—**यो होति** ।, तथापि होमेन किंचिद्भावयेदिति सामान्येन फलसाधनत्वप्रतिपत्तेः तस्यापि नोत्पत्तिमात्रत्वमित्यर्थः । **स्पष्टीकरणमिति** । अग्निर्ज्योतिरित्यादिस्वाहान्तमन्त्रावगतस्य अग्निहोत्रादिनाम्ना विशेषनिर्देश इत्यर्थः । स्यादेतत्—यदि मन्त्रतः कर्मोत्पत्तिः सर्वापि लभ्येत न तु लभ्यते, निर्वापप्रोक्षणादीनां मन्त्रतो लाभेऽपि आग्नेयादिप्रधानकर्मणां तेष्वनवगमात्, नह्यग्निर्मूर्धेत्यादिमन्त्रेषु आग्नेयादियागस्वरूपप्रतिपत्तिरस्ति तत्र देवतामात्रप्रतीतेरित्याशङ्क्याऽऽह—**नहीति** ।

अयमभिप्रायः—केषुचित् देवांश्च याभिर्यजते ददाति च इत्यादिषु यजतिः श्रूयते, केषुचित्तु "इन्द्राग्नी स्तोमं जनयामि नव्यं, इन्द्राग्नी वृत्रहणा जुषेथां" इत्यादिषु हविस्संप्रदानत्वप्रतीत्या यागप्रतीतिः, आग्नेयोऽष्टाकपाल इत्यादिष्विव । क्वचिच्च केवलदेवताप्रतीत्यापि कर्मप्रतीतिः आकूतिमग्निं प्रयुजं स्वाहेत्यादिष्विव । तथा च यागदानहोमादिविशेषप्रतीतिः ब्राह्मणवाक्याद्भविष्यति । प्रकृते आग्नेयादिषु अग्निमूर्धेत्यादिना देवतामात्रश्रवणेऽपि यागप्रतीतिः, भवत्येव । अग्निरिदं हविरजुषतेत्यादिहविस्सम्बन्धप्रतीतेः । अग्नेरहं देवयज्ययेत्यादिना च यागत्वप्रतीतिः । एवं तत्र यथासंभवं कर्मप्रतीतिर्द्रष्टव्येति न मन्त्राप्रकाशितं चेति कर्मास्तीति भावः । अन्यथा सर्वत्र साक्षात् कर्मप्रतीतिर्ब्राह्मणेऽपि तुल्येति, ब्राह्मणस्यापि विधायकत्वं न स्यादिति । लोकप्रसिद्धितोऽपि मन्त्राणामेव विधायक-

**तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाऽऽकाशं च समकल्पन्तामापश्च तेजश्च तेषाँ् संक्लृप्त्यै**

कर्मं किंचिद्ब्राह्मण उत्पन्नं दृश्यते। त्रयीविहितं कर्मेति प्रसिद्धम् लोके। त्रयीशब्दश्च ऋग्यजुःसामसमाख्या। मन्त्रेषु कर्माणि कवयो यान्यपश्यन्निति चाऽऽथर्वणे। तस्माद्युक्तं मन्त्रेषु कर्माण्येकं भवन्तीति॥ १॥

तानि ह वा एतानि मनआदीनि संकल्पैकायनानि संकल्प एकोऽयनं गमनं प्रलयो येषां तानि संकल्पैकाय-

नरेन्द्रपुरीयं टिप्पणम्

ब्राह्मणस्य मन्त्रव्याख्यानरूपत्वात् स्पष्टमन्त्रानुपलम्भेऽपि कल्प्यते मन्त्रोक्तत्वमित्यर्थः। एकस्यां शाखायां यन्मन्त्रेष्वनुपलभ्यमानं कर्म तच्छाखान्तरीयमन्त्रप्रकाशितं भविष्यतीत्यत्र हेत्वन्तरमाह—त्रयीति॥ १॥

संकल्पस्य स्तुत्यर्थमधिकरणत्वाभिधानम् संकल्पैकायनानीति। न केवलं संकल्पस्य कारणत्वान्महत्वं महत्सु

आनन्दगिरिटीका

मन्त्रेष्वनुपलब्धं तच्छाखान्तरीयमन्त्रप्रकाशितं भविष्यतीत्यत्र हेत्वन्तरमाह—त्रयीति। तथाऽपि कथं मन्त्रप्रकाशितत्वं तत्राऽऽह—त्रयीशब्दश्चेति। मन्त्रेषु कर्माण्यन्तर्भवन्तीत्यत्र श्रुत्यन्तरानुमतिं कथयति—मन्त्रेष्विति॥ १॥

तथाऽपि कथं संकल्पस्य भूयस्त्वमित्याशङ्क्याऽऽह—तानीति। अयनपर्यायत्वेनोक्तगमनस्य क्रियात्वं व्यावर्त-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

त्वमित्याह— त्रयीति। लोकशब्देन वृद्धव्यवहारेतिहासपुराणादिर्गृह्यते। त्रैविद्या मां सोमपाः पूतपापाः यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते, इति गीतासु त्रयीविदां यज्ञकर्तृत्वोक्त्या त्रयीविहितं कर्मेति प्रतीयते, तथा "एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" इत्यत्रापि त्रयीप्रतिपाद्यो धर्म इत्युक्तम्। एवं "यश्चिन्त्यते प्रयतपाणिभिरध्वराग्नौ त्रय्या निरुक्तविधिनेश हविर्गृहीत्वे"ति पुराणेऽपि त्रय्या निरुक्तविधिनेति त्रयीविहितत्वं कर्मण उक्तमित्यर्थः। ननु इति वेदास्त्रयस्त्रयी इति निघण्टुकारेण त्रयीशब्दस्य मन्त्रब्राह्मणसमुदायात्मकवेदवाचित्वमुक्तम्। तथा च ब्राह्मणस्य विधायकत्वेऽपि त्रयीविहितत्वप्रसिद्धिर्घटत इत्याशङ्क्याऽऽह—त्रयीशब्दश्चेति। ऋग्यजुस्सामाख्या अभिधानवाचक इत्यर्थः। अयमर्थः। 'अहे बुध्निय मन्त्रं मे गोपाये'ति मन्त्रशब्देन मन्त्रमुक्त्वा "यमृषयस्त्रैविदा विदु"रिति तत्र त्रयीशब्दं प्रयुज्य "ऋचस्सामानि यजूंषी"ति तत्र त्रय्यां ऋगादिशब्दप्रयोगात् ऋगादिशब्दानां मन्त्रवाचित्वस्य "तेषां ऋग्यत्रार्थवशेन पादव्यवस्था" "गीतिषु सामाख्या" "शेषे यजुश्शब्द" इति सूत्रैस्साधितत्वात् "मन्त्रं मे गोपाये" त्युपक्रम्य तत्र ऋगादिशब्दप्रयोगेण ऋगादिशब्दानां मन्त्रवाचित्वावगमाच्च त्रयीशब्दः मन्त्रवाची। तथा छन्दोगब्राह्मणेऽपि "अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यादी" त्युक्त्वा "स एतां त्रयीविद्यामभ्यतपत्" इति ऋगादिषु त्रयीशब्दप्रयोगात्। तैत्तिरीयेऽपि – 'आदित्यो वा एष एतन्मण्डलं तपती'त्युपक्रम्य "तदृचा मण्डलं स ऋचां लोकः स यजुषां लोक" इत्युगादिमन्त्राननुक्रम्य "सैषा त्रय्येव विद्या तपती"ति तेषु त्रयीशब्दप्रयोगात्। उच्चैर्ऋचा क्रियत इत्यादिषु तु वेदवाचित्वस्य वेदोपक्रमानुसारेण लाक्षणिकत्वादिह लक्षणायां मानाभावाच्चैवमेवावगम्यते। तथा वैदिकप्रसिद्धिविरोधे निघण्टुप्रसिद्धिर्लक्षणया नेयेति। ननु विधिमन्त्रयोरैकार्थ्यं ऐकशब्द्यादित्यधिकरणोक्तन्यायेन मन्त्रगतयजेत्यादीनां विधायकत्वासंभवान्मन्त्राणां विधायकत्वमनुपपन्नम्। तथा मन्त्राधिकरणन्यायेन अनुष्ठेयार्थस्मारकत्वादपि तदनुपपत्तिः, विधायकत्वे च ब्राह्मणवदेव कर्माङ्गत्वेन विनियोगानुपपत्तिरित्याशङ्क्याह—मन्त्रेषु कर्माणीति। अत्र मन्त्रेषु कर्माण्यपश्यन्निति श्रुत्या मन्त्राणामेव नैरपेक्ष्येण कर्मप्रकाशकत्वबोधनात् श्रुतिविरोधे न्यायस्याभासत्वाद्विनियोगादिविधित्वाभावपरत्वेन वा विधिमन्त्राधिकरणन्यायस्योपपत्तेः। विधायकानामपि मन्त्राणां वचनेन विनियोगोपपत्तेः, वचनेनैव अनुष्ठेयस्मरणापेक्षया लिङ्गादिनापि तेषामेव विनियोगसंभवात् प्रत्यक्षवचनेन मन्त्रस्यैव विनियोगदर्शनेन स्मरणापेक्षया लैङ्गिकविनियोगस्यापि दृष्टसजातीयमन्त्रविषयत्वस्य न्याय्यत्वेन ब्राह्मणस्यापि विनियोगस्स्यादित्याशङ्कायाः अप्रसक्तेः, विनियोगबलात्संयोगपृथक्त्वन्यायादङ्गत्वस्याप्युपपत्तेः। क्रमे प्रयाजादिविधिवद्विधायकस्यापि स्मारकत्वस्याप्युपपत्तेः मन्त्राधिकरणविरोधाभावाच्च मन्त्राणामेव कर्मोत्पत्तिविधित्वं निर्दुष्टमित्युसंहरति—तस्मादिति॥ १॥

न केवलं सङ्कल्पस्य कारणत्वमात्रं, अपि तु उपादानत्वमपि, अतो मनसोऽप्यान्तरं सूक्ष्मं रूपं प्रत्यगात्मन-

वर्षँ सङ्क्लपते वर्षस्य संक्लृप्त्या अन्नँ सङ्क्लपतेऽन्नस्य संक्लृप्त्यै प्राणाः सङ्क्लपन्ते प्राणानाँ संक्लृप्त्यै मन्त्राः सङ्क्लपन्ते मन्त्राणाँ संक्लृप्त्यै कर्माणि सङ्क्लपन्ते कर्मणाँ संक्लृप्त्यै लोकः सङ्क्लपते लोकस्य संक्लृप्त्यै सर्वँ सङ्क्लपते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥२॥

नानि संकल्पात्मकान्युत्पत्तौ संकल्पे प्रतिष्ठितानि स्थितौ समक्लृपतां संकल्पं कृतवत्याविव हि द्यौश्च पृथिवी च द्यावापृथिवी द्यावापृथिव्यौ निश्चले लक्ष्येते। तथा समकल्पेतां वायुश्चाऽऽकाशं चैतावपि संकल्पं कृतवन्ताविव तथा समकल्पन्तामापश्च तेजश्च स्वेन रूपेण निश्चलानि लक्ष्यन्ते। यतस्तेषां द्यावापृथिव्यादीनां संक्लृप्त्यै संकल्पनिमित्तं वर्षं संकल्पते समर्थीभवति। तथा वर्षस्य संक्लृप्त्यै संकल्पनिमित्तमन्नं संकल्पते। वृष्टेर्ह्यन्नं भवत्यन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते। अन्नमया हि प्राणा अन्नोपष्टम्भकाः। "अन्नं दाम" इति हि श्रुतिः। तेषां संक्लृप्त्यै मन्त्राः संकल्पन्ते। प्राणवान्हि मन्त्रानधीते नाबलः। मन्त्राणां हि संक्लृप्त्यै कर्माण्यग्निहोत्रादीनि संकल्पन्तेऽनुष्ठीयमानानि मन्त्रप्रकाशितानि समर्थीभवन्ति फलाय। ततो लोकः फलं संकल्पते कर्मकर्तृसमवायितया समर्थीभवतीत्यर्थः।

### नरेन्द्रपुरीयं टिप्पणम्

द्यावाभूम्यादिषु संकल्पानुवृत्तिदर्शनाच्च तन्महत्त्वमित्याह—समक्लृपतामित्यादिना। पुनः सङ्कल्पस्य कारणत्वोपचारेण महत्त्वं दर्शयितुं प्रक्रमते—तेषां द्यावापृथिव्यादीनामित्यादिना। वृष्टेर्द्युलोकादिकार्यत्वात् निमित्तत्वं द्युलोकादिसम्पन्नस्य चोपचर्यत इत्यर्थः ॥ २-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य चतुर्थः खण्डः

### आनन्दगिरिटीका

यति—प्रलय इति। इतश्च संकल्पस्याप्यस्ति महत्त्वमित्याह—समक्लृपतामिति। यतो द्यावापृथिव्यादिषु महत्स्वपि संकल्पानुवृत्तिर्दृश्यतेऽतोऽपि तस्य महत्वं गम्यते न केवलं कारणत्वादेवेत्यर्थः। इतश्च तस्य महत्त्वमेष्टव्यमित्याह—तेषामिति। वृष्टेर्द्युलोकादिकार्यत्वात्तदीयसंकल्पस्य तन्निमित्तत्वोपचारात्तस्य भूयस्त्वसिद्धिरित्यर्थः। सृष्टिवशादन्नं समर्थीभवतीत्यत्र प्रसिद्धिं प्रमाणयति—वृष्टेर्हीति। अन्नाधीनं प्राणसामर्थ्यमित्यत्र हेतुमाह—अन्नमया हीति। आपोमयः प्राण इत्युक्तत्वात्कथमन्नमयत्वमित्याशङ्क्याऽऽह—अन्नोपष्टम्भका इति। तत्र वाजसनेयकश्रुतिं प्रमाणयति—अन्नमिति। प्राणानां मन्त्राध्ययनकारणत्वं व्युत्पादयति—प्राणवानिति। ततो मन्त्रप्रकाशितकर्मवशादिति यावत्।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स्सन्निहितं सङ्कल्प इति वक्तुमाह—तानि ह वेति। उत्पत्ताविति। सङ्कल्पात्मतामपरित्यज्यैवोत्पन्नानीत्यर्थः। संकल्पस्योपास्यत्वाय स्तुतिमाह—समक्लृपतामिति। द्यावापृथिव्योरचेतनयोः कथं सङ्कल्पकर्तृत्वं गौणमित्यभिप्रेत्याह—निश्चलेति। यथा कश्चिल्लोके पुरुषः यत्किंचित्सङ्कल्प्य ततो न चलति तथा द्यावापृथिव्योरपि चलनाभावगुणयोगात्सङ्कल्पकर्तृत्वमुपचर्यत इत्यर्थः। अनन्तरं ईश्वरेण वा संक्लृप्ते इति क्वचित्पाठो दृश्यते तदा छान्दस्या प्रक्रियया कर्मार्थत्वं क्रियापदस्य द्रष्टव्यम्। सर्वथेति। ईश्वरनिष्ठस्सन् सङ्कल्पो द्यावापृथिव्यादेरपि सर्वस्य जनक इति स्तुतिः, पूर्वव्याख्याने निश्चलत्वस्य सङ्कल्पकार्यस्य द्यावापृथिव्यादिषु दर्शनात्सङ्कल्पस्तत्रापि स्थित इवेति। सर्वगतत्वेन स्तूयत इति पक्षद्वयेऽपि स्तुतिः प्रतीयत इति भावः। निश्चलानीति। वाय्वादीनां स्वव्यापारानतिक्रम एव निश्चलत्वमिति भावः निश्चलानि लक्ष्यन्ते यतः अतः समकल्पन्तामिवेति पूर्वेणान्वयः। द्यावापृथिव्यादिव्यापकत्वेन सङ्कल्पं स्तुत्वा वर्षादिजनकत्वेनापीति। तेषामिति। सङ्कल्पं निमित्तमिति, पञ्चम्यर्थे चतुर्थीत्यर्थः। ततश्च द्यावापृथिव्यादीनां पञ्चभूतानां स्वस्वव्यापारानतिक्रमरूपेण निश्चलत्वेन हेतुना वर्षः भवतीत्युक्तम्।

एवं पूर्वपूर्वस्य स्वव्यापारानतिक्रमेण उत्तरोत्तरसिद्धिरिति द्रष्टव्यम्। प्राणा इति। मन आदय इत्यर्थः। मुख्यप्राणस्य आपोमयत्वादिति। यद्वा मुख्यप्राणस्य अन्नं दाम बन्धनरज्जुरिति श्रुतेः आपोमयत्वेऽपि मुख्यप्राणस्य अन्नोपष्टम्भवत्त्वेन अन्नमयत्वमपीत्याह—अन्नोपष्टम्भका इति। प्राणवान् हीति। बलस्य प्राणधर्मत्वात्प्राणवान्बलवानित्यर्थः। मन्त्रप्रकाशितानीति। अन्यथा "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो

**स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः संकल्पाद्भूय इति सकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥३॥**

**इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य चतुर्थः खण्डः**

लोकस्य संक्लृप्त्यै सर्वं जगत्संकल्पते स्वरूपावैकल्याय। एतद्धीदं सर्वं जगद्यत्फलावसानं तत्सर्वं संकल्पमूलम्। अतो विशिष्टः स एष संकल्पः। अतः संकल्पमुपास्स्वेत्युक्त्वा फलमाह तदुपासकस्य ॥ २ ॥

स यः संकल्पं ब्रह्मेति ब्रह्मबुद्ध्योपास्ते क्लृप्तान्वै धात्राऽस्येमे लोकाः फलमिति क्लृप्तान्समर्थितान्संकल्पितान्स विद्वान्ध्रुवान्नित्यानत्यन्ताध्रुवापेक्षया ध्रुवश्च स्वयम्। लोकिनो ह्यध्रुवत्वे लोके ध्रुवक्लृप्तिव्यर्थेति ध्रुवः सन्प्रतिष्ठितानुपकरणसंपन्नानित्यर्थः। पशुपुत्रादिभिः प्रतितिष्ठतीति दर्शनात्स्वयं च प्रतिष्ठित आत्मीयोपकरणसंपन्नोऽव्यथमानानमित्रादित्रासरहितानव्यथमानश्च स्वयमभिसिध्यत्यभिप्राप्नोतीत्यर्थः। यावत्संकल्पस्य गतं संकल्पगोचरस्तत्रास्य यथाकामचारो भवति आत्मनः संकल्पस्य न तु सर्वेषां संकल्पस्येति। उत्तरफलविरोधात्। यः संकल्पं ब्रह्मेत्युपास्त इत्यादि पूर्ववत् ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य चतुर्थः खण्डः

## आनन्दगिरिटीका

कर्मफलवशाज्जगतः सर्वस्यावैकल्येऽपि कथं संकल्पस्य महत्त्वमित्याशङ्क्याऽऽह—एतद्धीति। तन्महत्त्वे फलितमाह—अत इति ॥ २ ॥

आत्मातिरिक्तानां लोकानां कथं नित्यत्वमत आह—अत्यन्तेति। लोकानामेवं ध्रुवत्वमुच्यतां किमिति लोकिनस्तदुच्यते तत्राऽऽह—लोकिनो हीति। कथमुपकरणसंपन्नेषु प्रतिष्ठितशब्दो भवतीत्याशङ्क्याऽऽह—पशुपुत्रादिभिरिति। यावत्संकल्पस्येत्यादिश्रुतेर्विषयसंकोचं दर्शयति—आत्मन इति। संकल्पस्य यावद्गोचरस्तत्रास्य कामचारो भवतीति संबन्धः। निरङ्कुशे संकल्पशब्दे का हानिरित्याशङ्क्याऽऽह—उत्तरेति। यदि संकल्पमात्रस्य गोचरे संकल्पो-

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।" इति स्मृतेः, मन्त्रवैगुण्येऽपि कर्मफलं न सिध्यति, किमु वक्तव्यं मन्त्रस्वरूपाभावे फलायासमर्थानीत्यत्रेति भावः। लोकस्य संक्लृप्तिर्नाम कर्तृसम्बन्धित्वेन कर्तुः उपभोग्यत्वमित्याह—कर्तृसमवायितयेति। जगदिति स्थावरजङ्गमप्राणिजातमित्यर्थः। तस्यैव भोगपौष्कल्येन अवैकल्यसिद्धेरिति। अतो विशिष्ट इति। यद्यपि पृथिव्यादिसंक्लृप्तिर्निश्चलत्वरूपा प्रकृतसंकल्पात् मनोवृत्तिरूपादन्येति, न तया प्रकृतसंकल्पस्य वैशिष्ट्यं सिध्यति, तथापि संकल्पशब्दसामान्यात्तस्मिन्नपि प्रकृतसंकल्पत्वमारोप्य स्तुतिः क्रियत इति भावः ॥ २ ॥

ब्रह्मबुद्ध्येति। इति शब्दशिरस्कत्वेन ब्रह्मशब्दस्य साक्षात्संकल्पब्रह्मशब्दयोः सामानाधिकरण्याभावादितिशब्दसामानाधिकरण्ये सति तदर्थब्रह्मप्रकारकत्वं संकल्पस्य सिध्यति। स च ब्रह्मप्रकारो ब्रह्मदृष्टिविषयत्वमेव अन्यस्यासंभवादिति, तद्दृष्ट्या उपासनं सिध्यतीत्यर्थः। समर्थने हेतुमाह—संकल्पितानिति। संकल्पमात्रेण समर्थितान् संपादितानित्यर्थः, उपासनाजन्यस्य फलस्य अत्यन्तनित्यत्वानुपपत्तेरापेक्षिकं तदाह—अत्यन्तेति। प्रतिष्ठितशब्दस्य कथमुपकरणसंपत्तिवाच्यत्वं, तस्य स्थितिवाचित्वादित्याशङ्क्य सिद्धं प्रयोगं दर्शयति—पशुपुत्रादिभिरिति। पश्वाद्युपकरणवति प्रतितिष्ठतीति प्रयोगो दृष्ट इत्यर्थः। आत्मीयोपकरणेति। तानि च भोगसाधनानि शरीरेन्द्रियादीनि तत्संपन्नः। अविकलेन्द्रियादिमानित्यर्थः, लोकानामुपकरणसंपत्तिस्तु भोग्यस्रक्चन्दनादिसंपत्तिरिति भेद.। उत्तरेति। वक्ष्यमाणभूयोभूयोवस्तूपासनस्य उत्तरोत्तरादिफलं वक्तव्यम्। नच तद्वक्तुं शक्यते, संकल्पमात्रग्रहणे सर्वस्य ईश्वरसंकल्पगोचरत्वेन ततोऽधिकस्याभावादुत्तरोपासनं न स्यात् स्वसंकल्पमात्रग्रहणे तु तदगोचरस्याधिकस्य उत्तरफलत्वं भवतीति उत्तरस्य फलं न विरुध्यत इति भावः।

**चित्तं वाव संकल्पाद्भूयो यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

**तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान्भवति तस्मा एवोत शुश्रूषन्ते चित्तँ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति ॥२॥**

चित्तं वाव संकल्पाद्भूयः। चित्तं चेतयितृत्वं प्राप्तकालानुरूपबोधवत्त्वमतीतानागतविषयप्रयोजननिरूपणसामर्थ्यं च तत्संकल्पादपि भूयः। कथम्। यदा वै प्राप्तं वस्त्विदमेवं प्राप्तमिति चेतयते तदा दानाय वाऽपोहाय वाऽथ संकल्पयतेऽथ मनस्यतीत्यादि पूर्ववत् ॥ १ ॥

तानि संकल्पादीनि कर्मफलान्तानि चित्तैकायनानि चित्तात्मानि चित्तोत्पत्तीनि चित्ते प्रतिष्ठितानि चित्तस्थितानीत्यपि पूर्ववत्। किंच चित्तस्य माहात्म्यम्। यस्माच्चित्तं संकल्पादिमूलं तस्माद्यद्यपि बहुविद्बहुशास्त्रादिपरि-

### नरेन्द्रपुरीयं टिप्पणम्

अतीतं भोजनं तृप्तिसाधनमासीत् भोजनत्वादागामिनोऽपि भोजनस्य तदेव प्रयोजनं भविष्यतीति निरूपणसामर्थ्यं चित्तं ततोऽन्नं भोक्ष्य इत्यादि सङ्कल्पकारणत्वाद्भूय इत्यर्थः ॥ १-३ ॥

इति श्रीमन्नरेन्द्रपुरीटिपण्यां सप्तमाध्यायस्य पञ्चमः खण्डः

### आनन्दगिरिटीका

पासकस्य कामचारो भवति तर्हि सर्वसंकल्पस्य विचित्रतया सर्वगोचरत्वसंभवाद्यावच्चित्तस्य गतमित्यादिना वक्ष्यमाणफलं विरुध्येत न हि संकल्पोपासनादेव सर्वस्मिन्फले सिद्धे चित्ताद्युपासनं तत्फलं वा पृथक्कथयितुमुचितमतो यावत्संकल्पस्येत्यादिश्रुतेरुक्तः संकोचो युक्त इत्यर्थः ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य चतुर्थः खण्डः

चित्तशब्दस्य मनःशब्देन पुनरुक्तिं परिहरति—चित्तं चेतयितृत्वमिति। तस्याऽऽत्मत्वं व्यावर्तयति—प्राप्तेति। इदं वस्त्वेवं प्राप्तमिति प्राप्तकालवस्तुनो वस्त्वनुरोधी चेतनाख्यो वृत्तिविशेषस्तद्वत्त्वं चित्तत्वमित्यर्थः। अतीतं भोजनं तृप्तिसाधनं दृष्टं भोजनत्वादागामिनोऽपि तस्य तदेव प्रयोजनमितिनिरूपणसामर्थ्यं चित्तमिति प्रसिद्धमित्याह—अतीतेति। यथोक्तस्य चित्तस्य संकल्पाद्भूयस्त्वं प्राप्तमपूर्वत्वं व्युत्पादयति—कथमित्यादिना। संकल्पप्रकरणं परामृशति—पूर्ववदिति ॥ १ ॥

यथा संकल्पस्य निमित्तत्वे सति स्तुत्यर्थमधिकरणत्वं युक्तं तथा चित्तस्य विभक्तस्य संकल्पादिषु निमित्तत्वेऽपि स्तुत्यर्थमेव तदधिकरणत्वमाह—तानीति। इतश्च चित्तस्यास्ति वैशिष्ट्यमाह—किंचेति। यद्यपि बहुशास्त्रार्थ-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इदन्तु सम्भवादुक्तम्। वस्तुतस्तु सर्वेषां उपासनानामेककर्तृकत्वनियमाभावेन एकविधफलसाधनेष्वपि नोपायेषु [ प्रवृत्तिविरोधः। ] सर्वेभ्यः कामेभ्यः श्रुतज्योष्टिोमदर्शादिष्विव तत्तदरुच्या तस्य तस्य प्रवृत्युपपत्तेः। अधिकफलाभावेऽपि न दोषः, अन्यथा यावन्नाम्नो गतं तत्रास्य कामचारो भवतीत्यादिषु नामागोचरस्याभावेन ततोऽधिकफलाभावेन ततो भूयस उपासनं न स्यादिति। उक्तफलेति क्वचित्पाठः। तत्र संकल्पगोचरमध्य एव ध्रुवत्वादिविशेषणविशिष्टलोकानामप्यन्तर्भावेन पृथक् तद्ग्रहणविरोधादित्यर्थः ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य चतुर्थः खण्डः

प्राप्तकालेति। तत्कालोचिततत्प्रतिभावत्त्वमित्यर्थः। अतीतेति। अतीतविषयस्येदं प्रयोजनम्, अनागतविषयस्येदं प्रयोजनमिति वस्तुसामर्थ्यनिर्धारणसामर्थ्यं चेत्युभयं चित्तशब्दार्थ इत्यर्थः, एवं प्राप्तमिति। एतत्प्रयोजनसामर्थ्यं प्राप्तमित्यर्थः। अपोहो हानमित्यर्थः ॥ १ ॥

कर्मफलान्तानीति। कर्मैव फलं तदन्तानीत्यर्थः यद्वा मन्त्रेषु कर्माणीति कर्मग्रहणेन तत्फलमपि गृहीतमिति मत्वा एवमुक्तम्। चित्तस्थितान्यपीति। अपिशब्देन चित्तैकायनत्वं यत्प्रलयकाले, चित्तात्मत्वं च यदुत्पत्तिकाले उक्तं

स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥३॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य पञ्चमः खण्डः ।

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां

ज्ञानवान्सन्नचित्तो भवति प्राप्तादिचेतयितृत्वसामर्थ्यविरहितो भवति तं निपुणा लौकिकानायमस्ति विद्यमानोऽप्यसत्सम एवेत्येनमाहुः। यच्चायं किंचिच्छास्त्रादि वेद श्रुतवांस्तदप्यस्य वृथैवेति कथयन्ति । कस्मात्। यद्ययं विद्वान्स्यादित्यमेवमचित्तो न स्यात्तस्मादस्य श्रुतमप्यश्रुतमेवेत्याहुरित्यर्थः । अथाल्पविदपि यदि चित्तवान्भवति तस्मा एतस्मै तदुक्तार्थग्रहणायैवोतापि शुश्रूषन्ते श्रोतुमिच्छन्ति । तस्माच्च चित्तं ह्येवैषां संकल्पादीनामेकायनमित्यादि पूर्ववत् ॥ २ ॥

चित्तानुपचितान्बुद्धिमद्गुणैः स चित्तोपासको ध्रुवानित्यादि चोक्तार्थम् ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य पञ्चमः खण्डः

ध्यानं वाव चित्ताद्भूयः। ध्यानं नाम शास्त्रोक्तदेवताद्यालम्बनेष्वचलो भिन्नजातीयैरनन्तरितः प्रत्ययसंतानः।

### नरेन्द्रपुरीयं टिप्पणम्

अनेकाग्रता दोषायेह तस्यातीतादिप्रयोजननिरूपणे सामर्थ्यादर्शनादेकाग्रतारूपध्यानं चेतयितृत्वस्य कारणत्वात् भूयो भवतीत्याह—ध्यानं वावेति। ध्यानस्य फलं तस्य महत्सु पृथिव्यादिषु दर्शनादपि महत्त्वमित्याह—

### आनन्दगिरिटीका

परिज्ञानवान्संस्तथाऽपि यद्यचित्तो भवतीति योजना। अचित्तस्यासत्समत्वं श्रुतवैयर्थ्यं चेत्युक्तं प्रश्नद्वारा विवृणोति—कस्मादित्यादिना। श्रुतमपीत्यपिशब्देन सत्त्वं गृह्यते। चित्ताभावे श्रुतादेर्वैयर्थ्योक्त्या तद्वैशिष्ट्यमादिष्टमिदानीं तद्वैशिष्ट्ये हेत्वन्तरमाह—अथेति। चित्तवतोक्तार्थग्रहणार्थं श्रोतुमिच्छा लोकस्य भवतीत्यत्र हेतुमाह—तस्मादिति॥२॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य पञ्चमः खण्डः

क तद्ध्यानमित्यपेक्षायामाह—ध्यानं नामेति। अचलत्वं साधयति—भिन्नजातीयैरिति। कथं तस्य

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तत्समुच्चीयते। एवं चित्तस्य संकल्पादिभ्यः कर्मान्तेभ्यः आन्तरत्वेन तद्धेतुत्वेन च भूयस्त्वमुक्त्वा तस्योपास्यत्वाय महिमा वर्ण्यत इत्याह—किं चेति। प्राप्तादीति। प्राप्तकालानुरूपबोधरहित इत्यर्थः। यद्वा प्राप्तमागतं आदिशब्देन अनागतमुच्यते ततश्चातीतानागतविषयप्रयोजननिरूपणसामर्थ्यरहित इत्यर्थः। यदयं वेदेत्यनन्तरं तदपि नास्तीत्यनुषङ्गेण वाक्यं पूरयति—तदपीति।

यद्वाऽयं विद्वानिति वाक्यं वृथैवेत्यत्र हेतुत्वेन योजयितुं पृच्छति—कस्मादिति। तस्मादिति। अचित्तत्वादित्यर्थः। अचित्तत्वे असत्समत्वमुक्त्वा चित्तवतो नायं दोषः इत्याह—अथेति। उतापीति। अपीत्यस्य अल्पविदपीति पूर्वेणान्वयः तत एवेति। चित्तवत एव पुरुषादित्यर्थः। यस्मात् चित्तस्यैवमन्वयव्यतिरेकाभ्यां माहात्म्यं तस्माच्चित्तमेव संकल्पादीनां उत्पत्तिस्थितिलयेषु कारणमिति पूर्वोक्तं निगमयति—तस्माच्चित्तमिति ॥ २ ॥

वृद्धिमदिति। वृद्धिमन्तस्समृद्धियुक्ताः गुणा भोग्यपदार्थाः तैरुपचित्तानित्यर्थः, बुद्धिमद्गुणैरिति पाठे विवेकप्रधानैः धर्मज्ञानादिगुणैरित्यर्थः बुद्धिमतश्चित्तस्योपासनात्तथाविधं फलवत्त्वं युक्तमिति भावः ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य पञ्चमः खण्डः

विक्षिप्तचित्तादेकाग्रचित्तस्यान्तरत्वमधिकत्वमभिप्रेत्याह—ध्यानमिति। देवताद्यालम्बनेष्विति देवतादि-

प्राप्नुवन्ति ध्यानापादाँ्शा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाँ्शा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य षष्ठः खण्डः

एकाग्रतेति यमाहुः। दृश्यते च ध्यानस्य माहात्म्यं फलतः। कथम्। यथा योगी ध्यायन्निश्चलो भवति ध्यानफललाभे। एवं ध्यायतीव निश्चला दृश्यते पृथिवी। ध्यायतीवान्तरिक्षमित्यादि समानमन्यत्। देवाश्च मनुष्याश्च देवमनुष्या मनुष्या एव वा देवसमा देवमनुष्याः शमादिगुणसंपन्ना मनुष्या देवस्वरूपं न जहतीत्यर्थः। यस्मादेवं विशिष्टं ध्यानं तस्माद्य इह लोके मनुष्याणामेव धनैर्विद्यया गुणैर्वा महत्तां महत्त्वं प्राप्नुवन्ति धनादिमहत्त्वहेतुं लभन्त इत्यर्थः। ध्यानापादांशा इव ध्यानस्याऽऽपादनमापादो ध्यानफललाभ इत्येतत्तस्यांशोऽवयवः कला काचिद्ध्यानफल-

नरेन्द्रपुरीयं टिप्पणम्

दृश्यते चेत्यादिना। आपादनं सम्पादनं तेन फललाभो लक्ष्यते। ध्यानापादांशो इत्यत्र अकारलोपश्छान्दसः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य षष्ठ-सप्तम-अष्टमखण्डाः

आनन्दगिरिटीका

चित्ताद्भूयस्त्वमित्याशङ्क्यानेकाग्रतादोषोपहतस्यातीतादिफलनिरूपणेन सामर्थ्यादर्शनादेकाग्रतारूपो ध्यानपदार्थश्चेतयितृत्वात्तस्य कारणत्वात्ततो भूयानेवेत्यभिप्रेत्याऽऽह—एकाग्रतेति। इतश्चास्ति तस्य भूयस्त्वमित्याह—दृश्यते चेति। फलद्वारा तन्माहात्म्यं प्रश्नपूर्वकं दृष्टान्तेन स्पष्टयति—कथमित्यादिना। गौरवपरिहारार्थं पक्षान्तरमाह—मनुष्या एवेति। मनुष्याणामेव सतां कुतो देवत्वमित्याशङ्क्याऽऽह—शमादीति। ध्यानफलं नैश्चल्यं तन्महत्सु पृथिव्यादिषु दृष्टं तथाच तद्वैशिष्ट्यमित्यर्थः। तत्रैव हेत्वन्तरमाह—यस्मादिति। धनादिभिर्महत्त्वे हेतुमुत्कृष्टं कर्मेति यावत्। ध्यानस्याऽऽपादनमनुष्ठानं तेन तत्फललाभो लक्ष्यते तस्यांशो येषामस्ति ते तथा। ध्यानफललाभकला-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

रूपेष्वालम्बनेषु विषयेषु, अविचलः अविच्छिन्न इत्यर्थः। ध्यानस्य योगशास्त्रप्रसिद्धत्वमाह—एकाग्रतेति। यमाहुरिति। "शान्तोदितौ तुल्यप्रत्ययौ चित्तस्य एकाग्रतापरिणामः" इति सूत्रे आहुरित्यर्थः। ध्यानफलस्य निश्चलत्वस्य पृथिव्यादिषु विद्यमानत्वेन व्यापकत्वात्तद्द्वारा ध्यानमपि पृथिव्यादिव्यापकत्वेन स्तूयत इत्याह—दृश्यते चेति। ध्यानफलेति। ध्यानफलं समाधिः, स च संप्रज्ञातोऽसंप्रज्ञातश्च। तस्मिन्सति योगी निश्चलो विक्षेपरहितो भवतीत्यर्थः। यद्वा ध्यानफलं अणिमाद्यैश्वर्यं तल्लाभे सति तत्तद्विषयेच्छारूपविक्षेपराहित्येन निश्चलो भवतीति। यद्यपि पृथिव्यादिनिश्चलत्वं न ध्यानफलमिति न ततः स्तुतिः तथापि पृथिव्यादिगतस्वाभाविकनिश्चलत्वे ध्यानफलनिश्चलत्वाभेदमारोप्य पृथिव्यादिभिः ध्यानेनेव निश्चलत्वापरपर्यायाप्रकम्पत्वं प्राप्तमित्येवं ध्यानं स्तूयत इति भावः। मनुष्या एव वेति। दैवसंपदा युक्ताः मनुष्याः देवसमाः दैवीसंपच्च शमादिगुणसंपत्तिः। "अभयं सत्वसंशुद्धिरि"त्यादिना शमादिगुणानुक्त्वा ते गुणा "भवन्ति संपदं दैवीमभिजातस्य भारत" इति गीतासूक्तत्वादित्यर्थः। देवेषु ध्यानफलनिश्चलत्वं दैवस्वभावापरित्याग एवेत्याह—देवत्वेति। इदमुपलक्षणम्—अपां मनुष्याणां च स्वस्वभावापरित्याग एव निश्चलत्वमित्यपि द्रष्टव्यम्। विशिष्टसाधनसाध्यधनादिना महत्त्वप्राप्तिषु ध्यानफललाभैकदेश एव दृश्यते, न कृत्स्नं ध्यानफलम्। अतस्सर्वेषां विशिष्टफलसाधनानां ध्यानफलैकदेशसंपादकत्वेन ध्यान एवान्तर्भावादपि ध्यानं विशिष्टमित्याह—यस्मादिति। ध्यानस्य विशिष्टत्वादेव तत्र इतरस्यान्तर्भाव इत्युक्त्या तत्र इतरस्यान्तर्भावादेव ध्यानं विशिष्टमिति विपर्ययोऽत्र द्रष्टव्य इत्यर्थः। ध्यानापादस्यांशो येषां ते तथेति व्यधिकरणबहुव्रीहिमाह—तस्यांशोऽवयवः कला काचिदेवामिति। ते तथोक्ता इति शेषः। ध्यानेति। ध्यानफललाभस्य कला एकदेशः तद्वन्त इति

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्त्रविद्यां नक्षत्रविद्याँ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाऽऽकाशं चापश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वयाँसि च तृणवनस्पतीञ्छ्वापदान्याकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

लाभकलावन्त इवैवेत्यर्थः। ते भवन्ति निश्चला इव लक्ष्यन्ते न क्षुद्रा इव। अथ ये पुनरल्पाः क्षुद्राः किंचिदपि धनादिमहत्त्वैकदेशमप्राप्तास्ते पूर्वोक्तविपरीताः कलहिनः कलहशीलाः पिशुनाः परदोषोद्भासका उपवादिनः परदोषं सामीप्ययुक्तमेव वदितुं शीलं येषां त उपवादिनश्च भवन्ति। अथ ये महत्त्वं प्राप्ता धनादिनिमित्तं तेऽन्यान्प्रति प्रभवन्तीति प्रभवो विद्याचार्यराजेश्वरादयो ध्यानापादांशा इवेत्याद्युक्तार्थम्। अतो दृश्यते ध्यानस्य महत्त्वं फलतोऽतो भूयश्चित्तादतस्तदुपास्स्वेत्याद्युक्तार्थम् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य षष्ठः खण्डः

विज्ञानं वाव ध्यानाद्भूयः। विज्ञानं शास्त्रार्थविषयं ज्ञानं तस्य ध्यानकारणत्वाद्ध्यानाद्भूयस्त्वम्। कथं च तस्य भूयस्त्वमित्याह—विज्ञानेन वा ऋग्वेदं विजानात्ययमृग्वेद इति प्रमाणतया यस्यार्थज्ञानं ध्यानकारणम्। तथा यजुर्वेदमित्यादि। किंच पश्वादींश्च धर्माधर्मौ शास्त्रसिद्धौ। साध्वसाधुनी लोकतः सिद्धे, स्मार्ते वा

### आनन्दगिरिटीका

वस्त्वमेव स्फुटयति—निश्चला इति। एवकारार्थमाह—नेति। महत्सु पुरुषेषु ध्यानफलानुवृत्तिर्दृष्टेत्यन्वयमुक्त्वा व्यतिरेकमाह—अथेति। व्यतिरेकं दर्शयित्वाऽन्वयमुपसंहरति—अथ ये महत्त्वमिति। महत्सु नैश्चल्यदर्शनमतः शब्दार्थः। महत्त्वफलमाह—अत इति ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य षष्ठः खण्डः

विज्ञानस्योक्तभूयस्त्वं प्रश्नपूर्वकं दर्शयति—कथमित्यादिना। यद्यपि प्रमाणतया तज्ज्ञानं शास्त्रार्थज्ञानपूर्वकं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

विग्रहः। उक्तमेवार्थं व्यतिरेकोक्त्या साधयति—अथ ये पुनरिति। अथशब्दः प्रकृतादर्थादर्थान्तरे वर्तते, अथ पूर्वोक्तेभ्यो महत्वं प्राप्तेभ्यः अर्थान्तरभूता विपरीता ये अल्पाः ते कलहिन इति उपरिविद्यमानं तच्छब्दमाकृष्य व्याचष्टे—पूर्वोक्तेति। उपशब्दार्थमाह—सामीप्येति। अन्वयव्यतिरेकाभ्यां सिद्धमर्थं निगमयति—अथ य इति। प्रभूनेव दर्शयति—विद्येति, विद्याचार्याः विद्याविशेषज्ञा विद्वांसः, राजा मण्डलेश्वरः, ईश्वरः सार्वभौमः, आदिशब्देन अकामहतश्रोत्रियादयो गृह्यन्ते। फलत इति। फलतोऽपीत्यर्थः। विक्षिप्तचित्तादेकाग्रचित्तस्य अन्तरङ्गत्वेनापि भूयस्त्वस्योक्तत्वादिति ॥ १-२ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य षष्ठः खण्डः

ध्येयविज्ञानपूर्वकत्वात् ध्यानस्य ततोऽपि विज्ञानं अन्तरङ्गत्वाद्भूय इत्याह—विज्ञानं वावेति, प्रकारान्तरेणापि भूयस्त्वं वक्तुं पृच्छति—कथमिति। ऋग्वेदादिसर्ववस्तुनिश्चयहेतुत्वात्तस्य भूयस्त्वमित्याह—विज्ञानेनेति। अयमृग्वेद इति, ऋग्वेदत्वप्रकारकज्ञाने सति वेदत्वादेव प्रामाण्यनिश्चये प्रमाणभूततदर्थनिश्चयेन तदर्थविषयज्ञानं जायत इत्यर्थः। यद्यपि ऋग्वेदादि स्वरूपमेव विज्ञानेन विजानातीत्येवं स्वरसतः प्रतीयते नत्वयं ऋग्वेद इति प्रमाणतया जानातीति, तावता विज्ञानस्तुतिरपि सिध्यति, एवमेव पशूंश्च पयांसि चेत्यादौ अश्वादिस्वरूपज्ञानमादायैव विज्ञानस्तुतिर्वक्तव्या, तथापि ऋग्वेदाद्यंशे ध्यानकारणत्वमपि विज्ञानस्य वक्तुं शक्यमिति प्रमाणतया वेदतदर्थज्ञानपर्यन्ततया व्याख्यातम्। प्रमाणज्ञानस्यैव ध्यानकारणत्वादिति। पशूंश्च वयांसि चेत्यादौ तु तत्स्वरूपज्ञानमेव विज्ञानस्तुत्यर्थं विवक्षितं, न तु ध्यानकारणत्वमपीत्याभिप्रेत्य आह—किंच पश्वादीनीति। पुनरुक्तिपरिहाराय

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकाञ्ज्ञानवतोऽभिसिध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य सप्तमः खण्डः

बलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी

दृष्टाऽदृष्टविषयं च सर्वं विज्ञानेनैव विजानातीत्यर्थः। तस्माद्युक्तं ध्यानाद्विज्ञानस्य भूयस्त्वम् अतो विज्ञानमुपास्स्वेति ॥ १ ॥

शृणूपासनफलं विज्ञानवतो विज्ञानं येषु लोकेषु तान्विज्ञानवतो लोकाञ्ज्ञानवतश्चाभिसिध्यत्यभिप्राप्नोति। विज्ञानं शास्त्रार्थविषयं ज्ञानमन्यविषयं नैपुण्यं तद्वद्भिर्युक्ताँल्लोकानाप्नोतीत्यर्थः। यावद्विज्ञानस्येत्यादि पूर्ववत् ॥२॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य सप्तमः खण्डः

बलं वाव विज्ञानाद्भूयः। बलमित्यन्नोपयोगजनितं मनसो विज्ञेये प्रतिभानसामर्थ्यम्। अनश्नन्नृगादीनि न वै मा प्रतिभान्ति भो इति श्रुतेः। शरीरेऽपि तदेवोत्थानादिसामर्थ्यं यस्माद्विज्ञानवतां शतमप्येकः प्राणी बलवाना-

आनन्दगिरिटीका

तथाऽपि कथं तस्य ततो भूयस्त्वं तत्राऽऽह— यस्येति। इतश्च तस्य ध्यानाद्भूयस्त्वमित्याह—किंचेति। भूयस्त्वफलमाह—अत इति ॥ १ ॥

ज्ञानविज्ञानशब्दयोरर्थभेदं कथयति—विज्ञानमिति। तथाऽपि लोकानामचेतनानां कुतस्तदुभयाश्रयत्वमित्याशङ्क्याऽऽह—तद्वद्भिरिति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य सप्तमः खण्डः

लोके बलशब्दार्थे श्वेतकेतुवाक्यं प्रमाणयति—अनशनादिति। कथं तर्हि शरीरसामर्थ्ये बलशब्दप्रयोगस्तत्राऽऽह—शरीरेऽपीति। तदेवेत्यन्नोपयोगजनितमेवेत्यर्थः। न केवलं कारणत्वादेव बलं विज्ञानाद्भूयः किन्तु प्रत्यक्षं

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

धर्माधर्मव्यतिरिक्तं साध्वसाधुशब्दार्थमाह—लोकतस्सिद्धे इति। लौकिके हिताहितकरणे इत्यर्थः। तयोरपि धर्माधर्मयोरेव अन्तर्भाव इतिमत्वा अर्थान्तरमाह—स्मार्ते वेति। ततश्च धर्माधर्मशब्देन वैदिकयोरेव गोबलीवर्दन्यायेन ग्रहणं साध्वसाधुशब्देन स्मार्तयोर्ग्रहणमिति अपौनरुक्त्यमित्यर्थः। दृष्टेति। पश्वादिकं दृष्टविषयं, धर्मादिकमदृष्टविषयमिति विवेकः ॥ १ ॥

लोकानां साक्षाद्विज्ञानवत्त्वानुपपत्तेराह—तद्वद्भिर्युक्तानिति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य सप्तमः खण्डः

विज्ञानकारणं मनोगतं सामर्थ्यं बलं विज्ञानादप्यन्तरङ्गत्वात्ततो भूय इत्याह—बलं वा वेति। अन्नोपयोगेति। अन्नभक्षणेत्यर्थः। अन्नोपयोगजनितं प्रतिभानसामर्थ्यं मत्यत्र श्रुत्यपेक्षितं पूरयन् श्रुतिमुदाहरति—अनशनादिति। मनसोऽन्नमयत्वं अन्वयव्यतिरेकाभ्यां दर्शयितुं पञ्चदशदिवसेषु अशनाकरणे ऋगादिप्रतिभानं न जातमिति व्यतिरेक उक्तः "स ह पंचदशाहानि नाश अथ हैनमुपससाद किं ब्रवीमि भा इत्यृचस्सोम्य यजूंषि सामानीति न वै मा प्रतिभान्ति भो" इति श्रुतौ सोऽर्थः इह प्रमाणतया अनुदितः।

ननु मानसबलस्य विज्ञानाद्भूयस्त्वं प्रतिज्ञाय "अपि ह शतमि"त्यादिना शारीरबलस्य भूयस्त्वप्रतिवादनमसङ्गतमित्याशङ्क्य मानसबलस्यैव शरीरबलत्वादुत्साहरूपमानसबलवतां शरीरबलदर्शनाच्छरीरबलस्य भूयस्त्वप्रतिपादने मानसस्य भूयस्त्वं सिध्यतीत्यभिप्रेत्य मानसबलस्यैव शरीरबलत्वमाह—शरीरेऽपि तदेवेति।

तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयाँ्सि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति ॥ १ ॥

स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्तेऽस्ति भगवो बलाद्भूय इति बलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्याष्टमः खण्डः

अन्नं वाव बलाद्भूयस्तस्माद्यद्यपि दश रात्रीर्नाश्नीयाद्यद्यु ह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽयै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

कम्पयते यथा हस्ती मत्तो मनुष्याणां शतं समुदितमपि। यस्मादेवमन्नाद्युपयोगनिमित्तं बलं तस्मात्स पुरुषो यदा बली बलेन तद्वान्भवत्यथोत्थातोत्थानस्य कर्तोत्तिष्ठंश्च गुरूणामाचार्यस्य च परिचरिता परिचरणस्य शुश्रूषायाः कर्ता भवति परिचरन्नुपसत्ता तेषां समीपगोऽन्तरङ्गः प्रियो भवतीत्यर्थः। उपसीदंश्च सामीप्यं गच्छन्नेकाग्रतयाऽऽचार्यस्यान्यस्य चोपदेष्टुर्गुरोर्द्रष्टा भवति। ततस्तदुक्तस्य श्रोता भवति। तत इदमेभिरुक्तमेवमुपपद्यत इत्युपपत्तितो मन्ता भवति मन्वानश्च बोद्धा भवत्येवमेवेदमिति। तत एवं निश्चित्य तदुक्तार्थस्य कर्ताऽनुष्ठाता भवति विज्ञाताऽनुष्ठानफलस्यानुभविता भवतीत्यर्थः। किंच बलस्य माहात्म्यं बलेन वै पृथिवी तिष्ठतीत्याद्यृज्वर्थम् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्याष्टमः खण्डः

अन्नं वाव बलाद्भूयः। बलहेतुत्वात्। कथमन्नस्य बलहेतुत्वमित्युच्यते। यस्माद्बलकारणमन्नं तस्माद्यद्यपि

आनन्दगिरिटीका

च तस्य ततो भूयस्त्वमित्याह—विज्ञानवतामिति। तस्माद्बलस्य विज्ञानाद्भूयस्त्वमिति शेषः। समुदितमपि कम्पयते तथाऽन्यत्रापि द्रष्टव्यमिति संबन्धः। यस्मादेवं बलस्य कारणत्वं विज्ञानस्य च कार्यत्वं तस्मात्ततस्तद्भूयस्त्वमित्येतस्मिन्नर्थे कार्यकारणभावमेतयोरुपपादयति—यस्मादित्यादिना। इतश्च बलस्य भूयस्त्वमेष्टव्यमित्याह—किंचेति ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्याष्टमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यस्मात्सामर्थ्याद्विज्ञानवतां शतमप्येकः प्राणी बलवानाकम्पयते। तच्छरीरे विद्यमानं सामर्थ्यं तदेव मानसबलमित्यन्वयः। शरीरेऽपि तथैवेति पाठे शरीरेऽपि उत्थानादिसामर्थ्यं तथैव मानसबलवदेव भूय इत्यर्थः। भूयस्त्वमुपपादयति—विज्ञानवतां यस्मादिति। उभयथापि शरीरबलद्वारा मानसबलं स्तूयत इति भावः। अन्नोपयोगनिमित्तं बलं यस्माच्छारीरमपि विवक्षितमिति शेषः। बलस्य स्वरूपसत्तामात्रं नोत्थानादिहेतुः, किन्तु अभिव्यक्तं कार्यसामर्थ्यं बलं तथेत्याशयेनाऽऽह—बलेन तद्वानिति। बलेनेति करणार्थे तृतीयया अयमर्थः स्फुटीकृतः। गृणाति उपदिशति लौकिकं वैदिकं वा हितोपदेष्टा गुरुः। आचार्यस्तु उपनीय अध्यापयिता साङ्गस्येति भेदः। अनुष्ठानानन्तरभाविविज्ञातृत्वं फलानुभवरूपमेव युक्तम्। अनुष्ठानकारणस्य विज्ञानस्य बोद्धृत्वेनैवोक्तत्वादित्याशयेनाऽऽह—अनुष्ठानफलस्येति। विज्ञानफलस्येति अनुष्ठानद्वारा विज्ञानफलत्वं फलानुभवस्य द्रष्टव्यम्। किं चेति। पृथिव्यादीनां बलं तत्तत्कार्यसामर्थ्यं तेन स्थितिस्तेषां तत्तत्कार्यकरणमिति द्रष्टव्यम् ॥ १-२ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्याष्टमः खण्डः

भुक्तस्यान्नस्य त्रेधा विधीयमानस्य योऽणिष्ठो रसो मनस उपचयकरः, मनोऽवयवत्वेन वर्तते स बलकारणत्वाद्बलादप्यन्तरङ्गभूतः इत्याह—अन्नं वा वेति। तस्मादित्युक्तश्रौतस्य हेतोः अन्नस्य भूयस्त्वे साक्षाद्धेतुत्वानुपपत्तेः। भूयस्त्वहेतौ अन्नस्य बलकारणत्वे हेतुत्वं दर्शयितुमाह—बलहेतुत्वादित्यादिना। यस्माद्बलकारणमन्नं तस्मादेव

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य नवमः खण्डः

कश्चिद्दश रात्रीर्नाश्नीयात्सोऽन्नोपयोगानिमित्तस्य बलस्य हान्या म्रियते न चेन्म्रियते यद्यु ह जीवेत्। दृश्यन्ते हि मासमप्यनश्नन्तो जीवन्तः। अथवा स जीवन्नप्यद्रष्टा भवति गुरोरपि तत एवाश्रोतेत्यादि पूर्वविपरीतं सर्वं भवति। अथ यदा बह्वन्यह्वान्यनशितो दर्शनादिक्रियास्वसमर्थः सन्नन्नस्याऽऽयी। आगमनमायोऽन्नस्य प्राप्तिरित्यर्थः। सा यस्य विद्यते सोऽन्नस्याऽऽयी। आय इत्येतद्वर्णव्यत्ययेन। अथान्नस्याऽऽया इत्यपि पाठ एवमेवार्थः। द्रष्टेत्यादिकार्यश्रवणात्। दृश्यते ह्यन्नोपयोगे दर्शनादिसामर्थ्यं न तदप्राप्तावतोऽन्नमुपास्स्वेति ॥ १ ॥

फलं चान्नवतः प्रभूतान्नान्वै स लोकान्पानवतः प्रभूतोदकांश्चान्नपानयोर्नित्यसंबन्धाल्लोकानभिसिध्यति। समानमन्यत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य नवमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

तदेवेत्यन्नकार्यं मनोगतं सामर्थ्यं शरीरे विक्रियाहेतुरित्यर्थः। एकारस्य वर्णस्य विपरिणामेन ईकारान्तत्वेन पाठान्तरं व्याख्यातव्यमित्याह—वर्णव्यत्ययेनेति। द्रष्टेत्याद्यन्नकार्यश्रवणान्न प्राप्तिपरतयैवं पाठान्तरं व्याख्यातव्यमित्यर्थः। दधिपयःप्रभृत्याहुतिं समवाय्यपकार्यत्वादन्तरिक्षादेव मूर्तित्वं द्रष्टव्यम् ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य नवमदशमैकादशद्वादशखण्डाः

आनन्दगिरिटीका

अथवा यदि सोऽभुञ्जानोऽपि कथंचिज्जीवेत्तदा जीवन्नपि संवन्धः। कथमशनशून्यस्य जीवनमित्याशङ्क्याऽऽह—दृश्यन्त इति। अन्नोपयोगाभावे बलहानिरिति व्यतिरेकमुक्त्वा तदुपयोगे बलं भवतीत्यन्वयं व्याचष्टे—अथेति। अथान्नस्याऽऽय इत्यपि पाठोऽस्ति तत्रान्नस्याऽऽय इत्येतदेव पदमन्नप्राप्तिपरतया व्याख्येयमेकारमीकारत्वेन विपरिणमय्य वर्णव्यत्ययाङ्गीकारादित्याह—आय इत्येतदिति। द्रष्टा श्रोतेत्याद्यन्नकार्यस्य श्रवणादपि पाठान्तरमन्नप्राप्तिपरतया व्याख्येयमित्याह—द्रष्टेत्यादीति। कथं तदन्नकार्यमित्याशङ्क्यान्वयव्यतिरेकौ दर्शयति—दृश्यते हीति ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य नवमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

बलस्यान्वयव्यतिरेकौ युक्तौ, अन्यथा तौ न स्यातामिति विशेषः। तावेव अन्वयव्यतिरेकौ दर्शयति—यद्यपि कश्चिदित्यादिना। यद्यु ह जीवेदिति यदि शब्दसूचितं जीवनस्य दुर्लभत्वं दर्शयति—सोऽन्नोपयोगेति। जीवनाभावे बलस्य आशङ्कैव नास्तीत्यर्थः।

नन्वन्नोपयोगाभावे मरणनियमे न चेन्म्रियत इति कथं जीवनाशङ्केत्याह—दृश्यन्ते हीति। अन्नाभावे कथंचिज्जीवन्नपि बलरहित एवेत्याह—अथ चेति। श्रौतो वाशब्दश्चार्थे, ततश्च अथ चेत्यस्य अपि चेत्यर्थं स्वीकृत्याऽऽह—स जीवन्नपीति। अन्नव्यतिरेके बलव्यतिरेकमुक्त्वा तदन्वये तदन्वयमाह—अथ यदेति। दकारपाठः स्पष्टः। यथेति थकारपाठे तु अनशितो असमर्थः, तथा अन्नस्यागमने समर्थ इति तथा शब्दाध्याहारेण योज्यम्। प्राप्तिरुपयोगपर्यन्ता, अन्यथा प्राप्तिमात्रेण बलानुपपत्तेरित्याह—सा यस्येति। अथवा आयीति यकारो दकारस्थाने वर्णव्यत्ययेन। ततश्च अदनमादस्सोऽस्यास्तीति आदीति उपयोगस्साक्षात्प्रतीयत इत्याह—आदीति। आये इत्यैकारान्तपाठेऽपि वर्णव्यत्ययाश्रयणेन पूर्वोक्तार्थे एव ग्राह्य इत्याह—अथान्नस्येति। ननु पाठद्वयेऽपि कथमन्नोपयोगार्थकतया व्याख्यानमायशब्दस्यार्थान्तरस्यापि संभवादित्याशङ्क्य तत्पार्यदर्शनादेः श्रवणात्तथा व्याख्यानमित्याह—द्रष्टेत्यादीति। दर्शनादेस्तत्कार्यत्वमन्वयव्यतिरेकाभ्यां दर्शयति—दृश्यत इति। उपास्तिविधिवाक्यं प्रतीकतो गृहीत्वा तत्फलं विवृणोति—अन्नमुपास्स्वेतीति ॥ १ ॥

आपो वावान्नाद्भूयस्यस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवन्त्यन्नं बहु भविष्यतीत्याप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यद्देवमनुष्या यत्पशवश्च वयाँ्सि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमा मूर्ता अप उपास्स्वेति ॥ १ ॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामाँ्स्तृप्तिमान्भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य दशमः खण्डः

आपो वावान्नाद्भूयस्योऽन्नकारणत्वात्। यस्मादेवं तस्माद्यदा यस्मिन्काले सुवृष्टिः सस्यहिता शोभना वृष्टिर्न भवति तदा व्याधीयन्ते प्राणा दुःखिनो भवन्ति। किंनिमित्तमित्याहान्नमस्मिन्संवत्सरे नः कनीयोऽल्पतरं भविष्यतीति। अथ पुनर्यदा सुवृष्टिर्भवति तदाऽऽनन्दिनः सुखिनो हृष्टाः प्राणाः प्राणिनो भवन्त्यन्नं बहु प्रभूतं भविष्यतीति। अप्संभवत्वान्मूर्तस्यान्नस्याऽऽप एवेमा मूर्तामूर्तभेदाकारपरिणता इति मूर्ता येयं पृथिवी यदन्तरिक्षमित्यादि। आप एवेमा मूर्ता अतोऽप उपास्स्वेति ॥ १ ॥

फलं—स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान्कामान्काम्यान्मूर्तिमतो विषयानित्यर्थः। अप्संभवत्वाच्च तृप्तेरम्बुपासनात्तृप्तिमांश्च भवति। समानमन्यत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

अपां कारणत्वेनान्नाद्भूयस्त्वमन्वयव्यतिरेकाभ्यां साधयति—यस्मादित्यादिना। अपां सर्वजगदात्मकत्वाच्चान्नाद्भूयस्त्वमुचितमित्याह—अप्संभवत्वादिति। दधिपयःप्रभृत्याहुतिपरिणामत्वादन्तरिक्षादेरप्संभवत्वमवसेयम्। अपां सर्वमूर्तात्मकत्वमुपसंहरति—इत्यादीति ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य दशमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अन्नवत इति अन्नवत्त्वमात्रस्यैव प्रतीतेः कथं प्रभूतान्नानिति व्याख्यानमित्याशङ्क्य अन्नवत्त्वमात्रस्य जीवनान्यथानुपपत्त्यैव सिद्धत्वात्तस्य उपासनाफलत्वानुपपत्तेः, प्रभूतान्नवत्त्वमेव तत्फलत्वेन स्वीकर्तव्यमित्याह—अन्नपानयोरिति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य नवमः खण्डः

अपामन्नोपादानकारणत्वमेव ततोऽन्तरङ्गत्वे हेतुः, तच्च कारणत्वं तस्माद्यदा सुवृष्टिरित्यादिना अन्वयव्यतिरेकाभ्यां साध्यत इति व्याचष्टे—अन्नकारणत्वादित्यादिना। यस्मादेवं कारणत्वं वर्तते तस्मादेव अन्नस्य तदन्वयव्यतिरेकानुविधायित्वमित्याह—यस्मादेवमित्यादिना। कथमपां मूर्तिमत्पृथिव्यादिरूपत्वं श्रुत्युक्तमित्याशङ्क्य अप्परिणामत्वात् पृथीव्यादीनां अन्तरिक्षादीनां च अप्परिणामभूतहविर्भूतान्नपरिणामत्वात् हविषां परिणामोऽयमिति स्मृतिः। उपादानोपादेययोरभेदाच्च न दोष इत्याह—अप्संभवत्वादिति। अन्तरिक्षस्य मूर्तत्वं तन्निवासिनां मूर्तत्वं द्रष्टव्यम् ॥ १ ॥

सर्वमूर्तहेतुत्वादपां तदुपासनान्मूर्तकाम्यविषयलाभ इत्याह—काम्यान्मूर्तिमत इति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य दशमः खण्ड।

तेजो वावाद्भ्यो भूयस्तद्वा एतद्वायुमागृह्याऽऽकाशमभितपति तदाऽऽहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोऽपहततमस्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्तेऽस्ति भगवस्तेजसो भूय इति तेजसो वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्यैकादशः खण्डः

तेजो वावाद्भ्यो भूयः। तेजसोऽपकारणत्वात्। कथमप्कारणत्वमित्याह। यस्मादब्योनिस्तेजस्तस्मात्तद्वा एतत्तेजो वायुमागृह्यावष्टभ्य स्वात्मना निश्चलीकृत्य वायुमाकाशमभितपत्याकाशमभिव्याप्नुवत्तपति यदा तदाऽऽहुर्लौकिका निशोचति संतपति सामान्येन जगन्नितपति देहानतो वर्षिष्यति वा इति। प्रसिद्धं हि लोके कारणमभ्युद्यतं दृष्टवतः कार्यं भविष्यतीति विज्ञानम्। तेज एव तत्पूर्वमात्मानमुद्भूतं दर्शयित्वाऽथानन्तरमपः सृजतेऽतोऽप्स्रष्टृत्वाद्भूयोऽद्भ्यस्तेजः। किंचान्यत्तदेतत्तेज एव स्तनयित्नुरूपेण वर्षहेतुर्भवति। कथम्। ऊर्ध्वाभिश्चोर्ध्वगाभिर्विद्युद्भिस्तिरश्चीभिश्च तिर्यग्गताभिश्च सहाऽऽह्लादाः स्तननशब्दाश्चरन्ति। तस्मात्तद्दर्शनादाहुर्लौकिका विद्योतते स्तनयति वर्षिष्यति वा इत्याद्युक्तार्थम्। अतस्तेज उपास्स्वेति ॥ १ ॥

तस्य तेजस उपासनफलं—तेजस्वी वै भवति। तेजस्वत एव च लोकान्भास्वतः प्रकाशवतोऽपहततमस्कान्बाह्याध्यात्मिकाज्ञानाद्यपनीततमस्कानभिसिध्यति। ऋज्वर्थमन्यत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्यैकादशः खण्डः

आनन्दगिरिटीका

इति शब्दस्तदाहुरित्यनेन संबध्यते। वैशब्दार्थं दर्शयति—प्रसिद्धमिति। अप्तेजसोरुक्तं कार्यकारणत्वमुपजीव्य फलितमाह—तेज एवेति। अप्तेजसोर्विधान्तरेण कार्यकारणभावं दर्शयति—किंचान्यदिति। तदेवोपपादयति—ऊर्ध्वाभिरिति। तेजसोभूयस्त्वफलमाह—तेज इति ॥ १ ॥

तमःशब्दार्थमाह—बाह्येति। बाह्यं तमः शार्वरं प्रसिद्धमाध्यात्मिकज्ञानरागादि तदुभयमपहततमस्कानित्यत्र तमःशब्दितमित्यर्थः। अपहतशब्दार्थमाह—अपनीतेति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्यैकादशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तेजो वा इति पूर्ववत्। इह तु—अनन्यथासिद्धान्वयमात्रेण कारणत्वमिति विशेषः। तस्मादिति। तस्मादेव अपां तेजोन्वयानुविधायित्वमिति शेषः। तदेवाह—तद्वा इति। एतावन्मात्रेण कथं कारणत्वनिश्चय इत्यत आह—प्रसिद्धं हीति। न केवलं लोकोक्तिमात्रेण तेजसः वृष्टिपूर्वत्वनिश्चयेन कारणत्वनिश्चयः। किन्तु अनन्तरं साक्षाद्वृष्टेर्दर्शनादपि इत्याह—तेज एवेति। शोकसन्तापयोरव्यवहितपूर्वक्षणे अदर्शनात्कथं तद्रूपेण हेतुत्वमित्याशङ्क्य विद्युदादिरूपेण पूर्वक्षणे सत्त्वस्य दर्शनात् तस्य हेतुत्वमुच्यत इत्याह—किं चान्यदिति ॥ १ ॥

आध्यात्मिकेति। येषु लोकेषु स्थितानां ज्ञानबाहुल्यं तानित्यर्थः ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्यैकादशः खण्ड

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निरा-
काशेनाऽऽह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे
न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥१॥

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै स लोकान्प्रकाशवतोऽसम्बाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य द्वादशः खण्डः

आकाशो वाव तेजसो भूयान् । वायुसहितस्य तेजसः कारणत्वाद्व्योम्नो वायुमागृह्येति तेजसा सहोक्तो वायुरिति पृथगिह नोक्तस्तेजसः। कारणं हि लोके कार्याद्भूयो दृष्टम् । यथा घटादिभ्यो मृत्तथाऽऽकाशो वायुसहितस्य तेजसः कारणमिति ततो भूयान् । कथम् । आकाशे वै सूर्याचन्द्रमसावुभौ तेजोरूपौ विद्युन्नक्षत्राण्यग्निश्च तेजोरूपाण्याकाशेऽन्तः । यच्च यस्यान्तर्वर्ति तदल्पं भूय इतरत् । किंचाऽऽकाशेनाऽऽह्वयति चान्यमन्य आहूतश्चेतर आकाशेन शृणोत्यन्योक्तं च शब्दमन्यः प्रतिशृणोत्याकाशे रमते क्रीडत्यन्योन्यं सर्वस्तथा न रमते चाऽऽकाशे बन्ध्वादिवियोग आकाशे जायते न मूर्तेनावष्टब्धे । तथाऽऽकाशमभिलक्ष्याङ्कुरादि जायते न प्रतिलोमम् । अत आकाशमुपास्स्व ॥ १ ॥

फलं शृण्वाकाशवतो वै विस्तारयुक्तान्स विद्वाँल्लोकान्प्रकाशवतः । प्रकाशाकाशयोर्नित्यसंबन्धात्प्रकाशवतश्च लोकानसंबाधान्संबाधनं संबाधः संबाधोऽन्योन्यपीडा तद्रहितानसंबाधानुरुगायवतो विस्तीर्णगतीन्विस्तीर्णप्रचाराँल्लोकानभिसिध्यति । यावदाकाशस्येत्याद्युक्तार्थम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य द्वादशः खण्डः

आनन्दगिरिटीका

वायोः सकाशादाकाशो भूयानिति वक्तव्ये कथं तेजसो भूयानित्युक्तमत आह—वायुरिति । कारणत्वेऽपि कथमाकाशस्य वायुसहितात्तेजसो भूयस्त्वमित्याशङ्क्याऽऽह—कारणं हीति । तेजसो वायुसहितादाकाशस्य भूयस्त्वं प्रश्नपूर्वकं प्रकारान्तरेण दर्शयति—कथमित्यादिना । इतश्चाऽऽकाशस्यास्ति भूयस्त्वमित्याह—किंचेति । तद्भूयस्त्वफलमाह—अत इति ॥ १ ॥

कथमाकाशोपासकस्य प्रकाशव्याप्तलोकप्राप्तिरित्याशङ्क्याऽऽह—प्रकाशाकाशयोरिति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य द्वादशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वायुसहितस्येति । वायुद्वारकस्य, वायुद्वारा कारणत्वादित्यर्थः । पृथगनुक्तौ हेतुमाह—वायुमिति । वायुमवष्टभ्येत्युक्त्या वायोस्तेजः कारणत्वसूचनात्तेजस्सकाशात्पृथगनुक्तिरित्यर्थः । यच्चेव यस्यान्तर्वर्तीति। अनेनापि रूपेण भूयस्त्वं वक्तुं शक्यमिति अभ्युच्चयहेतुर्भूयस्त्वे न त्वान्तरत्वसाधकः कुण्डे बदरान्तरत्वादर्शनाद्वदराश्रयत्वेऽपि । सर्वव्यवहाराश्रयत्वेनाकाशं स्तौत्युपास्यत्वायेत्याह—किं चेति । व्यतिरेकमाह—न मूर्तेनेति । न प्रतिलोमत इति । न पृथिवीमभिलक्ष्येत्यर्थः ॥ १ ॥

आकाशवत्त्वं सर्वस्यापि लोकस्येति न तद्वक्तव्यमित्याशङ्क्य विशेषणेन विवक्षितमर्थमाह—विस्तारेति । आकाशोपासनस्य प्रकाशवल्लोकः कथं फलं "तं यथा यथोपासते तथैव भवती"ति न्यायविरोधादित्याशङ्क्याह—प्रकाशाकाशयोरिति । आकाशस्य सौरादिप्रकाशेन नित्यसम्बन्धात्प्रकाशगुणवत एव तस्योपासनं पर्यवस्यतीत्यर्थः, विस्तीर्णगीतीनिति पाठे शब्दगुणवत आकाशस्य उपासनात्तत्फलत्वं युक्तमित्यर्थः । गतीनिति पाठे आकाश एव सर्वस्य गमनादिति द्रष्टव्यम् ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य द्वादशः खण्डः

स्मरो वावाऽऽकाशाद्भूयस्तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कञ्चन शृणुयुर्न मन्वीरन्न विजानीरन्यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य त्रयोदशः खण्डः

स्मरो वावाऽऽकाकाशाद्भूयः। स्मरणं स्मरोऽन्तःकरणधर्मः। स आकाशाद्भूयानिति द्रष्टव्यं लिङ्गव्यत्ययेन स्मर्तुः स्मरणे हि सत्याकाशादि सर्वमर्थवत्स्मरणवतो भोग्यत्वात्। असति तु स्मरणे सदप्यसदेव। सत्त्वकार्याभावात्। नापि सत्त्वं स्मृत्यभावे शक्यमाकाशादीनामवगन्तुमित्यतः स्मरणस्याऽऽकाशाद्भूयस्त्वम्। दृश्यते हि लोके स्मरणस्य भूयस्त्वं यस्मात्तस्माद्यद्यपि समुदिता बहव एकस्मिन्नासीरन्नुपविशेयुस्ते तत्राऽऽसीना अन्योन्यभाषितमपि न स्मरन्तश्चेत्स्युर्नैव ते कंचन शब्दं शृणुयुस्तथा न मन्वीरन्मन्तव्यं चेत्स्मरेयुस्तदा मन्वीरन्स्मृत्यभावान्न मन्वीरंस्तथा न विजानीरन्। यदा वाव ते स्मरेयुर्मन्तव्यं विज्ञातव्यं श्रोतव्यं चाथ शृणुयुरथ मन्वीरन्नथ विजानीरन्। तथा स्मरेण वै मम पुत्रा एत इति पुत्रान्विजानाति स्मरेण पशून्। अतो भूयस्त्वात्स्मरमुपास्स्वेति। उक्तार्थमन्यत् ॥ १-२ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य त्रयोदशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

स्मरणाभावेऽपि स्मरत्वमङ्गीकृत्योक्तमिदानामज्ञातजडसत्वे प्रमाणाभावाद्दृष्टिसृष्टिमाश्रित्याह—नापि सत्वमिति ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य त्रयोदशः खण्डः

आनन्दगिरिटीका

नपुंसकलिङ्गं श्रुतं पुंलिङ्गत्वेन कथं व्याख्यातमित्याशङ्क्य पुंलिङ्गोपक्रममाश्रित्याऽऽह—लिङ्गव्यत्ययेनेति। कथं पुनः स्मरणस्याऽऽकाशाद्भूयस्त्वमित्याशङ्क्याऽऽह—स्मरणे हीति। अन्वयमुक्त्वा व्यतिरेकं दर्शयति—असतीति। आकाशादेः स्मरणाभावेऽपि सत्त्वमङ्गीकृत्य भोग्यत्वाभावादानर्थक्यमुक्तं संप्रत्यस्मरणे सत्त्वमेव नास्तीत्याह—नापीति। स्मरणस्य भूयस्त्वमनुभवानुसारेण साधयति—दृश्यते हीति। हिशब्दार्थो यस्मादित्युक्तः। स्मरणाभावे श्रवणाद्यभावं व्यतिरेकमुक्त्वा तद्भावे तद्भावमन्वयमाह—यदेति। इतश्चास्ति स्मरणस्य भूयस्त्वमित्याह—तथेति। तद्भूयस्त्वे फलितमाह—अत इति ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य त्रयोदशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अस्मदादिस्मरणस्य आकाशकारणत्वाभावाद्भोग्यत्वाकारविशिष्टं आकाशं प्रति कारणत्वमाह—स्मर्तुरिति। अवगम्यत्वविशेषेण वा तस्य तत्कार्यत्वमित्याह—नापि स्मृत्यभाव इति। नापि सत्त्वं स्मृत्यभावे आकाशादीनामिति पाटस्तु दृष्टिसृष्ट्यभिप्रायेण। तत्र च साक्षादेव आकाशं प्रति कारणत्वं स्मरणस्येति भावः। विद्याप्रकाशे तु ईश्वरस्मृतिस्साक्षादेव आकाशकारणमित्युक्तं "स्रष्टव्यस्मृतिरीशस्य वियतः कारण"मिति। श्रवणादिसर्वव्यवहारहेतुत्वेन स्मरं स्तौतीत्याह—दृश्यत इति। भूयस्त्वं यस्मात्तस्मादेव वक्ष्यमाणो तदन्वयव्यतिरेकौ श्रवणादिव्यवहारस्योपपद्येते इति शेषः, तावेवाह—यद्यपीत्यादिना। अन्यार्थास्मरणस्याश्रवणे हेतुत्वाभावादाह—अन्योन्यभाषणमिति। मननाभावे स्मरणाभावस्य हेतुत्वमन्वयव्यतिरेकाभ्यामाह—मन्तव्यं चेति ॥ १-२ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य त्रयोदश खण्डः

आशा वाव स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राँ्श्च पशूँ्श्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृध्यन्त्यमोघा हास्याऽऽशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य चतुर्दशः खण्डः

आशा वाव स्मराद्भूयसी । आशाऽप्राप्तवस्त्वाकाङ्क्षाऽऽशा तृष्णा काम इति यामाहुः पर्यायैः सा च स्मराद्भूयसी । कथम् । आशया । ह्यन्तःकरणस्थया स्मरति स्मर्तव्यम् । आशाविषयरूपं स्मरन्नसौ स्मरो भवत्यत आशेद्ध आशयाऽभिवर्धितः स्मरभूतः स्मरन्नृगादीन्मन्त्रानधीतेऽधीत्य च तदर्थं ब्राह्मणेभ्यो विधींश्च श्रुत्वा कर्माणि कुरुते तत्फलाशयैव पुत्रांश्च पशूंश्च कर्मफलभूतानिच्छतेऽभिवाञ्छत्याशयैव तत्साधनान्यनुतिष्ठति । इमं च लोकमाशेद्ध एव स्मरँल्लोकसंग्रहहेतुभिरिच्छते । अमुं च लोकमाशेद्धः स्मरंस्तत्साधनानुष्ठानेनेच्छतेऽत आशारशनावबद्धं स्मराकाशादिनामपर्यन्तं जगच्चक्रीभूतं प्रतिप्राणि । अत्र आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व ॥ १ ॥

यस्त्वाशां ब्रह्मेत्युपास्ते शृणु तस्य फलम् । आशया सदोपासितयाऽस्योपासकस्य सर्वे कामाः समृध्यन्ति समृद्धिं गच्छन्ति । अमोघा हास्याऽऽशिषः प्रार्थनाः सर्वा भवन्ति यत्प्रार्थितं सर्वं तदवश्यं भवतीत्यर्थः । यावदाशाया गतमित्यादि पूर्ववत् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य चतुर्दशः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

तदर्थमिति । ऋगादिमन्त्रार्थान् ब्राह्मणग्रन्थोक्तांश्च यावज्जीवादिविधिनेत्यर्थः ॥ १-२ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य चतुर्दशः खण्डः

### आनन्दगिरिटीका

आशाया भूयस्त्वमाकाङ्क्षाद्वारा व्युत्पादयति—कथमित्यादिना ॥ १-२ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य चतुर्दशः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

आशास्वरूपं पर्यायोक्त्या स्पष्टयति—तृष्णेति । स्मराद्भूयस्त्वं, आशायास्तत्कारणत्वेन साधयति—कथमित्यादिना । विद्याप्रकाशे तु ईश्वराशोक्ता ईश्वरस्य सृष्ट्याशा स्मृतिकारणमिति । स्मरशब्दस्य स्मरणार्थत्वस्य पूर्वमुक्तत्वात्तस्य मन्त्राध्येतृत्वमसंभवीत्याशङ्क्य इह स्मरशब्दः कर्तृव्युत्पत्त्या स्मर्तृवाचीत्याह—स्मरन्नसाविति । एवं च तस्य अध्येतृत्वमुपपद्यत इत्याह—इत्यत इति । यस्मादत इत्यर्थः । एतल्लोकजयो नाम एतल्लोकस्थजनानां स्वानुकूलतापादनं तत् द्रव्यदानप्रियवचनतदनुकूलाचरणादिभिर्लोकसंग्रहहेतुभिरिच्छत इति व्याचष्टे—इमं चेत्यादिना ॥ १ ॥

ननु आकाशादिविषयोत्पत्त्यनन्तरं तद्विषयानुभवे तत्स्मरणं ततः तत्राशेत्येवं वैपरीत्यदर्शनात्कथमाशास्मरणयोस्तत्कारणत्वमित्याशङ्क्य पूर्वसर्गस्थाकाशाद्यनुभवजन्यसंस्कारादिदानीं आकाशस्मरयोस्सूक्ष्माकाशादिविषयत्वरूपेण अभिव्यक्तिः। ततो अवयवादि ततःपुनस्स्थूलरूपेणाभिव्यक्तिः, इत्येवं क्रमेण चक्रवत्परिवर्तमानत्वादाशादीनां तत्राप्याशया मन्त्राध्ययनपूर्वं कर्मानुष्ठानेन तत्फलतया लोकशब्दितविषयदादिसान्तत्वसिद्धेराशायास्सर्वमूलत्वं, अतः आशायास्सर्वभूयस्त्वमित्याह—अत आशारशनेति । भूयस्त्वफलमाह—अत आशामिति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य चतुर्दशः खण्डः

[1]प्राणो वा आशाया भूयान्यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे सर्वँ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः ॥ १ ॥

नामोपक्रममाशान्तं कार्यकारणत्वेन निमित्तनैमित्तिकत्वेन चोत्तरोत्तरभूयस्तयाऽवस्थितं स्मृतिनिमित्तसद्भावमाशारशनापाशैर्विपाशितं सर्वं सर्वतो बिसमिव तन्तुभिर्यस्मिन्प्राणे समर्पितम्। येन च सर्वतो व्यापिनाऽन्तर्बहिर्गतेन सूत्रे मणिगणा इव सूत्रेण ग्रथितं विधृतं च। स एष प्राणो वा आशाया भूयान्। कथमस्य भूयस्त्वमित्याह दृष्टान्तेन समर्थयंस्तद्भूयस्त्वम्। यथा वै लोके रथचक्रस्यारा रथनाभौ समर्पिताः संप्रोताः संप्रवेशिता इत्येतत्। एवमस्मिँल्लिङ्ग

### नरेन्द्रपुरीयं टिप्पणम्

प्राणस्य सर्वास्पदत्वेन भूयस्त्वमाह—नामोपक्रममित्यादिना। प्राणवाचकस्य शब्दस्येश्वरे प्रयोगात् सदेश्वरसान्निध्यं

### आनन्दगिरिटीका

प्राणस्य सर्वास्पदत्वेन भूयस्त्वं कथयति—नामोपक्रममिति। प्रकृतश्रुतिवशात्तदुपक्रमे यस्य जगतोऽस्ति तत्तथा पाठक्रममेवाऽऽश्रित्याऽऽशा चान्ते यस्यास्ति तज्जगत्तथेति विग्रहः। कार्यकारणत्वं क्वाचित्कमुपादानोपादेयत्वं निमित्तनैमित्तिकत्वमपि क्वाचित्कमेव। उत्तरोत्तरभूयस्तया पूर्वस्मात्पूर्वस्मान्नामादेरुत्तरोत्तरवागादिभूयस्त्वेनेति यावत्। स्मृतिर्निमित्तः सद्भावो यस्य तत्तथा। आशाख्ये रशनापाशैः सर्वतो विपाशितमित्यत्र दृष्टान्तमाह—बिसमिवेति। बिसशब्दो मृणालविषयः। यथोक्तं जगद्यस्मिन्नर्पितं स एष भूयानिति संबन्धः। सर्वस्य जगतस्तस्मिन्नर्पितत्वमेव दृष्टान्तद्वारा स्पष्टयति—येन चेति। सर्वतो व्यापिनेत्यस्यैव स्फुटीकरणमन्तर्बहिर्गतेनेति। प्राणस्याऽऽशायाः सकाशाद्भूयस्त्वमाकाङ्क्षापूर्वकं समर्थयते—कथमित्यादिना। लिङ्गानां व्यष्टीनां संघातः समुदायस्तद्रूपे समष्ट्यात्म-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एवं नामाद्याशान्ताः प्रत्यगात्मनः उपाधयः प्रतीकोपासनोक्तिव्याजेन दर्शिताः उत्तरोत्तरस्य आन्तरत्वेन भूयस्त्वोक्त्या पूर्वपूर्वस्य बाह्यत्वेन तेभ्यो व्यतिरेकः प्रत्यगात्मनो दर्शितः। तदनेन आशान्तदर्शनेन विज्ञानशक्तिमदुपाधिव्यतिरेकः प्रदर्शितः। अतः परं क्रियाशक्तिमत्प्राणोपाधिव्यतिरेकप्रदर्शनार्थं तमुपाधिमहंग्रहोपासनालंबनं दर्शयितुं प्राणो वा आशाया भूयानित्याद्युक्तं श्रुत्या। तत्र प्राणस्य नामाद्याशान्तभूयस्त्वमुपपादयति—नामोपक्रममिति। नामोपक्रमे यस्य। अन्ते आशा यस्य तत्तथा। कार्यकरणत्वेनेति। उपादानोपादेयतयेत्यर्थः, स्मृत्याशयोः भूयस्त्वहेतुं पूर्वोक्तं स्मारयति—स्मृतीति। बिसं तामरसनालम्, तद्यथा तदन्तर्गततन्तुभिः पाशितं बद्धं तद्वदाशारशनापाशैर्विपाशितमित्यर्थः। ग्रथितमिति, ग्रथितं सत् प्रोद्धृतमित्यर्थः। "वायुना वै गौतमसूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानी"ति श्रुतेरित्यर्थः। प्राणे समर्पितत्वं दृष्टान्तेन दर्शयितुं पृच्छति—कथमिति। अक्षप्रोतनार्थं रथचक्रस्य छिद्रितं मध्यमफलकं नाभिरित्युच्यते। नेमिस्थापनार्थं नाभौ प्रोताः तिर्यक्स्थापिताः

१. अत्र "प्राणो वा आशाया भूयानि"त्युक्तः प्राणः समष्टिर्हिरण्यगर्भोऽपि भवति तदुपासनस्यान्यत्र बहुशः श्रुतेः व्यष्टिरूपेण जीवोपाधिः समष्टिरूपेण ब्रह्मोपासनविषयः अरनाभिदृष्टान्तेन सर्वसमर्पणोपपत्तेः।

रामानुजीयास्तु—प्राणो जीव इति वदन्ति केवलस्य तस्य जडत्वेन हिंसाप्रयुक्तदोषस्य "मातृहासी"त्यादिश्रुत्युक्तस्यानन्वयात्—इत्याहुः। तन्न। प्राणस्य समष्टिरूपस्य हिरण्यगर्भस्योपास्यत्वात् व्यष्टेस्तदभेदात्। हिंसा तु शुद्धे जीवे न संबध्यते अपि तु तदुपाधौ प्राण एव। ततो जीवहिंसाऽपि प्राणहिंसायामेव पर्यवस्यति प्राप्ताप्राप्तविवेकात्। अतः भाष्यरीत्या प्राणपदस्य मुख्यप्राणपरत्वेऽपि न दोषः। रामानुजीयास्तु—जीवापेक्षयाऽपि भूम्न उत्कर्षानुक्तिपरिहाराय तथा वदन्ति। तत्पक्षे जीवस्य ब्रह्मत्वेनोपासनं विधेयम्। तत्रोपास्योपासकयोरभेदात् उपासनानुपपत्तिः। अपि चाहं ब्रह्मेत्यभेदोपासनमत्र विधीयते इत्युक्तौ भवन्मते "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति (ब्र० सू० ४-१-३) सूत्रात् अहं ब्रह्मेत्युपासनस्यैव मोक्षसाधनत्वात् तस्य च प्राणवाक्यादेव सिद्धेः भूमोपदेशो व्यर्थः स्यादिति विवेचनीयम्।

संघातरूपे प्राणे प्रज्ञात्मनि दैहिके मुख्ये यस्मिन्परा देवता नामरूपव्याकरणायाऽऽदर्शादौ प्रतिबिम्बवज्जीवेनाऽऽत्मनाऽनुप्रविष्टा। यश्च महाराजस्येव सर्वाधिकारीश्वरस्य। "कस्मिन्नन्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इति श्रुतेः यस्तु च्छायेवानुगत ईश्वरम्। "तद्यथा रथस्यारेषु नेमिरर्पितो नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः।" "स एष प्राण एव प्रज्ञात्मा" इति कौषीतकिनाम्। अत एवमस्मिन्प्राणे सर्वं यथोक्तं समर्पितम्। अतः स एष प्राणोऽपरतन्त्रः प्राणेन स्वशक्त्यैव याति नान्यकृतं गमनादिक्रियास्वस्य सामर्थ्यमित्यर्थः। सर्वं क्रियाकारकफलभेदजातं प्राण एव न प्राणाद्बहिर्भूत-

### नरेन्द्रपुरीयं टिप्पणम्

प्राणस्यावगम्यत इत्यभिप्रेत्य श्रुत्यन्तरं पठति—तद्यथा रथस्येति। भूतमात्राः शब्दादयः पृथिव्यादयश्च विषयाः प्रज्ञामात्रास्विति शब्दादिबुद्धिषु तज्जनकेन्द्रियेषु चेत्यर्थः॥ १-२॥

### आनन्दगिरिटीका

नीति यावत्। उपाधितद्वतोरैक्यमभिप्रेत्य विशिनष्टि—प्रज्ञात्मनीति। तस्यैवाध्यात्ममधिभूतमधिदैवं चावस्थानं सूचयति—दैहिक इति। प्राणान्तरं व्यावर्तयति—मुख्य इति। यथोक्तेऽस्मिन्प्राणे सर्वं समर्पितमित्युत्तरत्र संबन्धः। प्रज्ञात्मनीति परमात्मोपाधित्वं प्राणस्योक्तं तदुपपादयति—यस्मिन्निति। तस्मिन्सर्वं समर्पितमिति पूर्ववत्संबन्धः। किमिति चक्षुरादिषु विद्यमानेषु मुख्यस्यैव प्राणस्य परमात्मोपाधित्वमुपगतमित्याशङ्क्याऽऽह—यश्चेति। प्राणस्येश्वरं प्रति सर्वाधिकारित्वे श्रुत्यन्तरं प्रमाणयति—कस्मिन्निति। ईश्वरं प्रति प्राणस्यैवोपाधिकत्वे हेत्वन्तरमाह—यस्त्विति। अत्रापि पूर्ववदन्वयः। प्राणश्छायावदीश्वरमनुगच्छतीत्यत्र श्रुत्यन्तरं प्रमाणयति—तद्यथेति। भूतमात्राः शब्दादयः पृथिव्यादयश्च विषयाः प्रज्ञामात्रासु शब्दादिबुद्धिषु तज्जनकेन्द्रियेषु वेत्यर्थः। भवतु तासां प्राणेऽर्पितत्वं तथाऽपि कथं प्राणस्य च्छायावदीश्वरं प्रत्यनुगतिस्तत्राऽऽह—स एष इति। कौषीतकिनां श्रुतिरिति शेषः। प्राणस्य यथोक्तविशेषणवैशिष्ट्यमतःशब्दार्थः। व्याख्यातं भागमनूद्यावशिष्टमंशं व्याकरोति—एवमिति। प्राणः प्राणेन यातीत्यस्यार्थमाह—अत इति। सर्वास्पदत्वादिति यावत्। प्राणः प्राणेन यातीत्यादेः प्राणो ह्येवैतानि सर्वाणि भूतानीत्यन्तस्य तात्पर्यार्थं संक्षिप्य कथयति—सर्वमिति। दातुर्देयस्य संप्रदानस्य च प्राणाभिन्नत्वं प्रकटयति—प्राण

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

काष्ठविशेषाः अरा इत्यर्थः। लिङ्गसंघातरूप इति। लिङ्गशब्देन तदवयवीभूतकरणान्युच्यन्ते, तत्संघातो लिङ्गशरीरं तद्रूपत्वं च प्राणस्य तत्र तस्य प्राधान्यं द्रष्टव्यम्। प्रज्ञात्मत्वं च तस्य प्रज्ञानशक्तिमद्बुद्ध्यभेदात्, एकमेव बुद्धितत्त्वं क्रियाशक्तिप्राधान्येन प्राण इति ज्ञानशक्तिप्राधान्येन बुद्धिरिति व्यवह्रियत इति स्थितेरिति भावः। नारदस्य तत्रैव प्रत्यगात्मत्वभ्रमणे हेतुं दर्शयन् तं पुनर्विशिनष्टि—यस्मिन्निति। तत्रैव हेत्वन्तरं दर्शयितुं विशेषणान्तरमाह—यस्त्विति। आत्मतत्वस्य शरीरसम्बन्ध्युत्क्रान्तिस्थितिसिध्यर्थं क उपाधिर्भविष्यतीत्यालोच्य प्राणं तथाविधं सृष्टवान्। सतः स्वतोऽपरिच्छिन्नस्य तदसंभवादिति आथर्वणश्रुत्यर्थः। तत्प्रविष्टत्वादात्मनस्तदुपाधित्वाच्च सर्वव्यवहारस्य तत्रात्मत्वभ्रमो युक्त इत्यर्थः। सर्वव्यवहारेषु तस्याव्यभिचारादपि तस्मिन्नात्मत्वभ्रम इत्याह—यस्तु छायेति। प्राणस्य सर्वाधारत्वे प्रज्ञात्मत्वे च श्रुतिमाह—तद्यथेति। नेमिर्नाम चक्रस्य भूमिस्थितं फलकं, भूतमात्राशब्देन भूतानामंशभूताश्शब्दादयो विषया उच्यन्ते, प्रज्ञामात्राशब्देन ज्ञानेन्द्रियाणि श्रोत्रादीनि। यथा अरेषु नेमिरर्पिता तथा शब्दादयः श्रोत्रादिष्वर्पिताः, तेषु ग्राह्यत्वेन वर्तन्ते, अरा नाभाविव श्रोत्रादयः प्रज्ञामात्राशब्दिताः प्राणे अर्पिताः, तत्परतन्त्राः। ननु प्रज्ञामात्राणां क्रियाशक्तिमत्प्राणादिमत्वं कुतः तस्य प्रज्ञावत्त्वाभावादित्याशङ्क्य प्रज्ञाशक्तिमद्बुद्ध्यभेदात्तस्यापि प्रज्ञात्मत्वादिति श्रुत्यर्थः। प्राणस्य सर्वाधारत्वकेरुत्तरं प्रति हेतुत्वमाह—अत एवेति।

---

यत्तु "प्राणो ह पिता प्राणो माता" इत्यादौ प्राणस्य जडस्य पितृत्वानुपपत्तिः पितृशरीरस्थत्वेन गौणकल्पना च गुरुभूतेति। तन्न। प्राणशब्दस्य जीवपरत्वे लक्षणाकल्पनाया एवमप्यावश्यकत्वात्। अस्माकं तु प्राणस्य जीवोपाधित्वात् जीवस्य च शुद्धत्वात् जीवे प्रोक्तं पितृत्वादिकं प्राण एव पर्यवस्यतीति मुख्यमेव पितृत्वादिकमिति विशेषः। जीवानुक्तिस्तु न दोषः ब्रह्मोक्त्यैव तदभेदात्तदुक्तेः।

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किंचिद् भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥ २ ॥

अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषंदहेन्नैवैनं ब्रूयुः पितृहाऽसीति न मातृहाऽसीति न भ्रातृहाऽसीति न स्वसृहाऽसीति नाऽऽचार्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥

मस्तीति प्रकरणार्थः। प्राणः प्राणं ददाति। यद्ददाति तत्स्वात्मभूतमेव। यस्मै ददाति तदपि प्राणायैव। अतः पित्राद्याख्योऽपि प्राण एव ॥ १ ॥

कथं पित्रादिशब्दानां प्रसिद्धार्थोत्सर्गेण प्राणविषयत्वमिति। उच्यते—सति प्राणे पित्रादिषु पित्रादिशब्दप्रयोगात्तदुत्क्रान्तौ च प्रयोगाभावात्। कथं तदित्याह। स यः कश्चित्पित्रादीनामन्यतमं यदि तं भृशमिव तदननुरूपमिव किंचिद्वचनं त्वंकारादियुक्तं प्रत्याह तदैनं पार्श्वस्था आहुर्विवेकिनो धिक्त्वाऽस्तु धिगस्तु त्वामित्येवम्। पितृहा वै त्वं पितुर्हन्तेत्यादि ॥ २ ॥

अथैनानेवोत्क्रान्तप्राणांस्त्यक्तदेहानथ यद्यपि शूलेन समासं समस्य व्यतिदहेद्व्यत्यस्य संदहेदेवमप्यतिक्रूरं कर्म समासव्यत्यासादिप्रकारेण दहनलक्षणं तद्देहसंबद्धमेव कुर्वाणं नैवैनं ब्रूयुः पितृहेत्यादि। तस्मादन्वयव्यतिरेकाभ्यामवगम्यत एतत्पित्राद्याख्योऽपि प्राण एवेति ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

समस्येति। पुञ्जीकृत्य व्यत्यस्यावयवान् विभज्य ॥ ३ ॥

### आनन्दगिरिटीका

इति। तदपीति दीयमानमुच्यते। स्वस्य संप्रदानस्य च प्राणाभिन्नत्वात्प्राणायैवेत्युक्तम्। प्राणस्य सर्वात्मत्वमतःशब्दार्थः ॥ १ ॥

प्रसिद्धिरनतिक्रमणीयेति शङ्कते—कथमिति। अन्वयव्यतिरेकाभ्यां पित्रादिशब्दानां प्राणविषयत्वान्न प्रसिद्धेरुल्लङ्घनमित्याह—उच्यत इति। अन्वयव्यतिरेकावेव प्रश्नपूर्वकं प्रकटयति—कथमित्यादिना। पित्रादिषु प्राणे सति पित्रादिशब्दानां प्रयुज्यमानत्वमन्यथा चाप्रयुज्यमानत्वं तदित्युच्यते। त्वंकारादियुक्तमित्यादिपदेन तिरस्कारप्रभेदो गृह्यते। पित्रादिष्वप्रियवादिनं प्रति विवेकिना धिक्कारवचने हेतुमाह—पितृहेति ॥ २ ॥

सति प्राणे पित्रादिषु पित्रादिशब्दानां प्रयुज्यमानत्वमित्यन्वयमुक्त्वा व्यतिरेकमाह—अथैनानेवेति। समस्य पुञ्जीकृत्य व्यत्यस्यावयवान्विभज्येत्यर्थः। यद्यपीत्युपक्रमादेवमपीत्येतत्तथाऽपीत्यस्मिन्नर्थे द्रष्टव्यम्। तदेवातिक्रूरं कर्म विशिनष्टि—समासेति। अवयवविभजनमादिशब्दार्थः। तद्देहसंबद्धमित्यत्र तच्छब्दः क्रूरपित्रादिविषयः। यद्यपि त्यक्तप्राणेष्वपि देहेषु पित्रादिशब्दो दृष्टस्तथाऽपि नासौ मुख्यः। तद्विषये क्रूरकर्मानुष्ठानेऽपि शिष्टगर्हादृष्टेरिति भावः। उक्तान्वयव्यतिरेकफलमुपसंहरति—तस्मादिति ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्राणः प्राणेनेत्यादिना। प्राणस्य स्तुतिरुपास्यत्वाय क्रियत इत्यर्थः। स्वात्मभूतमिति। प्राणस्य सर्वात्मत्वादित्यर्थः ॥ १ ॥

परिहरति—सति हीति ॥ २ ॥

शूलेनेति। येन सूक्ष्माग्रेण काष्ठेन मृतशरीरं भित्वा दहन्ति तच्छूलमित्यर्थः। समासः संक्षेपः। व्यत्यासो विविधः क्षेपः ॥ ३ ॥

**प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नतिवादी भवति तं चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥४॥**

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य पञ्चदशः खण्डः

तस्मात्प्राणो ह्येवैतानि पित्रादीनि सर्वाणि भवति चलानि स्थिराणि च। स वा एष प्राणविदेवं यथोक्तप्रकारेण पश्यन्फलतोऽनुभवन्नेवं मन्वान उपपत्तिभिश्चिन्तयन्नेवं विजानन्नुपपत्तिभिः संयोज्यैवमेवेति निश्चयं कुर्वन्नित्यर्थः। मननविज्ञानाभ्यां हि संभूतः शास्त्रार्थो निश्चितो दृष्टो भवेत्। अत एवं पश्यन्नतिवादी भवति नामाद्याशान्तमतीत्य वदनशीलो भवतीत्यर्थः। तं चेद्ब्रूयुस्तं यद्येवमतिवादिनं सर्वदा सर्वैः शब्दैर्नामाद्याशान्तमतीत्य वर्तमानं प्राणमेवं वदन्तमेवं पश्यन्तमतिवदनशीलमतिवादिनं ब्रह्मादिस्तम्बपर्यन्तस्य हि जगतः प्राण आत्माऽहमिति ब्रुवाणं यदि ब्रूयुरतिवाद्यसीति। बाढमतिवाद्यस्मीति ब्रूयान्नापह्नुवीत। कस्माद्ध्यसावपह्नुवीत। यत्प्राणं सर्वेश्वरमयमहमस्मीत्यात्मत्वेनोपगतः॥ ४॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य पञ्चदशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

युक्तिसहकृताद्वाक्याद्यत्प्रमाणज्ञानमुत्पद्यते तदत्र विज्ञानमुच्यते, तस्य फलं तत्त्वसाक्षात्कारो दर्शनमुक्तं तदेवाह—मननविज्ञानाभ्यां हीति॥

सम्भूतः विषयीकृतः। यदिति। यस्मात्सर्वेश्वरमात्मत्वेन गतः तस्मान्नापह्नवे कारणमस्तीत्यर्थः॥ ४॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य पञ्चदशः खण्डः

आनन्दगिरिटीका

प्राणस्यैव पित्रादिसंज्ञकत्वे किं स्यादित्याशङ्क्याऽऽह—तस्मात्प्राणो हीति। प्राणस्य भूयस्त्वमित्थं व्युत्पाद्य तद्विज्ञानफलमाह—स वा इति। प्राणविदतिवादी भवतीति संबन्धः। कथं प्राणवित्त्वमित्यपेक्षायामाह—एवमिति। सर्वात्मत्वं यथोक्तप्रकारः फलतोऽनुभवः स्वरूपत्वेन साक्षात्कारः। तदनुदर्शनेनैव प्राणवित्त्वे सिध्यति सति किमिति मननविज्ञाने पृथगुपन्यस्येते तत्राऽऽह—मननविज्ञानाभ्यां हीति। उक्तान्वयव्यतिरेकाख्योपपत्तिसहकृताद्वाक्याद्यत्प्राणविषयं ज्ञानं जायते तदत्र विज्ञानं विवक्ष्यते। तत्फलसाक्षात्करणं दर्शनमिति भेदः। मननविज्ञाने विना दर्शनासंभवोऽतःशब्दार्थः। एवं मननादिद्वारेणेति यावत्। अतिवादित्वं व्युत्पादयति—नामादीति। नापह्नुवीतेत्युक्तं व्यक्तीकरोति—कस्मादिति। यद्यस्मादयं विद्वानात्मत्वेन सर्वेश्वरं प्राणोऽस्मीत्युपगतवांस्तस्मादपह्नवे हेत्वभावादात्मनोऽतिवादित्वं नापह्नुवीतेति(त्यर्थः) ॥ ४॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य पञ्चदशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्राणोपासकस्यापि अतिवादित्वं व्रतं वक्तुं स वा एष इत्यादि। तद्व्याचष्टे—स वा इति। एवं पश्यन्नेवं मन्वान इति वचनाद्दर्शनस्य मननहेतुत्वभ्रमं वारयति—फलतोऽनुभवन्निति। मननविज्ञानफलभूतेन दर्शनेनानुभवन्नित्यर्थः। तत्फलमेवाह—मननविज्ञानाभ्यामिति। नामाद्याशान्तमतीत्य स्थितं प्राणमात्मत्वेन वदितुं शीलवान्भवतीत्यर्थः। अपह्नवाकरणं युक्तमित्याह—कस्माद्ध्यसाविति। कुतर्केभ्यो विप्लावकवचनेभ्यश्च प्राणात्मत्वं न जह्यादित्यभिप्रायो नापह्नुवीतेति श्रुतिवाक्यस्येति भावः॥ ४॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य पञ्चदशः खण्डः

एष[1] तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥१॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य षोडशः खण्डः

स एष नारदः सर्वातिशयं प्राणं स्वमात्मानं सर्वात्मानं श्रुत्वा नातः परमस्तीत्युपरराम। न पूर्ववत्किमस्ति भगवः प्राणाद्भूय इति पप्रच्छ। यतस्तमेवं विकारानृतब्रह्मविज्ञानेन परितुष्टमकृतार्थं परमार्थसत्यातिवादिनमात्मानं मन्यमानं योग्यं शिष्यं मिथ्याग्रहविशेषाद्विप्रच्यावयन्नाह भगवान्सनत्कुमारः। एष तु वा अतिवदति यमहं वक्ष्यामि न प्राणविदतिवादी परमार्थतः। नामाद्यपेक्षं तु तस्यातिवादित्वम्। यस्तु भूमाख्यं सर्वातिक्रान्तं तत्त्वं परमार्थसत्यं वेद सोऽतिवादीत्यत आह—एष तु वा अतिवदति यः सत्येन परमार्थसत्यविज्ञानवत्तयाऽतिवदति। सोऽहं त्वां प्रपन्नो भगवन्सत्येनातिवदानि तथा मां नियुनक्तु भगवान्यथाऽहं सत्येनातिवदानीत्यभिप्रायः। यद्येवं सत्येनातिवदितुमिच्छसि सत्यमेव तु तावद्विजिज्ञासितव्यमित्युक्त आह नारदः। तथाऽस्तु तर्हि सत्यं भगवो विजिज्ञासे विशेषेण ज्ञातुमिच्छेयं त्वत्तोऽहमिति ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य षोडशः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

नारदस्य तूष्णींभावे स्वयमेव चाचार्यस्य व्युत्पादनेऽभिप्रायमाह—स एष इत्यादिना ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य षोडशः खण्डः

आनन्दगिरिटीका

अत्र प्राणान्तमुपदेशं श्रुत्वा नारदस्य तूष्णींभावे किं कारणमित्याशङ्कायामाह—स एष इति। कथं तस्योपरतिरवगतेत्याशङ्क्याऽऽह—न पूर्ववदिति। किमिति तर्हि प्रश्नाप्रापायामुपेक्षायां स्वयमेवाऽऽचार्यो व्युत्पादयतीत्याशङ्क्याऽऽह—तमेवमिति। "एतस्माज्जायते प्राण" इति श्रुत्यन्तरात्प्राणस्य विकारत्वेनानृतत्वं "वाचाऽऽरम्भणं विकारो नामधेयमि"त्युक्तम्। तस्मिन्ननृते प्राणे ब्रह्मणि विज्ञानं तेनेति यावत्। परितुष्टत्वे कथमकृतार्थत्वमित्याशङ्क्य मिथ्याज्ञानशालित्वादित्याह—परमार्थेति। न च तस्योपेक्षार्हत्वमित्याह—योग्यमिति। मिथ्याग्रहविशेषो नास्ति प्राणात्परमित्यभिमानः। कथं तर्हि प्राणविदोऽतिवादित्वमुक्तं तत्राऽऽह—नामादीति। कस्तर्हि परमार्थतोऽतिवादीत्याशङ्क्याऽऽह—यस्त्विति। सोऽतिवादीति यतः सनत्कुमारस्याभिप्रायोऽत एवाऽऽहेति योजना। ननु नारदस्य नाद्यापि सत्यविज्ञानमुत्पन्नं कथं सत्येनातिवदानीति पृच्छति तत्राऽऽह—तथेति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य षोडशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नामाद्याशान्ततत्तत्पदार्थोक्तेः प्रश्नपूर्वकत्वदर्शनात्, इह च प्राणाद्भूयोऽस्ति किमित्येवं प्रश्नादर्शनाद्वक्ष्यमाणस्य भूम्नो न प्राणादर्थान्तरत्वमित्याशङ्क्य एष तु वा अतिवदतीति तुशब्देन प्राणप्रकरणविच्छेदं कृत्वा यस्सत्येनातिवदतीति परमार्थसत्यस्य ब्रह्मण उपक्रमात्स एवं भूमेत्यभिप्रेत्य प्रश्नाकरणे हेतुमाह—स एष नारद इति। परमार्थसत्येति। प्राण एव परमात्मेति नारदस्य भ्रमः, तदतिरिक्तात्मनो अज्ञानादित्यर्थः। एषशब्दस्य तुशब्देन पूर्वप्रकरणबुद्धिविच्छेदात् अथैष ज्योतिरित्यत्रेव वक्ष्यमाणपरामर्शित्वमित्याह—यमहमिति। तुशब्दद्योत्यमर्थमाह—न प्राणेति। कथं तर्हि तस्य अतिवादित्वमुक्तमित्याशङ्क्य आपेक्षिकत्वात्तदतिवादित्वस्यापारमार्थिकं तदुक्तमित्याह—नामादीति। तर्हि मुख्यातिवादी क इत्याशङ्क्याह—यस्त्विति। नामादिप्राणान्तानृतसर्वपदार्थातिक्रमात्तस्य परमार्थत्वमित्याह—सर्वेति। सत्येनेति श्रुतौ इत्थंभावे तृतीया। सत्यात्मरूपेणेत्यर्थः। तद्रूपत्वं अज्ञसाधारणमित्याशङ्क्याऽऽह—परमार्थेति। विज्ञानं नाज्ञानिन इत्यर्थः। एवं श्रुत्वा नारदः पृच्छति—सोऽहमिति। पूर्ववत्सत्यस्यापि नोपास्यत्वं, निरुपाधिके तस्मिन् तदसम्भवात्। किन्तु ज्ञातव्यत्वमेव तस्येत्याह—यद्येवमिति ॥१॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य षोडशः खण्डः

---

१. षोडश खण्डे कथितं सत्यशब्देन परं ब्रह्म ग्राह्यम्। "तस्य ह वा एतस्य ब्रह्मणो नाम सत्यं" "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादिश्रुतेः इत्युक्तं रामानुजीये। एवं सति "मृत्तिकेत्येव सत्यम्" इत्यत्रार्थान्तरं "प्रामाणिकं"

**यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥१॥**

**इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य सप्तदशः खण्डः**

यदा वै सत्यं परमार्थतो विजानातीदं परमार्थतः सत्यमिति, ततोऽनृतं विकारजातं वाचारम्भणं हित्वा सर्वविकारावस्थं सदेवैकं सत्यमिति तदेवाथ वदति यद्वदति। ननु विकारोऽपि सत्यमेव। "नामरूपे सत्यं ताभ्य मयं प्राणश्छन्नः"। "प्राणा वै सत्यं तेषामेव सत्यम्" इति श्रुत्यन्तरात्। सत्यमुक्तं सत्यत्वं श्रुत्यन्तरे विकारस्य न तु

नरेन्द्रपुरीयं टिप्पणम्

परमार्थत इति। तत्त्वविचारेण सतोऽन्यदसदुच्यते नृश्रृङ्गादिविषयं चेदम्। अनुगतादेकस्मात्सद्रूपादन्यच्चेद्सदेव भवितुमर्हत्यनन्यश्चेत्तर्हि यदस्ति तत्सन्मात्रं ब्रह्मेत्येवं रूपेण यदा विजानाति तदा अनृतदृष्टिं हित्वा यद्वदति तत्सत्यं ब्रह्मैव वदतीत्यर्थः। उक्तं हि—

यत्र यत्र गता दृष्टिः यत्र यत्र गतं मनः। तत्र तत्र शिवं शान्तं पश्यन्ते वेदपारगाः॥ इति

भेदाभेदमतालम्बनेन श्रुत्यन्तरावष्टम्भाच्छङ्कते—नन्विति। भेदाभेदयोर्विरोधादेकोपाधावसंभवाद्विकारस्य रज्जुसर्पवदनृतत्वानुमानाच्चात्यन्तावाध्यत्वाभिप्रायेण न सत्यत्वमुक्तमिति श्रुतिमात्रमभ्यनुजानन् परिहरति—सत्यमुक्तमिति। इन्द्रियजनितसद्बुद्धिविषयत्वात् पृथिव्यादिभूतत्रयं सदित्युच्यते। इन्द्रियाविषयं परोक्षं भूतद्वयं

आनन्दगिरिटीका

यदा वै विजानातीत्यादिवाक्यं व्याकुर्वन्नुत्तरमाह—यदेति। यदि विश्वं सद्रूपादनुगताद्भिन्नमसदेव स्याद्यदि त्वभिन्नं सन्मात्रमेव परमार्थसत्यं सिध्येदिति परमार्थतः सत्यं यदैव विजानातीत्यर्थः। विज्ञानप्रकारमभिनयति—इदमिति। ततस्तदाऽनृतं विकारजातं हित्वा सदेव सत्यमिति कृत्वा यद्वदति तत्तदेव वदतीति योजना। सत्यविज्ञानस्य तद्वदनं प्रति हेतुत्वद्योतनार्थोऽथशब्दः। श्रुत्यन्तरावष्टम्भेन भेदाभेदवादी शङ्कते—नन्विति। किं बृहदारण्यकश्रुत्या विकारस्य सत्यत्वमुक्तमित्येतावन्मात्रमुच्यते किंवा परमार्थसत्यत्वमिति विकल्प्याऽऽद्यमंगीकरोति—

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ज्ञानेच्छामात्रेण सत्यवदनं न संभवतीत्याशङ्क्य न विजिज्ञासामात्रेण सत्यवदनं ब्रूमः। किन्तु तज्ज्ञानप्राप्त्यापीत्याह—यदा वा इति। नन्वियं कण्डिका व्यर्था, न च ज्ञाने यत्नकर्तव्यतार्थमियमिति वाच्यम्। जिज्ञासयैव तत्कर्तव्यतोक्तेरर्थसिद्धत्वात्। यो हि यदिच्छति स तत्करोत्येवेत्याशङ्क्य नेह यथाकथञ्चित्सत्यातिवादित्वं विवक्षितं तावता मुख्यसत्यातिवादित्वासिद्धेः कथञ्चित्सत्यातिवादित्वस्य घटस्सन्नित्यादिरूपेण सर्वस्मिन्नपि पुरुषे संभवेन आत्मज्ञानिनो विशेषाभावात् किन्तु यद्यद्वदति तत्तत्सर्वं सत्यमेवेत्येवरूपं सत्यातिवदनमिह विवक्षितं तस्यैव ज्ञानिनि वैशिष्ट्यसंपादकत्वात्। तस्यैव नामादिप्राणान्तसर्ववस्तुगतनामरूपनिराकरणेन अधिष्ठानभूतसत्यवदनरूपत्वेन नामादिप्राणान्तातिवदनत्वोपपत्तेश्च। तथात्व एव अतीतत्वार्थकातिशब्दस्य अर्थलाभात्, तच्च प्रतीयमानं सर्वं परमार्थतस्सत्यात्मस्वरूपमेव। विकारस्य वाचारम्भणमात्रत्वेन तद्व्यतिरेकेणाभावादित्येवंरूपज्ञानसाध्यं, तच्च ज्ञानं नेच्छामात्रेण सम्पाद्यम्, प्रत्यक्षादिविरोधनिराकरणाद्यपेक्षत्वेन बहुयत्नसाध्यम्। ततश्च तत्र यत्नकर्तव्यताविधानार्थं यदा वै विजानातीति कण्डिकान्तरमित्यभिप्रायं सूचयन्व्याचष्टे—यदा वै सत्यमित्यादिना। इदमिति। प्रत्यक्षादिना प्रतीतमित्यर्थः। ततः तस्मात् ज्ञानादित्यर्थः। ज्ञानमभिनयति—अनृतमिति। वाचारम्भणं विकारजातं सदेवैकं सत्यमित्येवं रूपात्ततो ज्ञानाद्धेतोर्यद्वदति तत्तदेव सत्यमेवायं वदति इति योजना। तदेवेति पाठे तु यदा विजानाति तदैवायं, ततः उक्ताज्ज्ञानाद्धेतोः यद्वदति तत्सत्यमेव वदति, ततोऽतिवादीति सत्यपदानुषङ्गेण योज्यम्। नन्वेवंरूपं ज्ञानमेव न संभवति, यत्र अधिकयत्नोऽपेक्षितः स्यादिति शङ्कते—नन्विति। नामादिप्राणान्तस्य विकारस्य नामरूपात्मकस्य सत्यत्वे श्रुतिमुक्त्वा प्राणसत्यत्वे श्रुत्यन्तर-

इति व्याख्यानेन कथितं कथं युज्यते—अनेकार्थत्वस्यान्याय्यत्वात्। अस्माकं तु अबाधितमित्यर्थः उभयत्र समानः। मृत्तिका तु घटापेक्षया सत्या—ब्रह्म तु सर्वापेक्षयापि सत्यं, इत्ययं विशेषः।

परमार्थापेक्षमुक्तं किं तर्हीन्द्रियविषयत्वापेक्षं सच्च त्यच्चेति सत्यमित्युक्तं तद्द्वारेण च परमार्थसत्यस्योपलब्धिर्विवक्षितेति । प्राणा वै सत्यं तेषामेष सत्यमिति चोक्तम् । इहापि तदिष्टमेव । इह तु प्राणविषयात्परमार्थसत्यविज्ञानाभिमानाद्व्युत्थाप्य नारदं यत्सदेव सत्यं परमार्थतो भूमाख्यं तद्विज्ञापयिष्यामीत्येष विशेषतो विवक्षितोऽर्थः । नाविजानन्सत्यं वदति यस्त्वविजानन्वदति सोऽग्न्यादिशब्देनाग्न्यादीन्परमार्थसद्रूपान्मन्यमानो वदति न तु ते रूपत्रयव्यतिरेकेण परमार्थतः सन्ति । तथा तान्यपि रूपाणि सदपेक्षया नैव सन्तीत्यतो नाविजानन्सत्यं वदति ।

नरेन्द्रपुरीयं टिप्पणम्

त्यदित्युच्यते, सच्च त्यच्चेतियौगिकवृत्त्या सत्यत्वं भूतपञ्चकस्य विवक्षितं न विरुध्येतेत्यर्थः । व्यावहारिकसत्यानुवादेनाध्यारोपापवादन्यायेन ब्रह्मणोऽवगतिर्विवक्षिता बृहदारण्यके । अतो वा सत्यत्वं न विरुध्यत इत्याह—तद्द्वारेण चेति । प्राणस्य सत्यत्वाभिधानमपि व्यावहारिकं सत्यतानुवादरूपं द्रष्टव्यमात्मसत्यतायां तात्पर्यादित्याह—प्राणा वै सत्यमिति । तेन च विरोधो विकारत्वानृतत्वाभिधानस्य नास्तीत्याह—इहापीति । एवं प्राणस्यानृतत्वविवक्षायामपि श्रुत्यन्तरविरोधो नास्तीत्युपपाद्य प्रकरणार्थं संक्षेपतः कथयति—इह त्विति । यदत्र भास्करेणाभिहितं श्रुत्यक्षर-

आनन्दगिरिटीका

सत्यमिति । द्वितीयं दूषयति—न त्विति । भेदाभेदयोर्विरोधादेकोपाधावयोगाद्विकारस्य च रज्जुसर्पवन्मिथ्यात्वानुमानादत्यन्ताबाध्यत्वाभिप्रायेण सत्यत्वं श्रुत्यन्तरेणैवोक्तमित्यर्थः । कथं तर्हि प्राणादिषु सत्यत्वमुक्तमित्याशङ्क्याङ्गीकारं स्फोरयति—किं तर्हीति । इन्द्रियजनितसद्बुद्धिविषयत्वापेक्षं भूयत्रयं सदित्युच्यते । तदविषयत्वापेक्षं भूतद्वयं त्यदिति व्यवह्रियते । तथा च भूतपञ्चकं सच्च त्यच्चेति व्युत्पाद्य सत्यमिति यथोक्तं तथा तद्बीजभूतयोर्नामरूपयोस्तदात्मकत्वाच्च प्राणानां सत्यत्वं व्यावहारिकमिष्टमित्यर्थः । इतश्च प्राणादिषु मिथ्याभूतेष्वपि सत्यश्रुतिरविरुद्धेत्याह—तद्द्वारेणेति । प्राणादीनां व्यावहारिकसत्यत्वानुवादद्वारेणाध्यारोपापवादन्यायेन परमार्थसत्यस्य ब्रह्मणोऽवगतिर्विवक्षितेति कृत्वा तेष्वपि सत्यत्वश्रुतिरविरुद्धेत्यर्थः । यथोक्तोऽर्थो विवक्षितो बृहदारण्यकश्रुतावित्यत्र गमकमाह—प्राणा वा इति । ननु श्रुत्यन्तरे विकारस्यापि व्यावहारिकं सत्यत्वमिष्टं प्रकृते तु न तदिष्यते भूम्न एव सत्यत्वाङ्गीकारात्तथा च विरोधतादवस्थ्यमित आह—इहापीति । यदि प्राणस्यापि व्यवहारतः सत्यत्वमुपगतं किं तर्हि सनत्कुमारस्य विवक्षितमित्याशङ्क्याऽऽह—इह त्विति । यदा वै विजानात्यथ सत्यं वदतीति यद्व्याख्यातं तदन्वयव्यतिरेकाभ्यां स्फुटयन्नादौ व्यतिरेकमाह—नाविजानन्निति । परमार्थसत्यमविजानन्नपि वदत्यग्न्यादीनित्याशङ्क्याऽऽह—यस्त्विति । तर्हि कथं सदेव परमार्थसत्यमिति वदतोऽभीष्टसिद्धिरित्याशङ्क्याऽऽह—न त्विति । तान्येव

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मप्याह—प्राणा वा इति । तेषां प्राणानां एष प्रकृतो नेति नेतीति निर्दिष्ट आत्मा अधिष्ठानरूपेण सत्ताप्रदत्वात्, सत्यमिति श्रुत्यर्थः । विकारस्य परमार्थसत्यत्वं न श्रुत्यन्तरेण उक्तं, किन्तु इन्द्रियजन्यविज्ञानविषयत्वाद्व्यावहारिकं तस्य सत्यत्वमुक्तम् । सत्यशब्दितभूतपञ्चककार्यत्वाच्च सत्यत्वं विकारस्योक्तमिति परिहरति—स यमुक्तमित्यादिना । इन्द्रियविषयाविषयत्वापेक्षमिति पाठेऽपि इन्द्रियं विषय आश्रयो जनकं यस्येति तज्जन्यज्ञानमेवोक्तम् । सच्छब्देन इन्द्रियविषयत्वात् मूर्तत्वाच्च रूपवद्भूतत्रयमुक्तम् । त्यच्छब्देन परोक्षवाचिना तद्विपरीतं भूतद्वयमुक्तम् । तदुक्तेः प्रयोजनमाह— तद्द्वारेणेति ।तथा विवक्षायां श्रुतिप्रमाणमाह--प्राणा वा इति । प्राणानां सत्यत्वं अधिष्ठानसत्यत्वाधीनमिति कार्यगतसत्वेनअधिष्ठानसत्ता ज्ञेयेति श्रुत्युक्तमित्यर्थः । नन्विह तथाविधविकारसत्यत्वस्य निषेधे तद्विरोधः स्यादित्याशङ्क्याह—इहापीति । तथाविधं सत्यत्वं न निषिध्यत इत्यर्थः । कथं तर्हि एष तु वा अतिवदति यस्सत्येनातिवदतीति तुशब्देन पूर्ववैलक्षण्यं सत्यस्य वदता पूर्वस्य प्राणादेः सत्यत्वाभावप्रतीतिः अन्यथा वैलक्षण्यासिद्धेरित्याशङ्क्य इह सत्यशब्देन परमार्थसत्यवाचिना नारदस्य परमार्थसत्यत्वभ्रमं प्राणादिषु निराकर्तुं तथाविधं सत्यत्वं पूर्वस्य नास्तीत्युच्यते, नतु व्यावहारिकमपीत्याह—इह त्विति । नन्वविजानन्नप्यग्न्यादिकं विकारं वदन् सत्यमेव स वदति विकारस्य सर्वस्य सद्रूपताव्यतिरेकेण रूपान्तराभावात् । अतो नाविजानन् सत्यं वदतीत्ययुक्तमित्याशङ्क्य, सत्यं, तथापि सः विकारस्यैव सत्यतां मन्यते, नतु विकारनिराकरणेन परमार्थं सत्यं वदति तस्यैव अतिवदनरूपत्वादिति परिहरति— यस्त्विति । नैव सन्तीति मन्यमानो नतु वदतीति पदद्वयानुषङ्गेण योज्यम् । उपसंहरति—अत इति । विजानन्नेव

**यदा वै मनुतेऽथ विजानाति नामत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥१॥**

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्याष्टदशः खण्डः

विजानन्नेव सत्यं वदति। न च तत्सत्यविज्ञानमविजिज्ञासितमप्रार्थितं ज्ञायत इत्याह—विज्ञानं त्वेव विजिज्ञासितव्यमिति। यद्येवं विज्ञानं भगवो विजिज्ञास इति। एवं सत्यादीनां चोत्तरोत्तराणां करोत्यन्तानां पूर्वपूर्वहेतुत्वं व्याख्येयम् ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य सप्तदशः खण्डः

यदा वै मनुत इति। मतिर्मननं तर्को मन्तव्यविषय आदरः ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्याष्टादशः खण्डः

## नरेन्द्रपुरीयं टिप्पणम्

शून्यमर्थापत्तिशून्यञ्च प्राणानृतत्वव्याख्यानं लोकप्रतारणायैवेति। तत्तस्य सत्यविशेषणसामर्थ्यापरिज्ञानविजृम्भितम्। सत्यज्ञानेन ह्यतिवादित्वान्तरं विदधानः पूर्वप्रकृतस्य प्राणविज्ञानेनातिवादित्वस्य मिथ्याविषयत्वं ख्यापयति अन्यथा प्राणस्यापि सत्यत्वे तुल्ये सत्यावष्टम्भेनातिवादित्वान्तरविधानमस्थाने सम्भ्रममात्रं प्रसज्येत। न च सत्यशब्दः कारणरूढो येन कारणविज्ञानेनातिवादित्वान्तरव्याख्यानं शोभेत। कारणस्यापि शक्तिमद्रूपस्य युक्तिबाध्यत्वान्न हि सम्बन्धो भेदो वैशिष्ट्यं वा निरूपणसहमिति विस्तृतं तत्त्वालोके ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य सप्तदश-अष्टादश-एकोनविंश-विंश-एकविंश-द्वाविंशखण्डाः

## आनन्दगिरिटीका

तर्हि रूपाणि पृथग्विद्यन्ते नेत्याह—तथेति। अतोऽस्य नास्ति सत्यवादित्वं किंत्वसत्यवादित्वमेवेत्युपसंहरति—इत्यत इति। व्यतिरेकं दर्शयित्वाऽन्वयमन्वाचष्टे—विजानन्नेवेति। अस्तु तर्हि सत्यविज्ञानपूर्वकमतिवादित्वमित्याशङ्क्याऽऽह—न चेति। यद्येवं जिज्ञासाद्वारा सत्यविज्ञानं ज्ञेयमित्येवमिष्टं चेदित्यर्थः। सत्यवदनं प्रति सत्यविज्ञानस्य यथा कारणत्वमुक्तं तथा पूर्वस्य पूर्वस्योत्तरमुत्तरं कारणत्वेन द्रष्टव्यमित्यतिदिशति—एवमिति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य सप्तदशः खण्डः

विज्ञानकारणीभूतां मतिं व्याचष्टे—मतिरिति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्याष्टादशः खण्डः

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सत्यं वदतीत्यनन्तरं इति युक्तमिति शेषः। विज्ञानं त्वेव विजिज्ञासितव्यं इत्यनुपपन्नं विज्ञानविषयकविज्ञानेच्छाभावादित्याशङ्क्य विजिज्ञासितव्यमित्यनेन प्रार्थनीयत्वं लक्ष्यते, अतो नोक्तदोष इत्याह—न चेति। तत्सत्यविज्ञानमपि जिज्ञासितव्यम्। ज्ञातुं प्रार्थितं ज्ञायत इति पाठस्तु सुगमः। विजिज्ञास इति साधनेन विज्ञानं प्रार्थयामीत्यर्थः। एवमुत्तरत्रापि योज्यम्, विज्ञानस्य सत्यवदनहेतुत्वमिव मननस्य विज्ञाने हेतुत्वं श्रद्धायाः मनने निष्ठायाः श्रद्धायां कृतेर्निष्ठायां सुखलिप्सायाः कृताविल्येवं ज्ञेयमित्याह—एवमिति। सत्यादीनां सत्यवदनादीनां मध्ये, एवं सत्यवदनविज्ञानयोरिव उत्तरोत्तराणां मननादीनां पूर्वपूर्वहेतुत्वमिति योजना ॥ १ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य सप्तदशः खण्डः

विज्ञानस्य यत्नसाध्यत्वमुक्तं; तान्येव यत्नविषयसाधनान्याह—यदा वै मनुत इति। श्रद्धाशब्दार्थमाह—मन्तव्येति। गुरूक्तार्थे आदराभावे तद्विषये मननं न करोतीति तत्र तस्य हेतुत्वमित्यर्थः, ब्रह्मज्ञानाय गुरुशुश्रूषादितात्पर्यरूपया निष्ठया श्रवणमपि संगृहीतम्, शुश्रूषायास्तदर्थत्वात्सा च मन्तव्यविषयादरहेतुः। तज्ज्ञानाभावे तदादरायोगादिति भावः ॥ १ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्याष्टादशः खण्डः

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥१॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्यैकोनविंशः खण्डः

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य विंशः खण्डः

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्यैकविंशः खण्डः

यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य द्वाविंशः खण्डः

आस्तिक्यबुद्धिः श्रद्धा ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्यैकोनविंशः खण्डः

निष्ठा गुरुशुश्रूषादिस्तत्परत्वं ब्रह्मविज्ञानाय ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य विंशः खण्डः

यदा वै करोति । कृतिरिन्द्रियसंयमश्चित्तैकाग्रताकरणं च । सत्यां हि तस्यां निष्ठादीनि यथोक्तानि भवन्ति विज्ञानावसानानि ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्यैकविंशः खण्डः

साऽपि कृतिर्यदा सुखं लभते सुखं निरतिशयं वक्ष्यमाणं लब्धव्यं मयेति मन्यते तदा भवतीत्यर्थः । यथा

आनन्दगिरिटीका

मननहेतुभूतां श्रद्धां व्याकरोति—आस्तिक्येति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्यैकोनविंशः खण्डः

श्रद्धाहेतुं निष्ठां व्याचष्टे—निष्ठेति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य विंशः खण्डः

निष्ठानिदानं कृतिं विभजते—कृतिरिति । कथं पुनरेतेषामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणीभवति तत्राऽऽह—सत्यां हीति ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्यैकविंशः खण्डः

कृतिस्तर्हि कुतो भवतीति तत्राऽऽह—साऽपीति । यदा सुखं लभते तदा भवतीति संबन्धः । ननु सुखलाभस्येन्द्रियसंयमादिव्यतिरेकेणाभावात्कथं सुखलाभाधीना कृतिरित्याशङ्क्याऽऽह—सुखमिति । वक्ष्यमाणसुखलब्ध-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इन्द्रियसंयमादिरूपायाः कृतेः कथं श्रवणादिहेतुत्वं, तया विनापि गुरुलाभादिदृष्टसामग्र्यैव तत्सिद्धेरित्याशङ्क्य तस्याश्चित्तमलनिराकरणद्वारेण तत्फलोत्पत्तौ हेतुत्वात्तद्धेतुत्वमित्याह—सत्यां हीति ॥ १ ॥

इतिश्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्यैकविंशः खण्डः

नित्यानित्यवस्तुविवेकपूर्वकं अनित्याद्विरज्य नित्यवस्तुलिप्सा इन्द्रियसंयमलक्षणशमादिसाधने हेतुरित्याह—सापि कृतिरिति । निरतिशयमिति नित्यमित्यपि द्रष्टव्यम् । सुखलाभानन्तरं कृतिशब्दितशमादिप्रवृत्त्यनुपपत्तेर्लाभशब्देनेच्छोच्यत इति व्याचष्टे—लब्धव्यं मयेति । यथा लोके इष्टफलरूपसुखहेतुकृतौ तत्सुखेच्छेव

'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य त्रयोविंशः खण्डः

दृष्टफलसुखा कृतिस्तथेहापि नासुखं लब्ध्वा करोति। भविष्यदपि फलं लब्ध्वेत्युच्यते। तदुद्दिश्य प्रवृत्त्युपपत्तेः। अथेदानीं कृत्यादिषूत्तरोत्तरेषु सत्सु सत्यं स्वयमेव प्रतिभासत इति न तद्विज्ञानाय पृथग्यत्नः कार्य इति प्राप्तं तत इदमुच्यते। सुखं त्वेव विजिज्ञासितव्यमित्यादि। सुखं भगवो विजिज्ञास इत्यभिमुखीभूतायाऽऽह ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य द्वाविंशः खण्डः

यो वै भूमा महन्निरतिशयं बह्विति पर्यायास्तत्सुखम्। ततोऽर्वाक्सातिशयत्वादल्पम्। अतस्तस्मिन्नल्पे

नरेन्द्रपुरीयं टिप्पणम्

भावभवित्रोरभेदेन भूमेति महदिति व्याख्यानम्। भूमैव सुखमिति सावधारणसामानाधिकरण्यश्रुत्या सुखब्रह्मणोर्गुणगुणिभावकृतःस्वल्पोऽपि भेदो नास्तीति दर्शितम्। भास्करः पुनरैश्वर्यलक्षणयाऽऽनन्दं भूम्नो गुणं

आनन्दगिरिटीका

व्यत्वाभिमानादेव यथोक्ता कृतिः सिध्यतीत्यर्थः। सुखं लब्ध्वा करोतीत्येतद्दृष्टान्तेन साधयति—यथेति। दृष्टं फलं पुत्रपश्वादि तज्जन्यसुखोद्देशपूर्विका लोके कृतिर्दृष्टा तथाऽऽत्मन्यपि सुखं लब्ध्वैव करोति न तु विना तदुद्देशमित्यर्थः। नन्विन्द्रियाणां मनसश्च संयमपूर्वकं सुखं भवति तथा च कथं तल्लब्ध्वा करोतीत्युच्यते तत्राऽऽह—भविष्यदपीति। उत्तरग्रन्थमाकाङ्क्षापूर्वकमुत्थापयति—अथेत्यादिना ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य द्वाविंशः खण्डः

भूम्नोऽर्वागपि वैषयिकं सुखमस्तीत्याशङ्क्याऽऽह—ततोऽर्वागिति। कथमल्पत्वेऽपि सुखत्वं वार्यते तत्राऽऽह—

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

हेतुस्तथेहापीत्युक्तेऽर्थे दृष्टान्तमाह—यथेति। दृष्टफलरूपं सुखं यस्याः सा तथोक्ता। असुखं लब्ध्वेति सुखं अलब्ध्वेत्यर्थः। ननु सुखलाभस्य भविष्यतः कथं लब्ध्वेति भूतत्वेन निर्देश इत्याशङ्क्य लाभोद्देशनस्य भूतत्वात्तद्गतं भूतत्वं तद्विषयलाभे उपचर्यत इत्याह—भविष्यदपीति। सत्यं त्वेव विजिज्ञासितव्यमित्यनेनैव सुखस्वरूपस्य सत्यस्य विजिज्ञासाया उक्तत्वात्। सुखं त्वेव विजिज्ञासितव्यमित्युक्तिः पुनर्न युक्तेत्याशङ्क्य सत्यस्यापि सतः सुखस्य सुखत्वेन ज्ञानं विना तज्ज्ञानसाधनकृत्यादिषु प्रवृत्त्यनुपपत्तेः, तद्विजिज्ञासा पृथग्वक्तव्येत्याशङ्कापूर्वकमाह—अथेति। अथशब्दः शङ्काप्रारम्भार्थः ॥ १ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य द्वाविंश खण्डः

---

१. अत्र विचाराः प्रदर्श्यन्ते—प्रथमाध्यायतृतीयपादे द्वितीयाधिकरणे "भूमासंप्रसादादध्युपदेशाद्" इति सूत्रम्। अत्र भूमा प्राणो वा ब्रह्म वेति विचारे पूर्वपक्षः—भूमा प्राण इति। तथाहि नामादिषु आशान्तेषु पूर्वपूर्वोक्त्यनन्तरं "अस्ति भगवः नाम्नो भूय" इति "वाग्वाव नाम्नो भूयसी"त्यादिप्रश्नप्रतिवचनप्रवाहो दृश्यते। प्राणादूर्ध्वं तु न दृश्यते केवलं भूमोपदेशमात्रं दृश्यते। तेन प्राण एव भूमेति। एवं प्राप्ते ब्रूमः—भूमा न प्राणः प्राणादूर्ध्वमुपदिश्यमानत्वात् अत्र प्रकरणे यदूर्ध्व यदुपदिश्यते तत् तद्भिन्नं नामभिन्नवाग्वत्। तथा च प्राणभिन्नत्वे सिद्धे सर्वात्मत्वादिधर्मोपपत्तेः भूमा ब्रह्म।

अत्र मध्वाचार्याः—नामब्रह्मेत्युपासीत इत्यत्र नाम = नाम्नि इत्यर्थः। नामपदं तदभिमानिदेवतापरं सा च उषा। उषाशरीरे भगवानन्तर्यामितया वर्तत इत्युपास्यम्। उत्तरोत्तरदेवताशरीरेषु भगवदुपासनया भगवतः संतोषाधिक्यं भवति। न तु नाम्नः ब्रह्मत्वेनोपासनं युक्तम्। अन्यस्यान्यत्वेनोपासने पुरुषार्थाभावात् अनर्थश्च भवेत्। यथा राजभृत्यस्य राजत्वेनोपासने राजा दुष्येत् अनर्थं च कुर्यात्। अचेतनस्य चानर्थकरत्वान्नोपास्यत्वम्। अपि तु एतेषु भगवान् स्थितः इति ध्यानं कार्यमिति व्याकुर्वन्ति।

**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यँ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥**

सुखं नास्ति। अल्पस्याधिकतृष्णाहेतुत्वात्। तृष्णा च दुःखबीजं। न हि दुःखबीजं सुखं दृष्टं ज्वरादि लोके। तस्माद्युक्तं नाल्पे सुखमस्तीति। अतो भूमैव सुखम्। तृष्णादिदुःखबीजत्वासंभवाद्भूम्नः॥ १॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य त्रयोविंशः खण्डः

किंलक्षणोऽसौ भूमेत्याह—यत्र यस्मिन्भूम्नि तत्त्वे नान्यद्द्रष्टव्यमन्येन करणेन द्रष्टाऽन्यो विभक्तो दृश्यात्पश्यति। तथा नान्यच्छृणोति। नामरूपयोरेवान्तर्भावाद्विषयभेदस्य तद्ग्राहकयोरेवेह दर्शनश्रवणयोर्ग्रहणमन्येषां

नरेन्द्रपुरीयं टिप्पणम्

व्याचख्यौ तत्तस्य विषयविलासवासितत्वं लक्षयति श्रुत्यर्थानभिज्ञत्वं वा यत्र यस्मिन्प्राप्ते सति अन्यद्दुःखं तत्साधनञ्च न पश्यतीति भास्करव्याख्यानमयुक्तम्। अन्यं न पश्यतीत्यविशेषश्रुतिसंकोचापातात्॥ १॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य त्रयोविंशः खण्डः

आनन्दगिरिटीका

अल्पस्येति। दुःखरूपां तृष्णां प्रत्यल्पस्य सुखस्य हेतुत्वेऽपि कथं स्वयं सुखं न भवतीत्याशङ्क्याऽऽह—न हीति। अल्पस्य सुखस्य दुःखान्तर्भावे सिद्धे फलितमाह—अत इति॥ १॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य त्रयोविंशः खण्डः

भूम्नः सविशेषत्वं निर्विशेषत्वं वेति प्रश्नपूर्वकं निर्विशेषत्वं निर्धारयति—किमित्यादिना। नान्यच्छृणोति स भूमेति संबन्धः। किमिति स्पर्शनादिष्वपि सत्सु दर्शनश्रवणयोरेव निषेध्यत्वेनात्र ग्रहणमित्याशङ्क्याऽऽह—नामेति। अनुक्तानां स्पर्शादीनामुपलक्षणार्थत्वेनात्र द्वयोर्ग्रहणं स्पर्शनाद्यविषयत्वस्यापि भूम्नि भावादित्याह—अन्येषामिति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

"बहोर्लोपो भू च बहोरि"ति सूत्रेण बहुशब्दाद्भूमशब्दनिष्पत्तेः बहुत्वं भूमशब्दार्थः, भावभवित्रोः अभेदविवक्षया च भूमा बह्वित्युक्तम्। अधिकतृष्णेति। अधिकविषयतृष्णेत्यर्थः। न हीति दुःखबीजं ज्वरादि लोके सुखं नहि दृष्टमिति योजना॥ १॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य त्रयोविंशः खण्डः।

किंलक्षण इति। भूमशब्दस्य उक्तरीत्या बहुत्वार्थकत्वात्तस्य च सुखत्वाभावत् परिच्छिन्नत्वेन अल्पत्वात्कथं तृष्णाबीजत्वासंभव इति प्रश्नार्थः। बहुत्वावच्छिन्नवाचिना भूमशब्देन अल्पत्वनिवृत्तिलक्षणया त्रिविधपरिच्छेदरहितवस्तुनोऽभिधानान्न पूर्वोक्तदोषावकाश इत्याशयवती श्रुतिः भूम्नो लक्षणमाहेत्याह—यत्रेति। अथवा "भूमा वै हिता यो वै वाचो भूमा तस्य न्यर्बुदमि"त्यादौ भूमशब्दस्य आधिक्यार्थकत्वदर्शनादाधिक्यस्य च संकोचकाभावे उक्तपरिच्छेदाभावपर्यवसानात्साक्षाच्छ्रुत्या चेह तथा लक्षणोक्तेः बहोर्लोप इति सूत्रं नखनक्षत्रादिशब्दवत्साधुत्वान्वाख्यानपरं वा द्रष्टव्यमिति। अन्यत्पश्यति इति वाक्यार्थनिषेधकनञा तदन्तर्गताः कर्मकरणकर्तृक्रिया निषिध्यन्ते। क्रियामात्रनिषेधे भूम्नोऽल्पत्वात् अल्पत्वापत्तेरित्याह—तत्त्वे नान्यदित्यादिना। द्वितीयदर्शनस्य सर्वात्मना निषेधे प्रत्यक्षविरोधमाशङ्क्योक्तं—तत्त्वेनेति। दृश्यात्पश्यतीति नकाराभावपाठे भूम्नि

---

इदं तु "ब्रह्मदृष्टिरुत्कर्षादि"ति (ब्र० सू० ४-१-५) ब्रह्मसूत्रविरुद्धम्। "अप्रतीकालम्बनान्नयती"ति (ब्र० सू० ४-३-१५) सूत्रे प्रतीकालम्बनोपासकानां प्रतियोगितया प्रदर्शनविरोधाच्च। आत्मतः प्राणः मुक्तात्मा सन् भगवत्सकाशात् प्राणोत्पत्तिं पश्यति।

अहङ्कारः भगवतो रूपान्तरं अतः सर्वगतत्वमुच्यते स्वभावतः अल्पत्वात्। आत्मरतिः विष्णुरतिः। भूमा अहमात्मेति त्रयं भगवद्रूपम्। आहारः गुरोः विद्याहरणम्, तस्य शुद्धौ सत्त्वशुद्धिः—इति स्वमतानुसारि विवरणम्।

चोपलक्षणार्थत्वेन। मननं चात्रोक्तं द्रष्टव्यं नान्यन्मनुत इति। प्रायशो मननपूर्वकत्वाद्विज्ञानस्य। तथा नान्यद्विजानाति। एवंलक्षणो यः स भूमा। किमत्र प्रसिद्धान्यदर्शनाभावो भूम्न्युच्यते नान्यत्पश्यतीत्यादिना, अथान्यन्न पश्यत्यात्मानं पश्यतीत्येतत्। किंचातः। यद्यन्यदर्शनाद्यभावमात्रमित्युच्यते तदा द्वैतसंव्यवहारविलक्षणो भूमेत्युक्तं भवति। अथान्यदर्शनविशेषप्रतिषेधेनाऽऽत्मानं पश्यतीत्युच्यते तदैकस्मिन्नेव क्रियाकारकफलभेदोऽभ्युपगतो भवेत्। यद्येवं को दोषः स्यात्। नन्वयमेव दोषः संसारानिवृत्तिः। क्रियाकारकफलभेदो हि संसार इति। आत्मैकत्व एव

नरेन्द्रपुरीयं टिप्पणम्

यच्चोक्तं सर्वप्रमाणविरोधात् ब्रह्मणि प्रपञ्चनिरोधोऽशक्य इति। तत्र सर्वेति विशेषणं तावद्व्यर्थम्। न च ब्रह्मणः प्रपञ्चसम्बन्धसाधकं किमपि प्रमाणमुपलभ्यते। न तावत्प्रत्यक्षं ब्रह्मणस्तदगोचरत्वात्। नानुमानं ब्रह्मसम्बन्धे प्रपञ्चेन कस्यचिदविनाभावानवगमात्। नाप्यागमः प्रपञ्चसृष्टिमभिधाय "ऐतदात्म्यमिदं सर्वमि"त्यन्वयव्यतिरेकाभावपरिहारेण सर्वतायाः ब्रह्ममात्रतायां पर्यवसानात्। यथा हि कुण्डलेऽन्तर्बहिश्च विचार्यमाणे सुवर्णातिरिक्तवस्त्वनुपलम्भादाद्यन्तयोश्चानुपलम्भात् सुवर्णमात्रताऽध्यवसीयते तथा विश्वस्य सत्प्रकाशातिरिक्तरूपालाभात्तावन्मात्रतायामेव शास्त्रस्य पर्यवसानात्। तस्माद्यस्मिन्नधिकरणे तत्त्वविचारणायामन्योऽन्यं न पश्यति न विजानाति स भूमेति द्रष्टृदृश्यादिविकल्पनिषेधेन दृश्याध्यासाधिकरणत्वोपलक्षितस्य विकल्पाविषयत्वमेव भूमलक्षणमिति युक्तम्। एतदेव विमर्शपूर्वकं स्फुटयति—किमत्रेत्यादिना। कस्मिन्पक्षे को लाभः का वा दोष इति शिष्यः पृच्छति—किञ्चात इति। आद्ये लाभं द्वितीये च दोषं दर्शयन्द्वितीयस्यानभिमतत्वं सूचयति—यदीत्यादिना। द्वितीयपक्षस्य दुष्टत्वं प्रश्नपूर्वकं स्फुटयति—यद्येवमित्यादिना। सति भेदे क्रियादेस्संसारत्वं लोके दृष्टं तद्वैलक्षण्यादेकस्मिन्नेव

आनन्दगिरिटीका

अत्रेति लक्षणवाक्योक्तिः। तत्र हेतुमाह—प्रायश इति। यस्मिन्नधिकरणे तत्त्वविचारणायामन्योऽन्यं न पश्यति न शृणोति न मनुते न विजानाति स भूमेति द्रष्टृदृश्यादिविकल्पनिषेधेनाध्यासाधिकरणत्वोपलक्षितस्य विकल्पाविषयत्वमेव भूमलक्षणमित्युपसंहरति—एवमिति। उक्तमेव लक्षणं स्फुटयितुं विमृशति—किमत्रेति। लोकप्रसिद्धदर्शनादिविषयत्वाभावमात्रं भूम्नो लक्षणं तन्निषेधेन स्वज्ञेयत्वं वेति विमर्शार्थः। कस्मिन्पक्षे को लाभः को वा दोष इति शिष्यः पृच्छति—किंचात इति। आद्यमनूद्य तत्र लाभं दर्शयति—यदीति। अन्यस्य प्रसिद्धस्य दर्शनादेर्विषयत्वं भूम्नि नास्तीत्येतावन्मात्रं तस्य लक्षणमित्युच्यते चेत्सर्वविकल्पातीतः प्रत्यगात्मा भूमेत्यस्मत्पक्षसिद्धिरित्यर्थः। द्वितीयं पक्षमनूद्य तस्मिन्दोषं सूचयति—अथेत्यादिना। तमेव दोषं प्रश्नपूर्वकं स्फुटयति—यद्येवमित्यादिना। सति

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तत्वे इति च्छेदः। साक्षाद्वाक्यार्थानन्तर्गतत्वेऽपि करणस्य तेन विना क्रियानुपपत्तेः अर्थात्तदन्तर्गतिरस्त्येवेति तन्निषेधोऽप्युक्तः। ननु नान्यज्जिघ्रतीत्यादि कुतो नोक्तः, न च नान्यत्पश्यतीत्यादिना तदुपलक्षितमिति वाच्यम्, तर्हि तेनैव शृणोतीत्यादिकमुपलक्ष्यतामित्याशङ्क्याऽऽह—नामरूपयोरिति। बाह्येन्द्रियव्यापारेण दर्शनादिना आन्तरस्य मननस्योपलक्षणमनुचितम्। अन्यथा विज्ञानस्यापि तथात्वसंभवेन पृथग्ग्रहणं न स्यादित्यभिप्रेत्याध्याहार्यमाह—मननं चेति। तर्हि तस्य ग्रहणमेव मा भूदित्याशङ्क्याऽऽह—प्रायश इति। श्रुतिषु प्रायेण मननपूर्वकत्वदर्शनाद्विज्ञानस्येत्यर्थः। नान्यत्पश्यतीति वाक्यस्य सविशेषणत्वात् विशिष्टनिषेधो वा वाक्यार्थः दर्शनविशेषणस्य अन्यविषयत्वमात्रस्यैव वेति विमृशति—किमत्रेति। अन्यविषयत्वनिषेधे दर्शनस्य निर्विषयत्वासंभवादात्मविषयत्वेन पर्यवस्यतीत्यभिप्रेत्यात्मानमित्युक्तम्। विशेषणनिषेधेऽपि विशिष्टनिषेधसिद्धेः पक्षद्वयेऽपि न विशेष इति पृच्छति—किंचात इति। विशिष्टविषयत्वस्य पक्षद्वये तुल्यत्वेऽपि तत्फलं भिद्यत इत्याह—यदीति। न तदेति। द्वैतसंव्यवहारलक्षणो न भवतीति भूमेत्युक्तमित्यन्वयः। विशिष्टनिषेधे क्रियाकर्तृकर्मकरणानां निषेधाद्भूम्नि द्वैताभावः सिध्यतीति भावः। नकाराभावपाठे अद्वैतेति छेदः, द्वैतसंव्यवहारलक्षणो न भवतीत्यर्थः। द्वितीयपक्षे क्रियाया अप्रतिषेधात् तस्या आत्मविषयत्वे सति क्रियादिद्वैतसिद्धिः फलमित्याह—अथेति। अन्यस्य दर्शनविषयस्य प्रतिषेधेन प्रतिषेधपर्यवसानेनेत्यर्थः। अभ्युपगतो भवेदिति। तथा च परिच्छिन्नत्वेनाल्पत्वात्सुखलक्षणो भूमा न भवेदिति भावः आत्मव्यतिरिक्तानङ्गीकारान्न परिच्छेदापत्तिरिति चोदयति—यद्येवमिति। क्रियायाः कारकसाध्यत्वात् कारकचक्रे वक्तव्ये किं व्यतिरिक्तकारकचक्रमङ्गीक्रियते, आत्मैव

क्रियाकारकफलभेदः संसारविलक्षण इति चेत् । न । आत्मनो निर्विशेषैकत्वाभ्युपगमे दर्शनादिक्रियाकारकफलभेदाभ्युपगमस्य शब्दमात्रत्वात् । अन्यदर्शनाद्यभावोक्तिपक्षेऽपि यत्रेत्यन्यन्न पश्यतीति च विशेषणे अनर्थके स्यातामिति चेत् । दृश्यते हि लोके यत्र शून्ये गृहेऽन्यन्न पश्यतीत्युक्ते स्तम्भादीनात्मानं च न न पश्यतीति गम्यते । एवमिहापीति चेत् । न । तत्त्वमसीत्येकत्वोपदेशादधिकरणाधिकर्तव्यभेदानुपपत्तेः । तथा सदेकमेवाद्वितीयं सत्यमिति षष्ठे निर्धारितत्वात् । "अदृश्येऽनात्म्ये" "न संदृशे तिष्ठति रूपमस्य" "विज्ञातारमरे केन विजानीयात्" इत्यादिश्रुतिभ्यः स्वात्मनि दर्शनाद्यनुपपत्तिः । यत्रेति विशेषणमनर्थकं प्राप्तमिति चेत् । न । अविद्याकृतभेदापेक्षत्वात् ।

### नरेन्द्रपुरीयं टिप्पणम्

क्रियाकारकभावस्यासंसारत्वमाशङ्क्यासम्भवमाह—आत्मैकत्व एवेत्यादिना । द्वितीयपक्षस्य दुष्टत्वे दर्शिते गुरुणा शिष्य आद्यपक्षस्यापि दोषवत्त्वं समानमित्याह—अन्यदर्शनादिति । न पश्यतीत्येतावतैव दर्शनाद्यभावलाभाद्यत्रेत्यन्यदिति च विशेषणे व्यर्थे स्यातामित्यर्थः । व्यर्थमेवैतादृशं वचनमिति न वाच्यमित्याह—दृश्यते हीति । विशेषणार्थवत्त्वान्यथानुपपत्त्याधिकरणाधिकर्तव्यभावः स्वात्मदर्शनं च वाच्यं श्रुतस्य वा गतिर्वाच्येत्युच्यते ? नाद्य इत्याह—न तत्त्वमिति । भूम्नि स्थितो मुक्तः स्वात्मभूतं भूमानं पश्यतीति न शक्यं कल्पयितुम् । बहुश्रुतिविरोधादित्यर्थः । द्वितीयमनूद्य गतिमाह—यत्रेत्यादिना । सत्येकस्मिन्नेव यत्रेति विशेषणमनर्हमप्युच्यते प्रसिद्धानुवादेनाधिकरणादि

### आनन्दगिरिटीका

क्रियाकारकफलभेदे कथं संसारानिवृत्तिस्तत्राऽऽह—क्रियेति । सति भेदे क्रियादेः संसारत्वं लोके दृष्टं तद्वैलक्षण्यादेकस्मिन्नेव क्रियाकारकभावस्य न संसारतेति चोदयति—आत्मैकत्व इति । एकस्मिन्क्रियादिभेदस्यासंभवं दर्शयन्नुत्तरमाह—नाऽऽत्मन इति । द्वितीयपक्षस्य दुष्टत्वे स्पष्टीकृते प्रथमपक्षस्यापि समानं दुष्टत्वमिति शिष्यः शङ्कते—अन्येति । आद्यपक्षेऽपि न पश्यतीत्येतावतैव दर्शनाद्यभावलाभाद्यत्रेत्यन्यदिति च विशेषणे व्यर्थे स्यातामित्यर्थः । व्यर्थमेवेदृशं वचनमित्याशङ्क्य शिष्यः स्वयमेव ब्रूते—दृश्यते हीति । लोके हि यत्र शून्ये गृहे नान्यत्पश्यति तद्वदत्तीयमिति प्रयोगो दृश्यते न च तस्य नैरर्थक्यमिष्टं व्यवहाराङ्गत्वात् । यथा च तस्मिन्यथोक्ते धनधान्याद्यदर्शनेऽपि स्तम्भादीन्गृहं च न न पश्यतीति श्रुतस्य नैरर्थक्यं न गम्यते । किंतु तत्र स्तम्भादीनां तस्य च दर्शनमिष्टं तथा यत्र नान्यत्पश्यतीत्यत्रापि विशेषणवैयर्थ्ये समाधानं वक्तव्यमित्यर्थः । किं विशेषणार्थवत्त्वानुपपत्त्या भूम्न्यधिकरणाधिकर्तव्यभावः स्वात्मदर्शनं च वाच्यमित्युच्यते किं वा श्रुतस्य गतिर्वक्तव्येति पृच्छ्यते तत्राऽऽद्यं दूषयति—नेत्यादिना । तथा तत्त्वमसीतिवदित्यर्थः । निर्धारितत्वादधिकरणाधिकर्तव्यभेदानुपपत्तिरिति शेषः । यच्चान्यन्न पश्यतीति विशेषणादात्मनः स्वदर्शनं वाच्यमिति तत्राऽऽह—अदृश्य इति ।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नानाकारकरूपेण वर्तते वेति विकल्प्य आद्यं दूषयति—नन्विति । द्वितीयं शङ्कते—आत्मैकत्व इति । आत्मैकत्वे सत्येव तदविरोधेन तस्मिन्नेव क्रियाकारकभेदाभ्युपगमात्, स्वव्यतिरिक्तकारकादेरेव संसारत्वात् न पूर्वदोष इत्यर्थः । एकस्मिन् क्रियाकारकभावस्य तस्यैव तत्प्रति कार्यत्वकारणत्वापत्त्या असंभवादेकस्यैव कर्तृकर्मत्वयोरप्यसंभवात्, निरंशे अंशभेदेनापि तदनुपपत्तेर्नायमपि पक्षस्साधुरित्याह—नेति । निर्विशेषत्वं निरंशत्वम् । त्वत्पक्षे यत्रेत्याधाराधेयभावस्यानुपपत्तिः, अन्यविशेषणं च व्यर्थं स्यादिति शङ्कते—अन्यदर्शनेति । कथं विशेषणयोः आनर्थक्यमित्याशङ्क्य तयोः प्रयोजनं तावद्दृष्टान्तेन दर्शयति—दृश्यते हीति । सप्तम्या आधारत्वप्रतिपादनं प्रयोजनं, अन्यविशेषणस्य तद्व्यतिरिक्तदर्शनप्रतिपादनं प्रयोजनम्, तदिहापि वक्तव्यम् । तस्य च ब्रह्मणि सर्वनिषेधपक्षे असंभवाद्विशेषणयोः वैयर्थ्यमित्याह—एवमिति । इहापीत्यनन्तरं वक्तव्यं तन्न संभवतीति शेषः ।

किं विशेषणबलात्सद्वितीयत्वं सिषाधयिषितमुत विशेषणस्य गतिमात्रं पृच्छ्यत इति विकल्प आद्ये अपरिच्छिन्नत्वेनोक्तं सुखरूपत्वं विरुध्येतेत्याह—नेति । यत्र स्थितो जीवो न पश्यतीत्येवं जीवेश्वरयोराधाराधेयत्वाङ्गीकारे बाधकमाह—तत्त्वमसीति । स्तम्भादिवदात्मदर्शनाङ्गीकारे बाधकमाह—तथेति । आत्मनो दर्शनगोचरत्वे तैत्तिरीयश्रुतिविरोधमप्याह—अदृश्य इति । आत्मत्वमर्हतीत्यात्म्यं देहादि, तद्रहिते अभयं प्रतिष्ठां विंदत इत्यर्थः । कठश्रुतिमप्याह—न सन्दृश इति । विज्ञातारं—विज्ञातृसाक्षिणमात्मानं केन कर्त्रा करणेन विजानीयान्न केनापि

यथा सत्येकत्वाद्वितीयत्वबुद्धिं प्रकृतामपेक्ष्य सदेकमेवाद्वितीयमिति संख्याद्यनर्हमप्युच्यते। एवं भूम्न्येकस्मिन्नेव यत्रेति विशेषणम्। अविद्यावस्थायामन्यदर्शनानुवादेन च भूम्नस्तदभावत्वलक्षणस्य विवक्षितत्वान्नान्यत्पश्यतीति विशेषणम्। तस्मात्संसारव्यवहारो भूम्नि नास्तीति समुदायार्थः। अथ यत्राविद्याविषयेऽन्योऽन्येनान्यत्पश्यतीति तदल्पमविद्याकालभावीत्यर्थः। यथा स्वप्नदृश्यं वस्तु प्राक् प्रबोधात्तत्कालभावीति तद्वत्। तत एव तन्मर्त्यं विनाशि स्वप्नवस्तुवदेव तद्विपरीतो भूमा यस्तदमृतम्। तच्छब्दोऽमृतत्वपरः। स तर्ह्येवंलक्षणो भूमा हे भगवन्कस्मिन्प्रतिष्ठित

## नरेन्द्रपुरीयं टिप्पणम्

विकल्पाविषयत्वस्य भूम्नो लक्षणस्य विधित्सितत्वादित्यर्थः। नान्यत्पश्यतीत्यपि विशेषणमनुवादाभिप्रायेणेति शेषः। भेददर्शननिन्दया भूम्न एव वस्तुत्वमाह—अथेत्यादिना। भूम्नः सुखत्वाभिधानात् सुखस्य चाश्रयपारतन्त्र्यप्रसिद्धेराश्रयं पृच्छति—स तर्हीति॥ १-२॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य चतुर्विंशः खण्डः

## आनन्दगिरिटीका

द्वितीयमनूद्य गतिमाह—यत्रेत्यादिना। परिहारभागं दृष्टान्तेन स्पष्टयति—यथेति। एकस्मिन्नेव भूम्नि यत्रेति विशेषणमनर्हमपि प्रयुज्यते प्रसिद्धानुवादेनाधिकरणादिविकल्पाविषयत्वलक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादित्याह—एवमिति। यदविद्यावस्थमन्यदर्शनादि तदनुवादेन नान्यत्पश्यतीति विशेषणं च भूम्नि न विरुध्यते दर्शनाद्यविषयत्वलक्षणस्य भूम्नो लक्षणस्य विवक्षितत्वादित्याह—अविद्येति। लक्षणवाक्यार्थमुपसंहरति—तस्मादिति। दर्शनादिसकलसांसारिकव्यवहाराभावोपलक्षितं तत्त्वं भूमेत्यर्थः। अथ यत्रेत्यादिवाक्यं व्याकरोति—अथेति। परिच्छिन्नस्याविद्याकालभावित्वं दृष्टान्तेन विवृणोति—यथेति। तत एव परिच्छिन्नत्वादिति यावत्। कथं तदमृतमिति भूम्नि तच्छब्दप्रयोगस्तत्राऽऽह—तच्छब्द इति। भूम्नः सुखत्ववचनात्तस्य चाऽऽश्रयं पृच्छति—

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

जानीयात् कर्त्रादिप्रकाशकस्य तत्प्रकाश्यत्वानुपपत्तेरित्यर्थः। द्वितीयमुद्भावयति—यत्रेतीति। अविद्याकालीनाधाराधेयभावानुवादित्वान्न दोष इत्याह—नेति। यथा सति अनेकत्वसद्वयत्वबुद्धिं प्रकृतामविद्याकालीनामपेक्ष्य अनूद्य तन्निषेधाभिप्रायेण सदेकमेवाद्वितीयमित्युच्यते, एवं भूम्नि अविद्याकालीनमाधाराधेयभावं यत्रेत्यनूद्य तस्य निषेधान्न तद्विशेषणानुपपत्तिरित्यर्थः। यद्यपि यत्रेत्यस्य न निषेध्यकोटिप्रवेशः तथापि यत्र पश्यति तन्नेति कथंचिन्निषेध्यकोटिप्रवेशः कल्पनीय इति भावः। विशेषणमित्यनन्तरं युक्तमिति शेषः। तथा अन्यत्वविशेषणस्याप्यनुवादार्थत्वान्न तस्याप्यनुपपत्तिरित्याह—अविद्येति। अत्रापि विशेषणमुपपन्नमिति योजना। सत्येकत्वाद्वितीयत्वमिति पाठे त्वयमर्थः—यथा एकोऽद्वितीयश्चन्द्र इत्यादौ एकत्वादिवैशिष्ट्यद्वारा बोधकत्वस्याव्युत्पन्नत्वात्तत्र प्रकृतां प्रसिद्धिमपेक्ष्य, तथा सदेकमेवाद्वितीयमित्यादावपि लोकव्युत्पत्त्यनुसारेणैव बोधनीयत्वात्तदेकत्वाद्यारोपेण लक्षणया वस्तुस्वरूपं बोध्यत इत्युक्तम्। तथा भूम्न्यपि यत्रेत्याधारत्वाद्यारोपेण त्रिविधपरिच्छेदशून्यं भूमस्वरूपं लक्षणया बोधयितुं यत्रेति पदमिति। अस्मिन्पक्षे यत्रेत्यन्यन्निषेध्यकोटिप्रवेशः कल्पनीयः। अस्य पदप्रयोजनन्तु पूर्ववदेवेति। त्रिविधपरिच्छेदशून्यमेव वस्तु भूमेत्युक्तार्थस्य व्यतिरेकद्वारा दार्ढ्याय अल्पशब्दव्याख्यानार्थं अथ यत्रेति वाक्यं, तद्व्याचष्टे—अथ यत्रेत्यादिना। ततश्च यत्र नान्यदित्यस्य प्रकारान्तरेण व्याख्यानेषु आधुनिकोत्प्रेक्षितेषु तानि अल्पत्वापत्तेः उत्तरवाक्यविरोधापत्तेः अनादर्तव्यानीति द्रष्टव्यम्। कालपरिच्छेदादल्पत्वमाह—अविद्याकालेति। इदमुपलक्षणम्, देशवस्तुपरिच्छेदयोरपि संभवात्। तथापि तस्य मृषात्वमपीति सूचयितुं अविद्याकालभावित्वमत्रोक्तम्। अथ यदल्पं तन्मर्त्यमिति वाक्यं व्यवहितमपि व्याख्यातवाक्योक्ताल्पत्वहेतूपजीवित्वात्तत्सम्बन्धतयैव व्याचष्टे—अत एवेति। इदानीं यो वै भूमेति वाक्यं व्याचष्टे—तद्विपरीत इति। भूम्नस्तच्छब्देनानुवादात्स इति वक्तव्यमित्याशङ्क्य विधेयापेक्षया क्लीबत्वं तच्छब्दस्य, विधेयस्यापि भावभवित्रोरभेदविवक्षया भावपरत्वेन क्लीबत्वमित्याह—तच्छब्द इति। अन्यथा असौ अमृत इति श्रूयेतेति भावः। न च भावप्रधाननिर्देशस्य प्रयोजनाभावः मोक्षरूपत्वप्रतीतिद्वारा नित्य-

गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्यो ह्यन्यस्मिन्प्रतिष्ठित॰ इति ॥ २ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य चतुर्विंशः खण्डः

इत्युक्तवन्तं नारदं प्रत्याह सनत्कुमारः। स्वे महिम्नीति स्व आत्मीये महिम्नि माहात्म्ये विभूतौ प्रतिष्ठितो भूमा। यदि प्रतिष्ठामिच्छसि क्वचिद्यदि वा परमार्थमेव पृच्छसि न महिम्न्यपि प्रतिष्ठित इति ब्रूमः। अप्रतिष्ठितोऽनाश्रितो भूमा क्वचिदपीत्यर्थः ॥ १ ॥

यदि स्वमहिम्नि प्रतिष्ठितो भूमा कथं तर्ह्यप्रतिष्ठ उच्यते। शृणु। गोअश्वादीह महिमेत्याचक्षते। गावश्चाश्वाश्च गोअश्वं द्वंद्वैकवद्भावः। सर्वत्र गवाश्वादि महिमेति प्रसिद्धं तदाश्रितस्तत्प्रतिष्ठश्चैत्रो भवति, यथा नाहमेवं स्वतोऽन्यं महिमानमाश्रितो भूमा चैत्रवदिति ब्रवीम्यत्र हेतुत्वेनान्यो ह्यन्यस्मिन्प्रतिष्ठित इति व्यवहितेन सम्बन्धः। किंत्वेवं ब्रवीमीति होवाच—स एवेत्यादि ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य चतुर्विंशः खण्डः

आनन्दगिरिटीका

स तर्हीति। व्यवहारदृष्ट्या प्रश्नो वस्तुदृष्ट्या वेति विकल्प्याऽऽद्यं प्रत्याह—इत्युक्तवन्तमिति। द्वितीयमनूद्य निराकरोति—यदीति ॥ १ ॥

पूर्वापरविरोधमाशङ्क्य परिहरति—यदीत्यादिना। भूम्नः स्वतोऽन्यस्मिन्प्रतिष्ठितत्वाभावोऽत्रेत्युच्यते तत्रान्यो हीत्यादिवाक्यस्य हेतुत्वेन हेतुना तेन व्यवहितेन नाहमेवं ब्रवीमीत्यस्य सम्बन्ध इति योजना। कथं तर्हि ब्रवीति भवानित्याशङ्क्याऽऽह—किंत्विति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य चतुर्विंशः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

त्वस्य ततो लाभात्। न च भूम्नो दर्शनाद्यगोचरत्वे तत्प्रतीत्यनुपपत्तिरिति शङ्क्यं, अखण्डैकरसानन्दस्य भूम्नः स्वप्रकाशत्वेन सुषुप्त्यादिषु साधनाभावेऽपि प्रतीतिदर्शनात्, तदेतदुपपादितं विद्याप्रकाशे—

अखण्डैकरसानन्दस्सोऽयमात्मा स्वयंप्रभः। समाधिसुप्तिमूर्च्छासु भासते साधनं विना ॥

अत एव 'उत्थितस्सुखमस्वाप्सं न जानेऽन्यदिति स्मरेत्'। इत्यादिना। ननु भूम्नः आधारवत्त्वेन सद्वितीयत्वेन यत्रेत्यादिनोक्तलक्षणानुपपत्तिः। आधाराभावे तज्ज्ञानमेव न संभवति। घटादेस्सर्वस्य साधारस्यैव प्रतीतिदर्शनादित्यभिप्रायेण पृष्टम्—स भगव इति। तद्याचष्टे—स तर्ह्येवंलक्षण इति। व्यवहारदशायां यदि प्रश्नः तर्हि स्वाज्ञानतत्कार्यरूपे जगति स्वमहिम्नि प्रतिष्ठितः। तत्र अस्ति भाति प्रियमित्येवं सच्चिदानन्दस्य भूम्नः प्रतीतेः मायाकार्यस्य प्रियादिवेदनस्यापि तदानीमङ्गीकारादित्याह—स्वे महिम्नीति। यदि प्रतिष्ठामिच्छसि क्वचित्तर्हि स्वमहिम्नीति पूर्वेणान्वयः। परमार्थविचारे तु प्रतिष्ठित एव न भवति। आकाशादिवदप्रतिष्ठितस्यापि प्रतीत्युपपत्तिरित्याह—यदि वेति ॥ १ ॥

स्वमहिमप्रतिष्ठत्वं वास्तवमेवास्तु चैत्रादेरिवेति चोदयति—यदीति। कथं तर्हीति। किमर्थमित्यर्थः, प्रतिष्ठितत्वं मुख्यमेवास्त्वित्यर्थः। दृष्टान्तेऽपि महिमशब्दितस्य गोअश्वादेः लोके चैत्राद्याधारत्वादर्शनात् महिमवतश्चैत्रादेः तदुपजीवित्वमात्रेण तत्प्रतिष्ठितत्वं उपचार एव। दार्ष्टान्तिके तु तथाविधस्यापि प्रतिष्ठितत्वस्य भूम्न्यद्वितीये असंभवात् स्वमहिमप्रतिष्ठितत्वोक्तिरप्रतिष्ठित्वाभिप्रायेवेत्याह—शृण्वित्यादिना। अन्यो ह्यन्यस्मिन्निति काकुः, तथा चान्यस्मिन्सति तत्प्रतिष्ठितत्वं वक्तुं शक्यते, तदभावादप्रतिष्ठित एव भूमेत्यर्थः। ब्रवीमीति। स होवाचेति वाक्यं किंत्वेवमिति पदाध्याहारेण स एवाधस्तादित्युत्तरकण्डिकान्वयेन योजयति—किं त्विति। एवंशब्दार्थ एव स एवेत्यादिः। ततश्चैवं वाक्ययोजना—नाहमेवं स्वव्यतिरिक्तमहिमानमङ्गीकृत्य तत्प्रतिष्ठित इति ब्रवीमि, किन्तु स एवेदं सर्वं ततोऽन्यन्नास्तीत्येवं ब्रवीमीति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य चतुर्विंशः खण्डः

[१]'स एवाधस्तात्स उपरिष्टात्स पश्चात्स पुरस्तात्स दक्षिणतः स उत्तरतः स एवेदँ सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदँ सर्वमिति ॥१॥

कस्मात्पुनः क्वचिन्न प्रतिष्ठित इत्युच्यते। यस्मात्स एव भूमाऽधस्तान्न तद्व्यतिरेकेणान्यद्विद्यते यस्मिन्प्रति-

आनन्दगिरिटीका

अवतारितमेव वाक्यं प्रश्नपूर्वकमवतार्य व्याचष्टे—कस्मादित्यादिना। उक्तमेवार्थं व्यतिरेकद्वारा

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु द्वितीयस्य वस्तुनः प्रत्यक्षादिप्रमाणसिद्धत्वात्कथं तदभाव इति शङ्कते—कस्मात्पुनरिति। प्रत्यक्षादिप्रतीतस्यापि आत्मसत्तयैव सत्वेन प्रतीतेरात्मन्यध्यस्तत्वेन तद्व्यतिरेकेणाभावादद्वितीयत्वमित्याह—यस्मात्स एवेति। अधस्तादिति। सप्तम्यन्तात्प्रथमान्ताद्वा अस्तीति प्रत्ययः, ततश्च अधोदेशः तत्रत्यो वा पदार्थः सर्वोऽपि स एवेति तदनुवादेन भूमत्वविधानादत्राधायां सामानाधिकरण्याद्भूमव्यतिरेकेणाभावो द्वितीयस्य सिध्यतीत्यर्थः। उक्तार्थस्य

---

१. "स एवाधस्तात्" इत्यादि—अत्र त्रयाणां भूमाहंकारात्मनां सर्वात्मत्वं सर्वस्वरूपत्वमुक्तम्। तत्र द्वयोर्भिन्नयोः सर्वात्मत्वस्य असंभवात् भूमात्मनोः सर्वात्मत्वं तयोरभेदबोधनाय। अहङ्कारस्य सर्वात्मत्वं अहंकारात्मनोः भेदबोधनाय। तदुक्तं विवरणे—"भेदेन प्रतिपन्नयोर्जीवब्रह्मणोः एकत्वसिद्ध्यर्थः तयोर्द्वयोः सर्वात्मत्वोपदेशः द्वयोः भिन्नयोः सर्वात्मत्वायोगात् एकस्य इतरात्मत्वाभावात् अहंकारस्य तु ज्ञानात् पूर्वमात्मैकत्वप्रतिपत्तेः तस्य आत्मनः पृथक् सर्वात्मत्वोपदेशः अहङ्कारस्य आत्मभिन्नत्वार्थः। ब्रह्मणः परोक्षस्य प्रत्यक्षत्वसिद्धये अहमात्मत्वमुपदिश्य पुनस्तद्व्युदासेन मुख्यात्मत्वोपदेशः आत्मैवाधस्तादित्यनेन। "महाभूतान्यहङ्कारः" इति तस्य क्षेत्रत्वोपदेशात्। अहङ्कारस्य सर्वात्मत्वं च अहंकारस्यान्तःकरणावच्छिन्नचैतन्यरूपतया तदेकदेशचैतन्यस्य सर्वात्मत्वादेवोपपादनीयम्।

रामानुजीयास्तु—"स एवाधस्तात्" इत्यादिना भूम्नः सर्वात्मत्वोपदेशः। "स एवेदं सर्वमि"ति सामानाधिकरण्यात् चिदचिद्वर्गस्य तच्छरीरत्वम्। सर्वात्मभूतस्य भूम्नः उपासने स्वशरीरकतयोपासनं कर्तव्यमित्युपदिशति अथातोऽहंकारादेश इति। अहङ्कारः अहंबुद्धिः। अहमिति परमात्मा उपास्य इत्यर्थः। अहंपदार्थस्य परमात्मभिन्नतया परमात्मनः कथमहमिति ध्यानमिति शङ्कायाः अहंपदस्य अहंशरीरकपरमात्मपरत्वात् तत्राहंग्रहो न भ्रान्तः इत्यर्थः। तदर्थमहमर्थस्य जीवस्यात्मत्वं परमात्मनः आह—आत्मैवाधस्तादित्यादिना इति।

अत्रेमे प्रश्ना अवतरन्ति—आत्मशब्दस्य परमात्मपरत्वं अध्यायारम्भे "तरति शोकमात्मविदि" त्यत्रोक्तम्। इदानी"मात्मैवाधस्तात्" इत्यत्र जीवपरत्वमुच्यते—जीवस्याणुत्वेन सर्वात्मत्वं कथमित्युक्ते जीवं प्रतिभूम्नः आत्मत्वबोधनायायमनुक्रमः इत्युच्यते। आत्मनः भूम्नः सर्वात्मत्वं स एवाधस्तादित्यनेनैव लब्धं, जीवमात्रस्यात्मा भूमा इति वक्तुं स एवाधस्तात् इत्यनुक्रम इत्युक्तिः न घटते। अहमेवाधस्तात् इत्यस्य अहङ्कारस्य सर्वात्मत्वोपदेशे स्फुटं प्रतीयमाने परमात्मनि अहमित्युपासनाविधिरयमित्युच्यते। अत्र विधिबोधकशब्दाभावादिदमयुक्तम्। अपि च तत्त्वमसीति स्पष्टं उपदेशविधौ प्रतीयमाने तन्नेत्युक्तं भवता। अत्र तु केवलं अहमर्थस्य सर्वात्मत्वे स्पष्टं प्रतीयमाने कथमयं अहमित्यात्मा ग्रहीतव्यः उपासनायामिति निर्णीतम्। 'आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"ति (ब्र० सू० ४-१-३) सूत्रस्य विषयतयापि नेदं वाक्यमुच्यते। तथा च स एवाधस्तादित्यनेनैव भवदुक्तः सर्वोपि विषयः सिध्यति इति अहंकारादेशात्मादेशयोः वैयर्थ्यमेव भवन्मते। अहङ्कारादेशस्य अहमिति परमात्मनः उपासनायां ग्रहणपरत्वे तस्य सर्वात्मत्वोपदेशः अत्यन्तं व्यर्थस्तदभावेऽपि भूमा अहमित्येवोपदेशोऽस्तु। आत्मादेश आत्मपदस्यान्तर्यामीत्यर्थो वक्तव्यः। स च जीवस्यैव वक्तुं प्रवृत्त इति सर्वान्तर्यामित्वोक्तिवैयर्थ्यम्। तदुक्तम्—यद्यपि स एवेदं सर्वमिति सामानाधिकरण्येनात्मत्वं फलति। अथापि कण्ठोक्त्या उपासकात्मत्वसिध्यर्थः इति। एवमत्रस्वमतानुसारेण मूलनयनं क्लिष्टमिति स्वयमेवाभ्युपगन्तव्यं भवति।

ष्ठितः स्यात्। तथोपरिष्टादित्यादि समानम्। सति भूम्नोऽन्यस्मिन्भूमा हि प्रतिष्ठितः स्यान्न तु तदस्ति। स एव तु सर्वम्। अतस्तस्मादसौ न क्वचित्प्रतिष्ठितः। यत्र नान्यत्पश्यतीत्यधिकरणाधिकर्तव्यतानिर्देशात्स एवाधस्तादिति च परोक्षनिर्देशाद्द्रष्टुर्जीवादन्यो भूमा स्यादित्याशङ्का कस्यचिन्मा भूदित्यथातोऽनन्तरमहंकारादेशोऽहंकारेणाऽऽदिश्यत इत्यहंकारादेशः। द्रष्टुरनन्यत्वदर्शनार्थं भूमैव निर्दिश्यतेऽहंकारेणाहमेवाधस्तादित्यादिना ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

अहङ्कारात्मत्वोपदेशस्याभिप्रायमाह—यत्र नान्यत्पश्यतीति ॥ १ ॥

आनन्दगिरिटीका

विवृणोति—सतीति। अहंकारात्मत्वोपदेशस्याभिप्रायमाह—यत्रेति। कोऽसावहंकारेणाऽऽदिश्यत इत्याशङ्क्य प्रयोजनानुवादपूर्वकमाह—द्रष्टुरिति ॥ १ ॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रकृतोपयोगं दर्शयति—सति भूम्न इति। स एव त्विति। सर्वतो धरादिषु यद्वर्तते तत्सर्वं स एवेत्यन्वयः, एवं जगतो भूम्नोऽन्यत्वाभावेऽपि जीवो भूम्नोऽन्यः स्यात्। यत्रेति भूम्नोऽधिकरणत्वेन निर्देशाद्द्रष्टुर्जीवस्याधिकर्तव्यत्वेन आधेयत्वेन निर्देशात् स एवेति भूम्नः परोक्षत्वेन निर्दिष्टस्य अपरोक्षजीवाद्भेदप्रतीतेश्चेति शङ्कते—यत्रेति। तदुत्तरत्वेन उत्तरश्रुतिमवतारयति—मा भूदिति। ननु अहङ्कारस्य आदेशः अहङ्कारादेश इति विग्रहे भूम्नोऽन्यस्य अहङ्कारशब्दितस्यानिरुद्धस्य आदेश इत्यर्थस्स्यात्, तस्य "जीवाख्यस्यानिरुद्धो यस्सोऽहङ्कार इतीरितः" इत्याद्यागमेष्वहङ्कारत्वेनोक्तत्वात्, ततश्च स एवेदं सर्वं यत्र नान्यत्पश्यतीत्युपक्रमस्य स स्वराड्भवति अन्यराजानस्ते क्षय्यलोका भवन्तीत्युत्तरवाक्यस्य च विरोधः स्यात् भेदापत्तेरित्याशङ्कयाह—अहङ्कारेणेति। अहङ्काररूपेणेत्यर्थः। तथा निर्देशस्य प्रयोजनमाह—द्रष्टुरिति। स एवाधस्तादित्यादिना सशब्दनिर्दिष्टो यो भूमा तस्य स एवाधस्तादिति सामानाधिकरण्येन अधस्तादित्यादिशब्दार्थत्वात्, तैश्शब्दैर्भूमानमासाद्य अधस्तादित्युक्तो यस्सोऽहमेवेति प्रत्यगात्माभेदो बोध्यत इति द्रष्टुरनन्यत्वं भूम्नः इत्यर्थः। एवं सति अहमेवेत्येवकारः सङ्गच्छते। अन्यथा भूम्नोऽपि तथाविधत्वेन अधस्तादहमेवेत्येवकारानुपपत्तेः। तथा स एवेदं सर्वमित्येतदप्यनुपपन्नं, भिन्नयोर्द्वयोस्सर्वात्मत्वायोगात्। न च सर्वगतत्वमेवात्र उच्यते न सर्वात्मत्वमिति वाच्यम्। तथासति अहं सर्वत्रेति स्यान्न सर्वमिति। न च स एवाधस्तादित्युपक्रमे सर्वगतत्वप्रतीतेरुपसंहारेऽपि तदेवोच्यत इति वाच्यम्, उपक्रमस्थस्य अधस्तादित्यादेः प्रथमान्तत्वेन स एव अहमेवेति प्रथमान्तसामानाधिकरण्येन सर्वात्मत्वपरत्वात्। सप्तम्यन्तत्वपक्षेऽपि अधोदेशे विद्यमानस्स एवेत्यर्थस्यैव स्वीकार्यत्वात्, अन्यथा स एव अहमेवेत्येवकारानुपपत्तेः। अन्यस्यापि तत्र सत्वात्। उभयोरपि सर्वगतत्वाच्च। न चाहं सर्वं भवत्येवेत्ययोगव्यवच्छेदक एवकारो नान्ययोगव्यवच्छेदक इति वाच्यम्। व्यवहितान्वयापत्तेः, स इदं सर्वमित्युक्त्यैव तत्सिद्धेः तदर्थमेवकारानपेक्षणाच्च। भूमलक्षणविरोधेन तद्भिन्नानिरुद्धनिरूपणस्य प्रकृतानपेक्षितत्वाच्च। न च तस्योपासनार्थं तन्निरूपणमिति वाच्यं, तस्याप्यप्रस्तुतत्वादन्यराजानस्ते क्षय्यलोका भवन्तीति निन्दाविरोधात्। उपासनायामन्यराजत्वस्यावश्यंभावात्। न च अथातोऽहङ्कारादेश इत्यथशब्दादर्थान्तरप्रतीतिरथैष ज्योतिरित्यादाविवेति वाच्यम्, अहङ्काररूपेणादेशस्य भूमरूपादेशादर्थान्तरत्वादथशब्दोपपत्तेः। अत एव अहङ्कारादेश एवेत्येवकारोऽपि अथशब्दोक्तार्थान्तरत्वमादेशस्यैवाह। आदेश एवार्थान्तरं, न त्वहंशब्दार्थ इति, अन्यथा एवकारस्य प्रयोजनान्तरादर्शनाद्वैयर्थ्यमेव स्यात्। यद्वा यदेव साक्षादपरोक्षादित्यत्रेव प्रकृताकर्षणार्थं एवकारः प्रकृतस्य भूम्न एव अहङ्कारेण आदेशो न त्वर्थान्तरस्येति, अहमर्थाभेदप्रतिपादनन्तु प्रकृतभूमलक्षणे अपेक्षितमिति तदभिधानमेव न्याय्यमिति भावः ॥ १ ॥

---

यत्तु अहमर्थस्य भूमाख्यब्रह्माभिन्नत्वेन प्रत्यक्षासिद्धत्वात् तदुपदेशो ब्रह्माभेदार्थो भवतु इति। तन्न। एवं चेत् वयमपि पृच्छामः, स एवाधस्तादित्येतत् जीवात् भेदेन ब्रह्मोपासनकर्तव्यतापरमस्तु। अहमेवेत्यादि तु परमात्मैक्यपरमस्तु। अपि च अहमर्थस्य "अहंकारश्चाहं कर्तव्यं च" "महाभूतान्यहंकारः" इति श्रुतिस्मृत्योः जडत्वेन कार्यत्वेन च प्रतिपन्नत्वात् तस्य प्रत्यक्षेणात्मत्वप्रतीतेः, तदुक्तिः भेदार्थं एव अभेदार्थत्वे श्रुतिस्मृतिबाधप्रसङ्गात् इति, यत्किञ्चिदेतत्।

अथात आत्मादेश एवाऽऽत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदँ सर्वमिति। स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति। [१]अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति तेषाँ सर्वेषु लोकेष्वकामचारो भवति ॥ २॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य पञ्चविंशः खण्डः

अहंकारेण देहादिसंघातोऽप्यादिश्यतेऽविवेकिभिरित्यतस्तदाशङ्का मा भूदित्यथानन्तरमात्मादेश आत्मनैव केवलेन सत्स्वरूपेण शुद्धेनाऽऽदिश्यते। आत्मैव सर्वतः सर्वमित्येवमेकमजं सर्वतो व्योमवत्पूर्णमन्यशून्यं पश्यन्स वा एष विद्वान्मननविज्ञानाभ्यामात्मरतिरात्मन्येव रती रमणं यस्य सोऽयमात्मरतिः। तथाऽऽत्मक्रीडः। देहमात्रसाधना रतिर्बाह्यसाधना क्रीडा। लोके स्त्रीभिः सखिभिश्च क्रीडतीति दर्शनात् न तथा विदुषः, किं तर्ह्यात्मविज्ञाननिमित्तमेवोभयं भवतीत्यर्थः। मिथुनं द्वन्द्वजनितं सुखं तदपि द्वंद्वनिरपेक्षं यस्य विदुषः। तथाऽऽत्मानन्दः शब्दादिनिमित्त आनन्दोऽविदुषां न तथाऽस्य विदुषः किं तर्ह्यात्मनिमित्तमेव सर्वं सर्वदा सर्वप्रकारेण च देहजीवितभोगादिनिमित्त-

नरेन्द्रपुरीयं टिप्पणम्

उक्तात्मविज्ञानवतः कृतकृत्यतामाह—आत्मैव सर्वत इत्यादिना। देहस्य जीवितं च भोगे त्यागे च निमित्तं

आनन्दगिरिटीका

अहंकारादेशात्पृथगात्मादेशस्य तात्पर्यमाह—अहंकारेणेति। उक्तात्मविज्ञानवतः कृतकृत्यतामाह—आत्मैवेति। एकमिति सजातीयभेदराहित्यस्योक्तिः। अन्यशून्यमिति विजातीयभेदशून्यत्वमुच्यते। रतिक्रीडयोरवान्तरभेदं दर्शयति—देहमात्रेति। क्रीडा बाह्यसाधनेत्यत्र लोकसंमतिमाह—लोक इति। देहस्य जीविते च भोगत्यागयोश्च निमित्तं बाह्यवस्तु तत्र सर्वत्र निरपेक्षो यदृच्छालाभेष्वासङ्गवर्जितो विद्वानित्याह—देहेति। जीवन्मुक्तिमुक्त्वा

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नन्वहङ्कारादेशेनैव द्रष्टृभेदसिद्धेरात्मादेशस्य नार्थ इत्याशङ्क्य अहंशब्देन अहङ्कारादि संघातग्रहणशङ्कानिवृत्तिः प्रयोजनमित्याह – अहङ्कारेणेति। न चाहमेवेदं सर्वमिति उक्तसर्वात्मत्वेनैव तच्छङ्कानिवृत्तिरिति वाच्यम्, व्यतिरिक्तात्मप्रदर्शने तस्यैवानुपपत्तेः। उपासनार्थं च वाक्यं स्यादिति भावः। इहापि पूर्ववदधस्तादित्यादिनोक्तस्य भूम्नोऽहङ्कारस्य वा आत्मैवेत्यात्मत्वं उपदिश्यते, अहङ्कारग्रहणे बाधायां सामानाधिकरण्यं, भूमग्रहणे तु ऐक्ये सामानाधिकरण्यमिति भेदः।

नन्वात्मादेशेनैव द्रष्टृभेदसिद्धेः अहङ्कारादेशोऽनर्थक इति चेन्न। अहं सुखीत्यादिप्रत्यक्षे, अहंरूपेणैव विषयत्वदर्शनात्, केवलात्मरूपेण प्रत्यक्षताऽदर्शनात्, स एवाधस्तादित्यादिनिर्देशप्राप्तपरोक्षत्वस्य निवृत्तिः अहंरूपेणैव निर्देशे भवति नान्यथेति, तथा निर्देशोऽर्थवान्। किंच आत्मेति निर्देशेऽपि न केवलात्मलाभः, आत्मशब्दस्य देहादिष्वपि प्रयोगेण सन्देहापत्तेः। अत एव 'एष आत्मा सर्वान्तर' 'आत्मैवास्य ज्योति'रित्युक्तेऽपि कतमो याज्ञवल्क्य सर्वान्तरः, कतम आत्मेति प्रश्नो दृश्यते, ततश्च केवलात्मलाभाय तस्य भूमाऽभेदसिध्यर्थं च अहंकारात्पृथङ्निर्देशः कर्तव्य एवेति, न किञ्चिदनुपपन्नम्। स वा एष एवं पश्यन्नित्युत्तरवाक्यस्थैवशब्दार्थमाह—आत्मैवेत्यादिना। मननविज्ञानयोः पाठतो दर्शनानन्तर्येऽपि तयोर्दर्शनहेतुत्वमेव तज्जननसामर्थ्यात्तयोरित्याह—मननेति। मननविज्ञानाभ्यां पश्यन्नित्यन्वयः। रतिक्रीडयोर्भेदमाह—देहेति। बाह्यसाधना क्रीडेत्यत्र लोकप्रयोगमाह—लोक इति। बालः स्वयमेव रमत इति प्रयोगः देहमात्रसाधनारतिरित्यत्र द्रष्टव्यः। उक्तवाक्यतात्पर्यार्थमाह—सर्वदेति। निरपेक्ष इति, विद्वानित्यनुषङ्गः। नन्वात्मरतिरित्यादिविशेषणैरिहैवान्यानपेक्षत्वेन

१. अथ येऽन्यथाऽतो विदुः द्वैतदर्शिनः जीवेशभेददर्शिनः क्षय्यलोका भवन्ति। अत्र कामचारत्वं औपचारिकं जीवन्मुक्ते उपचर्यते। वैकुण्ठगतस्यापि भगवन्नियम्यत्वमस्त्येव। अत एव जयविजययोः शापोऽनुमोदितो भगवता।

बाह्यवस्तुनिरपेक्ष इत्यर्थः। स एवंलक्षणो विद्वाञ्जीवन्नेव स्वाराज्येऽभिषिक्तः पतितेऽपि देहे स्वराडेव भवति। यत एवं भवति तत एव तस्य सर्वेषु लोकेषु कामचारो भवति। प्राणादिषु पूर्वभूमिषु तत्रास्येति तावन्मात्रपरिच्छिन्नकामचारत्वमुक्तमन्यराजत्वं चार्थप्राप्तं सातिशयत्वाद्यथाप्राप्तस्वाराज्यकामचारत्वानुवादेन तत्तन्निवृत्तिरिहोच्यते स स्वराडित्यादिना। अथ पुनर्येऽन्यथाऽत उक्तदर्शनादन्यथा वैपरीत्येन यथोक्तमेव वा सम्यङ्न विदुस्तेऽन्यराजानो भवन्ति अन्यः परो राजा स्वामी येषां तेऽन्यराजानस्ते। किंच क्षय्यो लोको येषां ते क्षय्यलोकाः। भेददर्शनस्याल्पविषयत्वादल्पं च तन्मर्त्यमित्यवोचाम। तस्माद्ये द्वैतदर्शिनस्ते क्षय्यलोकाः स्वदर्शनानुरूप्येणैव भवन्त्यत एव तेषां सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य पञ्चविंशः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

बाह्यवस्तु च तत्र निरपेक्षो यदृच्छालाभेऽपि संगरहित इत्यर्थः। एवं जीवन्मुक्तिं विद्याफलमुक्त्वा विदेहमुक्तिमाह—स एवं लक्षण इति। स्वाराज्यसर्वलोककामचारयोस्तात्पर्यमाह—प्राणादिष्विति। यावन्नाम्नो गतं तत्रास्य यथा-

### आनन्दगिरिटीका

विदेहमुक्तिं दर्शयति—स इति। स्वाराज्यं निमित्तीकृत्य फलान्तरमाह—यत एवमिति। स्वाराज्यसर्वलोककामचारयोस्तात्पर्यमाह—प्राणादिष्विति। यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवतीत्यादिना परिच्छिन्नं परतन्त्रं च पूर्वभूमिषु फलमुक्तमत्र तु परमानन्दप्राप्तौ तद्द्वयावृत्तिरुच्यते न तु सोपाधिकं रूपमित्यर्थः। फलप्रदर्शनद्वारेण स्तुत्वा विद्यामविद्वन्निन्दाद्वाराऽपि तां स्तौति—अथेत्यादिना। ते क्षय्यलोका भवन्तीति संबन्धः। भेददर्शिनां विनाशिफलत्वे हेतुमाह—भेददर्शनस्येति। परिच्छिन्नस्य विनाशित्ववचनं तस्मादिति परामृशति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य पञ्चविंशः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स्वाराज्यं अनन्याधिपतित्वं प्रतीयते, न देहपातानन्तमपीत्याशङ्क्य पश्चात्पारतन्त्र्यप्राप्तौ हेत्वभावात्सर्वदा स्वाराज्यमित्याह—स एवमिति। स्वराडिति। स्वयमेव स्वस्य राजा, नान्योऽस्य राजेत्यर्थः। स्वराट्त्वादेव निरङ्कुशङ्कामचारमाह—यत इति।

ननु पूर्वमपि तत्रास्य कामचारो भवतीत्यादिना एतदेव फलमुक्तमिति न भूमदर्शिनो विशेष इत्याशङ्क्याह—प्राणादिष्विति। तत्रास्येति। तत्रास्य यथा कामचारो भवतीति वाक्येनेत्यर्थः। तावन्मात्रेति। नामादिगोचरमात्रेत्यर्थः। अर्थप्राप्तमिति। परिच्छिन्नफलस्य पारतन्त्र्यव्याप्तत्वादित्यर्थः। यथाप्राप्तेति। आपेक्षिकस्वाराज्यकामचारानुवादेन तस्य सर्वेषु लोकेष्वित्यनेन आपेक्षिकत्वरूपपरिच्छेदनिवृत्तिरुच्यत इत्यर्थः। यद्वा भूमात्मज्ञानस्य भूमात्मप्राप्तिः फलं, ब्रह्म वेद ब्रह्मैव भवतीत्यादिश्रुतेः। न च भूम्न्यद्वितीये द्वितीयसापेक्षं कामचारित्वं स्वाराज्यं वा संभवतीत्याशङ्क्य प्राणादिविज्ञानेषु यत्परिच्छिन्नं कामचारित्वं फलं अन्यराजत्वं च तद्वदिहापि परिच्छिन्नमेव फलमिति शङ्काप्राप्तौ तन्निवृत्त्यर्थं स स्वराड्भवति सर्वेषु लोकेषु कामचारो भवतीत्युच्यते। न तु द्वितीयसापेक्षं उक्तफलं प्रापयितुमिति परिहरति—प्राणादिष्वित्यादिना। यथा प्राप्तेति। अन्यराजत्वस्य, परिच्छिन्नकामचारस्य च दुःखजनकत्वेन स्वाराज्यं निरङ्कुशङ्कामचारित्वं च मे स्यादिति सर्वोऽप्यविद्वान्प्रार्थयते, ततः प्रवृत्त्यर्थं तदिष्टफलानुवादमात्रं क्रियते। न तु तत्परमेव वाक्यम्। तथाविधस्य फलस्य द्वितीयापेक्षित्वेन मुक्तावसंभवात्। किन्तु परिच्छेदनिवृत्त्युपलक्षितब्रह्मप्राप्तिफलपरमेव। "शिखा ते वर्धते वत्स गलूचीं श्रद्धया पिब"। इति बालेप्सितशिखावृद्ध्यनुवादेन तदीयारोग्यफलपरमात्रवाक्यवदित्यर्थः। उक्तमेव अभेदं तज्ज्ञानफलं च व्यतिरेकप्रदर्शनेन द्रढयितुं पक्षान्तरमाह—अथेति। प्रकृतादर्थादर्थान्तरं अथशब्दार्थः। गृहीतं अन्यथात इति पदद्वयं व्याचष्टे—उक्तेति। न केवलं उक्ताभेदविपरीतज्ञानमेव अन्यथाज्ञानं किन्तु अभेदगोचरमप्येवं पश्यन्नित्युक्तौ परोक्षरहितमपीत्याह—यथोक्तमिति। लोकस्य क्षयमल्पत्वेन साधयति—भेदेति। अन्यतो भिद्यमानस्य परिच्छिन्नत्वेन अल्पत्वादित्यर्थः, तं यथा यथोपासते

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत [1]आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोऽन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽत्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥ १॥

तदेष श्लोको न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताꣳ सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतं च दश चैकश्च सहस्राणि च विꣳशतिराहारशुद्धौ सत्त्वशुद्धिः

तस्य ह वा एतस्येत्यादि स्वाराज्यं प्राप्तस्य प्रकृतस्य विदुष इत्यर्थः। प्राक्सदात्मविज्ञानात्स्वात्मनोऽन्यस्मात्सतः प्राणादेर्नामान्तस्योत्पत्तिप्रलयावभूतां सदात्मविज्ञाने तु सतीदानीं स्वात्मत एव संवृत्तौ तथा सर्वोऽप्यन्यो व्यवहार आत्मत एव विदुषः ॥ १ ॥

किंच तदेतस्मिन्नर्थ एष श्लोको मन्त्रोऽपि भवति। न पश्यः पश्यतीति पश्यो यथोक्तदर्शी विद्वानित्यर्थः।

नरेन्द्रपुरीयं टिप्पणम्

कामाचारो भवतीत्यादिना परिच्छिन्नं परतन्त्रं च फलमुक्तम्। तद्व्यावृत्तिः परमानन्दप्राप्तौ कथ्यते न तु सोपाधिकं रूपमित्यर्थः ॥ २ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य पञ्चविंशः खण्डः

उक्तविद्यास्तुत्यर्थं विदुषः स्रष्टृत्वमाह—तस्य ह वा इत्यादिना ॥ १ ॥

आनन्दगिरिटीका

उक्तविद्यास्तुत्यर्थमेव विदुषः स्रष्टृत्वमाह—तस्येति। तथा विदुषः स्रष्टृत्वव्यवहारवदित्यर्थः। क्रीडादिरन्यो व्यवहारः ॥ १ ॥

न केवलं ब्राह्मणोक्तमिह विद्याफलं किंतु मन्त्रोक्तं चेत्याह—किंचेति। तच्छब्दार्थः सप्तम्या निर्दिश्यते। स च विद्याफलरूपः। न पश्य इति मन्त्रमादाय व्याचष्टे—पश्यतीत्यादिना। सर्वमाप्नोतीति पूर्णता परिच्छेदभ्रम-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तदेव भवतीति न्यायेन तथाविधफलं तेषां युक्तमित्याह—स्वप्नदर्शनेति। स्वप्नदर्शनानुरूप्येणेति पाठे स्वप्नदर्शनदृष्टान्तेनेत्यर्थः ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य पञ्चविंशः खण्डः

उक्तं स्वाराज्यफलं विवरीतुं तस्य ह वेत्यादि। तद्व्याचष्टे—तस्य ह वेत्यादिना, सत इति। ब्रह्मण इत्यर्थः। संवृत्ताविति। उत्पत्तिप्रलयावित्यनुषङ्गः आत्मत एवेदं सर्वमित्यस्यार्थमाह—तथेति ॥ १ ॥

किं च आत्मतः प्राण इत्यादौ तसिः प्रथमार्थे ततश्च प्राणादिस्सर्वोऽपि प्रपञ्चोऽस्य विदुषः आत्मैव सम्पद्यत इति सर्वात्मभावफलमनेन वाक्येन प्रदर्श्यत इति तस्य हेत्यादिवाक्यस्य अर्थान्तरं किंचशब्देन समुच्चिन्वन् अत्रार्थे मन्त्रमवतारयति—किंच तदेतस्मिन्निति। किञ्चशब्दो ब्राह्मणेन मन्त्रसमुच्चयार्थः, पश्यतीति दृशेः पाघ्रादिसूत्रेण

१. आत्मतः प्राण आत्मत आशेत्यादि—अत्र परैः इदमुपासकान्तर्यामिणः प्राणशब्दितजीवपर्यन्तसकलप्रपञ्चोपादानत्वोक्तिः इत्युक्तम्। मूले—"तस्य वा एवं पश्यत एवं विजानतः आत्मतस्तेज" इत्युक्तम्। तस्मात् ब्रह्मविद एव सर्वोपादानत्वं स्पष्टं प्रतीयते। परे तु जीवस्य जगद्व्यापारवर्जं अधिकारात् एवं व्याख्यानप्रवृत्तिः। अस्माकं तु यथाश्रुतमेव संगच्छते, ब्रह्मविदो ब्रह्मरूपत्वात् मुक्तस्य सृष्ट्यादावधिकारोऽस्त्येव। आत्मतः प्राण इत्यादौ तसिः पञ्चम्यर्थेऽपि संगच्छते। प्रथमार्थे। प्रागेव सदेव सोम्येत्यादिना सर्वोपादानत्वं ब्रह्मणः उक्तमेवेति वैयर्थ्यं च।

[1]सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय

मृत्युं मरणं रोगं ज्वरादि दुःखतां दुःखभावं चापि न पश्यति। सर्वं ह सर्वमेव स पश्यः पश्यत्यात्मानमेव सर्वं ततः सर्वमाप्नोति सर्वशः सर्वप्रकारैरिति। किंच स विद्वान्प्राक्सृष्टिप्रभेदादेकधैव भवत्येकधैव च संत्रिधादिभेदैरनन्तभेदप्रकारो भवति सृष्टिकाले। पुनः संहारकाले मूलमेव स्वं पारमार्थिकमेकधाभावं प्रतिपद्यते स्वतन्त्र एवेति विद्यां फलेन प्ररोचयन्स्तौति। अथेदानीं यथोक्ताया विद्यायाः सम्यगवभासकारणं मुखावभासकारणस्येवाऽऽदर्शस्य विशुद्धिकारणं साधनमुपदिश्यते—आहारशुद्धौ। आह्रियत इत्याहारः शब्दादिविषयविज्ञानं भोक्तुर्भोगायाऽऽह्रियते तस्य विषयोपलब्धिलक्षणस्य विज्ञानस्य शुद्धिराहारशुद्धी रागद्वेषमोहदोषैरसंसृष्टं विषयविज्ञानमित्यर्थः। तस्यामा-

नरेन्द्रपुरीयं टिप्पणम्

सर्वमाप्नोतीति। पूर्णता विवक्षिता परिच्छेदभ्रमव्यावर्तनेन न तु कर्माभिभावोऽपुरुषार्थत्वप्रसङ्गादित्यर्थः। सगुणविद्याफलमपि निर्गुणब्रह्मविदाप्नोतीति स्तुतिपौष्कल्यायोच्यते—किञ्चेत्यादिना। त्रिधेति। तेजोऽबन्नरूपेण

आनन्दगिरिटीका

व्यावर्तनेन विवक्षिता न तु क्रिमिकीटकादिभावोऽपुरुषार्थत्वप्रसङ्गादिति द्रष्टव्यम्। विद्यास्तुतिपौष्कल्यार्थं सगुणविद्याफलमपि निर्गुणब्रह्मविदाप्नोतीत्याह—किंचेति। त्रिधा तेजोऽबन्नरूपेण। शब्दस्पर्शादिरादिशब्दार्थः। विद्यां तत्फलं तदपेक्षितां स्तुतिं चाभिधायाऽऽहारशुद्धावित्यादेस्तात्पर्यमाह—अथेति। "रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्नि"त्यादिस्मृतिमाश्रित्याऽऽहारशब्दं व्याकरोति—आह्रियत इतीति। कथं तस्याऽऽह्रियमाणत्वं तत्राऽऽह—भोक्तुरिति। कीदृशी तस्य शुद्धिरित्याशङ्क्याऽऽह—रागेति। आहारशुद्धिफलमाह—तस्यामिति। अन्तःकरणशुद्धिफलं

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

शप्प्रत्यये पश्य इति रूपमित्यर्थः। मृत्युरोगाद्यभावे हेतुं साधनमाह—सर्वं हेति। सर्वमाप्नोतीति। सर्वं सर्वात्मकं भूमानमाप्नोतीत्यर्थः। आप्तेस्सम्बन्धमात्रत्वं वारयति—सर्वश इति। निरन्तरमित्यर्थः। इदानीमल्पत्वनिवृत्त्यर्थं उक्तकामचारफलविवरणार्थं स एकधेत्यादिवाक्यं व्याकरोति—किंचेति। पुनस्संहारकाल इति। अनेन भाष्येण शतं च दश एकं चेत्यत्रत्यस्य एकशब्दस्य विंशतिरित्यनन्तरं अन्वय इति व्याख्यातम्। स्वतन्त्र एवेति। सृष्टिसंहारयोः स्वातन्त्र्यमुक्तं त्रिधादिभावो न विद्याफलं मुक्तौ भेदाभावादित्याशङ्क्य ब्रह्मप्राप्तौ सत्यां ब्रह्मभूतस्य उपादानाभावेन नानारूपत्वं स्तुत्यर्थमुच्यत इत्याह—विद्यामिति। रागद्वेषमोहादीति।

१. सत्वशुद्धौ ध्रुवा स्मृतिः इति–अत्र परैः ध्रुवा स्मृतिः अविच्छिन्नस्मृतिसंतानरूपमात्मध्यानं, स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष इत्युक्तेः तादृशध्यानमेव मोक्षसाधनं न तु ध्यानानन्तरभाविदर्शनरूपसाक्षात्कार इति अद्वैताभिप्रायोऽखण्डि। अत्रोच्यते—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।" इति मुण्डकादौ दर्शनादेव ग्रन्थिभेदोक्तेः का गतिः? न च विनिगमकाभावः "को मोहः कः शोक एकत्वमनुपश्यतः" "तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां शान्तिः शाश्वती नेतरेषां" "यो वेद निहितं गुहायां सोऽश्नुते सर्वान् कामान् सह" "तमेवैकं जानथ आत्मानं" "परमं ब्रह्म वेद" "ब्रह्म ततममपश्यत्" "तद्धास्य विजज्ञौ" "ब्रह्म वेद ब्रह्मैव भवति" "पश्यन् प्रतिपेदे" इत्यादिषु बहुषु प्रदेशेषु दर्शनाख्यसाक्षात्कारस्यैव ग्रन्थिभेदकत्वोक्तेः। वेदनं च ज्ञानमेव क्वचित् विदिनाऽऽरभ्य उपासिनोपसंहारः परोक्षज्ञानानन्तरमुपासनं कार्यमित्येतदर्थम्। उपासनप्रकरणेष्वेव "आदित्यं ब्रह्मेत्युपासीत" इत्यादिषु तदुक्तेः।

तथा च ध्रुवा स्मृतिः अस्मन्मते दृढः संस्कारः एव। तस्य स्मृतित्वोक्तिस्तु आत्मनः स्वप्रकाशत्वेन तस्मिन् सत्यज्ञानानन्दादयः तद्रूपत्वात् संसारदशायामपि प्रकाशन्त एव अपि तु पूर्णानन्दांशमात्रमावृतत्वान्न प्रकाशते तदपि उपदेशलब्धसाक्षात्कारेणाविद्यानिवृत्तौ प्रकाशते। साक्षात्कारश्च नापूर्ववस्तुदर्शनं, अपि तु कण्ठगतविस्मृतचामीकरन्यायेन अज्ञानेन विस्मृतस्योपदेशेन स्मरणसदृशं ज्ञानं स्मृतिसादृश्यात् स्मृतिरित्युक्तम्।

**तमसस्पारं दर्शयति भगवान्सनत्कुमारस्तँ स्कन्द इत्याचक्षते तँ स्कन्द इत्याचक्षते ॥ २ ॥**

[1]इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य षड्विंशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे सप्तमोऽध्यायः समाप्तः

हारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति। सत्त्वशुद्धौ च सत्यां यथावगते भूमात्मनि ध्रुवाऽविच्छिन्ना स्मृतिरविस्मरणं भवति। तस्यां च लब्धायां स्मृतिलम्भे सति सर्वेषामविद्याकृतानर्थपाशरूपाणामनेकजन्मान्तरानुभवभावनाकठिनीकृतानां हृदयाश्रयाणां ग्रन्थीनां विप्रमोक्षो विशेषेण प्रमोक्षणं विनाशो भवतीति। यत एतदुत्तरोत्तरं यथोक्तमाहारशुद्धिमूलं तस्मात्सा कार्येत्यर्थः। सर्वं शास्त्रार्थमशेषत उक्त्वाऽऽख्यायिकामुपसंहरति श्रुतिः—तस्मै मृदितकषायाय वार्क्षादिरिव कषायो रागद्वेषादिदोषः सत्त्वस्य रञ्जनारूपत्वात्स ज्ञानवैराग्याभ्यासरूपक्षारेण क्षालितो मृदितो विनाशितो यस्य नारदस्य तस्मै योग्याय मृदितकषायाय तमसोऽविद्यालक्षणात्पारं परमार्थतत्त्वं दर्शयति दर्शितवानित्यर्थः। कोऽसौ, भगवान्—

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥"

### नरेन्द्रपुरीयं टिप्पणम्

त्रिभेदैरिति त्रयाणां भेदैः शब्दस्पर्शादिभिरित्यर्थः। आहारशब्देनाभ्यवहार्यमात्रमुच्यते। तत्किञ्चिज्जातिदुष्टं भवति लशुनादि। किंचिदाश्रयदुष्टम्अभिशस्तपतितान्नम् किंचिन्निमित्तदुष्टं केशकीटदुष्टम्, किञ्चित्कालविशेषदुष्टं यथा पर्युषितादि। एतैं रहितत्वं शुद्धत्वमिति व्याख्याय भास्करेण शाङ्करव्याख्यानमदूषि। प्राथम्यादशनस्य अन्नरसपुष्टौ हि विषयानीक्षत इति। तत्रोच्यते—अहो धृष्टोऽयं त्रिदण्डी यत्पदार्थानभिज्ञोऽपि ग्रन्थं कृत्वा ख्यातिमुपगतः। न ह्यन्याधिकरणं शुद्धत्वं सत्तया सत्वशुद्धेर्हेतुरतिप्रसङ्गात्। किन्तु तद्भोगो विषयोपलब्धिश्च पुरुषस्य भोगः प्रसिद्धः चर्वणन्निगरणादेः

### आनन्दगिरिटीका

कथयति—सत्त्वेति। स्मृतिलाभफलं दर्शयति—तस्यां चेति। भवतीत्याहारशुद्धिरपेक्षितेति शेषः। प्रकृतवाक्यतात्प-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा प्रसादमभिगच्छति ॥

इति स्मृतेरिति भावः। कठिनीकृतानामिति। दुर्भेदानामित्यर्थः। नित्यानुवादतां वारयति—यत इति। वार्क्षादिरिति। वृक्षत्वगादिजन्य इत्यर्थः। यथा वार्क्षादिः कषायो वस्त्रादिरञ्जकः, तथा रागादिस्सत्त्वस्य रञ्जक

---

1. तं स्कन्द इत्याचक्षते-इति। तथाहि त्रिपुरारहस्ये माहात्म्यखण्डे सप्तत्रिंशाध्याये ब्रह्मपुत्रः सनत्कुमाराख्यो ऋषिः ऋषभपर्वते वसन् तत्रागतं स्वपितरं ब्रह्माणं पप्रच्छ—"हे पितः! मया स्वप्ने देवासुराणां महद्युद्धं तत्र मत्कृतदानववधश्च दृष्टः। तस्य किं कारणम्" इति। ब्रह्माऽवदत्–"पुत्र! पूर्वजन्मनि त्वं विप्रकुले जनित्वा देवासुराणां युद्धं श्रुत्वा स्वयमसुरान् जेतुं कृतसंकल्पः अनन्याराधनं कुर्वाण एव मृतः। ततः उपासनाप्रभावात् मम पुत्रत्वेन संजातः तत्पूर्वजन्मवासनया त्वया ईदृशं दृष्टम्। त्वं स्वेच्छया अन्यत् जन्म लब्ध्वा तत्सर्वं साधयिष्यसि" इति। इत्युक्त्वा निर्गतः। ततो गच्छति काले कदाचिद् भगवान् शङ्करः पार्वत्या सह तं देशमाजगाम। आनन्दमग्नं किमपि परिचर्यादिकमकुर्वाणं स्तब्धं तं दृष्ट्वा कुपितोऽपि भगवान् सौम्यया वाचा "वरमभीष्टं ददामि ते" इत्युपाच्छन्दयत्। सनत्कुमारस्तु "अहमेव ते वरं दद्यामिति" प्रोवाच। भगवांस्तु "तर्हि त्वं मम पुत्रो भव" इति वरं वव्रे, तदङ्गीकृत्य "अहं तवायोनिजपुत्रो भविष्यामि" इति जगाद। देव्या तु स्वशरीरसम्बन्धाभावे मत्पुत्रत्वं दृढं न भविष्यतीत्युक्ते सनत्कुमारः-"यत्र देवी शरीरं विस्रक्ष्यति तत्र शरवणं उत्पत्स्यते तद्वनेऽहं जन्म लभेयमि"ति तामपि सान्त्वयामास। ततः कदाचित् शरवणे स्कन्दो जातः। देवकार्यं चासुरसंहारादिकमकरोदिति।

एवंधर्मा सनत्कुमारः। तमेव सनत्कुमारं देवं स्कन्द इत्याचक्षते कथयन्ति तद्विदः। द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ २ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये सप्तमाध्यायस्य षड्विंशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्य श्रीमच्छङ्करभगवत्पादकृतौ च्छान्दोग्योपनिषद्विवरणे सप्तमोऽध्यायः

## नरेन्द्रपुरीयं टिप्पणम्

प्राणव्यापारत्वात् प्राथम्यं चासिद्धं ज्ञानं विना अशितुमशक्यत्वात्। तस्माद्यदृच्छयोपनतस्यान्नपानादेर्विषयस्य रागादिरहितैरिन्द्रियैर्ग्रहणमेवाहारशुद्धिः सत्वशुद्धेर्हेतुः। तदुक्तं गीतायाम्—

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्। आत्मवश्यैर्विधेयात्मा प्रसादमभिगच्छति ॥ इति।

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यां सप्तमाध्यायस्य षड्विंशः खण्डः

इति शाङ्करच्छान्दोग्यभाष्यटिप्पणे सप्तमोऽध्यायः।

## आनन्दगिरिटीका

यमुपसंहरति—यत इति। तस्मै मृदितकषायायेत्यादिवाक्यमवतार्य व्याचष्टे—सर्वमिति। आर्गाति गतिमायव्ययौ। तस्य वैशिष्ट्यान्तरमाह—तमेवेति ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायां सप्तमाध्यायस्य षड्विंशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां श्रीशङ्करभगवत्कृतच्छान्दोग्योपनिषद्भाष्यटीकायां सप्तमोऽध्यायः समाप्तः।

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इत्यर्थः। आदिशब्दो गैरिकादिधातुपरः। तस्य सनत्कुमारस्य सर्वज्ञत्वार्थं ईशानस्सर्वविद्यानामिति श्रुत्युक्तपरमेश्वरपुत्रत्वेन शिष्यत्वेन च प्रसिद्धसार्वज्ञ्यस्कन्दनाम्ना आहेत्याह—तमेवेति ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य षड्विंशः खण्डः

श्रीशङ्करभगवत्कृतच्छान्दोग्यभाष्यटीकायां सप्तमोऽध्यायः समाप्तः

## अथ अष्टमोऽध्यायः

**ॐ अथ यदिदमस्मिन्ब्रह्मपुरे [1]दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥**

**यद्यपि दिग्देशकालादिभेदशून्यं ब्रह्म सदेकमेवाद्वितीयमात्मैवेदं सर्वमिति षष्ठसप्तमयोरधिगतं तथाऽपीह**

### नरेन्द्रपुरीयं टिप्पणम्

ॐ यज्ञात्मा सर्वभूतानां पाप्मलेपादिवर्जितः । उपाधेस्सत्यकामादिस्सोऽहं दहर ईश्वरः ॥

षष्ठसप्तमयोर्निर्विशेषब्रह्मात्मैकत्वज्ञानमुपदिष्टं यदर्थं उपनिषदारम्भः, इदानीं वक्तव्यस्यानवशेषितत्वादष्टमाध्यारम्भो न सम्भवतीत्याशङ्क्याह—यद्यपीत्यादिना । केवलं मन्दाधिकारो हृदयदेशोपदेशः, पूर्वाध्यायानुक्त-

### आनन्दगिरिटीका

पूर्वस्मिन्नध्यायद्वये निर्विशेषमात्मतत्त्वमनवच्छिन्नं सदानन्दैकतानमावेदितं तथा चोपनिषदारम्भे चरितार्थे किमवशिष्यते यदर्थमध्यायान्तरमित्याशङ्क्याऽऽह—यद्यपीति । कर्तुमिति तदधिगमाय विशिष्टो देश उपदेष्टव्य इति संबन्धः । मन्दबुद्धीनां तर्हि परमार्थवस्तुनो ब्रह्मणोऽधिगतिरपेक्षितेत्यर्थः । न केवलं मन्दाधिकारिणां ब्रह्माधि-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

षष्ठेऽध्याये ब्रह्मणस्सद्रूपत्वं निर्धार्य एकत्वाद्वितीयत्वादिकं निर्धारितम् । सप्तमे च तस्यैव यत्र नान्यदित्यादिना अद्वितीयत्वानुवादेन यो वै भूमा तत्सुखमित्यादिना आनन्दरूपत्वं प्राधान्येन निर्धारितम् । अथेदानीं चिद्रूपत्वमष्टमाध्याय आरभ्यते । य एषोऽक्षिणि पुरुषो दृश्यत इत्यादिना अवस्थात्रयसाक्षिणमुक्त्वा तस्य "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इत्यवस्थात्रयमपोह्य "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इति, परज्योतिश्शब्दितस्वप्रकाशब्रह्मत्वोक्तेः । "अथ यो वेदेदं जिघ्राणी"त्यादिना घ्रात्रादित्रिपुटीसाक्षित्वोक्तेश्च चिद्रूपत्वप्रतिपादनात् । तस्यैवं सच्चिदानन्दाद्वितीयस्य ब्रह्मणः हृदयपुण्डरीकदेशसम्बन्धः, सत्यकामादि गुणवत्त्वम्, तत्त्वमसि, आत्मैवाधस्तात्परं ज्योतिरुपसम्पद्य स उत्तमः पुरुष इति प्रत्यगभिन्नत्वेन उक्तस्य गन्तव्यत्वम्, स यदि पितृलोककाम इत्यादिना पित्रादिफलं च न युज्यत इत्याशङ्क्य य आत्मा अपहतपाप्मेत्यतः प्राक्तनस्य देशादिसम्बन्धप्रतिपादकस्य ग्रन्थस्य पूर्वोक्तब्रह्मप्रतिपत्त्यसमर्थान् मन्दान्प्रति देशाद्यारोपेण तद्विशिष्टब्रह्मोपास्तिविधानार्थत्वमाह—यद्यपीत्यादिना ।

---

१. अत्र षष्ठखण्डान्तोऽध्यायः दहरविद्यां प्रतिपादयति । सा च बह्वीषु शाखासुपठ्यमानतया सर्ववेदान्तप्रत्ययं "चोदनाद्यविशेषात्" इतिन्यायेन एकैव विद्या इतरेतरगुणोपसंहारश्चेति वक्तव्यम् । तथाहि दहरविद्याप्रकाशिकायाम् अभिनवनारायणानन्देन्द्रसरस्वतीशिष्यपरमशिवेन्द्रसरस्वतीविरचितायाम्—

(१) छान्दोग्ये—"य आत्मा अपहतपाप्मा विरजो विमृत्युः" इत्यादिना अष्टौ गुणा उपास्यतया निर्धारिताः । द्यावापृथिव्यादिसमाधानाधारत्वं हृदयनामनिर्वचनं सत्यशब्दाक्षरार्थकथनं चतत्तच्छङ्कानिराकरणाय न तूपास्यत्वेन ।

(२) बृहदारण्यके—"सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" इति गुणत्रयमेवोपासनार्थम् । "स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्" इति विद्वत्फलकथनम् । "एष सर्वेश्वर एष भूताधिपति" इत्यादिकमीश्वरस्तुतिः "य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते" इति तु उपासनस्थानोक्तिः ।

(३) कैवल्योपनिषदि—"हृत्पुण्डरीकं विरजं विशुद्धमि"त्यारभ्य"उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं ध्यात्वा मुनिर्गच्छति भूतयोनिमि"तिफलेन सहोपासनविधिः ।

(४) तैत्तिरीयके तु"दह्रं विपापमि"त्यारभ्य"तस्मिन् यदन्तस्तदुपासितव्यमि"त्युपासनविधिः । "यो वेदादौ स्वरः प्रोक्तः यः परस्स महेश्वरः" इति प्रणवार्थत्वेन महेश्वरत्वेन च प्रस्तुत्य "सहस्रशीर्षं देवमि"त्यादिना

मन्दबुद्धीनां दिग्देशादिभेदवद्वस्त्वित्येवं भाविता बुद्धिर्न शक्यते सहसा परमार्थविषया कर्तुमित्यनधिगम्य च ब्रह्म न पुरुषार्थसिद्धिरिति तदधिगमाय हृदयपुण्डरीकदेश उपदेष्टव्यः। यद्यपि सत्सम्यक्प्रत्ययैकविषयं निर्गुणं चाऽऽत्मतत्त्वं तथाऽपि मन्दबुद्धीनां गुणवत्त्वस्येष्टत्वात्सत्यकामादिगुणवत्त्वं च वक्तव्यम्। तथा यद्यपि ब्रह्मविदां स्त्र्यादिविषयेभ्यः स्वयमेवोपरमो भवति तथाऽप्यनेकजन्मविषयसेवाभ्यासजनिता विषयविषया तृष्णा न सहसा निवर्तयितुं शक्यत इति ब्रह्मचर्यादिसाधनविशेषो विधातव्यः। तथा यद्यप्यात्मैकत्वविदां गन्तृगमनगन्तव्याभावादविद्याविशेषस्थिति-

## नरेन्द्रपुरीयं टिप्पणम्

गुणाद्यर्थान्तरोपदेशश्च कर्तव्य इत्याह—यद्यपि सदिति। अविद्याविशेष एव विद्वच्छरीरस्थितेर्निमित्तं तस्य क्षये यद्यपि स्वात्मन्येव निवृत्तिरित्युत्तरेण सम्बन्धः। स्वात्मनि निर्वाणे विकृतरूपत्यागे च स्वरूपावस्थानलक्षणे दृष्टान्त-

## आनन्दगिरिटीका

गमशेषत्वेन हृदयदेशोपदेश एवात्र कर्तव्यः किं तु पूर्वत्रानुक्तगुणाद्यर्थान्तरोपदेशश्च कार्य इत्याह—यद्यपीति। अव-शिष्टमर्थान्तरमुपदेष्टव्यमन्वाचष्टे—तथेति। मन्दधियां ब्रह्मधीशेषत्वेन देशविशेषवद्गुणविशेषवच्च ब्रह्मचर्यादिसाधन-विशेषो विधातव्य इति संबन्धः। शब्दोत्थब्रह्मज्ञानवतां विधिं विनाऽपि विषयवैमुख्यसंभवात्किं विधिनेत्याशङ्क्याऽऽह—यद्यपि ब्रह्मविदामिति। यथा साधनविशेषो वक्तव्योऽवशिष्यते तथोपासकानां गतिश्च वक्तव्येत्यवशिष्टमर्थान्तर-माह—तथेति। एकत्वदर्शिनां गन्त्रादिसर्वभेदप्रत्ययास्तमयादविद्याविशेषस्य देहस्थितिनिमित्तस्य क्षये सति निवृत्ति-संभवात्कुतो गतिर्वक्तव्येत्याशङ्क्याऽऽह—यद्यप्यात्मैकत्वविदामिति। अविद्यादिशेषस्थितिनिमित्तक्षये स्वात्मन्येव

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

न केवलं सद्रूपेणैव अद्वितीयत्वमुक्तम्, किन्तु प्रत्यग्रूपेणापीत्याह—आत्मैवेदमिति। अवस्त्विति दिगादि-भेदरहितं वस्तु नास्तीत्यर्थः। सहितमिति पाठे सहितमेव वस्त्वित्येवं भाविता बुद्धिरित्यर्थः। सहितमवस्त्विति पाठे तु दिगादिसहितमवस्त्वित्येवं बुद्धिर्भाविता दृढा परमार्थवस्तुविषयापि सती सा मन्दान्प्रति परमार्थविषयतया यथार्थतया कर्तुं न शक्यते तेषां अस्यां बुद्धौ भ्रमत्वाभिमानादित्यर्थः। ननु यदि तेषां बुद्धिः परमार्थविषया कर्तुं न शक्यते तर्हि मास्तु सा बुद्धिः, कर्मादिसाधनान्तरादेव तेषां पुरुषार्थलाभोऽस्त्वित्याशङ्क्याऽऽह—अनधिगम्य चेति। न कर्मणेत्यादिश्रुतेरित्यर्थः। देश उपदेष्टव्य इति। ततश्च तथाविधोपास्त्या क्रमेण चित्तशुद्धिद्वारा निर्विशेषे बुद्ध्यारोहः क्रममुक्तिर्वा भविष्यतीत्यर्थः। सदेवेत्यादिश्रुतेः सत्प्रत्ययैकविषयत्वावगमात् सगुणत्वे च तद्गुणा-कारेणापि प्रत्ययापत्तेरुक्तश्रुतिविरोधापत्तेः निर्गुणत्वसिद्धौ गुणोपदेशो न युक्त इत्याशङ्क्याह—यद्यपि सदेवेति। विषयशब्दो भावप्रधानः। तथा च सत्प्रत्ययं प्रति विषयत्वं यस्येति बहुव्रीहिणा नपुंसकत्वं वक्तव्यमिति। तत्सम्ब-न्ध्यनुग्रहार्थमिति शेषः।

ननु नित्यानुष्ठानेन शुद्धसत्त्वानां विरक्तानां विविदिषुत्वेन तेषां स्त्र्यादिविषयरागो न भवत्येव अद्वितीय-ब्रह्मोपदेशादेव वा स्त्र्यादिद्वितीयविषयरागो न भवतीति "अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्" इत्यादिना ब्रह्म-चर्यविधानं व्यर्थमित्याशङ्क्य परिपक्वोभयसाधनरहितान्प्रति तदुपदेश इत्याह—तथेति। प्रथमेन आदिशब्देन प्राणादिसङ्ग्रहः। द्वितीयेन सत्यादिसाधनपरिग्रहः। आत्मैकत्वविदां विद्युदादीनामिव स्वात्मन्येव निवृत्तिरित्ययुक्तं, तेषामपि व्यवहारदर्शनादित्याशङ्क्य यावत्प्रारब्धं अविद्याकामादिवासनाविशेषवशाद्व्यवहाराभासवत्त्वेऽपि तत्क्षये स्वात्मन्येव निवृत्तिरुपपद्यत इत्याह—अविद्यादीति। अविद्यादिशेषस्थितौ निमित्तं प्रारब्धफलकर्मेत्यर्थः। उद्भूतस्ये-

---

"समुद्रेन्तं विश्वशंभुवम्" इत्यन्तेन उपास्यस्वरूपं निर्वर्ण्य तस्य हृदयपुण्डरीकमध्ये वैश्वानराग्नि-शिखामध्यवर्तित्वेन तन्मध्ये परमात्मा व्यवस्थित इत्युक्त्वा "ऋतं सत्यं परं ब्रह्म" इति ऋचा उपास्या अष्टौ गुणाः आम्नाताः। इति उपास्यगुणा एकीकृत्योपास्याः। अधिकारी तु छान्दोग्ये ब्रह्मचर्यादि-गुणसम्पन्न उक्तः। कैवल्ये श्रद्धाभक्तिध्यानयोगादवेहीत्युक्तेः श्रद्धाभक्ती ग्राह्ये इति संक्षेपः।

अत्र श्रूयमाणो दहराकाशः भूताकाशो वा परं ब्रह्म वा ? इति संदिह्य आकाशशब्दस्य भूताकाशे रूढत्वात् भूताकाश एव दहर इति पूर्वपक्षे सिद्धान्तसूत्रम् "दहर उत्तरेभ्यः (ब्र० सू० १-३-१४) इति

**निमित्तक्षये गगन इव विद्युदुद्भूत इव वायुर्दग्धेन्धन इवाग्निः स्वात्मन्येव निवृत्तिस्तथाऽपि गन्तृगमनादिवासितबुद्धीनां हृदयदेशगुणविशिष्टब्रह्मोपासकानां मूर्धन्यया नाड्या गतिर्वक्तव्येत्यष्टमः प्रपाठक आरभ्यते। दिग्देशगुणगतिफलभेदशून्यं हि परमार्थसदद्वयं ब्रह्म मन्दबुद्धीनामसदिव प्रतिभाति। सन्मार्गस्थास्तावद्भवन्तु ततः शनैः परमार्थसदपि ग्राहयिष्यामीति मन्यते श्रुतिः।**

### नरेन्द्रपुरीयं टिप्पणम्

माह—गगन इव विद्युदिति। उक्तमेवाध्यायतात्पर्यं पुनः संक्षिप्याह—दिग्देशेति। दिशा देशेन गुणैः गत्या फल-

### आनन्दगिरिटीका

निवृत्तिरित्युत्तरेण संबन्धः। स्वात्मनिर्वाणेऽपि कृतकरूपत्यागेन स्वाभाविकस्वरूपावस्थानमित्यत्र दृष्टान्तानाह—गगन इवेति। अनेकोदाहरणोपादानं बुद्धिसौकर्यार्थम्। उक्तमेवाध्यायतात्पर्यं संक्षिप्य दर्शयति—दिग्देशेति। दिशा

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

त्यत्रापि गगन इत्यनुवर्तते। विद्युत इत्यत्रापि उद्भूताया इति द्रष्टव्यम्। विद्युदादीनां प्रथमान्तपाठे यथा विद्युता तमांसि निवर्तन्ते तथा ब्रह्मविदां स्वात्मन्येव निवृत्तिरित्यध्याहारेण योज्यम्। गमनादिवासितेति। गत्यादिनैव फलप्राप्तिर्नान्यथेति, वासनावतामित्यर्थः। प्रपाठक इति तदेकदेश इत्यर्थः। य आत्मेत्यादेः निर्विशेषवस्तुप्रतिपादनार्थत्वेन सर्वस्य तदर्थत्वाभावात्। ननु साक्षात्परमपुरुषार्थरूपं परमेव ब्रह्म उपदेष्टव्यं न सगुणमारोपिततः परमपुरुषार्थसिद्धिरित्याशङ्क्याह—दिग्देशेति। असदिवेति। अतो न तान्प्रति तदुपदेशार्हमिति शेषः, तर्हि तेषां न परमपुरुषार्थलाभः स्यादित्यत आह—सन्मार्गस्था इति। सगुणोपास्त्या निर्विशेषाधिकारे सति पश्चात्परब्रह्मोपदेशः सुकर इति भावः। उक्तं च कल्पतर्वाचार्यैः—

निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥
वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥ इति॥

ग्राहयिष्यामीति। य आत्मा अपहतपाप्मेत्यादिनेत्यर्थः। एतेन हृदयदेशस्य सत्यकामत्वादेर्गुणजातस्य गतेश्च इहोक्तेः, "कामादीतरत्र तत्र चायतनादिभ्यः" इति सूत्रेण बृहदारण्यकस्य निर्गुणविद्यायां सत्यकामत्वादिगुणोपसंहारोक्तेश्च सगुणमेव ब्रह्म न निर्गुणमिति ये मन्यन्ते तेषां पक्षो निरस्तः। षष्ठसप्तमयोः "सदेकमेवाद्वितीयं यत्र नान्यत्पश्यती"त्यादिना निर्विशेषमुपक्रम्य बहुधा समर्थनादुत्तरत्रापि "य आत्मे"त्यादिना सत्यकामत्वादिगुणविशिष्टानुवादेन तदपोहेन केवलस्यैव ज्ञेयत्वोक्तेश्च। न च विशिष्टस्यैव तत्र ज्ञेयत्वमुच्यत इति वाच्यम्। "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनस्सह प्राणैश्च सर्वैः। तमेवैकं जानथ" इत्यत्रेव य आत्मापहतपाप्मा सोऽन्वेष्टव्य इत्युक्ते यश्चित्रगुस्तमानयेत्यादाविव विशेष्यस्यैव अन्वेष्टव्यत्वप्रतीतेः। अन्यथा "तस्मिन्यदन्तस्तदन्वेष्टव्यम्" "एष आत्मा अपहतपाप्मा" "आत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्" इत्यादिनैव आत्मनो गुणानां च अन्वेष्टव्यत्वोक्तेरात्मनो गुणविशिष्टत्वोक्तेश्च इदं पुनरुक्तं व्यर्थं स्यात्, एष आत्मा अपहतपाप्मेत्यादाविव गुणवैशिष्ट्यस्य इह प्रतिपादनादर्शनाच्च "मघवन्मर्त्यं वा इदं शरीरमि"त्यादिना शरीरादिनिन्दापूर्वकमशरीरं वाव सन्तमित्यादिना शरीरोप-

---

दहराकाशः परमेश्वर एव उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः। ते च द्यावापृथिव्यादिसमाधानाधारत्वं, भूताकाशोपमितत्वमपहतपाप्मत्वादिगुणाष्टकमित्यादयः। तथा अहरहः जीवाः दहराकाशं गच्छन्तोऽपि न जानन्तीति जीवानां गतिश्रवणं ब्रह्मलोकशब्दश्च ब्रह्मण्येव संगच्छते। ब्रह्मैव लोको ब्रह्मलोक इति व्युत्पत्तेः। "कामादीतरत्र तत्र चायतनादिभ्यः" ( ब्र० सू० ३-३-३९ )

दहरवाक्यशेषेश्रूयते "एष आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः स विधृतिरेषां लोकानामसंभेदाय" इति च। बृहदारण्यके चतुर्थे "स वा एष महानज आत्मा सर्वस्य वशी सर्वस्येशानः एष सेतुर्विधरण" इति च। तत्र द्वयोरपि शाखयोः ब्रह्मणो गुणानां केषांचित् साम्यात् परस्परं गुणोपसंहार इति पूर्वपक्षः। सिद्धान्तस्तु छान्दोग्ये सगुणविद्या बृहदारण्यकेऽत्र निर्गुणविद्येति भेदेऽपि स्तुत्यर्थं गुणोपसंहार इष्यत इति।

अथानन्तरं यदिदं वक्ष्यमाणं दहरमल्पं पुण्डरीकं पुण्डरीकसदृशं वेश्मेव वेश्म द्वारपालादिमत्त्वात्। अस्मिन्ब्रह्मपुरे ब्रह्मणः परस्य पुरं राज्ञोऽनेकप्रकृतिमद्यथापुरं तथेदमनेकेन्द्रियमनोबुद्धिभिः स्वाम्यर्थकारिभिर्युक्तमिति ब्रह्मपुरम्। पुरे च वेश्म राज्ञो यथा तथा तस्मिन्ब्रह्मपुरे शरीरे दहरं वेश्म ब्रह्मण उपलब्ध्यधिष्ठानमित्यर्थः। यथा विष्णोः शालग्रामः। अस्मिन्हि स्वविकारशुङ्गे देहे नामरूपव्याकरणाय प्रविष्टं सदाख्यं ब्रह्म जीवेनाऽऽत्मनेत्युक्तम्।

नरेन्द्रपुरीयं टिप्पणम्

भेदेन च शून्यं तदनवच्छिन्नमित्यर्थः। ब्रह्म [ ा ] व्यतिरिक्तस्य संसारिणः स्वकर्मोपार्जितमिदं शरीरं ततः शरीरेण

आनन्दगिरिटीका

देशेन गुणैर्गत्या फलभेदेन च शून्यं तदनवच्छिन्नमिति यावत्। तस्य दिगाद्यनवच्छिन्नत्वे हेतुमाह—अद्वयमिति। तर्हि तेषां भ्रमापोहार्थं परमार्थसदद्वयं ब्रह्म ग्राहयितव्यं किमित्यन्यथोपदिश्यते तत्राऽऽह—सन्मार्गस्था इति। अध्यायतात्पर्यं संक्षेपविस्तराभ्यां दर्शयित्वा श्रुत्यक्षराणि व्याकरोति—अथेत्यादिना। उत्तमबुद्धीन्प्रति निर्विशेषब्रह्मोपदेशानन्तरं मन्दबुद्धीन्प्रति सविशेषमुपदिश्यते ब्रह्मेत्यर्थः। तत्र तावदुपास्यायतनं निर्दिशति—यदिदमिति। हृदयपुण्डरीकस्य वेश्मसादृश्ये हेतुमाह—द्वारपालादीति। तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषय इत्यादिश्रुतेरुक्तहेतुसिद्धिः। तस्याऽऽश्रयं दर्शयति—अस्मिन्निति। शरीरस्य ब्रह्मपुरत्वं दृष्टान्तेन साधयति—राज्ञ इति। तत्रोक्तं वेश्म दृष्टान्तेन स्पष्टयति—पुरे चेति। कथं पुनः सर्वगतस्य निरवयवस्य ब्रह्मणो यथोक्तवेश्मनिष्ठत्वमित्याशङ्क्याऽऽह—ब्रह्मण इति। ननु संसारिणो ब्रह्मातिरिक्तस्य स्वकर्मोपार्जितेन शरीरेण स्वामित्वसंबन्धो न ब्रह्मणस्तदसंबन्धिनः कथं तत्रोपलब्धिरत आह—अस्मिन्हीति। ब्रह्मणो जीवात्मना सृष्टे कार्ये जलार्कवत्प्रवेशो हृदयपुण्डरीकस्य ब्रह्मोप-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

लक्षितसर्वविशेषनिषेधोक्तेश्च। तस्मादुपासनार्थमुक्तं सगुणमनूद्य तदपोहेन तत्र कैवल्यस्यैव विज्ञेयत्वमुच्यत इत्येव श्लिष्टम्। सूत्रकारेणापि "उत्तराच्चेदाविर्भूतस्वरूपस्त्वि"त्यनेन प्रजापतिवाक्ये आविर्भूतस्वरूपस्य ब्रह्मभूतस्य प्रतिपाद्यत्वमुक्तम्। न च आविर्भूतस्वरूपो जीव एवात्रोच्यते। अत एव दहरवाक्ये अपहतपाप्मत्वादिविशिष्टं ब्रह्मोच्यते, इह तु तथाविधो जीव उच्यते इत्यपौनरुक्त्यमिति वाच्यम्। ब्रह्माभिन्नस्य जीवस्याभिधाने तस्यैव दहराकाशशब्दार्थत्वापत्त्या ब्रह्मण एव उपास्यत्वं न जीवस्येति प्रकृताधिकरणार्थासिद्ध्यापत्तेः। अभिन्नत्वे त्वन्मते पौनरुक्त्यतादवस्थ्यात्। निर्गुणविद्यायां गुणोपसंहारः स्तुत्यर्थः। एतद्ब्राह्मणान्येव पञ्च हवींषीत्यत्रेव अर्थवादातिदेशः। तस्मादुपासनार्थमेव सविशेषत्वं न परमार्थत इति।

इत्थमध्यायमवतार्य तदक्षराणि व्याचष्टे—अथेत्यादिना। अनन्तरमिति। निर्विशेषब्रह्मप्रतिपादनानन्तरं तत्र अनधिकृतानां मन्दानां अधिकारसिद्ध्युपयोगितया सविशेषोपासनमुच्यत इति शेषः। वेश्मसादृश्यमाह—द्वारेति। "तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयस्स योऽस्य प्राङ्सुषिस्स प्राणस्तच्चक्षुः स आदित्य" इत्यादिना प्राणादीनुक्त्वा "ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपा" इति हृदयपुण्डरीकस्य द्वारपालादिमत्त्वं, "गायत्री वा इदं सर्वमि"ति ब्राह्मणे उक्तमित्यर्थः। आदिशब्देन प्राङ्सुषिरित्यादिनोक्तद्वारवत्त्वं गृह्यते।

इदंशब्दस्य विशेष्याभिधानार्थं व्यवहितमपि दहरमित्यादिपदत्रयं व्याख्याय इदानीं कुत्र तदिति जिज्ञासायां ब्रह्मपुर इति पदं व्याचष्टे—अस्मिन्निति। ब्रह्मशब्देन जीवस्य तद्भिन्नस्य ग्रहे तत्पुरे ब्रह्मणो वेश्मायोगः। न ह्यन्यस्य राज्ञः पुरे अन्यस्य राज्ञो वेश्म दृष्टमित्याशङ्क्याह—परस्येति। शरीरस्य पुरत्वार्थं तत्साद‍ृश्यमाह—राज्ञ इति। स्वाम्यर्थकारिभिरिति। प्रकृतितुल्यैरित्यर्थः। ब्रह्मवेश्मभूतपुण्डरीकाधिकरणत्वाच्च राजवेश्माधिकरणस्य राजपुरत्ववत् शरीरस्य ब्रह्मपुरत्वमित्याह—पुरे चेति। हृदयस्य द्वारपालादिमत्त्वेन वेश्मत्वेऽपि न ब्रह्मवेश्मत्वं, तस्य सर्वगतस्य वेश्मना परिच्छिन्नेन सम्बन्धायोगादित्याशङ्क्य देवदत्तस्य वेश्मस्वामिनः तत्रोपलब्धिवद्ब्रह्मणोऽपि हृदये उपलब्धिमात्रेण तद्वेश्मत्वमुपचर्यत इत्याह—ब्रह्मण इति। सर्वगतस्य तत्रैव वा कथमुपलब्धिरित्याशङ्क्य तत्रैव ध्यायमानस्सन्प्रसीदति ततस्तत्रैव तस्य उपलब्धिरिति शास्त्रप्रामाण्यादवगम्यत इत्यभिप्रेत्य तदनुरूपं दृष्टान्तमाह—यथेति। प्रकृतितुल्येन्द्रियादियुक्तत्वाच्छरीरं ब्रह्मपुरमित्युक्तमयुक्तम्, इन्द्रियादीनां जीवप्रकृतित्वादित्याशङ्क्य ब्रह्मण एव जीवरूपेण प्रवेशाज्जीवो ब्रह्मैवेति परिहरन् तत्रैवोपलब्धिमुपपादयति—अस्मिन्हीति। स्वविकारशुङ्ग इत्यनेन

**तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥**

तस्मादस्मिन्हृदयपुण्डरीके वेश्मन्युपसंहृतकरणैर्बाह्यविषयविरक्तैर्विशेषतो ब्रह्मचर्यसत्यसाधनाभ्यां युक्तैर्वक्ष्यमाणगुणवद्ध्यायमानैर्ब्रह्मोपलभ्यत इति प्रकरणार्थः। दहरोऽल्पतरोऽस्मिन्दहरे वेश्मनि वेश्मनोऽल्पत्वात्तदन्तर्वर्तिनोऽल्पतरत्वं वेश्मनः। अन्तराकाश आकाशाख्यं ब्रह्म। आकाशो वै नामेति हि वक्ष्यति। आकाश इवाशरीरत्वात्सूक्ष्मत्वसर्वगतत्वसामान्याच्च। तस्मिन्नाकाशाख्ये यदन्तर्मध्ये तदन्वेष्टव्यम्। तद्वाव तदेव च विशेषेण जिज्ञासितव्यं गुर्वाश्रयश्रवणाद्युपायैरन्विष्य च साक्षात्करणीयमित्यर्थः॥ १ ॥

तं चेदेवमुक्तवन्तमाचार्यं यदि ब्रूयुरन्तेवासिनश्चोदयेयुः, कथं, यदिदमस्मिन्ब्रह्मपुरे परिच्छिन्नेऽन्तर्दहरं पुण्डरीकं वेश्म ततोऽप्यन्तरल्पतर एवाऽऽकाशः। पुण्डरीक एव वेश्मनि तार्त्किं स्यात्। किं ततोऽल्पतरे खे

### नरेन्द्रपुरीयं टिप्पणम्

तस्यैव स्वस्वामिभावः सम्बन्धः। कथमिह ब्रह्मोपलभ्यत इति विस्मरणशीलस्य शङ्कापाकरणाय अस्मिन् हि स्वविकार इति। यत् गुणजातं तस्मिन्नन्तस्तत्सहायाश्रयेणान्वेष्टव्यमिति योजना॥ १ ॥

दहरशब्दस्य यथाश्रुतार्थोपादानेनाल्पत्वभ्रमादिविज्ञेयत्वाशङ्कापाकरणाय श्रुतिराह—तं चेदित्यादिना ॥२॥

### आनन्दगिरिटीका

लब्ध्यधिष्ठानत्वं पूर्वोक्तमविरुद्धमित्याह—तस्मादिति। अन्तराकाशस्यात्यल्पतरत्वे हेतुमाह—वेश्मन इति। आकाशशब्दस्य भूताकाशविषयत्वं व्यावर्तयति—आकाशाख्यमिति। कथं वाक्यशेषेऽप्याकाशशब्दो ब्रह्मणि वर्तते तत्राऽऽह—आकाश इवेति। तस्मिन्यदन्तस्तदाश्रयेण सहान्वेष्टव्यं तस्मिन्वा स्वे महिम्नि यदन्तस्तदाकाशाख्यं ब्रह्म तदन्वेष्टव्यं तस्मिन्वा हृदयपुण्डरीकावच्छिन्ने नभसि यदन्तराकाशाख्यं ब्रह्म तदन्वेष्टव्यमिति योजना॥ १ ॥

दहरोऽस्मिन्नित्यादिवाक्यस्य यथाश्रुतमर्थं गृहीत्वा चोद्यमुत्थापयति—तं चेदिति। तदेव चोद्यमाकाङ्क्षाद्वारा विवृणोति—कथमित्यादिना। भवतु परिच्छिन्ने शरीरे पुण्डरीकाकारस्य हृदयस्याल्पत्वं तदन्तर्वर्तिनश्चाऽऽकाशस्य ततोऽप्यल्पतरत्वं तथाऽपि प्रकृते किं स्यादित्याशङ्क्याऽऽह—पुण्डरीक एवेति। किंशब्दस्य प्रश्नविषयत्वं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छेत्यनेन उक्तमप्युपलब्धिप्रकारं सूचयति। प्रवेशे अनेन जीवेनात्मनेत्यादिकां श्रुतिं प्रमाणयति—जीवेनेति। शरीरहृदययोः पुरत्ववेश्मत्वोक्तेः किं प्रयोजनमित्याशङ्क्य तत्रैव वक्ष्यमाणसाधनसंपन्नैः ब्रह्मोपलभ्यत इति ज्ञापनं प्रयोजनमित्याह—तस्मादिति। पुरवेश्मत्वोक्तिः तच्छब्दार्थः। इतिशब्दानन्तरं ज्ञाप्यत इति शेषः। आकाशशब्दितस्य ब्रह्मणो दहरत्वमौपाधिकं न स्वत इत्याह—वेश्मन इति। दहराधिकरणन्यायेन आकाशशब्देन इह ब्रह्मोच्यत इत्याह—आकाशाख्यमिति। आकाशशब्दस्य ब्रह्मण्यपि रूढिमभिप्रेत्य तस्य शब्दस्य तस्मिन् श्रौतप्रयोगमाह—आकाशो ह वा इति। भूताकाशे रूढस्य ब्रह्मण्यपि रूढिकल्पनायां गौरवापत्तेः आकाशगुणयोगाद्वा तत्र वृत्तिरित्याह—आकाश इवेति। तस्मिन्यदन्तरित्यत्र तच्छब्देन प्रकृतत्वादाकाशमेव ग्राह्यम्। ततश्च आकाशान्तर्वर्तिन इह अन्वेष्टव्यत्वमुच्यते, आकाशशब्दितस्य आत्मनस्तु तद्य इहात्मानमनुविद्येति अनुवादसामर्थ्यादन्वेष्टव्यत्वं सिद्ध्यतीत्याशयेनाह—तस्मिन्नाकाशाख्य इति।

यद्वा व्यधिकरणसप्तम्या तस्मिन् हृदये यदाकाशं यच्च तस्मिन्नाकाशाख्ये अन्तस्तदुभयमन्वेष्टव्यमिति भाष्यार्थः। अस्मिन्पक्षे तद्य इहात्मानमनुविद्येत्यनुवादवाक्यबलात्तच्छब्दस्य व्यवहितपरत्वं द्रष्टव्यम्। अथ । समानाधिकरणे एव सप्तम्यौ तदन्वेष्टव्यमिति तच्छब्देन आकाशस्तदन्तर्गतश्च वाक्यशेषबलाद्गृह्यते आकाशे विद्यमानमाकाशं चेति। सर्वथाप्याकाशस्यान्वेष्टव्यत्वसिद्धिः। अन्वेषणप्रकारमाह—गुर्वाश्रयणेति। विजिज्ञासाशब्दार्थमपुनरुक्तमाह—साक्षादिति। साक्षात्कारोपायशमादिसाधने यत्नवता भवितव्यमिति दर्शयितुं सन्प्रत्ययप्रयोग इति भावः॥१॥

यद्यपि पुण्डरीकस्य अन्तराकाशस्य च दहरत्वं तुल्यतया श्रुतम्। तथापि पुण्डरीकान्तर्गतत्वेन आकाशस्य दहरत्वमर्थात्ततो न्यूनत्वेन पर्यवस्यतीत्याह—ततोऽप्यल्पतर एवेति। किं तत्र विद्यत इति काक्वा सूचितं कैमुतिक-

**यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥**

यद्भुवेदित्याहुः। दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते न किंचन विद्यत इत्यभिप्रायः। यदि नाम बदरमात्रं किमपि विद्यते किं तस्यान्वेषणेन विजिज्ञासनेन वा फलं विजिज्ञासितुः स्यात्। अतो यत्तत्रान्वेष्टव्यं विजिज्ञासितव्यं वा न तेन प्रयोजनमित्युक्तवतः स आचार्यो ब्रूयादिति श्रुतेर्वचनम् ॥ २ ॥

शृणुत। तत्र यद्वदथ पुण्डरीकान्तःखस्याल्पत्वात्तत्स्थमल्पतरं स्यादिति। तदसत्। न हि खं पुण्डरीकवेश्मगतं पुण्डरीकादल्पतरं मत्वाऽवोचं दहरोऽस्मिन्नन्तराकाश इति। किं तर्हि पुण्डरीकमल्पं तदनुविधायि तत्स्थमन्तःकरणं पुण्डरीकाकाशपरिच्छिन्नं तस्मिन्विशुद्धे संहृतकरणानां योगिनां स्वच्छ इवोदके प्रतिविम्बरूपमादर्श इव च शुद्धे स्वच्छं विज्ञानज्योतिःस्वरूपावभासं तावन्मात्रं ब्रह्मोपलभ्यत इति दहरोऽस्मिन्नन्तराकाश इत्यवोचामान्तःकरणोपाधिनिमित्तम्। स्वतस्तु यावान्वै प्रसिद्धः परिमाणतोऽयमाकाशो भौतिकस्तावानेषोऽन्तर्हृदय आकाशो यस्मिन्नन्वेष्टव्यं

### आनन्दगिरिटीका

व्यावर्तयति—न किंचनेति। हृदयपुण्डरीकान्तर्वर्तिनमाकाशमुपेत्याऽऽद्यं दूषयति—यदि नामेति। फलानुपलम्भोऽतः-शब्दः। तत्रेत्यन्तर्वर्त्याकाशोक्तिः। शिष्याचार्यव्यतिरिक्तस्यात्राप्रस्तुतत्वात्कस्येदं नियोगवचनमित्याशङ्क्याऽऽह—इति श्रुतेरिति ॥ २ ॥

किमाचार्यो ब्रूयादित्यपेक्षायां वक्ष्यमाणेऽर्थे शिष्याणां मनःसमाधानमादौ प्रार्थयत इत्याह—शृणुतेति। श्रोतव्यमेव दर्शयितुं शिष्यैरुक्तमनुवदति—तत्रेति। किमाकाशस्य स्वाभाविकं दहरत्वमुपेत्य चोद्यते किं वा परोपाधिनिमित्तमिति विकल्प्याऽऽद्यं दूषयति—तदसदिति। ततश्च तस्य स्वाभाविकं दहरत्वमाश्रित्य चोद्यं निरवकाशमिति शेषः। कथं तर्हि दहरत्वोक्तिराकाशस्येत्याशङ्क्याऽऽह—किं तर्हीति। तस्मिन्विशुद्धे तावन्मात्रं ब्रह्म यथोक्तविशेषणं योगिनां विषयेभ्यो विमुखीकृतान्तःकरणानामुपलभ्यत इति संबन्धः। अन्तःकरणस्य शुद्धत्वे दृष्टान्तमाह—स्वच्छ इवेति। ब्रह्मणस्तस्मिन्नुपलभ्यमानत्वे प्रतिविम्बरूपमिवेत्युदाहरणम्। प्रतिपत्तिसौकर्यार्थमुदाहरणान्तरम्। ब्रह्मणो नैसर्गिकमागन्तुकं च व्यवधानं नास्तीत्युपलब्धिसिद्ध्यर्थं विशिनष्टि—स्वच्छमिति। तादृगेव दहरत्वमादाय चोद्यते चेदनौपाधिकं महत्त्वमुपेत्य समाधिः संभवतीति कल्पान्तरं निरस्यति—स्वतस्त्विति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

न्यायमाह—पुण्डरीक एवेति। यद्भुवेदित्यनन्तरं तत् किं स्यादित्याहुरित्यनुषङ्गेणान्वयः। उक्तमर्थं श्रुत्याऽऽरूढं करोति—दहरोऽस्मिन्निति। काक्वा सूचितं विपर्ययमाह—न किञ्चिदिति। किं तदत्र विद्यत इत्यनेनैव तत्र वस्त्वभावस्योक्तत्वात्तत एव तत्रान्वेष्टव्याभावस्यापि सिद्धत्वाद्यदन्वेष्टव्यमिति द्वितीयकाक्वा तत्रान्वेष्टव्याभावोक्तिः पुनरुक्तेत्याशङ्क्य तत्र वस्तुसद्भावाङ्गीकारेण तस्यान्वेष्टव्यत्वं प्रयोजनाभावात् द्वितीयकाक्वा निषिध्यत इत्याह—यदि नामेति ॥ २ ॥

परिहारवाक्यार्थं सङ्गृह्य दर्शयति—शृणुत तत्रेत्यादिना। अल्पतरं स्यादिति। यद्यपि असत्त्वमपि चोदितं शिष्यैः, तथापि अल्पत्वमात्रमनूद्य परिहारेणासत्त्वशङ्कापि परिह्रियत इति अल्पत्वमेवानूदितम्। किं तर्हीति। किं तर्ह्यन्तःकरणोपाधिनिमित्तं दहरोऽस्मिन्नन्तराकाश इत्यवोचामेत्यन्वयः। एतदुपाधिनिमित्तमेव दर्शयति—तावन्मात्रमिति। घटोऽस्तीत्यादिना घटादावपि ब्रह्मोपलब्धेः अन्तःकरणे को विशेषः इत्यत आह—स्वच्छमिति। घटादौ सद्रूपेण प्रतीतिमात्रसत्त्वेऽपि नैव तत्र प्रतीतिरिति भावः।

ननु पुण्डरीकान्तःस्थस्य तदुपाधित्वं युक्तम्, न त्वन्तःकरणोपाधित्वमित्याशङ्क्य आत्मनोऽसङ्गस्य पुण्डरीकवेश्मसम्बन्धाभावान्न तदुपाधिकत्वम्। अन्तःकरणस्य तु तदसम्बन्धिनोऽपि तदुपलब्धिहेतुत्वेन तदुपाधित्वं, तद्द्वारा आत्मनः पुण्डरीकस्थत्वं च युक्तमित्यभिप्रेत्याह—पुण्डरीकमल्पमित्यादिना। असम्बन्धिनोऽपि प्रतिबिम्बोद्ग्राहितया उपलब्धिहेतुत्वं दृष्टान्तेनाह—स्वच्छ इवेति। जले आदित्यादिरूपवदादर्शे मुखप्रतिबिम्बवच्चेत्यर्थः।

विजिज्ञासितव्यं चावोचाम। नाप्याकाशतुल्यपरिमाणत्वमभिप्रेत्य तावानित्युच्यते। किं तर्हि ब्रह्मणोऽनुरूपस्य दृष्टान्तान्तरस्याभावात्। कथं पुनर्नाऽऽकाशसममेव ब्रह्मेत्यवगम्यते। "येनाऽऽवृतं खं च दिवं महीं च"। "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" "एतस्मिन्नु खल्वक्षरे गार्ग्याकाशः" इत्यादिश्रुतिभ्यः। किंचोभे अस्मिन्द्यावापृथिवी ब्रह्माकाशे बुद्ध्युपाधिविशिष्टेऽन्तरेव समाहिते सम्यगाहिते स्थिते यथा वा अरा नाभावित्युक्तं हि। तथोभावग्निश्च वायुश्चेत्यादि समानम्। यच्चास्याऽऽत्मन आत्मीयत्वेन देहवतोऽस्ति विद्यत इह लोके। तथा यच्चाऽऽत्मीयत्वेन न विद्यते। नष्टं भविष्यच्च नास्तीत्युच्यते। न त्वत्यन्तमेवासत्। तस्य हृद्याकाशे समाधानानुपपत्तेः॥ ३॥

### नरेन्द्रपुरीयं टिप्पणम्

आकाशौपम्येनाल्पत्वं व्यावर्त्यते चेत्तर्ह्याकाशसमानपरिमाणत्वं विवक्षितमिति नेत्याह—नापीति। "न तस्य प्रतिमाऽस्ती"ति श्रुतेर्ब्रह्मणोऽनुरूपदृष्टान्ताभावात् प्रसिद्धमहत्वेनाकाशेनाल्पत्वभ्रमव्यावृत्तिरेव विवक्षितेत्यर्थः। कार्यं हि "द्यावापृथिवी"त्यादि कारणे समाहितम्। तच्च कारणं हृदये ध्येयत्वेनोपदिष्टं बुद्ध्या विशेष्यते अत उक्तं—बुद्ध्युपाधिविशिष्टेति॥ ३॥

### आनन्दगिरिटीका

यस्मिन्नन्वेष्टव्यमाश्रयेण सहेति शेषः। यावांस्तावानिति वचनादाकाशेन तुल्यपरिमाणत्वं ब्रह्मणोऽभिप्रेतं तथाच ज्यायानाकाशादित्यादि विरुद्धमित्याशङ्क्याऽऽह—नापीति। केनाभिप्रायेण तर्हि तावानित्युक्तमत आह—किं तर्हीति। "न तस्य प्रतिमाऽस्ती"त्याकाशादि येन व्याप्तं लोकोऽनुभवति तस्मिन्नक्षरे सर्वमृगादि समाहितमित्यर्थः। कार्यकारणयोरतुल्यपरिमाणत्वप्रसिद्धेश्च नाऽऽकाशसमता ब्रह्मणोऽस्तीत्याह—तस्मादिति। आधाराधेययोस्तुल्यपरिमाणत्वाच्चैवमित्याह—एतस्मिन्निति। इतश्चाऽऽकाशस्य न स्वाभाविकं दहरत्वमित्याह—किंचेति। कार्यं हि द्यावापृथिव्यादि कारणे समाहितं तच्च हृदये ध्येयमित्यभिप्रेत्य बुद्ध्युपाधिविशिष्ट इत्युक्तम्। आकाशे द्यावापृथिव्यादेः समाहितत्वे भूमविद्यासंवादं दर्शयति—यथा वेति। न विद्यते सर्वं तदस्मिन्समाहितमिति संबन्धः। नास्तिशब्दस्यात्यन्तासद्विषयत्वं व्यावर्तयति—नष्टमिति॥ ३॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु दहराकाशशब्दितस्य आत्मनः बाह्यभूताकाशमात्रत्वे परिच्छिन्नत्वं स्यादित्यत आह—नहीति। किं तर्हीति। तुल्यस्य दृष्टान्तान्तरस्य अभावात्पुण्डरीककृतपरिच्छेदनिवृत्त्यभिप्रायेण बाह्याकाशोपमोच्यते। तावतापि प्रसक्ताल्पत्वनिवृत्तिसंभवादित्यर्थः। नन्वाकाशवत्सर्वगतश्च नित्य इत्यादि श्रुतिबलादाकाशतुल्यत्वं मुख्यमेव स्यात्, अन्यथा अल्पत्वनिवृत्तौ लक्षणा स्यादिति शङ्कते—कथं पुनरिति। कथं पुनर्नावगम्यत इत्यन्वयः। आकाशस्य ब्रह्मणा आवृतत्वोक्त्या ब्रह्म ततोप्यधिकमित्यवगमात् तत्तुल्यत्वमयुक्तमिति परिहरति—येनावृतमिति। दिवमिति। द्युलोक इत्यर्थः, द्वितीया प्रथमार्थे द्रष्टव्या। आत्मजन्यत्वादप्याकाशस्य तस्य ततोऽधिकपरिमाणत्वमित्याह—तस्मादिति। भूताकाशकारणस्य अव्याकृताकाशस्य अक्षरशब्दिते ब्रह्मण्योतप्रोतभावादप्यधिकत्वमित्याह—एतस्मिन्निति। आकाश इति। अव्याकृताकाश इत्यर्थः। तज्जन्यभूताकाशस्य किमु वक्तव्यमिति भावः, आदिशब्देन "ज्यायानन्तरिक्षादि"त्यादिश्रुतिसंग्रहः। सर्वमावृत्य तिष्ठतीत्यत्र सर्वशब्दार्थान्तर्गतभूताकाशं ब्रह्मणाऽऽवृतमित्युक्त्यापि ब्रह्म ततोऽधिकं न तत्तुल्यमित्यवगम्यत इत्याह—सर्वमिति। किञ्चेति। न केवलं दहराकाशस्य अल्पत्वाभाव एव, किन्तु तस्मिन्नन्वेष्टव्यं चास्तीति किञ्चशब्दार्थः। अस्मिन्नित्यस्य अर्थमाह—ब्रह्मेति। ब्रह्मरूपे आकाशे बुद्ध्युपाधिविशिष्ट इति ब्रह्म तत्र उपलभ्यत इति तथोच्यते, न तु तद्विशिष्टत्वमेव, परिच्छेदापत्तेरिति। अरा नाभाविति।

यद्यपि इदं प्राणविषयं "एवमस्मिन् प्राणे सर्वं समर्पितमि"ति वाक्यशेषात् तथापि प्राणस्य न साक्षात्सर्वाधारत्वं, किन्तु तदधिष्ठानब्रह्मद्वारेति तदुदाहृतम्। यच्चेत्यनन्तरं नास्तीति पदं द्रष्टव्यम्। तद्व्याख्यानम्—आत्मीयत्वेनेति। तत्स्वरूपमाह—नष्टमिति॥ ३॥

**तं चेद्ब्रूयुरस्मिँश्चेदिदं ब्रह्मपुरे सर्वँ समाहितँ सर्वाणि च भूतानि सर्वे च कामा यदैतज्जरा वाऽऽप्नोति प्रध्वँसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन्कामाः समाहिता एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

तं चेदेवमुक्तवन्तं ब्रूयुः पुनरन्तेवासिनः-अस्मिंश्चेद्यथोक्ते चेद्यदि ब्रह्मपुरे ब्रह्मपुरोपलक्षितान्तराकाश इत्यर्थः। इदं सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामाः। कथमाचार्येणानुक्ताः कामा अन्तेवासिभिरुच्यन्ते। नैष दोषः यच्चास्येहास्ति यच्च नास्तीत्युक्ता एव ह्याचार्येण कामाः। अपि च सर्वशब्देन चोक्ता एव कामाः। यदा यस्मिन्काल एतच्छरीरं ब्रह्मपुराख्यं जरावलीपलितादिलक्षणा वयोहानिर्वाऽऽप्नोति शस्त्रादिना वा वृक्णं प्रध्वंसते विस्रंसते विनश्यति किं ततोऽन्यदतिशिष्यते। घटाश्रितक्षीरदधिस्नेहादिवद्घटनाशे देहनाशेऽपि देहाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यतीत्यभिप्रायः। एवं प्राप्ते नाशे किं ततोऽन्यद्यथोक्तादतिशिष्यतेऽवतिष्ठते न किंचनावतिष्ठत इत्यभिप्रायः ॥ ४ ॥

एवमन्तेवासिभिश्चोदितः स आचार्यो ब्रूयात्तन्मतिमपनयन्। कथम्। अस्य देहस्य जरयैतद्यथोक्तमन्तरा-

नरेन्द्रपुरीयं टिप्पणम्

आश्रयनाशादाश्रितनाश इति न्यायमभिसन्धाय शङ्कते—तं चेदेवमिति। यद्यस्मिन्सर्वं समाहितं ततो देहनाशे किमिव शिष्यत इति सम्बन्धो भविष्यति। प्रथममधिकाशंकां निराचष्टे—कथमाचार्येणेत्यादिना ॥ ४ ॥

वास्तवाश्रयाश्रयिभावस्याविवक्षितत्वात् घटनाशेऽपि तदाश्रयाकाशविनाशादर्शनान्न देहनाशे ब्रह्मनाश इत्याह—एवमन्तेवासिभिरिति। सत्यशब्दसामानाधिकरण्यात् ब्रह्मैव पुरं ब्रह्मपुरं विवक्षितं चेत् कथं तर्हि शरीरं

आनन्दगिरिटीका

आश्रयनाशादाश्रितनाशः स्यादिति न्यायमाश्रित्य शङ्कते—तं चेदिति। यद्यस्मिन्सर्वं समाहितं ततो देहनाशे किमवशिष्यत इति संबन्धः। शिष्याणामधिकावापं दोषमाशङ्कते—कथमिति। शङ्कितं दोषं परिहरति—नैष दोष इति। सर्वं तदस्मिन्समाहितमित्यत्रोक्तेन सर्वशब्देनेति शेषः। शिष्याणामधिकावापं दोषं परिहृत्य प्रकृतं चोद्यं विवृणोति—यदेत्यादिना। आकाशस्य शिष्यमाणत्वमाशङ्क्याऽऽह—घटेति। ततो यथोक्तान्नाशादिति संबन्धः ॥ ४ ॥

कया पुना रीत्या शून्यविषया शिष्यमतिरपनेतव्येति प्रश्नपूर्वकं विवृणोति—कथमित्यादिना। देहादि-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

चेदित्यस्यार्थकथनं यदीति। यद्यपि पूर्वं ब्रह्मपुरमिति शरीरमुक्तम्, तथापि इह सर्वं समाहितमिति अनुवादवाक्यबलात् एतत्सत्यं ब्रह्मपुरमिति वाक्यशेषाच्च, तेन शब्देन, तद्गतं दहराकाशं लक्ष्यत इत्याह—ब्रह्मपुरोपलक्षित इति। उभे अस्मिन्नित्यादिवाक्ये कामानामनुक्तेः इह तदनुवादो न संभवतीति शङ्कते—कथमिति। सर्वशब्देन वेति पाठे वाशब्दश्चार्थे। यच्चास्य इहास्तीत्युक्तस्यैव सर्वशब्देन प्रतिनिर्दिश्य समाहितत्वोक्तेः तस्यार्थान्तराभावेन विकल्पानुपपत्तेः। एतज्जरावाऽऽप्नोतीति लिङ्गात्, ब्रह्मपुरशब्देन मुख्यया वृत्त्या प्रथमोपस्थितं शरीरमेव एतच्छब्देन परामृश्यते, न तु तद्द्वारा लक्षितमन्तराकाशं जरादिलिङ्गविरोधादित्याह—एतदिति। ब्रह्मपुराख्यमिति तद्वाच्यम्, न तु तल्लक्ष्यमित्यर्थः। वलीपलितादिलक्षणेत्यनन्तरं अवाप्नोतीति पदं द्रष्टव्यम्। प्रध्वंसे हेतुद्वयमाह—वयोहान्येति। घटनाशे तदाश्रितक्षीरदधितैलादिनाशवत् देहनाशे तद्गतपुण्डरीकनाशः, ततो दहराकाशनाशः, ततः तद्गतद्यावापृथिव्यादिनाश इत्यर्थः। तत इति। ततो यथोक्तान्नाशादन्यदित्यर्थः ॥ ४ ॥

काशाख्यं ब्रह्म यस्मिन्सर्वं समाहितं न जीर्यति देहवन्न विक्रियत इत्यर्थः। न चास्य वधेन शस्त्रादिघातेनैतद्धन्यते यथाऽऽकाशं किमु ततोऽपि सूक्ष्मतरमशब्दमस्पर्शं ब्रह्म देहेन्द्रियादिदोषैर्न स्पृश्यत इत्येतस्मिन्नवसरे वक्तव्यं प्राप्तं तत्प्रकृतव्यासङ्गो मा भूदिति नोच्यते। इन्द्रविरोचनाख्यायिकायामुपरिष्टाद्वक्ष्यामो युक्तितः। एतत्सत्यमवितथं ब्रह्मपुरं ब्रह्मैव पुरं ब्रह्मपुरं शरीराख्यं तु ब्रह्मपुरं ब्रह्मोपलक्षणार्थत्वात्। तत्त्वनृतमेव। "वाचाऽऽरम्भणं विकारो नामधेयम्" इति श्रुतेः। तद्विकारेऽनृतेऽपि देहयुक्ते ब्रह्मोपलभ्यत इति ब्रह्मपुरमित्युक्तं व्यावहारिकम्। सत्यं तु ब्रह्म-

नरेन्द्रपुरीयं टिप्पणम्

ब्रह्मपुरमुक्तमित्यत आह—शरीराख्यं त्विति। ब्रह्मणोऽपि पुरत्वासम्भवात् कथं सत्यं ब्रह्मपुरमुच्यत इत्याशङ्क्याह—सत्यं तु ब्रह्मेति। एवं दहराकाशस्याल्पत्वविनाशित्वदोषपरिहारेणोपास्यत्वमुक्तम्। तत्र चाहंग्रहः कर्तव्य इत्याह—

आनन्दगिरिटीका

विक्रियया ब्रह्मणो न विक्रियाऽस्तीत्येतत्कैमुतिकन्यायेन साधयति—न चेति। देहादिषु तादात्म्येन स्थितं चेद्ब्रह्म दोषैरसंस्पृष्टमित्ययुक्तमित्याशङ्क्याऽऽह—कथमिति। प्रकृता दहरोपासना तत्र व्यासङ्गो विक्षेपः। यदि देहादिदोषैरसंस्पृष्टत्वं ब्रह्मणो नोच्यते चेदेते न क्वचिदुपपद्यन्ते तर्हि तदविवक्षितमेव स्यादित्याशङ्क्याऽऽह—इन्द्रेति। नास्येत्यादिनोक्तेऽर्थे हेतुमाह—एतदिति। कथं यथोक्तं ब्रह्मणः पुरमवितथं स्यादित्याशङ्क्याऽऽह—ब्रह्मैवेति। सत्यशब्दसामानाधिकरण्यादुक्तसमासप्रसिद्धिरित्यर्थः। कथं तर्हि शरीरं ब्रह्मपुरमित्युक्तमत आह—शरीराख्यं त्विति। तदेव स्फुटयितुं शरीरस्य मिथ्यात्वं सप्रमाणं दर्शयति—तत्त्विति। अथ मिथ्याभूतस्य तस्य कथं ब्रह्मपुरत्वमत आह—तद्विकार इति। किं च व्यावहारिकं सत्यमिदं शरीरं तद्युक्तं तस्यानृतस्यापि ब्रह्मोपलब्ध्यधिष्ठानस्य ब्रह्मपुरत्वमित्याह—व्यावहारिकमिति। ब्रह्म तु परमार्थसत्यमतश्चैतदेव सत्यमित्युक्तं ब्रह्मपुरमित्याह—सत्यं त्विति। ब्रह्मणः सत्यत्वेऽपि पुरत्वायोगात्कुतो ब्रह्मपुरत्वमित्याशङ्क्याऽऽह—सर्वव्यवहारेति। दहराकाशस्याल्पत्वं विनाशित्वमित्या-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तन्मतिमिति। तच्छङ्कामित्यर्थः। हननाद्यभावे आकाशवत्सूक्ष्मत्वं हेतुरित्याह—यथाऽऽकाशमिति। सूक्ष्मतरत्वमाह—अशब्दमिति। शब्दस्पर्शादिमतः स्थूलत्वात्ततः शब्दमात्रवतः सूक्ष्मत्वं ततोऽपि तद्रहितस्य सूक्ष्मतरत्वमित्यर्थः। अस्पर्शं आकाशं सूक्ष्मं अशब्दं ब्रह्म ततोऽपि सूक्ष्मतरमित्यन्वयः। जरादिदेहधर्मनिषेधः इन्द्रियादिधर्मनिषेधोपलक्षणार्थ इत्याह—देहेन्द्रियादीति। देहहन्तुरात्महन्तृत्वप्रसिद्धेः स्वदेहहननेन आत्महननप्रायश्चित्तविधानात्"जीर्णो वा विरमेदि"ति जराया आत्मधर्मत्वोक्तेः, जरादिदेहधर्माणामात्मधर्मत्वाभावे हेतुर्वाच्य इत्याशङ्क्याह—कथमिति। प्रकृतव्यासङ्ग इति। इहैव देहादिसर्वधर्मापोहे कृते प्रकृतस्य सगुणोपासनस्य व्यासङ्गो विक्षेपो विरोधो भवेत्। ब्राह्मण्यादेः कर्तृत्वादेश्च अभावे अधिकारानुपपत्तेरिति इह नोच्यते। इन्द्रविरोचनाख्यायिकायान्तु आत्मशुद्धेर्विवक्षितत्वाद्देहधर्माणां स्वप्ने अदर्शनात्स्वाप्निकानां च सुषुप्ते अभावादव्यभिचारादसङ्गत्वाच्च आत्मनोऽनात्मधर्मत्वं तेषां इत्युच्यत इत्यर्थः। आत्महननप्रायश्चित्तादिविधानन्तु देहात्मनोः मिथ्यातादात्म्याभिमानिनं प्रति न परमार्थत इति भावः।

यद्यपि इन्द्रविरोचनाख्यायिकायां स्वप्नादिधर्मिणः प्रत्यगात्मनो निर्धर्मत्वमुच्यते, न तु दहराकाशशब्दितस्य ब्रह्मणो देहादिधर्मासंस्पृष्टत्वं तथापि ब्रह्मण एव प्रत्यगात्मत्वात्, तस्मिन्नुक्तं ब्रह्मण्येवेति भावः। अत एव य आत्मा अपहतपाप्मेत्यादिना अपहतपाप्मत्वादिगुणकं दहराकाशमनूद्य सोऽन्वेष्टव्य इति तस्य पारमार्थिकेन रूपेण अन्वेष्टव्यतामुपक्षिप्य तस्य य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेत्यादिना प्रकृतस्यात्मनोऽन्वेष्टव्यस्याक्षिप्रत्यगात्मत्वमुक्त्वा तस्यैव एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्यादिना अशरीरं वाव सन्तमित्यनेन सर्वधर्मास्पृष्टत्वं दर्शयिष्यतीति भावः। वधाद्यभावे सत्यत्वं कूटस्थत्वं हेतुं प्रश्नपूर्वकमाह—कुत इति। यदि समानाधिकरणसमासेन ब्रह्मैवोच्यते ब्रह्मपुरशब्देन कथं तर्हि पूर्वं शरीरमुक्तं तत्राह—शरीराख्यं त्विति। यदि ब्रह्मोपलब्धिहेतुत्वेन ब्रह्मोपलक्षणार्थत्वेन शरीरमुक्तं पूर्वं इह किमिति तदेव नोच्यते इत्याशङ्क्य तस्यानृतत्वात्सत्यत्वानुपपत्तेः सत्यशब्दसामानाधिकरण्याच्छरीरं न गृह्यत इत्याह—तत्त्विति। तर्हि अनृतस्य लक्षकत्वमप्ययुक्तमित्याशङ्क्य मरीचिजले वृक्षादिप्रतिफलनदर्शनात्प्रतिबिम्बोद्ग्राहकत्वरूपमुपलक्षकत्वं सम्भवति इत्याह—तद्विकार इति।

पुरमेतदेव ब्रह्म। सर्वव्यवहारास्पदत्वात्। अतोऽस्मिन्पुण्डरीकोपलक्षिते ब्रह्मपुरे सर्वे कामा ये बहिर्भवद्भिः प्रार्थ्यन्ते तेऽस्मिन्नेव स्वात्मनि समाहिताः। अतस्तत्प्राप्त्युपायमेवानुतिष्ठत बाह्यविषयतृष्णां त्यजतेत्यभिप्रायः। एष आत्मा भवतां स्वरूपम्। शृणुत तस्य लक्षणम्। अपहतपाप्मा। अपहतः पाप्मा धर्माधर्माख्यो यस्य सोऽयमपहतपाप्मा। तथा विजरो विगतजरो विमृत्युश्च। तदुक्तं पूर्वमेव न वधेनास्य हन्यत इति। किमर्थं पुनरुच्यते। यद्यपि देहसंबन्धिभ्यां जरामृत्युभ्यां न संबध्यते अन्यथाऽपि संबन्धस्ताभ्यां स्यादित्याशङ्कानिवृत्त्यर्थम्। विशोको विगतशोकः। शोको नामेष्टादिवियोगनिमित्तो मानसः संतापः। विजिघत्सो विगताशनेच्छः। अपिपासोऽपानेच्छः। नन्वपहतपाप्मत्वेन जरादयः शोकान्ताः प्रतिषिद्धा एव भवन्ति। कारणप्रतिषेधात्। धर्माधर्मकार्या हि त इति। जरादिप्रतिषेधेन वा धर्माधर्मयोः कार्याभावे विद्यमानयोरप्यसत्समत्वमिति पृथक्प्रतिषेधोऽनर्थकः स्यात्। सत्यमेवं तथाऽपि धर्मकार्या-

### नरेन्द्रपुरीयं टिप्पणम्

एष आत्मेति। यदुक्तं कार्याभावे सतोरपि धर्माधर्मयोरकिंचित्करत्वादपहतपाप्मेति पृथङ्न वक्तव्यं तत्राह—पाप-

### आनन्दगिरिटीका

शङ्कितं दोषं परिहृत्योपास्यत्वसिद्ध्यर्थं पातनिकां करोति—अत इति। अस्मिन्सर्वकामसमाधाने फलितमुपासनमुपदिशति—अतस्तदिति। यथोक्ते दहराकाशे कीदृगुपासनं कर्तव्यमित्यपेक्षायामहंग्रहेणेत्याह—एष इति। पुनरुक्तिं शङ्कते—तदुक्तमिति। तां परिहरति—यद्यपीति। अन्यथा देहसंबन्धं विना स्वभावतोऽपीत्यर्थः। निवृत्त्यर्थं पुनरुच्यत इति पूर्वेण संबन्धः। प्रकारान्तरेण पुनरुक्तिं चोदयति—नन्विति। शोकस्यान्ता किंचिद्व्यवधाय पिपासा येष्वस्ति ते शोकान्तास्तेषां जरादीनामपहतपाप्मत्वेन प्रतिषिद्धत्वे हेतुमाह—कारणेति। कथं धर्माधर्मप्रतिषेधे जरादिविकारप्रतिषेधस्तत्राऽऽह—धर्मेति। इति पृथक्प्रतिषेधोऽनर्थकः स्यादिति संबन्धः। जरादिप्रतिषेधस्यार्थवत्त्वमङ्गीकृत्य पाप्मप्रतिषेधस्य नैरर्थक्यमिति पक्षान्तरमाह—जरादीति। धर्मादेर्जरादेर्वा निषेधादितर-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

उक्तमिति। शरीरमिति शेषः। तस्य अर्थक्रियाकारित्वात्सत्यत्वमित्याशङ्क्य तावता तस्य व्यावहारिकसत्यत्वं स्यान्न तु पारमार्थिकमित्याह—व्यावहारिकमिति। सत्यमिति शेषः। ब्रह्मणस्तु सर्वव्यवहारास्पदत्वेन सर्वाधिष्ठानत्वान्मुख्यं सत्यत्वं स्यादित्याह—सत्यं त्विति। यस्मान्न विनश्यति न वा परिच्छिन्नं तस्मात्सर्वसमाधानास्पदत्वं युक्तमित्याह— अत इति। ब्रह्मपुरविनाशप्रयुक्तायाः सर्वसमाधानासम्भवशङ्कायास्तद्विनाशाभावोक्त्यैव परिहारे सर्वसमाहितत्वस्यापि सिद्धेः अस्मिन्कामास्समाहिता इति पुनः कामानामेव विशेषेण समाहितत्वोक्तेः न किञ्चित्प्रयोजनमित्याशङ्क्य तस्या विवक्षितमर्थमाह—अतस्तदिति। एवं दहराकाशं तदन्तःस्थितसत्वं च समर्थ्य तस्य दहराकाशस्योपासनार्थं गुणान्वक्तुं एष आत्मेति वाक्यं व्याचष्टे—एष इति। न च दहराकाशस्य प्रत्यगात्मत्वोपदेशे तत्त्वमस्यादाविव भेदनिवृत्तेः उपास्योपासकताऽसंभवः शङ्क्यः। न ह्यत्र तत्त्वमस्यादाविव कर्तृत्वादिभेदकोपाधिनिरासेन आत्मत्वमुच्यते। तथा सति गुणोपदेशहृदयायतनोपदेशादिना निश्चितोपासनाविरोधप्रसङ्गात्। किन्तु सत्येव भेदे ब्रह्मणः आत्मत्वेन अहङ्ग्रहेणोपासनार्थं आत्मत्वमुपदिश्यते। ततश्च प्रतीकेष्विव नेदन्तयाऽत्रोपासनं किन्तु अहमिति आरोपितात्मतादात्म्येनोपासनं सिद्ध्यति। एवमेव यत्र यत्रोपासनायामुपास्यस्यात्मत्वमुच्यते तत्र तत्र अहङ्ग्रहः, अन्यथा प्रतीकत्वमित्येवमेवाहङ्ग्रहप्रतीकयोः विशेष इति न्यायविवरणे विवरणाचार्यैः व्यवस्थापितमिति।

केचित्तु ब्रह्माण उपासनेषु वस्तुतो ब्रह्माण आत्मत्वेन अहङ्ग्रहमाहुः। तत्तु प्रतीकेष्वपि तुल्यमिति न सम्यक्। लक्षणमिति। विशेषणमित्यर्थः, यथाश्रुते तस्य जगत्कारणतादिलक्षणवदुपासनान्वयो न स्यादिति। न वधेनेत्युपलक्षणम्, नास्य जरयेत्यपि द्रष्टव्यम्। अन्यथापीति। स्वत इत्यर्थः। जरादिप्रतिषेधेन वा पाप्मप्रतिषेधसिद्धेः अपहतपाप्मत्वं वा न वक्तव्यमित्याह—जरादीति। चशब्दपाठे चकारो वाशब्दार्थः। धर्माधर्मयोरिति। प्रतिषेधः सिध्यतीति शेषः। कार्यासत्वेऽपिकारणसत्वदर्शनात् कार्यनिषेधेन कारणधर्मादिनिषेधासिद्धेः पृथक् तन्निषेधो वक्तव्य इति न वाच्यं, तत्सत्वेऽपि तत्कार्यजराद्यभावे दोषाभावादित्याह—कार्याभाव इति। कारणनिषेधेन कार्यभूतजरादिनिषेधसिद्धावपि तदकार्यजरादिसद्भावशङ्कानिराकरणार्थं जरादिनिषेधोऽपि वक्तव्य इत्याह—सत्य-

नन्दव्यतिरेकेण स्वाभाविकानन्दो यथेश्वरे विज्ञानमानन्दं ब्रह्मेति श्रुतेः। तथाऽधर्मकार्यजरादिव्यतिरेकेणापि जरादिदुःखस्वरूपं स्वाभाविकं स्यादित्याशङ्क्येत। अतो युक्तस्तन्निवृत्तये जरादीनां धर्माधर्माभ्यां पृथक्प्रतिषेधः। जरादिग्रहणं सर्वदुःखोपलक्षणार्थम्। पापनिमित्तानां तु दुःखानामानन्त्यात्प्रत्येकं च तत्प्रतिषेधस्याशक्यत्वात्सर्वदुःखप्रतिषेधार्थं युक्तमेवापहतपाप्मत्ववचनम्। सत्या अवितथाः कामा यस्य सोऽयं सत्यकामः। वितथा हि संसारिणां कामाः। ईश्वरस्य तद्विपरीताः। तथा कामहेतवः संकल्पा अपि सत्या यस्य स सत्यसंकल्पः। संकल्पाः कामाश्च शुद्धसत्त्वोपाधिनिमित्ता ईश्वरस्य चित्रगुवत्। न स्वतो नेति नेतीत्युक्तत्वात्। यथोक्तलक्षण एवाऽऽत्मा विज्ञेयो गुरुभ्यः शास्त्रतश्चाऽऽत्मसंवेद्यतया च स्वाराज्यकामैः। न चेद्विज्ञायते को दोषः स्यादिति। शृणुतात्र दोषं दृष्टान्तेन। यथा ह्येवेह लोके प्रजा अन्वाविशन्त्यनुवर्तन्ते। यथानुशासनं यथेह प्रजा अन्यं स्वामिनं

### नरेन्द्रपुरीयं टिप्पणम्

निमित्तानां त्विति। निवृत्तिरूपा धर्माः सम्भवन्त्यभावस्यावस्तुत्वादद्वैताव्याघातकत्वात्। भावरूपास्तु कथं स्युरित्यत्राह—सङ्कल्पाः कामाश्चेति। शुद्धं सत्त्वं धर्माद्यसंसर्गि मायांशभूतं, चित्रा गावोऽस्वाभाविकाः यथा चित्रगोर्विशेषणं, तथा ब्रह्मणोऽपि कामादय इत्यर्थः। अन्तशब्दः स्थानवचनः प्रतिनियतस्थानं जनपदं ग्रामः॥ ५॥

### आनन्दगिरिटीका

निषेधः सिध्यतीत्यङ्गीकरोति—सत्यमेवमिति। तर्हि किमित्यपहतपाप्मेत्युक्त्वा विजरो विमृत्युरित्याद्युच्यते तत्राऽऽह—तथाऽपीति। तथाऽपि दुःखे प्रतिषिद्धे किमिति जरादि प्रतिषिध्यते तत्राऽऽह—जरादीति। यत्तु कार्याभावे सतोऽपि धर्माधर्मयोरुत्खातदन्तोरगवदकिंचित्करत्वादपहतपाप्मेति न पृथग्वक्तव्यमिति तत्राऽऽह—पापनिमित्तानामिति। ईश्वरस्य सत्यकामत्वं साधयति—वितथा हीति। यथेश्वरस्यावितथाः कामास्तथा संकल्पाश्चेत्याह—तथेति। अभावरूपाणां धर्माणामद्वैताव्याघातमकत्वेन संभावितत्वेऽपि कथं भावरूपा धर्माः संभवेयुरित्याशङ्क्याऽऽह—संकल्पा इति। शुद्धसत्त्वं रजस्तमोभ्यामस्पृष्टं त्रिगुणाया मायाया अंशभूतं तदेवोपाधिस्तन्निमित्तं येषां ते तथा। अस्वाभाविकानां संकल्पादीनामीश्वरविशेषणत्वे दृष्टान्तमाह—चित्रगुवदिति। यथा चित्रा गावोऽस्वाभाविकाश्चित्रगोर्देवदत्तस्य विशेषणं तथा ब्रह्मणोऽपि कामादय इत्यर्थः। किमिति कामादयो ब्रह्मणि स्वाभाविका न भवन्ति धर्मधर्मिणोरेवोपचारादद्वैतश्रुतेरुपपत्तेरित्याशङ्क्याऽऽह—न स्वत इति। वाक्यान्तरमवतारयितुं पातनिकां करोति—यथोक्तेति। ज्ञानप्रकारं निमित्ताधिकारिप्रदर्शनपूर्वकं दर्शयति—गुरुभ्य इति। प्रश्नपूर्वकं यथा हीत्यादिवाक्यमाह—न चेदिति। यथाकाशात्मापरिज्ञानमत्रेति परामृष्टम्। अक्षरोत्थमर्थं ह्येवेत्यनेन दृष्टान्तेन दर्शयित्वा वाक्यार्थं कथ-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मित्यादिना। यद्यपि आनन्दवन्नित्यं जरादि न श्रूयते तथापि सुखदुःखयोस्तुल्यधर्मतया सामानाधिकरण्यनियमदर्शनात् सुखवत् तथाविधं दुःखमपि स्यादिति अनुमानेन शङ्का जायत इति वक्तुं जरादिदुःखरूपत्वमित्युक्तम्। स्वाभाविकमिति। अधर्माजन्यमित्यर्थः। ननु जरादीनां दुःखजनकत्वेन दुःखत्वाभावात्कथं जरादिदुःखमित्याशङ्क्य इह जरादिशब्देन तज्जन्यं दुःखं लक्ष्यत इत्याह—जरादिग्रहणमिति। यद्वा जरादिनिषेधेन इतरदुःखप्रतिषेधेऽपि कथं स्वाभाविकदुःखप्रतिषेध इत्यत आह—जरादिग्रहणमिति। दुःखेति तत्सम्बन्धिदुःखोपलक्षणार्थमित्यर्थः। एवं च जरादिशब्देन तत्सम्बन्धिदुःखमात्रप्रतिषेधार्थं पृथक् तत्कारणपाप्मप्रतिषेधोऽपि अपहतपाप्मत्वविशेषणेन कर्तव्य इत्याह—पापेति। तुशब्दश्चार्थे वचनमित्यनन्तरं संबध्यते। सत्यविशेषणस्य व्यावर्त्यमाह—वितथा हीति। सत्यकामत्वादिगुणवत्त्वे ईश्वरस्य निर्गुणत्वादिश्रुतिविरोधमाशङ्क्य औपाधिकत्वात्कामादीनां न स्वाभाविकनिर्गुणत्वविरोध इत्याह—सङ्कल्पा इति। शुद्धं सत्त्वं यस्या मायायास्सा तथोक्ता। कामानामौपाधिकत्वे दृष्टान्तः—चित्रगुवदिति। चित्रगुवदिति भावप्रधानो निर्देशः, यथाचित्रगुत्वमौपाधिको धर्मो देवदत्तस्य तद्वत्सङ्कल्पाः कामाश्चेति। तेषां स्वाभाविकत्वे श्रुतिविरोधमाह—नेतीति। उत्तरवाक्यमवतारयितुमपेक्षितं पूरयति—यथोक्तेति। उपासनाबलादपरोक्षीकर्तव्यश्चेत्याह—आत्मसंवेद्यतयेति। ज्ञेय इत्यनुषङ्गः। उत्तरवाक्यमव-

तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते तद्य इहाऽऽत्मानमननुविद्य व्रजन्त्येता ँश्च सत्यान्कामा ँस्तेषा ँसर्वेषु लोकेष्वकामचारो भवत्यथ य इहाऽऽत्मानमनुविद्य व्रजन्त्येता ँश्च सत्यान्कामा ँस्तेषा ँसर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

इति च्छान्दोग्योपनिषदि सप्तमाध्यायस्य षोडशः खण्डः

मन्यमानाः स्वस्य स्वामिनो यथा यथाऽनुशासनं तथा तथाऽन्वाविशन्ति। किम्। यं यमन्तं प्रत्यन्तं जनपदं क्षेत्रभागं चाभिकामा अर्थिन्यो भवन्त्यात्मबुद्ध्यनुरूपं तं तमेव च प्रत्यन्तादिमुपजीवन्तीति। एष दृष्टान्तोऽस्वातन्त्र्यदोषं प्रति पुण्यफलोपभोगे ॥ ५ ॥

अथान्यो दृष्टान्तस्तत्क्षयं प्रति तद्यथेहेत्यादिः। तत्तत्र यथेह लोके तासामेव स्वाम्यनुशासनानुवर्तिनीनां प्रजानां सेवादिजितो लोकः पराधीनोपभोगः क्षीयतेऽन्तवान्भवति। अथेदानीं दार्ष्टान्तिकमुपसंहरति—एवमेवामुत्राग्निहोत्रादिपुण्यजितो लोकः पराधीनोपभोगः क्षीयत एवेत्युक्तो दोष एषामिति विषयं दर्शयति—तद्य इत्यादिना। तत्तत्रेहास्मिंल्लोके ज्ञानकर्मणोरधिकृता योग्याः सन्त आत्मानं यथोक्तलक्षणं शास्त्राचार्योपदिष्टमननुविद्य यथोपदेशमनु स्वसंवेद्यतामकृत्वा व्रजन्ति देहादस्मात् प्रयन्ति य एतांश्च यथोक्तान् सत्यान् सत्यसंकल्पकार्यांश्च स्वात्मस्थान् कामाननुविद्य व्रजन्ति तेषां सर्वेषु लोकेष्वकामचारोऽस्वतन्त्रता भवति। यथा राजानुशासनानुवर्तिनीनां प्रजानामित्यर्थः। अथ येऽन्य इह लोक आत्मानं शास्त्राचार्योपदेशमनुविद्य स्वात्मसंवेद्यतामापाद्य व्रजन्ति यथोक्तांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति राज्ञ इव सार्वभौमस्येह लोके ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य प्रथमः खण्डः

नरेन्द्रपुरीयं टिप्पणम्

अयं दोषः केषां भवतीत्याकाङ्क्षायामाह—उक्तो दोष एषामितीति। कर्मसाध्यस्य पारतन्त्र्यं क्षयिष्णुत्वं च ज्ञानहीनकर्मसाध्यविषयमब्रह्मोपासकानामेष दोषो भवतीति दर्शयतीत्यर्थः ॥ ६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य प्रथमद्वितीयखण्डौ

आनन्दगिरिटीका

यति—यथा ह्येवेति। अमुमर्थं प्रश्नपूर्वकमन्वाचष्टे—किमित्यादिना। उक्तदृष्टान्तेन विवक्षितमंशमनूद्य दृष्टान्तान्तरस्य तात्पर्यमाह—एष इति ॥ ५ ॥

केषामेष दोषो भवतीत्याकाङ्क्षायामाह—उक्त इति। कर्मसाध्यस्य पारतन्त्र्यं क्षयिष्णुत्वं च ज्ञानहीनकर्मसाध्यविषयब्रह्मोपासकानामेष दोषो भवतीति दर्शयत्युत्तरं वाक्यमित्यर्थः। अविदुषामेवास्वातन्त्र्यदोषमुक्त्वा विदुषां स्वातन्त्र्यफलं कथयति—अथेत्यादिना ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायां अष्टमाध्यायस्य प्रथमः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तारयति—न चेदित्यादिना। स्वाम्यनुशासनानुवर्तिनां किं किं भवतीति पृच्छति—किं किमिति। तेषां ततो भवतीति शेषः। उत्तरमाह—यं यं इति। विद्यारहितानां कर्मिणां पुण्यफलोपभोगे योऽस्वातन्त्र्यदोषः तं प्रत्येष दृष्टान्तः, इत्यन्वयः ॥ ५ ॥

क्षयं प्रतीति। उच्यत इति शेषः। लोक इति, लोक्यत इति लोकः प्रत्यन्तादिः। उपसंहरतीति। दृष्टान्तगतं पारतन्त्र्यादिकं दोषं दार्ष्टान्तिकमुपनयति तत्र दर्शयतीत्यर्थः। उक्तो दोषः केषामित्याकाङ्क्षायां ये आत्मानुवेदनरहितास्तेषामिति दोषस्याश्रयं दर्शयतीत्याह—इत्युक्त इति। एषामिति आत्मानुवेदनरहिता निर्दिश्यन्ते। कामानां मुख्यसत्यत्वासंभवात्सत्यसंकल्पजन्यत्वेन औपचारिकं सत्यत्वमाह—सत्यसंकल्पेति। स्वात्मस्थानिति। स्वात्मत्वेनापास्यदहराकाशस्थानित्यर्थः। अन्य इति। उक्तेभ्योऽन्य इत्यर्थः ॥ ६ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य प्रथमः खण्डः

'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥

कथं सर्वेषु लोकेषु कामचारो भवतीति, उच्यते—य आत्मानं यथोक्तलक्षणं हृदि साक्षात्कृतवान्वक्ष्यमाणब्रह्मचर्यादिसाधनसंपन्नः संस्तत्स्थांश्च सत्यान्कामान्स त्यक्तदेहो यदि पितृलोककामः पितरो जनयितारस्त एव सुखहेतुत्वेन भोग्यत्वाल्लोका उच्यन्ते तेषु कामो यस्य तैः पितृभिः संबन्धेच्छा यस्य भवति तस्य संकल्पमात्रादेव पितरः समुत्तिष्ठन्त्यात्मसंबन्धितामापद्यन्ते। विशुद्धसत्त्वतया सत्यसंकल्पत्वादीश्वरस्येव तेन पितृलोकेन भोगेन संपन्नः संपत्तिरिष्टप्राप्तिस्तया समृद्धो महीयते पूज्यते वर्धते वा महिमानमनुभवति ॥ १ ॥

नरेन्द्रपुरीयं टिप्पणम्

वाशब्दो महिमानमनुभवतीत्यत्रापि संबन्धनीयः, अनुभवति वेति ॥ १-८ ॥

आनन्दगिरिटीका

उक्तमेवार्थमाकाङ्क्षापूर्वकमुपपादयति—कथमित्यादिना ॥ १ ॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

कामचारमेव प्रपञ्चयितुं उत्तरकण्डिकेत्यवतारयति—कथमिति। स यदीत्यत्र सशब्दार्थमाह—य इति। त्यक्तदेह इति। ततः कार्यं ब्रह्म प्राप्त इत्यपि द्रष्टव्यम्। ततः प्राक् सत्यसङ्कल्पत्वानुपपत्तेः। पितृगतोपभोगेनेति पाठे तु पित्रधीनेनेत्यर्थः। इदं च फलितार्थकथनं, न तु लोकशब्दार्थकथनम्। तस्य भोग्यार्थत्वेन व्याख्यातत्वात्त एव भोग्यत्वेन लोका उच्यन्त इत्यनेन पूर्ववाक्येन संगत इत्यर्थे सशब्दं व्याचष्टे—संप्राप्तिरिति। समित्यनेन प्राप्तिरुच्यत इत्यर्थः, पदिधातोरर्थमाह—तया समृद्ध इति। संप्राप्तिरिष्टप्राप्तिरिति पाठे तु प्रत्ययव्यतिरिक्तस्य संपदित्यस्य अर्थकथनम्। प्रत्ययार्थमाह—तयेति, वस्तुतस्संपत्तिः संप्राप्तिः तया समृद्ध इति पाठश्चेदस्ति तदा सुगमः,

---

१.–(१) संकल्पादेव तु तच्छ्रुतेः। "स यदि पितृलोककामो भवति संकल्पादेवास्य पितरस्समुत्तिष्ठन्ति" इति श्रूयते। तत्र पित्रादिसमुत्थाने संकल्प एव केवलो हेतुः उत निमित्तान्तरसहित इति। तत्र लोके संकल्पे सत्यपि गमनादेव पितरो लभ्यन्ते तथा हेत्वन्तरापेक्षाप्राप्तौ सिद्धान्तः संकल्पादेवेति। तथैव श्रुतेः अन्यथा एवकारश्रुतिः पीड्येत। अत एव चास्य ईश्वरादन्योऽधिपतिर्न विद्यते।

(२) ब्राह्मेण जैमिनिरुपन्यासादिभ्यः(ब्र०सू०४-४-५) अत्र स्वेन रूपेणाभिनिष्पद्यते इति श्रूयते। तत्र संशयः, मुक्तो ब्रह्मलोकं गतः सत्यकामत्वादिविशिष्टब्रह्मरूपेणाभिनिष्पद्यते उत चितितन्मात्रेणेति संशये जैमिनिः ब्राह्मेण सत्यकामत्वादिरूपेणेत्याह। औडुलोमिस्तु चितितन्मात्रेणेति। बादरायणाचार्यास्तु एवमप्युपन्यासादिसद्भावात् "स यदि मातृलोककामो भवती"त्यादिना सः मुक्तः परमार्थतः चैतन्यरूपोऽपि उपन्यासाद्यवगतब्राह्मस्यैश्वर्यस्याप्रत्याख्यानात् अविरोधं मन्यते।

(३) तत्रैव संकल्पादेवेत्यादिश्रवणे सन्देहः प्राप्तैश्वर्यस्य शरीरेन्द्रियाणि विदुषः सन्ति न वा सन्तीति सन्देहे—अभावं बादरिराह ह्येवं ( ब्र० सू० ४-४-१० ) बादर्याचार्यः अभावं शरीरादेः मन्यते। 'मनसैतान् कामान् पश्यन् रमते" इति तदभावश्रवणात् "भावं जैमिनिर्विकल्पामननात्"(ब्र०सू० ४-४-११)। जैमिनिस्तु भावं शरीरादेर्मन्यते। "स एकधा भवति त्रिधा भवति" इति श्रवणात्। "द्वादशाहवदुभयविधं बादरायणोऽतः" ( ब्र० सू० ४-४-१२ ) अनेन सूत्रेण यथा द्वादशाहः क्रतुः सत्रायनोभयविधः एवं मुक्तो यदा सशरीरतां संकल्पयति तदा सशरीरः यदा त्वशरीरतां तदाऽशरीरः सत्यसंकल्पत्वात्। शरीराभावे स्वप्नवत् तस्य विषयभोगः शरीरसत्वे जाग्रद्वत् इति।

(४) भावं जैमिनिर्विकल्पामननादित्यत्र ब्रह्मलोकं गतस्य शरीरवत्वमप्युक्तम्। तत्र "एकधा भवती"त्यत्र न संदेहः। त्रिधाभावादिषु किं निरात्मकानि शरीराणि सृज्यन्ते उत सात्मकानि। तत्रात्मशरीरयोः एकेन शरीरेण योगात् इतराणि निरात्मकानीति पूर्वपक्षे "प्रदीपवदावेशस्तथाहि दर्शयति–(ब्र० सू० ४-४-१५)

अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥

अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥ ३ ॥

अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥

अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥

अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥

अथ यद्यन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन संपन्नो महीयते ॥ ७ ॥

अथ यदि गीतवादितलोककामो भवति संकल्पादेवास्य गीतवादिते समुत्तिष्ठतस्तेन गीतवादितलोकेन संपन्नो महीयते ॥ ८ ॥

अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते ॥ ९ ॥

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य द्वितीयः खण्डः

समानमन्यत् । मातरो जनयित्र्योऽतीताः सुखहेतुभूताः सामर्थ्यात् । न हि दुःखहेतुभूतासु ग्रामसूकरादिजन्मनिमित्तासु मातृषु विशुद्धसत्त्वस्य योगिन इच्छा तत्संबन्धो वा युक्तः ॥ २-९ ॥

यं यमन्तं प्रदेशमभिकामो भवति । यं च कामं कामयते यथोक्तव्यतिरेकेणापि सोऽस्यान्तः प्राप्तुमिष्टः कामश्च संकल्पादेव समुत्तिष्ठत्यस्य । तेनेच्छाऽविघातितयाऽभिप्रेतार्थप्राप्त्या च संपन्नो महीयत इत्युक्तार्थम् ॥ १० ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य द्वितीयः खण्डः

आनन्दगिरिटीका

सुखहेतुभूता इति कुतो विशेषणमित्याशङ्क्याऽऽह—सामर्थ्यादिति । तदेव स्फुटयति—नहीति ॥ २-९ ॥ तेन ज्ञानमाहात्म्येनेति यावत् ॥ १० ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य द्वितीयः खण्डः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छतीति श्रुतेः देवभावं गतस्य तस्य विदुषः न दुःखहेतुमातृसम्बन्धो युक्त इत्याह—सुखहेतुभूता इति ॥ ९-१० ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य द्वितीयः खण्डः

---

यथा प्रदीपः एकः अनेकप्रदीपभावमापद्यते, एवमेकोऽपि सन् विद्वान् ऐश्वर्ययोगादनेकभावमापद्य सर्वाणि शरीराण्याविशति । एकमनोऽनुवर्तीन्यनेकानि शरीराणि सृजति अतो न तेषां निरात्मकत्वम् ।

**त इमे सत्याः कामा अनृतापिधानास्तेषाँ सत्यानाँ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥ १ ॥**

यथोक्तात्मध्यानसाधनानुष्ठानं प्रति साधकानामुत्साहजननार्थमनुक्रोशन्नाह—कष्टमिदं खलु वर्तते यत्स्वात्मस्थाः शक्यप्राप्या अपि त इमे सत्याः कामा अनृतापिधानास्तेषामात्मस्थानां स्वाश्रयाणामेव सतामनृतं बाह्यविषयेषु स्त्र्यन्नभोजनाच्छादनादिषु तृष्णा तन्निमित्तं च स्वेच्छाप्रचारत्वं मिथ्याज्ञाननिमित्तत्वादनृतमित्युच्यते। तन्निमित्तं सत्यानां कामानामप्राप्तिरित्यपिधानमिवापिधानम्। कथमनृतापिधाननिमित्तं तेषामलाभ इति, उच्यते—यो यो हि यस्मादस्य जन्तोः पुत्रो भ्राता वेष्ट इतोऽस्माल्लोकात्प्रैति प्रगच्छति म्रियते तमिष्टं पुत्रं भ्रातरं वा स्वहृदयाकाशे विद्यमानमपीह पुनर्दर्शनायेच्छन्नपि न लभते ॥ १ ॥

### नरेन्द्रपुरीयं टिप्पणम्

स्वाश्रयाणामेव सतामनृतमपिधानमिवापिधानमिति सम्बन्धः। बाध्यमनृतं प्रसिद्धं शुक्तिरूप्यादीह तु किं विवक्षितमित्याशङ्क्याह—बाह्यविषयेष्विति। मिथ्या च तदज्ञानञ्च मिथ्याज्ञानं यदनाद्यनिर्वाच्यजडोपाध्यज्ञानं तदेव सुषुप्ते ब्रह्मस्वरूपावभासप्रतिवन्धकत्वादनृतमपिधानमुच्यते। न हि तत्र विषयतृष्णाया विषयसंग्रहस्य वा संभवः भ्रान्तिवासनायाश्च तत्त्वावभासप्रतिवन्धकत्वादतो मिथ्याज्ञानोपादानकत्वात्तृष्णायास्तन्निमित्तविषयसङ्गस्यापिधानत्वं जाग्रद्दृष्ट्यपेक्षया द्रष्टव्यम्। तेजः परस्यां देवतायामितिश्रुतेः स्वहृदयाकाशे मृतस्य विद्यमानत्वमवगन्तव्यम्। सर्वाधारे स्वात्मभूते जगन्मूल.ारणे ब्रह्मणि विद्यमाना अपि कामा नोपलभ्यन्त इत्यन्याय्यं वर्तत इत्याक्रोशो दर्शितः ॥ १ ॥

### आनन्दगिरिटीका

त इमे सत्याः कामा इत्यादेस्तात्पर्यमाह—यथोक्तेति। आह समनन्तरा श्रुतिरिति शेषः। तमेवानुक्रोशं दर्शयति—कष्टमि त। अनृतमपिधानमिवापिधानं तेषामिति संबन्धः। किं तदनृतं तदाह—बाह्येति। कथं तदपिधानमात्मस्थानां कामानामित्याशङ्क्याऽऽह—तन्निमित्तमिति। उक्तमर्थमाकाङ्क्षापूर्वकमुत्तरं वाक्यमवतार्योपपादयति—कथमित्यादिना। तं हृदयाकाशे स्वात्मनि सन्तमपि द्रष्टुमिच्छन्नपि यस्मान्न लभते तस्मादनृतापिधानं निमित्तं कृत्वा तदलाभो भवतीति योजना ॥ १ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

उपासनोपास्यगुणान्यतमाप्रतिपादकत्वात् 'त इम' इत्यादेः किमुत्थानमित्याशङ्क्य प्रयोजनमाह—यथोक्तेति। अनुक्रोशतीत्युपलक्षणम्। सर्वं तदस्मिन्समाहितमिति कामानामात्मस्थत्वोक्त्या सर्वान्प्रति सदा प्रत्यक्षत्वापत्तिशङ्कायां सापि निराक्रियत इति द्रष्टव्यम्। प्राप्या इति भावप्रधानो निर्देशः। न प्राप्यन्त इति शेषः। तत्र हेतुवाक्यं व्याचष्टे—त इम इत्यादिना। सत्याः कामा इति। कामानां सत्यत्वं सङ्कल्पानन्तरमवश्यंभावात् आत्मरूपेण सर्वदा सत्त्वाद्वा, वाचारम्भणं विकार इत्युक्तत्वान्न परमार्थत इति द्रष्टव्यम्। अनृतस्यासत्यवचनस्य अन्यस्य वा अमूर्तस्य पटादिवदपिधायकत्वं न संभवतीत्याशङ्क्ते—कथमिति। अनृतशब्दार्थं वदन् तस्य गौण्या वृत्त्या अपिधायकत्वमिति परिहरति—तेषामिति। आत्मस्थानामिति। आत्मस्थितानां आत्मसत्तयैव सतामित्यर्थः। एतेन तेषां सत्यत्वमुपपादितं, अथापि मायया भेदेन प्रतीयन्त इत्याह—स्वात्मेति। तन्निमित्तमिति। तृष्णानिमित्तं यदिच्छाप्रचारत्वं रागाद्यधीनविषयप्रवृत्तिः, या च तृष्णास्वरूपेण तदुभयमनृतमित्यर्थः। चशब्दस्य प्रचारत्वमित्यनेन सम्बन्धः। अयथावस्तुविषयत्वमिद्धया अज्ञानमनृतं तन्मूलत्वात्तृष्णाप्रचारत्वयोरनृतत्वमौपचारिकमित्याह—मिथ्याज्ञानेति। उक्तस्यानृतस्यामूर्तस्यापि पटादिवत्कामप्राप्तिप्रतिवन्धकत्वगुणयोगादपिधायकत्वोक्तिरित्याह—तन्निमित्तमिति। तदनेन तेषामिति वाक्यस्य अनृताभिधाना इत्यस्माद्वाक्यादर्थभेदाभावेन पौनरुक्त्याशङ्का निरस्ता। अपिधायकत्वोपपादनार्थत्वादस्य वाक्यस्येति। यो यो हीति वाक्यमन्वयव्यतिरेकाभ्यां अनृतस्य कामाप्राप्तिनिमित्तत्वमुपपादयितुमिति प्रश्नपूर्वकमाह—कथमिति ॥ १ ॥

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तद्यथाऽपि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥२॥**

अथ पुनर्ये चास्य विदुषो जन्तोर्जीवा जीवन्तीह पुत्रा भ्रात्रादयो वा ये च प्रेता मृता इष्टाः संबन्धिनो यच्चान्यदिह लोके वस्त्रान्नपानादि रत्नादि वा वस्त्विच्छन्न लभते तत्सर्वमत्र हृदयाकाशाख्ये ब्रह्मणि गत्वा यथोक्तेन विधिना विन्दते लभते। अत्रास्मिन्हार्दाकाशे हि यस्मादस्यैते यथोक्ताः सत्याः कामा वर्तन्ते अनृतापिधानाः। कथमिव तदन्याय्यमित्युच्यते—तत्तत्र यथा हिरण्यनिधिं हिरण्यमेव पुनर्ग्रहणाय निधातृभिर्निधीयत इति निधिस्तं हिरण्यनिधिं निहितं भूमेरधस्तान्निक्षिप्तमक्षेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तस्ते निधेरुपर्युपरि संचरन्तोऽपि निधिं न विन्देयुः शक्यवेदनमपि। एवमेवेमा अविद्यावत्यः सर्वा इमाः प्रजा यथोक्तं हृदयाकाशाख्यं ब्रह्मलोकं ब्रह्मैव लोको ब्रह्मलोकस्तमहरहः प्रत्यहं गच्छन्त्योऽपि सुषुप्तकाले न विन्दन्ति न लभन्त एषोऽहं ब्रह्मलोकभावमापन्नोऽस्म्यद्येति। अनृतेन हि यथोक्तेन हि यस्मात्प्रत्यूढा हृताः स्वरूपादविद्यादिदोषैर्बहिरपकृष्टा इत्यर्थः। अतः कष्टमिदं वर्तते जन्तूनां यत्स्वायत्तमपि ब्रह्म न लभ्यत इत्यभिप्रायः ॥ २ ॥

### नरेन्द्रपुरीयं टिप्पणम्

तत्र विद्यमानस्याप्राप्तौ दृष्टान्तः क इत्याह—कथमिवेति ॥ २ ॥

### आनन्दगिरिटीका

इतश्च तेषामलाभे निमित्तमनृतापिधानमेवेत्याह—अथ पुनरिति। यथोक्तेन विधिनेत्युपास्तिप्रकारोक्तिः। आत्मस्थानां कामानामनृतापिधानत्वमुक्तं निगमयति—अत्रेति। यस्मादविद्वद्भिरलभ्या विद्वद्भिश्च लभ्याः सत्याः कामाः सर्वाधारे जगन्मूलकारणे ब्रह्मणि स्वात्मभूते वर्तन्ते तस्मात्ते भवन्त्यनृतापिधानाः। सत्यामविद्यायामनुपलम्भाद्विद्यया तत्प्रशमने चोपलम्भादित्यर्थः। यदुक्तं ब्रह्मणि स्वात्मनि कामाः सन्तोऽपि नोपलभ्यन्त इत्यन्याय्यमिति तत्र दृष्टान्तं प्रश्नपूर्वकमुत्थाप्य व्याचष्टे—कथमिवेत्यादिना। तत्र स्वायत्तस्याप्यप्राप्तौ दृष्टान्तो निर्दिश्यत इति शेषः। दार्ष्टान्तिकं व्याकरोति—एवमेवेति। अलाभप्रकारमभिनयति—एषोऽहमिति। तत्र हेतुमाह—अनृतेनेति। यथोक्तेन मिथ्याज्ञानशब्दितानाद्यनिर्वाच्याज्ञानकृतेन तृष्णाप्रभेदेन तन्निमित्तेनेच्छाप्रचारेणेत्यर्थः। तस्मात्प्रजानां स्वात्मभूतब्रह्मलोकालाभ इति शेषः। स्वरूपादनृतेन हृतत्वमेव स्फोरयति—अविद्यादीति। प्रकृतमाक्रोशमुपसंहरति—अत इति ॥ २ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अविदुष उक्तप्रतिबन्धात्कामाप्राप्तिरित्यन्वयमुक्त्वा दहराकाशात्मज्ञस्य विदुष उक्तानृतप्रतिबन्धाभावादप्राप्तिर्नेति व्यतिरेकमाह—अथ पुनरिति। यदेवेह, इच्छन्नपि न लभते तदेव ब्रह्मणि गत्वा लभते, इत्यर्थः। सुषुप्ते प्राणिमात्रस्य ब्रह्मगमनसत्त्वेऽपि न यथोक्तकामप्राप्तिर्दृश्यत इत्यत आह—यथोक्तेनेति। उपासनया साक्षात्कृत्य गत्वेत्यर्थः। कथं कामप्राप्तिरित्याशङ्क्य ब्रह्मणि सर्वकामानां सत्त्वात् तत्प्राप्त्या तत्प्राप्तिस्संभवतीति, तत्र हेतुपरत्वेन वाक्यं व्याचष्टे—अत्रेति। हार्दाकाशशब्दिते ब्रह्मणीत्यर्थः। अनृतापिधाना इत्यनन्तरं अतोऽनृतपरित्यागेन कामानामात्मप्रत्यक्षतानापादनमन्याय्यमिति शेषः।

अत्र उत्तरवाक्यं दृष्टान्तप्रदर्शनार्थत्वेन अवतारयति—कथमिव तदन्याय्यमिति। कथं कष्टमित्यर्थः कष्टमिदं वर्तत इत्युपक्रमात्, अतः कष्टमिदमिति उपसंहारदर्शनाच्च। कथमिव तदनृतमिति पाठः क्वचिद्दृश्यते, स प्रामादिकः, दृष्टान्तेन अनृतत्वाप्रतिपादनात्। यद्वा अहरहर्गच्छन्त्योऽपि ब्रह्मलोकं न विन्दन्तीत्युक्त्या प्राप्तस्याप्यप्राप्तिरवगम्यते,सा चाज्ञानादेव हस्तस्थसुवर्णादिवदिति न्यायेनापिधानस्याज्ञानत्वेन अनृतत्वावगमात् कथंचिद्योज्यः। अस्मिन्पक्षे कथं तदनृतमित्येव प्रश्ने इवकारो वाक्यालङ्कारार्थं इत्येवं द्रष्टव्यम् ॥ २ ॥

**स वा एष आत्मा हृदि तस्यैतदेव निरुक्तँ हृदयमिति तस्माद्धृदयमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ३ ॥**

स वै य आत्माऽपहतपाप्मेति प्रकृतो वैशब्देन तं स्मारयत्येष विवक्षित आत्मा हृदि हृदयपुण्डरीक आकाशशब्देनाभिहितः। तस्यैतस्य हृदयस्यैतदेव निरुक्तं निर्वचनं नान्यत्। हृद्ययमात्मा वर्तत इति यस्मात् तस्माद्धृदयं हृदयनामनिर्वचनप्रसिद्ध्याऽपि स्वहृदय आत्मेत्यवगन्तव्यमित्यभिप्रायः। अहरहर्वै प्रत्यहमेवंविद्धृद्ययमात्मेति जानन्स्वर्गं लोकं हार्दं ब्रह्मेति प्रतिपद्यते। नन्वनेवंविदपि सुषुप्तकाले हार्दं ब्रह्म प्रतिपद्यत एव सुषुप्तकाले सता सोम्य तदा संपन्न इत्युक्तत्वात्। बाढमेवं तथाऽप्यस्ति विशेषः। यथा जानन्नजानंश्च सर्वो जन्तुः सद्ब्रह्मैव तथाऽपि तत्त्वमसीति प्रतिबोधितो विद्वान्सदेव नान्योऽस्मीति जानन्सदेव भवति। एवमेव विद्वानविद्वांश्च सुषुप्ते यद्यपि सत्संपद्यते तथाऽप्येवंविदेव स्वर्गं लोकमेतीत्युच्यते। देहपातेऽपि विद्याफलस्यावश्यंभावित्वादित्येष विशेषः ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

हृदयमात्मेत्येतद्धृदयनामनिर्वचनबलात्सिध्यति। ततो नाम्नि ब्रह्मदृष्टिवद्धृदये ब्रह्मसमारोप इति नाशङ्कनीयमित्याह—स वै य आत्मेति। देहपातेऽपीत्यपिशब्देन जीवन्नपि विद्यासामर्थ्यात् स्वाप्नं दुःखमननुभूय स्वं सुखमनुभवतीत्यर्थः ॥ ३ ॥

### आनन्दगिरिटीका

अनुक्रोशद्वारा यथोक्तब्रह्मध्यानानुष्ठाने प्रयत्नस्य कर्तव्यतोक्ता, सम्प्रति नामादाविव हृदये ब्रह्मदृष्ट्यारोपमात्रमिति शङ्कां वारयितुमनन्तरवाक्यमवतार्य व्याकरोति—स वा इत्यादिना। कथमात्मा यथोक्तो हृदयेऽस्तीति गम्यते तत्राऽऽह—तस्येति। यथोक्तावगतिफलमाह—अहरहरिति। एवंविदिति विशेषणममृष्यमाणः शङ्कते—नन्विति। अनेवंविदोऽपि सुषुप्तिकाले ब्रह्मप्राप्तिमङ्गीकरोति—बाढमेवमिति। तर्हि किमित्येवंविदिति विशेषणमित्याशङ्क्याऽऽह—तथाऽपीति। विद्वदविदुषोर्विशेषमेव दृष्टान्तेन स्पष्टयति—यथेति। त्वं तदसीत्याचार्येण प्रतिबोधितो विद्वान्सदेव भवत्यन्यस्त्वविद्वानसमीति देहादिकमेव जानन्न सदेव भवतीति योजना। देहपातेऽपीत्यपिशब्देन जीवदवस्था दृष्टान्तिता ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु हृदये आकाशशब्दितस्य ब्रह्मणस्सत्त्वे अहरहस्सुषुप्तिकाले प्रजानां तद्गमनं स्यात्, तदेव तु नास्ति, मानाभावात्। न च शरीराद्बहिर्गमनेन ब्रह्मगमनं जीवानां सम्भवति मरणप्रसङ्गादित्याशङ्क्य हृदयनामप्रसिद्ध्या तत्र सत्त्वं साधयितुं स वा इत्यादिवाक्यं व्याचष्टे—स वा इति। तत्र सशब्दार्थमाह—एष आत्मेति। विवक्षित इति। उपास्यत्वेन तात्पर्यविषय इत्यर्थः। अभिहित इत्यनन्तरं वर्तत इति शेषः। प्रतिज्ञातेऽर्थे हेतुवाक्यं व्याचष्टे—तस्येति। यद्यपीदं वाक्यं हृदयस्य उपासनास्थानत्वविधानार्थमिव प्रतीयते, तथापि तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यनेनैव तस्यार्थस्य सिद्धत्वाद्धृदये तस्य सत्त्वप्रतिपादनार्थमेवेत्याह—नामनिर्वचनेति। उक्तप्रकारेण हृदयं आत्मेति जानन् तदुपासनेन तत्त्वज्ञानेन सदा ब्रह्मानन्दं प्राप्नोतीति तज्ज्ञानं स्तौति—अहरहर्वा इति। हार्दं ब्रह्मेति। स्वर्गशब्दस्य निरतिशयसुखसामान्यवाचित्वात् ब्रह्मण एव निरतिशयसुखत्वात् "स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः" इति श्रुतौ ब्रह्मणि प्रयोगदर्शनाच्च, इहापि स्वर्गलोकशब्दो ब्रह्मवाचीत्यर्थ इति। एवंविदिति विशेषणमयुक्तमिति शङ्कते—नन्विति। द्वितीयं सुषुप्तिकाल इति पदं उदाह्रियमाणश्रुतिगततदाशब्दव्याख्यानार्थम्। यथा पुनरसंपत्तिभ्रमाभावेन विद्वानेव "आचार्यवान्वेद," "अथ सत्संपत्स्ये," इत्यादौ सत्संपन्नत्वेनोच्यते, एवमिहापि पुनरविदुष इव पुनरप्राप्त्यभावेन विद्वानेव स्वर्गलोकमेतीति तदीयप्राप्तिरेव विद्यास्तुत्यर्थमुच्यते, न त्वविदुषो व्यावृत्तिरस्यार्थ इति परिहरति—बाढमिति। विद्वान्सदेवेति। विद्वानेव सत् नान्योऽस्मीति विजानन्नेव सदित्यन्वयः। एष विशेष इति। अप्राप्तिविरोधीति आत्यन्तिकप्राप्तिः विद्यास्तुत्यर्थं इह निर्दिश्यत इत्यर्थः ॥ ३ ॥

**अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥४॥**

सुषुप्तकाले स्वेनाऽऽत्मना सता संपन्नः सन्सम्यक्प्रसीदतीति जाग्रत्स्वप्नयोर्विषयेन्द्रियसंयोगजातं कालुष्यं जहातीति संप्रसादशब्दो यद्यपि सर्वजन्तूनां साधारणस्तथाऽप्येवंवित्स्वर्गं लोकमेतीति प्रकृतत्वादेष संप्रसाद इति संनिहितवद्यत्नविशेषात्सोऽथेदं शरीरं हित्वाऽस्माच्छरीरात्समुत्थाय शरीरात्मभावनां परित्यज्येत्यर्थः। न त्वासनादिव समुत्थायेतीह युक्तम्। स्वेन रूपेणेति विशेषणात्। न ह्यन्यत उत्थाय स्वरूपं संपत्तव्यम्। स्वरूपमेव हि तन्न भवति प्रतिपत्तव्यं चेत्स्यात्। परं परमात्मलक्षणं विज्ञप्तिस्वभावं ज्योतिरुपसंपद्य स्वास्थ्यमुपगम्येत्येतत्। स्वेन

नरेन्द्रपुरीयं टिप्पणम्

संप्रसादस्य विदुषो यन्मुक्त्यालम्बनं शुद्धं ब्रह्म तत्तादात्म्योपदेशेनोपास्यं स्तोतुं संप्रसादशब्दार्थं तावदाह—सुषुप्तकाल इति। स्वाभाविकमेव स्वाच्छ्यमात्मनः कथं सुषुप्ते प्रसीदति स्वच्छो भवतीति विशेष्यते तत्राह—जाग्रदिति। व्युत्पत्तिबलेन संप्रसादशब्दः सौषुप्तसर्वजीवसाधारणः कथमेष संप्रसाद इति सन्निहितपरामर्शः, तत्राह—संप्रसादशब्दो यद्यपीति। यद्यपि निर्गुणचित्सन्निहितो न भवत्यत्र तथापि विद्वत्सन्निधानात् सन्निहितवद्यत्न-

आनन्दगिरिटीका

संप्रसादस्य विदुषो यन्मुक्त्यालम्बनं शुद्धं ब्रह्म तत्तादात्म्योपदेशेनोपास्यं स्तोतुं संप्रसादशब्दार्थं कथयति—सुषुप्तेति। सम्यक्प्रसीदतीति संप्रसादो विद्वानिति शेषः। स्वाभाविकमेवाऽऽत्मनः स्वास्थ्यं कथं सुषुप्ते प्रसीदतीति विशेष्यते तत्राऽऽह—जाग्रदिति। जहातीति सुषुप्तः पुरुषः संप्रसाद इति विशेषव्युत्पत्तिबलेन संप्रसादशब्दः सौषुप्तसर्वजीवसाधारणस्तत्कथमेष संप्रसाद इति संनिहितविद्वत्परामर्शस्तत्राऽऽह—संप्रसादशब्द इति। तस्य सौषुप्तसर्वजीवसाधारणत्वेऽपि प्रक्रमवशाद्विद्वानेवैष संप्रसाद इति व्यपदिश्यते। यथा संनिहितोऽर्थो यत्नविशेषादेष इति शब्दशक्तिवशादुच्यते तथेहापीत्यर्थः। एष एवंवित्प्रकृतः संप्रसादः स विद्वानिति यावत्। विवेकानन्तर्यमथशब्दार्थः। समुत्थानशब्दस्य मुख्यार्थत्वं वारयति—न त्विति। देहाद्व्युत्थितस्यापि स्वेन रूपेणाभिनिष्पत्तिर्भविष्यतीत्या-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सुषुप्तिकाले यद्ब्रह्म अहरहर्गच्छन्ति तद्ब्रह्म दहराकाशशब्दितमित्युक्तम्। अर्थात्पूर्वकाले इदानीं यत्प्रतिपत्स्यन्ते ज्ञानिनः तदेव दहराकाशः। अतः प्रत्यगात्मरूपत्वादपि तस्य हृदये सत्त्वमिति वक्तुं 'अथ य एष' इत्यादिवाक्यं तत्र संप्रसादशब्दार्थं वदन्संप्रसादशब्दितस्य स्वरूपाभिनिष्पत्तौ सुषुप्तमात्रस्य सा स्यादिति शङ्कते—सुषुप्तिकाल इति। सम्यक्प्रसीदतीत्यस्य संप्रसादशब्द इत्यनेनान्वयः, प्रसादमेव कालुष्योक्तिद्वाराऽऽह—जाग्रदिति। साधारण इति। तथा च सुप्तमात्रस्याभिनिष्पत्तिः स्यादिति शेषः। संप्रसादशब्दस्य सर्वसाधारणत्वेऽपि सन्निधिवशात्प्रकृतवाच्येतच्छब्दबलाच्च विदुषि सङ्कोच इत्युत्तरमाह—तथापीति। विद्वानेव इह संप्रसादशब्दार्थ इति शेषः। यद्यपि प्रकृतत्वं सन्निहितत्वं च हृदय आत्मेति ज्ञानस्य आत्मोपासनस्य वा न त्वात्मनो ब्रह्मात्मत्वज्ञानस्य, तस्यैव च स्वरूपाभिनिष्पत्तिहेतुत्वं, न पूर्वोक्तस्य तथापि तन्मात्रस्य स्वर्गलोकशब्दितब्रह्मप्राप्तिहेतुत्वासंभवात् ब्रह्मज्ञानद्वारा तद्धेतुत्वमित्यर्थात्तदपि प्रकृतमित्यर्थः। यद्वा स्वरूपाभिनिष्पत्तिजनकत्वसामर्थ्याल्लिङ्गात् षष्ठसप्तमयोर्वा प्रकृतं ब्रह्मज्ञानमिह गृह्यत इति भावः। एवं संप्रसादशब्दार्थमुक्त्वा वाक्यं व्याचष्टे—सोऽथेदमित्यादिना। प्रातीतिकमर्थमाह—शरीरमिति। विवक्षितमर्थमाह—शरीरात्मेति। समुत्थानं आसनात्समुत्थायेतिवत् मुख्यमेव किं न स्यादित्याशङ्क्य तथा सति गतिपूर्विका स्वरूपसंपत्तिः उक्ता स्यात्, न चाभेदे सेयं भवतीति स्वरूपाभिनिष्पत्त्युक्तिरयुक्ता स्यात्। अतो देहात्मभ्रमनिवृत्तिरेव रोगनिवृत्तिवत्समुत्थानं स्वरूपाभिनिष्पत्तिश्च रोगनिवृत्तौ स्वास्थ्यप्राप्तिवत् स्वरूपावस्थानं इत्यभिप्रेत्याह—न चेत्यादिना। न ह्यन्यत उत्थायेत्यनन्तरं गतिद्वारेति शेषः। स्वरूपस्य स्वात्ममात्रतया देहात्मभ्रमनिवृत्त्या इहैव प्राप्तिसम्भवात्। न च ब्रह्मलोक एव उक्तापि स्वात्मसंपत्तिरिति वाच्यं, मानाभावात्, "अत्र ब्रह्म समश्नुत" इति श्रुतिविरोधश्च स्यादिति। प्रतिपत्तव्यं चेदिति। गतिपूर्वकमिति शेषः, ज्ञानेन प्रतिपत्तव्यत्वाङ्गीकारात्। ज्योतिर्दर्शनादित्यधिकरणन्यायेन भौतिकमादित्यज्योतिर्व्यावर्तयति—विज्ञप्तीति।

आत्मीयेन रूपेणाभिनिष्पद्यते प्रागेतस्याः स्वरूपसंपत्तेरविद्यया देहमेवापरं रूपमात्मत्वेनोपगत इति तदपेक्षयेदमुच्यते स्वेन रूपेणेति। अशरीरता ह्यात्मनः स्वरूपं यत्स्वं परं ज्योतिःस्वरूपमापद्यते संप्रसाद एष आत्मेति होवाच। स ब्रूयादिति यः श्रुत्या नियुक्तोऽन्तेवासिभ्यः। किंचैतदमृतमविनाशि भूमा यो वै भूमा तदमृतमित्युक्तम्। अत एवाभयं

### नरेन्द्रपुरीयं टिप्पणम्

विशेषात् स एव परामृश्यत इति शेषः। स्वरूपे अभिनिष्पत्तिप्रयोगः कथमित्यत्राह—प्रागेतस्या इति। अनात्मरूपप्रतिपत्तिभ्रान्तिनिवृत्त्यपेक्षया स्वरूपसंपत्तिरुपचर्यत इत्यर्थः। अशरीरता हीति। वास्तवशरीरसम्बन्धविरुद्धं यथा मिथ्यारूप्यतादात्म्यनिवृत्तौ स्वाभाविकेनारूप्यात्मना शुक्तिरवतिष्ठते तथा शरीरतादात्म्यभ्रान्तिनिवृत्तावशरीरस्वरूपस्थितिरित्यर्थः ॥ ४ ॥

### आनन्दगिरिटीका

शङ्कयाऽऽह—न हीति। कुतोऽयं स्वरूपेऽभिनिष्पत्तिप्रयोगस्तत्राऽऽह—प्रागिति। एतच्छब्दः सम्यग्ज्ञानविषयः। अनात्मस्वरूपप्रतिपत्तिभ्रान्तिनिवृत्त्यपेक्षया स्वरूपसंपत्तिरुपचरितेत्यर्थः। किं तत्स्वरूपमिति तदाह—अशरीरता हीति। यथा मिथ्यारूप्यतादात्म्यनिवृत्तौ स्वाभाविकेनारूप्यात्मना शुक्तिरवतिष्ठते तथा शरीरतादात्म्यभ्रान्तिनिवृत्तौ तदभावोपलक्षितं स्वच्छं स्वरूपमेवावस्थितं भवतीत्यर्थः। एष आत्मेति होवाचेत्यत्रैषशब्दार्थमाह—यत्स्वमिति। कोऽसावुक्तिकर्तेत्याकाङ्क्षायामाह—स ब्रूयादिति। न केवलमात्मत्वमेव प्रकृतस्य ज्योतिषः किंतु रूपान्तरत्वमस्तीत्याह—किंचेति। अविनाशित्वे हेतुमाह—भूमेति। तथाऽपि कथमविनाशित्वं तत्राऽऽह—यो वा इति। इतिशब्दो

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स्वरूपस्य विद्यमानस्यैव इदानीमभिनिष्पत्तिः कथमित्याशङ्क्य औपचारिकीं तामाह—प्रागेतस्या इति। पररूपमिति। अन्यरूपमित्यर्थः, देहस्य अन्यरूपत्वे किं तत्स्वरूपमत आह—अशरीरतेति। न च परमात्मसंपत्तिव्यतिरेकेण स्वरूपाभिनिष्पत्तेरभावात्पुनरुक्तिरिति वाच्यम्। आमुक्तेर्भेद एव स्यात् जीवस्य च परस्य च। मुक्तस्य न भेदोऽस्ति भेदहेतोरभावत इति, मुक्तिकाले एव जीवस्य ब्रह्मत्वं न संसारदशायामिति ये मन्यते तद्भ्रमनिराकरणार्थत्वात् स्वरूपाभिनिष्पत्त्युक्तेः, आगन्तुकस्य स्वरूपत्वाभावात्। न च स्वशब्दः स्वीय इति वाच्यम्, यद्रूपं प्राप्नोति तस्य स्वीयत्वस्य अनुक्तिसिद्धत्वेन तदुक्तिवैयर्थ्यात्। तदुक्तं सूत्रकृता—संपद्याविर्भावः स्वेन शब्दादिति। एवं परंज्योतिरुपसंपद्येत्येतदपि पदं साङ्ख्यानामिव जीवस्य सर्वोपाधिविनिर्मुक्तकेवलस्वरूपेणावस्थानं न त्वद्वितीयब्रह्मरूपेणावस्थानमिति शङ्कानिराकरणार्थमिति न तस्यापि वैयर्थ्यमिति भावः। केचित्तु अभिनिष्पत्तिः स्वरूपसाक्षात्कारः शरीरात्समुत्थानं च त्वंपदार्थशोधनं, ततश्च समुत्थाय अभिनिष्पद्य परंज्योतिरुपसंपद्यत इत्यङ्गीकृत्य क्त्वाश्रुतिः मुखं व्यादाय स्वपितीतिवद्योजनीयेति वदन्ति। तत्तु एष संप्रसाद इत्यनेनैव साक्षात्कारवत्त्वस्य उक्तत्वात् पुनरुक्तमित्यभिप्रेत्य भाष्यकारैः यथाश्रुत्यैव व्याख्यातम्।

अन्ये तु शरीरान्निर्गत्य आदित्यमण्डलं परंज्योतिश्शब्दितं प्राप्य ब्रह्मलोके स्वेन रूपेण अभिनिष्पद्यत इति वदन्ति। तदयुक्तम्, व्यापिनो देहान्निर्गमनानुपपत्तेः। गतिपूर्वत्वे संपद्यमानस्य स्वरूपत्वानुपपत्तेः, आगन्तुकस्य विनाशित्वापत्तेः, "न तस्य प्राणा उत्क्रामन्ती"ति उत्क्रान्तिप्रतिषेधात् "अत्र ब्रह्म समश्नुत" इत्यादि श्रुतिविरोधात्, "ज्योतिर्दर्शनादि"त्यनेन सूत्रेण ज्योतिश्शब्दस्य चैतन्यवाचित्वोक्तेः, "संपद्याविर्भावः स्वेन शब्दादि"त्यत्र स्वशब्दस्य स्वभाववाचित्वोक्तेः, दहरविद्याफलप्राप्तेश्च नाडीखण्डे वक्ष्यमाणत्वेन अस्य तद्विषयत्वायोगाच्चेति। नन्वेवं स्वरूपसंपत्तिवचनं प्रकृतविरोधि। जीवस्य ब्रह्मस्वभावतोक्तौ तत्त्वमस्यादाविव कर्त्रादिभेदबुद्धिबाधे उपासनानुष्ठानासंभवादित्याशङ्क्य नास्य त्वंपदार्थस्य कर्त्रादिबाधेन पदार्थशोधनपूर्वकं ब्रह्मत्वमुच्यते, किन्तु अन्यत्र निर्गुणविद्यायां मुक्तौ ब्रह्मसंपत्तिरुपास्यसगुणब्रह्मोपासनलक्षणयाऽनूद्यते। न चैतावता कर्त्रादिबाधः पदार्थशोधनाधीनत्वात्तस्येत्याह—यत्स्वरूपमिति। ननु श्रुतिकर्तृके वाक्ये उवाचेति परोक्तिवचनं अयुक्तमित्याशङ्क्य नेदं श्रुतिवाक्यं, किन्तु शिष्यान्प्रति आचार्योक्त्यनुवाद इत्याह—स ब्रूयादिति। अमृतत्वे अपरिच्छिन्नत्वं हेतुरिति श्रुत्युक्त्याऽऽह—यो वा इति। "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाती"ति भूम्नस्त्रिविधपरिच्छेदाभावोक्तेर्विनाशहेतोः द्वितीयस्य अभावान्निर्हेतुकविनाशस्य क्षणवादनिराकरणेन निराकृतत्वाद्ध्रुवत्यपरिच्छिन्नत्वं हेतुरिति

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति ॥ ५ ॥**

**इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य तृतीयः खण्डः**

भूम्नो द्वितीयाभावादत एतद्ब्रह्मेति । तस्य ह वा एतस्य ब्रह्मणो नामाभिधानम् । किं तत्सत्यमिति । सत्यं ह्यवितथं ब्रह्म । तत्सत्यं स आत्मेति ह्युक्तम् । अथ किमर्थमिदं नाम पुनरुच्यते । तदुपासनविधिस्तुत्यर्थम् ॥ ४ ॥

तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सतीयमिति सकारस्तकारो यमितिच । तकार ईकारः उच्चारणार्थोऽनुबन्धः । ह्रस्वेनैवाक्षरेण पुनः प्रतिनिर्देशात्तेषाम् । तत्तत्र यत्सत्सकारस्तदमृतं सद्ब्रह्मामृतवाचकत्वादमृत एव सकारस्तकारान्तो निर्दिष्टः । अथ यत्ति तकारस्तन्मर्त्यम् । अथ यद्यमक्षरं तेनाक्षरेणामृतमर्त्याख्ये

**नरेन्द्रपुरीयं टिप्पणम्**

दीर्घमीकारं निर्दिश्य ह्रस्वं पुनरनुवदन् अविवक्षितत्वमेव नामाक्षरेषु तस्येति सूचयतीत्याह—**ह्रस्वेनेति** ।

**आनन्दगिरिटीका**

हेत्वर्थः । यस्माद्यथोक्तलक्षणं ब्रह्म तस्मात्तदुपासनामर्हतीत्यर्थः । उपास्यस्य ब्रह्मणो नाम निर्दिशति—**तस्येति** । उक्तस्य पुनरुक्तिरनर्थिकेत्याशङ्क्य परिहरति—**किमर्थमित्यादिना** ॥ ४ ॥

उपास्यस्तुत्यर्थं नामोक्त्वा तादर्थ्येनैव नामाक्षराणि प्रस्तौति—**तानीति** । तानि कानीत्यपेक्षायामाह—**एतानीति** । कथं तकार इत्युच्यत ईकारस्यापि तत्र भावादित्याशङ्क्याऽऽह—**ईकार इति** । तत्र हेतुमाह—**ह्रस्वेनेति** । दीर्घमीकारमुद्दिश्य ह्रस्वं पुनरनुवदन्नविवक्षितत्वमेव नामाक्षरेषु तस्य सूचयतीत्यर्थः । त्रयाणामक्षराणामवान्तरभेदं दर्शयति—**तेषामिति** । निर्धारणे षष्ठी । वर्णविभागानन्तर्यमथशब्दार्थः । तकारस्याक्षरसामान्यान्मर्त्यत्वम् ।

**अभिनवनारायणानन्देन्द्रसरस्वतीटीका**

भावः । परिच्छेदाभावादेव निरुपाधिकमहत्वरूपं ब्रह्मत्वमित्याह—**अत एवेति** । यद्यपि व्यवहारदृष्टिमारभ्य उपासनाप्रवृत्तिः अन्यथा भेदाभावेन तदयोगात्, तत्र च नाद्वितीयत्वं तथापि परमार्थदृष्ट्याश्रयमद्वितीयत्वं वस्तुत्वेन उपास्यस्तुत्यर्थमुच्यते इति शेषः । अत एव तस्य ह वा एतस्येत्यादि सर्वं स्तुत्यर्थमित्येवोक्तमिति भाष्ये स्तुतिसिध्यर्थमेव तस्य नाम्नः अन्वर्थत्वमाह—**सत्यं हीति** । ह वा इति निपातद्वयोक्तां प्रसिद्धिं श्रुत्या दर्शयति—**तत्सत्यमिति** । तर्हि तत्रोक्तस्य इहोक्तिर्व्यर्थेत्याशङ्क्य निर्गुणविद्यायामुक्तमपि परमार्थवृत्त्याश्रयमिह स्तुत्यर्थमुच्यत इत्याह—**तदिति** ॥ ४ ॥

स्तुत्यर्थमेव नामाक्षरमाहात्म्यमप्याह—**तानीत्यादिना** । अक्षरस्वरूपप्रदर्शनार्थमेतच्छब्दस्य पुनरावृत्तिः, सत्यमित्यत्र तकारोपरि इकारश्रवणात्कथं तीतिनिर्देश इत्यत आह—**तकार इकार इति** । तकारोपरितन इकार इत्यर्थः । ननु सतीयमितीति दीर्घमिकारं तकारोपरि केचित्पठन्ति, तथा च ईकार उच्चारणार्थ इति वक्तव्ये किमिति इकार इत्युक्तमित्याशङ्क्य अथ यत्ति तन्मर्त्यमिति पुनर्निर्देशे ह्रस्वस्यैव सर्वेषां पाठेऽपि दर्शनात् इह दीर्घेण इकारेण पाठः प्रामादिक इत्याह—**ह्रस्वेनेति** । तद्यत्सदित्यत्र तादर्थ्यव्ययं तेषामित्यर्थ इति व्याचष्टे—**तेषां मध्य इति** । यत्सत्तदमृतमित्यत्र केवलसकारस्यैव निर्देशे कर्तव्ये तकारान्ततया निर्देशो न युक्त इत्याशङ्क्य सकारस्य अमृतत्वं अमृतब्रह्मवाचकसत्पदान्तर्गतत्वेन दर्शयितुं सत्पदप्रत्यभिज्ञानाय तकारान्ततया निर्देश इत्याह—**सद्ब्रह्मेति** । **वाचकत्वादिति** । वाचकसत्पदस्थत्वादित्यर्थः । **अमृत एव सकार इति** । वाच्यवाचकाभेदोपचार इत्यर्थः । सकार इत्यनन्तरं इति ज्ञापयितुमिति शेषः । **तन्मर्त्यमिति** । मर्त्यशब्दे तकारस्य सत्त्वादवयवभूते तस्मिन्मर्त्यशब्दरूपावयवित्वमारोप्य वाच्यवाचकाभेदेन तकारो मर्त्यमित्यर्थः । यच्छतीति पदस्य नियन्तृवाचकत्वात्तत्पर्यायभूतस्य यमयतीत्यस्यापि तथात्वाद्वाच्यवाचकाभेदविवक्षायां यमयतीत्यस्य पदस्य नियन्तृत्वे सत्यवयवावयविनोरभेदविवक्षया यमित्यवयवस्यैव नियन्तृत्वं अमृतमर्त्यभूतौ सकारतकारौ प्रतीत्याह—**अथ यद्यमित्यादिना** । तेनाक्षरेणेत्यस्य आत्मनेति व्यवहितेनान्वयः । ततश्च यमित्यनेन अक्षरस्वरूपेणैव यमित्यक्षरमेव उभे यच्छति, नार्थव्यवधानेनेत्यर्थो

पूर्वे उभे अक्षरे यच्छति यमयति नियमयति वशीकरोत्यात्मन इत्यर्थः। यद्यस्मादनेन यमित्येतेनोभे यच्छति तस्माद्यम्। संयते इव ह्येतेन यमा लक्ष्येते। ब्रह्मनामाक्षरस्यापीदममृतत्वादिधर्मवत्त्वं महाभाग्यं किमुत नामवत इत्युपास्यत्वाय स्तूयते। ब्रह्मनामनिर्वचनेनैव नामवतो वेत्तैवंवित्। अहरहर्वा एवंवित्स्वर्गं लोकमेतीत्युक्तार्थम्॥५॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य तृतीयः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

मर्त्यपदान्तर्गतत्वात् तकारस्येत्यर्थः। यमित्यक्षरेण पूर्वे अक्षरे कथं प्रयोक्ता नियमयतीत्याकाङ्क्षायामाह – आत्मन इति। यमयतीति यं ततोऽस्याक्षरस्य नियमनस्वाभाव्येन यमयतीत्यर्थः। ब्रह्मोपासनविधिस्तुत्यर्थमित्युक्तं नामकीर्तनं; स्तुतिप्रकारमाह—ब्रह्मनामाक्षरस्यापीति ॥ ५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य तृतीयः खण्डः

### आनन्दगिरिटीका

कथमक्षरे पूर्वे यमित्यक्षरेण प्रयोक्ता नियमयतीत्याकाङ्क्षायां नियमनस्वाभाव्येनेत्याह—आत्मन इति। यमित्यक्षरस्य नियमनस्वाभाव्यमेव साधयति—यद्यस्मादिति। तस्य तत्स्वभावत्वेऽनुभवमनुकूलयति—संयते इवेति। यमा यमित्यक्षरेणेत्यर्थः। तस्य पूर्वाभ्यामुपरिष्टाद्भावित्वं तन्नियामकत्वे हेतुरिति मत्वाऽऽह—एतेनेति। लक्ष्येते पूर्वे अक्षरे इति शेषः। ब्रह्मणः सत्यमिति नाम तस्य यन्निर्वचनं कृतं तस्य प्रयोजनमाह—ब्रह्मेति। फलवाक्यस्थमेवंवित्पदं व्याकरोति—एवमिति। वाक्यं तु न व्याख्येयं प्रागेव व्याख्यातत्वादित्याह—अहरिति ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायां अष्टमाध्यायस्य तृतीयः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

लभ्यते। आत्मेत्यर्थ इति क्वचित्पाठः। स प्रामादिकः। एवं च सति नामाक्षरस्यापि इदं महाभाग्यमित्यग्रेतनवाक्यं युज्यते। अन्यथा आत्मन एव एतेनाक्षरेण साधनेन नियन्तृत्वे तद्विरुध्येत, तदक्षरद्वारा आत्मनो नियन्तृत्वादर्शनाच्चेति। यमित्येतेनेति। एतेनात्मना स्वरूपेण यमेव यच्छतीत्यर्थः।

एवं यमित्यस्य वाच्याभेदोपचारेण नियन्तृत्वमुक्त्वा साक्षादप्याह—यम्येते इवेति। यथा सेनाग्रस्थः राजभृत्यः सेनादिकं स्वेच्छागमनादिवारणेन नियच्छति, एवं यमित्यक्षरं सकारतकारयोरग्रे दृश्यमानं नियच्छतीव लक्ष्यत इत्यर्थः। अनेन यमेति सकारतकाराग्रेतनेन यमित्यक्षरेणेत्यर्थ। (न यमेति पाठस्तु स्वप्ननामनिर्वचनेन ब्रह्मोपास्यत्वाय स्तूयत इत्यन्वयः।) अहरहर्वा इत्यत्र एवंविदिति पदं व्याचष्टे—नामवत इति। नामनिर्वचनस्य स्तुत्यर्थत्वेन वेद्यत्वाभावान्नामवत एवेत्युक्तम्।

यद्यपि नामनिर्वचनेऽपि उपास्यतद्वेदनस्यैवेदं फलमिति स्वरसतः प्रतीयते तथापि तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानिति प्रयोगविधिना सत्यकामादिगुणानां पुनर्विधानात्तस्य च इतरपरिसङ्ख्यार्थत्वेन गुणान्तरस्य उपास्यत्वनिवारणात् तत्कीर्तनं स्तुत्यर्थतया व्याख्यातम्। अत एव वक्ष्यमाणं सेतुत्वविधृतित्वादिकमपि स्तुत्यर्थमेवेति वक्ष्यति। अत एव वाचस्पतिना "कामादीतरत्र तत्र च आयतनादिभ्यः" इत्यत्र वशित्वादीनां बृहदारण्यके निर्गुणविद्यागतानामिहोपसंहृतानां अस्यास्सगुणविद्यात्वेन अत्र उपास्यत्वयोग्यानामपि प्रयोगविध्यपरिगृहीतत्वात् स्तुत्यर्थतैवेत्युक्तम्। न्यायश्च—यदि श्रुतत्वमात्रेण गुणानामुपास्यत्वं स्यात् तदा एतांश्च सत्यान्कामानिति कामानां पृथगुपास्यत्वं न ब्रूयात्। अत इतरेषां श्रूयमाणानां परिसंख्यानार्थं पुनश्श्रवणमिति निश्चीयत इति स्तुत्यर्थत्वमेव तेषाम्। किंच तस्मिन्यदन्तस्तदन्वेष्टव्यमिति उपासनां विधाय यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति सर्वस्य समाहितत्ववचनेन सर्वस्याप्युपास्यत्वसिद्धेः पुनरिदं वचनं स्तुत्यर्थमिति भावः। इत्युक्तार्थमिति। उक्तप्रकारेण ब्रह्मणः स्तुतत्वे तदुपासनया क्रममुक्तौ स्वर्गलोकशब्दितं ब्रह्मानन्दं प्राप्नोतीत्युक्तार्थमित्यर्थः ॥ ५ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य तृतीयः खण्डः

**अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय नैतँ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतँ सर्वे [1]पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥**

अथ य आत्मेति । उक्तलक्षणो यः संप्रसादस्तस्य स्वरूपं वक्ष्यमाणैरुक्तैरनुक्तैश्च गुणैः पुनः स्तूयते ब्रह्मचर्यसाधनसंबन्धार्थम् । य एष यथोक्तलक्षण आत्मा स सेतुरिव सेतुः । विधृतिर्विधरणः । अनेन हि सर्वं जगद्वर्णाश्रमादिक्रियाकारकफलादिभेदनियमैः कर्तुरनुरूपं विदधता विधृतम् । अविध्रियमाणं हीश्वरेणेदं विश्वं विनश्येद्यतस्तस्मात्स सेतुर्विधृतिः । किमर्थं स सेतुरित्याह --एषां भूरादीनां लोकानां कर्तृकर्मफलाश्रयाणामसंभेदायाविदारणायाविनाशायेत्येतत् । किंविशिष्टश्चासौ सेतुरित्याह—नैतम् सेतुमात्मानमहोरात्रे सर्वस्य जनिमतः परिच्छेदके सती नैतं तरतः । यथाऽन्ये संसारिणः कालेनाहोरात्रादिलक्षणेन परिच्छेद्या न तथाऽयं कालपरिच्छेद्य इत्यभिप्रायः । "यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तत" इति श्रुत्यन्तरात् । अत एवैनं न जरा तरति न प्राप्नोति । तथा न मृत्युर्न शोको न सुकृतं न दुष्कृतं सुकृतदुष्कृते धर्माधर्मौ । प्राप्तिरत्र तरणशब्देनाभिप्रेता नातिक्रमणम् । कारणं ह्यात्मा । न शक्यं

नरेन्द्रपुरीयं टिप्पणम्

सेतुरिवेति । यथा मृदादिमयः सेतुर्व्यवस्थाहेतुरस्येदं क्षेत्रमिति । तथा अयमपि व्यवस्थाहेतुरित्यर्थः ।

आनन्दगिरिटीका

वाक्यान्तरमादत्ते—अथेति । तस्य तात्पर्यमाह—उक्तलक्षण इति । प्रकारान्तरेण स्तुतिप्रारम्भार्थो वाक्यस्थोऽथशब्दः । किमिति स्तुतिरित्यपेक्षायां स्तुत्ये ब्रह्मण्याधारे ब्रह्मचर्याख्यस्य साधनस्य संबन्धविधानार्थमित्याह—ब्रह्मचर्येति । यथा मृदादिमयः सेतुर्व्यवस्थाहेतुरस्येदं क्षेत्रमिति तथाऽयमपि व्यवस्थाहेतुरित्याह—सेतुरिवेति । सेतुत्वं साधयति—विधृतिरिति । विधारकत्वमुपपादयति—अनेनेति । वर्णाश्रमादीत्यादिशब्दो वयोवस्थाविषयः । फलादीत्यादिशब्दस्तु तदवान्तरजातीयविषयः । कर्त्रनुरूपक्रियादिभेदविषयनियमैः सह वर्णादि व्यवस्थापयता परमेश्वरेण सर्वं जगद्विधृतमिति संबन्धः । अन्वयमुखेनोक्तमेव व्यतिरेकमुखेनाऽऽह—अविध्रियमाणं हीति । उक्तमेवार्थं प्रश्नपूर्वकं विशदयति—किमर्थमित्यादिना । नैतमिति प्रतीकग्रहणं यत्तद्व्याचष्टे—सेतुमित्यादिना । तदेव वैधर्म्यदृष्टान्तेन स्पष्टयति—यथेत्यादिना । परमात्मनो न कालपरिच्छेद्यतेत्यत्राऽऽथर्वणश्रुतिं प्रमाणयति—यस्मादिति । तरतीति तरतेरतिक्रमणार्थो नाऽऽत्मनि संभवतीत्यत्र हेतुमाह—कारणं हीति । कार्यस्य

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अथ य आत्मेत्यथशब्देन अर्थान्तरोक्तिभ्रमं वारयति—उक्तलक्षणो यः संप्रसाद इति । संप्रसादप्राप्यस्तत्स्वरूपभूत इत्यर्थः । ब्रह्मचर्यादिसाधनान्तरविधानाय अथशब्द इति भावः । उक्तैरिति । जराभावादिभिः । अनुक्तैस्सेत्वादिभिः मृद्दार्वादिनिर्मितो जलसन्तानविधारकस्सेतुरुच्यते । लोके ब्रह्मणो निरवयवस्य कथं सेतुत्वमित्याशङ्क्य गौण्या तस्य सेतुत्वमित्याह—सेतुरिवेति । गुणमाह—विधृतिरिति । अनुमानमत्र प्रमाणमाह—अविध्रियमाणमिति । विमतं केनचिद्विधृतं, नियतप्रवृत्तित्वात् इत्यनुमानम् । विष्वगिति । नानामुखम्, अव्यवस्थितमित्यर्थः । राजादिभिर्विधारणस्य दृष्टत्वाज्जगद्विधारणमपि जीवैरेव सिद्ध्यतीत्याशङ्कते—किमर्थमिति । भूरादिसमस्तलोकविधारणं अल्पज्ञैर्जीवैर्न सिध्यतीत्याह—इत्याहेति । इति शङ्कायामुत्तरमाहेत्यर्थः । भिदिर् विधारणे इति धातुपाठमाश्रित्याह—अविदारणायेति । अहोरात्रापच्छेद्यत्वादिविशेषणयोगं वक्तुं पृच्छति—किंविशिष्ट इति । क्रियान्वयं वक्तुं नैतमित्यस्य पुनरुक्तिः । मूर्तस्येवाहोरात्रयोः अमूर्तयोरात्मतरितृत्वमप्रसक्तमित्याशङ्क्य नात्र तरणमतिक्रमणं, किन्तु परिच्छेदकत्वमित्यभिप्रेत्य एतद्व्यतिरेकदृष्टान्तेनोपपादयति—यथान्य इति । संवत्सरोपलक्षितः कालो यस्मादर्वागेव यं विहायैव यमपरिच्छिद्यैव अहोभिः अहोरात्रैः परिवर्तते । आत्मव्यतिरिक्तमेव परिच्छिन्दन् वर्तते, तं देवा आयुरित्युपासत इति उदाहृतकाण्वश्रुत्यर्थः । पूर्वं परिच्छेदार्थतया व्याख्यातोऽपि तरतिरिहानुषक्तो योग्यतावशात्प्राप्त्यर्थं इत्याह—न प्राप्नोतीति । यदि जरादीनां परिच्छेदकत्वमयोग्यमिति तस्यार्थस्य त्यागस्तर्हि मुख्यमतिक्रमणमेवार्थोऽस्त्वित्यत आह—प्राप्तिरिति । जरादिकृतदुःखादिरूपातिशयशालित्वरूपं प्राप्तिविषयत्वमित्यर्थः । अत एव वक्ष्यति

---

१. अत्र न सुकृतं न दुष्कृतं इत्युक्त्वा सर्वे पाप्मान इति सुकृतस्यापि पाप्मशब्देनानुवादात् वेदान्तशास्त्रे सर्वत्र पापशब्दः पुण्यपापोभयपर इति सूच्यते । बन्धकत्वेन मुमुक्षुणा उभयोस्त्याज्यत्वात् ।

**तस्माद्वा एतँ सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवत्युपतापी सन्ननुपतापी भवति तस्माद्वा एतँ सेतुं तीर्त्वाऽपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः ॥२॥**

हि कारणातिक्रमणं कर्तुं कार्येण। अहोरात्रादि च सर्वं सतः कार्यम्। अन्येन ह्यन्यस्य प्राप्तिरतिक्रमणं वा क्रियेत। न तु तेनैव तस्य। न हि घटेन मृत्प्राप्यतेऽतिक्रम्यते वा। यद्यपि पूर्वं य आत्माऽपहतपाप्मेत्यादिना पाप्मादिप्रतिषेध उक्त एव तथाऽपीहायं विशेषो न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते। तत्राविशेषेण जराद्यभावमात्रमुक्तम्। अहोरात्राद्या उक्ता अनुक्ताश्चान्ये सर्वे पाप्मान उच्यन्तेऽतोऽस्मादात्मनः सेतोर्निवर्तन्तेऽप्राप्यैवेत्यर्थः। अपहतपाप्मा ह्येष ब्रह्मैव लोको ब्रह्म लोक उक्तः॥ १॥

यस्माच्च पाप्मकार्यमान्ध्यादि शरीरवतः स्यान्न त्वशरीरस्य तस्माद्वा एतमात्मानं सेतुं तीर्त्वा प्राप्यानन्धो भवति देहवत्त्वे पूर्वमन्धोऽपि सन्। तथा विद्धः सन्देहवत्त्वे स देहवियोगे सेतुं प्राप्याविद्धो भवति। तथोपतापी

नरेन्द्रपुरीयं टिप्पणम्

अङ्गीकृत्याप्यतिक्रमणनिषेधहेतुमाह—अन्येन ह्यन्यस्य प्राप्तिरिति॥ १-४॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य चतुर्थः खण्डः

आनन्दगिरिटीका

कारणातिक्रमणं माभूत् अहोरात्रादेस्त्वात्मातिक्रमणं किं न स्यादित्याशङ्क्याऽऽह—अहोरात्रादि चेति। तरतेरतिक्रमणार्थत्वमङ्गीकृत्यापि निषेधे हेतुमाह—अन्येनेति। तरतिवाक्यस्यापहतपाप्मादिवाक्येन पौनरुक्त्यमाशङ्क्य परिहरति—यद्यपीति। विशेषणानामानन्त्यात्प्रत्येकं प्रतिषेधवचनासंभवमभिप्रेत्याऽऽह—अहोरात्राद्या हीति। पाप्मकार्याणामात्मानमप्राप्यैव निवृत्तौ हेतुमाह—अपहतेति॥ १॥

यथोक्तसेतुप्राप्तौ फलितमाह—यस्मादिति। स्वाभाविकमस्यानर्थत्वमित्याशङ्क्याऽऽह—देहवत्त्व इति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्राप्तिविषयत्वं प्रतिषिध्यत इति। न त्वसंबन्धपूर्वकसम्बन्धरूपप्राप्तिमात्रम्। "न तु तेनैव तस्य प्राप्तिरतिक्रमणं वा क्रियत" इत्यत्र अतिक्रमणवत्प्राप्तेरप्यप्रसक्तेः वक्ष्यमाणत्वात्सर्वोपादने ब्रह्मणि जरादिप्राप्तेर्विद्यमानत्वेन तत्प्रतिषेधानुपपत्तेश्च। जरादिप्राप्तिविषयत्वं तु जरादिकृतदुःखादिरूपातिशयशालित्वरूपं चेतनत्वेन जीव इव ब्रह्मणि प्रसक्तं प्रतिषिध्यत इति युक्तम्। प्राप्तिशब्देनात्र प्राप्तिविषयत्वमेवाभिप्रेतमिति। जरादिकर्तृकमतिक्रमणं असम्बन्धपूर्वकसम्बन्धरूपप्राप्तिर्वा नात्र तरतेरर्थः तयोः ब्रह्मण्यप्रसक्तत्वेन प्रतिषेधायोगादित्याह—नातिक्रमणमिति।

इदमुपलक्षणं—प्राप्तिर्वेत्यपि द्रष्टव्यम्। न हीति। अतिक्रमणं नाम त्यागः। कारणत्यागे कार्यस्य स्वरूपमेव न स्यादित्यर्थः। कारणे कार्यस्य नित्यसम्बद्धत्वादसबन्धपूर्विका प्राप्तिरपि न सम्भवतीत्यपि द्रष्टव्यम्। (अग्निहोत्रादिति तज्जन्यसुकृतादित्यर्थः, अग्निहोत्रादेरिहानुक्तत्वादिति,) कार्यस्य कारणादन्यत्वाभावादपि अतिक्रमणं प्राप्तिर्न सम्भवतीत्याह—अन्येन हीति। तस्मात्तरतिशब्देनोक्तं प्राप्तिविषयत्वं जरादिकार्याश्रयत्वमेवेह प्रतिषिध्यत इति भावः। एष आत्माऽपहतपाप्मेति प्रथमकण्डिकोक्त्या पौनरुक्त्यमाशङ्क्य परिहरति—यद्यपीत्यादिना। एष आत्मेत्युदाहर्तव्ये य आत्मेति वक्ष्यमाणवाक्योदाहरणं तुल्यार्थत्वादिति द्रष्टव्यम्। य आत्मेति पाठो लेखकदोषाद्वा। तत्रोक्तः पापादिप्रतिषेध एव, इह पापादिप्राप्तिविषयत्वं प्रतिषेध्यत्वेनोच्यते सामान्येनोक्तस्य विशेषरूपेण स्पष्टीकरणार्थं, अतो न पुनरुक्तिरित्यर्थः। तत्र जरादिप्रतिषेध एवोक्तः इह तु तत्रानुक्तोऽहोरात्रादिपरिच्छेद्यत्वप्रतिषेधोऽधिकश्चोच्यते उक्तेरनुक्तेश्च स्तुतिप्रकर्षसिद्धेरतोऽपि न पुनरुक्तिरिति प्रकारान्तरमाह—तत्राविशेषेणेति। अपहतपाप्मा ह्येष इति।॥ १॥

यद्यपि अस्य हेतोस्साध्याविशेषः, तथापि सिद्धवन्निर्देशात्तद्धेतुकर्तृत्वाद्यभिमानराहित्यमिह विवक्षितमिति भावः। यद्वा यस्मादपहतपाप्मा ब्रह्मलोकः यस्माच्च पाप्मकार्यमान्ध्यादि शरीरवतः स्यात् तस्मात्सेतुमात्मानं प्राप्तस्य देहाभिमानलक्षणशरीरित्वाभावादान्ध्यादि न भवतीति उत्तरत्र हेतुत्वेन वा योज्यम्। यस्मादहोरात्रशब्दितौ प्रकाशाप्रकाशौ ब्रह्मणि न स्तः सकृद्विभातत्वात्तस्य, तस्मात्तत्प्राप्तस्य विदुषः कदाचिदपि

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य चतुर्थः खण्डः

रोगाद्युपतापवान्सन्ननुपतापी भवति । किंच यस्मादहोरात्रे न स्तः सेतौ तस्माद्वा एतं सेतुं तीर्त्वा प्राप्य नक्तमपि तमोरूपं रात्रिरपि सर्वमहरेवाभिनिष्पद्यते । विज्ञप्त्यात्मज्योतिःस्वरूपमहरिवाहः सदैकरूपं विदुषः संपद्यत इत्यर्थः । सकृद्विभातः सदा विभातः सदैकरूपः स्वेन रूपेणैष ब्रह्मलोकः ॥ २ ॥

तत्तत्रैवं सत्येतं यथोक्तं ब्रह्मलोकं ब्रह्मचर्येण स्त्रीविषयतृष्णात्यागेन शास्त्राचार्योपदेशमनुविन्दन्ति स्वात्मसंवेद्यतामापादयन्ति ये तेषामेव ब्रह्मचर्यसाधनवतां ब्रह्मविदामेष ब्रह्मलोकः नान्येषां स्त्रीविषयसंपर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः । तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात्परममेतत्साधनं ब्रह्मचर्यं ब्रह्मविदामित्यभिप्रायः ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य चतुर्थः खण्डः

### आनन्दगिरिटीका

विद्धो दुःखादिसंबन्धी । इतश्चाऽऽत्मसेतोरस्ति महाभागधेयत्वमित्याह—किंचेति । कथं सर्वमपि तमोरूपमहरेव विदुषः स्यान्नहि विद्ययाऽपि विरुद्धोऽर्थः सिध्यतीत्याशङ्क्याऽऽह—विज्ञप्तीति । तत्र हेतुमाह—सकृदिति । ब्रह्मलक्षणोऽवेद्यो लोकः स्वप्रकाशचिदेकतानो यतोऽवतिष्ठतेऽतस्तद्रूपत्वाद्विदुषो यथोक्तरूपत्वमविरुद्धमित्यर्थः ॥ २ ॥

विद्याफले यथोक्तरीत्या व्यवस्थिते सत्येतत्फलं विद्यावत्त्वेन केषां सिध्यतीत्याशङ्क्याऽऽह—तत्रेति । ब्रह्मचर्यवतां विद्याद्वारा ब्रह्माख्यो लोकः फलतीत्यर्थः । तेषामेवेत्येवकारद्योतितमर्थमाह—नान्येषामिति । ब्रह्मविदामपीति वाङ्मात्रब्रह्मवित्त्वमुच्यते । तेषां ब्रह्मचर्यवतां ब्रह्मविदामिति यावत् । ब्रह्मचर्यसाधनवतामेव ब्रह्मवित्त्वेन ब्रह्माख्यो लोको भवतीति स्थिते फलितमाह—तस्मादिति । साधनं ब्रह्मविद्यायामिति शेषः । ब्रह्मविदामिति भाविनीं वृत्तिमाश्रित्योक्तम् ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य चतुर्थः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अप्रकाशो नास्ति शरीराभिमानदशायामिव, किन्तु सदा प्रकाशरूप एव भवति, सर्वज्ञत्वादिति प्रकृतब्रह्मलोकः स्तूयत इति उत्तरवाक्यं व्याचष्टे—किंच यस्मादिति । रात्रिवाचिना नक्तमित्यनेन कथमप्रकाशात्मकं तमोरूपं गृह्यत इत्याशङ्क्य गौण्या वृत्त्येत्याह—रात्रिरिवेति । रात्रिसदृशं तमोरूपं सर्वमहरित्यन्वयः । अहश्शब्देनापि दिनवाचिना प्रकाशगुणयोगेन विज्ञानात्मज्योतिर्लक्ष्यत इत्याह—अहरिवेति । अविदुषोऽपि विज्ञानात्मज्योतिस्संपत्तिरस्ति, अन्यथा जगदान्ध्यप्रसङ्गादित्याशङ्क्य अविदुषः प्रकाशावरणमपि स्यात्, विदुषः तन्नेत्याह—सदैकरूपमिति । ज्योतिः स्वरूपं सदैकरूपं संपद्यत इत्यन्वयः । अव्ययानामनेनकार्थत्वात्सकृच्छब्दः सदाशब्दपर्याय इत्याह—सदा विभात इति ॥ २ ॥

पूर्वोक्तायाः सर्वस्याः स्तुतेः ब्रह्मचर्यविधिशेषत्वं दर्शयितुं तद्य एवैतमिति वाक्यगतं तच्छब्दं व्याचष्टे—तत्रैवंसतीति । प्रशस्तत्वे सतीत्यर्थः । अनुशब्दार्थमाह—शास्त्रेति । एतेषामेष ब्रह्मलोक इत्यधिकमनुविन्दन्तीत्यनेन ब्रह्मलोकलाभस्योक्तत्वादित्याशङ्क्य जीवतो विदुषः स्वस्य देवभावापरोक्षतामात्रमेव लाभो विन्दन्तीत्यनेन उच्यते, न साक्षाद्देवभावः । स तु देहपातोत्तरकालमित्यभिप्रेत्य विन्दन्तीति पदं व्याचष्टे—स्वात्मेति । एवकारार्थमाह—नेति । फलितमाह—तस्मादिति । ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य चतुर्थः खण्डः

**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दते ॥ १ ॥**

य आत्मा सेतुत्वादिगुणैः स्तुतस्तत्प्राप्तये ज्ञानसहकारिसाधनान्तरं ब्रह्मचर्याख्यं विधातव्यमित्याह। यज्ञादिभिश्च तत्स्तौति कर्तव्यार्थम्—

अथ यद्यज्ञ इत्याचक्षते लोके परमपुरुषार्थसाधनं कथयन्ति शिष्टास्तद्ब्रह्मचर्यमेव। यज्ञस्यापि यत्फलं तद्ब्रह्मचर्यवाल्लँभतेऽतो यज्ञोऽपि ब्रह्मचर्यं भवति प्रतिपत्तव्यम्। कथं ब्रह्मचर्यं यज्ञ इत्याह—ब्रह्मचर्येणैव हि यस्माद्यो ज्ञाता स तं ब्रह्मलोकं यज्ञस्यापि पारम्पर्येण फलभूतं विन्दते लभते ततो यज्ञोऽपि ब्रह्मचर्यमेवेति। यो ज्ञातेत्यक्षरानुवृत्तेर्यज्ञो ब्रह्मचर्यमेव। अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत्। कथम्। ब्रह्मचर्येणैव साधनेन तमीश्वरमिष्ट्वा पूजयित्वाऽथवैषणामात्मविषयां कृत्वा तमात्मानमनुविन्दते। एषणादिष्टमपि ब्रह्मचर्यमेव ॥ १ ॥

### नरेन्द्रपुरीयं टिप्पणम्

अक्षरानुवृत्तेरिति। यकारज्ञकारसंस्पर्शात् ब्रह्मचर्यं यज्ञ उच्यते इत्यर्थः ॥ १ ॥

### आनन्दगिरिटीका

अथ यथोक्तपरमात्मप्राप्तिसाधने ज्ञाने सहकारिब्रह्मचर्यं प्रागेवोक्तं तथाच कृतं ब्रह्मचर्यविषयेणोत्तरग्रन्थेनेत्याशङ्क्याऽऽह—य आत्मेति। शमाद्यपेक्षयाऽन्तरशब्दः। उक्तमपि ब्रह्मचर्यं विधातुमनन्तरग्रन्थप्रवृत्तिरित्यर्थः। किमिति तर्हि तस्य स्तुतिरित्याशङ्क्य तस्या विधिशेषत्वं दर्शयति—यज्ञादिभिश्चेति। श्रुतिराहोत्तरं वाक्यमित्युक्तं तदादाय व्याकरोति—अथेत्यादिना। ब्रह्मचर्यस्योक्तरीत्या विधित्सितत्वे तदीयस्तुतिप्रारम्भार्थोऽथशब्दः। यज्ञस्य ब्रह्मचर्येऽन्तर्भावं साधयति—यज्ञस्यापीति। उक्तमेवार्थमाकाङ्क्षाद्वारा समर्थयते—कथमित्यादिना। पारम्पर्येण चित्तशुद्धिद्वारेणेत्यर्थः। न केवलं फलद्वारा यज्ञो ब्रह्मचर्येऽन्तर्भवति किंतु यकारज्ञकारसंस्पर्शादपीत्याह—यो ज्ञातेति। इष्टस्य ब्रह्मचर्यान्तर्भावमाकाङ्क्षाद्वारा स्फोरयति—कथमित्यादिना। पूजयित्वा तमात्मानमनुविन्दत इति संबन्धः। ब्रह्मचर्येणाऽऽत्मविषयैषणं निष्पाद्यते इष्टेनापि तदेव संपाद्यते तस्मादेषणादुभयसादृश्यादिष्टमपि यज्ञवद्ब्रह्मचर्यमेवेत्याह—एषणादिति ॥ १ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पूर्वकण्डिकायां सेतुत्वादिगुणैः ब्रह्मलोकः स्तुतः तस्य ब्रह्मचर्यसाधनेन संपाद्यत्वार्थम्। इदानीं संपाद्यो ब्रह्मलोकः साधनान्तरेण संपाद्योऽस्तु, किं ब्रह्मचर्येण क्लेशसंपाद्येनेति शङ्कानिरासार्थं ब्रह्मचर्यमेव उत्कृष्टसाधनत्वार्थं स्तूयत इत्याह—य आत्मेति। ज्ञानसहकारीति। सगुणज्ञानस्य उपासनाख्यस्य सहकारिसव्यपेक्षोपपत्तेरिति भावः। आहेत्यनन्तरमथ यद्यज्ञ इत्यादिप्रतीकं द्रष्टव्यं कृत्स्नकण्डिकाग्रहणार्थं तत्रापि अरश्च ह वा इत्यतः प्राक्तनस्य अर्थमाह—यज्ञादिभिरिति। प्रसिद्धस्य यज्ञस्य कथं ब्रह्मचर्यरूपत्वं तयोर्भेदादित्याशङ्क्य यज्ञफलजनकत्वाद्गौण्या वृत्या ब्रह्मचर्यं यज्ञत्वेन स्तूयत इत्याह—यज्ञस्यापीति। यत्फलमिति। स्वर्गादिरूपमित्यर्थः। अथ वा यज्ञस्य चित्तशुद्धिद्वारा ज्ञानं फलमित्यर्थः। तदेव उत्तरवाक्येन प्रश्नपूर्वकमाह—कथमिति। यज्ञ इति। यज्ञफलजनकमित्यर्थः। ज्ञातेति। विद्वानित्यर्थः। पारम्पर्येणेति। चित्तशुद्ध्यादिद्वारेत्यर्थः। न केवलं यज्ञफलजनकत्वेन यज्ञत्वं ब्रह्मचर्यस्य, किन्तु अक्षरानुवृत्तेरपीत्याह—यो ज्ञातेति। अपिशब्दः अनुवृत्तेरित्यनन्तरं आकृष्य योज्यः। इष्टशब्दः—

अग्निहोत्रं तपस्सत्यं वेदानां चानुपालनम्। आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते ॥

इति स्मृत्युक्तोर्थः, तत्फलजनकत्वेन तदक्षरानुवृत्तेश्च पूर्ववद्ब्रह्मचर्यस्तुतिरित्याह—अथ यदिति। पूजयित्वेति। ब्रह्मचर्यस्य पूजासाधनत्वं भावपुष्पैरित्यादिषु यमादीनां पुष्पत्वोक्तेस्तदनुष्ठानस्य तदाज्ञाकरणरूपत्वाद्वा द्रष्टव्यम्। एषणामिति। स्त्र्यादिविषयपरस्य आत्मैषणानुपपत्तेः तस्य तद्धेतुत्वमित्यर्थः। एषणादिति। तज्जनकत्वादित्यर्थः, आद्यव्याख्याने यजनादिष्टमिति द्रष्टव्यम् ॥ १ ॥

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येवाऽऽत्मानमनुविद्य मनुते ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयँ सरस्तदश्वत्थः सोमसवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितँ हिरण्मयम् ॥ ३ ॥

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत्तथा सतः परस्मादात्मन आत्मनस्त्राणं रक्षणं ब्रह्मचर्यसाधनेन विन्दते। अतः सत्त्रायणशब्दमपि ब्रह्मचर्यमेव तत्। अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येणैव साधनेन युक्तः सन्नाऽऽत्मानं शास्त्राचार्याभ्यामनुविद्य पश्चान्मनुते ध्यायति। अतो मौनशब्दमपि ब्रह्मचर्यमेव ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्। यमात्मानं ब्रह्मचर्येणानुविन्दते स एष ह्यात्मा ब्रह्मचर्यसाधनवतो न नश्यति तस्मादनाशकायनमपि ब्रह्मचर्यमेव। अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्। अरण्यशब्दयोरर्णवयोर्ब्रह्मचर्यवतोऽयनादरण्यायनं ब्रह्मचर्यम्। यो ज्ञानाद्यज्ञ एषणादिष्टं सतस्त्राणात्सत्त्रायणं

### नरेन्द्रपुरीयं टिप्पणम्

बहुयजमानं वैदिकं कर्म सत्त्रायणम् ॥ २ ॥

अनाशकायनमुपवासपरायणत्वम्, अरण्यायनं अरण्यवासः ब्रह्मचर्यवतः पुंसोऽरण्यशब्दवाच्यौ क्रीडासमुद्रौ प्राप्यौ भवत इति ब्रह्मचर्येऽरण्यशब्दस्पर्शादरण्यायनं तदिति स्तूयते। विस्तरेणोक्तमर्थं संक्षिप्याह—यो ज्ञानादिना॥३॥

### आनन्दगिरिटीका

बहुयजमानकं वैदिकं कर्म सत्त्रायणम्। तथा यज्ञवदिष्टवच्चेत्यर्थः। कथं सत्त्रायणं ब्रह्मचर्येऽन्तर्भवतीत्याशङ्क्याऽऽह—सत इति ॥ २ ॥

उपवासपरायणत्वमनाशकायनं तत्कथं ब्रह्मचर्येऽन्तर्भवतीत्याशङ्क्याऽऽह—यमात्मानमिति। अरण्यायनमरण्यवासस्तत्कथं ब्रह्मचर्यान्तर्भूतमित्याशङ्क्याऽऽह—अरण्यशब्दयोरिति। विस्तरेणोक्तमर्थं संक्षिप्याऽऽह—यो ज्ञानादित्यादिना। यो ब्रह्मचर्येणाऽऽत्मनो ज्ञानादात्मानं विन्दते स ब्रह्मलोकं लभते तस्माद्यज्ञो ब्रह्मचर्यमिति योजना। आदिशब्देन स्वस्य परमपुरुषार्थसाधनत्वं गृह्यते ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सत्त्रायणमिति। आसीरन्नुपेयुरित्येवमास्युपायिचोदनाविहिता यज्ञाः सत्त्राणि। तान्येव संवत्सरदिनकालसाध्यानि अयनानि, तदुभयं सत्त्रायणमित्यर्थः। यद्यपि यज्ञशब्देनैव तेषामपि ग्रहणं सिद्ध्यति, तथापि गोबलीवर्दन्यायेन तद्व्यतिरिक्तयज्ञपरो यज्ञशब्द इति भावः। तस्य चित्तशुद्धिज्ञानद्वारा आत्मरक्षणं देहादिरूपताध्यारोपनिवृत्त्या अनाशनं फलं यत्तद्ब्रह्मचर्येण साध्यत इति पाठैक्यं अक्षरानुवृत्तिश्च द्रष्टव्येत्याह—तथेति। सतः परस्मादिति। भिन्नत्वेन दृष्टस्य तस्य "उदरमन्तरं कुरुते" इत्यादिना भयहेतुत्वावगमाद्ब्रह्मचर्यस्य ज्ञानद्वारा तन्निवर्तकत्वमित्यर्थः। मौनं वागादिसंयमः। तस्यापि मननं फलं तद्वत एव तत्संभवात्। अक्षरानुवृत्त्यर्थं मनुत इत्युक्तम् ॥ २ ॥

अनाशकायनमिति। आशः अशनं तदभावोऽनाशकः, स्वार्थे कः अनाशकं अनशनं, तस्य अयनं प्रवेशः, कृच्छ्रचान्द्रायणाद्यनुष्ठानमित्यर्थः। तदनुष्ठानस्य ज्ञानद्वारा आत्मानाशनं फलमिति फलैक्यं अक्षरानुगुण्यं चेत्यर्थः। अरण्यायनमिति। वानप्रस्थसंन्यासादिगमनं, तदपि पुरुषार्थसाधनत्वेन तत्त्वेन स्तूयते—अरण्यशब्दयोरिति। अरण्यशब्दवाच्ययोरित्यर्थः। योजनाविति। यद्यपि यो ज्ञाता तं विन्दत इति पूर्वं यच्छब्दज्ञापदयोरक्षरानुरूप्यस्य प्रदर्शितत्वादिहापि तस्य प्रतिनिर्देशावसरे यो ज्ञानादित्येव पाठेन भवितव्यमिति योजनादिति पाठः प्रामादिक इव भाति, तथापि तस्यैव पाठस्य प्राचुर्यदर्शनात्सोऽपि कथंचिन्नेयः। तन्नयनं चैवं-विन्दत इत्यस्य लाभवाचित्वाल्लाभस्य च प्राप्तिरूपत्वात्तस्याश्च सम्बन्धरूपत्वाद्युजेश्च संबन्धवाचित्वार्थद्वारेति न धातुना अक्षरानुरूप्यमुक्तमिति।

तद्य एवैतावरं च ण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति
तेषामेवैष ब्रह्मलोकस्तेषाँ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य पञ्चमः खण्डः

मननान्मौनमनशनादनाशकायनमरण्ययोर्गमनादरण्यायनमित्यादिभिर्महद्भिः पुरुषार्थसाधनैः स्तुतत्वाद्ब्रह्मचर्यं परमं ज्ञानस्य सहकारिकारणं साधनमित्यतो ब्रह्मविदा यत्नतो रक्षणीयमित्यर्थः। तत्तत्र हि ब्रह्मलोकेऽरश्च ह वै प्रसिद्धो ण्यश्चार्णवौ समुद्रौ समुद्रोपने वा सरसी तृतीयस्यां भुवमन्तरिक्षं चापेक्ष्य तृतीया द्यौस्तस्यां तृतीयस्यामितोऽस्माल्लोकादारस्य गण्यमानायां दिवि। तत्तत्रैव चैरंमिराऽन्नं तन्मय ऐरो मण्डस्तेन पूर्णमैरं मदीयं तदुपयोगिनां मदकरं हर्षोत्पादकं सरः। तत्रैव चाश्वत्थो वृक्षः सोमसवनो नामतः सोमोऽमृतं तन्निःस्रवोऽमृतस्रव इति वा। तत्रैव च ब्रह्मलोके ब्रह्मचर्यसाधनरहितैर्ब्रह्मचर्यसाधनवद्भ्योऽन्यैर्न जीयत इत्यपराजिता नाम पूः पुरी ब्रह्मणो हिरण्यगर्भस्य। ब्रह्मणा च प्रभुणा विशेषेण मितं निर्मितं तच्च हिरण्मयं सौवर्णं प्रभुविमितं मण्डपमिति वाक्यशेषः॥ ३ ॥

तत्तत्र हि ब्रह्मलोक एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेनानुविन्दन्ति ये तेषामेवैष यो व्याख्यातो ब्रह्मलोकस्तेषां च ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति। नान्येषामब्रह्मचर्यपराणां बाह्यविषयासक्तबुद्धीनां कदाचिदपीत्यर्थः। नन्वत्र त्वमिन्द्रस्त्वं यमस्त्वं वरुण इत्यादिभिर्यथा कश्चित्स्तूयते महार्हं एवमिष्टादिभिः शब्दैर्न स्त्र्यादिविषयतृष्णानिवृत्तिमात्रं स्तुत्यर्हं किं तर्हि ज्ञानस्य मोक्षसाधनत्वात्तदेवेष्टादिभिः स्तूयत इति केचित्। न। स्त्र्यादिबाह्यविषयतृष्णापहृतचित्तानां प्रत्यगात्मविवेकविज्ञानानुपपत्तेः।

### नरेन्द्रपुरीयं टिप्पणम्

ब्रह्मचर्यस्य स्तुतत्वात् तद्विधिमुक्त्वा ब्रह्मचर्याङ्गकतया, ब्रह्मचर्येणाङ्गी ज्ञानमुपलक्ष्य स्तूयत इति वृत्तिकारव्याख्यानमुद्भावयति—अत्र त्वमिन्द्र इत्यादिना। क्षुद्रसाधनत्वमसिद्धं दुरनुष्ठेयत्वात्तद्व्यतिरेकेण ज्ञानासम्भवाच्चेत्याह—न स्त्र्यादीति। ब्रह्मलोकप्राप्तिसाधनस्य यज्ञादिभिः स्तुतत्वात् तेषामपि वैकल्पिकब्रह्मलोकप्राप्ति-

### आनन्दगिरिटीका

ब्रह्मचर्यस्य स्तुतत्वात्तद्विषयं विधिमुक्त्वा तत्सहकृतविद्यासाध्यफलं कथयति—तत्तत्र ही (त्रे) त। ब्रह्मचर्यस्यात्यल्पसाधनत्वान्महती स्तुतिरयुक्ता तद्ब्रह्मचर्येण ज्ञानमुपलक्ष्य तदेव स्तूयत इति मतमुत्थापय त—नन्वत्रेति। तस्य क्षुद्रसाधनत्वमसिद्धं दुरनुष्ठेयत्वात्तद्व्यतिरेकेण ज्ञानासंभवाच्चेत्युत्तरमाह—नेत्यादिना। विषयापहृत-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

योजनादिति ज्ञातुः ब्रह्मलोकेन योजनादित्यर्थः। यजनादिति पाठे सङ्गतिकरणात्प्रापणादित्यर्थः, यजदेवपूजासङ्गतिकरणादिष्वित्युक्तत्वादिति। एवं यज्ञादिरूपत्वेन ब्रह्मचर्यमवश्यानुष्ठेयत्वार्थं स्तुत्वा तस्य अरण्यायनत्वं अरण्यनामार्णवप्रापकत्वादिति वदन् तद्ब्रह्मलोकप्राप्तिसाधनत्वेन विधातुमरश्च ह वा इत्यादि वाक्यं व्याचष्टे—तत्रेति। तत्तत्रेति पाठस्तु प्रामादिकः। तदित्यस्य पूर्वपर्यायेष्विव पूर्ववाक्यशेषत्वात्। अत्र ब्राह्मलौकिकारण्याश्वत्थादिकीर्तनन्तु तस्य विशिष्टफलत्वेन अतिक्लेशेनापि ब्रह्मचर्यमनुष्ठाय तेन तस्य संपाद्यत्वार्थं इति भावः। लोकानां त्रेधा विभागपक्षे अन्तरिक्षलोकोपरितनस्सत्यलोकान्तो द्युलोक इत्यादिश्रुत्याऽऽह—तृतीया द्यौरिति। मण्ड इति। सार इत्यर्थः। मदीयशब्दार्थमाह—तदुपेति। नामत इति। रूढ इत्यर्थः, यौगिको वेत्याह—सोम इति। अपराजितेत्यत्रत्यापरशब्दार्थमाह—ब्रह्मचर्यसाधनवद्भ्योऽन्यैरिति। विन्दन्ति लब्धुं यतन्त इत्यर्थः श्रुतौ आद्य एवकारः ब्रह्मचर्यरहितान् व्यावर्तयितुं द्वितीयस्तु तेषां ब्रह्मलोकसंबन्धव्यावृत्त्यर्थः॥ ३ ॥

अत्र ब्रह्मचर्यशब्देन तत्पूर्वकं ज्ञानं लक्षयित्वा तदेव स्तूयते, न ब्रह्मचर्यं तस्य स्तुत्यनर्हत्वादिति केचिदाहुः। तन्मतमाह—नन्विति। इष्टादिशब्दैरित्यनन्तरं महार्हस्यैव स्तोतव्यत्वे सतीति शेषः। अन्वयव्यतिरेकाभ्यां श्रुतिभिश्च उक्तब्रह्मचर्यस्याप्यभ्यर्हितसाधनत्वेन विधातव्यत्वात्स्तुत्यर्हत्वोपपत्तेः न ज्ञानलक्षणा युक्तेत्याह—नेति। "भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ" "नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयादि"त्यादिरादि-

"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इत्यादिश्रुतिस्मृतिशतेभ्यः। ज्ञानसहकारिकारणं स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं विधातव्यमेवेति युक्तैव तत्स्तुतिः। ननु च यज्ञादिभिः स्तुतं ब्रह्मचर्यमिति यज्ञादीनां पुरुषार्थसाधनत्वं गम्यते। सत्यं गम्यते। न त्विह ब्रह्मलोकं प्रति यज्ञादीनां साधनत्वमभिप्रेत्य यज्ञादिभिर्ब्रह्मचर्यं स्तूयते किं तर्हि तेषां प्रसिद्धं पुरुषार्थसाधनत्वमपेक्ष्य। यथेन्द्रादिभी राजा न तु यत्रेन्द्रादीनां व्यापारस्तत्रैव राज्ञ इति तद्वत्।

य इमेऽर्णवादयो ब्राह्मलौकिकाः संकल्पजाश्च पित्रादयो भोगास्ते किं पार्थिवा आप्याश्च यथेह लोके दृश्यन्ते तद्वदर्णववृक्षपूःस्वर्णमण्डपान्याहोस्विन्मानसप्रत्ययमात्राणीति। किंचातः, यदि पार्थिवा आप्याश्च स्थूलाः स्युर्हृद्याकाशे समाधानानुपपत्तिः। पुराणे च "मनोमयानि ब्रह्मलोके शरीरादीनी"ति वाक्यं विरुध्येत। "अशोकमहिमम्"

### नरेन्द्रपुरीयं टिप्पणम्

साधनत्वे तात्पर्यं शास्त्रस्येत्याशङ्क्याह—ननु चेत्यादिना। ब्राह्मलौकिकपदार्थानां स्वरूपनिर्दिधारयिषया विचारमारभते—य इमे अर्णवादय इत्यादिना। तस्मिन् पक्षे को लाभः को वा दोषः इति शिष्यः पृच्छति—किञ्चात इति। स्थौल्ये दोषदर्शनान्मानसत्वे च पुराणानुग्रहसंग्रहसम्भवान्मानसा एव ते पदार्था इति सिद्धान्त्याह—यदि पार्थिवा इति। अशोकमिति। सन्तापरहितं, अहिमं शीतस्पर्शवर्जितं, स्थूलविषयाङ्गीकारे उष्णस्पर्शादिरवर्जनी-

### आनन्दगिरिटीका

चित्तानां नराणां विवेकासंभवे प्रमाणमाह—पराञ्चीति। ध्यायतो विषयानित्याद्या स्मृतिरत्र विवक्षिता। ब्रह्मचर्यस्योत्तमसाधनत्वे सिद्धे फलितमाह—ज्ञानेति। ब्रह्मलोकप्राप्तिसाधनस्य ब्रह्मचर्यस्य यज्ञादिभिः स्तुतत्वात्तेषामपि तत्प्राप्तिसाधनत्वं श्रुत्याऽभिप्रेतमिति शङ्कते—नन्विति। किं तेषां पुरुषार्थसाधनत्वं प्रस्तुतश्रुत्या प्रतीतं किं वा ब्रह्मलोकसाधनत्वमिति विकल्प्याऽऽद्यमङ्गीकरोति—सत्यमिति। न द्वितीयो वाक्यभेदप्रसङ्गादित्याह—न त्विति। कथं तर्हि यज्ञादिभिर्ब्रह्मचर्यस्तुतिस्तत्राऽऽह—किं तर्हीति। उक्तमर्थं दृष्टान्तेन स्पष्टयति—यथेति। त्वमिन्द्रस्त्वं विष्णुरित्यादिना विप्रादिभी राजा स्तूयते तथाऽपि न तस्येन्द्रादिव्यापारे निरङ्कुशं कर्तृत्वमस्तीति यथेष्यते तथा यज्ञादिभिर्ब्रह्मचर्यस्य स्तुतस्यापि नास्ति तुल्यफलत्वमित्यर्थः। ब्रह्मलोकस्थान्पदार्थान्निर्णेतुं विचारमवतारयन्नादौ तद्विषयमाह—य इम इति। तत्रैकं पक्षमुत्थाप्य दृष्टान्तेन तदुत्थितिप्रकारमाह—ते किमिति। पक्षान्तरं स्वप्नदृष्टान्तवशाद्दर्शयति—आहोस्विदिति। कस्मिन्पक्षे को लाभः को वा दोषः, इति शिष्यः पृच्छति—किंचात इति। स्थौल्ये दोषदर्शनान्मानसत्वेन सौक्ष्म्ये च पुराणानुग्रहसंभवात्ते मानसा एवेत्याह—यदीति। न केवलं तेषां स्थौल्यं स"त्युभे अस्मिन्नि"त्यादिश्रुत्या पुराणस्मृत्या च विरोधः किं त्वशोकं संतापवर्जितमहिमं शीतस्पर्शशून्यं ब्रह्मलोकमुपयन्तीत्याद्याश्च श्रुतयो ब्रह्मलोकं निरूपयन्त्यस्तत्रत्यानामर्थानां स्थौल्ये विरुध्येरन्। स्थूलानां पदार्थानां तत्र सत्त्वे शीतस्पर्शादिरवर्जनीयत्वादित्याह—अशोकमिति। ब्राह्मलौकिकपदार्थानां मानसत्वे पुराणस्मृत्यन्तरविरोधं

### अभिनववनारायणानन्देन्द्रसरस्वतीटीका

शब्दार्थः, निवृत्तिसाधनमिति निवृत्तिरूपं साधनमित्यर्थः। यज्ञादीनां स्वातन्त्र्येण ब्रह्मलोकसाधनत्वं वक्तव्यम्। अन्यथा तेन स्तुत्यनुपपत्तेरिति शङ्कते—नन्विति। प्रापकप्रमाणाभावे सति प्रतीतिमात्रेण वस्त्वसिद्धेः, यज्ञादीनां च स्वर्गादिपुरुषार्थसाधनत्वेन परम्परया वा ब्रह्मलोकसाधनत्वेनापि स्तुत्युपपत्तेः न तावता स्वातन्त्र्येण ब्रह्मलोकसाधनत्वमित्याह—सत्यमित्यादिना। येन स्तूयते यश्च स्तूयते न तयोरेकमेव कार्यम्। न हि इन्द्रादिभिः क्रियमाणमसुरनिग्रहादिकं राज्ञा क्रियते, राज्ञा क्रियमाणं शत्रुराजनिग्रहादिकं इन्द्रादिभिः क्रियते। किन्तु तद्गतयत्किञ्चित्तत्साहश्यमाश्रित्य राजादिः स्तूयते। अन्यथा एकस्य विशेषाभावे तेन स्तुत्यनुपपत्तेरित्याह—यथेन्द्रादिभिरिति। यत्र राज्ञो व्यापारस्तत्र इन्द्रादीनामित्यन्वयः। एवं हि प्रकृतदार्ष्टान्तिकतुल्यता स्यादिति। "त इमे सत्याः कामाः" इति श्रुत्याऽऽपातदर्शनेन कामानां सत्यत्वभ्रान्तिं निवर्तयितुं विचारयति—य इम इत्यादिना। अर्णवादयः आप्याः पूर्मण्डपादयः पार्थिवा इत्यर्थः। यथेह लोके अर्णवादयो दृश्यन्ते तद्वदित्यन्वयः। किं चात इति। ऐहलौकिकार्णवादितुल्यत्वे बाधकाभावादनेन विचारेण न प्रयोजनमित्यर्थः। पुराणन्यायविरोधात्प्रसिद्धार्णवादितुल्यत्वं न सम्भवति इत्याह—यदीति। अहिममिति ब्रह्मलोके हिमनिषेधादाप्याभावो गम्यत इत्यर्थः। पुराणे

इत्याद्याश्च श्रुतयः। ननु "समुद्राः सरितः सरांसि वाप्यः कूपा यज्ञा वेदा मन्त्रादयश्च मूर्तिमन्तो ब्रह्माणमुपतिष्ठन्त" इति मानसत्वे विरुध्येत पुराणस्मृतिः। न। मूर्तिमत्त्वे प्रसिद्धरूपाणामेव तत्र गमनानुपपत्तेः। तस्मात्प्रसिद्धमूर्तिव्यतिरेकेण सागरादीनां मूर्त्यन्तरं सागरादिभिरुपात्तं ब्रह्मलोकगन्तृ कल्पनीयम्। तुल्यायां च कल्पनायां यथाप्रसिद्धा एव मानस्य आकारवत्यः पुंस्त्र्याद्या मूर्तयो युक्ताः कल्पयितुं मानसदेहानुरूप्यसंबन्धोपपत्तेः। दृष्टा हि मानस्य एवाऽऽकारवत्यः पुंस्त्र्याद्या मूर्तयः स्वप्ने।

ननु ता अनृता एव। त इमे सत्याः कामा इति श्रुतिस्तथा सति विरुध्येत। न। मानसप्रत्ययस्य सत्त्वोपपत्तेः। मानसा हि प्रत्ययाः स्त्रीपुरुषाद्याकाराः स्वप्ने दृश्यन्ते। ननु जाग्रद्वासनारूपाः स्वप्नदृश्या न तु तत्र

### नरेन्द्रपुरीयं टिप्पणम्

यत्वादेवमाद्या ब्रह्मलोकनिरूपिकाः श्रुतयो विरुध्येरन्नित्यर्थः। मानसत्वे वचनान्तरविरोधं शङ्कते—ननु समुद्रा इति। किं दृश्यमानरूपेण समुद्रादेर्ब्रह्मलोकगमनं वचनार्थः? किं वा रूपान्तरेण? नाद्य इहानुपलम्भप्रसङ्गादित्याह—न मूर्तिमत्त्व इति। द्वितीयमनूद्य दूषयति—तस्मादित्यादिना। ब्रह्मलोके मानसेन देहेन मानसानामेवानुरूप्येण सम्बन्धोपपत्तेर्मानस्य एव मूर्तयः कल्पयितुं युक्ता इत्युक्तं तर्हि मनोरथकल्पितवदतिचञ्चलत्वात् भोगयोग्याकारवत्त्वं न स्यादित्यत आह—दृष्टा हीति। स्वप्नकल्पत्वे मिथ्यात्वप्रसङ्गाच्छ्रुतिविरोध इति शङ्कते—ननु ता इति। ये स्वप्ने दृष्टास्ते न सन्ति 'न तु न दृष्टा' इति दर्शनस्य बाधानवगमात् स्वप्नसंवेदनस्य सत्यत्वमिष्यते तथैव ब्राह्मलौकिकमानसत्वेऽपि संविद्रूपेण सत्यत्वसम्भवान्न श्रुतिविरोध इत्याह—नेति। जागरिते संविदतिरिक्ताः पदार्थाः सन्ति तद्वासनारूपाः स्वप्ने भान्ति, न तु संविदात्मकाः मनोविवर्तास्तत्र स्त्र्यादयो येन संवद्रूपेण सत्यता स्यादिति द्वैतसत्यतावादी संविद्विवर्ततामसहमानः शङ्कते—ननु जाग्रदिति। सिद्धान्तो तु जागरितस्यापि संविद्विवर्तत्वान्न पृथक्सत्यत्व-

### आनन्दगिरिटीका

शङ्कते—नन्विति। किं दृश्यमानरूपेण समुद्रादीनां ब्रह्मलोकगमनं स्मृत्यर्थः किं वा स्वरूपान्तरेणेति विकल्प्याऽऽद्यं दूषयति—न मूर्तिमत्त्व इति। उभयत्रानुपलम्भप्रसङ्गादित्यर्थः। प्रथमपक्षायोगे द्वितीयं पक्षं परिशिष्टमाचष्टे—तस्मादिति। अस्तु द्वितीयो विकल्पः का नो हानिरित्याशङ्क्य ब्रह्मलोके मानसेन देहेन मानसानामेव सागरादीनां मानसरूपेण सह संबन्धोपपत्तेर्मानस्य एव मूर्तयस्तेषां ब्रह्मलोकस्थाः कल्पयितुं युक्ता इत्याह—तुल्यायां चेति। तर्हि मनोरथकल्पितवदतिचञ्चलत्वाद्भोगयोग्याकारत्वं सागरादीनां न स्यादित्याशङ्क्याऽऽह—दृष्टा हीति।

स्वप्नतुल्यत्वे मिथ्यात्वप्रसक्तिरिति शङ्कते—नन्विति। प्रसङ्गस्येष्टत्वमाशङ्क्य श्रुतिविरोधमाह—त इम इति। ये स्वप्ने दृष्टास्ते न सन्ति न तु न दृष्टा इति दर्शनं न बाध्यते तथा च स्वाप्नसंवेदनस्य सत्यत्वमिष्टं तथैव ब्राह्मलौकिकानां पदार्थानाम्। मानस्य इति दृष्टान्तं विवृणोति—मानसा हीति। जागरिते संविदतिरिक्ताः सन्ति

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

समुद्रादीनां मूर्तिमत्त्वोक्त्या मानसत्वाभावो गम्यत इति शङ्कते—नन्विति। समुद्रादीनामिह प्रसिद्धमूर्त्या सह गमने इहानुपलब्धिप्रसङ्गात् प्रत्यक्षविरोधाच्च मूर्त्यन्तरेण तत्र गमनं वाच्यम्। तच्च कल्पनीयं मूर्त्यन्तरं मानसमेव कल्पनीयम्, पौराणिकप्रसिद्ध्युपपत्तेः, स्वप्ने मानसानां मूर्तीनां दर्शनाच्च दृष्टानुसारित्वात्कल्पनाया इति परिहरति—नेति। ब्रह्मलोकगन्तृभिः देहैस्सम्बन्धः समुद्रादीनां मानसो वक्तव्यः, इह स्थितानां तेषां साक्षात्सम्बन्धानुपपत्तेः संयोगादिसम्बन्धानुपपत्तेश्च अमूर्तस्यात्मनः अभिमानात्मको मानसः संबन्धो वक्तव्यः। ततश्च आनुरूप्याय देहानामपि मूर्तिशब्दितानां युक्तमित्याह—मानसेति। यद्वा ब्रह्मलोकस्थानां क्षणेन अनेककोटियोजनान्तरितदेशसम्बन्धः श्रूयते, स च देहस्य मानसत्वे युक्तः। मनसः शीघ्रगामित्वस्य "मनो वा इमाः सद्यः पर्याप्तुमर्हती"ति श्रुत्या प्रत्यक्षेण च सिद्धत्वात्। ततश्च तथाविधदेशसम्बन्धसिद्ध्यर्थं देहा मानसा वक्तव्या इत्याह—मानसेति। मानसेन देहेनानुरूप्यं यस्य देशसम्बन्धस्येति विग्रहः। प्रसिद्धिमेवाह—दृष्टा हीति। ब्राह्मलौकिकानां स्वप्नतुल्यत्वं न युक्तम्, तस्यानृतत्वात्तेषां च सत्यत्वोक्तेरिति शङ्कते—नन्विति। ता इति स्वाप्निक्य इत्यर्थः। तथा सतीति। स्वप्नतुल्यत्वे सतीत्यर्थः। नेह सत्यत्वं मुख्यं संभवति, "तद्यथेह कर्मचितो लोकः क्षीयत" इति पूर्ववाक्यविरोधात् "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति स्मृतेश्च, किन्त्वापेक्षिकं

स्त्र्यादयः स्वप्ने विद्यन्ते। अत्यल्पमिदमुच्यते। जाग्रद्विषया अपि मानसप्रत्ययाभिनिर्वृत्ता एव सदीक्षाभिनिर्वृत्ततेजोऽबन्नमयत्वाज्जाग्रद्विषयाणाम्। संकल्पमूला हि लोका इति चोक्तम् "समक्लृपतां द्यावापृथिवी" इत्यत्र। सर्वश्रुतिषु च प्रत्यगात्मन उत्पत्तिः प्रलयश्च तत्रैव स्थितिश्च "यथा वा अरा नाभौ" इत्यादिनोच्यते। तस्मान्मानसानां बाह्यानां च विषयाणामितरेतरकार्यकारणत्वमिष्यत एव बीजाङ्कुरवत्। यद्यपि बाह्या एव मानसा मानसा एव च बाह्या नानृतत्वं तेषां कदाचिदपि स्वात्मनि भवति।

नरेन्द्रपुरीयं टिप्पणम्

मित्याह—अत्यल्पमिति। ननु कुम्भं चिकीर्षुः कुम्भकारो मनसि संकल्पितमाकारं बहिर्निर्मिमीते अतः संकल्पो बाह्याकारस्य निमित्तं संकल्पः पूर्वानुभूतसदृशगोचरः पूर्वानुभूतोऽपि पूर्वतरसंकल्पनिमित्त इति निमित्तनैमित्तिकभावः सर्वस्य संविद्विवर्तत्वे विरुध्यत इत्याशङ्क्याह—तस्मान्मानसानामिति। यस्मान्मानसं सर्वज्ञस्येक्षणं पूर्वकल्पीयसदृशगोचरं पूर्वकल्पीयाञ्च ततः पूर्वतरेक्षणनिमित्ता इति संविदेव विवर्तते। निरवयवस्य सन्मात्रस्य तत्त्वत ईक्षणाद्यनुपपत्तेस्तस्मात्सर्वस्य संविद्विवर्तत्वेऽपि निमित्तनैमित्तिकप्रवाहोऽयमनिर्वाच्यो न विरुध्यत इत्यर्थः। नन्विदानीं मनश्शब्दवाच्यायाः संविदोऽनिर्वाच्यस्पन्दनकाले ये विषया बाह्यतया भान्ति ते मनस्स्पन्दनोपरमे मनोमात्रा एव भवन्ति। पुनश्च मनस्स्पन्दने मनोमात्रा एव बाह्यतया ततः कदाचिदपि संविदतिरेकेण सत्त्वानङ्गीकारादात्यन्तिकासत्त्वं नामानृतत्वमापद्येत। तदा च व्यवहारभङ्गः प्रसज्येतेत्याशङ्क्याह—यद्यपीति। अध्यस्त-

आनन्दगिरिटीका

पदार्थास्तद्वासनारूपास्ते स्वप्ने भान्ति न तु संविदात्मकत्वं तेषामिति शङ्कते—नन्विति। जागरितस्यापि संविद्विवर्तत्वान्न पृथगस्ति सत्त्वमित्युत्तरमाह—अत्यल्पमिति। भूमविद्यालोचनायामपि जाग्रद्विषयाणां संविद्विवर्तत्वं सेत्स्यतीत्याह—संकल्पमूला हीति। इतश्च जाग्रद्विषयाणां संविद्विवर्तत्वमित्याह—सर्वश्रुतिषु चेति। ननु कुलालो घटं चिकीर्षुर्मनसि संकल्पितमाकारं बहिर्निर्मिमीते तत्र संकल्पो बाह्याकारस्य निमित्तं संकल्पश्च पूर्वानुभूतसजातीयगोचरः पूर्वानुभूतोऽपि पूर्वतरसंकल्पनिमित्त इति निमित्तनैमित्तिकभावः सर्वस्य संविद्विवर्तत्वे कथमुपपद्यते तत्राऽऽह—तस्मादिति। यस्मात्सतः सर्वस्येक्षणं पूर्वकल्पीयसदृशगोचरं पूर्वकल्पीयास्ततः पूर्वतरेक्षणनिमित्ता इति संविदेवेत्थं स्वाविद्यया विवर्तते निरवयवस्य सन्मात्रस्य स्वारस्येनेक्षणाद्यनुपपत्तेस्तस्मात्सर्वस्य संविद्विवर्तत्वेऽपि निमित्तनैमित्तिकभावोऽयमनिर्वाच्यो न विरुध्यत इत्यर्थः। अथ सच्छब्दवाच्यायाः संविदोऽनिर्वाच्यस्पन्दनकाले ये विषया बाह्यतया भासन्ते तेषां कदाचिदपि संविदतिरेकेण सत्त्वानङ्गीकारादत्यन्तासत्त्वलक्षणमनृतत्वमापद्येत तथा च व्यवहारभङ्गप्रसङ्गस्तत्राऽऽह—यद्यपीति। तथाऽपि नानृतत्वमित्यध्याहारः अध्यस्तस्याधिष्ठानमेव स्वात्मा तस्मिन्न कदाचिदप्यत्यन्तासत्त्वं तादात्म्येनैव स्फुरणादतो न व्यवहारभङ्गप्रसङ्ग इति भावः।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वक्तव्यम्, तच्च स्वप्नेऽप्यस्तीति तत्तुल्यत्वं कामानां युक्तमित्याह—नेति। पुरुषाकारा इति। अर्थक्रियाकारिणः आपेक्षिकसत्या इति शेषः। जाग्रद्वासनानिर्मितस्य सत्यत्वं न संभवति भावितपुत्रादिवदिति यथाश्रुतमादाय शङ्कते—नन्विति। वासनानिर्मितत्वमात्रेण नासत्वं जाग्रतोऽपि तथात्वापत्तेः, तस्यापि पूर्ववासनाजन्यत्वादिति परिहरति—अत्यल्पमिति। किं बहुना ईश्वरसङ्कल्पजन्यत्वात्सर्वस्याप्यसत्वं प्रसज्येतेत्याह—सदीक्षेति। ईक्षणं संकल्पः साक्षात्सङ्कल्पजन्यत्वं श्रुतिसिद्धं च जगत इत्याह—संकल्पेति। ननु ईश्वरसङ्कल्पजन्यत्वेऽपि जाग्रतो न प्रत्यगात्मसङ्कल्पजन्यत्वमिति नानृतत्वं, स्वप्नस्य तु तत्सङ्कल्पजन्यत्वादनृतत्वमिति वैषम्यमाशङ्क्य "स ईक्षांचक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत","स यदा प्रतिबुध्यते, एतस्मादात्मनस्सर्वे लोकास्सर्वाणि भूतानि व्युच्चरन्ति"। "स यदा स्वपिति, प्राणमेव वागप्येति", "एतस्मिन्नात्मनि सर्वे प्राणाः सर्वे लोकाः सर्वाणि भूतानि सर्व एत आत्मानः समर्पिता" इत्यादिश्रुतिभिः सृष्टिस्थितिप्रलयानां प्रत्यगात्मसङ्कल्पजन्यत्वावगमान्न विशेष इत्याह—सर्वश्रुतिषु चेति। बाह्यानां मानसानां च वासनाजन्यत्वाविशेषाद्बाह्यानामिव स्वाप्निकानामपि सत्यत्वमापेक्षिकं न विरुद्धमित्युपसंहरति—तस्मादिति।

ननु स्वप्ने दृष्टाः प्रतिबुद्धस्यानृता भवन्ति विषयाः। सत्यमेव। जाग्रद्बोधापेक्षं तु तदनृतत्वं न स्वतः। तथा स्वप्नबोधापेक्षं च जाग्रद्दृष्टविषयानृतत्वं न स्वतः। विशेषाकारमात्रं तु सर्वेषां मिथ्याप्रत्ययनिमित्तमिति वाचाऽऽरम्भणं विकारो नामधेयमनृतं त्रीणि रूपाणीत्येव सत्यम्। तान्यप्याकारविशेषतोऽनृतं स्वतःसन्मात्ररूपतया

### नरेन्द्रपुरीयं टिप्पणम्

स्वाधिष्ठानमेव स्वात्मा तस्मिन्न कदाचिदप्यत्यन्तासत्त्वमस्ति तादात्म्येनैव स्फुरणादतो न व्यवहारभङ्गः। प्रकाशमानो ह्यर्थो व्यवहाराङ्गं प्रकाशमानता च नातिरिक्तसंवित्संसर्गात्तदनिरूपणात्। न च स्वाभाविकी, संवेद्यताहानिप्रसङ्गादतोऽनिर्वाच्यसंवित्तादात्म्येनैव व्यवहारसिद्धिरत्यन्तभिन्नत्वरूपेणासत्वेऽपीति भावः। कदाचिदपि नानृतत्वमिति वदता प्रतीतिकालात् कालान्तरेऽपि विषयाणां नासत्यत्वमित्युक्तम्। तत्रानुभवविरोधं शङ्कते—नन्विति। सत्यमस्ति तत्र कालान्तरे अनृतत्वप्रसिद्धिः। सा चासत्वं न भवति। किंतु जाग्रद्बोधेनाविषयीकरणान्न तावन्मात्रेणासत्वं जाग्रद्विषयाणामपि स्वप्नबोधेनाविषयीकरणात् असत्वप्रसङ्गादतो न कदाचिपि संविद्विषयाणामत्यन्तासत्वम्। कथं तर्हि वाचारम्भणादिश्रुतितोऽनृतत्वमुच्यत इत्याशङ्क्याह—विषयाकारमात्रं त्विति।

### आनन्दगिरिटीका

कदाचिदपि नानृतत्वमिति वदता प्रतीतिकालात्कालान्तरेऽपि विषयाणां नासत्त्वमित्युक्तं तत्रानुभवविरोधं शङ्कते—नन्विति। स्वप्नदृष्टानां समीहितमेव कालान्तरे मिथ्यात्वमित्यङ्गीकरोति—सत्यमिति। तर्हि तेषामसत्त्वमेव स्वीकृतमित्याशङ्क्याऽऽह—जाग्रदिति। तथाऽपि जाग्रद्बोधेनाविषयीकरणादसत्त्वं स्वप्नदृष्टानामेष्टव्यमित्याशङ्क्याऽऽह- तथेति। यदि जाग्रद्बोधेनाविषयीकरणमात्रेणासत्त्वं स्वप्नदृष्टानां पदार्थानामिष्टं तर्हि जाग्रद्विषयाणामपि स्वप्नबोधेनाविषयीकरणादसत्त्वप्रसङ्गस्तन्न कदाचिदपि संविदि विषयाणामत्यन्तासत्त्वमित्यर्थः। कथं तर्हि वाचारम्भणश्रुतिरित्याशङ्क्याऽऽह—विशेषेति। त्रयाणां रूपाणां सत्यत्वे विशेषाकारमात्रं मिथ्येत्युक्तमयुक्तं तेष्वपि विशेषाकारस्य सत्त्वादित्याशङ्क्याऽऽह—तान्यपीति। कथं तर्हि तेषु सत्यपदं प्रयुक्तमित्याशङ्क्याऽऽह—स्वत इति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु बाह्यानां मानसानां च वासनाजन्यत्वे एते बाह्या एते मानसा इति विभागो न स्यात्, तथा बाह्यानां मानसत्वे तद्वदनृतत्वं च स्यादित्याशङ्क्य प्रमाणवृत्त्यवच्छिन्नसाक्षिकेवलसाक्षिभास्यत्वाभ्यां विभागोपपत्तेः, स्वाधिष्ठानात्मसत्तया सर्वस्यापि सत्वेन कस्यापि अनृतत्वशङ्काभावान्नैवमिति परिहरति—यद्यपीत्यादिना। बाह्या इत्यनन्तरं तथापीति शेषः। नामरूपांशेऽनृतत्वेऽपि स्वरूपे नानृतत्वमिति वक्तुं स्वात्मनीत्युक्तम्। मानसस्य स्वप्नस्य सत्यत्वं प्रत्यक्षविरुद्धमिति शङ्कते—नन्विति। विषया इत्यनन्तरं नैवं बाह्या इति शेषः। जाग्रद्बोधेन स्वाप्निकस्य नामरूपांशे बाधादनृतत्वव्यवहारेऽपि न स्वरूपेऽनृतत्वं बाह्यशब्दितस्य जाग्रतस्तु तेनैव बाधाभावान्नानृतत्वव्यवहार इति परिहरति—सत्यमिति।

नन्वेवमपि ब्राह्मलौकिकानां कामानां सर्वांशेऽपि मुख्यसत्यत्वसिध्यर्थं अमानसत्वं अङ्गीकर्तव्यं जागरितस्यापि तथात्वमेव, तथासति तेपु श्रौतस्सत्यशब्दो मुख्यः स्यादित्याशङ्क्य तथापि न मुख्यं सत्यत्वं सिध्यति, जाग्रद्विषयाणामपि स्वात्मबोधापेक्षं नामरूपांशे अनृतत्वं, स्वरूप एव तु सत्यत्वं कामानां मानसत्वेऽपि सिध्यतीत्युत्तरमाह—नन्विति।

क्वचित्तु ननु स्वात्मार्थबोधापेक्षमिति स्थाने तथा स्वप्नबोधापेक्षमिति पठ्यते तत्रापि स्वप्नतुल्यत्वमेव जाग्रतः प्रतिपाद्यते, स्वप्ने जाग्रतो बाधादनृतत्वमेवेति निमित्तमिति, इतिशब्दपाठेऽपि, अनृतत्वहेतुसमर्पकत्वेन योज्यम्। नामरूपविशेषांशस्य अनृतत्वे श्रुतिमाह–वाचेति। विकारोऽन्यादित्यादिः मृषा तत्कारणानि तेजोऽबन्नानि तु त्रीणि रूपाणि सत्यमित्यर्थः, तेषामपि विकारत्वात्कारणरूपेणैव सत्यत्वमिति वदन् सर्वस्यापि कार्यस्य स्वकारणरूपेण सत्यत्वमित्यत्रापि मृत्तिकेत्येव सत्यं, एवं "सोम्य स आदेशो भवती"ति वाक्यमर्थतः पठति—तान्यपीति।

सत्यम् प्राक्सदात्मप्रतिबोधात्स्वविषयेऽपि सर्वं सत्यमेव स्वप्नदृश्या इवेति न कश्चिद्विरोधः। तस्मान्मानसा एव ब्राह्मलौकिका अरण्यादयः संकल्पजाश्च पित्रादयः कामाः। बाह्यविषयभोगवदशुद्धिरहितत्वाच्छुद्धसत्त्वसंकल्पजन्या इति निरतिशयसुखाः सत्याश्चेश्वराणां भवन्तीत्यर्थः। सत्सत्यात्मप्रतिबोधेऽपि रज्ज्वामिव कल्पिताः सर्पादयः सदात्मस्वरूपतामेव प्रतिपद्यन्त इति सदात्मना सत्या एव भवन्ति ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य पञ्चमः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

विषयाकारमात्रस्याप्यनृतत्वमद्वैतविचारव्यग्रमेवेत्यज्ञानां सत्यत्वाभिनिवेशपूर्वको व्यवहारो न विरुध्यत इत्याह—प्राक्सदेति। स्वविषये स्वकार्ये सामर्थ्यं स्वप्नवन्मिथ्यात्वेऽप्यविरुद्धम्। तस्मादिति। प्रकृतोपसंहारः। यद्येहिकविषयवत् ब्राह्मलौकिका अपि विषया विचार्यमाणे न सत्याः कस्तर्हि तत्र विशेषो येनैतत्परित्यागेन तत्कामिनां विद्याविधानं तत्राह—बाह्यविषयेति। प्राग्बोधादविवेकदृष्ट्या अर्थक्रियाकारित्वं विषयरूपेणापि सत्त्वमुक्तम्। विवेकदृष्ट्या पुनरन्वयव्यतिरेकाभावपरिहारेण संविन्मात्रत्वं विषयाणां सत्त्वमिष्यते ततो न सत्यत्वश्रुतिविरोध इति। निगमयति—सत्सत्यात्मेति। ॥ ४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य पञ्चमः खण्डः

### आनन्दगिरिटीका

तर्हि तत्सत्यमित्येत्तावत्प्रयोक्तव्यं किमिति त्रीणि रूपाणीत्येव सत्यमित्युक्तं तत्राऽऽह—प्रागिति। प्रकृतमुपसंहरति—तस्मादिति। प्रथमपक्षवद्द्वितीयपक्षे दोषाभावादिति यावत्। यद्यैहिकविषयवद्ब्राह्मलौकिका अपि विषया विचार्यमाणाः सत्यास्तर्हि कस्तत्र विशेषो येनैतत्परित्यागेन तत्कामिनां विद्याविधानं तत्राऽऽह—बाह्येति। जन्या ब्रह्मलोके विषया इति शेषः। प्रकृतायाःफलश्रुतेरित्यध्याहारः। ननु तेषामविद्यादशायामर्थक्रियाकारित्वरूपसत्यत्वसंभवेऽपि कुतो विद्यावस्थायां सत्यत्वमित्याशङ्क्याऽऽह—सत्सत्येति। यथा रज्ज्वां कल्पितसर्पादयो रज्जुतत्त्वबोधे तदात्मतामेवाऽऽपद्यन्ते विवेचनात्तथा सर्वेऽपि विषया विद्यावस्थायामन्वयव्यतिरेकाभ्यां परिहारायासन्मात्रत्वमेव प्राप्नुवन्तीति तत्सत्यत्वमविरुद्धमित्यर्थः ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य पञ्चमः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु प्रबोधात्प्राक् नामरूपांशेषु अर्थक्रियाकारिसत्यत्वार्थं जाग्रद्वत्कामानाममानसत्वमेव वक्तव्यमित्याशङ्क्य तन्मानसत्वेऽपि स्वप्नवदुपपद्यत इत्याह—प्रागिति। स्वविषयेऽपीति। स्वस्य पदार्थस्य विषये साध्ये या अर्थक्रियाकारिता तदंशेऽपीत्यर्थः। सर्वमिति कामा इत्यर्थः, "सङ्कल्पादेवास्य पितरस्समुत्तिष्ठन्ती"ति श्रुत्या "सङ्कल्पादेव तु तच्छ्रुतेरि"ति सूत्रेण च एवकारेण व्यतिरिक्तकारणजन्यत्वस्य वारितत्वात्पार्थिवाप्यत्वे च तदयोगात् मानसा एव कामास्तेषु सत्यशब्दस्तु स्वरूपभूतात्मापेक्षयेत्युपसंहरति—तस्मादिति। तर्हि स्वप्नतुल्यत्वे निरतिशयसुखसाधनत्वाभावाद्विद्याफलत्वं न स्यादित्याशङ्क्याह—बाह्येति। अशुद्धिरहितत्वे हेतुः शुद्धसत्त्वसंकल्पेति। ईश्वराणां, विद्यया ईश्वरत्वं विदुषामित्यर्थः। अर्थ इति। "त इमे सत्याः कामा" इत्यादिश्रुतौ सत्यशब्दार्थ इत्यर्थः। ननु शुक्तिरजतादिवद्ब्रह्मात्मबोधेन कामानां बाधेन निरन्वयनाशात्कथं स्वरूपेणापि सत्यत्वमित्याशङ्क्य बाधो न नाशः किन्तु अधिष्ठानमात्रतया पर्यवसानम् अतो न विरोध इत्याह—सत्सत्यात्मेति। सतो ब्रह्मणः देहाद्यारोपाधिष्ठानतया सत्यभूतात्मतया प्रतिबोधेऽपीत्यर्थः ॥४॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य पञ्चमः खण्डः

**अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥**

यस्तु हृदयपुण्डरीकगतं यथोक्तगुणविशिष्टं ब्रह्म ब्रह्मचर्यादिसाधनसंपन्नस्त्यक्तबाह्यविषयानृततृष्णः सन्नुपास्ते तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येति नाडीखण्ड आरभ्यते—

अथ या एता वक्ष्यमाणा हृदयस्य पुण्डरीकाकारस्य ब्रह्मोपासनस्थानस्य संबन्धिन्यो नाड्यो हृदयमांसपिण्डात्सर्वतो विनिःसृता आदित्यमण्डलादिव रश्मयस्ताश्चैताः पिङ्गलस्य वर्णविशेषविशिष्टस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णास्तदाकारा एव तिष्ठन्ति वर्तन्त इत्यर्थः। तथा शुक्लस्य नीलस्य पीतस्य लोहितस्य च रसस्य पूर्णा इति सर्वत्राध्याहार्यम्। सौरेण तेजसा पित्ताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन संपर्कात्पिङ्गलं भवति सौरं तेजः पित्ताख्यम्। तदेव च वातभूयस्त्वान्नीलं भवति। तदेव च कफभूयस्त्वाच्छुक्लम्। कफेन समतायां पीतम्। शोणित-

### नरेन्द्रपुरीयं टिप्पणम्

सगुणविद्याफलस्वरूपमुपवर्ण्य तत्प्राप्तये गतिर्वक्तव्येति नाडीखण्डारम्भमाह—यस्त्वित्यादिना। रसेन अन्नरसस्य संभवति तत्संपर्काद्रसनाडीनां च भवतीत्युक्तम्। पक्षान्तरमाह—वैद्यकाद्वेति। नाभेरूर्ध्वं हृदयादधः आमाशयः। तद्गतं सौरं तेजो व्यतिरिक्तं पित्तम्। वर्णविशेषो रसस्य हेतुः कथ्यते धात्वन्तरसहकारिवशात्तदुक्तं बाहटेन—"आमाशयगतं पित्तं रञ्जकं रसरञ्जनादि"ति ॥ १-२ ॥

### आनन्दगिरिटीका

सगुणविद्याफलस्वरूपमित्थमुपपाद्य तत्प्राप्तये गतिर्वक्तव्येति नाडीखण्डमवतारयति—यस्त्विति। यथोक्तो गुणः सत्यकामत्वादिः। ब्रह्मचर्यादीत्यादिशब्दः शमदमादिसंग्रहार्थः। तमेवाऽऽदिशब्दार्थं स्पष्टयति—त्यक्तेति। अधिकारिणः सफलोपास्तिविध्यानन्तर्यमथशब्दार्थः। रसेनान्नस्येति शेषः। तदाकारा इति तच्छब्दोऽन्नरसविषयः। शुक्लस्येत्यादिषष्ठी पूर्ववत्। श्रुताविविशब्दोऽध्याहारद्योतनार्थः। कथं पुनरन्नरसस्य पिङ्गलादिविचित्रो वर्णविशेषः सिध्यतीत्याशङ्क्याऽऽह—सौरेणेति। यत्पित्ताख्यं सौरं तेजस्तेन पाकोऽशितस्य पीतस्य च जायते तेनाभिनिर्वृत्तेनाल्पेन कफेन संपर्कात्तदेव पित्ताख्यं सौरं तेजो भवति पिङ्गलं तेन संपर्काद्रसस्य नाडीनां च जायते पिङ्गलत्वमित्यर्थः। तदेव च पित्ताख्यं सौरं तेजो यथोक्तपाकाभिनिर्वृत्तेन प्रभूतेन वातेन संबन्धात्तद्भूयस्त्वाद्भवति नीलं तेन च संपर्कादन्नरसस्य नाडीनां च जायते नैल्यमित्याह—तदेवेति। प्रकृतमेव पित्ताख्यं सौरं तेजो यथोक्तपाकवशादभिनिर्वृत्तकफस्य स्वसंबन्धिनो भूयस्त्वाद्भवति शुक्लं तेन च संपर्कादन्नरसस्य नाडीनां च शौक्ल्यं भवतीत्याह—तदेव चेति। उक्तपाकाभिनिर्वृत्तेन कफेन तदभिनिर्वृत्तस्यैव वातस्य समतायां तदेव तेजस्तत्संबन्धि पीतं जायते तत्संबन्धाच्चान्नरसस्य च नाडीनां च पीतत्वं भवतीत्याह—कफेनेति। यदा तु यथोक्तपाकाभिनिष्पन्नं शोणितं बहुलं भवति तदा तस्य नाडीनां च लौहित्यं भवतीत्याह—शोणितेति। पक्षान्तरमाह—वैद्यकाद्वेति। अन्वेषणप्रकारमाह—कथमिति। नाभेरूर्ध्वं हृदयादधस्तादामाशयमाचक्षते। तद्गतं तेजः सौरं पित्तमित्युच्यते। तच्चान्नर-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नाडीखण्डमवतारयति—यस्त्विति। तुशब्दो निर्विशेषब्रह्मविदं व्यवच्छेत्तुं "अत्र ब्रह्म समश्नुते", "न तस्य प्राणा उत्क्रामन्ती"ति श्रुतेः "कार्यं बादरिरस्य गत्युपपत्तेरि"त्यधिकरणोक्तन्यायाच्च तस्य गत्यनुपपत्तेरिति भावः। कस्येयं गतिरित्यपेक्षायां तं विशिनष्टि—हृदयेति। यथोक्तेति। एष आत्मा अपहतपाप्मेत्युक्तेत्यर्थः। तस्येति। तस्य ब्रह्मात्माज्ञानानिवृत्तेः भेदभ्रमाद्गत्युपपत्तेरित्यर्थः। नाड्येति। यद्यपि सगुणब्रह्मविदो गतिः मूर्धन्यया एकयैव नाड्येति सैव वक्तव्या नेतराः, तथापि मूर्धन्यनाडीस्तुत्यर्थं इतराः कीर्त्यन्त इति भावः। "पूरणगुणे"त्यादिसूत्रेण तृतीयार्थे षष्ठीमङ्गीकृत्य पिङ्गलवर्णविशिष्टेन सूक्ष्मेण रसेन पूर्णा इत्युक्तम्। तेन रसेन पूर्णत्वे नाडीनां तदाकारत्वं लिङ्गमाह—तदाकारा इति। नाडीनां रसपूर्णत्वोक्तिश्च तासां वक्ष्यमाणरश्मिसम्बन्धसिध्यर्था। उक्तरसस्य सौरतेजोरूपत्वस्य असौ वा आदित्यः पिङ्गल इत्यादिना वक्ष्यमाणत्वात्। सौरं तेजो नाडीष्वनुगतं जाठराग्निकृतेन

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमञ्चामुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

तद्यत्रैतत्सुप्तः समस्तः सम्प्रसन्नः स्वप्नं न विजानात्यासु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा सम्पन्नो भवति ॥ ३ ॥

बाहुल्येन लोहितम्। वैद्यकाद्वा वर्णविशेषा अन्वेष्टव्याः कथं भवन्तीति। श्रुतिस्त्वाहाऽऽदित्यसंबन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषा इति। कथम्। असौ वा आदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येष नील एष पीत एष लोहित आदित्य एव ॥ १ ॥

तस्याध्यात्मं नाडीभिः कथं संबन्ध इत्यत्र दृष्टान्तमाह—तत्तत्र यथा लोके महान्विस्तीर्णः पन्था महापथ आततो व्याप्त उभौ ग्रामौ गच्छतीमं च संनिहितममुं च विप्रकृष्टं दूरस्थमेवं यथा दृष्टान्तो महापथ उभौ ग्रामौ प्रविष्ट एवमेवैता आदित्यस्य रश्मय उभौ लोकावमुं चाऽऽदित्यमण्डलमिमं च पुरुषं गच्छन्त्युभयत्र प्रविष्टाः। यथा महापथः। कथम्। अमुष्मादादित्यमण्डलात्प्रतायन्ते संतता भवन्ति। ता अध्यात्ममासु पिङ्गलादिवर्णासु यथोक्तासु नाडीषु सृप्ता गताः प्रविष्टा इत्यर्थः। आभ्यो नाडीभ्यः प्रतायन्ते प्रवृत्ताः सन्तानभूताः सत्यस्तेऽमुष्मिन्। रश्मीनामुभयलिङ्गत्वात्त इत्युच्यन्ते ॥ २ ॥

तत्तत्रैवं सति यत्र यस्मिन्काल एतत्स्वपनमयं जीवः सुप्तो भवति। स्वापस्य द्विप्रकारत्वाद्विशेषणं समस्त

## नरेन्द्रपुरीयं टिप्पणम्

नाडीस्वरूपमुक्त्वा जीवस्याधिकरणत्वेन ताः स्तोतुमुपक्रमते—तत्रैवं सतीत्यादिना। द्विप्रकारत्वादिति।

## आनन्दगिरिटीका

सस्य धात्वन्तरसहकारिवशाद्वर्णविशेषे कारणम्। "आमाशयगतं पित्तं रञ्जकं रसरञ्जनात्" इत्यादिवचनादित्यर्थः। कथं तर्हि पिङ्गलस्येत्याद्या श्रुतिरित्याशङ्क्याऽऽह—श्रुतिस्त्विति। उक्तमर्थमाकाङ्क्षाद्वारा स्फोरयति—कथमित्यादिना। आदित्यस्य पैङ्गल्यादयो वर्णविशेषाः शास्त्रप्रामाण्यादेव प्रत्येतव्याः ॥ १ ॥

आदित्यस्य तेजसो नाडीष्वनुगतस्य पैङ्गल्यादयो वर्णविशेषा भवन्तीत्युक्तं तदेव प्रश्नद्वारा दृष्टान्तावष्टम्भेन स्पष्टयति—तस्येत्यादिना। उभयत्राऽऽदित्यमण्डले पुरुषे चेत्यर्थः। तत्र पूर्वोक्तमेव दृष्टान्तमनुवदति—यथेति। उभौ ग्रामौ महापथो यथा गच्छति तथोभयत्राऽऽदित्यस्य रश्मयः प्रविष्टाः इत्यर्थः। तमेव प्रवेशं प्रश्नद्वारा प्रकटयति—कथमित्यादिना। कथं नाडीनां पिङ्गलादिवर्णत्वमित्याशङ्क्य सौरेण तेजसेत्यादिनोक्तं स्मारयति—यथोक्तास्त्विति। अमुष्मिन्नादित्ये सृप्ता इति संबन्धः। कथं स्त्रीलिङ्गेन निर्दिष्टानां रश्मीनां पुंलिङ्गेन निर्देशस्तत्राऽऽह—रश्मीनामिति ॥ २ ॥

नाडीस्वरूपमुक्त्वा विज्ञानात्मस्वापाधिकरणत्वेन ताः स्तोतुमादौ स्वापं प्रस्तौति—तत्तत्रेति। सप्तम्यर्थमेव

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पाकेन पित्तं जायते, तस्य च कफादिसम्बन्धात् पिङ्गलादिरूपवत्तेति वैद्यशास्त्ररीत्या उक्त्वा आदित्यस्यैव पिङ्गलादिरूपत्वात् तत्सम्बन्धादेव तद्रश्मिरूपस्य पित्तस्य पिङ्गलादिरूपत्वमिति श्रौतं मतमाह—श्रुतिस्त्विति। आहेत्यस्य इतीत्यनन्तरमन्वयः। उक्तेऽर्थे उत्तरवाक्यमवतारयति—कथमिति। आदित्यस्य च उदयादितत्तत्कालविशेषेषु शुक्लादिरूपता सर्वप्रत्यक्षसिद्धेति वक्तुं एष शुक्ल इत्याद्युक्तम्। देहान्तर्गतानां नाडीनां कथं दूरस्थबाह्यरश्मिसम्बन्ध इत्याशङ्क्य बाह्यरोमकूपपर्यन्तं नाडीनां व्याप्तिसम्बन्धस्संभवति, इति सदृष्टान्तमुच्यत इत्याह—तस्येति। दृष्टान्तमनुवदन् सिद्धमर्थमाह—उभयत्रेति। आदित्यचेतनाद्रश्मीनामप्रसरान्मण्डलादित्युक्तम्। ता इति। रश्मय इत्यर्थः। ता आस्विति स्त्रीलिङ्गनिर्दिष्टानां कथं तेऽमुष्मिन्नित्यत्र त इति पुल्लिङ्गनिर्देश इत्याशङ्क्याह—रश्मीनामिति। सौरतेजोरूपपिङ्गलादिरसगुणत्वोक्त्या नाडीनां रश्मिसम्बन्धः सम्भावितः ॥२॥

इति । उपसंहृतसर्वकरणवृत्तिरित्येतत् । अतो बाह्यविषयसंपर्कजनितकालुष्याभावात्सम्यक् प्रसन्नः संप्रसन्नो भवति । अत एव स्वप्नं विषयाकाराभासं मानसं स्वप्नप्रत्ययं न विजानाति नानुभवतीत्यर्थः । यदैवं सुप्तो भवत्यासु सौर-तेजःपूर्णासु यथोक्तासु नाडीषु तदा सृप्तः प्रविष्टो नाडोभिर्द्वारभूताभिर्हृदयाकाशं गतो भवतीत्यर्थः । न ह्यन्यत्र सत्संपत्तेः स्वप्नादर्शनमस्तीति सामर्थ्यान्नाडीष्विति सप्तमी तृतीयया परिणम्यते । तं सता संपन्नं न कश्चन न कश्चिदपि धर्माधर्मरूपः पाप्मा स्पृशतीति स्वरूपावस्थितत्वात्तदाऽऽत्मनः । देहेन्द्रियविशिष्टं हि सुखदुःखकार्यप्रदानेन पाप्मा स्पृशतीति न तु सत्संपन्नं स्वरूपावस्थं कश्चिदपि पाप्मा स्प्रष्टुमुत्सहते । अविषयत्वात् । अन्यो ह्यन्यस्य विषयो भवति न त्वन्यत्वं केनचित्कुतश्चिदपि सत्संपन्नस्य । स्वरूपप्रच्यवनं त्वात्मनो जाग्रत्स्वप्नावस्थां प्रति गमनं बाह्यविषयप्रतिबोधोऽविद्याकामकर्मबीजस्य ब्रह्मविद्याहुताशादाहनिमित्तमित्यवोचाम षष्ठ एव तदिहापि प्रत्येतव्यम् ।

## नरेन्द्रपुरीयं टिप्पणम्

दर्शनवृत्तिरदर्शनवृत्तिश्चेति तत्र दर्शनवृत्तेर्व्यावृत्त्यर्थं विशेषणं सुखदुःखानुभवाभावात् पापासंस्पर्शोऽत्र विवक्षितो न तु कर्माभावादित्येतद्दर्शयति—देहेन्द्रियेति । सुषुप्ते स्वरूपावस्थश्चेत् किंनिमित्तं तस्य प्रच्यवनमित्याकाङ्क्षायां

## आनन्दगिरिटीका

स्फुटयति—एवं सतीति । नाडीस्वरूपे पूर्वोक्तरीत्या निरूपिते सतीत्यर्थः । एतत्स्वपनमिति क्रियाविशेषणाम् । समस्तविशेषणस्यार्थवत्त्वमाह—स्वापस्येति । दर्शनवृत्तिमददर्शनवृत्तिश्चेति द्विप्रकारत्वं स्वापस्येष्टम् । तत्र दर्शन-वृत्तेः स्वापस्य व्यावृत्त्यर्थं समस्त इति विशेषणम् । तस्य संपिण्डितमर्थमाह—उपसंहृतेति । विशेषणान्तरमुत्थाप्य व्याकरोति—अत इति । उपसंहृतसर्वकरणत्वादिति यावत् । उक्तं विशेषणद्वयमुपजीव्य स्वप्नमित्यादि व्याचष्टे—अत एवेति । नाडीषु प्रविष्टो भवतीति यदुक्तं तदयुक्तं य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेत इत्यङ्गीकारादित्या-शङ्क्याऽऽह—नाडीभिरिति । नाडीष्विति श्रुता सप्तमी कथं नाडीभिरिति तृतीयया व्याख्यायते तत्राऽऽह—न हीति । तदेति सुषुप्त्यवस्थोच्यते । तस्यामवस्थायां कर्माभावे कथं पुनरुत्थानमित्याशङ्क्याऽऽह—देहेति । सुख-दुःखानुभवाभावात्पाप्मासंस्पर्शोऽत्र विवक्षितो न तु कर्माभावादित्यर्थः । अविषयत्वं साधयति—अन्यो हीति । सुषुप्ते स्वरूपावस्थस्य कथं प्रच्यवनमित्याशङ्क्याऽऽह—स्वरूपेति । अविद्याकामकर्मणां बीजमनाद्यज्ञानं तस्य ब्रह्मविद्याख्ये-नाग्निना न स्वापे दाहस्तन्निमित्तं सुषुप्तस्य पुनः स्वरूपप्रच्यवनमिति संबन्धः । तदेव व्याचष्टे—जाग्रदिति । कीदृक्प्रच्यवनमित्यपेक्षायामाह—बाह्येति । एतच्च सति संपद्य न विदुरित्यादावुदितमित्याह—इत्यवोचामेति ।

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इदानीं सुप्तस्य तेजस्सम्बन्धहेतुकपापासंस्पर्शबलादपि तं संभावयितुं सुषुप्तिवाक्यमित्यभिप्रेत्य तद्वाक्यं व्याचष्टे—तदिति । यद्वा नाडीनां सुषुप्तौ ब्रह्मसंपत्तिद्वारत्वदर्शनाद्ब्रह्मनाड्यः ब्रह्मलोकप्राप्तिद्वारमित्यौचित्येन वक्तुं तद्वाक्यमित्यभिप्रेत्याह—तदिति । एतदिति सुप्तिक्रियाविशेषणं तस्याः सर्वप्रसिद्धं रूपं दर्शयितुं, ततश्च लोकप्रसिद्धं रूपं यथा भवति, तथा सुप्तिं प्राप्त इत्यर्थं इति व्याचष्टे—एतदिति । स्वपनं सुषुप्त इति, पाकं पचतीतिवत्स्वप्नं प्राप्त इत्यर्थः । द्विप्रकारत्वादिति । गजतुरगादिदर्शनरूपेण तदभावरूपेण चेत्यर्थः । समस्तत्वं कारणानामुपसंहारेण पिण्डीभाव इत्याह—उपसंहृतेति । समस्तत्वं संप्रसन्नत्वे हेतुमाह—अत इति । सुप्तः स्वप्नं न विजानातीति विरोधमाशङ्क्याह—विषयाकारेति । नाडीनां सुप्ताधारत्वं "तदभावो नाडीषु तच्छ्रुतेरात्मनि च"त्यधिकरणविरुद्धं, तत्र आत्माधिकरणत्वोक्तेरित्याशङ्क्याह—नाडीभिरिति । एवं व्याख्याने हेतुमाह—नहीति । कथं तर्हि नाडीष्विति सप्तमीत्यत आह—सामर्थ्यादिति । धर्मफलस्यापि स्वर्गादेः विदुषोऽनिष्टत्वाद्धर्मस्यापि पापत्वमेवेत्यभिप्रेत्याह—धर्मेति । अमूर्तस्य पाप्मनः आत्मसंस्पर्शः संयोगरूपः सर्वदाप्यप्रसक्त इति प्रतिषेधानुपपत्तिरित्याशङ्क्य सुखादिस्व-कार्यप्रदानमेव स्पर्श इत्याह—देहेति । स्वरूपं प्राप्तस्य द्वितीयाभावेन सर्वव्यवहारागोचरत्वात्सुखित्वादिव्यवहारा-विषयत्वमाह—अविषयत्वादिति । न त्विति । ननु सुप्तो यदि सत्संपन्नः तर्हि मुक्तस्येव जागरादिसंसारगमनं न स्यादित्याशङ्क्याह—स्वरूपेति । प्रच्यवनशब्दार्थमाह—जाग्रदिति । अक्रियस्य कथं गतिरित्यत आह—बाह्येति ।

अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

यदैवं सुप्तः सौरेण तेजसा हि नाड्यन्तर्गतेन सर्वतः संपन्नो व्याप्तो भवति। अतो विशेषेण चक्षुरादिनाडीद्वारैर्बाह्यविषयभोगायाप्रसृतानि करणान्यस्य तदा भवन्ति। तस्मादयं करणानां निरोधतस्स्वात्मन्येवावस्थितः स्वप्नं न विजानातीति युक्तम् ॥ ३ ॥

तत्रैवं सत्यथ यत्र यस्मिन्कालेऽबलिमानमबलभावं देहस्य रोगादिनिमित्तं जरादिनिमित्तं वा कृशीभावमेतन्नयनं नीतः प्रापितो देवदत्तो भवति मुमूर्षुर्यदा भवतीत्यर्थः। तमभितः सर्वतो वेष्टयित्वाऽऽसीना ज्ञातय आहुर्जानासि मां तव पुत्रं जानासि मां पितरं चेत्यादि। स मुमूर्षुर्यावदस्माच्छरीरादनुत्क्रान्तोऽनिर्गतो भवति तावत्पुत्रादीञ्जानाति ॥ ४ ॥

अथ यत्र यदैतत्क्रियाविशेषणमित्यस्माच्छरीरादुत्क्रामति। अथ तदैतैरेव यथोक्ताभी रश्मिभिरूर्ध्वमाक्रमते

नरेन्द्रपुरीयं टिप्पणम्

अविद्याकामकर्मणां बीजत्वाददग्धत्वादित्याह—स्वरूपप्रच्यवनं त्विति। तेजसोऽपीति। पापासंस्पर्शे श्रौतं हेतुं व्याचष्टे—यदैवं सुप्त इत्यादिना ॥ ३ ॥

एवं नाडीः स्तुत्वा नाडीभिरूर्ध्वगमनं दर्शयितुं मरणकालं तावदाह—तत्रैवं सत्यथेत्यादिना ॥ ४ ॥

आनन्दगिरिटीका

तेजसा हीति पाप्मास्पर्शे श्रौतो हेतुस्तं हेतुं व्याचष्टे—यदेति। तद्व्याप्तिकार्यमाह—अत इति। कार्यकरणसंस्पर्शाभावफलं दर्शयति—तस्मादिति ॥ ३ ॥

नाडीरेवं स्तुत्वा ताभिरूर्ध्वगमनं प्रदर्शयितुं मरणकालं प्रसञ्जयति—तत्रेति। तस्यैवार्थमाह—एवं सतीति। नाडीनामुक्तरीत्या प्राशस्त्ये सतीत्यर्थः। ताभिरूर्ध्वगमनप्रदर्शनप्रारम्भार्थोऽथशब्दः। रोगादीत्यादिपदमागन्तुकसर्वनिमित्तसंग्रहार्थम्। जरादीत्यादिपदं तु नैसर्गिकसर्वनिमित्तद्योतनार्थमिति भेदः। एतन्नयनमिति क्रियाविशेषणम् ॥४॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ज्ञानेन अविद्यादिदाहान्मुक्तस्य बीजाभावान्न पुनस्संसारगमनं इतरस्य तु नैवमिति भावः। हिशब्दसूचितं तेजस्संपत्तेर्हेतुत्वं विवृणोति—अत इति। पूर्वं तेजश्शब्देन सौरतेजोऽभिधीयते। तस्यापि नाडीद्वारासत्त्वादित्यापातत्तो व्याख्याय ब्रह्मसंपन्नस्य सौरतेजस्संपृक्त्यसम्भवात्तेज इति ब्रह्म चोच्यते। तथा च तेजस्संपत्तिः स्वात्मसंपत्तिरेवेत्यभिप्रेत्याह—स्वात्मन्येवेति। स्वप्नमिति। यद्यपि पाप्मा न स्पृशतीति प्रतिज्ञाततत्त्वान्निगमनेऽपि पाप्मानं न स्पृशतीति वक्तव्यम्। तथापि स्वप्नं न विजानातीत्यत्रापि पाप्मसंस्पर्शाभावद्वारा तेजस्संपत्तेर्हेतुत्वमस्तीति, स्वप्नमित्येवमुक्तं स्वप्नज्ञानस्य पाप्मकार्यत्वाद्वा तथोक्तम् ॥ ३ ॥

एवं रश्मिनाडीसंबन्धं ब्रह्मनाड्या ब्रह्मलोकप्रापकत्वं च स्वप्नवाक्येनौचित्येन संभाव्य इदानीं विदुषः नाडीरश्मिद्वारा ब्रह्मलोकगतिं वक्तुं उत्क्रान्तिं प्रस्तौति—तत्रैवं सतीत्यादिना। रश्मिनाडीसम्बन्धे उक्तप्रकारेण सिद्धे सति अथ तद्धेतुका अर्थान्तररूपा विदुषो गतिरुच्यत इति शेषः। रोगादि निमित्तं यस्य तस्य भावः तत्ता तथा तद्वत्तयेत्यर्थः। एवमुत्तरत्रापि विग्रहः। एतन्नीत इति। एतदिति क्रियाविशेषणं लोकसिद्धं प्रकारं यथा तथा नीत इत्यर्थः। एतेन मरणहेतुरबलभावो विवक्षित इत्याह—मुमूर्षुर्यदेति। ननु देहातिरिक्तात्माभावात्तस्य कथं देहादुत्क्रान्तिरुच्यत इत्याशङ्क्य देहस्यैकरूपेण सत्त्वेऽपि पूर्वोत्तरकालयोः ज्ञानाज्ञानाभ्यां व्यतिरिक्तात्मास्तित्वं वक्तुं "तमभित" इत्यादिवाक्यं, तद्व्याचष्टे—तमिति ॥ ४ ॥

क्रियाविशेषणमिति। उत्क्रान्तिक्रियाया लोकसिद्धं रूपं वक्तुं विशेषणमित्यर्थः। उत्क्रामतीत्यनन्तरं तदा

यथाकर्मार्जितं लोकं प्रत्यविद्वान्। इतरस्तु विद्वान्यथोक्तसाधनसंपन्नः स ओमित्योंकारेणाऽऽत्मानं ध्यायन्यथापूर्वं वा हैव, उद्वोर्ध्वं वा विद्वांश्चेदितरस्तिर्यङ्वेत्यभिप्रायः। मीयते प्रमीयते गच्छतीत्यर्थः। स विद्वानुत्क्रमिष्यन्यावत्क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्यात्तावता कालेनाऽऽदित्यं गच्छति प्राप्नोति क्षिप्रं गच्छतीत्यर्थो न तु तावतैव कालेनेति विवक्षितम्। किमर्थमादित्यं गच्छतीत्युच्यते—एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति विद्वान्। अतो विदुषां प्रपदनं प्रपद्यते ब्रह्मलोकमनेन द्वारेणेति प्रपदनम्। निरोधनं निरोधोऽस्मादादित्यादविदुषां भवतीति निरोधः। सौरेण तेजसा देह एव निरुद्धाः सन्तो मूर्धन्यया नाड्या नोत्क्रमन्त एवेत्यर्थः। विष्वङ्ङन्या इति श्लोकात्॥ ५॥

### नरेन्द्रपुरीयं टिप्पणम्

क्रियाविशेषणमिति। उत्क्रामतीति। यत्तदेतस्माच्छरीरान्निर्गमनं यस्मिन्काले भवतीति विशिष्यते ॥५-६॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य षष्ठः खण्डः

### आनन्दगिरिटीका

प्रारब्धकर्मावसानार्थोऽथशब्दः। एतदिति क्रियाविशेषणमेतदुत्क्रमणं यथा स्यात्तथेत्यर्थः। यथोक्ताभिर्नाडीषु प्रसृताभिरादित्यमण्डलादागताभिरिति यावत्। कर्मणा जितं वशीकृतं स्वात्मसंबन्धितामापादितं लोकमनतिक्रम्य तं प्रत्यविद्वान्केवलकर्मवान्गच्छतीत्यर्थः। दहरविद्यावतो गतिं दर्शयति—इतरस्त्विति। यथोक्तसाधनं दहरविज्ञानं तेन संपन्नो विशिष्ट इत्यर्थः। स ध्यायन्गच्छतीत्युत्तरत्र संबन्धः। यथापूर्वं स्वस्थावस्थायामिव मरणावस्थायामपीत्यर्थः। वा हेतिनिपातद्वयस्यावधारणरूपमर्थं कथयति—एवेति। उच्छब्दार्थमाह—ऊर्ध्वमिति। वाशब्देन द्योतितं विकल्पं दर्शयति—विद्वांश्चेदिति। यदि विद्वान्प्रमीयते तदोर्ध्वमेव गच्छति। यदि त्वविद्वान्प्रमीयते तदा तिर्यगेव गच्छतीति विभागः। विदुषस्त्यक्तदेहस्याऽऽदित्यप्राप्तावत्यन्तशैघ्र्यं दर्शयितुमनन्तरवाक्यमादत्ते—स विद्वानिति। तद्व्याचष्टे—यावतेति। आदित्यप्राप्तौ किं स्यादित्यत आह—अत इति। अविदुषामपि तर्हि प्राप्तानामादित्यं ततो निरुद्धानां पुनर्ब्रह्मलोकाप्राप्तिरित्याशङ्क्याऽऽह—सौरेणेति। देहे निरुद्धानां मूर्धन्यया नाड्या नोत्क्रमणमविदुषामित्यत्र लिङ्गं दर्शयति—विष्वङ्ङिति ॥ ५ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

न जानातीति शेषः। एतैरिति। नाडीसम्बन्धैरित्यर्थः। ऊर्ध्वमिति। देहाद्बाह्यस्सन्नित्यर्थः। न तूपरीत्यर्थः। इतरस्तिर्यगेवेति वक्ष्यमाणत्वात्तद्विरोधापत्तेरिति। उत्क्रान्तिक्रियायाः कर्माध्याहरति—यथा कर्मेति। अविद्वानित्युपलक्षणम्। विदुषोऽपि नाडीरश्मिद्वारा ऊर्ध्वाक्रमणस्य तुल्यत्वात्। स ओमित्यत्र तु तच्छब्देन विद्वानुच्यते, तस्य प्रकरणित्वादोङ्कारोच्चारणलिङ्गाच्चेति तच्छब्देन तं गृहीत्वा तस्य विशेषमाह—इतरस्त्विति, यथापूर्वमिति। जीवदशायामिवेत्यर्थः। वा आहेति, निपातद्वयसमुदायस्य अवधारणार्थत्वं वदति—एवेति। तस्योमिति ध्यायन्नेवेति पूर्वेणान्वयः। अथ वा हेत्येव निपातः अवधारणार्थः, वाकारस्तु रश्मिद्वारानिर्गच्छतां मध्ये कश्चिदोङ्कारेण आत्मानं ध्यायन्नेव वा भवतीत्येवं विद्वद्गतविशेषाभिधानेन विद्वद्विषयत्वमस्य वाक्यस्य दर्शयति। एतदेवाभिप्रेत्य इतरस्तु विद्वानिति भाष्यकारैरुक्तम्, अन्यथा पूर्ववाक्यस्य सर्वविषयत्वे सति अत्र विदुष एव ग्रहे हेत्वभावप्रसङ्गादिति द्रष्टव्यम्। द्वितीयोऽपि वाकारः तस्यैव विशेषप्रदर्शनार्थ इत्याह—ऊर्ध्वं वेति।

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥

इति स्मृतेरिति भावः। मनः क्षेपकालेन आदित्यगमनस्यासंभवात् क्षैप्र्याभिप्रायं तदित्याह—क्षिप्रमिति। तत्तद्गन्तृब्रह्मलोकप्राप्तेस्सर्वेषामविशेषादादित्यगमनेन नातिशयः कश्चिदिति पृच्छति—किमर्थमिति। आदित्यगतेर्ब्रह्मलोकप्रापकत्वादन्यत्र तदभावान्महानतिशयोऽस्तीत्याह—उच्यत इति। एतदित्यस्यादित्याभिधानेन पुल्लिङ्गप्राप्तावपि द्वारशब्दापेक्षया नपुंसकत्वमित्यभिप्रेत्याह—य आदित्य इति। आदित्यस्य साक्षान्निरोधक्रियात्वाभावान्निरोधहेतुत्वेन तत्त्वमाह—निरोधोऽस्मादिति। यद्यविद्वांसः आदित्यान्निरुद्धास्सन्तो न गच्छन्ति, तर्हि तावत्पर्यन्तं गमनमुक्तं स्यात् तथा च स यावत्क्षिप्येदित्यत्र विदुष एव तद्गत्युक्तिर्विरुध्येतेत्यत आह—सौरेणेति। तत्तेजसो निरोधोऽपि तत्कृत एवेति भावः। एवं व्याख्याने हेतुमाह—विष्वङ्ङिति ॥ ५ ॥

तदेष श्लोकः। शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य षष्ठः खण्डः

य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

तदेतस्मिन्नर्थोक्तेऽर्थ एष श्लोको मन्त्रो भवति। शतं चैका चैकोत्तरशतं नाड्यो हृदयस्य मांसपिण्डभूतस्य संबन्धिन्यः प्रधानतो भवन्ति। आनन्त्याद्देहनाडीनाम्। तासामेका मूर्धानमभिनिःसृता विनिर्गता तयोर्ध्वमायन्गच्छन्नमृतत्वममृतभावमेति विष्वङ्नानागतयस्तिर्यग्विसर्पिण्य ऊर्ध्वगाश्चान्या नाड्यो भवन्ति संसारगमनद्वारभूता न त्वमृतत्वाय किं तर्ह्युत्क्रमण एवोत्क्रान्त्यर्थमेव भवन्तीत्यर्थः। द्विरभ्यासः प्रकरणसमाप्त्यर्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य षष्ठः खण्डः

"अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्म" इत्युक्तम्। तत्र कोऽसौ संप्रसादः, कथं वा तस्याधिगमो यथा सोऽस्माच्छरीरात्स-

नरेन्द्रपुरीयं टिप्पणम्

सगुणविद्यायामुपास्यस्य स्तुत्यर्थं साक्षान्मुक्तिफलनिर्विशेषब्रह्मात्मैकत्वज्ञानगोचरात्मतत्त्वमुक्तम्। तन्निर्विशेषज्ञानं प्रपञ्चयितुमुत्तरग्रन्थमवतारयति—अथ य एष इत्यादिना। यदेव चैतन्यं मायोपाधि सविशेषमुच्यते तदेव निरुपाधि

आनन्दगिरिटीका

यथोक्तोऽर्थो नाडीविभागलक्षणः। प्रधानत इति विशेषणतात्पर्यमाह—आनन्त्यादिति। प्रकरणं नाडीविषयं दहरविद्याविषयं वा ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य षष्ठः खण्डः

दहरविद्यायामुपास्यस्तुत्यर्थमुक्तमनुवदति—अथेति। विवेकानन्तर्यमथशब्दार्थो व्याख्यातः। शरीरात्समुत्थानं तस्मिन्नहंममाभिमानत्यागः। स्वरूपं विशिनष्टि—एष इति। उक्तिकर्तृत्वमाचार्यस्य दर्शितमेव। प्राणो वा संप्रसादो विज्ञानात्मा वेति संशयात्पृच्छति—तत्रेति। प्रकृतं वाक्यं सप्तम्यर्थः। तस्य च संप्रसादस्य परमात्मविषयं ज्ञानं केनोपायेन भवतीति प्रश्नान्तरमाह—कथं वेति। किं तस्य परमात्माधिगमेनेत्याशङ्क्याऽऽह—यथेति। तथा

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रधानत इत्युपस्कारे हेतुमाह—आनन्त्यादिति। ब्रह्मनाड्या विदुषां गत्युक्तिप्रस्तावे इतरनाडीनां संसारगमनहेतुत्ववचनाद्ब्रह्मनाडीस्तुत्यर्थमित्यभिप्रेत्याह—विष्वङ्ङिति। ब्रह्मनाड्या अपि उत्क्रमणहेतुत्वादविशेषमाशङ्क्याह—उत्क्रमण एवेति। न ब्रह्मलोकप्राप्त्यर्थ इत्यर्थः। प्रकरणेति। सगुणविद्याप्रकरणेत्यर्थः ॥ ६ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य षष्ठः खण्डः

ओं वक्ष्यमाणनिर्विशेषप्रकरणस्य दहरविद्यागतसंप्रसादवाक्येन सङ्गतिं वक्तुं तदर्थमनुवदति—अथ य इति। तत्र कोऽसाविति। देहादिरूपावस्थात्रयात्मको व्यतिरिक्तो वेति विचारणीयमित्यर्थः। आद्ये एष आत्मेत्युक्तब्रह्मत्वानुपपत्तेः। य एषोऽक्षिणीत्यादिपर्यायत्रयोक्तावस्थात्रयव्यतिरेकेण स्वरूपाभिनिवृत्तिवचनेन च व्यतिरिक्तत्वनिश्चयेऽपि तर्हि अभिनिष्पत्तिशब्दितमभिगमनं किंप्रकारकमिति विचारणीयमित्याह—कथं वेति। तस्य संप्रसादस्य अभिनिष्पत्तिशब्दितमभिगमनं किंप्रकारकमित्यर्थः। तदेवाह—यथेति। संप्रसादो यथा येन प्रकारेण अभिनिष्पद्यते तस्य तदभिनिष्पत्तिरूपं अभिगमनं कथं? किंप्रकारमित्यन्वयः। किं समुत्थानमुत्क्रान्तिः ज्योतिस्सम्पत्तिः,

मुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। येन स्वरूपेणाभिनिष्पद्यते स किंलक्षण आत्मा संप्रसादस्य च देहसंबन्धीनि पररूपाणि ततो यदन्यत्कथं स्वरूपमित्येतेऽर्था वक्तव्या इत्युत्तरो ग्रन्थ आरभ्यते। आख्यायिका तु विद्याग्रहणसंप्रदानविधिप्रदर्शनार्था विद्यास्तुत्यर्था च राजसेवितं पानीयमितिवत्। य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः। यस्योपासना-

नरेन्द्रपुरीयं टिप्पणम्

बिम्बस्थानीयं निर्विशेषमिति स्वरूपैक्याभिप्रायेण सविशेषनिर्विशेषयोरभेदेन प्रजापतिवाक्यं व्याख्याति—य आत्मे-

आनन्दगिरिटीका

तस्याधिगमः कथमिति संबन्धः। अभिनिष्पद्यमानरूपश्चाऽऽत्मा सविशेषो निर्विशेषो वेतिप्रश्नान्तरं करोति—येनेति। आत्मनो हि सच्चिदानन्दैकतानादर्थान्तराणि रूपाणि दृश्यमानानि शरीरसंबन्धप्रयुक्तानि। तथा च ततः शरीरादुपाधेर्यदन्यत्तस्य स्वरूपं तत्कथं सर्वप्रमाणाप्रतिपन्नमस्तीति प्रश्नान्तरमाह—संप्रसादस्य चेति। एतेषां प्रश्नानामुत्तरत्वेनोत्तरग्रन्थमवतारयति—इत्येत इति। प्रजापतेरिन्द्रविरोचनयोश्च संवादरूपा याऽत्राऽऽख्यायिका दृश्यते सा किमर्थेत्याशङ्क्याऽऽह—आख्यायिका त्विति। शिष्यस्य विद्याया ग्रहणे गुरोस्तस्याः सम्यक्प्रदाने च यो विधिः श्रद्धालुत्वादिप्रकारस्तत्प्रदर्शनार्थेति यावत्। यद्वा विद्याया ग्रहणं स्वीकरणं यत्र संप्रदाने तद्दानपात्रे शिष्ये दृश्यते तस्य विधिर्ब्रह्मचर्यादिस्तत्प्रदर्शनार्थेत्यर्थः। आख्यायिकायास्तात्पर्यान्तरमाह—विद्येति। प्रजापतिना प्रोक्ता देवैरसुरैश्च प्रार्थितेन्द्रविरोचनाभ्यां देवासुराधिपतिभ्यामायासेन महता प्रेप्सिता देवराजेन च कथंचित्प्राप्ता तस्मान्महार्हेयं विद्येति तस्याः स्तुत्यर्थाऽऽख्यायिकेत्यर्थः। महद्भिरुपासितस्य महार्हत्वे दृष्टान्तमाह—राजसेवितमिति। यन्मायोपाधि सविशेषं चैतन्यं निरुपाधि निर्विशेषमिति सविशेषनिर्विशेषयोरभेदाभिप्रायेण प्रजापतिवाक्यं व्याकर्तुमादत्ते—य आत्मेति। तत्र सोऽन्वेष्टव्य इति वाक्ये सशब्दार्थमाह—यस्येति। उपासनमपि किमर्थमित्य-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

आदित्यसम्पत्तिः, तद्द्वारा ब्रह्मलोके स्वरूपाभिनिष्पत्तिः? उत समुत्थानं देहाद्विवेकः ज्योतिस्सम्पत्तिश्च आत्मसम्पत्तिः, तेन प्रकारेण स्वरूपावस्थानं अभिनिष्पत्तिरिति? विमर्शार्थः। 'न तस्य प्राणा उत्क्रामन्ति, अत्र ब्रह्म समश्नुते', 'स्पष्टो ह्येकेषां' 'कार्यं बादरिरस्य गत्युपपत्तेः' इति न्यायाच्च, उत्क्रान्तिगत्योरनुपपत्तेः पदार्थशोधनेन वाक्यार्थसाक्षात्कारे इहैव स्वरूपावस्थानं स्वरूपाभिनिष्पत्तिरिति निर्णये अभिनिष्पत्तव्यस्वरूपात्मैव [वा] व्यतिरिक्तं वा स्वीयं रूपमिति चिन्तनीयमित्याह—येनेति। येन रूपेणाभिनिष्पद्यते तद्रूपमात्मा वा व्यतिरिक्तं वेति शेषः, व्यतिरिक्तत्वे तत्प्राप्तेरागन्तुकत्वे मोक्षस्यानित्यत्वापत्त्या आत्मा प्रकरणादिति सूत्राच्च, स्वरूपस्यात्मत्वनिश्चयेऽपि, आत्मा किं लक्षणः? गन्तृत्वद्रष्टृत्वादिलक्षणः? उत तद्रहितः? शुद्धब्रह्मस्वरूप? इति विचारणीयमित्याह—स किंलक्षण इति। केषुचित्कोशेषु येन रूपेणाभिनिष्पद्यत इत्यादिवाक्यं नास्ति। किन्तु स किंलक्षण इत्याद्येव पाठः। "एष आत्मा तत्त्वमसी"त्यादिश्रुतेर्ब्रह्मैव स्वरूपमिति निश्चीयत इति आशङ्क्य अप्रसिद्धेः प्रत्यक्षविरोधाच्च नैवमित्याह—संप्रसादस्य चेति। तस्य गन्तृत्वादीन्येव रूपाणि प्रत्यक्षप्रसिद्धेः, नान्यद्ब्रह्म स्वरूपमप्रसिद्धेः, उक्तरूपविरोधाच्चेत्यर्थः। आद्यश्चकारः पूर्वेण समुच्चयार्थः, द्वितीयोऽवधारणार्थः। तथा च अवस्थात्रयव्यतिरेकप्रदर्शनेन त्वंपदार्थशोधनद्वारा यावदुक्ता शङ्का न निरस्यन्ते तावद्दहरवाक्यशेषे "एष आत्मेति होवाचे"त्युक्तं संप्रसादस्य ब्रह्मत्वं न सिध्येदित्यतः तदपेक्षितं सर्वं वक्तुं प्राजापत्यवाक्यं प्रवृत्तमित्याह—इत्येतेऽर्था इति। विद्याग्रहणेति। इन्द्रवच्चिरकालब्रह्मचर्यशुश्रूषादिभिः विद्या ग्राह्येति ग्रहणविधिः प्रजापतिवत्तथाविधाय देयेति संप्रदानविधिः प्रदर्श्यत इत्यर्थः। स्तुत्यर्थेति। इन्द्रविरोचनाभ्यां महार्हाभ्यां अतिक्लेशेनापि प्राप्ता, अतो नातः परः पुरुषार्थ इति विद्यास्तुतौ, पानीयस्य राजसेवितत्वोक्तवच्चेत्यर्थः। ननु "तस्मिन्यदन्तस्तदन्वेष्टव्यं, तद्वाव विजिज्ञासितव्यं," "एष आत्मा अपहतपाप्मा" तद्य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामानित्यादिना अपहतपाप्मत्वादिगुणकस्य अन्वेषणविजिज्ञासने अभिहिते इति इहापि तस्यैव अभिधानं पुनरुक्तम्। न च विधिपुनः श्रुत्या सगुणविद्यान्तरमुच्यते अभ्यासाधिकरणन्यायेनेति वाच्यम्। उपास्यगुणगुण्यन्यतरभेदमन्तरेण विद्याभेदानुपपत्तेः। न च गुणत्यागेन गुणोपलक्षितस्य निर्गुणस्य ज्ञेयत्वं इहोच्यत इति न पुनरुक्तिरिति वाच्यम्। अपहतपाप्मत्वादिगुणवैशिष्ट्योक्तिविरोधात्। तयोर्ध्वमायन्नमृतत्वमेतीति

योपलब्ध्यर्थं हृदयपुण्डरीकमभिहितं यस्मिन्कामाः समाहिताः सत्या अनृतापिधाना यदुपासनसहभावि ब्रह्मचर्यं साधनमुक्तमुपासनफलभूतकामप्रतिपत्तये च मूर्धन्यया नाड्या गतिरभिहिता सोऽन्वेष्टव्यः शास्त्राचार्योपदेशैर्ज्ञातव्यः स विशेषेण ज्ञातुमेष्टव्यो विजिज्ञासितव्यः स्वसंवेद्यतामापादयितव्यः। किं तस्यान्वेषणाद्विजिज्ञासनाच्च स्यादित्युच्यते स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानं यथोक्तेन प्रकारेण शास्त्राचार्योपदेशेनान्विष्य विजानाति स्वसंवेद्यतामापादयति तस्यैतत्सर्वलोककामावाप्तिः सर्वात्मता फलं भवतीति ह किल प्रजापतिरुवाच। अन्वेष्टव्यो

### नरेन्द्रपुरीयं टिप्पणम्

त्यादिना। सर्वलोककामावाप्तिः यथाश्रुतैव सगुणविद्यापक्षे। निर्गुणविद्यापक्षे लक्षणामाश्रित्याह—सर्वात्मतेति। परिच्छेदभ्रमव्यावृत्त्या पूर्णस्वरूपस्थितिरित्यर्थः। प्रजापतिवाक्याद्विधिः प्रतीयते सगुणविद्यापक्षे अपूर्वविधिरेव मानसक्रियाया विधिजन्यप्रयत्नभावित्वात् साध्यसाधनसम्बन्धस्य चान्यतोऽनवबुद्धत्वात्। निर्गुणविद्यापक्षे तु

### आनन्दगिरिटीका

पेक्षायामाह—उपलब्ध्यर्थमिति। तस्यैतत्फलमिति संबन्धः। कथं निर्गुणविद्यायाः सर्वलोककामावाप्तिः फलमित्याशङ्क्याऽऽह—सर्वात्मतेति। परिच्छेदभ्रमव्यावृत्त्या पूर्णस्वरूपेणावस्थितिरित्यर्थः। प्रजापतिवाक्यात्प्रतीयमानविधिस्वरूपमाह—अन्वेष्टव्य इति। एवकारव्यावर्त्यं दर्शयति—नापूर्वविधिरिति। शब्दादेव विद्योदये तदुत्पत्त्यर्थोऽपूर्वविधिरग्निहोत्रादिविधिवन्न संभवतीत्यर्थः। कथमिह नियमविधिरपि स्यादवघातविधिवदित्याशङ्क्याऽऽह—

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

पूर्वविद्यात एव मोक्षसिद्धेः, विद्यान्तरवैयर्थ्यान्वित्याशङ्क्याह—यस्योपासनयेति। अयमर्थः पूर्वत्र ब्रह्मणः हृदयपुण्डरीकोपलभ्यत्वेन परिच्छेदप्रतीतेः अनृताभिधानकामाश्रयत्वोक्त्या सद्वितीयत्वावगमादुपासनासहितब्रह्मचर्यक्रियासाध्यत्वेन तद्भावलक्षणस्य मोक्षस्यानित्यत्वापत्त्या तत्प्राप्तेर्गतिपूर्वकत्वेन पुनरागत्यापत्त्या च तदमृतत्वमापेक्षिकम्। मुख्यमोक्षस्य च—"यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति सर्वभूतेषु चात्मानं" "भूतेषु भूतेषु विचित्य धीराः" "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।" "यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः।

तत्र को मोहः कश्शोकः एकत्वमनुपश्यत"॥ इत्यादि श्रुतिस्मृतिभिः हृदयपरिच्छेदादिरहिताद्वितीयात्मज्ञानसाध्यत्वावगमान्न पूर्वविद्यया मुख्यमोक्षसिद्धिरिति निर्विशेषात्मविद्यारम्भोऽर्थवान्। न च गुणोक्तिविरोधः, तेषां पूर्वत्रोक्तहृदयपुण्डरीकजीववत् चित्रगुर्ज्ञेयो देशाधिपतिर्ज्ञेय इत्यादौ चित्रगवादिवच्च, इह ज्ञेयानन्तर्भाविन ज्ञेयात्मोपलक्षकत्वेन तदुक्त्युपपत्तेरिति। एतमर्थं वक्तुमेव भाष्ये यस्येत्यादिविशेषणानीति। अस्य दहरविद्याशेषत्वे उत्क्रमणे भवन्तीति द्विरभ्यासेन प्रकरणविच्छेदकरणं सोऽन्वेष्टव्यः, स विजिज्ञासितव्य इति पुनर्जिज्ञास्यत्ववचनं गुणानां पुनर्वचनं दहरवाक्ये "सर्वेषु लोकेषु कामचारो भवती"त्यधिकरणाधिकर्तव्यभेदेन फलमुक्त्वा तद्वैलक्षण्येन "सर्वांश्च लोकानाप्नोती"ति सर्वात्मतापत्तिलक्षणस्य "तस्मात्तत्सर्वमभवदि"त्यादौ निर्विशेषब्रह्मविद्याफलत्वेन प्रसिद्धस्य इहवचनं तथा "अनुविद्य व्रजन्ती"ति गतिसापेक्षं फलं दहरविद्यायामुक्त्वा इह तद्वैपरीत्येन सर्वान् लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ज्ञानसमकालमेव ज्ञानमात्रसाध्यत्ववचनं चानुपपन्नं स्यात्, तथा जाग्रदाद्यवस्थात्रयव्यतिरेकप्रदर्शनपूर्वकं अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति प्रत्यगात्मनो निर्विशेषत्ववचनं चायुक्तम्। न चोपासकस्वरूपकथनार्थं तद्वचनमिति वाच्यम्। यथाप्रसिद्धकर्त्रैव अग्निहोत्रादिकर्मवदुपासनान्तरवच्च इहाप्युपासने सत्यकामत्वादिगुणविशिष्टब्रह्मण उपास्यत्वोपपत्तौ तदुक्तिवैयर्थ्यात्। प्रत्युत अशरीरस्य कर्तृत्वाद्यभावेन उपासकत्वानुपपत्तिप्रसङ्गश्च स्यात्। अपहतपाप्मत्वादिगुणकस्य किमिच्छन्तावयास्तमिति पृष्टस्य य एषोऽक्षिणीत्यादिना प्रत्यक्षत्वोक्तेश्च स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति तस्यैव उत्तमपुरुषत्वोक्तेश्च न तद्भिन्नस्य उपासकत्वकथनम्। न च इहापि स तत्र पर्येतीत्यादिना भेदघटितफलमुच्यत इति युक्तम्, विधिवाक्यस्थसर्वात्मत्वफलविरोधेन पूर्वविद्याफलस्य इह स्तुत्यर्थमुक्तेः। लोकेषु कामचारो भवतीत्युक्तस्यैव तत्र प्रत्यभिज्ञानाच्चेति। स्वसंवेद्यतामिति। अपरोक्षतामित्यर्थः। आप्तेर्निरुपचरितायास्तादात्म्ये पर्यवसानात् तस्मात्तत्सर्वमभवदित्यादौ सर्वात्मत्वस्यैव ब्रह्मविद्याफलत्वश्रवणाच्च, तदेव इहापि विवक्षितमित्याह—सर्वात्मतेति। प्रमाणवस्तुपरतन्त्रे ज्ञाने विध्ययोगादित्याशङ्क्याह—अन्वेष्टव्य इति।

**तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः ॥ २ ॥**

विजिज्ञासितव्य इति चैष नियमविधिरेव नापूर्वविधिः। एवमन्वेष्टव्यो विजिज्ञासितव्य इत्यर्थः। दृष्टार्थत्वादन्वेषणविजिज्ञासनयोः। दृष्टार्थत्वं च दर्शयिष्यति नाहमत्र भोग्यं पश्यामीत्यनेनासकृत्। पररूपेण च देहादिधर्मैरवगम्यमानस्याऽऽत्मनः स्वरूपाधिगमे विपरीताधिगमनिवृत्तिर्दृष्टं फलमिति नियमार्थतैवास्य विधेर्युक्ता न त्वग्निहोत्रादीनामिवापूर्वविधित्वमिह संभवति ॥ १ ॥

तद्धोभय इत्याद्याख्यायिकाप्रयोजनमुक्तम्। तद्ध किल प्रजापतेर्वचनमुभये देवासुरा देवाश्चासुराश्च देवासुरा

### नरेन्द्रपुरीयं टिप्पणम्

शब्दादेव विद्योदयेन न तदुत्पत्त्यर्थोऽपूर्वविधिः। मिथ्याज्ञानसंस्कारप्राबल्यादनात्माभिनिवेशस्य पक्षप्राप्तौ शास्त्राचार्याभ्यामेवात्मान्वेषणं कार्यमिति नियमविधिरवघातविधिवत्। नन्विष्टसाधनत्वं विधिस्तत आत्मज्ञानस्य फलसाधनत्वं तव्यप्रत्ययेन बोध्यते। तत्राह—दृष्टार्थत्वादिति। अविद्यानिवृत्तिर्विद्याफलं तत्सामर्थ्यं चान्वयव्यतिरेकगम्यं इति न विधेरवकाश इत्यर्थः। पश्यामीति वर्तमानापदेशाद् दृष्टफलत्वमवगम्यत इत्यर्थः। ननु प्रत्यक्षभ्रमस्य शब्दज्ञानान्निवृत्त्यसंभवात् कथं दृष्टफलत्वमित्याशङ्क्याह देहव्यतिरिक्तात्मवादिनां वाक्यजज्ञानादनुमानाच्च मनुष्यत्वादिभ्रमनिवृत्तिः प्रसिद्धेत्यभिप्रेत्याह—पररूपेण चेति ॥ १ ॥

ननु विधेरेव स्तुतिसम्बन्धः, इह विध्यनङ्गीकारे आख्यायिकारूपार्थवादः किमर्थं इत्याशङ्क्याह—तद्धोभय इति। संविदं मैत्रीम् ॥ २ ॥

### आनन्दगिरिटीका

एवमिति। मिथ्याज्ञानसंस्कारप्राबल्यादनात्माभिनिवेशस्य पक्षे प्राप्तौ शास्त्राचार्याभ्यामात्मान्वेषणमेव कार्यमिति नियम इत्यर्थः। इतश्च नियमविधिरेव नापूर्वविधिरित्याह—दृष्टार्थत्वादिति। अन्वेषणविजिज्ञासनाभ्यां ज्ञानसाधनमुक्तं तस्य च विद्याद्वाराऽविद्यानिवृत्तिर्दृष्टमेव फलमन्वयव्यतिरेकाभ्यां तद्धेतुत्वावगमात्तथा च तत्र नापूर्वविधेरवकाशोऽस्तीत्यर्थः। तयोर्दृष्टफलत्वे वाक्यशेषमनुकूलयति—दृष्टार्थत्वं चेति। कथमसकृत्प्रयुक्तेन न पश्यामीति वर्तमानापदेशेनान्वेषणादेर्दृष्टफलतेत्याशङ्क्य देहातिरिक्तात्मवादिनां वाक्योत्थज्ञानादनुमानाच्च मनुष्यत्वादिभ्रमनिवृत्तिप्रसिद्धेर्मैवमित्यभिप्रेत्याऽऽह—पररूपेणेति। अन्वेषणादेर्दृष्टफलत्वे फलितमाह—इति नियमार्थतेति। अपूर्वविधित्वं तद्विषयत्वमिति यावत्। इहेत्यन्वेषणादेरुक्तिरग्निहोत्रादिवदन्वेषणादेरत्यन्ताप्राप्त्यभावस्योक्तत्वादित्यर्थः ॥ १ ॥

इदानीमाख्यायिकां व्याख्यातुमाख्यायिका तु विद्याग्रहणसंप्रदानविधिप्रदर्शनार्थेत्यादिनोक्तं स्मारयति—तद्धेति। अवतारिताख्यायिकाक्षराणि व्याचष्टे—तद्धेत्यादिना। किमितीन्द्रविरोचनौ विद्यार्थिनावपि परिकरं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यद्यपि श्रवणमननात्मके अन्वेषणे लिखितपाठभाषाप्रबन्धादीनां पक्षे प्राप्त्या नियमविधिसंभवेऽपि अपरोक्षज्ञानरूपे विज्ञाने सापि न संभवति, तथापि अन्वेषण एव नियमविधिरित्युच्यते, न विजिज्ञासने, तत्र तदुक्तिस्तु अन्वेषणस्य विजिज्ञासनं दृष्टं फलमिति वक्तुम्। अन्वेषणानन्तरं विजिज्ञासनोक्त्या तस्य तत्फलत्वप्रतीतेः दृष्टफलत्वोक्तिः। अन्वेषणे नियमविधित्वमेवेतिवक्तुः भावः। यद्वा विजिज्ञासनं नापरोक्षज्ञानं, किन्तु तत्फलकं निदिध्यासनं, तत्र नियमविधिस्संभवत्येव सहकार्यन्तरविधिः पक्षेण तृतीयमिति सूत्रे तस्योक्तत्वात्। अत एव स्वसंवेद्यतामापादयितव्य इति भाष्ये स्वसंवेद्यतारूपापरोक्षतापत्तिहेतुव्यापारार्थतया विजिज्ञासनं व्याख्यातम्। नियमविधित्वे च न नियोगनिष्ठत्वं, तत्र नियोगाभावात्, श्रवणादेश्च ज्ञानार्थत्वेन ज्ञानस्य ज्ञेयार्थत्वात् ज्ञेयब्रह्मप्राधान्याच्च ज्ञेयब्रह्मनिष्ठत्वमेव वेदान्तानां इति भावः। अत्र अक्षिपुरुषस्वप्नपुरुषज्ञानेऽपि विपरीतभ्रमनिवृत्तिरूपं भोग्यं न पश्यामीति तत्तत्पुरुषार्थत्यागार्थं दृष्टफलाभावं हेतुं वदता प्रकृतात्मज्ञानस्य दृष्टफलत्वमुक्तम्। अदृष्टफलत्वे तस्य दर्शनायोग्यत्वेन न पश्यामीत्यस्यायोगादित्याह—नाहमिति। दृष्टफलत्वं प्रत्यक्षसिद्धं चेत्याह—पररूपेणेति ॥ १ ॥

तौ ह द्वात्रिँ शतं वर्षाणि ब्रह्मचर्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँ श्च लोकानाप्नोति सर्वाँ श्च कामान्यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति ॥ ३ ॥

अनु परम्परागतं स्वकर्णगोचरापन्नमनुबुबुधिरेऽनुबुद्धवन्तः। ते चैतत्प्रजापतिवचो बुद्ध्वा किमकुर्वन्नित्युच्यते—ते होचुरुक्तवन्तोऽन्योन्यं देवाः स्वपरिषद्यसुराश्च हन्त यद्यनुमतिर्भवतां प्रजापतिनोक्तं तमात्मानमन्विच्छामोऽन्वेषणं कुर्मो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानित्युक्त्वेन्द्रो हैव राजैव स्वयं देवानामितरान्देवांश्च भोगपरिच्छदं च सर्वं स्थापयित्वा शरीरमात्रेणैव प्रजापतिं प्रत्यभिप्रवव्राज प्रगतवांस्तथा विरोचनोऽसुराणाम्। विनयेन गुरवोऽभिगन्तव्या इत्येतद्दर्शयति। त्रैलोक्यराज्याच्च गुरुतरा विद्येति। यतो देवासुरराजौ महार्हभोगार्हौ सन्तौ तथा गुरुमभ्युपगतवन्तौ। तौ ह किलासंविदानावेवान्योन्यं संविदमकुर्वाणौ विद्याफलं प्रत्यन्योन्यमीर्ष्यां दर्शयन्तौ समित्पाणी समिद्भारहस्तौ प्रजापतिसकाशमाजग्मतुरागतवन्तौ ॥ २ ॥

तौ ह गत्वा द्वात्रिंशतं वर्षाणि शुश्रूषापरौ भूत्वा ब्रह्मचर्यमूषतुरुषितवन्तौ। अभिप्रायज्ञः प्रजापतिस्तावुवाच किमिच्छन्तौ किं प्रयोजनमभिप्रेत्येच्छन्ताववास्तमुषितवन्तौ युवामितीत्युक्तौ तौ होचतुः। य आत्मेत्यादि भगवतो वचो वेदयन्ते शिष्टा अतस्तमात्मानं ज्ञातुमिच्छन्ताववास्तमिति। यद्यपि प्राक्प्रजापतेः समीपागमनादन्योन्यमीर्ष्यायुक्तावभूतां तथाऽपि विद्याप्राप्तिप्रयोजनगौरवात्यक्तरागद्वेषमोहेर्ष्यादिदोषावेव भूत्वोषतुर्ब्रह्मचर्यं प्रजापतौ। तेनेदं प्रख्यापितमात्मविद्यागौरवम् ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

आवामवास्व इति वक्तव्ये अवास्तमिति प्राजापत्युक्तानुकर्षः। वैरिणोः कथमेकत्र वासश्चिरमासीदित्यत आह—यद्यपीति ॥ ३ ॥

### आनन्दगिरिटीका

परित्यज्य शरीरमात्रेण प्रजापतिं प्रगतवन्तौ तत्राऽऽह—विनयेनेति। तयोरुक्तरूपगतिवशादेव दर्शितमर्थान्तरं कथयति—त्रैलोक्येति। विद्येति दर्शयतीति पूर्वेण संबन्धः। तस्या गुरुतरत्वे हेतुमाह—यत इति। संविदं मैत्रीम् ॥२॥

तमात्मानं ज्ञातुमिच्छन्ताववास्वेति वक्तव्येऽप्यवास्तमिति प्रजापतिवचोनुकर्षणमात्रमिति द्रष्टव्यम्। अथेन्द्रविरोचनयोर्मिथो वैरिणोः कथमेकत्रावस्थानं चिरमासीदित्याशङ्क्याऽऽह—यद्यपीति। देवासुरराजयोः स्वभावतो वैरिणोरपि विद्यार्थित्वेन चिरमेकत्र ब्रह्मचर्यवासेन सूचितमर्थं दर्शयति—तेनेति ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यद्यपि प्रकृतात्मज्ञानस्य सर्वात्मत्वं फलमुक्तं न विपरीतभ्रमनिवृत्तिस्तथापि देहादिकृतपरिच्छेदभ्रमनिवृत्तावेव सर्वात्मत्वं भवतीति तन्निवृत्तिः फलमित्युक्तम्। उक्तमिति। विद्याग्रहणेत्यादिनेत्यर्थः। स्वपरिषदीति। स्वस्वसभायामित्यर्थः। ह वा इति निपातयोरेवकारार्थत्वमुक्त्वा तेन व्यवच्छेद्यमाह—इतरानिति। इन्द्रविरोचनयोस्सर्वोपकरणत्यागोक्तेः फलं विद्याग्रहणविधिप्रदर्शनमाह—विनयेनेति। स्तुतिप्रदर्शनमपि फलमाह—त्रैलोक्येति। ताविति। तयोः प्रसिद्धदेवासुरराजत्वमहाभोगार्हत्वानुवादिना तच्छब्देन परस्परमसंविदानोक्त्या च विद्यास्तुतौ हेत्वन्तरमुच्यत इत्याह—यत इति। यस्मादित्यर्थः। संविदमिति। स्वकीयगमनज्ञापनमित्यर्थः। तज्ज्ञापने हि शरीरस्यापि प्रजापतिगमने विघातः स्यात्तन्मा भूदिति ईर्ष्ययेत्यर्थः। समिद्भारग्रहणमुपलक्षणार्थं गुरुयोग्यवस्तुनः।

"रिक्तहस्तेन नोपेयाद्राजानं दैवतं गुरुम्।" इति स्मृतेरिति द्रष्टव्यम् ॥ २ ॥

ईर्ष्यया परस्परमसंविदानतया गतयोः अवास्तमिति साहित्योक्तिर्विरुध्यत इत्याह—यद्यपीति। सहजवैरत्यागोक्त्यापि आत्मविद्या स्तुतेत्याह—तेनेदमिति ॥ ३ ॥

**तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥**

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य सप्तमः खण्डः

तावेवं तपस्विनौ शुद्धकल्मषौ योग्यावुपलभ्य प्रजापतिरुवाचह—य एषोऽक्षिणि पुरुषो निवृत्तचक्षुर्भिर्मृदितकषायैर्दृश्यते योगिभिर्द्रष्टा, एष आत्माऽपहतपाप्मादिगुणो यमवोचं पुराऽहं यद्विज्ञानात्सर्वलोककामावाप्तिरेतदमृतं भूमाख्यमत एवाऽभयमत एव ब्रह्म वृद्धतममिति। अथैतत्प्रजापतिनोक्तमक्षिणि पुरुषो दृश्यत इति वचः श्रुत्वा छायारूपं पुरुषं जगृहतुः। गृहीत्वा च दृढीकरणाय प्रजापतिं पृष्टवन्तौ। अथ योऽयं हे भगवोऽप्सु परिख्यायते परि समन्ताज्ज्ञायते यश्चायमादर्शे आत्मनः प्रतिबिम्बाकारः परिख्यायते खड्गादौ च कतम एष एषां भगवद्भिरुक्तः किंवैक एव सर्वेष्विति। एवं पृष्टः प्रजापतिरुवाच—एष उ एव यश्चक्षुषि द्रष्टा मयोक्त इति। एतन्मनसि कृत्वैषु सर्वेष्वन्तेषु मध्येषु परिख्यायत इति होवाच।

ननु कथं युक्तं शिष्ययोर्विपरीतग्रहणमनुज्ञातुं प्रजापतेर्विगतदोषस्याऽऽचार्यस्य सतः। सत्यमेव, नानुज्ञातम्।

### आनन्दगिरिटीका

शुद्धकल्मषौ प्रक्षालितदोषाविति यावत्। पुरुषो द्रष्टेति संबन्धः। अस्मदादिभिस्तत्र द्रष्टा दृष्टो नास्तीत्याशङ्क्याऽऽह—निवृत्तेति। इन्द्रियाणां विषयेभ्यो वैमुख्ये हेतुमाह—मृदितेति। योगिभिः समाधिनिष्ठैरन्तर्दृष्टिभिरिति यावत्। य आत्मेत्यादिवाक्येनास्यैकवाक्यतां दर्शयति—एष इति। भूमविद्यया चास्यैकवाक्यत्वं सूत्रयति—भूमाख्यमिति। इतिशब्दो वाक्यसमाप्त्यर्थः। उक्तेऽर्थे वाक्यं पातयति—अथ योऽयमिति। प्रश्नार्थोऽथशब्दः। इतिशब्दः समाप्त्यर्थः। यश्चक्षुरुपलक्षितो द्रष्टैव एव मयोक्तोऽपहतपाप्मादिधर्मवानात्मा युवाभ्यां पुनरन्यथा गृहीतमिति निपातेन सूचयन्नुक्तवान्प्रजापतिरित्याह—एवमिति। प्रजापतिश्चेदेवमुक्तवान्कथं तर्हि तयोर्वैमुख्यं न निवृत्तमित्याशङ्क्याऽऽह—एतदिति। यथोक्तवचोरूपं वस्त्विति यावत्।

यत्प्रजापतिना मनसि निहितं तत्प्रकटीकर्तुं चोदयति—नन्विति। शिष्टशिष्यगतं विपरीतग्रहणमा-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

यदि दर्शनं चाक्षुषज्ञानं स्यात्तदा अक्षिप्रतिविम्बितस्य आत्मत्वं उक्तं स्यात्, तत्र अमृतत्वादिकं विरुद्धमित्यत आह—निवृत्तेति। चक्षुर्ग्रहणं सर्वेन्द्रियोपलक्षणम्। जाग्रत्साक्षी सर्वविशेषवर्जितः शास्त्रगम्य आत्मा लक्षणया इहोक्त इति नामृतत्वादिविरोध इत्यर्थः। यो वै भूमा तदमृतमिति श्रुतेः। इहामृतत्वोक्त्या त्रिविधपरिच्छेदराहित्यलक्षणया भूमत्वं विवक्षितमित्याह—भूमाख्यमिति। द्वितीयाद्वै भयं भवतीति श्रुतेर्भूम्नोऽभयत्वं युक्तमित्याह—अत एवेति। परिच्छेदाभावादेव ब्रह्मेत्यर्थः। य एषोऽक्षिणीति साक्षिण्युक्ते अथ योऽयमित्यादिना प्रतिबिम्बविशेषप्रश्नानुपपत्तिमाशङ्क्य भ्रान्त्या अक्षिपुरुषं प्रतिबिम्बं गृहीतवतोः प्रश्न इत्याह—अथैतदिति। चित्तगतकल्मषक्षयाभावाद्यथाश्रुतग्रहणेन भ्रमो जात इत्यर्थः। कतम इति। आदर्शादिप्रतिबिम्बेषु मध्ये कश्चिदेवात्मा, तत्रापि कतमः। किं वा एक एवात्मा सर्वेषां प्रतिबिम्बानामेकत्वं आत्मत्वं चेत्यर्थः।

यद्यपि कतम एषां मध्ये आत्मेत्येव प्रश्नो दृश्यते तथापि एष एवैष्विति एकस्यैवात्मनः सर्वेषु प्रतिबिम्बितत्वेन प्रतिवचनदर्शनाद्भाष्य एवं व्याख्यातं; प्रतिबिम्बस्यात्मत्वाङ्गीकारेण प्रतिवचनमयुक्तमित्याशङ्क्य अक्षिणि सन्निहितस्य साक्षिणः सर्वाधिष्ठानतया सर्वत्रादर्शादौ प्रतीतेः, तदभिप्रायकं प्रतिवचनमिति नोक्तदोष इत्याह—चक्षुषि द्रष्टेति। एष उ एवेत्यत्र एतच्छब्दस्य प्रश्नवाक्यस्थसन्निहितप्रतिबिम्बवाचित्वात्तस्यैव सर्वेषु आदर्शादिमध्येषु प्रतीतेश्च, स एव उत्तरवाक्यार्थ इति यथाश्रुतमादाय शङ्कते—नन्विति। अनुज्ञातुमित्यनन्तरं किन्तु युवां भ्रान्तौ मया तु साक्ष्युक्त इति वक्तुमिति शेषः। अयुक्तत्वे प्रजापते रागद्वेषादिराहित्यं, आचार्यस्य शिष्ये अरागद्वेषादिकार्यत्वं

कथम् । आत्मन्यध्यारोपितपाण्डित्यमहत्त्वबोद्धृत्वौ हीन्द्रविरोचनौ तथैव च प्रथितौ लोके । तौ यदि प्रजापतिना मूढौ युवां विपरीतग्राहिणावित्युक्तौ स्यातां ततस्तयोश्चित्ते दुःखं स्यात्तज्जनिताच्च चित्तावसादात्पुनःप्रश्नश्रवण-ग्रहणावधारणं प्रत्युत्साहविघातः स्यादतो रक्षणीयौ शिष्याविति मन्यते प्रजापतिः । गृह्णीतां तावत्तदुदशरावदृष्टान्ते-नापनेष्यामीति च । ननु न युक्तमेष उ एवेत्यनृतं वक्तुम् । न चानृतमुक्तम् । कथम् । आत्मनोक्तोऽक्षिपुरुषो मनसि संनिहिततरः शिष्यगृहीताच्छायात्मनः सर्वेषां चाभ्यन्तरः "सर्वान्तरः" इति श्रुतेः । तमेवावोचदेष उ एवेत्यतो नानृतमुक्तं प्रजापतिना । तथा च तयोर्विपरीतग्रहणनिवृत्त्यर्थं ह्याह ॥ ४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य सप्तमः खण्डः

### नरेन्द्रपुरीयं टिप्पणम्

आत्मनेति । स्वेन प्रजापतिना स्वयं प्रागुक्तो यस्स एव उक्त इत्यर्थः ॥ ४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य सप्तमः खण्डः

### आनन्दगिरिटीका

चार्येणानुज्ञातुमयुक्तमित्यङ्गीकृत्य प्रजापतेरभिप्रायमाह—सत्यमेवमिति । कथं तर्हि तयोर्विपरीतग्रहणमपनेतव्य-मित्याशङ्क्याऽऽह—गृह्णीतां तावदिति । तावद्विपरीतमिति शेषः । चकारेण क्रियापदमनुकृष्यते । यद्यदाचरति श्रेष्ठ इति न्यायेन सर्वेषां मृषावादित्वं स्यादिति शङ्कते—नन्विति । प्राजापत्यमभिप्रायमेव प्रकटयन्नतिप्रसङ्गं परिहर्तुं तदीयमनृतवादित्वं दूषयति—न चेति । तदेवाऽऽकाङ्क्षापूर्वकं स्फुटयति—कथमित्यादिना । शिष्याभ्यां गृहीतो योऽयमात्मा ततः सकाशादात्मना स्वेनैव प्रजापतिनोक्तो योऽस्त्यक्ष्युपलक्षितो द्रष्टा स मनसि प्रजापतेः संनिहित-तरोऽतः स एव तेनोक्त इत्यर्थः । इतश्च द्रष्टा प्रजापतेर्मनसि संनिहिततर इत्याह—सर्वेषां चेति । प्रजापतेर्मनसि द्रष्टुः संनिहितत्वेऽपि कथं तस्य न मृषावादित्वमत आह—तमेवेति । इतश्च प्रजापतेर्न मृषावादित्वमित्याह—तथा चेति ॥ ४ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य सप्तमः खण्डः

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

च हेतुमाह—प्रजापतेरिति । शिष्यस्य बुद्ध्यवसादपरिहाराय तथोक्तेः शिष्यबोधहेतुत्वान्नाचार्यत्वविरोध इत्युत्तर-माह—सत्यमित्यादिना । आरोपितं पाण्डित्यादि ययोस्ताविति विग्रहः । तत इति । उत्साहविघातादित्यर्थः । कथं तर्हि आत्मप्रतीतिरिति, तदाह—गृह्णीतामिति । प्रतिबिम्बमात्मत्वेनेति शेषः । शिष्यबोधार्थं प्रतिबिम्बस्वानुज्ञाना-दाचार्यत्वाविघातेऽपि अनृतवादित्वमाचार्यस्य प्रजापतेस्स्यात् । न च तेन द्रष्टुरेवोक्तत्वान्नानृतवादित्वमिति वाच्यम्। एतच्छब्दस्य प्रकृतप्रतिबिम्बार्थकत्वौचित्येन ततस्तस्यैव प्रतीतेः तस्यैवादर्शादिसर्वान्तस्थत्वोपपत्तेश्च साक्षिणस्ततोऽ-प्रतीतेः, तदर्थत्वासिद्धेरिति शङ्कते—नन्विति । परिहरति—न चेति । एतदेव प्रश्नपूर्वकमुपपादयितुमाह—कथमिति । प्रश्नवाक्यद्वारा सन्निहितात्प्रतिबिम्बात्मनः सकाशान्मनसि नित्यापरोक्षतया सन्निहिततरस्साक्षीति, स एव एतच्छब्देन परामृश्यत इत्याह—आत्मनोक्त इति । प्रजापतिनोक्त इत्यर्थः । अक्षिपुरुष इवि—द्रष्टेत्यर्थः । तस्य आदर्शादिसर्वान्तस्थत्वमुपपादयति—सर्वेषां चेति । तत्र श्रुतिमाह—एष त इति । एवंभूतस्यैवात्मनः प्रजापति-नोक्तत्वान्नानृतवादित्वमित्याह—तमेवेति एष एवेति । एतच्छब्देनेत्यर्थः । ननु यद्येवमर्थत्वं वाक्यस्य विवक्षितं तर्हि न विपरीतग्रहणं प्रजापतिनाऽनुज्ञातमिति पूर्वोक्तौ चोद्यपरिहारौ अयुक्ताविति चेन्न, विपरीतग्रहणानुज्ञाभ्रमजनक-वाक्योक्तिरयुक्ता, किन्तु युवां विपरीतग्राहिणौ मया तु साक्ष्यात्मोक्त इति उत्तरं वक्तव्यमिति परिचोदनार्थः । तदङ्गीकारेण परिहारः क्रियत इति द्रष्टव्यम् । यथा अस्माभिः विपरीतग्रहणभ्रमजनकवाक्योक्तिमङ्गीकृत्य तद्बुद्ध्यनुसारेण तन्निवर्तयिष्यामीति प्रजापतेरभिप्राय इत्युक्तं तदनुसार्येव उत्तरवाक्यमित्याह—तथा चेति । आहेत्यनन्तरं उदशराव इतीति प्रतीकं द्रष्टव्यम् । हिशब्देन अस्यार्थस्य उदशरावादिवाक्ये स्पष्टत्वमुक्तम् ॥ ४ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायां सप्तमाध्यायस्य सप्तमः खण्डः

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति ॥१॥**

उदशराव उदकपूर्णे शरावादावात्मानमवेक्ष्यानन्तरं यत्तत्राऽऽत्मानं पश्यन्तौ न विजानीथस्तन्मे मम प्रब्रूतमाचक्षीयाथामित्युक्तौ तौ ह तथैवोदशरावेऽवेक्षांचक्राते अवेक्षणं चक्रतुः। तथा कृतवन्तौ तौ ह प्रजापतिरुवाच किं पश्यथ इति। ननु तन्मे प्रब्रूतमित्युक्ताभ्यामुदशरावेऽवेक्षणं कृत्वा प्रजापतये न निवेदितमिदमावाभ्यां न विदितमित्यनिवेदिते चाज्ञानहेतौ ह प्रजापतिरुवाच किं पश्यथ इति तत्र कोऽभिप्राय इति। उच्यते—नैव तयोरिदमावयोरविदितमित्याशङ्काऽभूच्छायात्मन्यात्मप्रत्ययो निश्चित एवाऽऽसीत्। येन वक्ष्यति तौ ह शान्तहृदयौ प्रवव्रजतुरिति। न ह्यनिश्चितेऽभिप्रेतार्थे प्रशान्तहृदयत्वमुपपद्यते। तेन नोचतुरिदमावाभ्यामविदितमिति। विपरीतग्राहिणौ च शिष्यावनुपेक्षणीयाविति स्वयमेव पप्रच्छ किं पश्यथ इति, विपरीतनिश्चयापनयाय च वक्ष्यति साध्वलङ्कृतावित्येवमादि। तौ होचतुः—सर्वमेवेदमावां भगव आत्मानं पश्याव आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति, यथैवाऽऽवां हे भगवो लोमनखादिमन्तौ स्व एवमेवेदं लोमनखादिसहितमावयोः प्रतिरूपमुदशरावे पश्याव इति ॥ १ ॥

### आनन्दगिरिटीका

आत्मानमुदशरावेऽवेक्ष्य तं तत्राऽऽत्मानं पश्यन्तौ तावनन्तरं यदात्मनो न विजानीथो युवां तन्मे प्रब्रूतमिति संबन्धः। प्रजापतिवचनमुपक्रमानुकूलं न भवतीति शङ्कते—नन्विति। उपक्रममतिक्रम्य ब्रुवाणस्य प्रजापतेरभिप्रायमाह—उच्यत इति। तत्र प्रथममिन्द्रविरोचनाभ्यामावाभ्यामिदमविदितमिति प्रजापतिं प्रत्यवचने कारणमाह—नैवेति। छायात्मनि च्छायायां तद्वति शरीरे चेन्द्रविरोचनयोर्यथाक्रममात्मधीरियं निश्चिता प्रवृत्तेत्यर्थः। तयोस्तत्राऽऽत्मप्रत्ययस्य निश्चितत्वे गमकमाह—येनेति। प्रव्रजनेऽपि शान्तहृदययोस्तयोः सत्यप्रत्ययस्य कथं निश्चितत्वमित्याशङ्क्याऽऽह—न हीति। तेन विपरीतग्राहित्वेनेति यावत्। उक्तमगृहीत्वा विपरीतं गृहीतवन्तौ तर्हि प्रजापतिनोपेक्षणीयौ कुबुद्धित्वादित्याशङ्क्य प्राजापत्यमभिप्रायमाह—विपरीतग्राहिणौ चेति। कथमिदं प्रजापतेरभिमतमित्यधिगतमत आह—विपरीतेति। प्राजापत्ये प्रश्ने देवासुरराजयोर्विपरीतग्रहणमनुवदति—तौ हेति ॥ १ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

छायात्मन्यपहतपाप्मत्वादीनां आत्मलक्षणत्वेन उक्तानामभावात्तत्र आत्मबुद्धिनिवृत्तिर्भविष्यतीत्यभिप्रायेणाह—उदशराव इति। अथ यत्तत्रेति। छायात्मानं पश्यन्तौ तत्र छायात्मनि आत्मनस्सम्बन्धि आत्मोपलक्षणत्वेनोक्तं यदपहतपाप्मत्वादि न विजानीथः तन्मे ब्रूतमित्यन्वयः। यदात्मनो न विजानीथस्तन्मे ब्रूतमिति मया नियुक्तयोः तयोस्सम्यक् पर्यालोचने कृते तत्रापहतपाप्मत्वाद्यज्ञानादात्मत्वभ्रमनिवृत्तिर्भविष्यतीत्यभिप्रायेण प्रजापतिना नियुक्तयोस्तयोरिदमावाभ्यामविदितमिति प्रत्युक्तयवचनस्यावसरादानमयुक्तमिति शङ्कते—नन्विति। प्रत्युक्तयनन्तरमेव प्रजापतिवचनस्याप्यवकाशो न ततः पूर्वं प्रजापतिवचनं युक्तं इत्याह—अनिवेदिते चाज्ञान इति। प्रजापतेरनवसरवाक्यात्वानुपपत्तेः तस्याभिप्रायो वक्तव्य इत्याह—तत्रेति। चित्तदोषात्तयोरपहतपाप्मत्वादिलक्षणसदसद्भावो नाभूदापेक्षिकं वा तल्लक्षणं योजितवन्तौ तौ। अविदितं वक्तव्यमिति प्रजापतिनोक्तत्वात्तदभावादप्रत्युक्तिर्युक्तेत्याह—उच्यत इति। एवमपि ज्ञेयात्मनोऽज्ञानात्प्रष्टव्य इत्यत आह—छायात्मनीति। तन्निश्चयसत्त्वे वाक्यशेषं हेतुमाह—येनेति। तदिति। शान्तहृदयत्वमित्यर्थः। तेनेति। इदमुपलक्षणम्—आत्मानं न पप्रच्छतुरित्यपि द्रष्टव्यम्। तयोरविदितानुक्तेस्तात्पर्यमुक्त्वा प्रजापतिप्रश्नस्य तात्पर्यमाह—विपरीतेति। शिष्ययोरनुपेक्षणीयत्वे तदीयविपरीतग्रहोऽपनेयः न प्रश्नः कार्यं इत्यत आह—विपरीतनिश्चयेति। अत्र प्रश्नोत्तरयोः विपरीतग्रहनिवृत्तिर्न दृश्यत इत्यत आह—वक्ष्यतीति। सत्यमत्र न तन्निवृत्तिप्रतीतिः। किन्तु अस्मिन्वाक्ये ताभ्यां गृहीतात्मनः इयत्तया अवधारणे कृते ततोऽधिकस्य साध्वलङ्कारनखरोमादेरागमापायाभ्यां वक्ष्यमाणरीत्या भ्रमनिवृत्तिर्भविष्यति। अन्यथा इदमधिकमागतं, इदमपेतमिति ज्ञानाभावान्न तन्निवृत्तिर्भविष्यतीति आत्मन इयत्तावधारणार्थं किं पश्यथ इत्यादि प्रश्नोत्तरे इति भावः। यथैवेति। यद्यपीदानीं सर्वमेवेदं आवां आत्मानं पश्याव इत्येव पाठो दृश्यते,

**तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥२॥**

तौ ह पुनः प्रजापतिरुवाच च्छायात्मनिश्चयापनयाय, साध्वलंकृतौ यथा स्वगृहे सुवसनौ महार्हवस्त्रपरिधानौ परिष्कृतौ छिन्नलोमनखौ च भूत्वोदशरावे पुनरीक्षेथामिति। इह च नाऽऽदिदेश प्रदज्ञातं तन्मे प्रब्रूतमिति। कथं पुनरनेन साध्वलंकारादि कृत्वोदशरावेऽवेक्षणेन तयोश्छायात्मग्रहोऽपनीतः स्यात्। साध्वलंकारसुवसनादीनामागन्तुकानां छायाकरत्वमुदशरावे यथा शरीरसंबद्धानामेवं शरीरस्यापि च्छायाकरत्वं पूर्वं बभूवेति गम्यते। शरीरैकदेशानां च लोमनखादीनां नित्यत्वेनाभिप्रेतानामखण्डितानां छायाकरत्वं पूर्वमासीत्। छिन्नेषु च तेषु नैव लोमनखादिच्छाया दृश्यतेऽतो लोमनखादिवच्छरीरस्याप्यागमापायित्वं सिद्धमित्युदशरावादौ दृश्यमानस्य तन्निमित्तस्य च

नरेन्द्रपुरीयं टिप्पणम्

स्वः भावः शरीरस्य छायाकारत्वं बभूवातः छायाया आगन्तुकत्वादनात्मत्वमुक्तं व्यभिचारित्वाच्च छायायास्तत्कारणस्य च शरीरस्यानात्मत्वं विवक्षितमित्याह—शरीरैकदेशानां चेति। नित्यत्वेनेति। संघातान्तर्गततयात्मत्वेन गृहीतानामित्यर्थः। न केवलं छायात्मनः शरीरस्य चानात्मत्वमुक्तमेतेन न्यायेनाहङ्कारादिकमपि

आनन्दगिरिटीका

तदपनयनप्रकारं सूचयति—तौ ह पुनरिति। छायायां तद्धेतौ च देहे तयोरात्मनिश्चयो यस्तस्य निरासायेति यावत्। इह चेति पर्यायोक्तिः। नाऽऽदिदेश तत्प्रयोजनाभावादित्यर्थः। उक्तोदाहरणेन च्छायायां देहे चेन्द्रविरोचनयोरात्मप्रत्ययो नापनीतो भवतीति शङ्कते—कथमिति। छायायास्तत्कारणस्य चाऽऽगन्तुकत्वादनात्मत्वमत्र विवक्षितमित्युत्तरमाह—साध्वलंकारेति। पूर्वमुदकादिसंबन्धावस्थायामिति यावत्। व्यभिचारित्वाच्च च्छायातत्कारणयोरनात्मत्वमित्याह—शरीरैकदेशानामिति। उपपत्तिभ्यां सिद्धमर्थं निगमयति—इत्युदशरावादाविति। न केवलं छायातत्कारणयोरेवानात्मत्वं किं तूक्तन्यायेनाहंकारादीनां तद्धर्माणां चाऽऽत्मीयत्वं प्रत्युक्तमिति प्रसङ्गा-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तथापि यथैवेदमावां भगव आत्मानं पश्याव इति पाठं दृष्ट्वा आचार्यैर्व्याख्यातमिति द्रष्टव्यम्। यथा आत्मानं शरीरं लोमनखादिमन्तं पश्यावः तथैवेदं प्रतिरूपं सर्वं लोमनखादिसहितं पश्याव इति पाठद्वयेऽपि अर्थः एकरीत्या योज्यः॥ १॥

पूर्वं छायात्मनि निश्चित एव आत्मप्रत्ययो जातः इदमविदितमिति शङ्का नाभूत् तयोरित्युक्त्वा तत्र प्रसन्नहृदयत्वं हेतुमुक्तवान्। इदानीं सिंहावलोकनन्यायेन तत्रैव हेत्वन्तरमाह—इह चेति। यदि ताभ्यामविदितं किंचित्स्यादिति प्रजापतेस्संभावना स्यात्तदा तथैवादेक्ष्यत् अतस्तथानादेशात्तयोरिदमविदितमिति शङ्का नाभूत्, छायात्मनि निश्चित एव आत्मप्रत्ययो जात इति निश्चितं प्रजापतिनेत्यर्थः। साध्वलङ्काराद्युपन्यासस्य छायात्मभ्रमनिवर्तकत्वप्रकारं पृच्छति—कथमिति। शरीरान्वयदशायामेव छायात्मान्वयदर्शनेन तत एव तस्य आगन्तुकत्वनिश्चयसंभवात् साध्वलङ्काराद्युपन्यासस्य न किंचित्प्रयोजनमस्तीत्यपि प्रश्नाभिप्रायः। प्रष्टुरुदशरावाद्याभिमुख्यदशायां नियमेन छायात्मनो दर्शनात्तदभावदशायां प्रष्टुराभिमुख्याभावादेव अदर्शनोपपत्तेस्तावन्मात्रेण तत्र तस्यासत्त्वानिश्चयात् शरीरान्वयमात्रेण आगन्तुकत्वं निश्चेतुं न शक्यते। साध्वलङ्कारादीनां तु प्रष्टुराभिमुख्ये सत्यपि कादाचित्कत्वात्तदागमेन तत्प्रतिबिम्बागम एतदभावे तदभाव इति तस्यागन्तुकत्वं निश्चित्य तद्दृष्टान्तेन शरीरप्रतिबिम्बस्यापि आगन्तुकत्वनिश्चयेन तस्मिन्नात्मत्वभ्रमापनयस्संभवतीति उत्तरमाह—साध्वलंकारेति। यथा शरीरसम्बन्धानां साध्वलङ्कारसुवसनादीनामित्यन्वयः। छायाकरत्वमिति। ततस्तज्जन्यत्वाच्छायायाः आगन्तुकत्वमित्यर्थः। छायाकारत्वमिति पाठे छायाकारत्वं छायारूपत्वं प्रतिबिम्बभाव इत्यर्थः।

एवं छायात्मन आगन्तुकत्वमुक्त्वा विनाशित्वमप्याह—शरीरैकेति। लोमादीनामिति। प्रतिबिम्बगतानां पूर्वं नित्यत्वेनाभिप्रेतानामित्यर्थः। शरीरस्यापि प्रतिबिम्बरूपस्येत्यर्थः। विवक्षितमनुमानं प्रयोगाधिरूढं करोति—

**तौ होचतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥३॥**

देहस्यानात्मत्वं सिद्धम् उदशरावादौ छायाकरत्वाद्देहसंबद्धालंकारादिवत्। न केवलमेतावदेतेन यावत्किंचिदात्मीयत्वाभिमतं सुखदुःखरागद्वेषमोहादि च कादाचित्कत्वान्नखलोमादिवदनात्मेति प्रत्येतव्यम्। एवमशेषमिथ्याग्रहापनयनिमित्ते साध्वलंकारादिदृष्टान्ते प्रजापतिनोक्ते श्रुत्वा तथा कृतवतोरपि च्छायात्मविपरीतग्रहो नापजगाम यस्मात्तस्मात्स्वदोषेणैव केनचित्प्रतिबद्धविवेकविज्ञानाविन्द्रविरोचनावभूतामिति गम्यते। तौ पूर्ववदेव दृढनिश्चयौ पप्रच्छ किं पश्यथ इति॥ २॥

तौ तथैव प्रतिपन्नौ यथैवेदमिति पूर्ववद्यथा साध्वलंकारादिविशिष्टावावां स्व एवमेवेमौ छायात्मानाविति

### नरेन्द्रपुरीयं टिप्पणम्

यदात्मत्वेन कल्पितं सुखादिकं चात्मधर्मत्वेन कल्पितं तदनात्मत्वेनानात्मधर्मत्वेन चावगन्तव्यमित्यर्थः। यद्युक्तो न्यायो मिथ्याज्ञानापनये समर्थः किमिति तर्हीन्द्रविरोचनयोर्मिथ्याज्ञानं नापगतं तत्राह—एवमशेषेति॥ २॥

यस्यात्मनः परोक्षेण लक्षणं श्रुत्वा तद्विशेषं जिज्ञासमानयोस्साक्षादुपदिदेश तं स्वात्मनाभिप्रेत-

### आनन्दगिरिटीका

दत्तिदिशति—न केवलमिति। आत्मत्वाभिमतमहंकारादीति शेषः। मोहादादात्मीयत्वाभिमतमित्यध्याहार्यम्। एतेनेति सूचितमेव हेतुं दर्शयति—कादाचित्कत्वादिति। अनात्मेत्यनात्मत्वमनात्मीयत्वोपलक्षणार्थम्। तर्हि तयोर्यथोक्तरीत्या विपरीतग्रहणस्यापगतत्वात्किमुत्तरेण प्रजापतिवाक्यनेत्याशङ्क्याऽऽह—एवमिति॥ २॥

तथैवेत्यस्य व्याख्यानं पूर्ववदिति। यथैवेदमिति प्रतीकग्रहणं तद्व्याचष्टे—यथेति। आवां स्व इतीदमुदाहरणं यथैवेति संबन्धः। अक्षिवाक्यादुदशराववाक्यात्साध्वलंकारवाक्याच्च च्छायातद्वत्वोरन्यतरस्यैवाऽऽत्मत्वम-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इतीति। इतीत्यस्य उपरितनसिद्धमित्यस्य च अलङ्कारादिवदिति सिद्धमित्यनन्तरेण सम्बन्धः देहस्य वेति। यद्यपि छायात्मन एव आत्मत्वं भ्रान्तिगृहीतमिति तस्यैवानात्मत्वं साध्यं तथापि आदर्शादिप्रतिबिम्बितयोः नीलानीलवस्त्रयोर्नीलं महार्हमित्युक्ते न प्रतिबिम्बस्य महार्हत्वमुच्यते किन्तु तद्बिम्बस्य बहिष्ठस्य वस्त्रस्य, एवमिहापि य एषोऽक्षिणीत्युक्तं तद्बिम्बस्य देहस्य आत्मत्वमुक्तमित्यपि कस्यचिद्भ्रमः स्यात्। अत एव विरोचनस्य देह एव आत्मत्वभ्रमं वक्ष्यति आत्मैवेह महय्यः इत्यारभ्य प्रेतस्य शरीरमित्यन्तेन। एतच्च सर्वमाचार्यैरेव उपपादयिष्यते। ततस्तस्याप्यनात्मत्वं साध्यमिति भावः। छायाकरत्वादिति। छायात्वात्तत्करत्वाच्चेति यथाक्रमं प्रतिज्ञाद्वये हेतुद्वयं योज्यम्। अन्यथा छायाया अनात्मत्वसाधने हेत्वसिद्धिस्स्यात्। छायाकारत्वादितिपाठे देहानात्मत्वसाधने छायाकारत्वादिति हेत्वन्तरं द्रष्टव्यम्। हेतौ उदशरावादिविशेषणस्वरूपकथनार्थं देहसम्बन्धालङ्कारादिरपि प्रतिबिम्बभूतो बिम्बभूतश्च यथाक्रमं प्रतिज्ञाद्वयेऽपि दृष्टान्तो योज्यः। एवं छायाकारत्वहेतुनेव देहतत्प्रतिबिम्बयोरागमापायित्वहेतुनापि अनात्मत्वं सिद्धवत्कृस्य तेनैव हेतुना सुखादेरनात्मधर्मत्वं साध्यमित्याह—न केवलमिति। अनेन कादाचित्कत्वेन हेतुना एतच्छरीरतत्प्रतिबिम्बे एव केवलमनात्मेति न प्रत्येतव्यं किन्तु यावत्किञ्चित्सुखादिकमस्ति तत्सर्वमस्य नात्मेति प्रत्येतव्यमित्यन्वयः। अनेनेत्युक्तं विवृणोति—कादाचित्कत्वादिति।

यद्यपि आत्मीयत्वाभिमतस्य आत्मधर्मस्य सुखादेरनात्मत्वसाधनमिष्टमेव धर्मस्य तथापि धर्मधर्मिणोरभेदाङ्गीकारात्, तस्यानात्वसाधने तस्यानात्मधर्मत्वमेव सिध्यतीति भावः। अनात्मेति। अनात्मधर्म इत्यर्थः। ननु साध्वलङ्काराद्युपन्यासेन विवक्षितलिङ्गस्य निर्दोषत्वात्तेन तयोः कुतो न भ्रमनिवृत्तिरित्याशङ्क्य चित्तदोषेण प्रतिबद्धविवेकत्वात्तयोर्विवक्षितं लिङ्गं नास्फुरदित्याह—एवमिति। साध्वलङ्कारादिदृष्टान्तेन स्वेन विवक्षितमागमापायित्वं ताभ्यां ज्ञातं न वेति परीक्षणायाह—ताविति॥ २॥

छायात्मानाविति। साध्वलङ्कारादिविशिष्टावित्यनुषङ्गः द्विवचनं च तयोः प्रतिबिम्बद्वयमिति तदपेक्षया।

सुतरां विपरीतनिश्चयौ बभूवतुः। यस्याऽऽत्मनो लक्षणं य आत्माऽपहतपाप्मेत्युक्त्वा पुनस्तद्विशेषमन्विष्यमाणयोर्य एषोऽक्षिणि पुरुषो दृश्यत इति साक्षादात्मनि निर्दिष्टे तद्विपरीतग्रहापनयायोदशरावसाध्वलंकारदृष्टान्तेऽप्यभिहित आत्मस्वरूपबोधाद्विपरीतग्रहो नापगतः। अतः स्वदोषेण केनचित्प्रतिबद्धविवेकविज्ञानसामर्थ्याविति मत्वा यथाभिप्रेतमेवाऽऽत्मानं मनसि निधायैष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति प्रजापतिः पूर्ववत्। न तु तदभिप्रेतमात्मानम्। य आत्मेत्याद्यात्मलक्षणश्रवणेनाक्षिपुरुषश्रुत्या चोदशरावाद्युपपत्त्या च संस्कृतौ तावत्। मद्वचनं सर्वं पुनः पुनः स्मरतोः प्रतिबन्धक्षयाच्च स्वयमेवाऽऽत्मविषये विवेको भविष्यतीति मन्वानः पुनर्ब्रह्मचर्यादेशे च तयोश्चित्तदुःखोत्पत्तिं परिजिहीर्षन्कृतार्थबुद्धितया गच्छन्तावप्युपेक्षितवान्प्रजापतिः। तौ हेन्द्रविरोचनौ शान्तहृदयौ तुष्टहृदयौ कृतार्थबुद्धी इत्यर्थः। न तु शम एव, शमश्चेत्तयोर्जातो विपरीतग्रहो विगतोऽभविष्यत्प्रवव्रजतुर्गतवन्तौ॥३॥

### नरेन्द्रपुरीयं टिप्पणम्

मात्मानमेष आत्मेति होवाचेति सम्बन्धः यथावदुपदेशाभावान्न्यायापरिज्ञानाद्वा अनयोरात्मबोधात् भ्रमनिवृत्तिरूपं यत्प्रसिद्धं कार्यं नाभूदत उपदेशान्तरं कार्यमिति न मन्तव्यमित्याह—साक्षादात्मति निर्दिष्ट इति। शिष्याभिप्रेतमात्मानं न परामृक्षीत् तर्ह्युपेक्षितवान् गच्छन्तौ शिष्यौ,तत्र कोऽभिप्राय इत्याकाङ्क्षायामाह—य आत्मेत्यादिति। न तु शम एवेति। साक्षात्क्लेशोपशमो नाभूदित्यर्थः॥ ३॥

### आनन्दगिरिटीका

भ्यासादिति भ्रमातिशयः सुतरामित्युक्तः। प्रजापतिवाक्यमुत्थापयति—यस्येत्यादिना। वाक्यव्याख्यानमतिदिशति—पूर्ववदिति। एषशब्देन तयोरभिप्रेतमेवाऽऽत्मानं छायाख्यं देहाख्यं च परामृश्य प्रजापतिरनुमोदितवानित्याशङ्क्याऽऽह—न त्विति। तौ ह शान्तहृदयावित्यादिवाक्यस्य तात्पर्यमाह—य आत्मेत्यादीति। संस्कृतौ तावद्भवतामिति शेषः। संस्कृतयोरपि तयोरात्मविषये कथं विवेको भविष्यतीत्याशङ्क्याऽऽह—मद्वचनमिति। उपेक्षायां कारणान्तरमाह—पुनरिति। किमिति शान्तहृदयत्वं तुष्टहृदयत्वेन व्याख्यायते हृदयगतः शम एव किं न विवक्ष्यते तत्राऽऽह—न त्विति॥ ३॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

साध्वलङ्कारादेः आगमापायिनोऽप्यात्मधर्मत्वभ्रमात्केवलशरीरच्छायायामात्मत्वभ्रमापेक्षया अस्यातिशयात्सुतरामित्युक्तम्। एष आमेति होवाचेत्यादिना तदीयभ्रमानुज्ञानस्याभिप्रायमाह—यत इति। यतः यथावदसाधारणतया लक्षणमुक्त्वा तल्लक्ष्यस्य स्वरूपविशेषे य एषोऽक्षिणीत्यादिनोक्ते तस्मिन्नात्मनि छायात्मतया विपरीतग्रहे तदपनयाय दृष्टान्ते अभिहितेऽपि विपरीतग्रहो नापगतः, अतः दोषेण प्रतिबद्धविज्ञानसामर्थ्यादिति मत्वा तद्बुद्धिमनुसरन्नाहेत्यन्वयः। प्रजापतेर्मृषावादित्वं परिहरति—यथाभिप्रेतमेवेति। प्रजापतेरभिप्रतं जाग्रत्साक्षिणमित्यर्थः, हिर्हेतो। यस्मात्तदभिमतमात्मानमाह तस्मान्नानृतवादित्वमिति शेषः। ननु एतच्छब्दस्य पूर्ववाक्ये सन्निहितछायात्मपरामर्शित्वस्वारस्यात् शिष्याभिमतछायात्मैव अत्र ग्रहणमर्हतीत्याशङ्क्याह—पूर्ववदिति। वाक्यसन्निधानापेक्षया बुद्धिसाक्षित्वेन सन्निधानमन्तरङ्गमित्युक्तमित्यर्थः। न त्विति। प्रजापतेर्मृषावादित्वप्रसङ्गाच्छायात्मानं एतच्छब्देनाहेत्यर्थः। यस्यात्मनो लक्षणमिति पाठः लेखकदोषादागत इव भाति। यद्वा यस्यात्मनो लक्षणमुक्तं तदात्मस्वरूपाबोधादित्यन्वयेन योज्यः। ननु विपरीतग्रहेणैव गृहं गच्छतोः शिष्ययोः उपेक्षा प्रजापतेराचार्यस्य न युक्ता प्रतारकत्वप्रसङ्गात्। न च पूर्ववदुपायान्तरेण तदपनिनीषा सम्भवति, गृहं गतयोः तयोराचार्यसान्निध्याभावेन तदयोगादित्याशङ्क्य प्रजापतेरभिप्रायमाह—य आत्मेत्यादिना। न केवलं लक्षणमेवोक्तं, किन्तु लक्ष्यं चोक्तमित्याह—अक्षीति। छायात्मनो लक्ष्यत्वभ्रमोऽप्यपनीत इत्याह—उदशरावेति। उपपत्त्येति। ज्ञानेनेत्यर्थः, श्रुत्येत्यनेनापि तज्जन्यज्ञानं द्रष्टव्यम्। मद्वचनमिति। एतदमृतमित्यादि। अनुपलभ्येत्यादिवक्ष्यमाणं वा, संस्कृतयोरिति पाठः। संस्कृताविति पाठे तु पृथग्वाक्यं, संस्कृतावेतौ यतः अतो मद्वचनं सर्वं स्मरतोरित्यन्वयः। इदानीमनुत्पन्नो विवेकः कथं कालान्तरे भविष्यतीत्याशङ्क्य "पापः कालेन पच्यते" इति स्मृतेः कालेन प्रतिबन्धक्षयाद्भविष्यतीत्याह—प्रतिबन्धेति। ननु तर्हि ब्रह्मचर्यमादिश्य तदाचरणेन सर्वशुद्धौ सत्यां स्वयमेव भ्रममपनयत्विति, तत्राह—ब्रह्मचर्येति। ईप्सितात्मज्ञानलाभभ्रान्त्या तुष्टहृदयौ न त्वलंबुद्ध्या तुष्टिः। तस्याः शमादिना भावेन तस्य च चित्तदोषाभावादिना भावेन प्रजापतिवाक्यादेव सम्यक्ज्ञानोत्पत्तिः स्यादित्याह—न तु शम एवेति॥ ३॥

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्याऽऽत्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽऽत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति ॥ ४ ॥**

एवं तयोर्गतयोरिन्द्रविरोचनयो राज्ञोर्भोगासक्तयोर्यथोक्तविस्मरणं स्यादित्याशङ्क्याप्रत्यक्षं प्रत्यक्षवचनेन च चित्तदुःखं परिजिहीर्षुस्तौ दूरं गच्छन्तावन्वीक्ष्य य आत्माऽपहतपाप्मेत्यादिवचनवदेतदप्यनयोः श्रवणगोचरत्वमेष्यतीति मत्वोवाच प्रजापतिः । अनुपलभ्य यथोक्तलक्षणमात्मानमननुविद्य स्वात्मप्रत्यक्षं चाकृत्वा विपरीतनिश्चयौ च भूत्वेन्द्रविरोचनावेतौ व्रजतो गच्छेयाताम् । अतो यतरे देवा वाऽसुरा वा किं विशेषितेनैतदुपनिषद आभ्यां या गृहीताऽऽत्मविद्या सेयमुपनिषद्येषां देवानामसुराणां वा त एतदुपनिषद एवंविज्ञाना एतन्निश्चया भविष्यन्तीत्यर्थः । ते किं, पराभविष्यन्ति श्रेयोमार्गात्पराभूता बहिर्भूता विनष्टा भविष्यन्तीत्यर्थः । स्वगृहं गच्छतोः सुरासुरराजयोर्योऽसुरराजः स ह शान्तहृदय एव सन्विरोचनोऽसुराञ्जगाम । गत्वा च तेभ्योऽसुरेभ्यः शरीरात्मबुद्धिर्योपनिषत्तामेतामुपनिषदं प्रोवाचोक्तवान् । देहमात्रमेवाऽऽत्मा पित्रोक्त इति । तस्मादात्मैव देह इह लोक महय्यः पूजनीयस्तथा परिचर्यः परिचरणीयस्तथाऽऽत्मानमेवेह लोके देहं महयन्परिचरंश्चोभौ लोकाववाप्नोतीमं चामुं च । इहलोकपरलोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः ॥ ४ ॥

नरेन्द्रपुरीयं टिप्पणम्

स सर्वांश्च लोकानाप्नोतीत्यादि प्रजापतिवचनं स्वाभिप्रायानुसारेण योजितवानित्याह—इह लोकपरलोकयोरेवेति । देहात्मवादिनां परलोकशब्देन मरणोत्तरकालं कीर्त्यनुवृत्तिर्विवक्षिता ॥ ४-५ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य अष्टमः खण्डः

आनन्दगिरिटीका

यदि प्रजापतिस्तावुपेक्षितवान्किमिति तर्हि तौ हान्वीक्ष्येत्यादिवाक्यमित्याशङ्क्याऽऽह—एवं तयोरिति । प्रजापतिरुवाचेति संबन्धः । तर्हि किमिति तावाहूय नोक्तवानित्याशङ्क्याऽऽह—प्रत्यक्षवचनेनेति । कर्तृत्वेन संबन्धार्थमुक्तमेव पुनरनुवदति—प्रजापतिरिति । किमसावूचिवानित्यपेक्षायामाह—अनुपलभ्येति । यथोक्तं प्रजापतिवाक्यं श्रुत्वाऽपि गच्छतोरिन्द्रविरोचनयोर्विरोचनगतमवान्तरविशेषमाह—स्वगृहमिति । पित्रा तथोक्तत्वेऽपि किमस्माभिस्तत्र कर्तव्यमित्याशङ्क्याऽऽह—तस्मादिति । तथा पूजनीयत्ववदिति यावत् । तथेत्युक्तप्रकारोक्तिः । तथाऽपि प्रार्थिता सर्वलोककामावाप्तिरसिद्धेत्याशङ्क्याऽऽह—इह लोकेति ॥ ४ ॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

"इत्याशङ्क्य अप्रत्यक्षं प्रत्यक्षवचनेने"ति पाठे अप्रत्यक्षं तयोः साक्षाच्छ्रवणागोचरं यथा तथाऽनुपलभ्यात्मानमित्यादि प्रजापतिरुवाचेति व्यवहितेनान्वयः । यत्र प्रजापतिरित्यस्य द्विः पाठः तत्र प्रथमस्य परिजिहीर्षन्नित्यनेनान्वयः, द्वितीयस्य उवाचेत्यनेनेति न पौरुक्त्यम् । अप्रत्यक्षमुक्तो हेतुमाह—प्रत्यक्षेति । प्रत्यक्षवचनेनोक्ते तयोः चित्तदोषः स्यात्, तं परिहरन्नित्यर्थः । अप्रत्यक्षाभिधाने कथं तयोस्तच्छ्रवणज्ञानमित्यत आह—य आत्मेति । श्रवणेति, परंपरयेत्यर्थः । न केवलं अज्ञानं, किन्तु विपरीतज्ञानं च तयोरित्याह—विपरीतेति । यतर इति सामान्योक्तेः, अभिप्रायमाह—किं विशेषितेनेति । किमन्यतरनिर्धारणेनेत्यर्थः, आभ्यामित्यतः प्राक् एषेतिपदं द्रष्टव्यम् । ततश्च एषा आभ्यां गृहीता, उपनिषत् येषां ते एतदुपनिषद इत्यन्वयः । शरीरात्मबुद्धिरिति । यद्यपि प्रतिच्छाया पूर्वमात्मत्वेन ताभ्यां गृहीतेत्युक्तं तथापि, तयोर्मध्ये विरोचनस्य आसुरसंपदा प्रतिबन्धबाहुल्याद्भाष्ये वक्ष्यमाणनीलानीलदृष्टान्तरीत्या बिम्बभूतं शरीरं आत्मत्वेन विरोचनो गृहीतवानिति । पित्रेति । प्रजापतिनेत्यर्थः । तस्मादिति । देहस्यैवात्मत्वादित्यर्थः । ननु सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति प्रजापतिनोक्तत्वादिहानेन कथं लोकद्वयावाप्तिरेव फलत्वेनोच्यते तत्राह—इह लोकेति । आप्तिरपि सम्बन्धमात्रं न तु तदात्मतेत्यपि गृहीतमित्यपि द्रष्टव्यम् ॥ ४ ॥

तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणाँ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सँस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्याष्टमः खण्डः

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥

तस्मात्तत्संप्रदायोऽद्याप्यनुवर्तत इतीह लोकेऽददानं दानमकुर्वाणमविभागशीलमश्रद्दधानं सत्कार्येषु श्रद्धारहितं यथाशक्त्ययजमानमयजनस्वभावमाहुरासुरः खल्वयं यत एवंस्वभावो बतेति खिद्यमाना आहुः शिष्टाः। असुराणां हि यस्मादश्रद्दधानतादिलक्षणैषोपनिषत्। तयोपनिषदा संस्कृताः सन्तः प्रेतस्य शरीरं कुणपं भिक्षया गन्धमाल्यान्नादिलक्षणया वसनेन वस्त्रादिनाऽऽच्छादनादिप्रकारेणालंकारेण ध्वजपताकादिकरणेनेत्येवं संस्कुर्वन्त्येतेन कुणपसंस्कारेणामुं प्रेत्य प्रतिपत्तव्यं लोकं जेष्यन्तो मन्यन्ते ॥ ५ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्याष्टमः खण्डः

अथ ह किलेन्द्रोऽप्राप्यैव देवान्दैव्याऽक्रौर्यादिसंपदा युक्तत्वाद्गुरोर्वचनं पुनः पुनः स्मरन्नेव गच्छन्नेतद्वक्ष्यमाणं भयं स्वात्मग्रहणनिमित्तं ददर्श दृष्टवान्। उदशरावदृष्टान्तेन प्रजापतिना यदर्थो न्याय उक्तस्तदेकदेशो मघवतः

## आनन्दगिरिटीका

विरोचनसंप्रदायस्याविच्छिन्नत्वं दर्शयति—तस्मादिति। देहात्मवादस्याऽऽसुरत्वादिति यावत्। तत्संप्रदायस्तेषां विरोचनप्रभृतीनामसुराणां संप्रदायो देहात्मत्वोपदेशः। किमित्यात्मत्वादिरहितमासुरमाहुरित्यपेक्षायामाह—असुराणां हीति। प्रकृतोपनिषत्कार्यं कथयति—तयेति ॥ ५ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्याष्टमः खण्डः

एवं विरोचनगतं विशेषं दर्शयित्वा देवराजगामिनं विशेषमाह—अथेत्यादिना। द्वयोस्तुल्येऽपि प्राजापत्यवाक्यश्रवणे देवराजस्यैव कथं पथि तदनुसंधानं वृत्तमित्याशङ्क्याऽऽह—दैव्येति। स्मरणफलमाह—स्मरन्नेवेति। प्रजापतिवचनं स्मरतोऽपि कथमिन्द्रस्य च्छायात्मग्रहणे दोषदर्शनमित्याशङ्क्याऽऽह—उदशरावेति। यदर्थो देहादेरनात्मत्वज्ञापनायेति यावत्। कादाचित्कत्वव्यभिचारित्वादिन्यायः तदेकदेशो व्यभिचारिणोऽनात्मत्वम्।

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तस्मादित्यस्यार्थमाह—तत्संप्रदाय इति। इतिर्हेतौ, तस्मात्संप्रदायोऽद्याप्यनुवर्तत इति हेतोरित्यर्थः। अनेन वाक्येन देहात्मत्वपक्षे पारलोकिकं इति न कुर्वन्ति, अतः अन्यमपि तथाविधं पुरुषं आसुरं वदन्तीति वदता देहात्मवादस्य आसुरत्वं स्थिरीक्रियत इत्यर्थः। प्रेतशरीरालङ्कारादीनां तेषां शरीरात्मवादं स्थिरीकर्तुं प्रेतस्येत्याद्यपि वाक्यं तद्व्याचष्टे—तयेति। अमुमिति सर्वलोकमित्यर्थः। तस्यैव सर्वान्कामानिति द्विवचनेन फलत्वोक्तेः प्रतिपत्तव्यत्वमिति।

यद्यपि देहात्मवादे प्रतिपत्तव्योऽन्यो लोको नास्ति, देहव्यतिरिक्तप्रतिपत्तुरभावेन देहस्य च इहैव नाशेन तस्य प्रतिपत्तव्यलोकासंभवात्तथापि देहव्यतिरिक्तात्मज्ञान इव स्वपक्षे प्रतिपत्तव्यज्ञाने कौशलाभावाल्लोकप्रवादमात्रेणेवमुक्तम्। अत एव मन्यन्त इत्युक्तम्। यद्वा बाल्यादिषु देहस्य रूपभेदेन सत्त्वदर्शनान्मरणानन्तरमपि तस्यैव देहस्य सूक्ष्मरूपान्तरेण सत्त्वमभिप्रेत्य प्रतिपत्तव्यो लोक इति द्रष्टव्यम् ॥ ५ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्याष्टमः खण्डः

अथ हेति। विरोचनव्यापारादर्थान्तरप्रारम्भार्थोऽथशब्दः। प्रजापतिसकाशाद्गमनानन्तर्यार्थो वा। भयदर्शने हेतुमाह—दैव्येति। तामेव विशदयति—अक्रौर्येति। तदेकदेश इति। आगमापायिनस्सर्वस्यापि अनात्म-

नाहमत्र भोग्यं पश्यामीति स समित्पाणिः पुनरेयाय तँ ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥२॥

प्रत्यभाद्बुद्धौ। येन च्छायात्मग्रहणे दोषं ददर्श। कथम्। यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते छायात्माऽपि साध्वलंकृतो भवति सुवसने च सुवसनः परिष्कृते परिष्कृतो यथा नखलोमादिदेहावयवापगमे छायात्माऽपि परिष्कृतो भवति नखलोमादिरहितो भवति। एवमेवायं छायात्माऽप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धे चक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः। स्रामः किलैकनेत्रस्तस्यान्धत्वेन गतत्वात्। चक्षुर्नासिका वा यस्य सदा स्रवति स स्रामः। परिवृक्णश्छिन्नहस्तश्छिन्नपादो वा। स्रामे परिवृक्णे वा देहे छायात्माऽपि तथा भवति। तथाऽस्य देहस्य नाशमन्वेष नश्यति ॥ १ ॥

अतो नाहमत्रास्मिंश्छायात्मदर्शने देहात्मदर्शने वा भोग्यं फलं पश्यामीत्येवं दोषं देहच्छायात्मदर्शनेऽध्यवस्य स समित्पाणिर्ब्रह्मचर्यं वस्तुं पुनरेयाय। तं ह प्रजापतिरुवाच—मघवन्यच्छान्तहृदयः प्राव्राजीः प्रगतवानसि विरोचनेन सार्धं किमिच्छन्पुनरागम इति। विजानन्नपि पुनः पप्रच्छेन्द्राभिप्रायाभिव्यक्तये यद्वेत्थ तेन मोपसीदेति यद्वत्। तथा च स्वाभिप्रायं प्रकटमकरोद्यथैव खल्वयमित्यादि, एवमेवेति चान्वमोदत प्रजापतिः।

### आनन्दगिरिटीका

न्यायैकदेशदृष्टिफलमाचष्टे—येनेति। दोषदर्शनमेवाऽऽकाङ्क्षाद्वारा स्फोरयति—कथमित्यादिना। उदाहृते वाक्ये विवक्षितमर्थं कथयति—यथेति। परिष्कृतो भवतीत्येतद्व्याचष्टे—नखेति। एवमेव देहस्य नखाद्यपगमे छायात्मनोऽपि तदपगमवदित्यर्थः। शरीरेऽस्मिन्नन्धे सति च्छायात्माऽप्यन्धो भवतीति संबन्धः। किमिति देहस्याऽऽन्ध्ये छायात्मनस्तदिष्टमित्याशङ्क्याऽऽह—नखलोमादिभिरिति। तैः सह चक्षुरादीनां तुल्यत्वाद्देहावयवत्वस्य देहे नखाद्यभावे छायायामपि तदभावाभ्युपगमाद्देहे चक्षुराद्यभावेऽपि च्छायायां तदभावो युक्त इत्यर्थः। स्रामशब्दस्यापुनरुक्तमर्थं कथयति—स्रामः किलेति। पदार्थमुक्त्वा वाक्यार्थमाह—स्राम इति। पारतन्त्र्यादनात्मत्वं छायाया दर्शयित्वा तत्रैव हेत्वन्तरमाह—तथेति॥ १ ॥

विनाशित्वादियुक्तिदर्शनफलमुपसंहरति—अत इति। दोषं दृष्ट्वा यथोक्तरीत्या किं कृतवानित्यपेक्षायामाह—इत्येवमिति। सर्वज्ञो हि प्रजापतिरिन्द्राभिप्रायं जानन्नेव किमर्थं प्राकृतवत्पृच्छतीत्याशङ्क्याऽऽह—विजानन्नपीति। आचार्यस्य ज्ञानवतोऽपि शिष्यं प्रत्यभिप्रायविशेषेण ज्ञातुं प्रश्नोपपत्तौ दृष्टान्तमाह—यद्वेत्थेति। तथाच प्रजापतिप्रश्नानुरोधेनेति यावत्। इन्द्रविषयः स्वशब्दः।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

त्वार्थे न्याय उक्तः। तत्र देहच्छायात्मनोरेव अनात्मत्वं इन्द्रेण निश्चितं न वक्ष्यमाणस्वप्नात्मादेरिति एकदेशप्रतिभानमुक्तम्। छायात्मग्रहण इति। छायात्मग्रहण एवेत्यर्थः। अस्मिन् शरीरे इत्यस्यायं इत्युत्तरेणान्वयः। देहान्ध्यादिना छायात्मनोऽप्यान्ध्यादिनिश्चये देहान्ध्यादिकं छायात्मान्ध्यादिकृत् देहावयवत्वान्नखरोमादिवदित्यनुमानमाह—एवमेवेति। स्रामशब्दस्य एकनेत्रे रूढत्वात् कथं वर्णव्यत्ययेन यौगिकार्थव्याख्यानमित्याशङ्क्य रूढिं दर्शयन् रूढ्यस्वीकारे हेतुमाह—स्रामः किलेति। एकनेत्रत्वस्येत्येव क्वचित्पाठः स स्पष्टः ॥ १ ॥

फलमिति। नष्टस्य छायात्मनस्सर्वलोकाप्त्यादिफलासंभवादित्यर्थः। देहेति। देहस्य या छाया तदात्मदर्शने इति वा देहात्मदर्शने छायात्मदर्शने इति वा विग्रहः। अस्मिन्पक्षे देहग्रहणं दृष्टान्तार्थम्। शिष्याभिप्रायेणोपदेष्टुं तदभिप्रायज्ञानार्थं अन्यत्रापि प्रश्नो दृष्ट इत्याह—यद्वेत्थेति। तथा च, तथैव नारदवदेवेत्यर्थः। ननु तुल्ये इत्यादि शङ्कापरिहारयोः

ननु तुल्येऽक्षिपुरुषश्रवणे देहच्छायामिन्द्रोऽग्रहीदात्मेति देहमेव च विरोचनस्तत्किंनिमित्तम्। तत्र मन्यते। यथेन्द्रस्योदशरावादिप्रजापतिवचनं स्मरतो देवानप्राप्तस्यैवाऽऽचार्योक्तबुद्ध्या छायात्मग्रहणं तत्र दोषदर्शनं चाभूत्। न तथा विरोचनस्य किं तर्हि देह एवाऽऽत्मदर्शनं नापि तत्र दोषदर्शनं बभूव। तद्वदेव विद्याग्रहणसामर्थ्यप्रतिबन्धदोषाल्पत्वबहुत्वापेक्षमिन्द्रविरोचनयोश्छायात्मदेहयोर्ग्रहणम्। इन्द्रोऽल्पदोषत्वाद्दृश्यत इतिश्रुत्यर्थमेव श्रद्दधानतया जग्राहेतरश्छायानिमित्तं देहं हित्वा श्रुत्यर्थं लक्षणया जग्राह प्रजापतिनोक्तोऽयमिति दोषभूयस्त्वात्। यथा किल नीलानीलयोरादर्शे दृश्यमानयोर्वाससोर्यन्नीलं तन्महार्हमिति च्छायानिमित्तं वास एवोच्यते न च्छाया तद्वदिति विरोचनाभिप्रायः। स्वचित्तगुणदोषवशादेव हि शब्दार्थावधारणं तुल्येऽपि श्रवणे ख्यापितं दाम्यत दत्त दयध्वमिति दकारमात्रश्रवणाच्छ्रुत्यन्तरे। निमित्तान्यपि तदनुगुणान्येव सहकारीणि भवन्ति॥ २॥

नरेन्द्रपुरीयं टिप्पणम्

देवान्मनुष्यानसुरांश्च प्रति प्रजापतिना दकारोपदेशे साधारण्येन कृतेऽप्यर्थविशेषावधारणं स्वचित्तगुणदोषवशात् श्रुत्यन्तरे ख्यापितं तथेहापीत्यर्थः। निमित्तान्यपीति। युक्तिदर्शनान्यपि स्वचित्तगुणदोषानुसारेण संभवन्तीत्यर्थः॥ २-३॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य नवमः खण्डः

आनन्दगिरिटीका

शिष्ययोः श्रवणसाम्येऽपि प्रतिपत्तिवैषम्ये निमित्तं पृच्छति—नन्विति। आचार्यमतोपन्यासद्वारा परिहरति—तत्रेति। तत्र प्रतिपत्तिविशेषे दृष्टान्तेन निमित्तविशेषं दर्शयति—यथेति। आचार्योक्तबुद्ध्या तात्पर्येण प्रजापतिना छायात्मैवोक्त इति भ्रान्त्येत्यर्थः। विरोचनस्येन्द्रवच्छायात्मग्रहणमाचार्योक्तबुद्ध्या नाभूदित्याह—न तथेति। कथं तर्हि तस्याऽऽत्मदर्शनमित्याशङ्क्याऽऽह—देह एवेति। आचार्येणाऽऽत्मा देह एवोक्त इति बुद्ध्या तत्रैव विरोचनस्याऽऽत्मज्ञानमासीदित्यर्थः। इन्द्रस्य छायात्मग्रहणे देवानप्राप्तस्यैव मार्गमध्ये दोषदर्शनवद्विरोचनस्यासुरानप्राप्तस्याध्वनि देहात्मदर्शने दोषदर्शनं च न प्रवृत्तमित्याह—नापीति। दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—तद्वदेवेति। विद्याग्रहणौपयिकस्य सामर्थ्यस्य प्रतिबन्धभूतो यो रागादिदोषस्तदल्पत्वापेक्षमिन्द्रस्य च्छायायामात्मग्रहणमित्युक्तं व्यक्तीकरोति—इन्द्र इति। यथोक्तदोषभूयस्त्वापेक्षं गृह्णतो विरोचनस्याभिप्रायं दृष्टान्तेन दर्शयति—यथेत्यादिना। उक्तमर्थं बृहदारण्यकश्रुत्यवष्टम्भेन स्पष्टयति—स्वचित्तेति। देवान्मनुष्यानसुरांश्च प्रजापतिना दकारोपदेशे साधारण्येन कृते तेषां तदीयश्रवणे तुल्येऽपि तदर्थविशेषावधारणं स्वचित्तगुणदोषवशादेव बृहदारण्यके ख्यापितं तथेहापीत्यर्थः। तत्र वा कथं तुल्येऽपि श्रवणेऽर्थविशेषबुद्धिस्तत्राऽऽह—दाम्यतेति। अदान्ता हि वयं स्वभावतस्तेन दाम्यतेत्यस्मान्प्रति पितोक्तवानिति देवानां मतिराविरासीत्। स्वभावतो लुब्धा वयं तेन दत्तेत्यस्मान्प्रत्युक्तवान्पितेति मनुष्याणां बुद्धिरासीत्। सुक्रूरा हि वयं स्वभावतस्तेन दयध्वमित्यस्मान्प्रति प्रजापतिरूचिवानित्यसुराणां प्रतिपत्तिर्बभूव। तदेवं दकारमात्रश्रवणादात्मचित्तानुरोधेन विचित्रा तेषां मनीषा प्रवृत्ता तथेन्द्रविरोचनयोरपि भविष्यतीत्यर्थः। अथेन्द्रविरोचनयोर्युक्तिदर्शनाविशेषादर्थप्रतिपत्तेरप्यविशेषः स्यादिति चेन्नेत्याह—निमित्तान्यपीति। युक्तिदर्शनान्यपि स्वचित्तगुणदोषाल्पत्वबहुत्वापेक्षाण्यतस्तयोस्तदपेक्षं प्रतिपत्तिवैषम्यमविरुद्धमित्यर्थः॥ २॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

अभिप्रायः पूर्वमेव वर्णितः। तत्र मन्यन्त इति। व्याख्यातारः परिहारं मन्यन्त इत्यर्थः। बुद्ध्येति। आगमापायित्वबुद्ध्येत्यर्थः, श्रुततयेति पाठे मुख्यतयेत्यर्थः। इतर इति। विरोचनः श्रुत्यर्थं छायात्मानं हित्वा लक्षणया तन्निमित्तं देहं जग्राहेत्यन्वयः, तद्वदित्यनन्तरं इतिशब्दोऽध्याहार्यः। ननु य एषोऽक्षिणीति शब्दश्रवणे तुल्ये कुतो देहच्छायात्मरूपभिन्नार्थज्ञानमत आह—स्वचित्तेति। त्रयाः प्राजापत्या इति ब्राह्मणे काण्वशाखायां देवानां मनुष्याणां असुराणां च प्रजापतौ ब्रह्मचर्यं वसतां द इति प्रजापतिना उक्तदकारमात्रश्रवणादेव सात्त्विकतया दमस्वभावानां देवानां स्वस्वभावानुसारेण दमः कर्तव्य इति प्रजापतिनोक्तमिति अर्थावधारणमासीत्। रजः प्रधानतया प्रवृत्तिस्वभावानां मनुष्याणां रजः कार्यप्रवृत्तिरूपदानं कर्तव्यमिति। तमः प्रधानतया हिंसास्वभावानां हिंसाकर्तव्यताविध्यनुपपत्तेः प्राणिषु दयां कुरुतेति प्रजापतिनोक्तमिति अवधारणमासीदिति ख्यापितमित्याह—ख्यापितमिति। ननु एष आत्मेति

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिँशतं वर्षाणीति स हापराणि द्वात्रिँशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य नवमः खण्डः

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदँ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥

एवमेवैष मघवन्सम्यक्त्वयाऽवगतं न च्छायात्मेत्युवाच प्रजापतिर्यो मयोक्त आत्मा प्रकृत एतमेवाऽऽत्मानं तु ते भूयः पूर्वं व्याख्यातमप्यनुव्याख्यास्यामि। यस्मात्सकृद्व्याख्यातं दोषरहितानामवधारणविषयं प्राप्तमपि नाग्रहीरतः केनचिद्दोषेण प्रतिबद्धग्रहणसामर्थ्यस्त्वमतस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणीत्युक्त्वा तथोषितवते क्षपितदोषाय तस्मै होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य नवमः खण्डः

य आत्माऽपहतपाप्मादिलक्षणो य एषोऽक्षिणीत्यादिना व्याख्यात एष सः। कोऽसौ। यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरत्यनेकविधान्स्वप्नभोगाननुभवतीत्यर्थः। एष आत्मेति होवाचेत्यादि समानम्। स हैवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान्पूर्ववदस्मिन्नप्यात्मनि भयं ददर्श। कथम्। तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नात्मा योऽनन्धः स भवति। यदि स्राममिदं शरीरमस्रामश्च स भवति नैवैष स्वप्नात्माऽस्य देहस्य दोषेण दुष्यति॥ १ ॥

### आनन्दगिरिटीका

इन्द्राभिप्रायं बुद्ध्वा प्रजापतिरनुमोदितवानित्युक्तमिदानीमनुमोदनवाक्यं व्याकरोति—एवमेवेति। इन्द्राभिप्रायविषय एषशब्दः। अनुव्याख्यास्यामीत्युक्तं श्रुत्वा श्रोतुकाममुपगतमिन्द्रं प्रत्याह—यस्मादिति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य नवमः खण्डः

पूर्ववच्छायात्मदर्शनवदित्यर्थः। अस्मिन्नप्यात्मनीति स्वप्न द्रष्टरीत्यर्थः। छायात्मनः शरीरानुविधायित्ववन्न स्वप्नद्रष्टस्तदनुविधायित्वं तथा च कथं पूर्ववद्दोषदर्शनमित्याशङ्क्य परिहरति—कथमित्यादिना ॥ १ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

छायात्मपरामर्शकैतच्छब्दविरोधादमृताभयत्वादीनां च देहे असंभवान्नीलानीलवस्त्रदृष्टान्तमात्रात्कथं देहग्रहणं विरोचनस्येत्याशङ्क्य शब्दार्थावधारणनिमित्तानां मध्ये स्वबुद्धिस्थार्थावधारणानुगुणानामेव सहकारित्वं इतरेषान्तु श्रुतिलिङ्गादानां कथंचिन्नयनमिति बुद्धिर्भवतीत्याह—निमित्तानीति। यो मयोक्त इति चक्षुषि सन्निहितो द्रष्टेत्यर्थः ॥ २ ॥

व्याख्यास्यामीति। देहच्छायात्मव्यतिरेकप्रदर्शनपूर्वकमित्यर्थः। स्वेनोपदिष्टात्मनः स्वप्नद्रष्टृत्वे अभिहिते उक्तभ्रमनिवृत्तिर्भविष्यति, छायात्मनः स्वप्ने अभावेन पुनरात्मनः तद्व्यतिरेकसिद्धेरिति भावः ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य नवमः खण्डः

य एष स्वप्ने इत्यत्र एतच्छब्दार्थमाह—य आत्मेति। कोऽसौ यः स्वप्न इत्युत्तरभाष्यपाठः प्रामाणिकः। य एष इत्येतच्छब्दयुक्तपाठस्तु प्रामादिकः एतच्छब्दस्य पूर्वमेव व्याख्यातत्वादिति। चरतेर्गत्यर्थस्य इह ज्ञानार्थत्वमाह—अनेकविधेति। व्यवहितान्वयेन तत्, यद्यपीदं शरीरमिति वाक्यं योजयति—तदिदमिति। सशब्दार्थमाह—स्वप्नात्मेति। स्वप्नात्मा यस्सोऽनन्ध इत्यन्वयः ॥ १ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवा- प्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय त ँ् ह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

नाप्यस्य वधेन स हन्यते छायात्मवन्न चास्य स्राम्येण स्रामः स्वप्नात्मा भवति। यदध्यायादावागम-मात्रेणोपन्यस्तं नास्य जरयैतज्जीर्यतीत्यादि तदिह न्यायेनोपपादयितुमुपन्यस्तम्। न तावदयं छायात्मवद्देहदोषयुक्तः किंतु घ्नन्ति त्वेवैनम्। एवशब्द इवार्थे। घ्नन्तीवैनं केचनेति द्रष्टव्यम्। न तु घ्नन्त्येवेति। उत्तरेषु सर्वेष्विवशब्द-दर्शनात्। नास्य वधेन हन्यत इति विशेषणाद्घ्नन्ति त्वेवेति चेन्नैवम्। प्रजापतिं प्रमाणीकुर्वतोऽनृतवादित्वापादना-नुपपत्तेः। एतदमृतमित्येतत्प्रजापतिवचनं कथं मृषा कुर्यादिन्द्रस्तं प्रमाणीकुर्वन्।

नरेन्द्रपुरीयं टिप्पणम्

न्यायेन त्वन्वयव्यतिरेकेण एतद्देहाभिमाने हि सत्येतद्देहधर्मैस्संसृज्यत इव द्रष्टा स्वप्ने एतद्देहाभिमानो-परमे न संसृज्यत इति देहतादात्म्याभावात् देहदोषेण न लिप्यत इत्येकदेशविज्ञानमिन्द्रस्याभ्यनुज्ञाय भयदर्शनं व्याचष्टे—न तावदयमित्यादिना। अस्य देहस्य वधेन न हन्यत इति विशेषणात् स्वरूपाघात एव मघवतोऽभिप्रेतः।

आनन्दगिरिटीका

स्राम्येण चक्षुरादिगतानवरतसलिलगलनविषयत्वेनेति यावत्। देहदोषेणाऽऽत्मनो न दोषो भवतीति प्रागेवोक्तं तत्किमर्थमिह पुनरुच्यतेऽत आह—यदध्यायादाविति। न्यायोऽन्वयव्यतिरेकाख्यः। एतद्देहाभिमाने हि सत्येव देहधर्मेण संयुज्यत इव द्रष्टा स्वप्ने त्वेतद्देहाभिमानाभावान्न तेन संसृज्यत इत्याह—तदिहेति। स्वप्नद्रष्टा चेद्देह-दोषेण न युज्यते कथं तर्हि तस्मिन्दोषदर्शनमित्याशङ्क्याऽऽह—न तावदिति। किमित्येवकारो यथाश्रुतो न व्याख्यायते तत्राऽऽह—न त्विति। इति शब्दो द्रष्टव्यमित्यनेन संबध्यते। देहस्य वधेन नायं हन्यत इति विशेषणात्स्वतो वधः स्वप्नदृशो नियमतो विवक्षितः कस्मादेवशब्दो न यथाश्रुत एवेति शङ्कते—नास्येति। किमयं प्रजापतिमाप्तमनाप्तं वा मन्यते? यद्यनाप्तं बुध्यते न तर्हि तं प्रत्युपगतिरिन्द्रस्य विद्याग्रहणार्थं संभवतीति मत्वाऽऽह—नैवमिति। विकल्पान्तरं प्रत्याह—प्रजापतिमिति। न स्वतो हननं स्वप्नदृशो विवक्षितमिन्द्रस्येति शेषः। उक्तमेव स्फोरयति—एतदिति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नाप्यस्य वधेनेति। तदानीं जाग्रद्देहाभावेऽपि स्वप्नात्मनो विद्यमानत्वादित्यर्थः। नास्य जरयैतज्जीर्यति इति देहनाशाधीननाशाभावस्य अध्यायादावेवोक्तत्वेन पुनरुक्तिं निराकरोति—यदिति। न्यायश्च स्वप्ने स्थूलदेहा-भावेऽपि आत्मनस्सत्त्वादित्युक्त एवेति भावः। पूर्ववाक्यार्थानुवादपूर्वकं छायात्मवैलक्ष्यम्। घ्नन्ति त्विति तुशब्दार्थ-माह—न तावदिति। तावच्छब्दो यद्यपीत्यर्थः। देहवधेन न हन्यत इति वचनात् प्रकारान्तरेण वधोऽस्तीति विशेषणात् प्रतीतेरेवकारो मुख्य एवास्त्विति शङ्कते—नास्येति। छायात्मनि उक्तदोषाभावप्रतिपादनपरत्वात्त-द्वाक्यस्य प्रकारान्तरेण वधसद्भावप्रतिपादनपरत्वे च वाक्यभेदप्रसङ्गात्। एवं त्वेव त इति वक्ष्यमाणपर्याये स्वप्नात्मनस्सुषुप्ते अनुकर्षणाच्च स्वप्ने वधे तदनुपपत्तेरेवकार इवार्थ एवेत्याह—नेति। किञ्च प्रजापतिनोक्ता-मृताभयत्वसर्वलोकसर्वकामाप्तिविरोधापत्तेः अन्यथा प्रजापतौ मृषावादित्वारोपापत्तेश्च नैवमित्याह—प्रजापति-मिति। अनृतवादित्वानुपपत्तिरिति पाठे प्रजापतिनोक्ते अमृतत्ववचने अनृतत्ववादित्वानुपपत्तेरित्यर्थः। उक्तमेव व्यक्तीकरोति—एतदमृतमिति। छायापुरुषे अमृताभयत्वाद्युक्तावपि अस्यैव शरीरस्य नाशमन्वेष नश्यतीति

**न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवा-प्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिँ॒शतं वर्षाणीति स हापराणि द्वात्रिँ॒शतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥**

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य दशमः खण्डः

ननु च्छायापुरुषे प्रजापतिनोक्तेऽस्य शरीरस्य नाशमन्वेष नश्यतीति दोषमभ्यधात्तथेहापि स्यात्। नैवम्। कस्मात्। य एषोऽक्षिणि पुरुषो दृश्यत इति न च्छायात्मा प्रजापतिनोक्त इति मन्यते मघवान्। कथम्। अपहतपाप्मादिलक्षणे पृष्टे यदि च्छायात्मा प्रजापतिनोक्त इति मन्यते तदा कथं प्रजापतिं प्रमाणीकृत्य पुनः श्रवणाय समित्पाणिर्गच्छेत्। जगाम च। तस्मान्न च्छायात्मा प्रजापतिनोक्त इति मन्यते। तथा च व्याख्यातं द्रष्टाऽक्षिणि दृश्यत इ त। तथा विच्छादयन्तीव विद्रावयन्तीव तथा च पुत्रादिमरणनिमित्तमप्रियवेत्तेव भवति। अपि च स्वयमपि रोदितीव। नन्वप्रियं वेत्त्येव कथं वेत्तेवेति। उच्यते—न अमृताभयत्ववचनानुपपत्तेः। ध्यायतीवेति च श्रुत्यन्तरात्।

नरेन्द्रपुरीयं टिप्पणम्

तस्मादेवकारो यथाश्रुतार्थं एवेति न मन्तव्यमित्याह—नैवमिति। वेदितृत्वं विकारश्चेदमृतत्वं न स्यात् क्षीरादि-

आनन्दगिरिटीका

दृष्टान्तेन शङ्कते—नन्विति। दृष्टान्तं विघटयति—नैवमिति। तद्विघटनप्रकारं प्रश्नपूर्वकं प्रकटयति—कस्मादित्यादिना। एतदेवाऽऽकाङ्क्षापूर्वकं प्रपञ्चयति—कथमित्यादिना। अथेन्द्रो दृश्यत इति श्रुत्यर्थं गृहीत्वा छायात्मानमेव गृहीतवानित्युक्तं कथमिदानीमन्यथोच्यते तत्राऽऽह—तथेति। यथेदं वाक्यमक्ष्युपलक्षितद्रष्टृपरं तथा प्रागेव व्याख्यातं न तु स्वप्नद्रष्टरि च्छायात्मनीव स्पष्टा विनाशदृष्टिरित्यर्थः। यथा तदुपगम्य स्वप्नद्रष्टारं घ्नन्तीव तथेति यावत्। इवशब्दमाक्षिपति—नन्विति। वेत्तृत्वं विकारश्चेदमृतत्वं न स्यान्मृदादिवद्विनाशित्वप्रसङ्गात्तस्मादिव-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

नाशोक्तेः प्रजापतेरप्रमाणीकरणमिष्टमिति शङ्कते—नन्विति। यद्यपि प्रथमं विरोचनेन सह इन्द्रेण छायात्मा प्रजापतिनोक्त इति गृहीतं, तथापि मार्गमध्ये अमृताभयत्वादिपूर्वोत्तरप्रजापतिवाक्यसन्दर्भं पर्यालोचयन् न छायात्मा प्रजापतिनोक्तः, किन्तु अन्य एवात्मा उक्तलक्षण उपदिष्ट इति निश्चित्य तत्स्वरूपविशेषबुभुत्सया पूर्वं स्वेन गृहीतछायात्मनि दोषमाविष्कृतवान्। अतो न प्रजापतेरप्रमाणीकरणं इन्द्रस्येष्टं, तथात्वे पुनः प्रजापतिसमीपगमनानुपपत्तेरिति परिहरति—नैवमिति। प्रजापतिना छायात्मानुक्तौ य एषोऽक्षिणि दृश्यत इति प्रत्यक्षत्वोक्तिः कथमित्यत आह—तथापि चेति। यथा प्रत्यक्षापत्तिः तथा व्याख्यातं चेत्यन्वयः। ननु यथा प्रथमपर्याये छायात्मनोऽन्यः प्रजापतिनोक्तः, तथैवेन्द्रेणापि अमृताभयत्वादिवचनान्निश्चितमिति प्रथमं स्वगृहीते च्छायात्मनि विनाशित्वोक्तावपि न प्रजापतेः मृषावादित्वं, एवमिहापि स्वप्नपुरुषादन्यस्यैव महीयमानत्वेन गृहीते स्वप्नपुरुषे हननाभिधानस्य मुख्यत्वेऽपि न प्रजापते र्मृषावादित्वमिति चेन्न। इहान्यस्य प्रजापतिनानभिधानात्, एवं त्वेव त इति स्वप्नद्रष्टुरेव सुषुप्ते अनुकर्षणात्। इन्द्रस्यापि पूर्ववाक्येन एवं त्वेव त इति स्वप्नद्रष्टुः जाग्रद्द्रष्टृभेदं श्रुतवतः अन्योक्तिनिश्चयानुपपत्तेः, तस्यैव जाग्रद्द्रष्टृभेदात्। अतोऽमृताभयत्वेनोक्ते तस्मिन्परमार्थतो हननाभिधानं वक्तुरप्रामाण्यापादकमेव। किञ्च तस्य परमार्थतो हननाभिधानं योऽहं स्वप्ने हस्तिनमद्राक्षं सोऽहं जागर्मीति प्रत्यभिज्ञानतः इन्द्रस्य विरुद्धं स्वाप्निकस्य नाशे तदनुपपत्तेः। अतः अमृतादिधर्मके द्रष्टरि प्रातीतिकं हननादिदोषं पश्यतस्तन्निराकरणबुभुत्सयैव तथाविधदोषाविष्करणमिन्द्रस्य। अत एव वक्तापि तद्दोषरहितं सुप्तिस्थानं वक्ष्यतीति न किंचिदवद्यमिति। मरणनिमित्तमिति क्रियाविशेषणम्, तत्र मृतत्वविरोधात् हननादेरवस्तुत्वेऽपि वेदनरोदनकर्तृत्वं सत्यमेवास्तु, बाधकाभावात्, अत इवकारानुपपत्तिरिति शङ्कते—नन्विति। श्रुतेरनतिशङ्क्यत्वाच्छ्रौतेवकारेणैव तस्य

**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवा-
चैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव**

ननु प्रत्यक्षविरोध इति चेत्। न। शरीरात्मत्वप्रत्यक्षवद्भ्रान्तिसंभवात्। [1]तिष्ठतु तावदप्रियवेत्तेव न वेति। नाहमत्र भोग्यं पश्यामि। स्वप्नात्मज्ञानेऽपीष्टं फलं नोपलभ इत्यभिप्रायः। एवमेवैष तवाभिप्रायेणेति वाक्यशेषः। आत्मनोऽमृताभयगुणवत्त्वस्याभिप्रेतत्वात्। द्विरुक्तमपि न्यायतो मया यथावन्नावधारयति। तस्मात्पूर्ववदस्याद्यापि प्रतिबन्धकारणमस्तीति मन्वानस्तत्क्षपणाय वसापराणि द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमित्यादिदेश प्रजापतिः। तथोषितवते क्षपितकल्मषायाऽऽह ॥ २-३-४ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य दशमः खण्डः

पूर्ववदेतं त्वेव त इत्याद्युक्त्वा तद्यत्रैतत्सुप्त इत्यादि व्याख्यातं वाक्यम्। अक्षिणि यो द्रष्टा स्वप्ने च महीयमानश्चरति स एष सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स्वाभि-

नरेन्द्रपुरीयं टिप्पणम्

वह्निनाशित्वप्रसङ्गादतो वेत्तीवेतिव्याख्यानं युक्तमित्याह—नामृतेति। अहं वेद्मीति क्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दप्रक्षेपेण व्याख्या न युक्तेति शङ्कितेऽध्यासादपि प्रत्यक्षोपपत्तौ न विकारित्वं सिध्यतीत्याह—न शरीरेति। विधेयब्रह्मभावे आध्यासिकमप्यप्रियवेत्तृत्वादिकं नास्त्युद्देश्यगतं हि तदतस्त्वदभिप्रायेणाप्रियवेत्तेव न मदभिप्रायेण। तत्र हेतुरात्मनो अमृताभयगुणवत्त्वस्येति ॥ २-३-४ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य दशमः खण्डः

आनन्दगिरिटीका

शब्दो युक्त इत्युत्तरमाह— उच्यत इति। अहं वेद्मीतिविक्रियाश्रयत्वप्रत्यक्षविरोधादिवशब्दो न युक्त इति शङ्कते—नन्विति। अध्यासादपि प्रत्यक्षोपपत्तेर्न विकारित्वं सिध्यतीति परिहरति—नेत्यादिना। नाहमित्यादि वाक्यमवतारयति—तिष्ठत्विति। न वेत्त्यप्रियवेत्तैव भवतीत्यर्थः। इष्टं सर्वलोककामावाप्तिलक्षणं विधेये ब्रह्मभावेनाऽऽध्यासिकमप्यप्रियवेत्तृत्वादिकमस्ति तत्पुनरुद्देशेऽप्यागतमतस्त्वदभिप्रायेणाप्रियवेत्तेव स्वप्नद्रष्टा न तु मदभिप्रायेणेति विशिनष्टि—तवेति। तत्र हेतुमाह—आत्मन इति। वसापराणीत्यादिवाक्यतात्पर्यमाह—द्विरुक्तमपीति। तथा प्रजापतिवाक्यानुसारेणेति यावत् ॥ २-४ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य दशमः खण्डः

यथा पूर्वमेतं त्वेव त इत्याद्युक्त्वा य एष स्वप्ने महीयमान इत्याद्युक्तं तथेहाप्येतं त्वेवेत्युक्त्वा तद्यत्रैतदित्याह विशिष्टाधिकारिणे प्रजापतिरिति योजना। व्याख्यातस्यैव वाक्यस्यार्थं संक्षिप्य दर्शयति—अक्षिणीति। तत्रापि

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मृषात्वं सिध्यतीति दूषयति—नेति। कर्तृत्वे विकारापत्तेरमृतत्वोक्तिरपि तस्य बाधिकेत्याह—अमृतेति। श्रुत्यन्तरे बुद्धिकर्तृत्वस्य आत्मन्यारोपितत्वोक्त्यापि तस्य मृषात्वमित्याह—ध्यायतीवेति। प्रत्यक्षविरोधाच्छ्रुतेरन्यपरत्वमिति शङ्कते—नन्विति। श्रुतेर्निर्दोषत्वात्प्रत्यक्षस्य च शरीरात्मप्रत्यक्षे भ्रान्तत्वदर्शनेन अन्यत्रापि तस्य शङ्कितदोषत्वेन श्रुतिविरोधात् तस्यैव बाध इत्याह—न शरीरेति। अतः श्रौतेवकारबलात्तस्य मृषात्वमेवेत्युपसंहरति—अत इति। तिष्ठतु तावदिति। वादे स्थितमित्यर्थः। दृष्टं फलमिति। श्रुतिदृष्टं सर्वलोकाप्त्यादिफलमित्यर्थः। ननु केवलस्य स्वप्नसाक्षिणो दर्शने उक्तफलमस्त्येवेति प्रजापतेः फलाभावोक्त्यङ्गीकरणमयुक्तमित्याशङ्क्य इन्द्रेण गृहीतविशिष्टात्मदर्शने फलाभावोक्त्यङ्गीकरणं प्रजापतेर्नायुक्तमित्याह—तवाभिप्रायेणेति। अध्याहारे हेतुमाह—आत्मनोऽमृतेति। प्रजापतेरमृतत्वादिगुणवत्त्वस्य अभिप्रेतत्वात्स्वाभिप्रायेणोक्तं फलमस्तीत्यर्थः। उक्त्येत्यस्य आहेति पूर्वेण सम्बन्धः।

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य दशमः खण्डः

व्याख्यातमिति। नाडीखण्ड इत्यर्थः, अक्षिणीत्यादिना प्रकृतमाकृष्य तस्य सुषुप्तौ साक्ष्यभेदमाह—

१. विषयविशिष्टज्ञानस्य मिथ्यात्वमेवेत्यर्थः विषयं हित्वा शुद्धज्ञानस्य सत्यत्वेऽपि न दोषः अभ्युपेत्याह—तिष्ठत्विति।

देवानेतद्भयं ददर्शनाह खल्वयमेवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

स समित्पाणिः पुनरेयाय तꣳह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एवꣳ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ संपेदुरेतत्तद्यदाहुरेकशतꣳह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्यैकादशः खण्डः

प्रेतमेव। मघवांस्तत्रापि दोषं ददर्श। कथम्। नाह नैव सुषुप्तस्थोऽप्यात्मा खल्वयं संप्रति सम्यगिदानीं चाऽऽत्मानं जानाति नैवं जानाति। कथम्। अयमहमस्मीति नो एवेमानि भूतानि चेति। यथा जाग्रति स्वप्ने वा। अतो विनाशमेव विनाशमिवेति पूर्ववद्द्रष्टव्यम्। अपीतोऽपिगतो भवति, विनष्ट इव भवतीत्यभिप्रायः। ज्ञाने हि सति ज्ञातुः सद्भावोऽवगम्यते नासति ज्ञाने। न च सुषुप्तस्य ज्ञानं दृश्यतेऽतो विनष्ट इवेत्यभिप्रायः न तु विनाशमेवाऽऽत्मनो मन्यतेऽमृताभयवचनस्य प्रामाण्यमिच्छन्॥ १-२ ॥

पूर्ववदेवमेवेत्युक्त्वा यो मयोक्तस्त्रिभिः पर्यायैस्तमेवैतं नो एवान्यत्रैतस्मादात्मनोऽन्यं कंचन किं तर्ह्येतमेव व्याख्यास्यामि। स्वल्पस्तु दोषस्तवावशिष्टस्तत्क्षपणाय वसापराण्यन्यानि पञ्च वर्षाणीत्युक्तः स तथा चकार। तस्मै

आनन्दगिरिटीका

सुषुप्तदर्शनेऽपीत्यर्थः। तदेव दोषदर्शनं प्रश्नद्वारा स्फोरयति—कथमित्यादिना। स्वात्मानं न जानातीत्युक्तमेवाऽऽकाङ्क्षाद्वारेणाभिनयति—कथमिति। तत्र वैधर्म्यदृष्टान्तमाह—यथेति। स्वपरविवेकाभावे दोषमाह—अत इति। घ्नन्ति त्वेवेत्यत्रोक्तं लक्षयति—पूर्ववदिति। कुतो ज्ञानाभावमात्रेण विनष्टत्वमित्याशङ्क्योक्तमभिप्रायं स्पष्टयति—ज्ञाने हीति। एवकारो यथाश्रुत एव किं न स्यादित्याशङ्क्याऽऽह—न त्विति ॥ १-२ ॥

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स एष इति। सुप्त इत्यादिपदद्वयनिष्पन्नमर्थमाह—सुषुप्त इति। योऽक्षिण च स्वप्ने दर्शितः स एष सुप्तः, यश्च सुषुप्तः स एष आत्मेति अन्वयोऽत्र दर्शितः। अत्रापि प्रजापतिना द्रष्टा साक्ष्येव विवक्षितः, न सोपाधिक इत्याह—स्वेति। स्वाभिप्रेतमेव उवाचेति पूर्वेणान्वयः। मघवान् स्वीकृत्यानन्तरं सोपाधिकं गृहीत्वेति शेषः, नाहेत्यत्र आहेत्यस्य एवकारार्थमाह—नैवेति। पूर्ववदिति। घ्नन्ति त्वेवैनमित्यत्रेवेत्यर्थः। विनाशोत्प्रेक्षायां हेतुमाह ज्ञाने हि सतीति। पूर्ववदित्युक्तं व्यक्तीकरोति—न त्विति। वचनस्येति। प्रजापतिवचनस्येत्यर्थः ॥ १-२ ॥

इन्द्राभिप्रायेणैव अत्राप्येवमेवेति दोषाङ्गीकरणं न स्वाभिप्रायेणेत्यत आह—पूर्ववदिति। उक्त्वेत्यस्य पञ्चवर्षाणीत्यध्याहृतेन आहेत्यनेन सम्बन्धः। एतं त्वेव त इति वाक्यं व्याचष्टे—यो मयोक्त इति। स्थानत्रयेऽपि अक्ष्यादितत्तदुपाध्युपलक्षित एक एवात्मा मयोक्तः, त्वया तु तत्तदुपाधिवैशिष्ट्यं गृहीत्वा तत्तदुपाधिधर्माध्यारोपणेन आत्मनि दोषश्चोदितः। अतः परं एतमेवात्मानं सर्वोपाधिनिरासेन उपाधितोऽपि भेदरहितं उपाधिधर्मानास्कन्दितं वक्ष्यामि ततः पूर्ववत्ते भ्रमो न भविष्यति इति वक्तुं नो एवान्यत्रैतस्मादिति वाक्यम्। तत्र त्रल्प्रत्ययं द्वितीयार्थमङ्गीकृत्य व्याचष्टे—नो एवेत्यादिना। अन्यमिति उपाधितोऽपीति शेषः। जाग्रत्स्वप्नयोः मिथ्याज्ञानबाहुल्यात्तद्विवेकहेतुचित्तशुध्यर्थं द्वात्रिंशद्वर्षं ब्रह्मचर्यमुपदिष्टं, सुप्ते तु मिथ्याज्ञानाभावात्पञ्चवर्षब्रह्मचर्येणैव सुप्ते विद्यमानाज्ञानतो विवेकसम्भवमभिप्रेत्य पञ्चवर्षाण्येवालमित्यभिप्रेत्याह—स्वल्प इति। उवासेत्यस्य तस्मै होवाचेत्यनेन व्यवहितेन अन्वयं वदन्नाख्यायिकारूपं श्रुतिवाक्यं पूरयति—तथा चकार तस्मा इति।

**मघवन्मर्त्यं वा इद्ँ शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्याऽऽत्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

मृदितकषायादिदोषाय स्थानत्रयंदोषसंबन्धरहितमात्मनःस्वरूपमपहतपाप्मत्वादिलक्षणंमघवते तस्मै होवाच। तान्येकशतं वर्षाणि संपेदुः संपन्नानि बभूवुः। यदाहुर्लोके शिष्टा एकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवासेति। तदेतद्द्वात्रिंशतमित्यादिना दर्शितमित्याख्यायिकातोऽपसृत्य श्रुत्योच्यते। एवं किलैतदिन्द्रत्वादपि गुरुतरमिन्द्रेणापि महता यत्नेनैकोत्तरवर्षशतकृतायासेन प्राप्तमात्मज्ञानमतो नातः परं पुरुषार्थान्तरमस्तीत्यात्मज्ञानं स्तौति ॥ ३ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य एकादशः खण्डः

मघवन्मर्त्यं वै मरणधर्मीदं शरीरम्। यन्मन्यसेऽक्ष्याधारादिलक्षणः संप्रसादलक्षण आत्मा मयोक्तो विनाशमेवापीतो भवतीति। शृणु तत्र कारणम्। यदिदं शरीरं वै यत्पश्यसि तदेतन्मर्त्यं विनाशि। तच्चाऽऽत्तं मृत्युना

## नरेन्द्रपुरीयं टिप्पणम्

अशरीरं तुरीयमात्मानमुपदेष्टुं शरीरं तावन्निन्दति--मघवन्मर्त्यमित्यादिना। यच्च मन्यसे सुषुप्ते संप्रसाद आत्मा विनाशमेवापीतो भवतीति। शृणु तत्र विनाशभ्रमकारणं सशरीरो हि विशेषविज्ञानवान्भवति। अशरीरस्य

## आनन्दगिरिटीका

पूर्ववद्ब्रह्मचर्यदिशाभावे हेतुमाह—स्वल्पस्त्विति। आख्यायिकातोऽपसृत्य श्रुतिरस्मभ्यं किमर्थमित्थमुपदिशतीत्याशङ्क्याऽऽह—एवमिति ॥ ३ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्यैकादशः खण्डः

कार्यकारणपरिवेष्टितो विश्वतैजसावुक्तौ कारणमात्रबद्धश्च प्राज्ञो व्याख्यातः संप्रत्यशरीरं तुरीयमुपदेष्टुं सशरीरतां निन्दति—मघवन्निति। शरीरवदात्मनोऽपि विनाशित्वमवस्थाविशेषे दर्शितमित्याशङ्क्याऽऽह—यन्मन्यस इति। सशरीरो विशेषविज्ञानवान्भवत्यशरीरस्य तु विशेषविज्ञानाभावाद्विनाशभ्रमो न पुनरसौ वस्तुतो विनश्यति स्वेन रूपेणाभिनिष्पद्यत इति संप्रसादस्याविनाशित्ववचनादित्यभिप्रेत्य कारणमेव स्पष्टयन्नक्षराणि व्याचष्टे—यदिदमित्यादिना। ननु मर्त्यमित्येतावतैव मृत्युव्याप्तत्वे शरीरस्य सिद्धे किमित्यात्तं मृत्युनेति पुनरुच्यते तत्राऽऽह—

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इदानीमाख्यायिकातोऽपसृष्टं तानीत्यादिश्रुतिवाक्यं व्याचष्टे—तानीति। एकशतं ह वै वर्षाणि मघवान् ब्रह्मचर्यमुवासेति यदाहुः तदेतद्यत्तौ ह द्वात्रिंशतमित्यादिना पर्यायचतुष्टयेन दर्शितमिति श्रुतेरन्वयमाह—यदाहुर्लोक इत्यादिना। उवासेतीत्यनन्तरं भाष्ये तदेतदितिपदं द्रष्टव्यम्। आख्यायिकातोऽपसृत्य सर्वेषां वर्षाणां संकलय्य गणनस्य प्रयोजनमाह--एवं किलेत्यादिना ॥ ३ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य एकादशः खण्डः

आत्मनि विनाशित्वादिप्रतीतेरौपाधिकत्वात्, स्वत आत्मा अमृताभयादिरूपश्शुद्ध इति वक्तुमुपाधिं दर्शयति--मघवन्नित्यादिना। आत्मनो विनाशित्वे शङ्किते शरीरस्य मर्त्यत्वाभिधानं असङ्गतमित्याशङ्क्य उक्ताशङ्कानिराकरणार्थमेव तदभिधानमित्याह—यन्मन्यसे इति। यदिदं शरीरं स्थूलं सूक्ष्मं च तदेव तत्र कारणमित्यन्वयः,

---

१. "न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिः" इत्यत्र कर्मकृतशरीरवतः इत्यर्थः। तेन मोक्षे कर्मकृतशरीराभावः दिव्यशरीरं चानुमतं रामानुजीयानां, तन्न, भगवदुपासनापि मानसं कर्मैव तेन प्राप्यं ब्राह्मलौकिकं शरीरमपि कर्मजन्यमेवेति तदपि मृत्युग्रस्तमेवेति न विशेषः। "अशरीरं वाव सन्तमि"त्यत्र शरीरसामान्याभाव एव विवक्षितः।

ग्रस्तं सततमेव। कदाचिदेव म्रियत इति मर्त्यमित्युक्ते न तथा संत्रासो भवति यथा ग्रस्तमेव सदा व्याप्तमेव मृत्युनेत्युक्त इति वैराग्यार्थं विशेष इत्युच्यत आत्तं मृत्युनेति। कथं नाम देहाभिमानतो विरक्तः सन्निवर्तेत इति। शरीरमित्यत्र सहेन्द्रियमनोभिरुच्यते। तच्छरीरमस्य संप्रसादस्य त्रिस्थानतया गम्यमानस्यामृतस्य मरणादिदेहेन्द्रियमनोधर्मवर्जितस्येत्येतत्। अमृतस्येत्यनेनैवाशरीरत्वे सिद्धे पुनरशरीरस्येति वचनं वाय्वादिवत्सावयवत्वमूर्तिमत्त्वे मा भूतामित्यात्मनः। आत्मनो भोगाधिष्ठानम्। आत्मनो वा सत ईक्षितुस्तेजोबन्नादिक्रमेणोत्पन्नमधिष्ठानम्। जीवरूपेण प्रविश्य सदेवाधितिष्ठत्यस्मिन्निति वाऽधिष्ठानम्।

### नरेन्द्रपुरीयं टिप्पणम्

तु विशेषविज्ञानाभावाद्विनाशभ्रमस्तत्र न तु विनश्यति स्वेन रूपेणाभिनिष्पद्यत इति प्रतिपाद्यमानं शृण्वित्युत्तरस्य तात्पर्याभिधानम्। तच्छरीरमधिष्ठितमनेनेति तदधिष्ठितस्तद्वानुच्यते। कस्तर्हि सम्बन्धश्शरीरात्मनोर्विवक्षितः

### आनन्दगिरिटीका

कदाचिदेवेति। वैराग्यार्थं विशेषवचनमित्युक्तं यत्तदेव वैराग्यं किमर्थमित्याशङ्क्याऽऽह—कथमिति। निवर्तने विशेषवचनं फलवदिति शेषः। तदस्येत्यत्र तच्छब्दार्थमाह—शरीरमित्यत्रेति। मघवन्नित्यादिवाक्यं सप्तम्यर्थः। त्रिस्थानतया जाग्रत्स्वप्नसुषुप्ताख्यस्थानत्रयसंबन्धित्वेनेति यावत्। अमृतत्वं षडूर्मिवर्जितत्वम्। अशरीरत्वं स्वाभाविकसावयवत्वादिराहित्यम्। आत्मनोऽधिष्ठानमित्यत्र भोगेत्यपेक्षितपूरणं कृतम्। भोक्तृभोगायतनं शरीरमिति विशेषणार्थमुक्त्वा तस्यैवार्थान्तरमाह—आत्मनो वेति। अधिष्ठानं जनयितुस्तस्योपलब्धेरधिकरणमिति यावत्। अधिष्ठानशब्दस्यार्थान्तरमाह—जीवरूपेणेति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तदेव वैशब्दव्याख्यानपूर्वकं शरीरस्य मर्त्यत्वेन साधयति—वै यदिति। विनाशीति, ततश्च आत्मनो विशेषविज्ञानहेतोः शरीरद्वयस्य सुषुप्ते विनाशे विशेषविज्ञानाभावेन आत्मनि शरीरनाशारोपात्तथा प्रतीतेः, न स्वतः तस्य नाश इत्यर्थः। अत्र प्रसङ्गादत्यन्तवैराग्यार्थं शरीरस्य सदा मृत्युग्रस्तत्वमाह—आत्तमिति। मर्त्यमित्युक्ते कदाचिदेव म्रियत इति प्रतीतिः स्यात् तथा सति यथा ग्रस्तमेव मृत्युनेत्युक्ते सन्त्रासो भवति, न तथा सन्त्रासो भवतीत्यन्वयः। सन्त्रासफलमाह—इतीति। उक्तवैराग्यफलमाह—कथं नामेति। अभिमानतो निवर्तेतेत्यन्वयः। स्वप्ने स्थूलशरीराभावेऽपि आत्मनि विनाशप्रतीत्यभावेन न तन्मर्त्यत्वेनैव आत्मनि विनाशारोप इत्याशङ्क्य अत्र शरीरमित्यनेन लिङ्गशरीरमपि गृह्यत इत्याह—शरीरमितीति। अत्र इन्द्रियमनोभिस्सहितं शरीरं शरीरमित्यनेन शब्देनोच्यत इत्यन्वयः। मर्त्यस्यापि शरीरस्य तटस्थत्वे तेन आत्मनि विनाशारोपो न सिद्धयतीत्याशङ्क्य तदधिष्ठानत्वेन तदुपाधित्वमाह—तदित्यादिना। अमृतस्येति देहधर्ममरणराहित्य कथनं सर्वोपाधिधर्मराहित्यस्यापलक्षणमित्याह—अमृतस्येति। तदुक्तिश्च स्वतस्तद्धर्मरहितस्य तद्वत्त्वमौपाधिकं मिथ्येति दर्शयितुमिति भावः। अमृतस्येत्यनेन मरणरूपदेहधर्मराहित्येन स्वतो देहतादात्म्यराहित्यसिद्धेः अशरीरस्येति पुनरुक्तमित्याशङ्क्याऽऽह—अमृतस्येत्यनेनेति। अत्र शरीरमिति शीर्यत इति व्युत्पत्त्या यौगिकं विशरणवत्त्वमुच्यते। ततश्च सावयवस्य वाय्वादेर्मूर्तिमतश्च घटादेर्विशीर्णतादर्शनाद्विशरणाभावोक्त्या तयोर्निवृत्तिरित्यर्थः। ततश्च अमृतत्वेनोक्तमरणादिधर्मराहित्ये अशरीरत्वं सावयवत्वादिधर्मराहित्यरूपं हेतुत्वेनोक्तमिति भावः। माभूतामित्येतदर्थं पुनरशरीरस्येति वचनमित्यन्वयः। "सार्वविभक्तिकस्तसिः" इति षष्ठ्यर्थे तसिप्रत्ययमङ्गीकृत्याह—आत्मन इति। आत्मशब्देन परमात्मानं गृहीत्वा तसिल्प्रत्ययं च पञ्चम्यर्थे स्वीकृत्य उत्पन्नमिति पदाध्याहारेण व्याख्यानान्तरमाह—आत्मनो वा सत इति। अधितिष्ठत्यस्मिन्नेवेति परिच्छेदाभिमानं प्राप्य तत्रैव तिष्ठतीति हेतोश्शरीरमधिष्ठानमित्यर्थः। अधिकरणार्थे ल्युडिति भावः। एवं सुप्ते विनाशभ्रमं देहद्वयविनाशोपाधिकमित्युपपाद्य स्वप्नादावप्रियवेत्तृत्वादेः देहद्वयोपाधिकत्वमाह—आत्त इति श्रुतिः। तत्र सशरीरत्वस्यात्मनि संसारहेतुत्वसिद्ध्यर्थं शरीरस्य धर्मादिकार्यत्वेन प्रियादिमत्त्वं वदन् सशरीरत्वे प्रथमं शरीरा-

यस्येदमीदृशं नित्यमेव मृत्युग्रस्तं धर्माधर्मजनितत्वात्प्रियाप्रियवदधिष्ठानं तदधिष्ठितस्तद्वान्सशरीरो भवति। अशरीरस्वभावस्याऽऽत्मनस्तदेवाहं शरीरं शरीरमेव चाहमित्यविवेकादात्मभावः सशरीरत्वं अत एव सशरीरः सन्नात्तो ग्रस्तः प्रियाप्रियाभ्याम्। प्रसिद्धमेतत्। तस्य च न वै सशरीरस्य सतः प्रियाप्रिययोर्बाह्यविषयसंयोग-वियोगनिमित्तयोर्बाह्यविषयसंयोगवियोगौ ममेति मन्यमानस्यापहृतिर्विनाश उच्छेदः सन्ततिरूपयोर्नास्तीति। तं पुनर्देहाभिमानादशरीरस्वरूपविज्ञानेन निर्वर्तिताविवेकज्ञानमशरीरं सन्तं प्रियाप्रिये न स्पृशतः। स्पृशिः प्रत्येकं संबध्यत इति प्रियं न स्पृशत्यप्रियं न स्पृशतीति वाक्यद्वयं भवति। "न म्लेच्छाशुच्यधार्मिकैः सह संभाषेते"ति यद्वत्। धर्माधर्मकार्ये हि ते। अशरीरता तु स्वरूपमिति तत्र धर्माधर्मयोरसंभवात्तत्कार्यभावो दूरत एवेत्यतो न प्रियाप्रिये

### नरेन्द्रपुरीयं टिप्पणम्

तत्राह—अशरीरस्वभावस्येति। मिथ्यातादात्म्यरूपोऽनिर्वाच्याज्ञानसम्बन्ध इत्यर्थः। देहाभिमानाद्व्युत्थितमिति शेषः।

### आनन्दगिरिटीका

उत्तरवाक्यस्थं सशरीरशब्दं व्याचष्टे—यस्येति। ईदृशं मर्त्यत्वादिविशेषणवदित्यर्थः। तद्यथोक्तं शरीर-मधिष्ठितमनेनेति व्युत्पत्त्या तदधिष्ठितः स तद्रूपः पुरुष इत्यर्थः। तस्यैव संपिण्डितमर्थमाह—तद्वानिति। उक्तेऽर्थे विशेषणं पातयति—सशरीर इति। अशरीरस्य कथं सशरीरत्वमित्याशङ्क्याऽऽह—अशरीरेति। अविवेकतः सशरीरो भवतीति पूर्वेण संबन्धः। यतः सशरीरोऽत एव प्रियाप्रियाभ्यामात्तो वै पुरुष इति योजना। वैशब्दार्थमाह—प्रसिद्ध-मिति। एतच्छब्दार्थमेवोत्तरवाक्यव्याख्यानेन स्फोरयति—सशरीरस्येति। तौ ममेति मन्यमानस्य सतः स्वस्य तयोः संततिरूपयोरपहतिर्नास्तीति संबन्धः। प्रियाप्रिययोः स्वारस्येन विनाशोऽस्ति क्षणिकत्वादित्याशङ्क्य संतति-रूपयोरित्युक्तम्। इतिशब्दो वाक्यसमाप्त्यर्थः। अजस्य देहसंबन्धद्वारा संसारित्वमुक्त्वा तस्यैव विद्यावतो देहनिवृत्ति-द्वारेण मुक्तिं दर्शयति—तं पुनरिति। मुक्ते पुंसि प्रियाप्रिययोर्मिलितयोरस्पर्शेऽप्येकैकस्य स्पर्शः स्यादित्याशङ्क्याऽऽह—स्पृशिरिति। प्रत्येकं संबन्धमभिनयति—प्रियमिति। समस्ततया श्रुतस्यानेकस्य प्रत्येकं क्रियासंबन्धे दृष्टान्तमाह—नेति। प्रियाप्रिययोर्मुक्तात्मन्यसंस्पर्शं पातनिकापूर्वकं कैमुतिकन्यायेन दर्शयति—धर्माधर्मेति। तत्रेत्यशरीरताख्यं स्वरूपमुच्यते।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

धिष्ठितत्वं हेतुरित्याह—यस्येदमिति। इदमिन्द्रियमनोभिस्सहितमीदृशं मर्त्यमित्यर्थः। सशरीरत्वं मृषेत्यभिप्रायेण आत्मस्वरूपमाह—अशरीरोऽपीति। एवं भूमिकां कृत्वा श्रुत्यक्षराणि व्याख्यातुं श्रुतिं प्रतीकतो गृह्णाति—आत्त-इति। सशरीरत्वमिरेतराध्यासरूपमिति वदन् तस्य प्रियादियोगे हेतुत्वमाह—तदेवाहमिति। अविवेकत एव सशरीरस्सन्नात्तस्सशरीरत्वादेवात्त इत्यन्वयः। प्रथमात्तपदं प्रतीकग्रहरूपं द्वितीयन्तु व्याख्यानार्थमित्यपौनरुक्त्यम्। सशरीरस्य सदा प्रियाद्यवियोगं वक्तुं व्यतिरेकमाह—न ह वा इति श्रुतिः। नत्र निपातयोरर्थमाह—प्रसिद्धमिति। प्रियाप्रिययोरित्यतः प्राक् न ह वा इति क्वचित्पाठः, तच्च तच्छ्रुतिवाक्यानुकरणं, अतो नास्तीत्युत्तरेण न पौन-रुक्त्यम् प्रियस्य सुखत्वात्तदवियोगोऽशरीरस्य मुक्तस्याप्यस्तीति शरीरविशेषणमयुक्तमित्याशङ्क्य वैषयिकं प्रियमिह विवक्षितमित्याह—बाह्येति। मुक्तस्यापि विभुत्वेन बाह्यविषयसंयोगोऽपरिहार्य इत्याशङ्क्याह—बाह्येति। प्रियादेर्वैष-यिकस्य क्षणिकत्वेनोच्छेदनिषेधो न युक्त इत्यत आह—सन्ततीति। प्रियव्यक्तेः क्षणिकत्वेऽपि तत्सन्ततिस्सशरीरस्या-विच्छिन्नेत्यर्थः। तर्हि प्रियादेरविच्छेदे मोक्षो न स्यादित्याशङ्क्य सशरीरत्वस्याविवेकमूलाभिमाननिमित्तत्वात्केवला-त्मज्ञानेन शरीरादिसर्वोपाधिनिवृत्तौ प्रियादिविच्छेदस्संभवतीति वक्तुमशरीरं वावेति वाक्यं व्याचष्टे—तं पुनरिति। पुनश्शब्द एवकारार्थे। तमेव सशरीरमेवेत्यर्थः। प्रियाप्रिये इति द्वन्द्वसमासबलात्, समुच्चितयोः स्पर्शनिषेधेऽपि प्रत्येकं स्पर्शप्रसङ्ग इत्याशङ्क्य म्लेच्छादीनां द्वन्द्वात्समुच्चयप्रतीतावपि यथा प्रत्येकमेव संभाषणनिषेधान्वयः एवमिहापि प्रत्येकमेव निषेधान्वय इत्याह—प्रियं नेति। म्लेच्छो जातितः, अशुचिः मूत्राद्युत्सर्गादिना, अधार्मिको नास्तिक इत्यर्थः। प्रियाद्ययोगे हेतुमाह—धर्मेति। हि यस्मात्ते प्रियाप्रिये धर्माधर्मकार्ये अतस्तत्राशरीतायां धर्माधर्म-योरसंभवादित्यन्वयः। सशरीरत्ववदशरीरत्वस्यापि मरणादिजन्याशरीरत्ववद्धर्मादिकार्यत्वे प्रियादियोगः स्यादेवेत्या-शङ्क्य ज्ञानकार्यस्याशरीरत्वस्याभिमाननिवृत्त्युपलक्षितात्मस्वरूपत्वान्नैवमित्याह—अशरीरता त्विति। अतो दूरत

स्पृशतः। ननु यदि प्रियमप्यशरीरं न स्पृशतीति यन्मघवतोक्तं सुषुप्तस्यो विनाशमेवापीतो भवतीति तदेवेहाप्यापन्नम्। नैष दोषः। धर्माधर्मकार्ययोः शरीरसंबन्धिनोः प्रियाप्रिययोः प्रतिषेधस्य विवक्षितत्वात् अशरीरं न प्रियाप्रिये स्पृशत इति। आगमापायिनोर्हि स्पर्शशब्दो दृष्टो यथा शीतस्पर्श उष्णस्पर्श इति न त्वग्नेरुष्णप्रकाशयोः स्वभावभूतयोरग्निना स्पर्श इति भवति तथाऽग्नेः सवितुर्वोष्णप्रकाशवत्स्वरूपभूतस्याऽऽनन्दस्य प्रियस्यापि नेह प्रतिषेधः "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्म" इत्यादिश्रुतिभ्यः। इहापि भूमैव सुखमित्युक्तत्वात्।

ननु भूम्नः प्रियस्यैकत्वेऽसंवेद्यत्वात्स्वरूपेण वा नित्यसंवेद्यत्वान्निर्विशेषतेति नेन्द्रस्य तदिष्टम्। "नाह खल्वयं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामि" इत्युक्तत्वात्। तद्धोन्द्रस्येष्टं यद्भूतानि चाऽऽत्मानं च जानाति न चाप्रियं किंचिद्वेत्ति स सर्वांश्च लोकानाप्नोति सर्वांश्च

### नरेन्द्रपुरीयं टिप्पणम्

प्रियस्पर्शाभावं श्रुत्वा अपुरुषार्थत्वं शङ्कते—ननु भूम्न इति। भेदो न पुरुषार्थत्वोपयोगी केवलव्यतिरेकाभावात् सुखसाक्षात्कार एव तु पुरुषार्थः। स चाभेदेऽपि विद्यत इत्याशङ्क्याऽऽह—स्वरूपेण वेति। स्वप्रकाशत्वेन स्वरूपसुखस्फूर्तेः संसारदशायामपि सम्भवात् बन्धमोक्षयोरविशेषता स्यादित्यर्थः। किञ्च निर्विशेषसुखस्फुरणमिन्द्रस्येष्टमपि न भवतीत्याह—नेन्द्रस्येति। विषयविषयिभावेन दर्शनं यद्यपीन्द्रस्येच्छागोचरीभूतं तन्न परं श्रेयो "यदल्पं तन्मर्त्यमि"ति

### आनन्दगिरिटीका

प्रियस्पर्शाभावं श्रुत्वा मोक्षस्यापुमर्थत्वं शङ्कते—नन्विति। इहापीति मुक्तो गृह्यते। स्वाभाविकप्रियाप्रतिषेधान्नापुमर्थत्वं मुक्तेरित्युत्तरमाह—नैष दोष इति। प्रतिषेधमेवाभिनयति—अशरीरमिति। कादाचित्कयोरेव प्रियाप्रिययोरेष निषेध इत्यत्र नियामकमाह—आगमापायिनोरिति। कादाचित्के स्पर्शशब्दवन्न स्वात्मन्येतच्छब्दोऽस्तीत्याह—न त्विति। आत्मनि तर्हि कादाचित्कमेव प्रियमिति तन्मात्रप्रतिषेधात्तदवस्थमपुमर्थत्वमित्याशङ्क्याऽऽह—सवितुरिति। भूमविद्यालोचनायामपि सुखमात्रस्याऽऽत्मनि न प्रतिषेधोऽस्तीत्याह—इहापीति।

तथाऽपि विषयविषयिभावेन भेदाभावात्तदवस्थमपुरुषार्थत्वमिति शङ्कते—नन्विति। भेदो न पुमर्थत्वोपयोगी केवलव्यतिरेकाभावात्सुखसाक्षात्कारस्तु पुरुषार्थः स चाभेदेऽपि विद्यत इत्याशङ्क्याऽऽह—स्वरूपेणेति। आत्मनि विशेषज्ञानराहित्यमिन्द्रस्य नेष्टमित्यत्र हेतुमाह—नाहेति। किं तर्हीन्द्रस्येष्टमित्याशङ्क्याऽऽह—तद्धेति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

एव न प्रियाप्रिये स्पृशत इत्यन्वयः। ननु मुक्तौ प्रियप्रतिषेधे सुखाभावेन पुरुषार्थभागित्वाभावाद्विद्यमानस्यापि आत्मनो विनष्टप्रायत्वं प्राप्तमिति शङ्कते—ननु यदीति। यद्वा प्रियशब्दितस्यानन्दस्य आत्मस्वरूपत्वात्तन्निषेधे स्वरूपमेव निषिद्धं स्यात्ततश्च आत्मनो विनाशापत्तिरिति शङ्कते—ननु यदीति। अप्रियसमभिव्याहारेण तत्तुल्यस्य जन्यस्यैव प्रियस्य प्रतिषेधो न स्वरूपभूतस्येति परिहरति—नैष दोष इति। स्पृशेस्संबन्धवाचित्वात्तस्य च असंबन्धपूर्वकत्वादयुतसिद्धयोरप्यन्यतरस्यासंबन्धसंभवात्संबन्धस्य च भिन्ननिष्ठत्वात्, अभिन्नस्यानन्दस्य तदुभयाभावेन स्पृशत्यर्थत्वाभावान्न तेन शब्देन तस्य प्रतिषेध इति तत्रैव हेत्वन्तरमाह—आगमेति। तदेवान्वयव्यतिरेकाभ्यां दर्शयति—यथेति। जलादिसंबन्धे देवदत्तेन शीतादिः स्पृष्ट इति व्यवहारो दृश्यते न त्वग्निना जलेन वा स्वभावभूतमुष्णं शीतं वा स्पृष्टमिति व्यवहारोऽस्तीत्यर्थः। फलितमाह—सवितुरिति। अत इति शेषः। स्वरूपभूतत्वे सुखस्य प्रमाणमाह—विज्ञानमिति। अत इहापि आगन्तुकप्रियनिषेधिकया श्रुत्या स्वरूपभूतं प्रियं न निषिद्धं किन्तु विवक्षितमिति भावः। सुखस्य स्वरूपत्वे वेद्यत्वाभावेन पुरुषार्थत्वं न स्यात् स्वात्मनिष्ठतया वेद्यस्यैव लोके पुरुषार्थत्वदर्शनादिति। शङ्कते—नन्विति। असंवेद्यत्वादिति च्छेदः। अभेदे कर्मत्वं न संभवतीति तस्याप्रतीतस्यापुरुषार्थत्वमित्यर्थः। स्वप्रकाशतया वेदने च कर्मतया अप्रतीतेर्न पुरुषार्थत्वमित्याह—स्वरूपेणेति। निर्विशेषतेति। कर्तृकर्मभावादिविशेषरहितेति न पुरुषार्थतेति शेषः। न केवलं लौकिकरीत्या स्वनिष्ठस्य संवेद्यस्यैव पुरुषार्थत्वं, किन्तु इन्द्राभिप्रायेणाप्येवमेवेत्याह—नेन्द्रस्येति। आत्मानं भूतानि च न जानातीति द्वितीयया कर्मत्वेनाज्ञातस्याभोग्यत्वानुवादेन विपर्ययेण तया ज्ञातस्यैव भोग्यत्वोक्त्या सुखस्यापि तथाविधस्यैव भोग्यत्वमभिप्रेतमित्याह—तद्धोन्द्रस्येति। भूतानि चात्मानं

कामान्येन ज्ञानेन । सत्यमेतदिष्टमिन्द्रस्येमानि भूतानि मत्तोऽन्यानि लोकाः कामाश्च सर्वे मत्तोऽन्येऽहमेषां स्वामीति । न त्वेतदिन्द्रस्य हितम् । हितं चेन्द्रस्य प्रजापतिना वक्तव्यम् । व्योमवदशरीरात्मतया सर्वभूतलोककामात्मत्वोपगमेन या प्राप्तिस्तद्धितमिन्द्राय वक्तव्यमिति प्रजापतिनाऽभिप्रेतम् । न तु राज्ञो राज्याप्तिवदन्यत्वेन । तत्रैवं सति कः केन विजानीयादात्मैकत्व इमानि भूतान्ययमहमस्मीति ।

नन्वस्मिन्पक्षे "स्त्रीभिर्वा यानैर्वा" "स यदि पितृलोककामः" "स एकधा भवति" इत्याद्यैश्वर्यश्रुतयोऽनुपपन्नाः । न । सर्वात्मनः सर्वफलसंबन्धोपपत्तेरविरोधात् । मृद इव सर्वघटकरककुण्डाद्याप्तिः । ननु सर्वात्मत्वे दुःखसंबन्धोऽपि

## नरेन्द्रपुरीयं टिप्पणम्

श्रुतेः । परं च श्रेयः परमाप्तेनोपदेष्टव्यम् । तस्मादविद्यानिवृत्त्या निर्दुःखस्वरूपसुखसाक्षात्कारः पुरुषार्थ इत्याह—सत्यमित्यादिना । सर्वेषां भूतानां लोकानां कामानाञ्चात्मा चित्सत्तामात्रं तद्रूपत्वमेव चेन्मुक्तस्योपगम्यते तर्ह्यैश्वर्यश्रुतिविरोध इत्याह—नन्वस्मिन्पक्ष इति । सगुणविद्यावतां यदैश्वर्यं तन्निर्गुणविदः स्तुत्यर्थं संकीर्त्यते । यतोऽविकल्पब्रह्मभूतो मुक्तः सगुणविदामप्यात्मा अतस्तत्फलं तत्रोपचरितुं युक्तमित्याह—सर्वात्मन इति । सर्वात्मत्वे तर्हि निन्दापि प्रसज्यत इत्याह—नन्विति । यथा दुःखस्य दुःखं न भवति स्वात्मनि वृत्तिविरोधात् तथा दुखस्यात्मा न दुःखी

## आनन्दगिरिटीका

येन ज्ञानेनाऽऽप्नोति तदिष्टमिन्द्रस्येति पूर्वेण संबन्धः । किमिदं विशेषविज्ञानमिन्द्रस्येष्टमित्युच्यते किंवा हितमिति विवक्ष्यते तत्राऽऽद्यमङ्गीकरोति—सत्यमिति । द्वितीयं दूषयति—न त्विति । द्वितीयाद्वै भयं भवतीत्यादिश्रुतेरित्यर्थः । तथाऽपीष्टमेवेन्द्राय प्रजापतिनोपदेष्टव्यमित्याशङ्क्याऽऽह—हितं चेति । किं तर्हि तस्य हितमिति चेत्तदाह—व्योमवदिति । हितं वक्तव्यमिति संबन्धः । हितमेव न त्विष्टमिति स्थिते फलितमाह—तत्रेति ।

सर्वेषां भूतानां लोकानां कामानां चाऽऽत्मा सच्चिदानन्दमात्रं तद्रूपत्वं चेन्मुक्तस्येष्यते कथं तर्हि तस्यैश्वर्यश्रुतयो निर्वहन्तीति चोदयति—नन्विति । सगुणविद्यावतां यदैश्वर्यं तन्निर्गुणविद्यास्तुत्यर्थं संकीर्त्यते । ब्रह्मीभूतस्य मुक्तस्य सगुणविद्याया अपि प्रत्यग्भूतत्वात्फलस्य तत्रोपचरितुं युक्तत्वादिति परिहरति—नेत्यादिना । सर्वात्मत्वे

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

च जानाति न चाप्रियं किंचिद्वेत्तीति यत् तद्धि इन्द्रस्येष्टं, येन च ज्ञानेन भूतादीनि कर्मतया जानाति लोकादींश्च आप्नोति साक्षात्करोति तच्च ज्ञानमिष्टमिति पूर्वेणान्वयः । अतस्तथैव भेदेनैव सुखज्ञानं वक्तव्यमिति शेषः । भ्रान्तेन्द्रदृष्ट्या लोकदृष्ट्या च तत्त्वेन ज्ञातस्य पुरुषार्थत्वेऽपि न परमार्थदृष्ट्या तस्य पुरुषार्थत्वं "नाल्पे सुखमस्ति अथ यदल्पं तन्मर्त्यं द्वितीयाद्वै भयं भवति, मृत्योस्स मृत्युमाप्नोती"त्यादिश्रुतिभिः परिच्छिन्नस्य मर्त्यत्वेन निन्दितत्वाद्यावद्विकारं तु विभागं इति न्यायेन विभक्तस्य विकारत्वेनानित्यत्वापत्तेश्च । अतस्सुखसाक्षात्कारमात्रस्यैव नित्यपुरुषार्थत्वं, भेदांशस्तु लोकस्याविद्यापरिकल्पितोऽपुरुषार्थः । अतः इन्द्रस्य हितं कालान्तेऽप्यनश्वरं स्वरूपसुखमेव प्रजापतिरूपया श्रुत्या वक्तव्यत्वेनाभिप्रेतमित्याह—सत्यमित्यादिना, न त्वेतदिति । अनित्यत्वादिदोषापत्तेरिति शेषः । हितं चेति । उक्तदोषरहितं स्वरूपसुखमेव वक्तव्यमित्यर्थः । एवं लोककामावाप्तिरपि लोकादिस्वरूपतयैव अवस्थानमभिप्रेतं न तु भेदेनेत्याह—व्योमवदिति । ननु सर्वस्वरूपत्वे सर्वसम्बन्धित्वात्सशरीरत्वलक्षणं सोपाधिकत्वं प्राप्तमित्याशङ्क्य स्वाभाविकाशरीरत्वापरित्यागेन सर्वसम्बन्धाङ्गीकारादेतस्य च मृषात्वान्न वास्तवाशरीरत्वविरोध इत्याशयेन अशरीरात्मतयेत्युक्तम् । इत्थंभावे तृतीया । अशरीरात्मनः सन्निधावेवेत्यर्थः । स्वरूपाविकारेणान्यसम्बन्धे दृष्टान्तो व्योमवदिति । अतो वेद्यत्वं सुखस्य नास्तीति यच्चोदितं तदिष्टमित्याह—तत्रैवं सतीति । अशरीरत्वे मोक्षे कर्तृकर्मभेदाभावे पूर्वोक्तश्रुतिविरोधं शङ्कते—नन्विति । यद्यपि स यदि पितृलोककाम इति वाक्यं सगुणदहरविद्याशेषो नेहोदाहार्यं, तथापि विद्याद्वयस्यैक्यमारोप्य पूर्वपक्षिणोदाहृतमिति न दोषः । सिद्धान्ती तु तदुक्तमङ्गीकृत्यैव अशरीरात्मविदो जीवन्मुक्तस्य तदवस्थायां परिच्छेदाभिमाननिवृत्त्या सर्वात्मत्वापत्तौ सर्वफलसम्बन्धात् येन येन यद्यत्फलमनुभूयते तत्सर्वमस्यैवेति स्तुत्यर्थमुच्यत इत्युत्तरमाह—न, सर्वात्मन इति । विदुषो ब्रह्मभावमापन्नस्य तद्रूपेण सर्वोपादानत्वेन सर्वाप्तिं दृष्टान्तेन व्यनक्ति—मृद इवेति । तर्हि जक्षणादिवन्नरकादिदुःखस्यापि प्राप्तेर्हेयत्वं

स्यादिति चेन्न, दुःखस्याप्यात्मत्वोपगमादविरोधः। आत्मन्यविद्याकल्पनानिमित्तानि दुःखानि रज्ज्वामिव सर्पादिविकल्पनानिमित्तानि। सा चाविद्याऽशरीरात्मैकत्वस्वरूपदर्शनेन दुःखनिमित्तोच्छिन्नेति दुःखसंबन्धाशङ्का न संभवति। शुद्धसत्त्वसंकल्पनिमित्तानां तु कामानामीश्वरदेहसंबन्धः सर्वभूतेषु मानसानां पर एव सर्वसत्त्वोपाधिद्वारेण भोक्तेति सर्वाविद्याकृतसंव्यवहाराणां पर एवाऽऽत्माऽऽस्पदं नान्योऽस्तीति वेदान्तसिद्धान्तः।

नरेन्द्रपुरीयं टिप्पणम्

भविष्यतीत्याह—न, दुःखस्येति। तर्हि दुःखानामात्मा मुक्त इति दुःखीस्यात्तत्राह—आत्मन्यविद्येति। जीवाः स्वभावतो न दुःखभाजः किन्त्वविद्यया। सा च मुक्तस्य दग्धेति न दुःखस्य प्रसङ्ग इत्यर्थः। तर्हि अविद्याया दग्धत्वादविद्याध्यारोपितमीश्वरस्यैश्वर्यं सगुणविद्याफलभूतं दग्धमेवेति कथं तत्स्तुत्यर्थमुपदिश्यत इत्याशङ्क्याह—शुद्धसत्त्वेति। शुद्धसत्त्वं धर्माद्यसङ्गि मायाभूतं तस्माज्जातस्सङ्कल्पो निमित्तं येषां कामानामैश्वर्यभेदानां ते तथोक्तास्तेषामीश्वरदेहसम्बन्धो न त्वस्मदाद्यविद्याध्यारोपितानां "त इमे सत्याः कामा अनृतापिधानाः।" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी"त्यादिश्रुतेः। अस्मदविद्यानिरपेक्षैश्वर्यावगमादविद्यादाहेऽपि विद्यासिद्धकामप्राप्त्यभिधानं घटत इत्यर्थः। जीवानामपीश्वराद्भिन्नत्वमवगम्यते। विरुद्धधर्माक्रान्तत्वात्तत्कथमीश्वरशरीरगतकामावाप्तिरुच्यत इत्याशङ्क्याह—सर्वभूतेष्विति। मानसानामित्यन्वयव्यतिरेकाभ्यां कामानां मनोविकारत्वावगमान्न जीवास्तत्त्वतस्संसारिण इति विरुद्धधर्माक्रान्तत्वमसिद्धं "रूपं रूपं प्रतिरूपो बभूव" "एको देवः सर्वभूतेषु गूढः" इत्यादिभ्यः श्रुतिभ्यः। स्तूयत एव चिद्धातुर्मायोपाधी सत्यकामादिगुणसम्पन्नस्स एवाविद्याकार्येषु मनस्सु प्रतिबिम्बतया संसारीति स्वरूपैक्याभिप्रायेण मुक्तैश्वर्यसंकीर्तनं न विरुध्यत इति स्थितम्। जीवानुवादेन पर्यायचतुष्टयेऽपि

आनन्दगिरिटीका

निन्दाऽपि प्राप्नोतीति शङ्कते—नन्विति। दुःखस्य दुःखत्वाभाववत्तस्याऽऽत्मा विद्वानपि न दुःखी भविष्यतीति समाधत्ते—न, दुःखस्येति। तर्हि दुःखिनामात्मा मुक्त इति दुःखी स्यात्तत्राऽऽह—आत्मनीति। न तावदात्मनः स्वभावतो दुःखित्वं किन्त्वाविद्यकं सा च मुक्तस्य दग्धेति दुःखित्वाप्रसक्तिरित्यर्थः। तर्हि विद्यया दग्धायामविद्यायां तदध्यारोपितमैश्वर्यमपीश्वरस्य सगुणविद्याफलभूतं दग्धमेवेति कथं स्तुत्यर्थमिह तदुपदेशसिद्धिरित्याशङ्क्याऽऽह—शुद्धेति। शुद्धं सत्त्वं रजस्तमोभ्यामस्पृष्टं तस्मान्मायैकदेशाज्जाताः संकल्पा निमित्तानि येषां कामानामैश्वर्यभेदानां ते तथोक्तास्तेषां सर्वेषु विषयेषु मनोमात्रेणेश्वराभिध्यानरूपेण सिद्धानामीश्वराख्येन स्वभावेनाभिसंबन्धो मायावस्थायां सिध्यतीत्यर्थः। ननु जीवानामेवाविद्यातत्कार्यसंबन्धो नेश्वरस्येति चेन्नेत्याह—पर एवेति।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स्यादिति शङ्कते—नन्विति। जक्षणादिजन्यसुखस्य "एतस्यैवानन्दस्य अन्यानि भूतानि मात्रामुपजीवन्ती"ति श्रुत्या आत्मस्वरूपत्वावगमाद्विदुषः तत्सम्बन्धेऽपि दुःखस्य नात्मस्वरूपता अविद्याकल्पितत्वादनात्मत्वात्। तस्याश्च कार्याया विद्यया नाशात् न दुःखप्राप्तिरित्याह—नेति। ननु जक्षणादिजन्यसुखस्य आत्मत्वेऽपि स्त्र्यादिभिः जक्षणादीनां विषयाणां अविद्याकल्पितत्वेन अनात्मत्वात्तेषां कथं विदुषा संबन्ध इत्याशङ्क्य तस्या यद्यपि जक्षणादीनां दुःखात्मत्वेन विद्याफलत्वानुपपत्तिः तदभिव्यक्तं सुखमेव तैश्शब्दैरुपलक्ष्यते न तु तेषां स्वरूपं तद्विशिष्टत्वाकारो वा सुखस्य विवक्षितः। तच्च सुखं विदुषस्स्वरूपमिति तत्सम्बन्धो न विरुध्यते दुःखन्तु नैवमिति पूर्ववाक्ये परिहारस्सूचित एव। तथापि तेषां स्वरूपविवक्षाङ्गीकारेण परिहारान्तरं वक्तुं तेषां सगुणब्रह्मविदुषां तावत्सम्बन्धमाह—विशुद्धेति। इह ईश्वरः अणिमाद्यैश्वर्यं प्राप्तस्सगुणब्रह्मविद्वानभिप्रेतः। तत्सम्बन्धः मानसानां कामानामस्तीति शेषः। नन्वेवमपि अशरीरात्मविदि तत्सम्बन्धः कथमुपपादित इत्यत आह—सर्वभूतेषु पर एवेति। भोक्तेति। सर्वकामसम्बन्धः सगुणविद्गतः तदात्मत्वाद्विदुषः तस्मिन्नुपचर्यत इति शेषः। परस्यैव सर्वाधिष्ठानत्वेनापि सर्वकामसम्बन्धं वदन्सर्वत्र भोक्तृत्वे प्रमाणमाह—सर्वेति वेदान्तसिद्धान्त इति। ततश्च सर्वं खल्विदं ब्रह्मेत्यादिश्रुतयः तत्र मानमित्यर्थः। एतदुक्तं भवति। स्तुत्यर्थं हि जक्षणादि तस्मिन्वस्तुतोऽविद्यमानमप्युच्यते। निरालम्बनस्तुत्ययोगादालम्बनार्थं तस्मिन् तत्सद्भावस्सर्वात्मत्वेनोपपादित इति न तदुपपादनवैयर्थ्यं भाष्ये शङ्क्यम्। दुःखादिकन्तु

य एषोऽक्षिणि पुरुषो दृश्यत इति च्छायापुरुष एव प्रजापतिनोक्तः। स्वप्नसुषुप्तयोश्चान्य एव। न परोऽपहतपाप्मत्वादिलक्षणो विरोधादिति केचिन्मन्यन्ते। छायाद्यात्मनां चोपदेशे प्रयोजनमाचक्षते। आदावेवोच्यमाने किल दुर्विज्ञेयत्वात्परस्याऽऽत्मनोऽत्यन्तबाह्यविषयासक्तचेतसोऽत्यन्तसूक्ष्मवस्तुश्रवणे व्यामोहो मा भूदिति। यथा किल द्वितीयायां सूक्ष्मं चन्द्रं दिदर्शयिषुर्वृक्षं कंचित्प्रत्यक्षमादौ दर्शयति पश्यामुमेष चन्द्र इति, ततोऽन्यं ततोऽप्यन्यं गिरिमूर्धानं च चन्द्रसमीपस्थं एष चन्द्र इति ततोऽसौ चन्द्रं पश्यति, एवमेतद्य एषोऽक्षिणीत्याद्युक्तं प्रजापतिना त्रिभिः

नरेन्द्रपुरीयं टिप्पणम्

ब्रह्मभावो विधीयत इति स्वाभिप्रायेण प्राजापत्यवाक्यं व्याख्याय वृत्तिकृतां व्याख्यानमनुवदति—य एष इत्यादिना। आदावेवोच्यमानः किल व्यामोहाय स्यादिति शेषः। स माभूदिति प्रथमं छायात्मोपदेशः कृत इत्याह—अत्यन्तबाह्येति। अशरीरतामापन्नो ज्योतिस्स्वरूपमापन्नस्साक्षात्कृतब्रह्मभावो यस्मिन् रममाणः स्यात्परमात्मैव चतुर्थे पर्याये उक्त इति योजना। प्रथमपर्याये छायात्मन उपदेशश्चेत्तर्हीन्द्रविरोचनयोस्सम्यग्दर्शित्वाद्विपरीतग्रहापनयाय

आनन्दगिरिटीका

चतुर्ष्वपि पर्यायेषु त्वमर्थानुवादेन तस्य तदर्थत्वं विधेयमिति स्वाभिप्रायेण प्रजापतिवाक्यं व्याख्यातं संप्रति स्वयूथ्यमतमुत्थापयति—य एष इति। प्रथमपर्यायस्य च्छायात्माविषयत्ववद्द्वितीयतृतीयपर्याययोरपि विज्ञानात्मविषयत्वमित्याह—स्वप्नेति। अन्य एव परस्मादुक्त इति संबन्धः। चतुर्थपर्यायवत्पर्यायत्रयेऽपि परमात्मैव कस्मान्नोच्यते तत्राऽऽह—न पर इति। अपहतपाप्मत्वादेरवस्थावत्त्वस्य च मिथो विरोधो हेत्वर्थः। नन्वन्तिमे पर्याये परस्योपदेशो युज्यते तज्ज्ञानस्य मुक्तिफलत्वात्किमिति पूर्वेषु पर्यायेषु च्छायादयो निर्दिश्यन्ते तत्फलाभावादत आह—छायाद्यात्मनां चेति। तत्र प्रथमं छायात्मोपदेशस्य प्रयोजनमाह—आदावेवेति। परस्यातिसूक्ष्मत्वेन दुर्विज्ञेयत्वात्तस्मिन्नेवाऽऽदावुच्यमाने सति तस्यापि सूक्ष्मस्य श्रवणेऽपि श्रोतुरनात्मनिष्ठस्य किल व्यामोहः स्यात् स मा भूदिति पृथक्छायात्मोपदेशः कृत इति संबन्धः। स्वप्नसुषुप्तयोर्विज्ञानात्मोपदेशस्य प्रयोजनं दर्शयन्नुक्तमर्थं दृष्टान्तेन स्पष्टयति—यथेत्यादिना। इतिशब्दस्तिङा संबध्यते। पर्यायान्तरस्य तात्पर्यमाह—चतुर्थे त्विति। मरणधर्मकाद्देहात्पृथग्भूत्वा

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सर्वात्मत्वेनैव प्राप्तमपि स्तुतिहान्यापत्त्या नोच्यते। वस्तुतो विचारे न कोऽपि संबन्धो विदुषीति। अत्र केचित् विदुषो जक्षणादिकं मुख्यमेव, मुख्ये संभवति गौणग्रहणानुपपत्तेः। न च अपहतपाप्मत्वादिगुणकस्य अशरीरतया सर्वोपाधिविमुक्तस्य उत्तमपुरुषतया परमात्मभूतस्य विदुषः स्त्र्यादिसम्बन्धो ज्ञातिसम्बन्धो वा नेति जक्षणाद्यनुपपत्तिरिति वाच्यम्, विदुषोऽन्यस्यैव परमात्मनः अपहतपाप्मादिरूपत्वात्। न च तस्यैव य एषोऽक्षिणीत्यादिना अवस्थात्रयसम्बन्धित्वोक्तेः अपहतपाप्मादिगुणकस्य कथमन्यत्वमिति वाच्यम्। तस्या एव असिद्धेरित्याहुः। तन्मतमनुवदति—य एषोऽक्षिणीत्यादिना। छायापुरुष एवेति। श्रुतार्थत्यागे हेत्वभावादिति भावः। ननु छायापुरुषस्य कथं स्वप्नसुषुप्तिकालीनपुरुषाभिन्नत्वमेतं त्वेव त इत्यनेनोक्तम् अत आह—स्वप्नेति। न केवलं छायापुरुषादन्यत्वं स्वप्नसुषुप्तिकालीनस्य, किंतु अपहतपाप्मादिगुणकात्परस्मादपीत्याह—न पर इति। विरोधादिति। संसारिणोऽपहतपाप्मत्वादिविरोधादित्यर्थः। एतं त्वेव त इति वाक्यन्तु चतुर्थपर्याये एतमपहतपाप्मादिगुणकं वक्ष्यामीत्येवमर्थकमिति तेषामभिप्राय इत्यर्थः। तर्हि परमात्मानं वक्तव्यत्वेन प्रकृतं विहाय अन्येषां छायापुरुषादीनां उक्तौ किं प्रयोजनमत आह—छायादीति। आदावेव सूक्ष्मवस्तुश्रवणे व्यामोहः स्यात्। स माभूदिति योजना। यस्मिन्नुत्तमपुरुषे परंज्योतिरुपसंपन्नो विद्वान् स्त्र्यादिभिर्जक्षत् क्रीडन् रममाणो भवति स उत्तमः पुरुष इतीत्येतावन्मात्रमेव तव मते उत्तमपुरुषोपदेशः। अनेन च रूपेण परमात्मज्ञानमादावेव संभवतीति दुर्विज्ञेयत्वमस्यासिद्धं इति सूचयितुं आद्यः किलशब्दः। शाखाग्रादीनां चन्द्रसन्निकृष्टत्वेन प्रतीयमानानां चन्द्रप्रतीतिद्वारत्वसंभवेऽपि परस्मादत्यन्तभिन्नानां तद्विलक्षणानां तदसम्बन्धिनां छायापुरुषादीनां तत्प्रतीतिद्वारत्वं न संभवतीति द्वितीयेन किलेत्यनेन सूचितम्। तर्हि वक्तव्यत्वेन प्रतिज्ञातः परः कुत्रोच्यते इति तदाह—चतुर्थ इति। ज्योतिः स्वरूपमशरीरं परमात्मानं आपन्न इत्यन्वयः। आपत्तिश्च सम्बन्धमात्रमिति भावः। अनेन अशरीरं वाव सन्तमिति तन्मते परमात्मा उक्त इति

पर्यायेन पर इति। चतुर्थे तु पर्याये देहान्मर्त्यात्समुत्थायाशरीरतामापन्नो ज्योतिःस्वरूपम्। यस्मिन्नुत्तमपुरुषे स्त्र्यादिभिर्जक्षत्क्रीडन्नरममाणो भवति स उत्तमः पुरुषः पर उक्त इति चाऽऽहुः।

आनन्दगिरिटीका

ज्योतिःस्वरूपमशरीरत्वं प्राप्तो यद्यपि चतुर्थे पर्याये कथ्यते तथाऽपि कथमसौ परमात्मा स्यादित्याशङ्क्याऽऽह—यस्मिन्निति। स संप्रसादो यो विद्वान्कर्तृत्वेन विवक्षितः।

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

सूचितम्। ननु स्वरूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति वाक्यात् स्वरूपाभिनिष्पन्नस्य विदुष एव उत्तमपुरुषत्वं प्रतीयते तच्छब्दस्य प्रकृतपरामर्शित्वात् तत्कथं तयोर्भेद इत्याशङ्क्य तच्छब्दो न प्रकृताभिनिष्पन्नपरामर्शी, किन्तु विदुषो जक्षणाद्यधिकरणत्वेन वक्ष्यमाणपरामर्शीत्याह—यस्मिन्निति।

अत्र प्रजापतिवाक्यं जीवस्य धर्मोपाधिनिरासद्वारा ब्रह्मत्वपर्यवसितं उपक्रमोपसंहारपर्यालोचनया। उपक्रमस्तावत् य आत्मेति प्रक्रान्तस्य परमात्मनो य एषोऽक्षिणीति द्रष्टृस्वरूपानुवादेन एष आत्मेति होवाचेति तत्स्वरूपत्वप्रतिपादनादभेदपरः। न चात्र च्छायात्मोक्तः, तथासति एष आत्मेत्यात्मश्रुतेः पुरुषश्रुतेरमृताभयत्वादि-लिङ्गानां च विरोधापत्तेः। न चात्मपक्षे तस्य दृश्यत इति चाक्षुषत्वानुपपत्तिः। आत्मा द्रष्टव्यः, आत्मानं पश्ये-दित्यादिदृशेरपरोक्षत्वमात्रार्थत्वात्। छायात्मनोऽपि इन्द्राभिमुखपुरुषाक्षिगतस्य पराग्रूपस्य इन्द्रात्मत्वानुपपत्तिः, स्वाक्षिगतस्य च स्वदृश्यत्वानुपपत्तिः। न हि प्रजापतेर्दृश्येन इन्द्रं प्रति दृश्ये भेदो भवति। इन्द्रं प्रति हि अत्र दृश्यत्वेन उपदेशो तं प्रति तस्य आत्मोपलक्षकत्वं स्यात्, शाखादिवत्। न हि येन यदज्ञातं तं प्रति तदुपलक्षणत्वेन वक्तुं शक्यं, उपलक्षणशाखाद्यज्ञाने उपलक्ष्यस्य चन्द्रादेरज्ञानवत् आत्मनोऽपि अज्ञानप्रसंगात्, अतः छायात्मनोऽपि दृश्यत्वानुपपत्तिः। पुरुषश्रुतेरपि तदाकारतामात्रेण तस्मिन्गौणत्वापत्तेश्च, शरीरत्वाभावेन रूढेः, पूर्णत्वाद्यभावेन योगस्य च तस्मिन्नसंभवात्। "अन्तर उपपत्ते"रिति सूत्रविरोधापत्तेश्च। तत्र हि उपकोसलविद्यागतं य एषोऽक्षिणीति उपकोसलविद्यावाक्यमभ्युदाहृत्य अक्ष्यभ्यन्तर आत्मैव न छायात्मा, अमृताभयत्वादिधर्माणां आत्मन्युपपत्तेः, छायायां चानुपपत्तेरिति हि साधितम्।

यद्यप्यत्र विद्याभेदो निर्गुणत्वादस्य तथापि न्यायस्यैकरूपत्वमिति तद्विरोधः स्यादेव, अतः उपक्रमः अभेद-परः, उपसंहारोऽपि तथैव स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष इति अभिनिष्पन्नस्य उत्तमपुरुषत्वोक्तेः। न च पूर्ववाद्युक्तरीत्या तच्छब्दस्य वक्ष्यमाणपरामर्शित्वं युक्तम्। स तत्र पर्येति यत्र पर्येति स उत्तमः पुरुष इति यत्रशब्दाध्याहारः पर्येतीत्यत्र आवृत्तिश्च स्यात्। किञ्च स तत्र पर्येतीति तत्रशब्देन उत्तमपुरुषं परामृश्य तदधिकरणकपर्ययणे विहिते यत्र पर्येतीति पर्ययणाधिकरणमनूद्य तस्य स उत्तमः पुरुष इति पुरुषत्व-विधानं तस्मिन्विहिते तत्रशब्देन तत्परामर्श इति स उत्तम पुरुषः स तत्र पर्येतीति वाक्ययोरर्थप्रतिपादने इतरेतराश्रयप्रसङ्गस्स्यात्।

किञ्च अश्वप्रतिग्रहेष्ट्यधिकरणे "स स्वां देवतामार्छंत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यदि"त्यत्र प्रथमान्ततया त्रयाणां तच्छब्दानां एकार्थत्वं साधितम्। तन्न्यायेन इहापि स उत्तमपुरुषः स तत्र पर्येति इत्यनयो-स्तच्छब्दयोः एकार्थत्वमेव न्याय्यं न तु प्रथमस्य उत्तमपुरुषः द्वितीयस्याभिनिष्पन्नोऽर्थ इत्यर्थभेदः। तस्माद्यस्सं-प्रसादः स्वेन रूपेण अभिनिष्पन्नः, स उत्तमपुरुषः स एव संप्रसाद उत्तमपुरुषतामापन्नस्तत्र उत्तमपुरुषात्मके स्वरूपे स्वे महिम्नि स्थितः, पश्यतीत्यर्थ एव निर्दिष्ट इति उपसंहारोऽप्यभेदपरः। तथा पर्यायत्रये"प्येष आत्मेति होवाचे"ति, तच्च तदवस्थासाक्षिणं द्रष्टारमनूद्य तस्य प्रकृतपरमात्माभेदाभ्यासः। तथा अभेदविरोधिनां च प्रियाप्रियादिसंसार-धर्माणां मघवन्मर्त्यं वा इदं शरीरमित्यारभ्य न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्तीति औपाधिकत्वोक्ति-पूर्वकं अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति निराकरणानुपपत्तिः। सर्वलोककामोपेक्षणं चाभेदपरतामेव दृढयति। न चैतत्सर्वं तात्पर्यलिङ्गं अर्थवादगतः सर्वात्मपरतया अन्यथाप्युपपद्यमानो जक्षणादिरन्यथा कर्तुं शक्नोति, "उत्तराच्चेदाविर्भूतस्वरूपस्त्वि"ति सूत्रं च सर्वोपाधिविनिर्मुक्ततया आविर्भूतस्वरूपत्वेन ब्रह्मभावमापन्नप्रत्यगात्म-परत्वमेव कृत्स्नस्य प्रजापतिवाक्यस्य दर्शयति। न च सदा संसारधर्मवर्जितस्य परस्य आविर्भूतस्वरूपत्वमुपपद्यते,

सत्यं, रमणीया तावदियं व्याख्या श्रोतुम्। न त्वर्थोऽस्य ग्रन्थस्यैवं संभवति। कथम्। अक्षिणि पुरुषो दृश्यत इत्युपन्यस्य शिष्याभ्यां छायात्मनि गृहीते तयोस्तद्विपरीतग्रहणं मत्वा तदपनयायोदशरावोपन्यासः किं पश्यथ इति च प्रश्नः साध्वलंकारोपदेशश्चानर्थकः स्यात् यदि च्छायात्मैव प्रजापतिनाऽक्षिणि दृश्यत इत्युपदिष्टः। किंच यदि स्वयमुपदिष्ट इति ग्रहणस्याप्यपनयकारणं वक्तव्यं स्यात्। स्वप्नसुषुप्तात्मग्रहणयोरपि तदपनयकारणं च स्वयं ब्रूयात् न चोक्तं [तेन] तेन मन्यामहे नाक्षिणि च्छायात्मा प्रजापतिनोपदिष्टः। किं चान्यदक्षिणि द्रष्टा चेद्दृश्यत इत्युपदिष्टः स्यात्तत इदं युक्तम्। एतं त्वेव त इत्युक्त्वा स्वप्नेऽपि द्रष्टुरेवोपदेशः।

### नरेन्द्रपुरीयं टिप्पणम्

प्रजापतेः प्रयासो विफलः स्यात्। अतो नेयं व्याख्या युक्तेत्याह—सत्यमित्यादिना। अथास्याचार्यस्यायं स्वभावः स्वोपदिष्टमपि निवर्तयिष्यति तत्राह—किञ्चेति। एतच्छब्देन सन्निहितावलम्बिना छायात्मानमनुकृष्य स्वप्ने द्रष्टुरुपदेशे प्रजापतेर्मृषावादित्वप्रसङ्गादपि प्रथमपर्याये द्रष्टैवोपदिष्ट इत्याह—किञ्चान्यदिति। स्वप्नावस्थाविशिष्टस्य स्थानान्तरे

### आनन्दगिरिटीका

किमिदं व्याख्यानं शब्दानुसारि किंवाऽर्थानुसारीति विकल्प्याऽऽद्यमङ्गीकरोति—सत्यमिति। द्वितीयं दूषयति—न त्विति। असंभवमेवाऽऽकाङ्क्षाद्वारा स्फुटयति—कथमित्यादिना। यद्याद्ये पर्याये छायात्मोपदिश्येत तर्हीन्द्रविरोचनयोः सम्यग्दर्शित्वाद्विपरीतग्रहापोहार्थं प्रजापतेरायासो वृथा स्यात्। तेन नेदं व्याख्यानमर्थानुसारीत्यर्थः। इतश्च नाऽऽद्ये पर्याये छायात्मोपदेशोऽस्तीत्याह—किंचेति। प्रजापतिनोपदिष्टस्यापि च्छायात्मनो ग्रहणं न मृष्यतीत्याशङ्क्य हेत्वन्तरं स्पष्टयति—यदीति। तेन च्छायात्मग्रहणापनयकारणावचनेनेति यावत्। तेन प्रजापतिनेत्येकस्तच्छब्दो योज्यः। इतश्च प्रथमे पर्याये द्रष्टुरेवोपदेशो न च्छायापुरुषस्येत्याह—किंचान्यदिति। एतच्छब्देन संनिहितावलम्बिना छायात्मानमनुकृष्य स्वप्ने द्रष्टुरुपदेशे प्रजापतेर्मृषावादित्वं प्रसज्येत तथा च प्रथमेऽपि पर्याये द्रष्टैवोपदिष्ट इत्यर्थः।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

आविर्भूतमिति पदं किञ्चित्कालं संसारधर्ममग्नं ततो विमुक्तं प्रत्यगात्मानं वक्तुं शक्नोति अनाविर्भावपूर्वकत्वादाविर्भावस्य। न च ममापि परंज्योतिरुपसंपद्य स्वेन रूपेण अभिनिष्पन्नो जीवः आविर्भूतस्वरूप उच्यते न पर इति वाच्यं; प्रजापतिवाक्यस्य तव मतेऽपि तत्परत्वाभावेन वाक्यस्या तत्परत्वप्रतिपादकसूत्रविरोधतादवस्थ्यात्। न च स यत्र पर्येति स उत्तमः पुरुष इत्येवं परमात्मप्रतिपत्त्युपायतया तथाविधो जीवो निर्दिश्यत इति सूत्रार्थ इति वाच्यं "इतरपरामर्शात्स इति चेन्नासंभवात्" "अन्यार्थश्च परामर्शः" इति सूत्राभ्यामेव तदर्थस्य उक्तत्वेन अस्य सूत्रस्य पौनरुक्त्यापत्तेः, तस्मादिदं सूत्रं प्रजापतिवाक्यस्य आविर्भूतशब्दितसर्वसंसारधर्मविनिर्मुक्तप्रत्यगात्मनो ब्रह्मत्वपरत्वमेव दर्शयतीत्येव युक्तं, तस्माच्छ्रुतिगतोपक्रमादिपर्यालोचनया सूत्रपर्यालोचनया प्रजापतिवाक्योपक्रमावसरे अस्मदुक्तपौनरुक्त्यादिदोषपरिहाराय च अभेदपरत्वे स्थिते श्रोतुर्व्यामूढस्य पुनर्व्यामोहार्थमेव केषांचिद्व्याख्यानं, न तु तन्निवृत्त्यर्थमिति दूषयति—सत्यमित्यादिना। ग्रन्थशब्दितस्तुतेस्तदुक्तार्थासंभवे हेत्वन्तरं वक्तुं पृच्छति—कथमिति। य एषोऽक्षिणीत्यत्र छायात्मैव चेदुपदिश्यते तर्हि शिष्ययोः छायात्मभ्रमनिवृत्त्यर्थं प्रजापतेर्यावान्यत्नः अन्वयव्यतिरेकादिविषयस्स सर्वोऽपि व्यर्थः स्यात्। ननु आत्मत्वप्रतिपत्तौ छायात्मन एव प्रजापतिना उपदिष्टत्वादित्याह—अक्षिणि पुरुष इत्यादिना। ननु आत्मत्वप्रतिपत्तौ वृक्षशाखावत् द्वारतयैवोक्तत्वात् तदपनयनं विना विवक्षितात्मप्रतिपादनासंभवात्तदतिरिक्तात्मप्रतिपादनार्थं वृक्षशाखाया इव तदपनयनार्थं यत्नोऽर्थवानित्याशङ्क्य तर्हि त्वन्मते स्वप्नसुषुप्तपुरुषयोरपि छायापुरुषवत् द्वारत्वाविशेषात्तदपनयनार्थमपि यत्नः कर्तव्यस्स्यात्। न चैतदस्ति, तस्मान्नैवं वक्तुं शक्यमित्याह—किञ्चेति। किंचशब्दः उक्तशङ्कानिराससमुच्चयार्थः। एतत्समुच्चितः पूर्वहेतुः साधक इत्यर्थः।

इदमुपलक्षणम्—छायात्मन्येव प्रजापतिनोक्ते नायं मुख्यात्मा, किन्तु आत्मप्रतिपत्तिद्वारतया मयोक्त इत्येवं साक्षादपनयः कर्तुं शक्यः पूर्ववच्चित्तदुःखप्राप्तेरिति, तदपनयनार्थं उदशरावादिनिदर्शनादिबहुयत्नोऽपि व्यर्थः स्यादित्यपि द्रष्टव्यम्।

स्वप्ने न द्रष्टोपदिष्ट इति चेन्न। अपि रोदितीवाप्रियवेत्तेवेत्युपदेशात्। न च द्रष्टुरन्यः कश्चित्स्वप्ने महीयमानश्चरति। अत्रायं पुरुषः स्वयंज्योतिरिरिति न्यायतः श्रुत्यन्तरे सिद्धत्वात्। यद्यपि स्वप्ने सधीर्भवति तथाऽपि न धीः स्वप्नभोगोपलब्धिं प्रति करणत्वं भजते। किं तर्हि पटचित्रवज्जाग्रद्वासनाश्रया दृश्यैव धीर्भवतीति न द्रष्टुः स्वयं-

### नरेन्द्रपुरीयं टिप्पणम्

बाध्यत्वान्न तस्य द्रष्टुरुपदेश इति न वाच्यं, अनुभवविरोधादित्युक्तं, अन्यस्यासम्भवाच्च द्रष्टुरुपदेशो वाच्य इत्याह—न च द्रष्टुरन्य इति। प्रकाशकारणानां सूर्यादीनामुपरमे यः प्रकाशः स नैसर्गिक इति न्यायोऽनुपपन्नः। स्वप्नेऽप्यन्तःकरणस्य भावादिति प्रासङ्गिकमाशङ्क्याह—यद्यपीति। क्रिया करणपूर्विकेति व्याप्तेःकरणव्यापारेऽपि साक्षात्कारस्य सेश्वरवादिनां करणनित्यभावादनीश्वरवादेऽप्यात्मसन्निधानादप्युपपत्तौ पक्षे व्यभिचारशङ्कासंभवान्न मनः स्वप्नदृश्योपलब्धिं प्रति करणम्, किं तु नीलपीतादिवासनाभिर्विवर्तमानं साक्षिणा वेद्यते। अतो न्यायसिद्धस्य स्वयंज्योतिष्ट्वस्य न विरोध इत्यर्थः। प्रासङ्गिकं हित्वा द्रष्टैवोपदिष्ट इत्यत्र हेत्वन्तरमाह—किञ्चान्यदित्यादिना। अधि-

### आनन्दगिरिटीका

स्वप्नावस्थाविशिष्टस्य स्थानान्तरे बाध्यत्वान्न तत्र द्रष्टुरुपदेशोऽस्तीति शङ्कते—स्वप्न इति। अनुभवानुसारेणोत्तरमाह—नेत्यादिना। किंच प्रकाशकारणानामुपरमे यः प्रकाशः स नैसर्गिक इति न्यायेन प्रतीचः स्वयंज्योतिष्ट्वं बृहदारण्यके स्वप्नावस्थामाश्रित्योक्तं ततश्च तत्र द्रष्टुरुपदेशः सिध्यतीत्याह—न चेति। सूर्यादीनामुपरमे यः प्रकाशो दृश्यमानः स नैसर्गिक इत्ययुक्तं स्वप्नेऽप्यन्तःकरणस्य सत्त्वादित्याशङ्क्याऽऽह—यद्यपीति। करणत्वाभावे हेतुं पृच्छति—किं तर्हीति। नीलपीतादिजाग्रद्वासनाभिर्विवर्तमाना साक्षिणो वेद्यतामापद्यते। तथा च पटचित्रवद्विचित्रवासनामयचेतसः साक्षिगम्यत्वान्न स्वप्नोपलब्धौ करणं भवतीति तद्द्रष्टुः स्वयंज्योतिष्ट्वं न्यायसिद्धमित्याह—पटेति। प्रासङ्गिकं हित्वा द्रष्टैवोपदिष्टः स्वप्नावस्थायामित्यत्र हेत्वन्तरमाह—किंचेति। तथा च जाग्रदवस्थायामिव

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

किं च एतं त्वेव त इति प्रकृताक्षिपुरुषमाकृष्य तस्य स्वप्नद्रष्टृत्वमुच्यते तदक्षिपुरुषस्यापि द्रष्टृत्वं गमयति, अन्यथा तस्य तदभेदानुपपत्तेः। न च छायात्मनो द्रष्टृत्वं, तस्याचेतनत्वात्तस्मान्नाक्षिपुरुषः छायात्मेति व्यतिरेकमुखेनाह—किंचान्यदिति। अन्यदपि दूषणं वर्तत इति अन्यशब्दार्थः। न चैतच्छब्देन अक्षिपुरुषोऽनुकृष्टः, किन्तु वाक्योपक्रमोक्त आत्मैव तं चतुर्थे पर्याये पश्चाद्वक्ष्यामीति तदर्थ इति वाच्यं, तस्य प्रजापतिना इन्द्रं प्रति सकृदप्यनुक्तत्वेन पुनश्शब्दसमानार्थकभूयश्शब्दानुपपत्तेः। न च पश्चादर्थकतया भूयश्शब्दो लोके प्रसिद्धः। एतं त्वेव त इत्येवकारानुपपत्तिश्च प्रकृतात्मभिन्नस्वप्नादिपुरुषाभिधाने स्यात्। न च पश्चादेवेत्यन्वयः, व्यवहितान्वयदोषप्रसङ्गात्। अनुशब्देनैव तदुक्तेश्चेति भावः। एतं त्वेत त इति प्रकृताकर्षणबलादेव स्वप्नेऽपि छायापुरुष एवोक्त इति काशकुशावलम्बनेन शङ्कते—स्वप्न इति। एतं त्वेत त इति प्रकृताकर्षणस्य अस्मदुक्तरीत्याप्युपपत्तेः, चेतनधर्मस्य वाक्यशेषगतस्यानुपपत्तेः, तदर्थं द्वात्रिंशद्वर्षब्रह्मचर्योपदेशवैयर्थ्याच्च नैवमित्याह—नेति। ननु भ्रान्तेन इन्द्रेण रोदनाप्रियवेदनादिकमुक्तम्, न तु प्रजापतिना, न च भ्रान्तोक्तेन रोदनादिना छायात्मव्यावृत्तिरित्याशङ्क्य प्रजापतिनोक्तं महीयमानत्वं, पूज्यमानत्वं, विषयानुभवलक्षणं चरणं च अस्मिन्पक्षे न युज्यत इत्याह—न च द्रष्टुरिति। कश्चिदिति। अचेतनः छायात्मेत्यर्थः।

किञ्च श्रुत्यन्तरे स्वेन भासा स्वेन ज्योतिषा प्रस्वपितीति, इह महीयमानश्चरतीत्यभिहितं विषयानुभवमुक्त्वा तस्यानुभवितुः स्वयंज्योतिष्ट्वोक्त्यापि तस्य द्रष्टृत्वं निश्चीयत इत्याह—अत्रायमिति। व्याख्यात इति। तत्र स्वयं विहत्येत्युक्तज्योतिरन्तराभावं दर्शयति—आत्मनः स्वयंज्योतिष्ट्वार्थम्। ननु स्वप्ने बुद्धेरेव ज्योतिरन्तरस्य विद्यमानत्वात् तदभावोऽसिद्ध इत्याशङ्क्य तस्या विषयत्वेन उपक्षयाद्विषयविषयिभावस्य च एकस्यां बुद्धावसंभवादात्मैव तदानीं ज्योतिरित्याह—यद्यपीति। सधीरिति। धिया सहितः पुरुष इत्यर्थः, धीरितिपाठे धीर्वर्तत इत्यर्थः। किंच सुषुप्तपर्यायस्थपुरुषं नाह खल्वयमिति निर्दिश्य एवं संप्रत्यात्मानं न जानाति नो एवेमानि भूतानीत्यनेन तस्य एवंशब्दसंप्रतिशब्दाभ्यां जाग्रत्स्वप्नयोरिव इदानीं ज्ञानं नास्तीति, एतस्य अवस्थाद्वये प्रसक्तज्ञानं प्रतिषिध्यते।

ज्योतिष्ट्वबाधः स्यात्। किंचान्यत्। जाग्रत्स्वप्नयोर्भूतानि चाऽऽत्मानं च जानातीमानि भूतान्ययमहमस्मीति। प्राप्तौ सत्यां प्रतिषेधो युक्तः स्यान्नाह खल्वयमित्यादि। तथा चेतनस्यैवाविद्यानिमित्तयोः शरीरत्वे सति प्रियाप्रिययोरपहतिर्नास्तीत्युक्त्वा तस्यैवाशरीरस्य सतो विद्यायां सत्यां सशरीरत्वे प्राप्तयोः प्रतिषेधो युक्तोऽशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति। एकश्चाऽऽत्मा स्वप्नबुद्धान्तयोर्महामत्स्यवदसङ्गः संचरतीति श्रुत्यन्तरे सिद्धम्।

यच्चोक्तं संप्रसादः शरीरात्समुत्थाय यस्मिन्स्त्र्यादिभी रममाणो भवति सोऽन्यः संप्रसादादधिकरणनिर्दिष्ट उत्तमः पुरुष इति। तदप्यसत्। चतुर्थेऽपि पर्याय एतं त्वेव त इति वचनात्। यदि ततोऽन्योऽभिप्रेतः स्यात्पूर्ववदेतं त्वेव त इति न ब्रूयान्मृषा प्रजापतिः। किंचान्यत्तेजोबन्नादीनां स्रष्टुः सतः स्वविकारदेहगुहे प्रवेशं दर्शयित्वा

### नरेन्द्रपुरीयं टिप्पणम्

करणाधेयभावेन भेदो न सत्य इत्यत्र हेत्वन्तरमाह—किञ्चान्यत्तेज इत्यादिना। आत्मनः प्रतिशरीरं संसारेण

### आनन्दगिरिटीका

स्वप्नेऽपि द्रष्टैवोपदिष्ट इति शेषः। इतश्च द्रष्टुरेवोपदेशः स्वप्नदशायामित्याह—प्राप्ताविति। न केवलमुक्तसौषुप्तो निषेधो निषेध्यप्राप्तिसापेक्षत्वादवस्थाद्वये द्रष्टुरुपदेशमाकाङ्क्षति किंतु तुरीयगतो निषेधोऽपि निषेध्यमाकाङ्क्षन्नवस्थाद्वये द्रष्टुरुपदेशमाकाङ्क्षतीत्याह—तथेति। निषेधस्य प्राप्तिसापेक्षत्वात्प्रकृतस्यैव द्रष्टुरविद्यानिदाने सशरीरत्वे तन्निमित्तयोः स्थानद्वयगतयोर्न प्रियाप्रिययोरपहतिरस्तीति न ह वै सशरीरस्येत्यादिनोक्तं सशरीरत्वे प्राप्तयोः प्रियाप्रिययोस्तस्यैवावस्थात्रयातीतस्य सत्यां विद्यायामशरीरमित्यादिना प्रतिषेधो युक्त इति योजना। स्वप्ने द्रष्टुरुपदेशे हेत्वन्तरमाह—एकश्चेति।

चतुर्थपर्यायस्य सौषुप्तादर्थान्तरविषयत्वमुक्तमनुभाष्य दूषयति—यच्चोक्तमित्यादिना। तदेव व्यतिरेकद्वारा स्फोरयति—यदीति। अधिकरणाधेयभावेन भेदः सत्यो नास्तीत्यत्र हेत्वन्तरमाह—किंचान्यदिति। जीवपरयोर्भेदस्य

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

प्रसक्तिश्च पूर्वपर्यायोक्तस्य द्रष्टृत्वं विना नेति द्रष्टृत्वं गमयति। अतो न छायात्मा, नवा अन्यः पूर्वमुक्त इत्याह—किंचान्यदिति। जाग्रत्स्वप्नयोरयमहमस्मीत्यात्मानं भूतानि च जानातीति प्राप्तौ सत्यां नाहं खल्वित्यादिः प्रतिषेधो युक्त इत्यन्वयः। एवं चतुर्थेऽपि पर्याये एतं त्वेव त इत्यनुकृष्य पूर्वोक्तं तस्याविद्यानिमित्तसशरीरतादशायां प्रियादिप्रसक्तिमुक्त्वा तस्यैव विद्यानिमित्ताशरीरतायां प्रियादिनिषेधादपि पूर्वं प्रियादियोगे द्रष्टैवोक्त इत्याह—तथाचेति। च शब्दः किंचेत्यर्थः। एतेन अशरीरशब्देन परं ज्योतिरुच्यत इति यदुक्तं अशरीरं ज्योतिः स्वरूपं आपन्न इत्यनेन तन्निरस्तम्। तस्मिन् प्रियाद्यप्रसक्तेः, तस्मिन् तदुक्तेः प्रयोजनाभावाच्च। तदस्याशरीरस्येति इदंशब्देन परामृष्टस्य प्रकृतस्यावस्थात्रयसम्बन्धिन अशरीरत्वोक्तेश्च "मघवन्मर्त्यं वा इदं शरीरं" इत्युक्तस्य शरीरस्य अधिष्ठानत्वोक्तिपूर्वकं "आत्तो वै सशरीरः प्रियाप्रियाभ्यामि"त्यादिना तत्सम्बन्धेन प्रियाद्युक्तेश्च। न चैतत्सर्वं जाग्रदादिद्रष्टुरन्यस्य संभवतीति। किंच "तद्यथा महामत्स्य उभे कूले अनुसंचरति पूर्वं चापरं चैवमेवायं पुरुषः एतावुभावन्तावनुसञ्चरति स्वप्नान्तं च बुद्धान्तं चे"ति काण्वश्रुतावात्मन एव स्वप्नजाग्रत्संचारोक्तेरिहापि स्वप्नसम्बन्धेन तस्यैव प्रत्यभिज्ञानान्न द्रष्टुरन्यः स्वप्नपुरुष इत्याह—एकश्चेति। तत्र स्वप्नबुद्धान्तयोरेकत्वोक्तेश्च, इहापि अक्षिण्युक्तोऽपि स्वप्नद्रष्टुरन्य एव न छायात्मेति वक्तुं—एकश्चेति विशेषणं, न केवलं आत्मा, किन्तु एकश्चेति भाष्यार्थः। तस्मात्स्वप्ने द्रष्टुरेव उपदेशात्तस्य च एतं त्वेव त इत्युक्त्या अक्षिपुरुषाभेदान्नाक्षिपुरुषः छायात्मेति सिद्धम्। यच्च य आत्मा अपहतपाप्मादिलक्षणस्सोऽन्वेष्टव्य इत्युक्तः स न स्थानत्रयसम्बन्धित्वेनोक्तः येन तत्संबन्धिद्रष्टृरूपः स्यात्। किन्तु चतुर्थे पर्याये संप्रसादशब्दितद्रष्टुरधिकरणतया उक्तत्वात्ततोऽन्य इति, तद्दूषयितुमनुवदति—यच्चोक्तमिति। अधिकरणनिर्दिष्ट इति। संप्रसादरमणाधिकरणतया निर्दिष्ट इत्यर्थः। एतं त्वेव त इति। न च एतच्छब्देन वाक्योपक्रमे उक्तः अपहतपाप्मादिलक्षण उत्तमपुरुषः परामृश्यते, तस्य प्रकरणित्वादिति वाच्यम्। तस्य पूर्वमनुक्तत्वेन भूयश्शब्दानुपपत्तेः। संप्रसादस्यापि वक्ष्यमाणत्वेन इतरव्यावृत्त्यर्थैवकारानुपपत्तिरित्यर्थः। पूर्वपर्यायद्वये एतं त्वेव त इत्यस्य सन्निहितद्रष्टृजीवपरामर्शित्वस्य साधितत्वेन तत्तुल्यनिर्देशस्यास्यापि तत्परामर्शित्वमेव वोचितम् नोक्तपुरुषपरामर्शित्वम् प्रायपाठन्यायादित्याह—यदीति। पूर्ववदिति। पूर्वं यथा वा "एतं त्वेव त" इत्युक्तवान् तथा इहापि ब्रवीति

प्रविष्टाय पुनस्तत्त्वमसीत्युपदेशो मृषा प्रसज्येत। तस्मिंस्त्वं स्त्र्यादिभी रन्ता भविष्यसीति युक्त उपदेशोऽभविष्यद्यदि संप्रसादादन्य उत्तमः पुरुषो भवेत्। तथा भूम्न्यहमेवेत्यादिश्याऽऽत्मैवेदं सर्वमिति नोपसमहरिष्यद्यदि भूमा जीवादन्योऽभविष्यत्। "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुत्यन्तराच्च। सर्वश्रुतिषु च परस्मिन्नात्मशब्दप्रयोगो नाभविष्यत्प्रत्यगात्मा चेत्सर्वजन्तूनां पर आत्मा न भवेत्तस्मादेक एवाऽऽत्मा प्रकरणी सिद्धः।

न चाऽऽत्मनः संसारित्वम्। अविद्याध्यस्तत्वादात्मनि संसारस्य। न हि रज्जुशुक्तिकागगनादिषु सर्परजतमलादीनि मिथ्याज्ञानाध्यस्तानि तेषां भवन्तीति। एतेन सशरीरस्य प्रियाप्रिययोरपहतिर्नास्तीति व्याख्यातम्। यच्च

नरेन्द्रपुरीयं टिप्पणम्

परमात्मनोऽपि संसारित्वप्रसङ्ग इति न वाच्यं, अविद्याकृतेन वस्तूनां लेपादर्शनादध्यासभावभावित्वादित्याह—न चात्मन इति। अपहतिर्नास्तीत्यव्यभिचाराभिधानाद्वास्तवत्वं प्रियाप्रियसम्बन्धस्य विवक्षितमित्याशङ्क्याह—एतेनेति। यावदध्यासभावित्वं हि प्रियाप्रियापहत्यभाव उच्यते न वास्तवत्वम्। शरीरसम्बन्धस्यैव प्रियाप्रियमूलस्य

आनन्दगिरिटीका

षष्ठप्रपाठकविरोधवत्सप्तमप्रपाठकविरोधोऽपि स्यादित्याह—तथेति। बृहदारण्यकश्रुत्यालोचनायामपि जीवेश्वरभेदो न संभवतीत्याह—नान्य इति। इतश्च जीवपरयोरभेदो नास्तीत्याह—सर्वश्रुतिष्विति। श्रौतमर्थमुपसंहरति—तस्मादिति। आत्मैक्ये परस्यैव संसारित्वं सर्वदेहेषु स्यादिति चेन्नेत्याह—न चेति। आरोपितसंसारित्वं वस्तुतो नाऽऽत्मन्यस्तीत्येतद्दृष्टान्तेन स्पष्टयति—न हीति। मिथ्या च तदज्ञानं चेति मिथ्याज्ञानं तेनाध्यस्तान्यविद्यमानान्येव विद्यमानवत्प्रतीतिमापादितानीति यावत्। न ह वै सशरीरस्येत्यादि वदता वास्तवत्वं शरीरसंबन्धस्य विवक्षितमिति शङ्कामुक्तन्यायातिदेशेन निरस्यति—एतेनेति। आत्मनि संसारस्य प्रसक्तिर्नेति यावत्। यावदध्यासभावित्वं

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तथा न ब्रूयादित्यर्थः। न चेहास्मत्पक्षेऽपीहापि पूर्ववज्जीववदेव परामृश्यतां तदभिधानन्तु यस्मिन्संप्रसादः पर्येति स उत्तमपुरुष इति उत्तमपुरुषोपलक्षणतयाऽर्थवदिति वाच्यम्। प्रधानस्य उत्तमपुरुषस्य व्याख्येयतया प्रतिज्ञानार्हस्याप्रतिज्ञानं तदनर्हस्यैव सर्वजनस्य प्रतिज्ञानमित्यस्यायुक्तत्वात्, तदर्थं ब्रह्मचर्योपदेशानुपपत्तेः तस्य दुर्ज्ञानत्वाभावात्, स उत्तमः पुरुषः इत्यादिवाक्यस्य तदर्थत्वानुपपत्तेरुक्तत्वाच्चेति भावः। किंच संप्रसादोत्तमपुरुषयोराधाराधेयभावेन भेदाङ्गीकारे स्रष्टुरेवाविकृतस्य जीवरूपेण प्रवेशाभिधानेन उपपादितस्तत्त्वमसीत्याद्यभेदोपदेशो न स्यादित्याह—किंचान्यदिति। भेदे कथं तर्हि उपदेष्टव्यमित्यत आह—तस्मिंस्त्वमिति। तथा च षष्ठप्रपाठकविरोधान्नेदं व्याख्यानं युक्तमित्यर्थः। एवं सप्तमप्रपाठकविरोधोऽप्यस्मिन्पक्षे स्यादित्याह—तथा भूम्नीति। स एवेदं सर्वमिति। भूम्नस्सार्वात्म्यस्योक्तत्वात् द्वयोश्च सार्वात्म्यायोगादहंशब्दितप्रतीचो भूमाभेदविवक्षयैवाहमेवेदं सर्वमित्युक्तमित्यर्थः। न चेदमौपचारिकं आत्मन इह प्रतिपाद्यत्वेनोपक्रमात्। न च स्तुत्यर्थः, तत्स्तुत्यर्थं सार्वात्म्यायोगात् अहमेवाधस्तादात्मैवाधस्तादहमेवेदं सर्वं आत्मैवेदं सर्वमित्यभ्यासोपपत्तिरूपतात्पर्यलिङ्गवत्त्वाच्चेत्याह—अहमेवेत्यादिश्येति। काण्वश्रुतिविरोधादपि न भेद इत्याह—नान्योऽस्तीति। गतिसामान्यादप्येवमेवेत्याह—सर्वेति। आत्मशब्दस्य घटस्यात्मा पटस्यात्मा इत्यादिप्रयोगेषु स्वरूपवाचित्वादनेकार्थकल्पनस्य अन्याय्यत्वाद्रूढिविरोधे आप्नोतीति आत्मेति योगानुपपत्तेः, सर्वस्वरूपत्वेन परमात्मन्यपि रूढ्येव प्रयोगोपपत्तेः। आत्मा वा इदमेक एवाग्र आसीत्, आत्मन आकाशस्संभूतः आत्मा द्रष्टव्यः इत्यात्मशब्दाः परमात्मनि प्रयुक्ताः, परमात्मनः प्रत्यक्स्वरूपत्वं गमयन्तीत्यर्थः। परमात्मा सर्वजन्तूनां प्रत्यगात्मा न भवेच्चेदित्यन्वयः। श्रुतितोऽभेदनिरूपणमुपसंहरति—तस्मादिति। आत्मा परस्माद्भिद्यते संसारित्वादिति भेदानुमामानमाशंक्याह—न चेति। वास्तवसंसारित्वमसिद्धं, कल्पनया संसारित्वन्तु नासंसारिभेदसाधकम्, व्यभिचारादिति हेतुमाह—अविद्येति। कल्पितेनापि वस्तुतस्तद्वत्त्वं स्यादिति कस्यचिद्भ्रान्तिं वारयति—न हीति। तेषां भवन्त्येवेति नहीत्यन्वयः। ननु श्रुत्यैव संसारित्वोक्तेः तस्य वास्तवत्वमाशङ्क्य कल्पितसंसारित्वानुवादिनी श्रुतिरशरीरस्यासंसारित्वप्रतिपादनार्थमित्याह—एतेनेति। रज्जुसर्पादिदृष्टान्तेन दृश्यत्वेन हेतुना मृषात्वेनेत्येतच्छब्दार्थः। प्रत्युत तस्यौपाधिकत्वेन मिथ्यात्वमेव दर्शयति श्रुतिरिति

स्थितमप्रियवेत्तेवेति नाप्रियवेत्तैवेति सिद्धम् । एवं च सति सर्वपर्यायैरेतदमृतमभयमेतद्ब्रह्मेति प्रजापतेर्वचनम् । यदि वा प्रजापतिच्छद्मरूपायाः श्रुतेर्वचनं सत्यमेव भवेत् । न चतत्कुतर्कबुद्ध्या मृषा कर्तुं युक्तम् । ततो गुरुतरस्य प्रमाणान्तरस्यानुपपत्तेः । ननु प्रत्यक्षं दुःखाद्यप्रियवेत्तृत्वमव्यभिचार्यनुभूयत इति चेन्न । जरादिरहितो जीर्णोऽहं जातोऽहमायुष्मान्गौरः कृष्णो मृत इत्यादिप्रत्यक्षानुभववत्तदुपपत्तेः ।

सर्वमप्येतत्सत्यमिति चेदस्त्येवैतदेवं दुरवगमं येन देवराजोऽप्युदशरावादिदर्शितात्मविनाशयुक्तिरपि मुमोहैवात्र विनाशमेवापीतो भवतीति । तथा विरोचनो महाप्राज्ञः प्राजापत्योऽपि देहमात्रात्मदर्शनो बभूव । तथेन्द्रस्याऽऽत्म-

### नरेन्द्रपुरीयं टिप्पणम्

दुर्निरूपत्वादित्यर्थः । एवं च सतीत्याध्यासिके संसारित्वे सतीत्यर्थः । ननु सुखादयो गुणाः साश्रया गुणत्वाद्रूपादिवत्, य आश्रयः स परिशेषादात्मेति वैशेषिकोदितर्कविरोधादसत्यं श्रुतेर्वचनं तत्राह— न चेतदिति । सुखादेरुपाधिधर्मत्वात्सिद्धसाधनत्वान्नास्तिबाधकमित्युक्तम् तत्र प्रत्यक्षबाधकमुद्भाव्योक्तं स्मारयति—ननु प्रत्यक्षमित्यादिना ।

### आनन्दगिरिटीका

प्रियाप्रिययोरपहत्यभावो न वास्तवत्वं शरीरसंबन्धस्यैव प्रियाप्रियमूलस्य दुर्निरूपत्वादित्यर्थः । स्वप्नद्रष्टा खल्वप्रियवेत्तेव भवति न त्वप्रियवेत्तैवेति यत्पूर्वत्र स्थितं तत्सिद्धम् । लाभान्तरमाह—एवं चेति । प्रजापतेर्वचनं सत्यं भवेदिति संबन्धः । अपौरुषेय्यां श्रुतौ कुतः प्रजापतेर्वचनं सावकाशमित्याशङ्क्याऽऽह—यदि वेति । सुखादयः साश्रया गुणत्वाद्रूपादिवदित्यनुमानात्तदाश्रयः परिशेषादात्मा भविष्यतीति वैशेषिकादितर्कविरोधादसत्यं श्रुतेर्वचनमित्याशङ्क्याऽऽह—न चेति । सुखादीनामुपाधिधर्मत्वेन सिद्धसाध्यत्वान्नास्ति श्रौतवचसो बाधकमित्यर्थः । प्रत्यक्षमिति शङ्कते—नन्विति । तस्याऽऽभासत्वान्न बाधकत्वमिति परिहरति—नेत्यादिना ।

दृष्टान्तोऽपि संप्रतिपन्नो न भवतीति शङ्कते—सर्वमिति । जरादेः सत्यवचनं त्वदीयमेवमस्त्येवेत्यङ्गीकरोति—अस्त्येवेति । अङ्गीकारे हेतुमाह—दुरवगममिति । अधिकारिणः प्रमितिजनको वेद इति न्यायात्तादृशानामनधिकारिणां दुर्ज्ञानमात्मतत्त्वम् । अतोऽस्त्येव जरादिसत्यत्ववचनं न तावता वस्तुक्षतिरित्यर्थः । दुरवगमत्वे लिङ्गमाह—येनेति । अत्रेत्यात्मतत्त्वोक्तिः । तस्य दुर्ज्ञानत्वे लिङ्गान्तरमाह—तथेति । वैनाशिकभ्रान्तिरप्यात्मनो

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वक्तुं सशरीरस्य सत इति विशेषणोपादानं कृतम् । इवकारेण दुःखादिसम्बन्धमिथ्यात्वस्य पूर्वं श्रुत्यैव साधितत्वादपि एतदेवमेवेत्याह—यच्चेति । एक इतिकारो हेत्वर्थः । नाप्रियवेत्तैवेति स्थितत्वात्साधितत्वादप्येतत्सिद्धमित्यन्वयः । पर्यायचतुष्टयेऽपि प्रत्यगात्मन एव तत्तदारोपिततद्धर्मनिराकरणेनाभिधानेन सर्वत्रामृताभयत्वादिकथनं मुख्यं स्यात्, अन्यथा गौणं स्यात् । न चासकृदभ्यस्यमानस्य तस्य गौणत्वं युक्तमित्यभिप्रेत्याह—एवं च सतीति । यद्वा अभ्यस्यमानामृतत्वब्रह्मत्वोक्तिबलादपि संसारस्य मृषात्वमित्याह—एवं चेति । श्रुतेः प्रजापतिवचनत्वे पौरुषेयत्वं स्यादित्याशङ्क्योक्तं—यदि वेति । प्रजापतिच्छद्मरूपाया इति । प्रजापतिवेषधारिण्याः प्रजापतिवाक्यवत्प्रतीयमानाया इत्यर्थः । संसारित्वसाधकतर्कबलात् श्रुतेरन्यथानयनमाशङ्क्य नित्यनिर्दोषश्रुतिविरोधे तर्कस्यैवाभासत्वमित्याह—न च तदिति । उपपत्तेरिति पाठे ततस्तर्काद्गुरुतरस्य प्रमाणान्तरस्य उपपत्तिस्वीकारस्य युक्तत्वादित्यर्थः । अबाधितप्रत्यक्षसिद्धत्वात्संसारस्य समासादितरज्जुसर्पादिवन्न मृषात्वमिति शङ्कते—नन्विति । अव्यभिचारीति । अबाधितमित्यर्थः, विवेकबाधरहितत्वमसिद्धं, अविवेकिबाधरहितत्वन्तु आत्मनि जरादिदेहधर्मप्रत्यक्षे व्यभिचारी । नेति । तस्यापि सत्यत्वान्न व्यभिचार इति लोकायतिकः शङ्कते—सर्वमपीति । तस्यातिमूढत्वान्न वेदार्थविचारे अधिकार इति न तं प्रति उत्तरं दातव्यमित्यभिप्रेत्याह —अस्त्विति । अस्येति पाठे अस्य लोकायतिकस्येत्यर्थः, दुरवगमत्वं कैमुतिकन्यायेनाह—येन देवराज इत्यादिना । अनेन तस्य सात्विकत्वमुक्तम् । आभिजात्ययुक्तस्य विरोचनस्य अस्य तद्रहितस्य किमुवक्तव्यमिति आह—तथेति । इदानीन्तनेष्वपि युक्तिकुशलेषु व्यामोहस्य किमु वक्तव्यमित्याह—तथेन्द्रस्येति । आत्मविनाशदर्शनेन यद्भयं स एव सागरः, तस्मिन्नित्यर्थः । साङ्ख्यानामसंसार्यात्म-

'अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यन्ते ॥ २ ॥

विनाशभयसागर एव वैनाशिका न्यमज्जन् । तथा सांख्या द्रष्टारं देहादिव्यतिरिक्तमवगम्यापि त्यक्तागमप्रमाणत्वान्मृत्युविषय एवान्यत्वदर्शने तस्थुः । तथाऽन्ये काणादादिदर्शनाः कषायरक्तमिव क्षारादिभिर्वस्त्रं नवभिरात्मगुणैर्युक्तमात्मद्रव्यं विशोधयितुं प्रवृत्ताः । तथाऽन्ये कर्मिणो बाह्यविषयापहृतचेतसो वेदप्रमाणा अपि परमार्थसत्यमात्मैकत्वं विनाशमिवेन्द्रवत्मन्यमाना घटीयन्त्रवदारोहावरोहप्रकारैरनिशं बम्भ्रमति । किमन्ये क्षुद्रजन्तवो विवेकहीनाः स्वभावत एव बहिर्विषयापहृतचेतसः । तस्मादिदं त्यक्तसर्वबाह्यैषणैरनन्यशरणैः परमहंसपरिव्राजकैरत्याश्रमिभिर्वेदान्तविज्ञानपरैरेव वेदनीयं पूज्यतमैः प्राजापत्यं चेमं संप्रदायमनुसरद्भिरुपनिबद्धं प्रकरणचतुष्टयेन । तथाऽनुशासत्यद्यापि त एव नान्य इति ॥ १ ॥

तत्राशरीरस्य संप्रसादस्याविद्यया शरीरेणाविशेषतां सशरीरतामेव संप्राप्तस्य शरीरात्समुत्थाय स्वेन रूपेण

### नरेन्द्रपुरीयं टिप्पणम्

अधिकारिणः प्रमितिजनको वेदो भवति त्वादृशानां त्वनधिकारिणां जरामरणादि सत्यमेवेति वचनमस्त्येव, न तावता वस्तुक्षतिरित्याह—अस्त्येवैतदेवमित्यादिना ॥ १ ॥

### आनन्दगिरिटीका

दुर्ज्ञानत्वं गमयतीत्याह—तथेन्द्रस्येति । सांख्यभ्रान्तिरपि दुर्ज्ञानत्वमात्मनो ज्ञापयतीत्याह—तथा सांख्या इति । तार्किकभ्रान्तिरपि तस्य दुर्ग्रहत्वे गमिकेत्याह—तथाऽन्य इति । बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावना नवाऽऽत्मगुणाः । मीमांसकभ्रान्तिस्तस्य दुर्ग्रहत्वे गमिकेत्याह—तथाऽन्य इति । यदा परीक्षकाणामपीदृशी भ्रान्तिरात्मनो दुरवगमत्वं गमयति तदा विचारविधुराणां लौकिकानां भ्रान्तिस्तत्र प्रमाणयितव्येत्याह—किमन्य इति । अन्ये बम्भ्रमतीति किं वक्तव्यमिति संबन्धः । यदि लौकिकानां परीक्षकाणां चेदमात्मतत्त्वं दुर्ज्ञानं प्रतिज्ञायते केषां तर्हीदं सुज्ञानमित्याशङ्क्याऽऽह—तस्मादिति । एषणास्विवाऽऽत्मतत्त्वेऽपि तेषामौदासीन्यं वारयति—अनन्यशरणैरिति । तेषां कुटीचकादिभावं व्यासेधति—परमहंसेति । कर्मनिष्ठानामाश्रमानतीत्य नैष्कर्म्यप्राधान्येन वर्तमानत्वं दर्शयति—अत्याश्रमिभिरिति । अनन्यशरणैरित्युक्तं व्यनक्ति—वेदान्तेति । पूज्यतमैरिति नित्यानुवादः । तेषामात्मवेदनोपायं प्राक्तनमुपदिशति—प्राजापत्यं चेति । स्थानत्रयं तुरीयं चेत्येतद्विषयं प्रकरणचतुष्टयम् । यथोक्ताधिकारिणामेवाऽऽत्मवेदनमित्यत्र लिङ्गान्तरमाह—तथेति । अशरीरमित्यादिवाक्यव्याख्यानोपसंहारार्थमितिपदम् ॥ १ ॥

सशरीरस्य बन्धो मुक्तिरशरीरस्येति स्थिते किमर्थमशरीरो वायुरित्यादिवाक्यमित्याशङ्क्याऽऽह—तत्रेत्या-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दर्शिनामपि वेदप्रमाणरहितत्वाद्भेदभ्रमो न निवृत्त इत्याह—तथेति । काणादादीनां तु अत्यन्तन्यायकुशलानामपि संसारित्वभ्रम एव न निवृत्त इत्याह—तथान्य इति । गुणैरक्तमिति, गुणैस्सम्बद्धमित्यर्थः । शोधयितुमिति । गुणसहितैकविंशतिदुःखध्वंसं कर्तुमित्यर्थः । विनाशमिवेति, असदिवेत्यर्थः । वेदबाह्यानां वेदैकसमधिगम्यात्मविचारानधिकारमुपसंहरति—किमन्य इति । चार्वाकादय इत्यर्थः चेतस इत्यनन्तरं आत्मतत्त्वं नावगच्छन्तीति शेषः । तर्हि केषामत्राधिकार इति तदुपसंहरन्नाह—तस्मादिति । मुण्डोऽपरिग्रह इत्यादिश्रुत्यर्थमभिप्रेत्याह—परमहंसेति । परमहंसत्वाभिमानोऽपि त्यक्तव्य इत्याह—अत्याश्रमिभ्य इति । श्रद्धावित्त इति श्रुतेर्वेदान्तेषु श्रद्धा कार्येत्याह—वेदान्तेति । वेदनीयं विशिनष्टि—पूज्यतमैरित्यादिना । प्राजापत्यसंप्रदायमनुसरद्भिः पूज्यतमैः जाग्रदादिप्रकरणचतुष्टयरूपेण उपनिबद्धं व्याख्यातमित्यर्थः । वेदान्तेष्विव इदानीन्तनोपदेष्टृष्वपि श्रद्धया भवितव्यमित्याह—तथेति । ये संप्रदायकर्तारः त एव इदानींतनानुशासितारो नान्य इति बुद्धियुक्तैरिदं वेदनीयमित्यन्वयः ॥ १ ॥

एवं परोक्तं व्याख्यानं प्रत्याख्याय अशरीरो वायुरित्याद्युत्तरश्रुतिं व्याचष्टे—तत्रेत्यादिना । तत्रेति ।

---

अत्र केचित् शरीरात्समुत्थानं शरीरे आत्माभिमानत्यागः इत्यर्थं भाष्योक्तं निराकुर्वन्तः अपदार्थत्वादित्यवोचन् । तदसत् । बृहदारण्यकचतुर्थे—"अथाकामयमानो योऽकामो निष्काम आत्मकाम"

यथाऽभिनिष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते—अशरीरो वायुरविद्यमानं शिरःपाण्यादिमच्छरीरमस्येत्यशरीरः। किं चाभ्रं विद्युत्स्तनयित्नुरित्येतानि चाशरीराणि। तत्तत्रैवं सति वर्षादिप्रयोजनावसाने यथा। अमुष्मादिति भूमिष्ठा श्रुतिर्द्युलोकसंबन्धिनमाकाशदेशं व्यपदिशति। एतानि यथोक्तान्याकाशसमानरूपतामापन्नानि स्वेन वाय्वादिरूपेणागृह्यमाणान्याकाशाख्यतां गतानि यथा संप्रसादोऽविद्यावस्थायां शरीरात्मभावमेवापन्नः, तानि च तथाभूतान्यमुष्माद्द्युलोकसम्बन्धिन आकाशदेशात्समुत्तिष्ठन्ति वर्षणादिप्रयोजनाभिनिर्वृत्तये। कथम्। शिशिरापाये सावित्रं परं ज्योतिः प्रकृष्टं ग्रैष्मकमुपसंपद्य सावित्रमभितापं प्राप्येत्यर्थः। आदित्याभितापेन पृथग्भावमापादिताः सन्तः स्वेन स्वेन रूपेण पुरोवातादिवायुरूपेण स्तिमितभावं हित्वाऽभ्रमपि भूमिपर्वतहस्त्यादिरूपेण विद्युदपि स्वेन ज्योतिर्लतादिचपलरूपेण स्तनयित्नुरपि स्वेन गर्जिताशनिरूपेणेत्येवं प्रावृडागमे स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते॥ २॥

### नरेन्द्रपुरीयं टिप्पणम्

स्वेन रूपेणाभिनिष्पद्यन्त इत्येतद्विवृणोति—**पुरोवातादी**त्यादिना॥ २॥

### आनन्दगिरिटीका

**दिना**। कथं वायोरशरीरत्वं तदाह—**अविद्यमान**मिति। **एवं सति** वाय्वादीनामशरीरत्वे सतीति यावत्। आकाशस्य सर्वत्रैकरूपत्वादमुष्मादिति कुतो व्यपदेशसिद्धिरित्याशङ्क्याऽऽह—**अमुष्मा**दितीति। यथोक्तान्यशरीराणि वाय्वादीनि तेषामाकाशत्वापत्तौ दृष्टान्तमाह—**यथे**ति। तथा वाय्वादीनि स्वेन रूपेणागृह्यमाणत्वदशायामाकाशाख्यतां गतानीति संबन्धः। तानि च वाय्वादीनि तथाभूतान्याकाशात्मत्वं प्राप्तानीत्येतत्। वर्षादिफलनिष्पत्त्यर्थं वाय्वादीनामाकाशदेशात्समुत्थानमुक्तमाकाङ्क्षाद्वारेण स्फुटयति—**कथ**मित्यादिना। स्वेन स्वेन रूपेणाभिनिष्पद्यन्त इति संबन्धः। तत्र वायोरभ्रस्य विद्युतः स्तनयित्नोश्च स्वेन रूपेणाभिनिष्पत्तिप्रकारं विवृणोति—**पुरोवातादी**ति। स्तिमितभावं हित्वा वायुरिति शेषः॥ २॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वस्तुतोऽशरीरस्य अध्यारोपेण सशरीरत्वे सतीत्यर्थः। सशरीरतामेवेति पदस्य व्याख्या शरीरेणाविशेषतामिति। **तथा वक्तव्येति**। तेन प्रकारेण वक्तव्येत्यर्थः। एवं सतीति पुरोवातादिरूपेण रूपवतामपि शिरः पाण्यादिमच्छरीररहितत्वे सतीत्यर्थः। वर्षणादिप्रयोजनावसाने आकाशस्वरूपतामापन्नानीति व्यवहितोऽन्वयः। ननु प्रजापतेः वक्तुः सर्वव्यापित्वेन तं प्रति आकाशस्य व्यवहितत्वाभावात्तस्मिन्नमुष्मादिति कथं व्यवधानोक्तिरित्याशङ्क्य भूमिष्ठानामेव प्राचुर्येण विद्याधिकारात्तान्प्रत्युपदेष्टा स्वात्मानं भूमिष्ठं मत्वा तथा ब्रवीतीत्याह—**अमुष्मादिति श्रुतिरि**ति। प्रजापतिवाक्यारूपा श्रुतिरित्यर्थः। तथा आकाशस्य व्यापित्वेऽपि अभ्रादिसम्बन्धयाकाशदेशस्य भूम्यपेक्षया व्यवहितत्वाच्च अमुष्मादिति व्यपदेशोपपत्तिरित्याह—**द्युलोके**ति। अमुष्मादाकाशादिति पदद्वयं व्याख्याय समुत्थायेति पदं व्याख्यातुं तत्सम्बन्धमाह—**एतानी**ति। वाय्वादेराकाशरूपतायाः पुरोवातादिरूपस्वरूपग्रहणेन रूपान्तरापत्तिरूपत्वात्संप्रसादशब्दितजीवस्य सशरीरतायाः तुल्यं रूपमित्यभिप्रेत्याह **यथे**ति। अविद्यावस्थायामिति च्छेदः। शरीरात्मभावमेवेत्येवकारपाठे अशरीरत्वस्य सर्वात्मना अप्रतीतेरित्येवकारार्थः। संप्रसादो यथा शरीरात्मभावमापन्नस्तथा वाय्वादीनि आकाशाख्यतां गतानीति पूर्वेणान्वयः। एतान्यमुष्मादिति पदद्वयं व्याख्याय एतच्छब्दार्थानुवादपूर्वकं समाधानं व्याचष्टे—**तानी**त्यादिना। किमर्थं समुत्तिष्ठन्तीत्यत आह—**वर्षणादी**ति। समुत्थाने परज्योतिस्संपत्तिर्हेतुरिति प्रश्नपूर्वकमाह—**कथ**मिति। **स्तिमित**मिति। आकाशभावमित्यर्थः॥ २॥

---

इत्यादिना आत्मज्ञं प्रकृत्य "अथायमशरीरो ब्रह्मैव तेज एव" इति जीवन्मुक्ते अशरीरपदं प्रयुङ्क्ते, तत्र अशरीरत्वं शरीराभिमानराहित्यं विना जीवन्मुक्ते कथमपि तत्पदार्थानन्वयात्। एवमेवात्रापि शरीरात्समुत्थानं अभिमानत्याग एव। "चक्षुषश्चक्षुः" इत्यारभ्य "अतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ती"ति केनोपनिषद्वाक्ये अतिमोचनं शरीराभिमानत्याग एव नान्यत्। "ब्रह्मवित् ब्रह्मैव भवति" "अथ मर्त्योऽमृतो भवति" इत्यादिप्रयोगेषु जीवतः ब्रह्मभावः शरीरात्मभावपरित्यागादेव सम्पद्यते अतः यत्किञ्चिदेतत्।

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय [1]परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुषः स तत्र पर्येति जक्षत्क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनँ्स्मरन्निदँ् शरीरँ् स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥**

यथाऽयं दृष्टान्तो वाय्वादीनामाकाशादिसाम्यगमनवदविद्यया संसारावस्थायां शरीरसाम्यमापन्नोऽहममुष्य पुत्रो जातो जीर्णो मरिष्य इत्येवंप्रकारं प्रजापतिनेव मघवान्यथोक्तेन क्रमेण नासि त्वं देहेन्द्रियादिधर्मा तत्त्वमसीति प्रतिबोधितः सन्स एष संप्रसादो जीवोऽस्माच्छरीरादाकाशादिव वाय्वादयः समुत्थाय देहादिवैलक्षण्यमात्मनो रूपमवगम्य देहात्मभावनां हित्वेत्येतत्। स्वेन रूपेण सदात्मनैवाभिनिष्पद्यत इति व्याख्यातं पुरस्तात्। स येन स्वेन रूपेण संप्रसादोऽभिनिष्पद्यते प्राक्प्रतिबोधात्तद्भ्रान्तिनिमित्तात्सर्पो भवति यथा रज्जुः पश्चात्कृतप्रकाशा रज्ज्वात्मना स्वेन रूपेणाभिनिष्पद्यते। एवं च स उत्तमपुरुष उत्तमश्चासौ पुरुषश्चेत्युत्तमपुरुषः

आनन्दगिरिटीका

दृष्टान्तमनूद्य दार्ष्टान्तिकमाह—यथेति। वाय्वादीनामित्यस्य पुरस्तात्तथेत्यध्याहर्तव्यम्। तत्राऽऽदिशब्देनाभ्रविद्युत्स्तनयित्नवो गृह्यन्ते। आकाशादीत्यादिपदमभ्रादिकारणसंग्रहार्थम्। शरीरसाम्यमेव विशिनष्टि—अहमिति। प्रतिबोधने दृष्टान्तमाह—प्रजापतिनेति। यथोक्तेन क्रमेण पर्यायचतुष्टयोपदिष्टप्रकारेणेति यावत्। मघवान्प्रतिबोधित इति संबन्धः। दार्ष्टान्तिके प्रतिबोधनप्रकारं दर्शयति—नासीति। शरीराद्विदुषः समुत्थाने दृष्टान्तमाह—आकाशादिवेति। समुत्थानं विभजते—देहादीति। पुनरुक्तिं परिहरति—इति व्याख्यातमिति।

उत्तरवाक्यस्थं सशब्दं व्याचष्टे—स येनेति। स उत्तमपुरुष इति संबन्धः। संप्रसादस्य स्वेन रूपेणाभिनिष्पत्तिं दृष्टान्तेन स्पष्टयति—प्रागित्यादिना। उक्तदृष्टान्तानुसारेणाविद्यादशायां शरीरात्मत्वमापन्नो जीवो विद्यया प्रकाशितब्रह्मसतत्त्वः स्वेन रूपेणाभिनिष्पन्नो भवतीति दार्ष्टान्तिकमाह—एवं चेति। पुरुषस्योत्तमविशेषणं पुरुषान्तर-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

दार्ष्टान्तिकस्य दृष्टान्तसाम्यप्रतिपादकं एवमेवेति पदद्वयं व्याचष्टे—यथेति। तत्र दृष्टान्तगतपररूपापत्तिसाम्यमादाय वाय्वादीनामिति। आकाशवदिति। यद्यपि वाय्वादीनामाकाशमात्रसाम्यमेवोक्तमिति आदिशब्दो व्यर्थः इव भाति तथापि आदिशब्दबलादेव इह विद्युतो योग्यतया तेजस्साम्यमपि तत्राभिप्रेतमिति कल्पयित्वा तस्यार्थवत्त्वं द्रष्टव्यम्। इत्येवं प्रकारमापन्न इति पूर्वेणान्वयः। एष संप्रसाद इत्यनेन अवस्थात्रयातीतो शरीरात्मदर्शी परामृश्यते, तस्यात्मनः प्रस्तुतत्वान्न जीवमात्रमित्याह—प्रजापतिनेवेति। तत्र प्रजापतिनेत्यतः ततः पश्चादितिपदं द्रष्टव्यम्। न वैलक्षण्यमात्रं साङ्ख्यानामिव विवक्षितम्। किन्तु देहात्मभ्रमनिवृत्तिर्विवक्षितेत्याह—देहात्मेति। एवं ज्योतिरुपसंपद्येत्यादिपदव्याख्यानं दहरवाक्ये कृतं इह ग्राह्यमित्याह—व्याख्यातमिति। यद्यपि दृष्टान्ते वाय्वादेराकाशात्समुत्थाने हेतुत्वेन ज्योतिस्संपत्तेरुक्तत्वेन तदानन्तर्यं समुत्थानस्य प्रतीयते, दार्ष्टान्तिके तु समुत्थानानन्तर्यं ज्योतिस्संपत्तेरुक्तमिति दृष्टान्तवैषम्यं प्रतिभाति तथापि दार्ष्टान्तिके प्रायस्संप्रसादशब्देन ब्रह्मात्मज्ञानिनः अभिधानात्तेन ज्ञानेन ब्रह्मरूपज्योतिस्संपत्तेः परोक्षकल्पाया उक्तत्वेन तस्याश्च समुत्थानात्पूर्वकालीनत्वेन दृष्टान्तावैषम्यं द्रष्टव्यम्। यद्वा समुत्थानपरंज्योतिः संपत्तिस्वरूपाभिनिष्पत्तिसद्भावमात्रे दृष्टान्तो विवक्षितः, नतु तत्क्रमेऽपीति न वैषम्यशङ्केति भावः। स उत्तमः पुरुष इति वाक्यं व्याचष्टे—स इत्यादिना स इत्यस्यार्थमाह—येनेति। संप्रसादो येन स्वरूपेण अभिनिष्पद्यते स एव च तद्रूपमेव उत्तमपुरुष इति व्यवहितान्वयः, रूपपरस्यापि सशब्दस्य विधेयापेक्षतया पुल्लिङ्गनिर्देशः। स्वरूपाभिनिष्पत्तिं पररूपापत्तिप्रदर्शनपूर्वकं दृष्टान्तेनाह—प्रागिति। भ्रान्तिनिमित्तादिति। भ्रान्तिरूपान्निमित्तादित्यर्थः। एवमिति बिन्दुयुक्तपाठे रज्जुर्यथा भ्रान्त्या सर्पो भूत्वा पश्चात्कृतप्रकाशा

1. यत्तु "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" स्वरूपसाक्षात्कारलक्षणस्वरूपनिष्पत्त्यनन्तरभाविनः परज्योतिर्भावस्य उपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति पूर्वकालत्वं न संगच्छत इत्युक्तम्। तन्न। मुखं व्यादाय स्वपितीतिवत् अनन्तरकालीनस्यापि पूर्वत्वेन निर्देशः। वस्तुतः उभयोः समकालिकत्वेनानन्तरकालिकत्वाभावात्। समकालीने तथा प्रयोगात्। यच्च दृष्टान्तासंगतिरिति तदपि न। भाष्य एव

स एवोत्तमपुरुषोऽक्षिस्वप्नपुरुषौ व्यक्तावव्यक्तश्च सुषुप्तः समस्तः संप्रसन्नोऽशरीरश्च स्वेन रूपेणेति । एषामेव स्वेन रूपेणावस्थितः क्षराक्षरौ व्याकृताव्याकृतावपेक्ष्योत्तमपुरुषः कृतनिर्वचनो ह्ययं गीतासु । स संप्रसादः स्वेन रूपेण तत्र

### नरेन्द्रपुरीयं टिप्पणम्

पुरुषस्योत्तमविशेषणं पुरुषान्तराद्व्यवच्छेदज्ञापनार्थमित्यभिप्रेत्य पुरुषान्तरमाह—अक्षिस्वप्नपुरुषौ व्यक्ताविति । "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः

### आनन्दगिरिटीका

व्यवच्छेदार्थमित्यभिप्रेत्य पुरुषभेदं दर्शयति—अक्षीति । इति चत्वारः पुरुषा इति शेषः । तत्र पूर्वेषां त्रयाणां व्यवच्छेद्यत्वं तुरीयस्य तूत्तमपुरुषत्वमित्याह—एषामिति । यथोक्तोत्तमपुरुषे भगवत्संमतिं संगिरते—कृतेति ।

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥
यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इति हि स भगवानूचिवान् । स तत्रेत्यादि व्याचष्टे—स संप्रसाद इति । क्वचिदिति स्वर्गलोकोक्तिः ।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

स्वेन रूपेणाभिनिष्पद्यते, एवं संप्रसादो येन स्वरूपेणाभिनिष्पद्यते स उत्तमपुरुष इत्यन्वयः । चशब्द एवकारार्थः । उत्तमपुरुषत्वसमुच्चयार्थो वा, अद्वितीयात्मनि पुरुषान्तराभावात् कथमस्यापेक्षिकमुत्तमत्वमित्याशङ्क्य उत्तमत्वं तस्य दर्शयितु औपाधिकान्पुरुषान्तरानाह—अक्षीति । स्वेन रूपेणेत्यनन्तरं अवस्थित इति शेषः । एवं पुरुषान्बहून्प्रदर्श्य तृतीयस्य उत्तमत्वमाह—इत्येषामिति । क्षराक्षरावित्यस्य व्याख्यानं व्याकृताव्याकृताविति ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।

इति गीतासु सर्वभूतद्रष्टारं जाग्रत्स्वप्नपुरुषं क्षरं प्रत्यहं सुषुप्ते विनाशिनं, अक्षरं नाम मायोपाधिकं कूटस्थशब्दितं तद्वदविनाशिनं पुरुषं चापेक्ष्य ताभ्यामुद्गतस्य परमार्थतः तदसंस्पृष्टस्य स्वरूपाभिनिष्पन्नस्य उत्तमपुरुषत्वमुक्तं आत्मस्वरूपाभिनिष्पन्नादन्यस्स यत्र पर्येति स उत्तमपुरुष इति न भ्रमितव्यमित्याह—कृतनिर्वचन इति । यद्यप्यस्मिन् वचने स्वरूपाभिनिष्पन्नस्य उत्तमपुरुषत्वं स्पष्टं न प्रतीयते, पुरुषद्वयवैलक्षण्यमात्रप्रतीतेः, तथापि—

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥

इत्युत्तरवाक्ये उत्तमशब्दनिर्वचनपरे क्षरमतीत इति अतीतशब्दप्रयोगेण मायया तत्तादात्म्यमापन्नस्य परमार्थतस्तता निर्गतस्य उत्तमत्वोक्त्या स्वरूपाभिनिष्पन्नस्यैव उत्तमपुरुषत्वं स्पष्टीकृतमिति भावः । ननु अविदुषोऽपि परमार्थतः उत्तमपुरुषत्वाविशेषे विदुषः कोऽतिशय इत्याशङ्क्य तस्य विद्यया स्वात्मन्येव सतः सर्वात्मतया सर्वानन्दावाप्तिरिति वक्तुं स तत्र पर्येतीति वाक्यं; तत्र स उत्तमपुरुषः स पर्येतीति त्रयाणां तच्छब्दानां प्रकृतस्वरूपाभिनिष्पन्नवाचित्वस्य स्वरसतः प्रतीतेः स एव तैश्शब्दैर्निर्दिश्यत इत्यभिप्रेत्य व्याचष्टे—स संप्रसाद इति । स्वेन

---

तत्सामञ्जस्यप्रदर्शनात् । यत्तु निर्विशेषब्रह्मभावश्चेत् विवक्षितस्तदा सुषुप्तावुद्घाटितस्य विशेषज्ञानाभावप्रयुक्तनष्टप्रायत्वदोषस्यापरिहारादिति । तदसत् । ब्रह्मसाक्षात्कारं विना अविद्याया अनिवृत्तेः सुषुप्तौ अविद्याक्रान्ततया जीवो नष्टप्रायः । साक्षात्कारे सति सत्यज्ञानानन्दस्वरूपाभिव्यक्त्या निरतिशयानन्दानुभवस्य वेदान्तेषु तत्र तत्र प्रतिष्ठापितत्वात् ।

१. न च सर्पात्समुत्थायेति तु–अननुरूपो दृष्टान्तः; रज्जुसर्पयोरुभयोरपि दृश्यत्वात् अत्रात्मनि अनात्माध्यासाद्व्युत्क्रान्तिप्रदर्शनपरत्वात् । रज्जोः जडत्वेन सर्पस्य स्वेन रज्जुरूपेणाभिव्यक्तेस्सत्त्वाच्च । "स उत्तमः पुरुषः" अत्र स्वेनरूपेणाभिनिष्पद्यते । सः इत्युक्तेः स्वस्वरूपापन्न इत्येवार्थः स्वरसः । तस्य ब्रह्मरूपत्वमपि "अनेन जीवेनात्मनाऽनुप्रविश्य" इत्यत्रोक्तस्य उत्तमपुरुषत्वं च तस्य स्वारसिकम् । परेण तु सः

स्वात्मनि स्वस्थतया सर्वात्मभूतः पर्येति क्वचिदिन्द्राद्यात्मना जक्षद्धसन्भक्षयन्वा भक्ष्यानुच्चावचानीप्सितान्क्वचिन्मनोमात्रैः संकल्पादेव समुत्थितैर्ब्राह्मलौकिकैर्वा क्रीडन्स्त्र्यादिभी रममाणश्च मनसेव नोपजनं स्त्रीपुंसयोरन्योन्योपगमेन जायत इत्युपजनमात्मभावेन वाऽऽत्मसामीप्येन जायत इत्युपजनमिदं शरीरं तन्न स्मरन्। तत्स्मरणे हि दुःखमेव स्यात्। दुःखात्मकत्वात्तस्य।

### नरेन्द्रपुरीयं टिप्पणम्

परमात्मेत्युदाहृतः।" इति गीतासु कार्यराशिरेकः पुरुषः कारणात्मा द्वितीयः उत्तमस्तु बिम्बकल्प उत्तमः पुरुष

### आनन्दगिरिटीका

क्वचिन्मनोमात्रैरित्यत्र क्वचिदिति ब्रह्मलोको गृह्यते। नोपजनमिति प्रतीकं गृहीत्वा व्याकरोति--स्त्रीपुंसयोरिति। तन्न स्मरन्पर्येतीति संबन्धः। यथोक्तदेहस्मृतौ काऽनुपपत्तिरित्याशङ्क्याऽऽह--तत्स्मरणे हीति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

रूपेणेत्येतद्विशिनष्टि—सर्वात्मतयेति। एतत्पदाभावपाठे स्वेन रूपेणाभिनिष्पन्न इति शेषः। तत्रेति सप्तमी स्वे महिम्नीतिवदुपपादयति—स्वात्मनि स्वस्थतयेति। इत्थंभावे तृतीया, स्वात्मस्थस्सन्नित्यर्थः। अद्वितीये पर्यगणादिद्वैतव्यवहारमुपपादयितुमाह—सर्वात्मभूत इति। जीवन्मुक्तिदशायां इत्यर्थः। पर्येतीति। परितस्सर्वेषु स्वात्मानं जानातीत्यर्थः। तदेव प्रपञ्चयति—क्वचिदिन्द्रियाद्यात्मनेति। ह्रानादीनामिन्द्रियादिधर्मत्वादिन्द्रियप्राणाद्यात्मनेत्युक्तम्। इन्द्राद्यात्मनेति पाठस्साधुः। अत एव विद्याप्रकाशे "इन्द्रो राजादिदेहेषु नानाखाद्यानि भक्षयन्" इत्युक्तम्। ईप्सितानित्यनन्तरं कथमिति क्वचित्पाठः। तत्र हास्यादेर्वयस्यादिसापेक्षत्वौचित्याद्वयस्यादिकं पृच्छति—कथमिति। क्वचिदिति। सगुणब्रह्मविद्रूपेणेत्यर्थः। ब्राह्मलौकिकैर्वेति पूर्वमेव ब्रह्मलोकस्थैरित्यर्थः। मनसैवेति। ननु "द्वादशाहवदुभयविधं बादरायणः तन्वभावे सन्ध्यवदुपपत्तेः भावे जाग्रद्वदिति" सूत्रैः कार्यब्रह्मलोकं प्राप्तस्य विदुषस्सशरीरत्वाशरीरत्वयोरुभयोरप्युक्तत्वान्मनसैवेत्येवकारो न युक्त इति चेत् सत्यं ब्राह्मलौकिकस्य विद्वच्छरीरस्यापि मनोमात्रपरिणामत्वान्मनसैवेत्युक्तमिति न दोषः। नन्वेवमेव विदुषस्सर्वत्वेन मनुष्यदेहतादात्म्यस्यापि पूर्वकालीनस्य स्मरणे पूर्ववद्विदुषो दुःखं स्यादित्याशङ्क्य तत्त्वज्ञानेन तत्तादात्म्यस्य बाधितत्वान्न तत्स्मरणमित्याह—नोपजनमिति। उपशब्दः उपगवाचीत्युक्त्वा सामीप्यवाची वा स शब्दः तच्च सामीप्यं तादात्म्यमित्याह—आत्मभावेनेति। नोपजनं स्मरन्नित्यस्य स तत्र पर्येतीति पूर्वेणान्वयः।

---

उपपादनीयः अत्रेश्वरानयनं अशब्दार्थत्वाद्धेयम्। स तत्र पर्येतीत्यत्र सः उपसंपत्ता इति स्वयं व्याख्यानात्। तत्रेत्यस्य स्वे महिम्नीतिवत् स्वात्मनि स्वस्थतयेत्यर्थो भगवत्पादैरुक्तः सुतरां संगच्छते। जक्षत्क्रीडन्नित्यादिफलं तु दहरविद्याफलम्। अत्र तु निर्गुणविद्यायां स्तुत्यर्थं कीर्तितमिति संक्षेपः। अपि च प्रजापतेः प्राथमिकः उपदेशः जीवब्रह्मैक्यपर एव "य एषोऽक्षिणि पुरुषो दृश्यते। एष आत्मेति होवाच एतदमृतमभयं एतद्ब्रह्मे"ति। अत्र परेणापि अक्षिपुरुषः जीव एवेत्यभ्युपगतं, परं तु तस्य "एष आत्मे"ति तु दुर्योजं तन्मते आत्मशब्दस्य परमात्मनि मुख्यत्वात्। अमृताभयत्वादिकमपि जननमरणादिमति न संगच्छते। "एतद्ब्रह्मे"ति तु भेदिनां सर्वथा दुर्योजम्। अतः सर्वं गौणमेव। "असंकुचितविज्ञानतया ब्रह्मत्वमुक्तमिति गौणत्वं तेन प्रकटितम्। एवमद्वैतापातभिया उपदेशवाक्यानि सर्वाण्यपि गौणतया तेन व्याख्यायन्ते। यथा—एकविज्ञानेन सर्वविज्ञानवाक्यं, तत्त्वमसिवाक्यं, "यत्र नान्यत्पश्यती"त्यादिवाक्यं, इदं च प्रजापत्युपदेशवाक्यं, तैत्तिरीये—"स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यस्य एतच्छरीरगतजीवान्तर्यामी आदित्यजीवान्तर्यामी चैक इति व्याख्यातम्, इदं त्वनपेक्षितं अन्तर्यामिभेदस्याप्रसक्तत्वात् पुरुषशब्दस्य तैत्तिरीये—"स वा एष पुरुषोऽन्नरसमय"इत्यादौ शरीरपरत्वदर्शनात् यश्चायमित्यत्रापि पुरुषः शरीरमेव तत्रस्थः जीव एवोक्तः, न परमात्मेति जीवब्रह्मैक्योपदेशः सुस्पष्टः, एवं कठाद्युपनिषत्सु।

नन्वनुभूतं चेन्न स्मरेदसर्वज्ञत्वं मुक्तस्य। नैष दोषः। येन मिथ्याज्ञानादिना जनितं तच्च मिथ्याज्ञानादि विद्ययोच्छेदितमतस्तन्नानुभूतमेवेति न तदस्मरणे सर्वज्ञत्वहानिः। न ह्युन्मत्तेन ग्रहगृहीतेन वा यदनुभूतं तदुन्मादाद्यपगमेऽपि स्मर्तव्यं स्यात्तथेहापि संसारिभिरविद्यादोषवद्भिर्यदनुभूयते तत्सर्वात्मानमशरीरं न स्पृशति। अविद्यानिमित्ताभावात्। ये तूच्छिन्नदोषैर्मृदितकषायैर्मानसाः सत्याः कामा अनृतापिधाना अनुभूयन्ते विद्याभिव्यङ्ग्यत्वात्त एव मुक्तेन सर्वात्मभूतेन संबध्यन्त इत्यात्मज्ञानस्तुतये निर्दिश्यन्तेऽतः साध्वेतद्विशिनष्टि—य एते ब्रह्मलोक इति। यत्र क्वचन भवन्तोऽपि ब्रह्मण्येव हि ते लोके भवन्तीति सर्वात्मत्वाद्ब्रह्मण उच्यन्ते।

ननु कथमेकः 'सन्नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' कामांश्च ब्राह्मलौकिकान्'पश्यन् रमत' इति च विरुद्धम्। यथैको यस्मिन्नेव क्षणे पश्यति स तस्मिन्नेव क्षणे न पश्यति चेति। नैष दोषः। श्रुत्यन्तरे परि-

नरेन्द्रपुरीयं टिप्पणम्

इत्यर्थः। इन्द्राद्यात्मनाऽब्राह्मलौकिकेन ये जक्षणादयस्ते कथं ब्रह्मलोके स्युरित्याशङ्क्याऽऽह—यत्र क्वचन भवन्त इति। स्तुत्यर्थस्यापि वचनस्याविरुद्धार्थत्वं प्रधानवचनेन चोद्यमुखेन दर्शयति—नन्वित्यादिना। यद्वैतन्न पश्यति पश्यन्वै तन्न

आनन्दगिरिटीका

विदुषो मुक्तस्यानुभूतदेहास्मरणे दूषणमाशङ्कते—नन्विति। असर्वज्ञत्वदोषं निराकरोति—नैष दोष इति। अनुभूतार्थस्मृतौ हि सर्वज्ञ इति। न च शरीराद्यनुभूतं तस्याविद्याकामकर्ममूलस्याज्ञानमात्रत्वात्तस्य च सकार्यस्य ज्ञानोदयमात्रेण नष्टत्वात्प्रागपि शरीरादेरनुभवविपरीतवर्तित्वानुपपत्तेरित्यर्थः। शरीरादि पूर्वं सम्यग्ज्ञानेनाविषयीकृतमपि सद्भ्रान्त्याऽनुभूतमेवेति विदुषामपि स्मर्तव्यमिति चेन्नेत्याह—न हीति। मुक्ते पुरुषे शरीरादयो न संबध्यन्ते चेत्कथं तर्हि तत्र कामाः संबध्येरन्नित्याशङ्क्याऽऽह—ये त्विति। किमिति सर्वैरेते कामा नानुभूयेरन्नित्याशङ्क्याऽऽह—अनृतापिधाना इति। इतश्च विदुषामेव तदभिव्यक्तिरित्याह—विद्येति। किमिति निर्गुणविद्याप्रकरणे विदुषि सत्यकामसंबन्धवचनं तत्राऽऽह—इत्यात्मज्ञानेति। आत्मविद्यास्तुत्यर्थं विदुषि कामसंबन्धवचनम्। मनसैतान्कामान्पश्यन्नित्यत्र विशेषश्रवणमपि युक्तमित्याह—अत इति। इन्द्रियादिषु भवतां कामानां कुतो ब्रह्मलोकभावित्वमित्याशङ्क्याऽऽह—यत्रेति। मनसैतान्कामानित्यादिवाक्यं स्तुत्यर्थमपि प्रधानवाक्यविरुद्धत्वात्त्याज्यमिति शङ्कते—नन्विति। वाक्ययोर्मिथो विरोधे दृष्टान्तमाह—यथेति। "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ननु पूर्वं देहतादात्म्यं अबाधितत्वेनानुभूतं तथैवेदानीं स्मर्तव्यं अन्यथा असर्वज्ञत्वं स्यात्, ततश्च तत्स्मरणे दुःखं स्यादिति शङ्कते—नन्विति। न स्मरेदिति। अबाधिततयेति शेषः, तदबाधितत्वस्य मिथ्याज्ञानाधीनत्वात्, तस्य च ज्ञानेन नाशे बाधितानुवृत्तिमात्रेण स्मरणेऽपि परमार्थतया तत्स्मरणाभावान्न दुःखप्राप्तिः, न वा सर्वज्ञत्वहानिरिति परिहरति—नैष इति। नानुभूतमेवेति। नानुभूतप्रायमित्यर्थः। तदस्मरणे। तत्वेनास्मरण इत्यर्थः। स्वशरीरवत्सर्वेषां देहानां बाधितत्वादेव तद्देहदुःखं सर्वात्मत्वेऽपि न भवतीति दार्ष्टान्तिकमाह—तथेहापीति। नन्वेवं सगुणब्रह्मविदा अनुभूयमानानामपि क्रीडादीनां ब्रह्मात्मविदो बाधितत्वान्न तत्संस्पर्शोऽपि स्यादिति पूर्वोक्तक्रीडाद्यनुपपत्तिरित्याशङ्क्य क्रीडाद्यभिव्यक्तसुखस्य स्वात्मभूतत्वात्तत्सम्बन्धो विदुषः उपपद्यते। दुःखस्य तु मायिकत्वात्तस्या बाधितत्वान्न तत्संबन्धो विदुषः। क्रीडादीनां तु मायिकत्वेन बाधितत्वेऽपि तत्सम्बन्धः स्तुत्यर्थः सर्वात्मत्वेनोच्यते। दुःखादिसम्बन्धो बाधितानुवृत्त्या प्रतीयमानोऽपि स्तुतिहान्यापत्त्या विदुषि नोच्यते। परमार्थतस्तु न केनापि सम्बन्ध आत्मन इत्यभिप्रेत्याह—ये त्विति। एवं च ब्रह्मात्मविदः ब्राह्मलौकिकैरेव कामैः स्तुतिप्रकर्षसिद्धेः "मनसा एतान् कामान् पश्यन् रमते, य एते ब्रह्मलोक" इत्यत्र वक्ष्यमाणमपि ब्रह्मलोकत्वविशेषणं कामानामुपपद्यत इत्याह—अतस्साध्विति। यद्वा ब्रह्मैव लोको ब्रह्मलोकः अतस्सर्वेषां कामानां ब्रह्मण्येव विद्यमानत्वात्सार्वात्म्यविवक्षया ब्रह्मलोकविशेषणं वक्ष्यमाणमुपपद्यत इति अर्थान्तरमाह—यत्रेति। ननु यत्र नान्यत्पश्यतीति दर्शनमात्रस्यैव निषेधादिह मनसैतान्कामान्पश्यन्निति दर्शनोक्तिर्विरुद्धेति प्रसङ्गादिहैव स्थित्वा उत्तरश्रुतौ शङ्कते—नन्विति। पुरुषभेदेन तयोरविरोधः स्यात्, तदपि नास्ति, उभयत्र श्रुतौ विदुष एकस्यैव अभिधानादित्याह—एकस्सन्निति। यद्वा एकत्वात्, द्वितीयाभावात् नान्यत्पश्यतीत्याह—एकस्सन्निति। एकैकत्वादित्यर्थः कालभेदेनाप्य-

हृतत्वात्। द्रष्टुर्दृष्टेर्विपरिलोपात्पश्यन्नेव भवति। द्रष्टुरन्यत्वेन कामानामभावान्न पश्यति चेति। यद्यपि सुषुप्ते तदुक्तं मुक्तस्यापि सर्वैकत्वात्समानो द्वितीयाभावः। केन कं पश्येदिति चोक्तमेव।

अशरीरस्वरूपोऽपहतपाप्मादिलक्षणः सन्कथमेष पुरुषोऽक्षिणि दृश्यत इत्युक्तः प्रजापतिना। तत्र यथाऽसावक्षिणि साक्षाद्दृश्यते तद्वक्तव्यमितीदमारभ्यते। तत्र को हेतुरक्षिणि दर्शन इत्याह—स दृष्टान्तो यथा प्रयोग्यः प्रयोग्यपरो वा सशब्दः। प्रयुज्यत इति प्रयोग्योऽश्वो बलीवर्दो वा। यथा लोक आचरत्यनेनेत्याचरणो रथोऽनो वा

### नरेन्द्रपुरीयं टिप्पणम्

पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि"त्येषा श्रुतिः सुषुप्तमधिकृत्य बृहदारण्यके प्रवृत्ता। पुरुषविषयतया कथमुदाह्रियत इत्याशङ्क्याह—यद्यपि सुषुप्त इति। फलार्थवादस्याविरुद्धार्थत्वमुक्त्वा "य एषोऽक्षिणि पुरुषो दृश्यत" इत्यस्याविरुद्धार्थत्वं दर्शयितुं शङ्कते—अशरीरस्वरूप इति। दृश्यत इत्यस्य पदस्य चाक्षुषे दर्शने रूढत्वादशरीरस्य तदयोग्यत्वादशरीरात्मोपदेशो दृश्यत इति श्रुतिविरुद्ध इत्यर्थः। आत्मत्वामृतत्वादिब्रह्मविषयानेकश्रुतिलिङ्गविरोधादेकस्य दृश्यत इति शब्दस्य ज्ञानपर्यायत्वसम्भवान्न विरोध इत्यभिप्रेत्याह—तत्र यथेति। चाक्षुषदर्शनाविषयत्वे सत्यक्षिणि दर्शने को हेतुरित्याकाङ्क्षायां लिङ्गहेतुकं तावद्दर्शनं सम्भवतीत्यभिप्रेत्य दृष्टान्तमाह श्रुतिः। स दृष्टान्तो यथा भवति तथा कथ्यत इति शेषः। प्राणः स्वबि-

### आनन्दगिरिटीका

अविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदि"ति बृहदारण्यकश्रुतिमाश्रित्य विरोधं धुनीते—नैष दोष इति। अथ यथोक्तं वाक्यं सुषुप्तमधिकृत्य प्रवृत्तं कथं मुक्तविषयतयोदाहृतमत आह—यद्यपीति। सुप्तस्य मोक्षदृष्टान्तत्वात्तद्गतस्य च दार्ष्टान्तिकेऽनुगमाद्यदुक्तं सुषुप्ते तत्संबन्धो मुक्ते सिध्यतीत्यर्थः। किंच मुक्तमेवाधिकृत्य "यत्र त्वस्य सर्वमात्मैवाभूदि"त्यादि तत्रैवोक्तमित्याह—केनेति।

फलार्थवादस्याक्षिवाक्यस्य च मिथो विरोधं शङ्कते अशरीरेति। दृश्यत इत्यस्य पदस्य चाक्षुषदर्शने रूढत्वादशरीरस्य तदयोग्यत्वादशरीरात्मोक्तिर्दृश्यत इतिश्रुतिविरुद्धेत्यर्थः। आत्मत्वामृतत्वादिब्रह्मविषयानेकश्रुतिलिङ्गविरोधाद्दृश्यत इत्येकस्याःश्रुतेर्ज्ञानमात्रविषयनिरोधोऽस्त्वित्यभिप्रेत्यानन्तरवाक्यमुत्थापयति—तत्रेति। चाक्षुषदर्शनाविषयत्वे सति चक्षुषो दर्शने को हेतुरित्यपेक्षायां लिङ्गहेतुकं तावद्दर्शनं संभवतीति मत्वा दृष्टान्तमाह श्रुतिः। स दृष्टान्तो यथा भवति तथोच्यत इत्याह—तत्रेति। तमेव दृष्टान्तमनूद्य व्याचष्टे—यथेत्यादिना। अध्याहाररहित्यसिद्ध्यर्थं पक्षान्तमाह—प्रयोग्येति। एवमित्यनेन द्वितीयो यथाशब्दः संबध्यते। शरीरस्य रथस्थानीयत्वं

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

विरोधो न संभवति, कालभेदस्याप्यश्रवणादित्याह—यथैको यस्मिन्निति। काण्वश्रुतौ दर्शनस्य विपरिलोपप्रतिषेधान्न पश्यतीति श्रुतिः, न स्वरूपेण दर्शनं प्रतिषेद्धुं शक्नोति। किन्तु पृथक्सत्तया अन्यदर्शनप्रतिषेधपरा। इह श्रुतिस्तु जीवन्मुक्तस्य स्वात्ममात्रतया सर्वदर्शनपरा। अतो न विरोध इत्याह—नैष इति। इह दर्शनोक्तेः स्तुतिमात्रत्वाच्चाविरोध इति सूचयितुं चशब्दः, नहि द्रष्टुरितिश्रुतिः सुषुप्तिविषया, अतो न तया मुक्तिविषयश्रुतिनिर्णय इति शङ्कते—यद्यपीति। न तु तद्द्वितीयमस्तीति द्वितीयाभावस्य सुप्तिश्रुतौ हेतुत्वेन अभिधानात्तस्येहापि तुल्यत्वात् न्यायतः समानविषयत्वमाह—मुक्तस्यापीति। द्वितीयाभावो मुक्तावप्युक्तः, "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदि"त्यादिनेत्याह—तत्केनेति। पश्येदिति प्रत्ययार्थः कर्त्राक्षेपक इति भाष्ये स्पष्टीकृतम्। स यथा प्रयोग्य इत्यादि दिव्यचक्षुरित्यन्तस्य वाक्यस्य तात्पर्यमाह—अशरीर इति। धर्माधर्मशरीररहितस्य अनङ्गस्य कथं अक्षिसंबन्ध इति शङ्कार्थः। स्वतोऽनङ्गस्याप्युपाधिवशाच्छरीरसम्बन्धो धर्मादिसम्बन्धश्च भ्रान्त्या भवति, ततोऽक्षिणि दृश्यत इत्याह—तत्र यथेति। उपाधिसम्बन्धं दृष्टान्तेन प्रदर्शयितुं पृच्छति—तत्र क इति। दृश्यत इति पाठे दृश्यत इत्यत्र को हेतुरिति शङ्कायां हेतुमाहेत्यन्वयः, सशब्दं दृष्टान्तपरतया व्याख्याय स प्रसिद्धः प्रयोग्य इत्येवं प्रयोग्यविशेषणं वेति व्याख्यानान्तरमाह—प्रयोग्यपरो वेति। अनो वेति। अनश्शकटं, अत्र प्राणशब्देन प्राणापानादिवृत्ति-

तस्मिन्नाचरणे युक्तस्तदाकर्षणाय, एवमस्मिञ्छरीरे रथस्थानीये प्राणः पञ्चवृत्तिरिन्द्रियमनोबुद्धिसंयुक्तः प्रज्ञात्मा विज्ञानक्रियाशक्तिद्वयसंमूर्छितात्मा युक्तः स्वकर्मफलोपभोगनिमित्तं नियुक्तः। कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति। ईश्वरेण राज्ञेव सर्वाधिकारी दर्शनश्रवणचेष्टाव्यापारेऽधिकृतः। तस्यैव तु मात्रैकदेशश्चक्षुरिन्द्रियं रूपोपलब्धिद्वारभूतम् ॥ ३ ॥

### नरेन्द्रपुरीयं टिप्पणम्

लक्षणचेतननियुक्तः आकर्षकत्वादश्वादिवदित्यनुमानाच्छरीरसंहतात् प्राणाद्विलक्षणोऽशरीरः सिद्ध्यतीत्यर्थः। ईश्वरस्यैव जीवरूपेण भोक्तृत्वाभ्युपगमादीश्वरेण स्वकर्मफलोपभोगार्थं नियुक्त इति न विरुध्यते। तस्यैव तु प्राणस्य मात्रेत्यस्य व्याख्यानमेकदेशः प्राणसंवादे चक्षुरादीनां प्राणपारतन्त्र्यावगमादेकदेशत्वाभिधानम्। अनेन चानुमानान्तरं सूचितम्॥ ३ ॥

### आनन्दगिरिटीका

शरीरं रथमेव त्विति श्रुत्यन्तरान्मन्तव्यम्। अस्मिन्युक्तः स रथस्थानीय ईश्वरेण स्वकर्मफलोपभोगनिमित्तं प्राणो रथित्वेन नियुक्त इति संबन्धः। घ्राणप्राणं व्यावर्तयति—**पञ्चवृत्तिरिति**।

"बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुः"

इतिश्रुत्यन्तरमाश्रित्याऽऽह—**इन्द्रियेति**। आत्मानं रथिनं विद्धीतिश्रुतिविरुद्धं प्राणस्य रथित्वमित्याशङ्क्य तस्योपाधिर्यस्तदभेदाङ्गीकारात्मैवमित्याह—**प्रज्ञात्मेति**। तस्याध्यात्मसंतानशरीरद्वयविशिष्टत्वेन स्फुरितं स्वरूपं दर्शयति—**विज्ञानेति**। ईश्वरस्य यथोक्तप्राणोपाधिद्वारा भोक्तृत्वादिसंसारित्वमित्यत्र श्रुत्यन्तरं प्रमाणयति—**कस्मिन्निति**। प्रतिष्ठास्यामीतीक्षित्वा स प्राणमसृजतेत्यादिश्रुतिरिति शेषः। तथाच यथा राज्ञा सर्वाधिकारित्वेन सेनाध्यक्षः संधिविग्रहादौ नियुज्यते तथेश्वरेण सर्वचेष्टान्तराधिकृतः स्वकीयदर्शनादिव्यापारनिमित्तं नियुक्तो भवतीत्याह—**राज्ञेति**। प्राणः स्वविलक्षणेन चेतनेन नियुज्यते प्रयोज्यत्वादश्वादिवदित्यनुमानाद्देहसंहतात्प्राणादतिरिक्तोऽसंहतश्चेतनः सिध्यतीति समुदायार्थः। चक्षुरादिचेष्टा चेतननिमित्ता चेष्टात्वाद्रथादिचेष्टावदित्यनुमानान्तरं सूचयति—**तस्यैवेति**। प्रकृतप्राणविषयस्तच्छब्दः। मात्रेत्येतस्य व्याख्यानमेकदेश इति। प्राणसंवादे चक्षुरादीनां प्राणपारतन्त्र्यप्रतीतेस्तदेकदेशत्वं तेषामिति द्रष्टव्यम् ॥ ३ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मानुच्यते न वृत्तिमात्रमित्याह—**एवमिति**। एवमपि प्राणोपाधिमात्रेण न दर्शनादिव्यवहारस्संभवति तस्य चक्षुरादीन्द्रियोपाधिकत्वादित्याशङ्क्य तं विशिनष्टि—**इन्द्रियेति**। "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राण" इति श्रुत्यन्तरेण एवंभूतस्यैव प्राणस्य उपाधित्वमुक्तमिति सूचयितुमाह—**प्रज्ञात्मेति**। एवं विशेषणेन ज्ञानक्रियाशक्तिद्वययुक्तलिङ्गशरीरलाभाद्व्यवहारद्वयं सिद्ध्यतीत्यभिप्रेत्याह—**विज्ञानेति**। **संमूर्छितात्मेति**। लिङ्गशरीरमित्यर्थः। अथ वा एकमेव वस्तु ज्ञानक्रियाख्यशक्तिद्वययोगाद्बुद्धिरिति प्राण इति चोच्यते, तत्तच्छक्तिप्राधान्येन, न तु तयोः भेदो "यो वै प्राणस्सा प्रज्ञेति" श्रुतेः तदिह शक्तिद्वययुक्तं वस्तु प्राणशब्देन गृह्यते, न पञ्चवृत्तिकमात्रमित्यर्थान्तरमाह—**प्रज्ञात्मेत्यादिना**। तत्र केन नियुक्त इत्यत आह—**ईश्वरेणेति**। ईश्वरेण आत्मना दर्शनादिव्यापाराधिकृतो नियुक्त इति प्रथममन्वयः, अत्र भृत्ये स्वामिन इव तटस्थस्येव न नियोगः प्राणे किन्तु प्राणव्यापारेषु स्वस्य तादात्म्येन अनुप्रविष्टतयेत्यभिप्रेत्य तत्र श्रुत्यन्तरं साधयति—**कस्मिन्निति**। उत्क्रान्त्यादिव्यवहारार्थं प्राणमसृजतेत्युक्त्या प्राणस्तद्व्यवहारार्थं नियुक्त इति गम्यत इति तत्र श्रुतिः प्रमाणमित्यर्थः, एतदेव दृष्टान्तप्रदर्शनेन स्पष्टयति—**राज्ञेवेति**। यथा राज्ञः सर्वार्थकारी सन्धिविग्रहादिष्वधिकृतः एवं दर्शनादिव्यापारेषु प्राणोऽधिक्रियत इत्यर्थः। नन्वेवं प्राणोपाधिकत्वेऽपि कथं वक्ष्यमाणं चाक्षुषत्वं चक्षुरुपाधिकत्वमित्याशङ्क्य प्राणशब्देन लिङ्गात्मनो वा ज्ञानक्रियाशक्तिद्वययुक्तवस्तुनो वाऽभिधानाच्चक्षुषश्च तदेकदेशत्वात्प्राणोपाधिकस्य चक्षुरुपाधिकत्वं युक्तमिति वक्तुं तत्र तदेकदेशत्वमाह—**तस्यैव तु मात्रा एकदेशश्चक्षुरिति**। मात्रेत्यस्य व्याख्यानमेकदेश इति मात्रेति शब्दं वदन् प्राज्ञामात्राः प्राणेऽर्पिता इति श्रुतिरत्रार्थे प्रमाणमिति दर्शयति—ज्ञानेन्द्रियाणीत्युक्तश्रुतिगतप्रज्ञामात्राशब्दार्थः। एवं प्राणोपाधिकस्य

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद्ँ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

अथ यत्र कृष्णतारोपलक्षितमाकाशं देहच्छिद्रमनुविषण्णमनुषक्तमनुगतं तत्र स प्रकृतोऽशरीर आत्मा चाक्षुषश्चक्षुषि भव इति चाक्षुषस्तस्य दर्शनाय रूपोपलब्धये चक्षुः करणं यस्य तद्देहादिभिः संहतत्वात्परस्य द्रष्टुरर्थे सोऽत्र चक्षुषि दर्शनेन लिङ्गेन दृश्यते परोऽशरीरोऽसंहतः। अक्षिणि दृश्यत इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारोपलक्षणार्थम्। सर्वविषयोपलब्धा हि स एवेति। स्फुटोपलब्धिहेतुत्वात्त्वक्षिणीति विशेषवचनं सर्वश्रुतिषु। "अहमदर्शं-

### नरेन्द्रपुरीयं टिप्पणम्

चेष्टा चेतननिमित्ता चेष्टत्वाद्रथचेष्टावदिति। एवं शरीराद्व्यतिरिक्तमात्मानं संभाव्यानन्तरं तस्यौपाधिकं द्रष्टृत्वमाह—अथ यत्रेति। दर्शनाय चक्षुरित्यस्य तात्पर्यमाह—यस्य तदिति। यत्संहतं तत्स्वविलक्षणशेषं दृष्टं यथाऽऽसनादि तथा तच्चक्षुर्देहादिभिः संहतत्वाद्यस्य विलक्षणस्य द्रष्टुरर्थंशेषभूतं सोऽत्र दर्शनेन लिङ्गेन दृश्यः तेन दर्शनं साश्रयं धर्मत्वाद्रूपादिवदित्यर्थः। एवं दृश्यत इत्यविरुद्धार्थं व्याख्यायाक्षिणीत्यस्य विवक्षितमर्थमाह—अक्षिणि दृश्यत इतीति। सर्वेन्द्रियैरुपलब्धृत्वं चेदविशिष्टं कथं तर्हि श्रुत्यन्तरेष्वक्षिण्येव पुरुष उपदिश्यत इत्याशङ्क्य स्फुटयति—चक्षुषस्स्फुटोपलब्धिहेतुत्वादिति। श्रुतिसंवादमाह—अहमदर्शमित्ति। यत्र प्रत्यक्षप्रत्ययस्तद्वस्तु सत्यं स्फुटोपलम्भं भवतीत्यर्थः ॥ ४ ॥

### आनन्दगिरिटीका

शरीराद्व्यतिरिक्तमात्मानं संभाव्य तस्यौपाधिकं द्रष्टृत्वमाचष्टे—अथेति। अतिरिक्तात्मसंभावनानन्तर्यमथशब्दार्थः। यत्र तत्रेतिसप्तमीभ्यां संसारदशोच्यते। अनुगतं चक्षुरिति संबन्धः। दर्शनाय चक्षुरित्यस्यार्थं समर्थयते—यस्येति। यस्य परस्य द्रष्टुरर्थे करणं चक्षुरिष्टं स परश्चक्षुषि लिङ्गेन दृश्यत इति संबन्धः। पारार्थ्ये चक्षुषो हेतुमाह—देहादिभिरिति। यत्संहतं तत्स्वविलक्षणशेषं दृष्टं यथा शयनासनादि तथा तदपि चक्षुर्देहादिभिः संहतत्वाद्यस्य विलक्षणस्य शेषभूतं सोऽत्र दर्शनेन लिङ्गेन दृश्यते। विमतं साश्रयं धर्मत्वाद्रूपादिवदित्यनुमानादित्यर्थः। दृश्यत इत्यस्याविरुद्धार्थमुक्त्वाऽक्षिणीत्यस्य विवक्षितमर्थमाह—अक्षिणीति। यथाऽक्षिद्वारा रूपोपलब्धा परस्तथा तत्तदिन्द्रियद्वारा तत्तद्विषयोपलब्धा पर एवेति कृत्वा युक्तमिदमुपलक्षणमिति साधयति—सर्वविषयेति।

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तदेकदेशभूतचक्षुरुपाधिकत्वे सति तस्य चक्षुषः अक्षिशब्दोक्तदेहच्छिद्रे विद्यमानत्वात्तदुपाधिकस्यात्मनः एषोऽक्षिणीत्युक्तं अक्षिस्थत्वं सिद्ध्यतीत्यर्थः ॥ ३ ॥

अथेति। एवं सतीत्यर्थः। अनुगतमित्यनन्तरं भाष्ये चक्षुरिति पदं द्रष्टव्यम्। पूर्ववाक्यस्थस्य चक्षुष इत्यस्य इहान्वयः। स प्रकृत इति, य एषोऽक्षिणीत्युक्त इत्यर्थः। चाक्षुष इति वर्तत इति शेषः। ननु तत्र चक्षुरेव वर्तते- तदेव दर्शनादिकर्तृ न ततोऽतिरिक्तः चाक्षुषः प्रमाणाभावादित्याशङ्क्य तस्य करणमात्रत्वात्कर्तृत्वानुपपत्तेरतिरिक्तं तमनुमापयति। चक्षुरिति वदन् तस्य पुरुषस्य दृश्यत्वमुपपादयितुं दर्शनाय चक्षुरिति वाक्यम्, तद्व्याचष्टे—तस्येति। श्रुत्या विवक्षितानुमानप्रकारं वदन् तस्याक्षिणि दृश्यत्वमाह—यस्येत्यादिना। तदिति पक्षनिर्देशः, तच्चक्षुः स्वस्मात्परस्य व्यतिरिक्तस्य द्रष्टुरर्थे भोगार्थं भवितुमर्हति। देहादिभिस्संहतत्वाद्गृहोपकरणादिवदित्यनुमानप्रयोगः। यस्य परस्य द्रष्टुरर्थे तच्चक्षुः सोऽत्र परोऽसंहतः प्रजापतिनोक्तः दर्शनेन चक्षुषा लिङ्गेन चक्षुषि अक्षिणि दृश्यत इत्यक्षरान्वयः।

ननु चक्षुषेव इतरकरणैरप्यात्मनोऽनुमानसंभवात् अक्षिण्येव दृश्यत इति कथमुक्तमत आह—सर्वेन्द्रियेति। उपलक्षणार्थमिति। अक्षिग्रहणमिति शेषः। प्रजापतिनोक्तमिति पाठे तु तस्य वाक्यस्य अक्षिणि दृश्यत इति प्रजापतिनोक्तं सर्वेन्द्रियद्वारा उपलक्षणार्थमित्युत्तरेणान्वयः। सर्वोपलक्षणे हेतुः—सर्वविषयेति। तर्हि श्रोत्रादिद्वारेण

**अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान्पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥**

मिति तत्सत्यं भवती"ति च श्रुतेः। अथापि योऽस्मिन्देहे वेद कथमिदं सुगन्धि दुर्गन्धि वा जिघ्राणीत्यस्य गन्धं विजानीयामितिस आत्मा तस्य गन्धाय गन्धविज्ञानाय घ्राणम्। अथ यो वेदेदं वचनमभिव्याहराणीति वदिष्यामी ति स आत्माऽभिव्यवहरणक्रियासिद्धये करणं वागिन्द्रियम्। अथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ।।४।।

अथ यो वेदेदं मन्वानीति मननव्यापारमिन्द्रियासंस्पृष्टं केवलं मन्वानीति वेद स आत्मा मननाय मनः। यो वेद स आत्मेत्येवं सर्वत्र प्रयोगाद्वेदनमस्य स्वरूपमित्यवगम्यते। यथा यः पुरस्तात्प्रकाशयति स आदित्यो यो

नरेन्द्रपुरीयं टिप्पणम्

य एषोऽक्षिणीत्यत्र सर्वेन्द्रियद्वारोपलब्धाऽभिहित इत्यभिप्रेत्य "अथ यो वेद" इत्यादिना स्फुटयति। **यो वेदेति**। अत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्षत्वान्मिथ्या, प्रकृत्यर्थरूपं तु संविन्मात्रं निरपेक्षसिद्धत्वात् सत्यमात्मस्वरूपमित्यभिप्रेत्याह—**यो वेद स आत्मेत्यादिना**। संवेदनस्वभाव आत्मा चेत्तत्संसर्गादेव विषयसिद्धिः प्रसज्येत अतश्च-

आनन्दगिरिटीका

सर्वेन्द्रियैरुपलब्धृत्वमविशिष्टं चेत्कथं तर्हि सर्वास्वपि श्रुतिषु चक्षुष्येवात्मोपदिश्यते तत्राऽऽह—**स्फुटेति**। चक्षुषः स्फुटोपलब्धौ हेतुत्वे श्रुतिं संवादयति—**अहमिति**। यत्रादर्शमिति चाक्षुषः प्रत्ययस्तद्वस्तु सत्यं स्फुटोपलम्भादिति द्वयोर्विवदमानयोर्दृष्टमित्यर्थः। य एषोऽक्षिणीत्यत्र सर्वेन्द्रियद्वारोपलब्धा विवक्षित इत्युक्तं व्यक्तीकरोति—**अथापीति**। चक्षुषि स्फुटोपलम्भेऽपीति यावत्। योऽस्मिन्देहे येन केनापीन्द्रियेण यं कंचिद्विषयं वेद स आत्मेति संबन्धः। उक्तमेवार्थमाकाङ्क्षाद्वारा स्फोरयति—**कथमित्यादिना**। जिघ्राणीति यो वेदेत्युक्तमेव संक्षिपति—**अस्येति** ॥ ४ ॥

इन्द्रियैर्घ्राणादिभिरसंस्पृष्टं तत्तद्द्वारेणानिष्पन्नमिति यावत्। केवलं मनोमात्रजनितमित्येतन्मन्वानि संपादयानीत्यर्थः। यो वेदेत्यत्र प्रत्ययार्थभूतं कर्तृत्वं सापेक्षत्वान्मिथ्या प्रकृत्यर्थं रूपं तु संविन्मात्रमनपेक्षतया सत्यमात्मस्वरूपमित्याह—**यो वेदेति**। आत्मा संवेदनस्वभावश्चेत्तत्संसर्गादेव विषयसिद्धिसंभवाच्चक्षुरादिवैयर्थ्यं

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

इतरद्रुपलक्ष्यतामत आह—**स्फुटेति**। तस्यैव "इन्धः ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुष" इत्यादिसर्वश्रुतिषु आदरे हेत्वन्तरमाह—**अहमिति**। यस्त्वहमश्रौषमित्याह यश्चाहमदर्शमित्याह, तयोर्मध्ये यश्चाहमदर्शमित्याह तदेव सत्यं भवतीति, चक्षुषः सत्यज्ञानहेतुत्वं श्रुत्यन्तरे उक्तमिति तस्य करणेषु श्रैष्ठ्यमित्यर्थः। एवमक्षिणि दृश्यत इति वचनं लैङ्गिकदर्शनपरतया व्याख्याय न केवलं लिङ्गेनैव अक्षिणि दृश्यते किंतु ज्ञातृज्ञानज्ञेयरूपत्रिपुटीसाक्षितया सर्वकरणद्वारेषु दृश्यत इति स्वप्रकाशदर्शनपरतया व्याख्यातुं अथ यो वेदेदं जिघ्राणीत्यादिवाक्यजातं, तद्व्याचष्टे—**अथापीति**। अपि चेत्यर्थः। एष एव पर्यायचतुष्टयेऽप्यथशब्दार्थः। स च लिङ्गेन साक्षिप्रत्यक्षसमुच्चयार्थः। इदंशब्देन गन्धवद्द्रव्यं गन्धो वा गृह्यत इति प्रश्नपूर्वकमाह—**कथमिति**। अस्येति पुष्पादेर्द्रव्यस्येत्यर्थः। ननु यदि घ्रातृघ्राणघ्रेयत्रिपुटीसाक्षिणा गृह्यते तर्हि किमर्थं घ्राणं करणमित्याशङ्क्य साक्षिणो घ्रेयेण सम्बन्धघटकवृत्तिज्ञानोत्पादकत्वेन अर्थवत्त्वमाह—**तस्येति**। आत्मन इत्यर्थः। एवं पर्यायान्तरेष्वपि व्याख्यानं द्रष्टव्यम्, द्वितीयपर्याये इदंशब्दार्थमाह—**वचनमिति**। शब्दमित्यर्थः ॥ ४ ॥

ननु घ्रात्यादयोऽपि मनोवृत्तय एवेति मननस्यैव कथं मनोव्यापारत्वमित्याशङ्क्य अस्य इन्द्रियासंयुक्तकेवलमनोजन्यत्वात्तस्यैव मनोव्यापारत्वेन निर्देश इत्याह—**मननेति**। अनेकपर्यायोक्तेः प्रयोजनमाह—**यो वेदेति**। क्रियासु घ्रात्रादिषु कर्तृषु च व्यावृत्तेषु सत्सु वेदितृत्वस्यानुगमात्क्रियाकर्तृव्यतिरिक्तं वेदनमेकं, तच्च आत्मस्वरूपमिति अवगम्यते स आत्मेति आत्मत्वोक्तेः। न च तस्य वेदनकर्तृत्वं घ्रात्रादिरूपेण व्यावृत्ताद्वेद्याच्च सकाशादनुगतस्य अवेद्यस्य वेदितुर्भेदावगमात्। पुरस्तादित्यादिषु व्यावर्तमानेषु अनुवर्तमानस्य प्रकाशस्यादित्यरूपत्वमिवेत्यर्थः। ननु

दक्षिणतो यः पश्चाद्य उत्तरतो य ऊर्ध्वं प्रकाशयति स आदित्य इत्युक्ते प्रकाशस्वरूपः स इति गम्यते। दर्शनादिक्रियानिर्वृत्त्यर्थानि तु चक्षुरादिकरणानि। इदं चास्याऽऽत्मनः सामर्थ्यादवगम्यते। आत्मनः सत्तामात्र एव ज्ञानकर्तृत्वं न तु व्यापृततया। यथा सवितुः सत्तामात्र एव प्रकाशनकर्तृत्वं न तु व्यापृततयेति तद्वत्। मनोऽस्याऽऽत्मनो दैवमप्राकृतमितरेन्द्रियैरसाधारणं चक्षुश्चष्टे पश्यत्यनेनेति चक्षुः। वर्तमानकालविषयाणि चेन्द्रियाण्यतोऽदैवानि तानि।

### नरेन्द्रपुरीयं टिप्पणम्

क्षुरादेर्वैयर्थ्यं स्यादित्याशङ्क्याह—दर्शनादिक्रियेति। संवेदनस्यासङ्गस्य स्वतो विषयसंसर्गानुपपत्तेस्तत्संसर्गभ्रमहेतोर्दर्शनादिक्रियाया अन्तःकरणवृत्तेर्निष्पत्त्यर्थानि चक्षुरादीनि करणानि सार्थकानि भवन्तीत्यर्थः। संविन्मात्रस्वभावत्वे कथं कर्तृत्वव्यपदेश इत्याशङ्क्य औपाधिकं ज्ञातृत्वमिति स्वमतमुक्तम्। औपचारिकमिति मतान्तरमाह—इदं चास्येति। विकारित्वे क्षीरादिवदनात्मत्वप्रसङ्गादात्मत्वसिद्धचनुपपत्तेश्चौपचारिकं कर्तृत्वमिति सांख्याभिप्रायः। एषोऽक्षिणि पुरुषो दृश्यत इति वाक्यं प्रपञ्च्य स तत्र पर्येतीति वाक्यं प्रपञ्चयितुमितरेन्द्रियेभ्यो वैलक्षण्यं मनसस्तावदाह—मनोऽस्येत्यादिना। सर्वेश्वरो व्यज्यते यस्मिन्विशुद्धे मनसि तन्मन उपाधिः अस्येति

### आनन्दगिरिटीका

स्यादित्याशङ्क्याऽऽह—दर्शनादीति। अन्तःकरणवृत्तिर्दर्शनादिक्रिया। सा चाऽऽत्मनः संविदेकरसस्यासङ्गोदासीनस्य विषयसंसर्गभ्रमहेतुस्तन्निष्पत्त्यर्थानि चक्षुरादीनि भवन्ति सार्थकानीत्यर्थः। तेषामुक्तरीत्या सार्थकत्वे गमकमाह—इदं चेति। करणानामुक्तं सार्थकत्वं प्रकृतस्य संविन्मात्रस्यासङ्गत्वादेव स्वतो विषयसंबन्धानुपपत्त्या तत्संबन्धभ्रान्तिकारणान्तःकरणवृत्तिविशेषापेक्षया निर्धारितमित्यर्थः। आत्मनः संविन्मात्रस्वभावत्वे कथं कर्तृत्वव्यपदेश इत्याशङ्क्याऽऽह—आत्मन इति। य एषोऽक्षिणीत्यादि वाक्यं प्रपञ्चितं संप्रति स तत्रेत्यादि फलवाक्यं प्रपञ्चयितुमिन्द्रियान्तरेभ्यो मनसो वैलक्षण्यं दर्शयति—मनोऽस्येति। तस्य चक्षुष्ट्वेऽपि कुतो दैवत्वमित्याशङ्क्याऽऽह—वर्तमा-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

वेदेति प्रत्ययेन कर्तृत्वं प्रतीयते न तु वेदनरूपत्वमित्याशङ्क्य कर्तृत्वस्य अप्रियवेत्तेव भवत्यपि रोदितीवेति इवकारेण मिथ्यात्वोक्तेः, अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति प्रियाप्रियप्रतिषेधात्कर्तृत्वे च तत्कार्यप्रियादियोगस्य अवश्यं भावित्वेन तत्प्रतिषेधायोगात् ध्यायतीव लेलायतीवेति श्रुत्यन्तराच्च "न कर्तृत्वं न कर्माणि" "न करोति न लिप्यते" इत्यादिस्मृतेश्च कर्तृत्वप्रतिपादनायोगात् तत्प्रतिपादने च इदं यो वेद स आत्मेत्येतावन्मात्रेणैव तत्प्रतिपादनसंभवे जिघ्राणीत्यादेर्वैयर्थ्यात्। न चात्मनः प्रत्यक्षसिद्धत्वकथनार्थं तदिति वाच्यं, तर्हि अहमिति यो वेदेत्येव स्यात्। न च अनुव्यवसायविषयत्वकथनार्थं तदुक्तिः। तत्कथनस्य प्रयोजनाभावात्, एकपर्यायोक्त्यैव तत्सिध्युपपत्तौ अनेकपर्यायोक्तिवैयर्थ्यात्, प्रकाशकस्यान्यप्रकाशकत्वं प्रकाशमानस्यैवेति प्रदीपादौ दृष्टत्वेन ज्ञानस्यापि तथात्वे वक्तव्ये अनुव्यवसायापेक्षज्ञानान्तरेण तस्य प्रकाशः, तस्यापि ज्ञानान्तरेणेति अनवस्थाप्रसङ्गेन एकस्याप्यप्रकाशप्रसङ्गात्। एकस्मिन् ज्ञाने आत्मनः कर्मत्वकर्तृत्वविरोधप्रसंगाच्च अनुव्यवसायानुपपत्तेः जिघ्राणीत्यस्य वैयर्थ्यप्रसङ्गाच्च। अस्मिन्मते च ज्ञात्रादेरननुगतत्वेन वेद्यत्वेन च अनात्मत्वप्रतिपादनार्थत्वेन अर्थवत्त्वात् आत्मैवास्य ज्योतिः, अत्रायं पुरुषः स्वयं ज्योतिः, विज्ञानं ब्रह्मेत्यादिश्रुतिभ्यः, आत्मा ज्ञानमयोऽमलः, ज्ञानस्वरूपो भगवान् यतोऽसौ इत्यादिस्मृतिभ्यश्च आत्मनः स्वप्रकाशज्ञानस्वरूपत्वावगमात्। अन्यथा जडत्वापत्तेः कर्तृप्रत्ययस्य साधुत्वार्थमेव प्रयोगः न तु कर्तृत्वप्रतिपादनार्थत्वमित्यभिप्रेत्य तदनुरूपदृष्टान्तेन परिहरति –यथेति। प्रकाशयतीत्यत्र आदित्यजन्यप्रकाशान्तराभावेन आदित्ये तत्कर्तृत्वानुपपत्तेः साधुत्वार्थमेव कर्तृप्रत्यय इति भावः। ननु वेदनस्य चक्षुरादिकरणानुविधायित्वात्तस्य च करणजन्यत्वादेकत्वमात्मरूपत्वं च अयुक्तमित्याशङ्क्य वेदनाभिव्यञ्जकदर्शनादिवृत्तिविषयत्वात्करणान्वयव्यतिरेकयोः न वेदनस्य करणजन्यत्वमित्याह—दर्शनादीति। किञ्चात्मनोऽविक्रियस्यैव सतः सन्निधाने सत्येव वेद्यस्य प्रकाशत इत्यादिव्यवहारयोग्यत्वादन्यथा चायोग्यत्वात्, तावन्मात्रेण आत्मनः कर्तृत्वोपचार इत्याह—इदं चास्यात्मनः इति। दर्शनाय चक्षुरित्यादिना दर्शनादितत्तद्व्यापारमात्रकरणत्वमात्रं उक्तमितरेषां, मनसस्तु नैवं मननव्यापारमात्रकरणत्वं, किन्तु सर्वव्यापारेष्विति वक्तुं तस्य दिव्यत्वमुक्तम्, विदुषो वक्ष्यमाणकामचारं प्रति हेतुत्वोपपादनार्थमित्यभिप्रेत्य तद्व्याचष्टे—मनोऽस्येत्यादिना। पश्यत्यनेनेति, जानात्यनेनेत्यर्थः। तस्य चाक्षुष-

[1]तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाँ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान्यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ ६ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य द्वादशः खण्डः ॥

मनस्तु त्रिकालविषयोपलब्धिकरणं मृदितदोषं च सूक्ष्मव्यवहितादिसर्वोपलब्धिकरणं चेति दैवं चक्षुरुच्यते। स वै मुक्तः स्वरूपापन्नोऽविद्याकृतदेहेन्द्रियमनोवियुक्तः सर्वात्मभावमापन्नः सन्नेष व्योमवद्विशुद्धः सर्वेश्वरो मनउपाधिः सन्नेतेनैवेश्वरेण मनसैतान्कामान्सवितृप्रकाशवन्नित्यप्रततेन दर्शनेन पश्यन् रमते। कान्कामानिति विशिनष्टि—य एते ब्रह्मणि लोके हिरण्यनिधिवद्बाह्यविषयासङ्गानृतेनापिहिताः संकल्पमात्रलभ्यास्तानित्यर्थः ॥ ५ ॥

यस्मादेष इन्द्राय प्रजापतिनोक्त आत्मा तस्मात्ततः श्रुत्वा तमात्मानमद्यत्वेऽपि देवा उपासते। तदुपासनाच्च

### नरेन्द्रपुरीयं टिप्पणम्

तथोक्तः। अविद्यादेः प्रतिबन्धकस्याभावान्मनसा नित्यप्रततं दर्शनं नित्याभिव्यक्तं स्वरूपचैतन्यं भवति। तेन पश्यन्निति योजना ॥ ५-६ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य द्वादशः खण्डः

### आनन्दगिरिटीका

नेति। आगन्तुकदोषराहित्यं मृदितदोषत्वम्। सर्वेश्वरो व्यज्यते यस्मिन्विशुद्धे मनसि तन्मनः सर्वेश्वरं तदुपाधिरस्येति तथोक्तः। ईश्वरेण तदभिव्यञ्जकेनेत्येतत्। अविद्यादिप्रतिबन्धकस्याभावान्मनसा नित्यं प्रततं दर्शनं नित्याभिव्यक्तस्वरूपं चैतन्यं तेन पश्यन्निति योजना ॥ ५ ॥

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ज्ञानमात्रकरणत्वाभावात् तस्य इन्द्रियान्तरसाधारण्यमुपपादयति—वर्तमानेति। एवमक्षिणि द्रष्टृत्वं लैङ्गिकदर्शनेन चक्षुरादित्रिपुटीसाक्षित्वेन चेत्युपपाद्य सर्वलोकसर्वकामावाप्तिफलं च सर्वात्मत्वेन सर्वसाक्षित्वमेवेति वक्तुं स वा एष इति वाक्यं व्याचष्टे--स वा इति। मलिनमनसो वियोगेऽपि विदुषः जीवन्मुक्तस्य शुद्धसत्त्वं सर्वदोषवर्जिते मनोऽस्ति। तेन मनसा ईश्वरेण सर्वग्रहणसमर्थेन सर्वकामदर्शनं संभवतीत्याह—एतेनैवेति। यद्वा सर्वात्मभावमापन्नत्वादेव पूर्वविद्यमानस्वकीयदेहेन्द्रियमनसामभावेऽपि कार्यब्रह्मलोकं प्राप्तः सगुणब्रह्मविद्भावमापन्नस्तदीयेन मनसा सर्वान्कामान् ब्रह्मलोकस्थान्पश्यतीति योज्यम्। तदिदमाह--सर्वात्मभावमापन्नः सन्निति। अथ वा सर्वोपाधिरहितत्वादेव ईश्वरेण तत्स्वभावभूतेन मनसा मननेन आलोचनरूपेण ज्ञानेन स्वरूपचैतन्येन पश्यन्निति वा अर्थो द्रष्टव्यः। सर्वथापि निर्गुणविद्या स्तूयते फलेन लौकिकेप्सितेन। मुख्यन्तु स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषो भवतीत्युक्तमेव फलमिति द्रष्टव्यम्। कानिति। कान्कामानित्याकाङ्क्षायां य एते ब्रह्मलोके इति विशिनष्टि इत्यन्वयः। ब्रह्मलोकशब्दस्य समानाधिकरण एव समासः, लोकविशेषवाचित्वे पूर्वोक्तानृतापिधानत्वस्य वैयर्थ्यात् देशेनैव व्यवधानादप्राप्त्युपपत्तेरित्यभिप्रेत्य पूर्वोक्तमनृतापिधानत्वं स्मारयति—हिरण्येति ॥ ५ ॥

आत्मज्ञानस्य अतिप्रयत्नेनापि संपाद्यत्वार्थं शिष्टाचारप्रदर्शनेन अव्यभिचारफलत्वं वक्तुं तं वा एतमित्यादिवाक्यं तद्व्याचष्टे—यस्मादित्यादिना। अद्यत्वेऽपीति। इदानीमपीत्यर्थः। उपासत इति। उपशब्दः सामीप्यवाची,

---

१. "तं वा एतं देवा आत्मानमुपासते" इत्यत्रात्मा परमतेऽपि जीवरूपएव एतमिति, तस्य दर्शनाय चक्षुरित्यादौ प्रकृतस्य जीवस्यानुकर्षणात् स सर्वांश्च लोकानाप्नोति इत्यत्रापि तच्छब्देन जीवोक्तेः' यस्तमात्मानमनुविद्येत्यपि जीवस्वरूपमेवापन्नम्। धूत्वा शरीरं अकृतं ब्रह्मलोकं अभिसंभवामीत्यत्र पूर्वत्र "एतं ब्रह्मलोकं न विन्दन्ति" इत्यत्रैव ब्रह्मैव लोक इति व्युत्पत्त्या ब्रह्मस्वरूपपरत्वमेव चन्द्र इव राहोर्विमुच्येति अज्ञाननिवृत्त्यभिधानात्।

**श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्येऽश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥ १ ॥**

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य त्रयोदशः खण्डः

तेषां सर्वे च लोका आप्ताः प्राप्ताः सर्वे च कामाः। यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास तत्फलं प्राप्तं देवैरित्यभिप्रायः। तद्युक्तं देवानां महाभाग्यत्वान्न त्विदानीं मनुष्याणामल्पजीवितत्वान्मन्दतरप्रज्ञत्वाच्च संभवतीति प्राप्त इदमुच्यते—स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिदानींतनोऽपि। कोऽसौ। इन्द्रादिवद्यस्तमात्मानमनुविद्य विजानातीति ह सामान्येन किल प्रजापतिरुवाच। अतः सर्वेषामात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवतीत्यर्थः। द्विर्वचनं प्रकरणसमाप्त्यर्थम् ॥ ६ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य द्वादशः खण्डः

श्यामाच्छबलं प्रपद्य इत्यादिमन्त्राम्नाय पावनो जपार्थश्च ध्यानार्थो वा। श्यामो गम्भीरो वर्णः श्याम इव श्यामो हार्दं ब्रह्मात्यन्तदुरवगाह्यत्वात्तद्धार्दं ब्रह्म ज्ञात्वा ध्यानेन तस्माच्छ्यामाच्छबलं शबल इव शबलोऽरण्याद्य-

नरेन्द्रपुरीयं टिप्पणम्

दहरविद्याप्रकरणे उपास्यस्तुत्यर्थं निर्विशेषब्रह्मात्मैकत्वज्ञानमुक्तं प्रासङ्गिकं तत्प्रपञ्चं परिसमाप्य प्रकृताया एव दहरविद्यायाश्शेषभूतजपविधानायाह—श्यामाच्छबलमित्यादिना ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य त्रयोदशः खण्डः

आनन्दगिरिटीका

तं वा एतमित्यादि व्याचष्टे—यस्मादिति। पदार्थमुक्त्वा वाक्यार्थमाह—यदर्थं हीति। स सर्वांश्चेत्यादिवाक्यमाशङ्कोत्तरत्वेनोत्थाप्य व्याचष्टे—तद्युक्तमित्यादिना। यथोक्तं फलं तच्छब्दार्थः। प्रकरणं निर्विशेषब्रह्मात्मैकत्वज्ञानविषयम् ॥ ६ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य द्वादशः खण्डः

दहरविद्याप्रकरणे निर्विशेषं ब्रह्म उपास्यस्तुत्यर्थं प्रसङ्गादुक्तं तत्प्रकरणपरिसमाप्त्यर्थं प्रकृताया दहरविद्यायाः शेषभूतजपविधानार्थमारभते—श्यामादिति। अत्यन्तदुरवगाह्यत्वाद्ध्यानहीनानामिति शेषः। कथं जीवतो ब्रह्म-

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तच्च सामीप्यं सङ्कोचकाभावे सति मुख्यैक्ये पर्यवस्यति। ततश्च ब्रह्मैक्येनासते वर्तन्त इत्यर्थः इत्यन्यत्रोक्तं भाष्यकारैः तदिह ग्राह्यम्। प्रसिद्धोपासनस्य अद्वितीयात्मन्यसंभवादिति। अस्य वाक्यस्य फलप्राप्त्या आवश्यकत्वकथनं प्रयोजनमित्याह—यदर्थमिति। सामान्येनेति। न तु देवानामेवेत्युक्तवानित्यर्थः। अत्र आख्यायिकायाः प्रयोजनविशेषो विद्याप्रकाशे उक्तः—

गुरुशुश्रूषया पापं विद्यायाः प्रतिबन्धकम्। अपैति विद्यालाभः स्यादित्यत्रेन्द्रो निदर्शनम्।
सर्वज्ञेनोपदिष्टोऽपि प्रतिबन्धक्षयं विना। न लभ्येत्यत्र दृष्टान्तो विरोचन उदीरितः।
गुरुः कारुणिको भूत्वा सोढायासः पुनः पुनः। प्रजापतिरिव प्राप्ताननुगृह्णातु सर्वदा ॥ ६ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य द्वादशः खण्डः

श्यामाच्छबलमित्यादिमन्त्रस्य लिङ्गात्सन्निधिबाधेन दहरविद्याशेषत्वमभिप्रेत्य तस्य विनियोगमर्थं चाह—श्यामादित्यादिना। जपार्थ इति। जपश्च लिङ्गाद्दहरविद्याङ्गमिति भावः। आध्यानार्थो वेति पाठे आध्यानं

[1]आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृत्ँ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कँ श्येतं लिन्दु माऽभिगां लिन्दु माऽभिगाम् ॥ १ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य चतुर्दशः खण्डः

नेककाममिश्रत्वाद्ब्रह्मलोकस्य शाबल्यं तं ब्रह्मलोकं शबलं प्रपद्ये मनसा शरीरपाताद्वोर्ध्वं गच्छेयम्। यस्मादहं शबलाद्ब्रह्मलोकान्नामरूपव्याकरणाय श्यामं प्रपद्ये हार्दभावं प्रपन्नोऽस्मीत्यभिप्रायः। अतस्तमेव प्रकृतिस्वरूपमात्मानं शबलं प्रपद्य इत्यर्थः। कथं शबलं ब्रह्मलोकं प्रपद्य इत्युच्यते—अश्व इव स्वानि लोमानि विधूय कम्पनेन श्रमं पांस्वादि च रोमतोऽपनीय यथा निर्मलो भवत्येवं हार्दब्रह्मज्ञानेन विधूय पापं धर्माधर्माख्यं चन्द्र इव च राहुग्रस्तस्तस्माद्राहोर्मुखात्प्रमुच्य भास्वरो भवति यथैवं धूत्वा प्रहाय शरीरं सर्वानर्थाश्रयमिहैव ध्यानेन कृतात्मा कृतकृत्यः सन्नकृतं नित्यं ब्रह्मलोकमभिसंभवामीति। द्विर्वचनं मन्त्रसमाप्त्यर्थम् ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य त्रयोदशः खण्डः

आकाशो वा इत्यादि ब्रह्मणो लक्षणनिर्देशार्थमाध्यानाय। आकाशो वै नाम श्रुतिषु प्रसिद्ध आत्मा।

नरेन्द्रपुरीयं टिप्पणम्

दहरोऽस्मिन्नन्तराकाश इत्युक्तस्याकाशस्योपास्यत्वेन स्वरूपनिर्णयायोत्तरं वाक्यमित्याह—आकाशो वै इत्यादिना। त इति पदं प्रथमाद्विवचनान्तमादाय व्याख्यातमिदानीं द्वितीयाद्विवचनान्तं षष्ठ्यर्थमादाय व्याचष्टे—

आनन्दगिरिटीका

लोकप्राप्तिरित्याशङ्क्याऽऽह—मनसेति। न तर्हि मुख्या तत्प्राप्तिरित्याशङ्क्याऽऽह—शरीरेति। विपरीतपाठं हेतुत्वेनेति व्याचष्टे—यस्मादिति। हेतुः प्रतिज्ञया योज्यते—अत इति। दृष्टान्तमाकाङ्क्षापूर्वकमवतार्य व्याचष्टे—कथमित्यादिना। शरीरस्य त्याज्यत्वे हेतुमाह—सर्वानर्थेति। इतिशब्दो ध्यानसमाप्त्यर्थो दहरोऽस्मिन्नन्तराकाश इति ॥१॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य त्रयोदशः खण्डः

लक्षणनिर्देशस्य प्रकृतोपयोगं दर्शयति—आध्यानायेति। "सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति। आकाशो ह्येवैभ्यो ज्यायान्"त्याद्याः श्रुतयः। आकाशशब्देनाऽऽत्मनः श्रुतिषु

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

मन्त्रार्थचिन्तनं तदपि पूर्ववद्दहरविद्याङ्गमिति द्रष्टव्यम्। मनसेति इदानीं मनसा प्रपद्ये चिन्तयामि पश्चाद्गच्छेयमित्यर्थः। ब्रह्मलोकस्य समष्टिजीवघनरूपत्वात्ततो व्यष्टेर्जीवस्य पृथग्भावमपेक्ष्य शबलाच्छ्यामं प्रपद्य इति वाक्यं भूतार्थे लट्प्रत्ययमङ्गीकृत्य पूर्ववाक्यार्थे हेतुत्वेन योजयति—यद्यस्मादिति। यदिति भाष्यकारपदस्य यस्मादिति व्याख्यानं न पुनरुक्तिदोषः। हार्दभावमिति। हार्दब्रह्माभिन्नजीवभावमित्यर्थः। चन्द्र इवेत्यत्र पठितस्य इवकारस्यार्थमाह—यथैवमिति। पुण्यपापत्यागे च शरीरत्यागे च यथाक्रमं दृष्टान्तद्वयमिति भावः। आपेक्षिकमकृतत्वमभिप्रेत्याह—अकृतमिति ॥ १ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य त्रयोदशः खण्डः

य एषोऽक्षिणीत्यादिना पूर्वं विस्तरेण त्वंपदार्थपरिशोधनपूर्वकं तस्य तत्पदार्थत्वमुक्तं, स उत्तमपुरुष इति। इदानीं सङ्ग्रहेण तत्पदार्थशोधनद्वारा तस्य त्वंपदार्थरूपत्वं वक्तुं आकाशो ह वा इति ब्राह्मणमित्याह—आकाशो ह

१. "आकाशो वै नामे"त्यत्र आकाशपदार्थः ब्रह्म नामरूपनिर्वाहकत्वलिङ्गात्। ते यदन्तरा तद्ब्रह्मेति च निर्गुणमेवोक्तं सगुणस्य चतुर्मुखादिरूपवत्त्वात्। प्रजापतेः सभां वेश्मेति ब्रह्मलोकस्थब्रह्मपरं तस्यैव सभावेश्म

आकाश इवाशरीरत्वात्सूक्ष्मत्वाच्च। स चाऽऽकाशो नामरूपयोः स्वात्मस्थयोर्जगद्बीजभूतयोः सलिलस्येव फेनस्थानीययोर्निर्वहिता निर्वोढा व्याकर्ता। ते नामरूपे यदन्तरा यस्य ब्रह्मणोऽन्तरा मध्ये वर्तेते, तयोर्वा नामरूपयोरन्तरा मध्ये यन्नामरूपाभ्यामस्पृष्टं यदित्येतत्तद्ब्रह्म नामरूपविलक्षणं नामरूपाभ्यामस्पृष्टं तथाऽपि तयोर्निर्वोढृत्वं लक्षणं ब्रह्मेत्यर्थः। इदमेव मैत्रेयीब्राह्मणेनोक्तं चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैवेति गम्यत एकवाक्यता। कथं तदवगम्यत इत्याह—स आत्मा। आत्मा हि नाम सर्वजन्तूनां प्रत्यक्चेतनः स्वसंवेद्यः प्रसिद्धस्तेनैव स्वरूपेणोन्नीयाशरीरो व्योमवत्सर्वगत आत्मा ब्रह्मेत्यवगन्तव्यम्। तच्चाऽऽत्मा ब्रह्मामृतममरणधर्मा। अत ऊर्ध्वं मन्त्रः। प्रजापति-

### नरेन्द्रपुरीयं टिप्पणम्

**तयोर्वा नामेति। यदन्तरेति।** समासपदं व्याख्यातमिदानीं यदित्येतद्वचस्तं पदं द्रष्टव्यमित्यर्थः। प्रथमव्याख्याने वाच्यवाचकशक्ती मायाप्रापिते ब्रह्माश्रये विवक्षिते। द्वितीयव्याख्याने नामरूपशक्तिमती मायैवोपाधिभूता अभिप्रेता यत्रस्थं ब्रह्म जगत्कारणत्वमनुभवति, द्विधापि संक्षेपतस्तात्पर्यमाह—**नामरूपविलक्षणमिति।** यत्तच्छब्दप्रयो-

### आनन्दगिरिटीका

प्रसिद्धत्वे हेतुमाह—**आकाश इवेति।** ते यदन्तरेत्यत्र ते इति पदं प्रथमाद्विवचनान्तं गृहीत्वा व्याख्याय द्वितीयाद्विवचनान्तं षष्ठ्यर्थमादाय व्याचष्टे—**तयोर्वेति।** यदन्तरेति समस्तं पदं पूर्वत्र व्याख्यातमधुना तु व्यस्तं व्याकृतं तदेव व्याकरणं संक्षिपति—**नामरूपाभ्यामिति।** ताभ्यामस्पृष्टं चेत्कथं तन्निर्वाहकमित्याशङ्क्याऽऽह—**नामरूपाभ्यामस्पृष्टमिति।** मायावशादिति शेषः। आत्मत्वेऽपि कथं करतलामलकवद्ब्रह्मणोऽपरोक्षत्वमत आह—**आत्मा हीति।** तेन स्वसंवेद्यत्वेनेति यावत्। कुतो देहद्वयोपहितस्याऽऽत्मनः स्वसंवेद्यत्वं तत्राऽऽह—**अशरीर इति।** परि-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

**वा इत्यादीति।** संक्षेपविस्तराभ्यां उक्तोऽर्थस्सम्यग्बुद्धिमारोहतीति न्यायादध्यायत्रयेण विस्तरेणोक्तं ब्रह्मात्मैक्यमिदानीं संक्षेपेण वक्तुं इदं ब्राह्मणमित्यर्थः। **उपलक्षणेति।** तटस्थलक्षणनिर्देशार्थं, तच्च आध्यानाय ब्रह्मणि चित्तप्रवेशार्थमित्यर्थः उपलक्षणोक्तिद्वारा तत्पदस्य वाच्यमर्थमाह—**आकाश इति।** "आकाश इति होवाच" "दहरोऽस्मिन्नन्तराकाशः" "य एषोऽन्तर्हृदय आकाश" इत्यादिषु प्रसिद्धः इत्यर्थः। रूढिमुक्त्वा गौणीं वृत्तिमाह—**आकाश इवेति।** नामरूपयोरेव बीजत्वे ब्रह्मणस्तन्न स्यादित्याशङ्क्य तयोर्ब्रह्माव्यतिरेकेणाभावमाह—**सलिलस्येवेति।** तयोः स्थितिरपि तत्रैवेत्याह—**ते नामेति।** इदमुपलक्षणं प्रलयोऽपि तत्रैवेत्यपि द्रष्टव्यम्। अनेन जन्मादिकारणत्वं लक्षणमुक्तम्। एवं ते यदन्तरेति वाक्यं ब्रह्मणि नामरूपे स्थ इति प्रदर्शनद्वारा उपलक्षणपरतया व्याख्याय इदानीं तत्पदार्थशोधनेन तल्लक्ष्यं स्वरूपलक्षणेन दर्शयितुं ते यदित्यादि तदमृतमित्यन्तं वाक्यमिति व्याख्यानान्तरमाह—**तयोर्वेति।** अन्तरान्तरेण युक्त इति, अन्तराशब्दयोगादिति द्वितीया षष्ठ्यर्थे इत्यर्थः। यथा ग्रामद्वयसीम्नोर्मध्यं ग्रामद्वयास्पृष्टं एवं नामरूपयोर्मध्ये यद्ब्रह्मेत्युक्ते तदसंस्पृष्टमिति गम्यत इत्याह—**नामरूपाभ्यामिति।** दृश्यत्वव्यभिचारादिभिः तयोर्मिथ्यात्वान्मिथ्याभूतयोश्च नामरूपयोर्वस्तुतोऽधिष्ठानास्पर्शित्वात्तच्छुद्धमित्यर्थः। तस्य स्वरूपलक्षणमाह—**अमृतमिति।** मरणनिषेधस्सर्वनामरूपधर्मनिषेधार्थ इत्याह—**नामेति।** नामरूपास्पर्शिनः कथं तन्निर्वोढृत्वं विरोधादित्याशङ्क्य परमार्थतः तदस्पर्शिनोऽपि मायया तन्निर्वोढृत्वमाह—**नामेति।** अत्र यद्यपीति पदं द्रष्टव्यम्। **कथमिति।** इदमपि निर्वोढृ अपि ब्रह्म किं वेद्यतया अनात्मतया चावगन्तव्यं उत स्वप्रकाशात्मतयेति प्रश्नार्थः। भेदे प्रमाणाभावात् स्वप्रकाशात्मतयैव ज्ञेयं इत्याह—**इत्याहेति।** आत्मशब्देन अन्तर्याम्यभिधीयत इति केषांचिद्भ्रमं प्रसिद्धिविरोधेन निराकरोति—**आत्मा हि नामेति।** उन्नेय इति पाठे ज्ञेय इत्यर्थः। षष्ठाध्यायोक्तरीत्या तत्पदार्थानुवादेन

---

सम्भवात्। "यशोऽहं भवामि ब्राह्मणानामि"त्यादौ सर्वेषामात्मा भवामीत्यर्थः परैः कृतः। आत्मशब्दस्यान्तर्यामिपरत्वे अहमन्तर्यामी भवामीत्यनुपपन्नं जीवपरत्वे जीवभेदादनुपपन्नम्। अतोऽहमिति अन्तर्यामिपरमित्युक्तम्। तन्न। अशब्दार्थत्वात्। अहं भवामि प्रापत्सि इत्यादेरनुपपत्तेश्च।

श्चतुर्मुखस्तस्य सभां वेश्म प्रभुविमितं वेश्म प्रपद्ये गच्छेयम्। किंच यशोऽहं यशो नामाऽऽत्माऽहं भवामि ब्राह्मणानाम्। ब्राह्मणा एव हि विशेषतस्तमुपासते ततस्तेषां यशो भवामि। तथा राज्ञां विशां च। तेऽप्यधिकृता एवेति तेषामप्यात्मा भवामि। तद्यशोऽहमनुप्रापत्स्यनुप्राप्तुमिच्छामि स ह्याहं यशसामात्मनां देहेन्द्रियमनोबुद्धिलक्षणानामात्मा। किमर्थमहमेवं प्रपद्य इति, उच्यते—श्येतं वर्णतः पक्वबदरसमं रोहितम्। तथाऽदत्कं दन्तरहितमप्यदत्कं भक्षयितृ स्त्रीव्यञ्जनं तत्सेविनां तेजोबलवीर्यविज्ञानधर्माणामपहन्तृ विनाशयित्रित्येतत्। यदेवंलक्षणं श्येतं लिन्दु पिच्छिलं तन्माऽभिगां माऽभिगच्छेयम्। द्विर्वचनमत्यन्तानर्थहेतुत्वप्रदर्शनार्थम् ॥ १ ॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य चतुर्दशः खण्डः

## नरेन्द्रपुरीयं टिप्पणम्

गात्परोक्षत्वशङ्कायामाह—इदमिति। प्रत्युग्रूपेणापरोक्षमित्यर्थः। ब्रह्मैव प्रत्यग्भूतमिति। कथमवगम्यत इत्याकाङ्क्षायामनात्मत्वे अब्रह्मत्वप्रसङ्गात् प्रत्यग्भूतं ब्रह्म वक्तव्यमित्यर्थः। स्त्रीव्यञ्जनं योनिः ॥ १ ॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य चतुर्दशः खण्डः

## आनन्दगिरिटीका

च्छिन्नस्याशरीरत्वमयुक्तमित्याशङ्क्याऽऽह—व्योमवदिति। ब्रह्मैव प्रत्यक्षभूतमिति कथमवगतमित्याशङ्क्याऽऽह—आत्मेति। अनात्मत्वं चेदब्रह्मत्वप्रसङ्गात्प्रत्यग्भूतं ब्रह्म वक्तव्यमित्यर्थः। उपास्यस्वरूपं दर्शयित्वा तदुपासकस्य प्रार्थनामन्त्रमुत्थाप्य व्याकरोति—अत ऊर्ध्वमिति। प्रथमतो ब्राह्मणग्रहणे हेतुमाह—ब्राह्मणा एवेति। विशेष्यं निर्दिशति—स्त्रीव्यञ्जनमिति। योनिशब्दितं प्रजननेन्द्रियमित्यर्थः। कथं तद्भक्षयितृ भवेत्तदाह—तत्सेविनामिति। तदभिगमनं नाम गर्भवासस्तस्यातिशयेनानर्थहेतुत्वं ज्ञापयितुं द्विर्वचनमित्यर्थः ॥ १ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य चतुर्दशः खण्डः

## अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तस्य त्वंपदार्थत्वमुक्त्वा अष्टमाध्यायोक्तरीत्या त्वंपदार्थानुवादेन तस्य तत्पदार्थभेदं व्यतीहारन्यायेनाह—अशरीर इति।

यद्यपि इदं श्यामाच्छबलमित्यतः प्रागेव वक्तुमुचितं, अस्य पूर्वोक्तार्थसंग्रहरूपत्वात्, तथापि खिलकाण्डरूपत्वादस्य व्यवधानं न दोषाय। अत एव प्रजापतेस्सभामित्याद्युपरितनदहरविद्याङ्गमन्त्रपाठोऽपि इहोच्यत इति भावः। न केवलं वेश्मैव प्रपद्ये किन्तु क्रममुक्त्या ततस्सर्वप्रत्यगात्मापि स्यामित्याह—किं चेति। यद्वा यशोऽहमित्यादि निर्गुणविद्याङ्गमन्त्रान्तरं वा। यशश्शब्दार्थमाह—यशो नामात्मेति। "न तस्य प्रतिमास्ति यस्य नाम महद्यश" इति श्रुत्यन्तरादात्मा यशश्शब्देन उच्यत इत्यर्थः। ननु विदुषस्सर्वप्रत्यगात्मत्वे सति ब्राह्मणानामात्मेति कथं विशेषग्रहणमित्याशङ्क्य तेषां विशेषेण ज्ञाने अधिकारात्तेषु आत्माभिव्यक्तिविशेषमपेक्ष्य तथोक्तिरित्याह—ब्राह्मणा एवेति। एवमुत्तरत्रापि। न मम सर्वप्रत्यक्त्वं प्रार्थनीयं, किन्तु इदानीमपि सर्वप्रत्यगात्मैवाहमिति वदन् तस्मादेव हेतोर्देहेन्द्रियादीनामपि पारमार्थिकं रूपमहमेवेत्याह—यस्माद्यशोऽहमिति। आत्मनामात्माभिमानवतामित्यर्थः। अनात्मनामिति पाठे तेषां यशस्त्वं यशश्शब्दोक्तात्मसत्तया सत्त्वादिति द्रष्टव्यम्। पुनर्योनिद्वारप्रवेशपरिहारार्थमेवं प्रार्थयामीत्याह—उच्यत इति। न विद्यन्ते दन्ता अस्येत्यर्थे प्रथमं अदत्कपदं व्याख्याय द्वितीयं पदं अत्तीत्यददिति शतृप्रत्ययान्तं, कुत्सितार्थे कप्रत्ययान्तं चेत्यभिप्रेत्य व्याचष्टे—भक्षयित्रिति। तत्सेविनां विनाशयितृ इत्यन्वयः। किमेवंभूतमित्यत आह—स्त्रीव्यञ्जनमिति। स्त्रीयोनिरित्यर्थः। तस्यैव पुनर्विशेषणान्तरं वदन् तत्र जुगुप्सामाह—श्येतमिति। पिच्छिलमिति। नवनीतादितुल्यस्पर्शमित्यर्थः ॥ १ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य चतुर्दशः खण्डः

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि [1]संप्रतिष्ठाप्याहिँसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ॥ १ ॥

इति च्छान्दोग्योपनिषदि अष्टमाध्यायस्य पञ्चदशः खण्डः

इति च्छान्दोग्योपनिषद्ब्राह्मणे अष्टमोऽध्यायः समाप्तः

तद्धैतदात्मज्ञानं सोपकरणमोमित्येतदक्षरमित्याद्यैः सहोपासनैस्तद्वाचकेन ग्रन्थेनाष्टाध्यायीलक्षणेन सह ब्रह्मा हिरण्यगर्भः परमेश्वरो वा तद्द्वारेण प्रजापतये कश्यपायोवाच। असावपि मनवे स्वपुत्राय। मनुः प्रजाभ्य इत्येवं श्रुत्यर्थसंप्रदायपरम्परयाऽऽगतमुपनिषद्विज्ञानमद्यापि विद्वत्स्ववगम्यते। यथेह षष्ठाद्यध्यायत्रये प्रकाशितात्मविद्या सफलाऽवगम्यते तथा कर्मणां न कश्चनार्थ इति प्राप्ते तदानर्थक्यप्राप्तिपरिजिहीर्षयेदं कर्मणो विद्वद्भिरनुष्ठीयमानस्य विशिष्टफलवत्त्वेनार्थवत्त्वमुच्यते—आचार्यकुलाद्वेदमधीत्य सहार्थतोऽध्ययनं कृत्वा यथाविधानं यथास्मृत्युक्तैर्नियमैर्युक्तः

### नरेन्द्रपुरीयं टिप्पणम्

उक्तविद्यायाः पुरुषोत्प्रेक्षारूपत्वशङ्काव्युदासायानादिपारंपर्यागतत्वमाह—तद्धैतदित्यादिना। प्रकरणं परिसमाप्य विद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थमाहेति कथयति—यथेहेत्यादिना।

### आनन्दगिरिटीका

उक्तविज्ञानस्यौत्प्रेक्षिकत्वशङ्कां व्युदस्यन्ननादिपारम्पर्यागतत्वं दर्शयति—तद्धैतदिति। सोपकरणमुपकरणैः शमादिभिः सहितमिति यावत्। तद्द्वारेण हिरण्यगर्भद्वारेणेत्यर्थः। विद्याप्रकरणं समाप्याविद्वदनुष्ठितस्य कर्मणः साफल्यमविद्वत्संतोषार्थं कथयति—यथेत्यादिना। इहेति प्रकृतोपनिषदुक्तिः। प्राङ्मुखत्वपवित्रपाणित्वादयो

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

तद्धैतदित्यादि प्रजाभ्य इत्यन्तं विद्यासंप्रदायानुस्मरणार्थमित्याह—तद्धैतदिति। तथा च विदुषां तत्संप्रदायस्सर्वदा स्मर्तव्य इति भावः। सोपकरणमिति। ससाधनमित्यर्थः। परमेश्वर इत्युक्तेस्तद्द्वारेणेति हिरण्यगर्भद्वारेणेत्यर्थः। आत्मलाभेनैव पुरुषार्थलाभे कर्मणां वैयर्थ्यमाशङ्क्य फलाभिसन्धिपूर्वमनुष्ठितस्य तत्तत्फलजनकत्वेन अर्थवत्त्वं सिद्धवत्कृत्य फलाभिसन्धिरहितस्य मुमुक्षुणाऽनुष्ठितस्य चित्तशुद्धिज्ञानप्राप्तिद्वारा मोक्षार्थवत्त्वं वक्तुमुत्तरो ग्रन्थ इति, तत्तात्पर्यमाह—यथेहेति षष्ठाध्यायमात्रेति।[2] यद्यपि सप्तमाष्टमाध्याययोरपि आत्मविद्या सफलोक्तेति मात्रपदानुपपत्तिः, तथापि षष्ठाध्यायोक्तैवात्मविद्या आत्मनस्सुखरूपत्वचिद्रूपत्वनिरूपणेन तयोर्विवृता न पुनस्सप्तमाष्टमयोरुक्ताऽन्या सगुणविद्यायामिव निर्गुणविद्यायां भेदाभावादिति षष्ठाध्यायमात्रेइत्युक्तमिति न दोषः। इदमिति। इदं चित्तशुध्यादिद्वारा मोक्षे अर्थवत्वमुच्यते उत्तरग्रन्थेनेति व्यवहितान्वयः—आचार्यकुलादिति। आचार्यकुले स्थित्वेति

१. अहिंसन् सर्वभूतान्यन्यत्रतीर्थेभ्यः—इत्यत्र यागीयहिंसा नाभिप्रेता तस्याः न वा उवेतन्म्रियसे—इत्यनेनाहिंसात्वोक्तेः इति पर। तन्न। तस्यापि तीर्थमध्ये गणनसंभवात्। अतिशयिताभ्युदयसाधनभूतो व्यापारोऽल्पदुःखदोऽपि न हिंसा किं तु रक्षणमेव चिकित्सककृतशस्त्रचिकित्सावत् इत्युक्तत्वात् रामानुजीयभाष्ये "अशुद्धमिति चेन्न शब्दादि"त्यधिकरणान्ते (ब्र.सू.३-१-२५) तुलसीलवनादेरपि भगवत्प्रसादहेतुत्वेन तदभिमानिजीवस्याभ्युदयकारित्वात् अहिंसात्वसंभवात् इत्युक्तेः। सिद्धान्ते तु मरणानुकूलव्यापारो हिंसा। सा च यागीयहिंसापि, परन्तु उत्सर्गापवादन्यायेन यागीयव्यतिरिक्तस्यैव प्रतिषेधः। अभ्युदयकारिहिंसायाः अहिंसात्वे प्रयागक्षेत्रकृतब्रह्महत्यायाः मोक्षसाधनप्रयागमरणहेतुत्वेन अहिंसात्वात् तत्र ब्राह्मणहन्तुः प्रायश्चित्ताभावप्रसङ्गः। अतो नेदं साधु। २. पाठान्तरम्

सन्नित्यर्थः। सर्वस्यापि विधेः स्मृत्युक्तस्योपकुर्वाणकं प्रति कर्तव्यत्वे गुरुशुश्रूषायाः प्राधान्यप्रदर्शनार्थमाह—गुरोः कर्म यत्कर्तव्यं तत्कृत्वा कर्मशून्यो योऽतिशिष्टः कालस्तेन कालेन वेदमधीत्येत्यर्थः। एवं हि नियमवताऽधीतो वेदः कर्मज्ञानफलप्राप्तये भवति नान्यथेत्यभिप्रायः। अभिसमावृत्य धर्मजिज्ञासां समापयित्वा गुरुकुलान्निवृत्य न्यायतो दारानाहृत्य 'कुटुम्बे स्थित्वा गार्हस्थ्ये विहिते कर्मणि तिष्ठन्नित्यर्थः। तत्रापि गार्हस्थ्यविहितानां कर्मणां स्वाध्यायस्य

### नरेन्द्रपुरीयं टिप्पणम्

वासुदेवोऽस्मि सर्वज्ञः सर्वात्मा सर्वभावनः। नित्यवोधोऽद्वयः सत्यः सूक्ष्मश्शुद्धोऽभयः प्रभुः॥ १॥

छान्दोग्यभाष्यमधिकृत्य सदद्वितीयवस्तूपपादनपरं विदुषां हिताय।
सट्टिप्पणं मञ्जु (मृदु) नरेन्द्रपुरी यतीशश्चक्रे सुबोधमिति कोमलवाक्यजातैः॥ २॥

इति श्रीमन्नरेन्द्रपुरीटिप्पण्यामष्टमाध्यायस्य पञ्चदशः खण्डः

इति शाङ्करच्छान्दोग्यभाष्यटिप्पणे अष्टमोऽध्यायः

### आनन्दगिरिटीका

नियमाः। भिक्षाशनस्नानाचमनादिर्विधिः। किमित्येष नियमोऽध्ययने कथ्यते तत्राऽऽह—एवं हीति। तत्रापीति

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

ल्यब्लोपपञ्चमी। सहार्थत इति। अर्थज्ञानसाधनैरङ्गैस्सहेत्यर्थः। न तु धर्मजिज्ञासया सहेत्यर्थः। तस्या अभिसमावृत्येत्यत्र वक्ष्यमाणत्वादिति। ननु यथाविधानमित्यनेनैव गुरुशुश्रूषाया अप्युक्तत्वात् गुरोः कर्मातिशेषेणेति तस्याः पुनर्ग्रहणं इतरपरिसंख्यानार्थं स्यादित्याशङ्क्य पुनर्ग्रहणस्य तस्याः प्राधान्यप्रकाशनेन अर्थवत्त्वोपपत्तेर्न त्रिदोषदुष्टपरिसङ्ख्यानार्थत्वमित्याह—सर्वस्यापीति। कर्तव्यत्वे इति। सत्यपीति शेषः। अतिशिष्ट इति। अनेन अतिशेषेणेतिपदं कर्मणि घञन्तत्वेन व्याख्यातम्। शुश्रूषायाः प्राधान्योक्तेः प्रयोजनमाह—एवं हीति।

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथ वा विद्यया विद्या चतुर्थं नोपलभ्यते॥

इति स्मृतौ विद्याप्राप्तावुपायत्रयोक्तावपि शुश्रूषया प्राप्तैव विद्या सफला नान्यथेति पुनर्ग्रहणसामर्थ्यादवगम्यत इति भावः। अभिसमावर्तनोक्त्या तत्पूर्वधर्मजिज्ञासाऽऽक्षिप्यते। अन्यथा अर्थज्ञानासिद्धेरित्याह—धर्मेति, न्यायत इति। ब्राह्मादिविवाहैर्यथावर्णं विहितैरित्यर्थः। कुटुम्बे स्थित्वेत्यनेनैव गृहस्थधर्मनित्यस्वाध्यायस्यापि लाभाच्छुचौ देशे स्वाध्यायमधीयान इति पुनर्ग्रहणं पूर्ववत्तस्य प्राधान्यार्थमित्याह—तत्रापीति। कर्मणां मध्य इति

---

१. छान्दोग्याष्टमाध्यायः सगुणविषयां दहरविद्यामारभ्य मध्ये निर्गुणपरां प्रजापतिविद्यामुपदिश्यान्ते सगुणविद्ययोपसंहरति। मध्ये सगुणविद्यास्तुतये निर्गुणब्रह्मविद्यामिन्द्रविरोचनयोः प्रजापतिमुखेनोपदिदेश। तत्फलञ्च "अस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति वाक्येनोपसंहरति। इयमेव रीतिः श्रीमद्बादरायणाचार्यैः ब्रह्मसूत्रेषु समाश्रिता। तत्र हि—आदितः आनन्दमयाधिकरणान्तं परमतात्पर्यविषयीभूतां निर्गुणविद्यां प्रदर्श्यानन्तरम् "अन्तस्तद्धर्मोपदेशात्" (ब्र.सू. १-१-२०) इत्यतः सगुणविद्यां विचार्य फलाध्याये चतुर्थपादे आदौ "सम्पद्याविर्भावः स्वेन शब्दात्" (ब्र.सू.४-४-१) "मुक्तः प्रतिज्ञानात्" (ब्र.सू. ४-४-२) इति सूत्राभ्यां "स्व स्वरूपाविर्भाव एव मुक्तिरिति" प्रदर्श्य छान्दोग्यरीत्यैवान्ते सगुणफलमुपसंजहार जगद्व्यापारसूत्रेण "अनावृत्तिः शब्दादनावृत्तिः शब्दात्" (ब्र.सू.४-४-२२) इत्यन्तेन। अत्र मुक्तपदानुपादानेन ब्रह्मलोकप्राप्तिर्न मुक्तिः ब्रह्मलोकं प्राप्तस्य तत्रैव विचारेण स्वरूपाविर्भावद्वारैव मुक्तिः सम्पादनीयेति सूचितम्। प्रायः छान्दोग्यमनुसरति सूत्रकारः, तस्य सगुणनिर्गुणोभयपरत्वात्। अत्रायं संदेहो जायते—छान्दोग्य एव "ब्रह्मसंस्थोऽमृतत्वमेती"त्यनेन संन्यास उपपादितः, ब्रह्मसंस्थायाः असंन्यासिनि असम्भवात्। तत्कथं छान्दोग्यान्ते गृहस्थेनोपसंहार इति। अयं स्थूलदृशां प्रश्नः, न तु तत्त्वज्ञानाम्। छान्दोग्य एव षष्ठे "तद्धास्य विजज्ञावि"त्यनेन तत्त्वज्ञानं जीवन्मुक्तिं च श्वेतकेतोः ब्रह्मचारिणः दर्शनेन ज्ञानस्य आश्रमविशेषनिर्बन्धो नास्त्येव रैक्ववाचक्नवीप्रभृतीनां ज्ञानोपलब्धेरिति समाधातुं शक्यते। आचार्यैस्तु "आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य" (छा. ८-१५-१) इत्यनेन संन्यास उक्त एव। गृहस्थादेः सर्वेन्द्रियव्यापाराणामात्मनि संप्रतिष्ठाऽसम्भवात् इत्यर्थः

प्राधान्यप्रदर्शनार्थमुच्यते—शुचौ विविक्तेऽमेध्यादिरहिते देशे यथावदासीनः स्वाध्यायमधीयानो नैत्यकमधिकं च यथाशक्ति ऋगाद्यभ्यासं च कुर्वन्धार्मिकान्पुत्राञ्शिष्यांश्च धर्मयुक्तान्विदधद्धार्मिकत्वेन तान्नियमयन्नात्मनि स्वहृदये हार्दे ब्रह्मणि सर्वेन्द्रियाणि संप्रतिष्ठाप्योपसंहृत्येन्द्रियग्रहणात्कर्माणि च संन्यस्याहिंसन्हिंसां परपीडामकुर्वन्सर्वभूतानि स्थावरजङ्गमानि भूतान्यपीडयन्नित्यर्थः। भिक्षानिमित्तमटनादिनाऽपि परपीडा स्यादित्यत आह—अन्यत्र तीर्थेभ्यः। तीर्थं नाम शास्त्रानुज्ञाविषयस्ततोऽन्यत्रेत्यर्थः। सर्वाश्रमिणां चैतत्समानम् तीर्थेभ्योऽन्यत्राहिंसैवेति। अन्ये वर्णयन्ति कुटुम्ब एवैतत्सर्वं कुर्वन्स खल्वधिकृतो यावदायुषं यावज्जीवमेवं यथोक्तेन प्रकारेणैव वर्तयन्ब्रह्मलोकमभिसंपद्यतेदेहान्ते। न च पुनरावर्तते शरीरग्रहणाय। पुनरावृत्तेः प्राप्तायाः प्रतिषेधात्। अर्चिरादिना मार्गेण कार्यब्रह्मलोकमभिसंपद्य यावद्ब्रह्मलोकस्थितिस्तावत्तत्रैव तिष्ठति प्राक्ततो नाऽऽवर्तत इत्यर्थः। द्विरभ्यास उपनिषद्विद्यापरिसमाप्त्यर्थः॥ १॥

इति च्छान्दोग्योपनिषच्छाङ्करभाष्ये अष्टमाध्यायस्य पञ्चदशः खण्डः

इति श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यपरमहंसपरिव्राजकाचार्यश्रीमच्छङ्करभगवत्पादकृतौ च्छान्दोग्योपनिषद्विवरणे अष्टमोऽध्यायः

### आनन्दगिरिटीका

सप्तम्या यथोक्तोऽधिकारी गृहीतः। एतत्सर्वं स्वयं कुर्वन्ब्रह्मलोकमभिसंपद्यत इति संबन्धः। एवं वर्तयन्नित्यस्य व्याख्यानमेवं यथोक्तेन प्रकारेण कुर्वन्निति। अप्राप्तप्रतिषेधाशङ्कां वारयति—पुनरावृत्तेरिति। चन्द्रलोकादिवद्ब्रह्म-

### अभिनवनारायणानन्देन्द्रसरस्वतीटीका

शेषः। एवं धार्मिकान्विदधदिति वक्ष्यमाणमध्यापनस्य पुनर्वचनं तस्य प्राधान्यार्थमेव। अत एव श्रुत्यन्तरे ऋतं च स्वाध्यायप्रवचने चेत्यनुवाके तयोः प्रतिपर्यायमभ्यासेन प्राधान्यमुक्तमिति भावः। नैत्यकमिति। अहरहः कर्तव्यब्रह्मयज्ञस्वाध्यायमित्यर्थः। अधिकमिति। पूर्वमगृहीतस्यापि तयोर्वृध्यर्थमध्ययनं दर्शयति, हार्दे ब्रह्मणीति प्रत्यग्रूपेण हृदयं प्रविष्टे ब्रह्मणीत्यर्थः। सर्वेन्द्रियोपसंहारोक्त्या कर्मेन्द्रियाणामप्युपसंहारात्सर्वकर्मन्यासेन स्वरूपावस्थानमत्र विवक्षितमित्याह—सर्वेन्द्रियग्रहणादिति। तर्हि जीवनहेतुव्यवहारस्याप्यभावाज्जीवनविलोपः स्यादित्याशङ्क्य भिक्षाटनादिकमनुजानाति—अहिंसन्निति। भिक्षाटनादिव्यापारादन्यत्र अहिंसन्नित्युक्तिद्वारा भिक्षाटनादिकमनुज्ञातमित्यर्थः। अन्यथा सर्वेन्द्रियोपसंहारवतो हिंसाया अप्रसक्तेः प्रतिषेधानुपपत्तेः। ततश्च भिक्षाटनादिव्यापारे अनुज्ञाते तु तत्र हिंसाप्रसक्तिमाशङ्क्य अहिंसन्नित्यस्य न प्रकृतसर्वकर्मसंन्यासिमात्रविषयत्वं, अपि तु सामर्थ्यात्सर्वाश्रमिविषयत्वमित्याह—सर्वेति। अन्यत्र तीर्थेभ्यः इत्युच्यत इत्यस्य वाक्यस्य अर्थवत्त्वमिति। एवंभूतस्य विदुषः सद्यः शरीरपाते प्राप्ते तस्य तावदेव चिरमिति षष्ठाध्यायोक्तरीत्या प्रारब्धकर्मक्षयप्रतीक्षां दर्शयति श्रुतिः स खल्वेवमिति। ब्रह्मैव लोकः लोकः लोकनं प्रकाशः स्वप्रकाशब्रह्म अभिसंपद्यत इत्यर्थः।

एवंभूतस्य अविद्यानाशाद्बीजाभावेन न पुनरावृत्तिरित्याह श्रुतिः न स पुनरावर्तत इति। एवं स्वाभिमतं व्याख्यानं दर्शयित्वा केचित्तु पूर्वोक्तानां कर्मणां वैयर्थ्याशङ्कायां निरभिसन्धेः कर्मणो ब्रह्मलोकफलकत्वेन वैयर्थ्यं परिह्रियते आचार्यकुलादित्यादिकया श्रुत्येति व्याख्यातं, तदाह—अन्य इति। तेषां पक्षे कुटुम्ब एव यावदायुषं स्थित्वेति व्यवहितान्वयं दोषं सूचयति तदीयव्याख्यानप्रदर्शनावसर एव कुटुम्ब एवेति। देहान्त इति पदञ्च अध्याहर्तव्यम्, निर्गुणविद्यायामिव इहैव ब्रह्मलोकसंपत्तेः असंभवादित्याह—देहान्त इति। एवमपुनरावृत्तिरपि निरंकुशा

---

प्रादर्शि। सूत्रकारास्तु "कुटुम्बे शुचौ देशे" ( छा० ८-१५-१ ) इत्यादिवाक्यानुरोधेन गृहस्थपरतां चरमवाक्यस्याङ्गीकृत्य आत्मनि सर्वेन्द्रियसम्प्रतिष्ठापनञ्च संकोचेनैव व्याख्येयमित्यपि स्वीकृत्य सूत्रं प्राणिन्युः "कृत्स्नभावात्तु गृहिणोपसंहारः" (ब्र सू. ३-४-४८) इति अस्यार्थः भाष्योक्तः—सहकार्यन्तरविधिसूत्रे बाल्यपाण्डित्यवत् मौनस्यापि विधिरङ्गीकार्यः, मौनं नाम ज्ञानातिशयः ब्रह्मसंस्थात्मकः। स च संन्यासिष्वेव सम्भवति नाश्रमान्तरेषु। तथा च संन्यासेनोपसंहारे कर्तव्ये गृहिणोपसंहारस्य तात्पर्यमाह—"कृत्स्नभावात्त्विति" (ब्र.सू.३-४-४८) एवमवतार्य गृहिणां बहुलायासानि बहूनि कर्माणि सन्ति। संन्यासिनामसाधारणानि च शमदमदयाऽहिंसादीन्यपि सन्ति। तस्माद्गृहिणोपसंहारः छान्दोग्ये इति। केनकठप्रश्नमुण्डकमाण्डूक्यतैत्तिरीयैतरेयकेषु सर्वत्र निर्गुणविद्ययोपसंहारो दृश्यते। अत्र तु पूर्वं निर्गुणमुपसंहृत्य पश्चात्सगुणोपसंहार इति विशेषः।

**ॐ आप्यायन्तु[1] ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च सर्वाणि सर्वं ब्रह्मौपनिषदं माऽहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मे अस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।**

**ॐ शान्तिः शान्तिः शान्तिः**

आनन्दगिरिटीका

लोकादपि प्राप्ता पुनरावृत्तिस्तस्या न चेत्यादिना प्रतिषेधान्नाप्राप्तप्रतिषेधप्रसक्तिरित्यर्थः । अपुनरावृत्तिवाक्यस्थान्यक्षराणि व्याकरोति—अर्चिरादिनेति । प्रागिति महाप्रलयात्पूर्वंकालोक्तिः । ततो ब्रह्मलोकादित्यर्थः ॥ १ ॥

वियदादिजगज्जातं जातमज्ञानतो यतः । तदस्मि नामरूपादिविरहि ब्रह्म निश्रेयस् ॥ १ ॥
नमस्त्रय्यन्तसंदोहसरसीरुहभानवे । गुरवे परपक्षौघध्वान्तध्वंसपटीयसे ॥ २ ॥

इति श्रीमदानन्दगिरिटीकायामष्टमाध्यायस्य पञ्चदशः खण्डः

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीशुद्धानन्दपूज्यपादशिष्यभगवदानन्दज्ञानकृतायां श्रीशङ्करभगवत्प्रणीतच्छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः समाप्तः

अभिनवनारायणानन्देन्द्रसरस्वतीटीका

श्रूयमाणा संकोचनीया । "आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन" इति स्मृत्या कार्यं ब्रह्मलोकं प्राप्तानां पुनरावृत्तिश्रवणादिति सूचयति—यावद्ब्रह्मलोकस्थितिरिति । ननु ब्रह्मलोकादपि निरङ्कुशैव अपुनरावृत्तिरस्त्वित्याशङ्क्य यथाप्राप्तपुनरावृत्तिप्रतिषेधादस्मिन्नेव च कल्पे पुनरावृत्तेः प्राप्तत्वात्सैव प्रतिषिध्यते । न पुनस्सर्वदापि, तेषामिह न पुनरावृत्तिरिति श्रुत्यन्तरे इहेति विशेषणात्पूर्वोक्तस्मृतेश्चेत्याह—पुनरावृत्तेरिति । स्वव्याख्याने तु निरङ्कुशैव सा पुनरावृत्तिहेत्वभावादिति भावः । इदमुपलक्षणम् । अन्येषां व्याख्याने आत्मनि सर्वेन्द्रियाणीति सर्वविशेषणमनुपपन्नम् । उपासनायाः प्रत्यगात्मविषयत्वाभावादव्यतिरिक्तब्रह्मविषयत्वात् । आचार्यकुलादिति ब्रह्मचर्यस्योक्तत्वात्, कुटम्ब इति गार्हस्थ्यवानप्रस्थयोरुक्तत्वादात्मनि सर्वेन्द्रियाणीत्यनेन संन्यासोक्त्यौचित्याच्च "त्रयो धर्मस्कन्धा" इत्यत्रेव आचार्यव्याख्यैव युक्ता, न चैवं "कृत्स्नभावात्तु गृहिणोपसंहार" इति सूत्रं गृहस्थेनोपसंहाराभिप्रायकं विरुध्येतेति वाच्यम् । परिणामवादाभ्युपगमेन "भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवदि"ति सूत्रवत् "कुर्वन्नेवेह कर्माणि" इति मन्त्रस्य यावज्जीवं कर्मानुष्ठानविधायकत्वाभ्युपगमेन तस्यातिरिक्तविषयत्वप्रतिपादनं नाविशेषादिति सूत्रवच्च अस्यापि गृहस्थोपसंहारपरत्वाभ्युपगमेन प्रवर्तितत्वात् । अन्यथा आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्येत्यस्य गृहस्थे असङ्कोचेनानुपपत्तेः पूर्वोक्तन्यायविरोधापत्तेश्चेति ॥ १ ॥

अङ्गुष्ठतर्जनीयोगमुद्राव्याजेन देहिनाम् । श्रुत्यर्थं ब्रह्मजीवैक्यं दर्शयन्नोऽवताच्छिवः ॥ १ ॥
श्रीमज्ज्ञानेन्द्रगुरवे दक्षिणामूर्तये नमः । कृपासुधासमुद्राय ज्ञानशीतांशुहेतवे ॥ २ ॥

इति श्रीमदभिनवनारायणानन्देन्द्रसरस्वतीटीकायामष्टमाध्यायस्य पञ्चदशः खण्डः

श्रीशङ्करभगवत्कृतच्छान्दोग्यभाष्यटीकायामष्टमोऽध्यायः समाप्तः

---

१ ममाङ्गानि हस्तपादादीनि तथा चक्षुरादीनि आप्यायन्तु वर्धन्तां "प्यायी वृद्धौ" इति धातुः । ब्रह्म औपनिषदमुपनिषदेकवेद्यं नान्यप्रमाणगोचरं तच्च सर्वं "सर्वं खल्विदं ब्रह्मे"त्युक्तेः । सर्वोपादानत्वेन सर्वात्मकत्वात् । तेन रागद्वेषादीनामनवसरः । माऽहं ब्रह्मैतादृशं निराकुर्याम् । ब्रह्माभावे लोकव्यवस्था लुप्येत्, तदुक्तं—'सा च प्रशासनादि"ति । यदि कश्चित् शून्यवादी वा चार्वाको वा ब्रह्म निराकुर्यात् तदा सोऽसन् भवेत् "असन्नेव स भवति असद्ब्रह्मे वेद चेत्" इति, आत्मनि निरते आत्मस्वरूपपरिज्ञानोत्सुके मयि उपनिषत्सु ये धर्माः ज्ञानायोपदिष्टाः शमदमादयः श्रवणमननादयश्च ते सन्तु आदरार्थं पुनर्वचनम् । ॐ शान्तिरिति त्रिर्वचनमाध्यात्मिकादिपीडात्रयनिवृत्तये । ओमिति मङ्गलार्थम् ।

**इति छान्दोग्योपनिषत्सपूर्णा**

## मन्त्रसूची


अ

अग्निर्हिंकारो वायुः ७१
अग्निष्टे पादं वक्तेति १४२
अजा हिंकारोऽवय ७०
अतो यान्यन्यानि २५
अत्र यजमान० तस्मै रुद्राः ८७
अत्र यजमान० तस्मै वसवः ८७
अत्स्यन्नं पश्यसि प्रियं वैश्वानरमुपास्ते पादौ २००
अत्स्यन्नं पश्यसि० वैश्वानरमुपास्ते प्राणस्त्वेष १९९
अत्स्यन्नं पश्यसि० वैश्वानरमुपास्ते बस्तिस्त्वेष २००
अत्स्यन्नं० मूर्धात्वेष १९८
अत्स्यन्नं० वैश्वानरमुपास्ते संदेहस्त्वेष १९९
अथ खलु य उद्गीथः स प्रणवो० स उद्गीथ इति होतृषदनात् ३१
अथ खलु य उद्गीथ इत्यसौ वा आदित्यः २९
अथ खलु व्यानं २४
अथ खलूद्गीथाक्षराणि २५
अथ खल्वमुमादित्यं ६२
अथ खल्वात्मसंमितं ६४
अथ खल्वाशीः० २६
अथ खल्वेतयर्चा १७१
अथ जुहोति नम आदित्येभ्यश्च ८८
अथ जुहोति नमोऽग्नये ८७
अथ जुहोति नमो वायवे ८७
अथ तत ऊर्ध्वंः ९८
अथ प्रतिसृप्याञ्जलौ १७०
अथ य आत्मा स सेतुः ३६५
अथ इमे ग्रामे १८५
अथ य एतदेवं विद्वानग्निहोत्रं २०४
अथ य एतदेवं विद्वान्साम ३८
अथ य एषोऽन्तरक्षिणि ३६
अथ य एष संप्रसादः ३६१
अथ यच्चतुर्थममृतं ९८
अथ यत्तदजायत १२६
अथ यत्तपो दानं १२१
अथ यत्तृतीयममृतं ९५
अथ यत्पञ्चमं ९८
अथ यत्प्रथमास्तमिते ६४
अथ यत्प्रथमोदिते ६३
अथ यत्रैतत्पुरुषः २६०
अथ यत्रैतदबलिमानं ३७९
अथ यत्रैतदस्माच्छरीरात् ३७९
अथ यत्रैतदाकाशमनविषण्णं ४२२
अथ यत्रोपाकृते १५८
अथ यत्संप्रति मध्यंदिने ६३
अथ यत्सत्रायणमित्याचक्षते ३६९
अथ यदतः परो १०८
अथ यदनाशकायनमित्याचक्षते ३६९
अथ यदवोचं भुवः प्रपद्ये ११७
अथ यदवोचं भूः प्रपद्ये ११७
अथ यदवोचं स्वः प्रपद्ये ११७
अथ यदश्नाति १२०
अथ यदाऽस्य वाङ्मनसि २८४
अथ यदि मन्धमाल्यलोककामः ३५७
अथ यदि गीतवादित्रलोककामः ३५७
अथ यदि तस्याकर्ता २८६
अथ यदिदमस्मिन्ब्रह्मपुरे ३६४
अथ यदि भ्रातृलोककामः ३५७
अथ यदि महज्जिगमिषेत् १६९
अथ यदि मातृलोककाम- ३५७
अथ यदि यजुष्टः १५९
अथ यदि सखिलोककामः ३५७
अथ यदि सामतः १५९
अथ यदि स्त्रीलोककामः ३५७
अथ यदि स्वसृलोककामः ३५७
अथ यदु चैवास्मिन् १५३
अथ यदूर्ध्वमपराह्णात् ६३
अथ यदूर्ध्वं मध्यंदिनात् ६३
अथ यदेतदक्ष्णः ३६
अथ यदेतदादित्यस्य ३३
अथ यदेवैतदादित्यस्य ३३
अथ यद्यन्नपानलोककामः ३५७
अथ यद्यप्येनानुत्क्रान्तप्राणान् ३२३
अथ यद्यज्ञ इत्याचक्षते ३६८
अथ यद्येनमूष्मसूपालभेत ७४
अथ यद्द्वितीयममृतं ९५
अथ यद्धसति १२०
अथ या एता हृदयस्य नाड्यः ३७६
अथ यानि चतुश्चत्वारिंशद्वर्षाणि ११९
अथ यान्यष्टाचत्वारिंशद्वर्षाणि ११९
अथ यां चतुर्थीं जुहुयात् २०३
अथ यां तृतीयां जुहुयात्तां २०३
अथ यां द्वितीयां जहुयात्तां २०३
अथ यां पञ्चमीं २०४
अथ ये चास्येह जीवाः ३५९
अथ येऽस्य दक्षिणाः ९१
अथ येऽस्य प्रत्यञ्चः ९२
अथ येऽस्योदञ्चः ९२
अथ येऽस्योर्ध्वा ९३
अथ यो वेदेदं मन्वानीति ४२३
अथ योऽस्य दक्षिणः १०६
अथ योऽस्य प्रत्यङ् १०६
अथ योऽस्योदङ् सुषिः १०७
अथ योऽस्योर्ध्वः सुषिः १०७
अथ सप्तविधस्य ६१
अथ संगववेलायां ६३

अथ ह चक्षुः १९
अथ ह प्राण उच्चिक्रमिषन् १६४
अथ ह प्राणा अहँ श्रेयसि १६३
अथ ह मनः १९
अथ ह य एतानेवं १९४
अथ ह य एवायं १९
अथ ह वाचं १८
अथ ह शौनकं च कापेयं १३५
अथ ह श्रोत्रं १९
अथ ह हँसा १२९
अथ हाग्नयः १४६
अथ हेन्द्रोऽप्राप्यैव ३९३
अथ हैनमन्वाहार्य॰ १४९
अथ हैनमाहवनीयः १५०
अथ हैनमुद्गाता ४९
अथ हैनमृषभः १४१
अथ हैनं गार्हपत्यः १४८
अथ हैनं प्रतिहर्ता ४९
अथ हैनं प्रस्तोतोपससाद ४८
अथ हैनं यजमानः ४८
अथ हैनं वागुवाच १६५
अथ हैनँ श्रोत्रमुवाच १६५
अथ होवाच जनं १९९
अथ होवाच बुडिलं २००
अथ होवाच सत्ययज्ञं १९८
अथ होवाचेन्द्रद्युम्नं १९९
अथ होवाचोद्दालकं २००
अथात आत्मादेश एव ३३८
अथातः शौवः ५०
अथाधिदैवतं २३
अथाध्यात्मं प्राणो वाव १३५
अथाध्यात्मं य एवायं ३०
अथाध्यात्मं वागेव ३६
अथानु किमनुशिष्टः १७२
अथानेनैव ३८
अथाऽऽवृत्तेषु द्यौर्हिंकारः ५७
अथैतयोः पथोः १९३
अथोताप्याहुः ५५
अधीहि भगव इति होपससाद २९५
अनिरुक्तस्त्रयोदशः ५३
अन्तरिक्षमेव ३३
अन्तरिक्षोदरः कोशः ११६
अन्नमयँ हि सोम्य मनः २४८
" " " २४९
अन्नमशितं त्रेधा विधीयते २४६
अन्नमिति होवाच ४९
अन्नं वाव बलाद्भूयः ३१४
अन्यतरामेव वर्तनीं १५७
अपाने तृप्यति २०३
अपां का गतिः ४०
अपां सोम्य पीयमानानां २४९
अभिमन्थति स हिंकारः ६६
अभ्राणि संप्लवन्ते ६८
अभ्रं भूत्वा मेघो भवति १८९
अमृतत्वं देवेभ्यः ७४
अयं वाव लोको हाउकारः ५२
अयं वाव स योऽयमन्तः पुरुष आकाशो १०४
अयं वाव स योऽयमन्तर्हृदय आकाशः १०४
अरिष्टं कोशं प्रपद्ये ११७
अशनापिपासे मे सोम्य २५८
अशरीरो वायुरभ्रं ४१४
असौ वा आदित्यः ८९
असौ वाव लोको गौतमाग्निः १७४
अस्य यदेकां शाखां २७२
अस्य लोकस्य का गतिः ४२
अस्य सोम्य महतः २७१

आ

आकाशो वाव तेजसः ३१८
आकाशो वै नाम ४२७
आगाता ह वै २२
आत्मानमन्त २७
आपयिता १२
आदित्प्रत्नस्य रेतसः १२२
आदित्य इति होवाच ४९
आदित्य ऊकारः ५२
आदित्यमथ वैश्वदेवं ८७
आदित्यो ब्रह्म १२४
आदिरिति द्व्यक्षरं ६५
आपः पीतास्त्रेधा २४७
आपो वावान्नाद्भूय॰ ३१६
आप्नोति हाऽऽदित्यस्य ६५
आप्यायन्तु ( शान्तिपाठः ) १
आशा वाव स्मराद्भूय॰ ३२०

इ

इति तु पञ्चम्या॰ १८०
इदमिति ह प्रतिजज्ञे १५२
इदं वाव तज्ज्येष्ठाय १००
इमाः सोम्य नद्यः २६९
इयमेवर्गग्निः साम ३२

उ

उदशराव आत्मानमस्य ३८८
उदाने तृप्यति २०४
उद्गीथ इति त्र्यक्षरं ६५
उद्गृह्णाति तन्निधनं ५८
उद्दालको हाऽऽरुणिः २५३
उद्यन्हिंकार उदितः ६८
उपकोसलो ह वै १४६
उपमन्त्रयते स ६७

ऋ

ऋग्वेदं भगवोऽध्येमि २९७
ऋतुषु पञ्चविधं ५९

ए

एकविंशत्याऽऽदित्यं ६५
एतद्ध स्म वै तद्विद्वानाह १२०
एतद्ध स्म वै तद्विद्वाँस २४५
एतमु एवाह॰ पुत्रमुवाच प्राणाँस्त्वं ३१
एतमु एवाह॰ पुत्रमुवाच रश्मीँस्त्वं ३०
एतमृग्वेदमभ्यतपँ ९०
एतेषां मे देहीति ४५
एतँ संयद्वाम १५३
एवमेव खलु सोम्य २७३
एवमेव खलु सोम्यान्नस्य २४९
एवमेव खलु सोम्येमाः २७०

एवमेव प्रतिहर्ता ४७
एवमेवैष मघवन्निति भूयोऽनु-
व्याख्यास्यामि नो० एवा-
न्यत्रैतस्माद्वसापराणि ४००
एवमेवैष मघ० भूयोऽनुव्याख्या-
स्यामि वसापराणि ३९६
एवमेवैष संप्रसादः ४१६
एवमेवोद्गातारं ४७
एवमेषां लोकानां १६०
एवं यथाऽश्मानं १९
एवं सोम्य ते २५२
एष उ एव भामनीरेष १५३
एष उ एव वामनीरेष १५३
एष तु वा अतिवदति यः ३२५
एष म आत्मा ११४
एष वै यजमानस्य ८८
एष ह वा उदक्प्रवणः १६०
एष ह वै यज्ञो योऽयं १५६
एषां भूतानां ७

ओ

ओमित्येतदक्षरमुद्गीथमुपासीत ६
ओमित्येतदक्ष० २८
ओ३मदा३मों ५१
ओं समस्तस्य खलु ५४

औ

औपमन्यव कं १९७

क

कतमा कतमक् ८
कल्पन्ते ह्यस्मा ऋतवः ५९
कल्पन्ते ह्यस्मै लोका ५७
का साम्नो गतिरिति ४०
कुतस्तु खलु सोम्यैव २२१
कं ते काममागायानीति ३८
क्व तर्हि यजमानस्य लोक इति ८५

ग

गायत्री वा इद्ँ सर्वं भूतं १००
गोअश्वमिह महिमा ३३५

च

चक्षुरेव ब्रह्मणः १२४
चक्षुरेवर्गात्मा ३६
चक्षुर्होच्चक्राम १६४
चित्तं वाव संकल्पाद्भूयः ३०९

ज

जानश्रुतिर्ह पौत्रायणः १२९

त

त इमे सत्याः कामा ३५८
त इह व्याघ्रो वा सिंहो वा २६८
त एतदेव रूपमभि० ९४
" " ९५
" " ९५
" " ९८
" " ९८
तत्रोद्गातॄन् ४६
तथाऽमुष्मिँल्लोके ४४
तथेति ह समुपविविशुः ३९
तदुताप्याहुः ५४
तदु ह जानश्रुतिः पौत्रायणः १३२
तदु ह० षट्शतानि १३२
तदु ह० शौनकः कापेयः १३६
तदेतच्चतुष्पाद्ब्रह्म १२३
तदेतन्मिथुनम् १२
तदेष श्लोकः । शतं चैका च
हृदयस्य ३८१
तदेष श्लोको न पश्यो ३४०
तदेष श्लोको यदा १७१
तदेष श्लोको यानि ७२
तदैक्षत बहु स्यां २२६
तद्धैतत्सत्यकामो १६९
तद्धैतद्ब्रह्मा प्रजापतय
आचार्यः ४३०
" "० तद्धैत १००
तद्धैतद्घोर १२१
तद्धोभये देवासुरा ३८४
तद्य इत्थं विदुः १८१
तद्य इह रमणीयचरणाः १९२
तद्य एवैतं ब्रह्म ३६७
तद्य एवैतावरं च ण्यं ३७०
तद्यत्प्रथमममृतं ९३
तद्यत्रैतत्सुप्तः समस्तः०
•विजानात्यासु ३७७
तद्यत्रैतत्सुप्तः समस्तः०
विजानात्येष ३९९
तद्यथा महापथ आततः ३७७
तद्यथा लवणेन १६०
तद्यथेषीका २०५
तद्यथेह कर्मजितो लोक ३५५
तद्यद्ध्रुवतं प्रथम० २०२
तद्यदृक्तो रिष्येद्भूः १५९
तद्यद्रजतं १२६
तद्वा एतदनुज्ञाक्षरं १२
तद्व्यक्षरत्तदादि० कृष्णं ९२
तद्व्यक्ष० परः कृष्णं ९२
तद्व्यक्ष० मध्ये क्षोभत ९३
तद्व्य० रोहितं ९१
तद्व्य० शुक्लं ९१
तमग्निरभ्युवाद १४३
तमु ह परः प्रत्युवाच कम्वरे १३०
तमु ह परः प्रत्युवाचाह
हारेत्वा १३३
तयोरन्यतरां मनसा १५७
तस्मा आदित्यश्च ८८
तस्मा उ ह ददुस्ते १३७
तस्मादप्यद्येहाददान० ३९३
तस्मादाहुः सोष्यत्यसोष्टेति १२१
तस्मादु हैवंविद्यद्यपि २०५
तस्माद्वा एतं सेतुं तीर्त्वा ३६६
तस्मिन्निमानि ६२
तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं १७८
तस्मि० रेतो १७९
तस्मि० श्रद्धां १७६
तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं १७८
तस्मि० सोमं १७८
तस्मिन्यावत्संपातमुषित्वा १८६
तस्मै श्वा श्वेतः ५०

तस्य क्व मूलꣳ
स्यादन्यत्रान्नादेवमेव २५९
तस्य० क्व मूलꣳ स्यादन्यत्राद्भ्यो अद्भिः २६१
तस्य प्राची दिग्जुहूर्नाम ११६
तस्य यथा कप्यासं ३४
तस्य यथाभिनहनं प्रमुच्य २७८
तस्य ये प्राञ्चो रश्मयस्ता ९०
तस्यर्क्च साम च ३५
तस्य ह वा एतस्य हृदयस्य १०५
तस्य ह वा एतस्याऽऽत्मनो २०२
तस्य ह वा एतस्यैवं ३४०
तस्या ह मुखमुपोद्गृह्णन्नुवाच १३४
तं चेदेतस्मिन्वयसि० प्राणा
आदित्याः ११९
तं० प्राणा रुद्राः ११९
तं० प्राणा वसवः ११९
तं चेद्ब्रूयुरस्मिश्चेदिदं ३५१
तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे ३४८
तं जायोवाच १४६
तं मद्गुरुपनिपत्याभ्युवाद १४४
तं वा एतं देवा ४२५
तꣳ ह समुपनिपत्याभ्युवाद १४३
तꣳ ह चिरं वसेत्या० १७४
तꣳ ह प्रवाहणो ४२
तꣳ हाभ्युवाद रैक्वेदं १३३
तꣳ ह शिलकः ४०
तꣳ हाङ्गिरा २१
तꣳ हैतमतिधन्वा ४४
तꣳ होवाच किंगोत्रो नु १४०
तꣳ होवाच नैतदब्राह्म० १४१
तꣳ होवाच यथा सोम्यस्यैकं० २५२
तꣳ होवाच यथा सोम्यस्यैको १५१
तꣳ होवाच यं वै २७४
ता आप ऐक्षन्त २२९
तानि वा एतानि यजूꣳष्येतं ९१
तानि० सामान्येतं ९२
तानि ह वा एतानि त्रीण्यक्ष-
राणि ३६३
तानि० चित्तैकायनानि ३०९
तानि० संकल्पैकायनानि ३०६
तानु तत्र मृत्युर्यथा २८
तान्यभ्यतपत्तेभ्यो ८८
तान्होवाच प्रातर्वः १९७
तान्होवाचाश्वपतिर्वै १९६
तान्होवाचेहैव ५१
तान्होवाचैते २०१
तावानस्य महिमा १०३
तासां त्रिवृतं० विजानीहीति २४०
तासां त्रिवृत्तं० व्याकरोत् २३९
तेजसः सोम्याश्यमानस्य २४९
तेजो वावाद्भ्यो भूयस्तद्वा ३१७
तेजोऽशितं त्रेधा २४७
तेन तꣳ ह बको २२
तेन तꣳ ह बृह० २२
तेन तꣳ हाऽऽयास्य २२
तेनेयं त्रयो १३
तेनोभौ कुरुतः १४
तेभ्यो ह प्राप्तेभ्यः १९६
ते यथा तत्र न विवेकं २६७
ते वा एते गुह्या आदेशा ९३
ते वा एतेऽथर्वाङ्गिरस ९२
ते वा एते ब्रह्मपुरुषाः १०७
ते वा एते रसानां रसा वेदा ९३
तेषां खल्वेषां २३२
ते ह नासिक्यं १७
ते ह प्राणाः प्रजापतिं १६३
ते ह यथैवेदं ५१
ते ह संपादयांचक्रुरुद्दालकः १९५
ते होचुरुपकोसलैषा १५१
ते होचुर्येन १९७
तौ वा एतौ द्वौ संवर्गौ १३५
तौ ह द्वात्रिꣳशतं वर्षाणि ३८५
तौ ह प्रजापतिरुवाच य एषो ३८६
तौ ह प्रजापतिरुवाच
साध्वलंकृतौ ३८९
तौ हान्वीक्ष्य प्रजापतिरुवाच ३९२
तौ होचतुर्यथैवेदमावां भगवः ३९०
त्रयी विद्या हिंकारस्त्रय० ७२
त्रयो धर्मस्कन्धाः ७५
त्रयो होद्गीथे ३९

द

दध्नः सोम्य मथ्यमानस्य २४९
दुग्धेऽस्मै वाग्दोहं० भवति य
एतदेवं ६१
दुग्धेऽस्मै० भवति य एतामेव ५३
देवा वै मृत्यो २८
देवासुरा ह १६
द्यौरेवर्गादित्यः ३३
द्यौरेवोदन्त० २५

ध

ध्यानं वाव चित्ताद्भूयो ३१०

न

नक्षत्राण्येव ३३
न वधेनास्य० भोग्यं पश्या-
मीति ९७
न वधेनास्य० भोग्यं पश्या-
मीत्येवमेवैष ३९८
न वै तत्र न निम्लोच ९९
न वै नूनं भगवन्तः २१३
न वै वाचो न चक्षूꣳषि १६५
न स्विदेतेऽप्युच्छिष्टा ४५
न ह वा अस्मै ९९
न हाप्सु प्रैत्यप्सु० ५९
नान्यस्मै कस्मैचन १००
नाम वा ऋग्वेदो यजुर्वेदः ३०१
नाहमत्र भोग्यं पश्यामीति ३९४
निधनमिति त्र्यक्षरं ६५
नैवेतेन सुरभि २०
न्यग्रोधफलमत आहरेतीदं २७४

प

पञ्च मा राजन्यबन्धुः १७३
परोवरीयो हास्य ६१
पर्जन्यो वा गौतमाग्निः १७७
पशुषु पञ्चविधं ५९
पुरा तृतीयसवनस्य ८७
पुरा प्रातरनुवाकस्य ८६
पुरा माध्यंदिनस्य ८७
पुरुषꣳ सोम्योत हस्तगृहीतं २८६
पुरुषꣳ सोम्योतोपतापिनं २८३

पुरुषो वाव गौतमाग्निः १७८
पुरुषो वाव यज्ञः ११८
पृथिवी वाव गौतमाग्निः १७८
पृथिवी हिंकारोऽन्तरिक्षं ६९
प्रजापतिर्लोकानभ्यतपत्तेभ्यो ८४
प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां १५८
प्रवृत्तोऽश्वतरीरथो १९८
प्रस्तोतर्या ४६
प्राचीनशाल औपमन्यवः १९५
प्राण इति होवाच ४८
प्राण एव ब्राह्मणः १२४
प्राणे तृप्यति २०३
प्राणेषु पञ्चविधं ६०
प्राणो वा आशाया भूयान्यथा ३२१
प्राणो ह्येवैतानि सर्वाणि ३२४
प्राप हाऽऽचार्यकुलं १४५

ब

बलं वाव विज्ञानाद्भूयो ३१३
ब्रह्मणश्च ते पादं १४२
ब्रह्मणः सोम्य ते पादं० तस्मै होवाच पृथिवं ब्रह्म० कला १४३
ब्रह्मणः सोम्य ते पादं ब्र० तस्मै होवाच प्रा० कला १४४
ब्रह्मणः सोम्य ते० तस्मै होवाचाग्निः १४३
ब्रह्मवादिनो वदन्ति ८५
ब्रह्मविदिव वै सोम्य १४५

भ

भगव इति ह प्रतिशुश्राव १५१
भवन्ति हास्य पशवः ६०
भगवाँ्स्त्वेव ४८

म

मघवन्मर्त्यं वा इदं शरीरं ४०१
मटचीहतेषु ४४
मद्गुष्टे पादं १४४
मनो ब्रह्मेत्युपासीत १२३
मनोमय प्राणशरीरो ११२
मनो वाव वाचो भूयो ३०३
मनो होच्चक्राम १६४
मनो हिंकारो ६६
मानवो ब्रह्मैवैकः १६१
मासेभ्यः पितृलोकं १८६
मासेभ्यः संवत्सरं १८४

य

य आत्माऽपहतपाप्मा ३८१
य एष स्वप्ने महीयमानः ३९६
य एषोऽक्षिणि पुरुषो दृश्यते १५२
यच्चन्द्रमसो रोहितं २४३
यत्र नान्यत्पश्यति ३३१
यथा कृताय विजिताय १३०
यथा कृताय ,, १३१
यथा विलीनमेवाङ्गास्यान्तात् २७६
यथा सोम्य पुरुष २७७
यथा सोम्य मधु मधुकृतो २६६
यथा सोम्यैकेन नखनिकृन्तनेन २१२
यथा सोम्यैकेन मृत्पिण्डेन २०९
यथा सोम्यैकेन लोहमणिना २१२
यथेह क्षुधिता बाला २०५
यदग्ने रोहितं रूपं २४१
यदादित्यस्य रोहितं रूपं २४२
यदाप उच्छुष्यन्ति १३५
यदा वा ऋचः २९
यदा वै करोत्यथ निस्तिष्ठति ३२९
यदा वै निस्तिष्ठत्यथ ३२९
यदा वै मनुतेऽथ विजानाति ३२८
यदा वै विजानात्यथ सत्यं वदति ३२६
यदा वै श्रद्दधात्यथ मनुते ३२९
यदा वै सुखं लभतेऽथ करोति ३२९
तदुदिति स उद्गीथ ६१
यदु रोहितमिवाभूदिति २४६
यद्विज्ञातमिवाभूदित्येतासामेव २४६
यद्विद्युतो रोहितं रूपं २४४
यद्वै तत्पुरुषे शरीरं १०३
यद्वै तद्ब्रह्मेतीदं १०४
यस्तद्वेद स वेद ७३
यस्यामृचि तामृचं २६
यं यमन्तमभिकामो भवति ३५७
या वाक्सर्कस्मात् २४
यावान्वा अयमाकाशः ३४९
या वै सा गायत्रीयं १०२
या वै सा पृथ्वीयं १०२
यां दिशमभिष्ठोष्यन् २७
येन च्छन्दसा २७
येनाश्रुतँ् श्रुतं २०८
यो वै भूमा तत्सुखं ३३०
योषा वाव गौतमाग्निः १७९
यो ह वा आयतनं १६३
यो ह वै ज्येष्ठं च १६२
यो ह वै प्रतिष्ठां १६३
यो ह वै वसिष्ठं १६३
यो ह वै संपदं वेद १६३

र

रैक्वेमानि षट्शतानि १३२

ल

लवणमेतदुदके २७६
लोकेषु पञ्चविधं साम ५५
लो३कद्वारम० त्वा वयँ् रा० ८६
लो३कद्वारम० त्वा वयं वैरा० ८७
लो३कद्वारमपावार्णूत्वा वयँ् स्वारा० ८७
लोम हिंकारस्त्वक्प्रस्तावः ७०

व

वसन्तो हिंकारः ६९
वसिष्ठाय स्वाहा १७०
वागेव ब्रह्मणः १२४
वागेवर्क्प्राणः १०
वाग्वाव नाम्ना भूयसी ३०१
वायुर्वाव संवर्गः १३४
विनर्दि साम्नः ७३
विज्ञानं वाव ध्यानाद्भूयः ३१२
वृष्टौ पञ्चविधं सामोपासीत ५८
वेत्थ यथाऽसौ लोको न १७२
वेत्थ यदितः १७२
व्याने तृप्यति २०३

श

श्यामाच्छबलं प्रपद्ये ४२६
श्रुतँ् ह्येव मे भगव० १४५

